Shrimadubbat

Shrivajsaneyasamhitā with tika

श्रीवाजसनेय संहिता टीका सहित

Sanskrit (vedic sanskrit)

Printed on paper

Sambat 1950

folio: 698

9-2" x 6"

Complete

ॐ श्रीगणेशाय नमः। श्रीमते यजुर्वेदाय नमः॥ हृदयं दक्षिणं चाक्षि मण्डलं † चाधिवस्य यः। चेष्टते तमहं नौमि ऋग्यजुस्सामविग्रहम् (१)॥ १॥ आदित्याल्लब्धवान्यस्तु शाखाः पञ्च-

श्रीगणेशाय नमः। श्रीम्॥ ऋग्यजुःसामतत्त्वज्ञान् सच्चिदानन्दविग्रहान्॥ सर्वतन्त्रस्वतन्त्रश्रीबालशास्त्रि-गुरून्नुमः॥ १॥ प्रणम्य श्रीबालकृष्णतातपादांश्च मातरम्। मैनाम्, श्रीउव्वटभाष्येऽत्र क्रियते सूक्ष्मटिप्पणम्॥ २॥ अथ प्रजापतिपरम्परातः समधिगतं वेदब्रह्मराशिमिदानींतनान् जनानालस्यानवधानताबुद्धिमान्द्यादिदोषदूषितान् आलोच्य परमकारुणिकः श्रीभगवान्नारायणावतारो बादरायणश्चतुर्धा विभज्य अध्यापयामास पैल, वैशम्पायन, जैमिनि, सुमन्तुभ्यो महर्षिभ्यस्ते च स्वशिष्येभ्यः। केचित्तु पद्य गद्य गीतिभेदेन ऋग्यजुःसामाख्यास्त्रय एव विभागाः अथर्व्ववेदस्तु त्रिभ्य एतेभ्यः समचिनोदथर्वाङ्गिरस इति वदन्ति, अत्रमानमन्वेष्यम्। ततो वैशम्पायनादधीतवेदो महर्षिर्याज्ञवल्क्यो दैवयोगात्क्रुद्धं गुरुं प्रत्यर्पयामास योगबलेन वेदराशिमधीतम्। ततो निर्व्वेदो निर्व्विण्ण आदित्यात्तपसा तोषिताद्वाजिरूपधरादधिगतवानमुं वेदराशिमिति स्पष्टं महीधरभाष्यादौ। तमिमं शुक्लयजुर्व्वेदब्रह्मराशिं व्याचिख्यासुस्तत्र भगवानुव्वटाचार्यो निर्व्विघ्नपरिसमाप्तिकामो मङ्गलादीनि मङ्गलमध्यानीत्यादि पस्पशान्हि-कस्थमहाभाष्यादिप्रमाणकशिष्टाचारप्राप्तं मङ्गलं भाष्यादौ निबध्नाति। (१) हृदयमिति।

हृदयस्यादित्यब्रह्माधिकरणत्वस्य श्रुतावुक्ततया तदधिष्ठातारम्। एवं दक्षिणाक्ष्णः सूर्यमण्डलस्य च "तदेतद्यत्स-

---

† मण्डलं दक्षिणं चाक्षि हृदयं—१·पु पाठः।

ह्रशापराः । (२) तं याज्ञवल्क्यं वन्देऽहं मन्त्रभाष्यप्रसिद्धये ॥ २ ॥ गुरुतस्तर्कतश्चैव तथा शातपथश्रुतेः । ऋषीन्वक्ष्यामि मन्त्राणां देवताश्छान्दसं च यत् *॥३॥ ऋचो यजूंषि सामानि तथार्थः पदवाक्ययोः । श्रुतयश्चात्र याः प्रोक्ता योऽर्थवादश्च कर्म्मणः ॥ ४ ॥ तत्र पूर्वस्मिन्कल्पे विशिष्टकर्म्मजनितस्मृति-संस्कारसन्तानानुच्छित्तिधर्म्माणः (३) सुप्तप्रबुद्धन्यायेन हिरण्यगर्भप्रभृतयः कल्पादौ सह विद्य-

त्यसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष एतदुभयं सत्यम्" इत्यादिश्रुतिभिरादित्या-धिकरणताया उक्तत्वेन तदधिष्ठातारं चेत्यर्थः ।

(२) जावालः, १ गौधेयः, २ काण्वः, ३ मध्यंदिनः, ४ शापीयः, ५ तापनीयः, ६ कापालः, ७ पौण्ड्रवत्सः, ८ आवटिकः, ९ पामावटिकः, १० पाराशरः, ११ वैनेयः, १२ वैधेयः, १३ औधेयः, १४ गालवः, १५ इत्येते पञ्चदश शिष्यास्तैः प्रवर्तिताः पञ्चदश शाखाः । तदुक्तं चौलीरभाष्ये 'तेन याज्ञवल्क्येन तानि यजूंषि महर्षिभ्यः पञ्चदश समर्पितानि' केषां चिन्मते सप्तदश शाखाभेदाः ॥

(३) (विशिष्ट-धर्म्माणः) अत्र पूर्वपदानां समासं कृत्वा पश्चात् धर्म्मशब्देन बहुब्रीहिः तेन धर्म्मादनिच् केवलादिति समासान्तानिच्सिद्धिः ।

* छन्दोदैवतमेव च—२ पु० पाठः ।

याभिर्व्यज्यमाना: स्मर्तारो द्रष्टार ऋषय उच्यन्ते। सोयं हिरण्यगर्भपरम्परयाऽभिव्यक्तो नित्यो वेद:। हिरण्यगर्भपरम्परा ब्रह्मपङ्क्ति: ‡। तेच श्रुतौ व्यज्यमाना ज्ञायन्ते। तद्यथा। "तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद् यद्दर्शपूर्णमासाविति"। तत्र दर्शपूर्णमासद्रव्यदेवतामन्त्रादि परमेष्ठिना दृष्टमित्यर्थ:। तथा "दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदांचकार" इत्युपक्रम्य "न तद्दुहाश्विनोरनु श्रुतमास" इत्येवमादिनेतिहासेन प्रवर्ग्यगतानां मन्त्राणां दध्यङ्ङाथर्वण ऋषिरिति गम्यते। ऋषिश्च ज्ञातव्य इति दर्शयति। "प्रजापति: प्रथमां चितिमपश्यदि" त्युपक्रम्य "स यो हैतदेवं चितीनामार्षेयं वेद" इत्यादिना ग्रन्थेन फलं दर्शयति। अथ देवता मन्त्रवाक्याभिधेया:। यथा "अग्निर्मूर्द्धा दिव: ककुदि" त्यत्राग्नि:। "इषेत्त्वे"ति शाखा। नन्वग्निर्मूर्द्धेत्यत्राग्नेर्महाभाग्यत्वाद्देवतात्त्वमुपपद्यते शाखादीनां तु स्थावरत्वाद्देवतात्त्वं दुर्लभमिति यश्चोदयेत् तं प्रतिब्रूम:। यस्य यत्र हविर्भाक्त्वं स्तुतिभाक्त्वं वा विद्यते सा तत्र देवता न तु रूढ्या। एवं च सति

---

‡ हिरण्यगर्भपरम्परा ब्रह्मपङ्क्ति:—२ पु० नास्ति।

शाखादीनां देवतात्त्वमुपपद्यतएव। यदुक्तं स्थावरत्वादिति, अत्र ब्रूमः। अधिष्ठात्र्यो देवताः विद्यन्ते, प्रतिमाभूतास्तु शाखादयस्ताः फलं (४) साधयन्तीत्यदोषः। मन्त्रस्य वाच्यं देवतेति श्रुतिर्दर्शयति। "आशुः शिशानो वृषभो न भीम" इत्यत्रोपक्रम्य "ऐन्द्रोऽभिरूपा" इति इन्द्रस्य देवतात्त्वं दर्शयति। छन्दोपिज्ञेयमित्यनेनैव दर्शयति येनैवमाह "दक्षिणतोऽसुरान्रक्षांसि अपहन्ति त्रिष्टुभिर्वज्रो वै त्रिष्टुबित्युपक्रम्य ता द्वाविंशतिर्गायत्र्यः संपद्यन्ते तदाग्नेय्यो भवन्तीति। नच्छन्दोविद्देवतामाग्नेयीं संपदं वेदेति"। ऋचो यजूंषि चात्र विद्यन्ते तानि च ज्ञेयानीत्यत्र श्रुतिर्भवति। "यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवतासर्क्सादेवता तद्यजु" रिति, उपासनार्थत्व ग्यजुषयोः पृथग्ग्रहणमतोऽज्ञेयं ऋग्यजुषमिति। नियताक्षरपादावसानाऋक्। अनियताक्षरपादा-

(४) ऋषिच्छन्दोदेवताविनियोगार्थज्ञानपूर्वकमेव स्वाध्यायाध्ययनं कर्त्तव्यमन्यथा दोषः एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यथान्तरायश्च गर्त्तं वा प्रपद्यते स्थाणुर्वर्च्छति प्रमीयते वा पापीयान् भवतीति कात्यायनेनोक्तः। तत्र यजुषां षडुत्तरशताक्षरावसानानामेकाक्षरादीनां पिङ्गलेन दैव्येकम् आसुरीपञ्चदशेत्याद्युक्तं छन्दो बोद्धव्यम्।

वसानं यजुः। प्रगीतं मन्त्रवाक्यानाम् *। अथ पदार्थः। तत्र 'चत्वारि पदजातानि नामाख्यातोपसर्गनिपाता' इति नैरुक्ताः पठन्ति। तत्र नाम पञ्चप्रकारं पठन्ति। 'धातुजं धातुजाज्जातं समर्थार्थजमेव च। वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम्'। तत्र धातुजम्। वन्दारुः, (५) पचमानः †। धातुजाज्जातं तद्धितपदम्। आग्नेयः, याजमानम्, दैव्याय। समर्थार्थजः समासः। स च संक्षेपतश्चतुःप्रकारः। अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहिः। अथोदाहरणानि। उपरिनाभि, बहिष्पिण्डम्। प्रजापतिः, पशुपतिः। अग्नीषोमौ, इन्द्राग्नी। कृष्णग्रीवः, सितिकण्ठः। यथासंख्यं द्वे द्वे उदाहरणे। वाक्यजम् "क्रयस्य रूपं सोमस्य लाजा" इत्यत्र सोमस्य क्रयस्य रूपं लाजा इत्येवं प्राप्ते रूपशब्देन व्यवधानं व्यत्ययश्च। व्यतिकीर्णमन्यत्र प्रसिद्धं यत्तद्रूपत्वेन तत्प्रतिरूपका ये वर्णास्तैः सहोच्चार्यते यत्तत्। पार्श्वतः श्रोणितः शितामत इत्यत्र शितामतइति। त्वमग्ने द्युभिस्त्वमा-

(५) वन्दारुरित्यत्र शृवन्द्योरारुरितिपा॰सूत्रेण वन्दधातो रारुप्रत्ययः।

---

* नियताक्षरेत्यारभ्य—वाक्यानाम्—इत्यन्तं पाराणसेयपुस्तके नास्ति।

† यजमानः, यवमानः इति १ पु॰ अधिकम्।

अशृच्चणिरित्यनाशृच्चणिरिति। तत्र नाम्नां सामान्यतोऽर्थवचनं सत्त्वप्रधानानि नामानि। सतो भावः सत्त्वमस्तिता। तद्यत्र प्रधानन्तन्नाम, गुणभूता क्रिया, विभक्त्यर्थः कारकञ्च। तानीमानि सत्त्वप्रधानानि नामानीतिनाम्नोऽर्थः। अथ भावप्रधानमाख्यातम्। भावो नाम क्रियायाः फलम्। तद्यथा ओदनं पचति देवदत्त इत्यत्र देवदत्ताश्रया ओदनाख्यस्य भावस्य गुणभूता पाकक्रिया, अतो भावप्रधानमाख्यातमित्युच्यते। यद्वा भावप्रधानं भावनाप्रधानं, भावना च पुरुषपरिस्पन्दः पुरुषप्रयत्नः आत्मनो व्यापारः। परिस्पन्दस्तु भूतानां सा यत्र प्रधानं गुणभूता क्रिया तदिदं भावप्रधानमाख्यातम्। अथवा भावो धात्वर्थः क्रियेत्यनर्थान्तरं, सा यत्र प्रधानं गुणभूतानि षट्कारकाणि तदिदम्भावप्रधानमाख्यातम् इत्याख्यातार्थः। तानि च पचति पठतीत्यादीनि। अथ विंशतिरुपसर्गाः क्रियाविशेषकरा इति सामान्यतोऽर्थः। विशेषार्थस्त्वनन्त इति। ते च प्र-परा-अप-सम-अनु-अव-इत्यादयः। अथ निपातानामर्थः सामान्यतोऽसत्त्ववचनता। सत्त्वं द्रव्यमसत्त्वमद्रव्यम्। तद्वचनास्त्वादयो निपाता असत्त्ववचनाः ‡। अथ त्रैराश्यम्। उपमार्थीयाः, कर्मोपसंग्रहार्थीयाः, पादपूरणा इति।

‡ सत्त्वं द्रव्यमित्यारभ्य वचना इत्यन्तं १ पुस्तके नास्ति।

तत्रोपमार्थीया: सादृश्यवचना: इव-न-इत्यादय: । तद्यथा-"देव इव सविता सत्यधर्मा । इन्द्रो न" ॥ कर्मोपसंग्रहार्थीयास्सहायत्ववचना: च वा अह इत्यादय: । तद्यथा "वातो वा, मनो वा, अग्निश्च पृथिवी च"त्यादय: । पादपूरणा: पादमेव पूरयन्ति न त्वर्थान्तरं वदन्ति अनर्थान्तरवचना इत्यर्थ: । ई कम् इत्यादय: । "सद्योजज्ञानो विष्णी, इमानु कं भुवना" । उक्तं च 'क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् (१) । सत्त्वाभिधायकं नाम निपाता: पादपूरणा' इति । अथ वाक्यार्थं व्याख्यास्याम: । नामाख्यातोपसर्गनिपातसमुदायो वाक्यम् । तस्यार्थो वाक्यार्थ: । ननु यदि पदान्येव संहतानि वाक्यमुच्यते एवं तर्हि य एव पदार्थ: स एव वाक्यार्थस्तत: पृथग्वाक्यार्थव्याख्या नोपपद्यत इति यश्चोदयेत् तं प्रत्याह । साकाङ्क्ष: पदार्थो निराकाङ्क्षो वाक्यार्थ: । गौरित्युक्ते किमित्याकाङ्क्षा भवति ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति । तथा गच्छतीत्युक्ते किमित्याकाङ्क्षा भवति ततो गौरित्युक्ते निराकाङ्क्षं भवति । अथेदानीं गौर्गच्छतीत्युक्ते यत्र गौर्वाहदोहादिभ्यो व्यावृत्य

(१) (विशेषकृत्) विशेषार्थप्रतिपादक: । तदुक्तं, उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहारविहार परिहारवत् इति । (सत्त्वं) द्रव्यं तच्च लिङ्ग-संख्यान्वितं भवति ।

पु०प्र० सं० ४ उ० आ०

गमनेवतिष्ठते, गमनं चान्यगन्तृभ्यो व्यावृत्य गव्येवावतिष्ठते अयं वाक्यार्थः। स एव प्रकरणाविरोधी वाक्यार्थः पदार्थनियमे हेतुः। पदं तु पदार्थपरिज्ञानहेतुः। अयं पदार्थवाक्यार्थयोरर्थविशेषः। नन्वस्य पदचतुष्टयस्य वाक्यगतस्य कथं गुणप्रधानभाव इति, उच्यते। पदार्थद्वारकः सम्बन्धो गुणप्रधानभावस्य पदानाम्। तत्र प्रधानमाख्यातं गुणभूतान्यन्यानि, आख्यातार्थस्य साध्यत्वाद् इतरेषां पदार्थानां स्वभावसिद्धत्वात्। तत्र सिद्धार्थसाध्यार्थयोर्यदेकस्मिन्वाक्ये समुच्चारणं तत्साध्यार्थं भवितुमर्हति न सिद्धार्थम्। तथाच भूतं सिद्धं भव्यं साध्यम्। 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते न भव्यं भूतायेति न्यायविदः पठन्ति। एते च वाक्यार्था इषेत्वादिके मन्त्रगणे प्रायशो दृश्यन्ते। 'विध्यर्थवादयाच्ञाशीः स्तुतिप्रैषप्रवल्हिकाः। प्रश्नो व्याकरणं तर्कः पूर्ववृत्तानुकीर्त्तनम्। अवधारणञ्चोपनिषद्वाक्यार्थाः स्मृतयोदश। मन्त्रेषु ये प्रदृश्यन्ते, व्याख्या च श्रुतिचोदिता'। अथैतेषामुदाहरणानि। तत्र विधिः परमेष्ठ्यभिधीतः "अश्वस्तूपरोगो मृग" इत्यादिः। अर्थवादः "देवा यज्ञमतन्वते"त्यादि। याच्ञा "तनूपाऽग्नेऽसि तन्वं मे पाहि"। आशीः "आ वो देवास ईमहे"। स्तुतिः "अग्निर्मूर्द्धा दिवः ककुत्"। प्रैषः "होता यक्षत्समिधाग्निमि"त्यादिः।

१४० १ कं० निगम् ४

प्रवल्हिका "इन्द्राग्नी अपादियमि"त्यादि। प्रश्नः "कः स्विदेकाकी चरती"त्यादि। व्याकरणम् "सूय एकाकी चरती"त्यादि। तर्कः "मागृधः कस्य स्विद्धनम्"। पूर्ववृत्तानुकीर्त्तनम् "ओषधयः समवदन्ते"त्यादि। अवधारणम् "तमेव विदित्वातिमृत्यु,मेति"। उपनिषत् "ईशावास्यमि"त्यादि। अथ व्याख्याधर्माः। 'अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत्। विप्रकृष्टं तु सन्दध्यादानुपूर्व्यञ्च कल्पयेत्। लिङ्गं धातुं विभक्तिं च योज्यं वाक्यानुलोमतः *। यद्यत्स्याच्छान्दसं वाक्ये † कुर्य्यात्तत्तु, लौकिकम्। अथोदाहरणानि। अतिरिक्तं पदं त्याज्यमिति यथा,—'इमा नु कं भुवनासीषधामा', कमित्यनर्थको निपातः। हीनं वाक्ये निवेशयेत्—'अस्मादन्नादिति भागमवेक्षते' इत्यत्राधस्तनो मन्त्रशेषः इहाप्यभिसम्बन्धनीयः अस्मादन्नान्निर्भक्ता इत्यादि। विप्रकृष्टं तु संदध्यादिति—"सं रेवतीर्जगतीभिः पृच्यतामि"त्यत्र संपृच्यतामिति व्यवहितसंबन्धः। आनुपूर्व्यं च कल्पयेदिति—"मानो मित्रो वरुणो अर्यमायु"रित्यत्र "यद्वाजिनो देवजातस्येति"द्वितीयोऽर्द्धर्चः प्रथमं व्याख्येयः। यतो हि यद्वृत्तं ‡ वाक्ये प्रथमं भवति। लिङ्गं धातुं विभक्तिं च यथार्थं § सन्न-

---

* आनुलोम्यतः—पा० वा० पु०। † वाक्यं—पा० वा० पु०। ‡ वृत्तं पा० वा० पु०। § वाक्यविपर्यये—पा० वा० पु।

मयेत्। लिङ्गं तु वाक्यवशात्सन्नमयेत् *। 'पवित्रे स्थो वैष्णव्यौ'। अत्र पवित्रे इति नपुंसकलिङ्गं वैष्णव्याविति पुंलिङ्गम्, तत्र वैष्णव्यावित्यस्य सन्नतिराविष्टलिङ्गत्वात्पवित्रशब्दस्य। धातुं धात्वर्थं च सन्नमयेत्। "अग्रेगुवो अग्रेपुव" इति। अत्र अग्रेपुव इति संदेहः किमत्र पिबते-रूपमुत पवतेः, तत्र श्रुतितो निर्णयः "ता यत्प्रथमाः सोमस्य राज्ञो भक्षयन्ती"ति व्याख्या-नात्पिबतेरत्र रूपमिति। "कस्मै देवाय हविषा विधेमे"ति हविषेति तृतीयाया द्वितीयास-न्नतिः वाक्यसंयोगात्। अन्यदपि यत्किञ्चिच्छान्दसं तत्सर्वं लोकविदितैः शब्दैर्व्याख्येयमित्ययं सामान्यो व्याख्याक्रम उक्तः। अतः परं वैशेषिकमनुक्रमिष्यामः। अथ (१) इषे त्वा द्वाव-ध्यायौ दर्शपूर्णमासमन्त्राः। परमेष्ठिनः प्राजापत्यस्यार्षं देवानां वा प्राजापत्यानां, "तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्णमासावि"तिश्रुतेः। परमेष्ठिन आर्षम्। तथा "ते देवा

(१) अत्र महीधरभाष्ये तत्राद्याध्यायद्वितीयाध्यायाष्टाविंशतिकण्डिकास्वेति दर्शपूर्णमासमन्त्राः, तेषां परमेष्ठी प्रजापतिर्ऋषिर्देवताः प्राजापत्या वा। द्वितीयाध्यायान्तिमकण्डिकाषट्कं पितृयज्ञमन्त्रास्तेषां प्रजापतिर्ऋषिः।

* लिङ्गं तु वाक्यवशात्सन्नमयेत्—इति १ पु नास्ति।

अक्राम्यन्ते"त्युपक्रम्य "तत एतं हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासावि"ति देवानामार्षं कथ्यते। तत्राद्ये ऽध्याये सर्वाण्येव यजूंषि। पुरा क्रूरस्येतीयं त्रिष्टुप्। तत्र यजुषां केचिद्वैशेषिकं छन्द इच्छन्ति पिङ्गलपरिपठितं दैव्येक (२) मित्यादिनेति। तत्र च सर्वसंख्याया व्यवहारः,

## ॥ ॐ वेदपुरुषाय नमः ॥ हरिः ॐ ॥ * इषेत्वा। इषेत्वोर्जेत्वा

"पाद" इत्युपरिष्टादधिकारात्। (३) तत्र 'इषे त्वा' द्विपदो मन्त्रः त्र्यक्षरत्वाद्दैव्यनुष्टुप्। स्तुत्या शाखाच्छेदे विनियुक्तः। न चाख्यातमुपलभ्यतेऽत्र, न चाख्यातं विना वाक्यं किञ्चिद्भिद्यते

(२) तत्र छन्दः। गायत्री। इत्यधिकृत्य, दैव्येकम्। आसुरीपञ्चदश। प्राजापत्याष्टौ। यजुषां षट्। साम्नां द्विः। ऋचां त्रिः। इत्युक्तम्।

(३) अत्रेदं बोद्धव्यम्। प्रथमतः प्रकृतित्वाद् दर्शपूर्णमासमन्त्रा अत्र पठ्यन्ते। यत्र च साकल्येनाङ्गानामुपदेशः सा प्रकृतिः। यत्र केवलं विशेषाङ्गोपदेशोऽङ्गान्तराणि च प्रकृतेरतिदिश्यन्ते सा विकृतिः। प्रकृतिश्च अग्निहोत्रेष्टिसोमभेदेन

---

* प्रथमाध्यायस्यानुवाकसूत्रम्। इषेत्वैका १, वसोः पवित्रं तिस्रो ३, अग्नेव्रतपते सप्त ७, पवित्रे स्थोद्वे २, शर्मास- तिस्रो ३, धृष्टिरसिशर्मासि द्विकौ २, देवस्य त्वा तिस्रो ३, देवस्य त्वा पञ्च ५, प्रत्युष्टं रक्षस्तिस्रो ३ दशैकविंशत्।

इत्यध्याहारेणानुषङ्गेण वा वाक्यपरिपूर्त्तिः कर्त्तव्या। नन्वध्याहारानुषङ्गयोः को विशेषः। लौकिकोध्याहारः यथा "भूताय त्वा नारातये परिशेषयामि पिनष्टि," प्राणायत्त्वेति प्रतिमन्त्रम्। प्राणाय त्वा पिनष्टि। अनुषङ्गस्तु मन्त्रावयव एव। यथा "अस्मादन्नान्निर्भक्तो योस्मान्द्वेष्टि यं च वयं द्विष्मः"। तथा "अस्यैप्रतिष्ठायै निर्भक्तः" इत्यादिविष्णुक्रममन्त्रेषु पठितमिहाभिसंबध्यते परिपूर्णत्वाद्वाक्यस्य। अयं विशेषोध्याहारानुषङ्गयोः। इह त्वन्यशाखापरिपठितेनाख्यातेन सूत्रका-

व्वायवस्त्थदेवोवः सविताप्प्रार्प्पयतुश्श्रेष्ठतमायकर्म्मणऽआप्प्या-

रेण वाक्यपरिपूर्तिः कृता 'छिनद्मीति चोभयोः साकाङ्क्षत्वात्सन्नमयामीतिचोत्तर' इति। अथ कोर्थः। शाखा उच्यते। इषे, अन्नाय त्वां छिनद्मीति। इषु इच्छायाम्, तस्य क्विपि इट् इति रूपं भवति तस्य तादर्थ्ये च चतुर्थी "इषे" श्रुतत्वात्तमभिधेयं दृष्ट्वा तदाह 'यदाह इषे त्वेति दृष्टिः सर्वैवैष्यते'। अतोभिधानगतस्य धातोरभिधेयक्रिया विद्यतइति। इषं इत्यभिधानम् अभिधेया दृष्टिः।

त्रिधा। अथ कृताधानस्यैव दर्शपूर्णमासयोरधिकारादाधानमन्त्रा एव प्रथमं पठनीयाः सत्यम्! आधानेऽपि पावमान्यादीष्टीनामुक्तत्वात्तासां च दर्शपूर्णमासविकृतित्वात्त एव प्रथमं पठनीया इति सामञ्जस्यात्।

न्याय्योभिधानाभिधेयलक्षणसंबन्धः। "त्वा" इति। युष्मदो द्वितीयैकवचनस्य स्थाने आदेशः। नन्वेवं तव यदि एषणक्रियायोगादिह दृष्टिरभिधीयते न तु रूढ्या तदानीं यद्यद्विरण्यादि किञ्चि-दिष्यते तत्तत्सर्वमिडित्युच्येत, तथा सति संव्यवहारोच्छेद इत्येवमादीन्दोषान्केचिद्विदधति, तद-सत्। सिद्धे हि शब्दार्थसंबन्धे पश्चादभिधानाभिधेयभावं क्रियाद्वारकं प्रकाशयितुं व्युत्पत्तिः क्रियते। सा च क्रियमाणा तस्मिन्नेवाभिधेये ऽवतिष्ठते मगधाधिपतिवत्। यथा मगधाधिपतेर्मगधेषु

यध्वमघ्न्याऽ इन्द्राय भागम्प्रजावतीरनमीवाऽअयक्ष्मामावंस्ते-

देशेष्वाधिपत्यमस्ति न कान्यकुब्जेषु, एवमिहापि जात्यादिपरिच्छिन्नेष्वभिधेयेषु क्रियाप्रवृत्तिरस्ति न सर्वत्रेत्यदोषः। व्युत्पत्तिद्वारेण च शब्दानां परिज्ञानमभ्युदये हेतुरिति श्रुतिर्दर्शयति। "तत्प्रणीतानां प्रणीतात्वं प्रति ह प्रतिष्ठति, य एवमेतत्प्रणीतानां प्रणीतात्वं वेदे"तिप्रणीता-शब्दस्य निर्वचनपरिज्ञानद्वारेण फलं दर्शयति। तथा पुरुषशब्दव्युत्पत्तिं प्रकृत्याह। "स यत्पूर्वो-ऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं यो ऽस्मात्पूर्वो बुभूषति य

एवं वेद"। एवं तत्र तत्र। एतच्च स्थालीपुलाकभक्तावसथन्यायेन * (४) सर्वेष्वभिधेयेषु द्रष्टव्यम्। आह च। 'क्रियाद्वारकसंबन्धमभिधानाभिधेययोः। ज्ञात्वा फलमवाप्नोति श्रुतिर्वक्ति पुनः पुनः'॥ "ऊर्ज्जे त्वा" द्विपदस्त्र्यक्षरो मन्त्रः। दैव्यनुष्टुप् यदि यजुषां छन्दोस्ति। एवं सर्वेषु यजुष्षु ऋक्षु च वक्तव्यं, ग्रन्थगौरवभयात्तु नोच्यते। उक्तं च-स्वरो वर्णोऽक्षरं मात्रा

नऽईऽधतमाघश्रंऽसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्य

तत्प्रयोगोऽर्थ एव च। मन्त्रं जिज्ञासमानेन वेदितव्यं पदेपदे'। शाखासंनमने विनियुक्तः। सन्नमयामीति वाक्यशेषः(५)। 'यो वृष्टादूर्ग्रसो जायते तस्मै तदाहे' तिश्रुतिः। ऊर्ज्ज बलप्राणनयोः। क्विप्। ऊर्ज्जे। तादर्थ्ये चतुर्थी। व्रीह्यादेर्धान्यस्य क्षीरादेश्च सेचनस्य उत्पत्त्यर्थं त्वां सन्नमयामि।

(४) स्थालीपुलाकन्यायो भक्तावसथन्यायश्च द्वावपि समानार्थौ। यथा कश्चित् पाकं कुर्वन्नपि क्लित्तिर्निष्पन्ना नवेति निश्चयाय स्थालीस्थितसिक्थसमूहमध्यादेकं सिक्थं विक्लित्तियुतमालोच्य सर्वत्र तथैव जानीते, एवमेकत्रोक्तमन्यत्रापि बोध्यम्। (५) संनमनं च शाखालग्नधूल्याद्यपनयनम्।

* भक्तावसथेति—धा० पु० नास्ति।

यज्ञपरिणामो हि वृष्टिरन्नादिकञ्च तदभिप्रायौ मन्त्रौ। श्रुतिश्चास्मिन्नर्थे भवति। "अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टि" रिति। तथा "इतः प्रदानाद् वृष्टिरितो ह्यग्निर्वृष्टिं वनुते स एतै स्तोकैरेतान्स्तोकान्वनुते तएतेस्तोका वर्षन्तीति॥ "वायवस्थ"। वत्सं शाखयोपस्पृशति। यथा वायुर्वृष्टिद्वारेण गवामाप्यायकः एवं यूयमपि प्रस्नुतिद्वारेणाप्यायका भवथेत्यर्थः (६)। एकस्यापि वत्सस्योपस्पर्शने सर्वेषां संस्कारो बहुवचनोपदेशात्। पूजार्थं वा बहुवचनम्॥ "देवो वः सविता" अथ मातॄणामेकां शाखयोपस्पृशति। देवो दानादिगुणयुक्तः। देवो दानाद् द्योतनाद्दीपनाद्वेति यास्कः *। बहुवचनस्य वस्तसाविति युष्मदो द्वितीयाबहुवचनस्थाने वसादेशः। युष्मान् सविता सर्वस्य प्रसविता प्रार्प्पयतु समर्प्पयतु सङ्गमयतु श्रेष्ठतमाय कर्म्मणे। "यज्ञो वै श्रेष्ठ-

(६) वान्ति गच्छन्तीति वायवो गन्तारः हेवत्साः यूयं मातृसकाशादन्यत्र गन्तारो भवथ। मातृभिः सार्धं गमने सायं दोहो न भवेदित्याशयः। यद्वा वायुर्यथा पादचालनाद्यपहतां भूमिमुपशोष्य पुनाति तद्वत्सा अपि गोमयादिदान-द्वारा भूमिं पुनन्तीति वायुसादृश्याद्वत्सानां वायुत्वं, अथ वा यथा नृणां गृहाद्यावृतं भवति नैवं पशूनामिति निरा-वरणेऽन्तरिक्षे संचरणादन्तरिक्षमेव पशूनां देवता तदधिष्ठाता च वायुरिति स स्वावयवानिव पशून् रक्षतीति ते पालनाय वायवे समप्यन्त इति वायुरूपत्वं तेषामापाद्यते। तदुक्तं तैत्तिरीये "वायवस्थेत्याह वायुर्वान्तरिक्षस्याध्यक्षोऽन्तरिक्ष-

* देवोदानात् द्योतनाद्दीपनाद्वेति यास्कः इति १ पु० नास्ति।

तमं कर्मे"ति श्रुतिः। प्रशस्ततमाय कर्मणे(७) तादर्थ्ये चतुर्थी। यज्ञार्थमित्यर्थः। यूयमपि यज्ञार्थं सविता सङ्गमिताः सत्यः आप्यायध्वम्। ओप्यायी वृद्धौ णिचो लोपः। आप्याययत। हे अघ्न्याः (८) गावः। कम् इन्द्राय भागम्। तादर्थ्ये चतुर्थी। इन्द्रार्थं यो भागस्तमिति संबन्धः। इन्द्रोऽत्र हविर्भाक्। कथंभूताः सत्यः "प्रजावतीः"। छन्दसीति दीर्घत्वम्। प्रजावत्यः जीववत्साः। "अनमीवाः" अम् रोगे। अमीवा व्याधिविशेषः। न विद्यते अमीवा यासां तास्तथोक्ताः। यक्ष्मा व्याधीनां राजा स यासां न विद्यते ता अयक्ष्माः। आदरार्थं पुनर्वचनम्। अथवा अयनमयः गमनं, क्ष्मा पृथिवी, अयः क्ष्मायां यासां विद्यते घासभक्षणार्थं ता अयक्ष्माः। अनिवारितगोप्रचारा इत्यर्थः। किञ्च मा वः युष्माकं स्तेनः चौर ईशत। "माङि लुङ्"। मा युष्माकं चौरः ईशनं कार्षीदित्यर्थः। मा वः अघशंसः अघं पापं यः शंसति भक्षणार्थं वृकोवा चाण्डालो

वैवत्याः खलु पशवो वायवेएतान् परिददातीति"॥ यद्वाऽहनि तत्र तत्रारण्ये तृणानि भक्षयित्वा सायंदोहसमये वायुवद्वेगेन यजमानगृहे प्राप्त्यर्थं वायुत्वमुत्प्रेक्ष्यते वत्सानाम्॥ इति महीधरभाष्यम्।

(७) चतुर्विधं भवति कर्म अप्रशस्तं, प्रशस्तं, श्रेष्ठं, श्रेष्ठतमं, च। चौर्यादिकमप्रशस्तं, बन्धुवर्गपोषणादिकं प्रशस्तं, स्तुत्युक्तं वापीकूपतड़ागारामादिकं श्रेष्ठं, श्रुत्युक्तं यज्ञरूपं श्रेष्ठतमम् इति।

(८) अघ्न्याः गोवधस्योपपातकरूपत्वाद्धन्तुमयोग्याः।

शिवम् ८

वा † मा ईशत । किञ्च "ध्रुवाः" शाश्वतिकाः । "अस्मिन्" गोपतौ यजमाने "स्यात" भवत "बह्वीः" बह्व्यः ॥ शाखामुपगूहति ‡ (८) "यजमानस्य पशून् पाहि" । यजमानस्य संबन्धिनः पशून्; अक्षतं गोवत्समभिप्रेतं दोहाङ्गभूतं पाहि गोपाय ॥ १ ॥ तस्यां पवित्रं करोति (१) । "वसोः पवित्र-

पुशून्न्पाहि * ॥ १ ॥ व्वसोःपुवित्त्रम् । व्वसोःपुवित्त्रमसि द्यौरसि पृथिव्व्यसि मातरिश्श्वनो घुर्म्मोसि व्विश्श्वधाऽअसि ॥ पुरमेणधा

मसि" । वसोर्वासयितुर्यज्ञस्य (२) । यज्ञसाधनभूते पयसि, अत्र यज्ञशब्दः । पयसः पवित्रं परि-

(८) हे पलाशशाखे त्समुन्नतप्रदेशे स्थिता यजमानस्यारण्ये संचरतः पशून् व्याघ्रादिभयत्पाहि रक्ष । शाखाभिमानिनीं देवतामुद्दिश्योक्तिः शालग्रामशिलायां विष्णुं संबोध्य षोडशोपचारपूजनवत् ॥ १ ॥ 'पर्णशाखां छिनत्ति' शमिलीं वेषिलें' त्यादि ४ । २ । ११ । का० सू० अत्र मन्त्रे द्रष्टव्यम् ।

(१) 'वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ त्रिवृद्धेति' का० ४,२,१५ ।

(२) वासयति वृष्ट्यादिद्वारा स्थापयति विश्वमिति वसुर्यज्ञः "यज्ञो वै वसुः" इति श्रुतेः । तेन च हविर्द्रव्यरूपं क्षीरं लक्ष्यते । "वसोः पवित्रमसि" इति मन्त्रेण कुशद्वयरूपं कुशत्रयरूपं वा पवित्रं शाखायां बध्नातीति तात्पर्यम् ।

---

† चाण्डालादिर्वा—पा० भा० पु० । ‡ गूहति आकारयति—पा० भा० पु० ।

धारकं भवसीत्यर्थः। उखामादत्ते। "द्यौरसि पृथिव्यसि"। "उपस्थौत्वेवं नामैतदि"ति श्रुतिः। सा यद्दिवोऽवयवभूतेनोदकेन क्रियते तेन द्यौरित्युच्यते। यत्पृथिव्यवयवभूतया मृदा क्रियते तेन पृथिवीत्युच्यते। मातरिश्वन इत्यभिमन्त्रयति। उखोच्यते। "मातरिश्वनो घर्मोसि"। मातरिश्वा वायुः मातर्यन्तरिक्षे श्वसितीति। वायोः संबन्धी त्वं घर्मोसि। त्रयो घर्मा अग्निवायुसूर्यदेवत्याः। तत्र मध्यमघर्मः साधवे त्वेति "अयं वै साधुर्योयं पवते" इति। वायुर्देवत्यः

मा॒त॒रि॒श्वनो॑ घ॒र्मो॑सि॒ द्यौर॑सि॒ ... ॥२॥ वसोः॑ प॒वित्र॑मसि ॥

स त्वमसीत्यर्थः। यतश्च त्वं वायुरतो "विश्वधा असि" सर्वस्य धारयिता भवसि (३)। किञ्च "परमेण धाम्ना दृꣳहस्व"। धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति। उत्कृष्टेन नाम्नाभिहिता सती घर्मोसीत्यादिना आत्मानं दृꣳहस्व दृढीकुरुष्वेत्यर्थः (४)। "माह्वाः" ह्वृ कौटिल्ये। माह्वार्षीः। दृढीभूतायामपि लुठितायां * पयःस्कन्दनं भवति तन्मा (५) भूदित्येवमु-

(३) तदेवं द्युपृथिव्यन्तरिक्षाणां त्रयाणां लोकानां धारणात् त्वं विश्वधा विश्वधारणसामर्थ्यं लयेत्यर्थः।

(४) क्षीरस्य स्रवणं वारयितुमेतत्। (५) तन्निष्ठक्षीरस्कन्दनेऽनुष्ठानविघ्ने यजमानस्य प्रच्यवनं भवेदित्याशयः॥ २॥

* वाक्कुटिलीभूः। कुटिलीभूतायां चलितायाम्—पा० पा० पु०।

च्यते। मा च तव यज्ञपतिरधिष्ठानान्यच्यवतु ॥ २ ॥ 'तस्यां पवित्रं निदधाति' (३)। "वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्"। अभ्यासे तूभयं समर्थं मन्यते। अनन्तधारमित्यर्थः। आसिच्यमाने जपति "देवस्त्वासविता"। पय उच्यते। देवस्त्वा सविता पुनातु दोषात्पृथक्करोतु निर्दोषं करोतु। वसोः अग्निष्टोमयज्ञस्य संबन्धिना आविकेन

वसोः॑ प॒वित्र॑मसि श॒तधा॑रं॒ वसोः॑ प॒वित्र॑मसि स॒हस्र॑धारम् ॥ दे॒व

अनेकधारेण पवित्रेण। "सुप्वा"। शोभनं पुनातीति सुपूः तेन सुप्वा साधुपवनेन पवित्रेण। अथाह "कामधुक्ष"इति। प्रश्नोयं गवां मध्ये त्वं कां गाम् अधुक्षः। दुह प्रपूरणे, दुग्धवा-

(३) 'वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्वेति' कात्यायनः ४।२।२१। तत्र प्रागग्रत्वं तु सामन्यतः प्राप्तमेवेत्युदगग्रत्वं विकल्प्यते। "वसोः" इन्द्रदेवतानिवासहेतोः पयसः "पवित्र" शोधकं त्वमसि। पवित्रेण व्यवधाने सति क्षीरेण सहपातिनां तृणपर्णादीनां प्रतिबन्धकत्वात्पवित्रत्वम्। तच्च पवित्रं "शतधारं" शतसंख्या धारा यस्मिन् तथा "सहस्रधारं" पवित्रच्छिद्रैःस्त्राव्यां पतन्तीनां क्षीरधाराणां शतसहस्रसंख्याकानां सद्भावात्। शोधकत्वमादर्तुं द्विरुक्तिः 'अभ्यासे भूयांसमर्थं मन्यन्ते इति निरुक्तम्।

नसि ॥ ३ ॥ अमूमितुरुक्ते दोग्ध्रा "साविश्वायु"रित्यध्वर्युराह (१)। सा गौः विश्वस्य जगत आयुषो दात्री। द्वितीयामाह। सा गौः "विश्वस्य" जगतः "कर्म्म" कर्त्री। तृतीयामाह। सा गौः "विश्वस्य" जगतः धाया:। धायतेर्णिजन्तस्यासुनि रूपम्। पाययित्री। यस्मादेव

स्त्वांसविताप्पुनातुव्वसोःपवित्त्रेणशतधारेणसुप्प्वा कामधुक्षः ॥३॥

साव्विश्वायुः। साव्विश्वायुःसाव्विश्वकर्म्मासाव्विश्वधाः

सर्वाः प्रजा उत्पद्यन्ते आयुष्मजनसहिताः स गवामुपचर्य्यते। आतनक्मि (२)। "इन्द्रस्य त्वा भागम्"। इन्द्रस्य त्वा भागं सोमेन दध्ना आतनच्मि। तञ्चतिः कठिनीकरणार्थः। दधि-

(१) पूर्वोक्तप्रश्नोत्तरे अमूं गामदुहमिति दोग्ध्रा प्रदत्तेऽध्वर्युर्दोग्धारं प्रति यागौस्त्वया दुग्धा मया च पृष्टा सा विश्वधिः विश्वमायुर्यस्याः, यजमानस्य पूर्णायुः प्रदात्रीत्यर्थः एवं द्वितीयतृतीयगावोरपि क्रमेण विश्वकर्मा विश्वधाया इत्युत्तरणीयम्। 'एवमितरे उत्तराभ्याम्' इति कात्यायनोक्तेः। विश्वधाया इत्यस्य विश्वान् सर्वान् देवान् दधाति क्षीरदध्यादिहविर्द्दानेन पुष्णातीत्यर्थो महीधरभाष्ये उक्तः।

(२) क्षीरमध्येरुद्दास्य कदुष्णे तस्मिन्प्रातःकालीनहोमावशिष्टदध्ना तच्चनं कुर्यादित्याशयः। उद्वास्यातनक्ति प्राग्धुत-

भावमापादयामीत्यर्थः। अपिदधाति। "विष्णो हव्यं रक्ष" (३)। "यज्ञो वै विष्णु" रिति श्रुतिः। हविर्गोपाय ॥ ४ ॥ व्रतमुपैति (१)। "अग्नेव्रतपते" हे भगवन्नग्ने व्रतस्य पते व्रतं सत्यादिकं चरिष्यामि। तद्व्रतं तव प्रसादात् शकेयं शक्नुयाम्। शक्तं च तन्मे मम राध्यताम सिध्द्यताम्॥

इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि विष्णो हव्यꣳ रक्ष * ॥४॥

अग्ने व्रतपते। व्रतं चरिष्यामि तच्छकेयन्तन्मे राध्यताम् ॥ इदमहमनृतात्सत्यमुपैमि ॥५॥ कस्त्वा। युनक्ति स त्वा युनक्ति-

ताम्। यज्ञफले सम्यद्भिराशास्यते। अनेन वा अग्निरुच्यते। इदमहं त्वत्साक्षिकम् अनृताद् असत्यात् सत्यमुपगच्छामि (२) ॥ ५ ॥ अपः प्रणयति। "कस्त्वा युनक्ति"। यज्ञस्यारम्भकर्मणि

येषिणेन्द्रस्य त्वेति कात्यायनोक्तेः। "आतनच्मि" दध्यर्थे कठिनीकरोमीत्यर्थः। अत्रातञ्चनहेतुभूतं दध्येव सोमत्वेन कल्प्यते भावनया। (३) अत्र विष्णुं संबोध्य हविषो रक्षाप्रार्थनं रक्षणे विष्णोरेव प्रसिद्धेः सृष्टिपालनसंहारेषु ॥ ४ ॥

(१) 'अपरेणाहवनीयं प्राङ् तिष्ठन् अग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैत्यग्नेव्रतपते इदमह मितिवेति' कात्यायनोक्तेः २।१।११।

(२) अनृतादसत्यादहं सत्यं वदनमुपैमीतितात्पर्यम्। सत्यवदनं चावश्यमेव कर्मकाले पालनीयमितियावत्। वदा अनृतं

आत्मनः कर्तृत्वमपनीयाध्वर्युः प्रजापतेर्यज्ञस्य कर्तृत्वमाह। अत्र चत्वारि सर्वनामानि तत्र प्रथमतृतीये प्रश्नभूते द्वितीयचतुर्थे प्रतिप्रश्नभूते। "कस्त्वा युनक्ति" (१)। हे यज्ञ प्रजापते न मनुष्यः सन्तु * यज्ञः प्रजापतिः त्वां युनक्ति। कस्मै प्रयोजनाय युनक्तीत्यध्वर्युराशङ्क्योत्तरं ददाति। "तस्मै" प्रयोजनाय "युनक्ति"। यस्मादुत्पत्तिः स्थितिश्च जगतः अतोनेन सर्वनाम्ना तदेव

कस्मै॑ त्वा युनक्ति॒ तस्मै॑ त्वा युनक्ति ॥ कर्म्म॑णे वां॒ वेषा॑य वाम् ॥६॥

निर्दिश्यते(२)। सूर्य्यं चाग्निहोत्रहवणीं चादत्ते। "कर्मणे वाम्"। यज्ञकर्मणे वां युञ्ज्यम् अहमा-मनुष्यजन्म शीघ्रविनाशित्वात्। सत्यं देवजन्म बहुकालस्थायित्वात्। तथाच श्रुतिः। "तन्मनुष्येभ्यो देवानुपावर्तते इति। अपाम सोममसृता अभूमे"ति च। अत्रामृतत्वं चिरस्थेमानं लक्षयतीति वाचस्पतिमिश्राः ॥ ५ ॥

(१) एवं व्रतमुपेत्य ब्रह्माणं त्वपां प्रणयनं कुर्यात्। "ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छे"त्याहानुज्ञात उत्तरेणाहवनीयं निदधाति कस्त्वायुनक्तीति" कात्यायनः। ( २।३।२-३ )

(२) हे प्रणीतानामपां धारक पात्र त्वां कः पुरुषो युनक्ति आहवनीयोत्तरभागे स्थापयति। इति प्रश्नः। सर्वेषु वेदेषु जगन्निर्वाहकत्वेन प्रसिद्धो यः प्रजापतिरस्ति स एव परमेश्वरः हे पात्र त्वा युनक्तीति उत्तरम्। इति महीधरभाष्ये व्याख्यातम् ॥ ६ ॥

* यज्ञः प्रजापतिर्नमनुष्यः स तु—पा० १४०।

ददे इति वाक्यशेषः । "त्वेषाय" । विष्लृ व्याप्तौ । यज्ञव्याप्त्यर्थं वां युवाम् अहमाददे इति च ॥६॥
प्रतपति (१) "प्रत्युष्टम्" । उष दाहे प्रतिज्ञाय दग्धं रक्षः, प्रतिज्ञाय च दग्धा अरातयः (२) ।
न विद्यते रातिर्दानं येषां ते अरातयः । अनेन वा "निष्टप्तम्" । तप संतापे निरेतस्य स्थाने
नितरां तप्तं रक्षः न तु यज्ञतत्साधनमित्यभिप्रायः । उक्तामन्यत् । गच्छति । "उर्वन्तरिक्षम्" ।

प्रत्युष्टꣳ रक्षः । प्रत्युष्टꣳ रक्षः प्रत्युष्टा ऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ता ऽरातयः ॥ उर्वन्तरिक्षमन्वेमि ॥ ७ ॥

यद्यपि रक्षोभिराकुलमन्तरिक्षं (३) तथाप्यनेन यजुषा उरु विस्तीर्णं कृत्वा अन्वेमि प्रतिगच्छामि ॥ ७ ॥ धुरमभिमृशति (१) । "धूरसि" । अनसोऽवयवं धुरं स्तौति (२) । तत्र

(१) "प्रतपनं प्रत्युष्टं निष्टप्तमिति वेति" कात्यायनः २।३।११ ।

(२) अनेनाग्निहोत्रहवणीशूर्पयोः प्रतपनेनात्र स्थिता राक्षसा दग्धा इत्यर्थः । प्रत्युष्टं निष्टप्तमि त्यनयोर्विकल्पः, अनेनवेति कात्यायनेन वेत्युक्तेः । (३) गच्छतः पुरुषस्य पार्श्वयोः स्थितं रक्षोनेन मन्त्रेण निराक्रियते इत्यर्थः॥७॥

(१) "अपणस्य" पुरोडाशपाकहेतोर्गार्हपत्यस्य "पश्चादनः" शकटं व्रीहियुक्तं "समङ्गि" सर्वाङ्गोपेतं, "धूरसीति "धूरभिमर्शनमिति" तस्य धुरं धूरसीतिमन्त्रेण स्पृशेत् । कात्यायनः । २ । ३ । १३ । (२) शकटस्य बलीवर्दवहनप्रदेशे

श्रुतिः "अग्निर्वा एष धुर्यस्तमेतद्व्येष्यन्ब्रवीतीति"। हविर्ग्रहीष्यन् धुर्यमग्निं ब्रवीति। "धूरसि"। धूर्वतेर्वधकर्मणः। धूर्वणक्रियानिमित्तं हि ते नाम अतो ब्रवीमि "धूर्व धूर्वन्तम्"। हिन्धि हिंसन्तम्। "धूर्व तम्" हिन्धि तम् "योऽस्मान्धूर्वति"। योऽस्मान् हिनस्ति।

**धूर॑सि ॥ धूर॑सि॒ धूर्व॒ धूर्व॑न्तं॒ धूर्व॒ तं॒ यो॒ऽस्मान्धूर्व॑ति॒ तं धू॑र्व॒ यं॒ व॒यं धूर्वा॑मः ॥ दे॒वाना॑मसि॒ वह्नि॑तम॒ꣳ सस्नि॑तमं प॒प्रित॑-**

"तं धूर्व यं वयं धूर्वामः" (३) तं पुरुषं हिन्धि यं वयं हिंस्मः। अनस उपस्तम्भनमभिमृशति "देवानामसि"। अत्र उच्यते देवानामग्न्यादीनां त्वं भवसि। "वह्नितमम्" वह्निर्वोढा* वोढृतमम्। सर्वे तमपः अतिशयार्थाः। "सस्नितमम्" ष्णै वेष्टने। 'आदृगमहनेत्यादिना क्विन्प्रत्ययः। चर्मणा स्नायुना परिवेष्टिततमम्। अथ वा पार्श्वतः काष्ठै*र्गोणिपटैश्च परिवेष्टित-

कश्चिद्धिंसकोऽग्निः "अग्निर्वा एष धुर्यः" इति श्रुतिदृष्टोऽस्ति तं प्रार्थयते इत्याशयः। (३) यमनालस्यादिरूपं वैरिणं वयं धूर्वामो नाशयितुमिच्छामस्तमपि धूर्व विनाशय। (४) शकटस्थितान्नप्रतिक्रमरूपापराधापमार्जनार्थं धूरेतेन मन्त्रेण स्पृश्यते।

---

* वह्निप्रापणी इत्यस्य रूपम् इत्यधिकं १ पु०।

* काष्ठैर्गोणिपटैः—पा० या० पु०।

(४) तमम् । "पप्रितमम्" । आपूरणे पूर्ववत्क्तिन् प्रत्ययः । हविषा पूर्णतमम् । "जुष्टतमम्" । जुषी प्रीतिसेवनयोः । अभिप्रेततमम् * । सेवितमम् वा । "देवहूतमम्" । देवानाह्वयतीति देवहूः देवानामाह्वातृतमम् (५) ॥ ८ ॥ "अह्रुतमसि" । 'ह्रु ह्वरेश्छन्दसी'ति ह्वरतेर्लुण्ठनार्थस्य निष्ठायां ह्रुरादेशः । अलुण्ठितं पूर्णमसि (१) । "हविर्धानम्" । हविषां निधानम् (२) । अत

## म् जुष्टतमन्देवहूतमम् ॥८॥ अह्रुतमसि । हविर्धानन्दृꣳहस्व

आत्मानम् "दृꣳहस्व" दृढीकुरु । ममावरुच्यते अवस्थितं भव । "मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीदि"ति ।

(४) "दैवानामुपस्तम्भनस्य पश्चादीषामिति" कात्यायनः । २ ।३ । १४ । शकटदीर्घकाष्ठस्य भूमिस्पर्शो माभूदिति तदाधारकाष्ठमुपस्तम्भनं तत्पश्चाद्भागमेतेन मन्त्रेण स्पृशेत् ।

(५) व्रीहिपूर्णं शकटं दृष्ट्वा देवाः शीघ्रमागच्छन्तीत्याशयः ॥ ८ ॥

(१) महीधरभाष्ये तु अह्रुतमित्यस्याकुटिलम् । आरोहणेपि भङ्गभीतिर्नास्तीत्यर्थं इत्युक्तम् ।

(२) हविषो व्रीहिरूपस्याधारकं पोषकं, डुधाञ् धारणपोषणयोः ।

* अत्र जुषी प्रीतौ वर्तते । अतिप्रियतमम् । पा० १४० ।

4.

शु० य० सं० १३ उ० भा०

उक्तार्थः। आरोहति (३)। "विष्णुस्त्वाक्रमताम्" † आरोहतु। अहं त्वत्समर्थ इत्यभिप्रायः। प्रोच्यते हविष्मात्। "उरु वाताय"। उरु महत् वाताय प्राणाय त्वां करोमीति प्रोच्यते। अपहृत्यं

साह्वा॒न्मार्ते॑य॒ इत्यप॑ति॒ह्वार्षीत् ॥ विष्णु॒स्त्वाक्र॑मताम॒रुव्वाता॒याप॑

निरस्यति (४)। "अपहतम्"। हन हिंसागत्योः। अत्र गतौ वर्त्तते। अपगतम्। अस्मा-

(३) "विष्णुस्त्वेत्यारोहति" १।२१ "प्रोच्यते उरु वातायेति हविष्मात्" १।२।१६। इति कात्यायनः। वाता-येतितादर्थ्ये चतुर्थी। वातसंचारार्थं विस्तीर्णीभव। शकटस्थव्रीहीणां तृणाद्याच्छादितत्वेन वायुप्रवेशाभावात्, यथावायुः प्रविशति तथा विस्तीर्णं भवेत्यर्थः। इत्थं च वायुरूपप्राणप्रवेशाद्धविः सप्राणं क्रियते इत्याशयः। यदि च वायुप्रवेशरहितं हविः स्यात्तदा वरुणदेवताकं भवेद्वरुणस्य बन्धकारित्वात् यत्ननिरोधकस्तन्निवृत्त्यर्थोयं मन्त्रः। "यद्वै किञ्च वातो नाभिभवति तत्सर्वं वरुणदेवातायेत्याहावरुणमेवैतत्करोतीति तित्तिरिवचनात्।

(४) 'अपहतमिति निरस्यत्यन्यद्' व्रीहिभ्योन्यत्तृणाद्यनेन मन्त्रेण निरस्येत्तदभावेतु 'अविद्यमानेऽभिमृशेत्" तृणाद्यभावे व्रीहीनेव स्पृशेत्। का २।३।२७।१८। अत्र तृणादिकमेव रक्ष इत्यन्यत्र।

१ अ०

विषय १३

† विष्णुर्यज्ञस्त्वां शकट आक्रमतात्। पा० वा० पु०।

हविषो रक्षः। आलभते (५)। "यच्छन्तां पञ्च"। यम् उपरमे। नियच्छन्तु त्वां हविष्यम् पञ्च अङ्गुल्यः ॥ ९ ॥ गृह्णाति (१)। "देवस्य त्वा"। त्वा शब्देन हविरुच्यते। "देवस्य सवितुः प्रसवे" अभ्यनुज्ञायां वर्त्तमानः। देवेन सवित्रा प्रसूतः। "अश्विनोर्बाहुभ्याम्" न स्वाभ्याम्। अश्विनौ हि देवानामध्वर्यू। "पूष्णो हस्ताभ्यां" न स्वाभ्याम्। पूषा हि देवानां भागधुक् भागपूरकः।

हतꣳ रक्षो यच्छन्तां पञ्च ॥ ९ ॥ देवस्य त्वा। सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ अग्नये जुष्टं गृह्णाम्यग्नी-

"अग्नये जुष्टम्" जुषी प्रीतिसेवनयोः। अत्र जुषिः प्रीतौ वर्त्तते। तथा हि 'रुच्यर्थानां प्रीयमाणः' इत्यग्निशब्दस्य चतुर्थी संजाता। अग्नये जुष्टं रुचितमभिप्रेतं गृह्णामि। एतदुक्तं भवति। योऽग्निः सर्वेशः * सर्वात्मा तस्य तथाभूतस्यैतदन्नं भवितुमर्हति। नच तथाभूतं

(५) यच्छन्तामित्यालभते। का० २।३।१८ अनेन पञ्चाङ्गुलियुक्तेन मुष्टिना व्रीहीन् स्पृशेदित्यर्थः ॥ ९ ॥

(१) देवस्यत्वेति गृह्णात्याग्नेयं चतुरो मुष्टीन् एवमग्नीषोमीयं यथादैवतमन्यदिति। का० २।३।२०-२२।

---

* सर्वेश्वरः—पा० बा० पु०।

मनुष्येण तद्ग्रहीतुं शक्यते। ततोऽहं सावित्रं प्रसवमाश्रायाश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां (२) त्वां हविष्यग्नयेऽभिरुचितं गृह्णामि। अग्नीषोमाभ्यां त्वां हविष्याभिरुचितं गृह्णामि ॥ १० ॥ भूताय त्वेति शेषाभिमर्शनम् (१)। "भूताय" भवनाय (२) त्वां परिशेषयामीति शेषः। "नारातये" न अदानाय, अन्नं रोपितं सत् ग्रीष्मादि पुनरेव बहु भविष्यतीति परिशेषयामि न कृपण-

## षोमाभ्यां जुष्टं गृह्णामि ॥१०॥ भूताय त्वा ॥ भूताय त्वा नारातये स्व-

तायै। स्वरिति प्राङोच्यते। "स्वरभिविख्येषम्"। पश्येयम्। स्वशब्देन यज्ञोऽभिधीयते। स हि शोभनं प्राङीरितो भवति। यज्ञार्हदेवाः सूर्यः यज्ञोपि स्वःशब्देनोच्यते। "यज्ञो वै स्वः अहर्देवा सूर्यः" इति श्रुतेः। दृंह० हन्तामित्यवरोहति। दृंहि दृंहि दृह्वाविति यद्यपि दृह्यर्थो

(२) अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः, पञ्चाङ्गुलियुक्ताग्रभागो हस्तः इति। अश्विनौ हि देवानामध्वर्यू, पूषा हि देवानां भागधुक्। अतो ग्रहणसाधनयोस्स्वबाह्वोः स्वहस्तयोश्चाश्विबाहुपूषहस्तभावना कार्या। किंच "सत्यं देवा अनृतं मनुष्या" इतिश्रुतेस्तदनुस्मृतिपुरस्सरं हविर्ग्रहणं फलपर्यवसायि अन्यथा निष्फलमिति देवतास्मरणमितितात्पर्यमिति महीधरभाष्ये ॥ १० ॥

(१) का० २।३।२३।२४। (२) यागान्तराणां सिद्धये ब्राह्मणभोजनस्य च पञ्चावाय।

धातुस्तथापि मन्त्रेषु दृढीकरणार्थः प्रयुज्यते। दृंहन्तामितिप्राप्ते "दृꣳहन्तामि"ति विकरण-व्यत्ययः। दिवादित्वात् श्यन्प्रत्ययः। "दुर्याः"। दुरः द्वाराणि अर्हन्तीति दुर्या गृहा उच्यन्ते। दुर्या दृढा भवन्तु। "पृथिव्यां" भूम्यां गच्छति। "उर्वन्तरिक्षमि"तिव्याख्यातम्। पृथिव्यास्त्वेति सादयति। हविरुच्यते। पृथिव्याः त्वा त्वां नाभौ मध्ये अवसादयामि। "अदित्या" देवमातुः "उपस्थे" उत्सङ्गे। "अग्ने हव्यं रक्ष" (३)। † अपरां गार्हपत्यमग्निमाह ॥ ११ ॥ पवित्रे

रभिविश्वव्ये ष्ण्ट्र ऽ॑हंन्तान्दुर्य्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि पृथि-
व्यास्त्वा नाभौ सादयाम्यदित्या ऽउपस्थेऽग्ने हव्यꣳरक्ष ॥११॥*

छिनत्ति (१)। "पवित्रे स्थः"। पवित्रे पवनक्रियाशीलेयुवां भवथः। वैष्णव्ये इति प्राप्ते वैष्ण-व्याविति लिङ्गव्यत्ययः। "यज्ञो वै विष्णुर्यज्ञियेस्थ" इति श्रुतिः। अपउत्पुनाति (२)। "सवि-

(३) स्वपुत्रमिव बाधकेभ्यः पालयेत्यर्थः ॥ ११ ॥

(१) कुशौ समावप्रच्छिन्नाग्रौ अनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति नीत्वेति। का० २।३।३१।

(२) हविर्ग्रहणमयः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति। का० १।३।२६।

* तांयखरत्यधिकं १. पुस्तके.॥

शु० य० सं० १५ उ० आ०

१ अ०

"गुवः" आप उच्यन्ते। सवितुः प्रसवे वर्तमानः अहं वः युष्मानुत्पुनामि ऊर्द्ध्वं नीत्वा शोधयामि। केन, "अच्छिद्रेण पवित्रेण"। "यो वा अयं पवन एषोऽच्छिद्रं पवित्रमि"ति श्रुतिः। वायोः सर्वगतत्वादच्छिद्रत्वम्। "सूर्यस्य" च "रश्मिभिः"। उदिङ्गयति (२)। "देवीराप" इति। आप उच्यन्ते। हे देव्य आपः "अग्रेगुवः अग्रेपुवः"। "अग्रेशब्दः पूर्वपदं द्वयोः। पूर्वस्य गमिरुत्तरप-

पवित्त्रे स्त्थः। पवित्त्रे स्त्थो वैष्ष्णव्यौ सवितुर्व्वः प्प्रसवऽउत्पुनाम्म्यच्छिद्रेण पवित्त्रेण सूर्य्यस्य रश्मिभिः॥ देवीरापोऽअग्ग्रेगुवोऽअग्ग्रेपुवोऽग्ग्रऽइममद्य यज्ञन्नयताग्ग्रे यज्ञपतिꣳ सुधातुं यज्ञपति-

दम्। उत्तरस्य तु पिबतिः। उभयोरपि डुप्रत्ययः। अग्रेयाः समुद्रं गच्छन्तीत्यग्रेगुवः। अग्रे प्रथमाः सोमस्य राज्ञो भक्षयन्तीत्यग्रेपुवः। अग्रे उत्कृष्टे। "इमं" दर्शपूर्णमासाख्यम्। "अद्य" अस्मिन्

विषय

१५

(२) सव्येकृत्वा दक्षिणेनोदिङ्गयति देवीराप इति। का० १।३।२५। उत्पूताभिरद्भिः पूरितामग्निहोत्रहवणीं सव्यहस्ते स्थापयित्वा मन्त्रमुच्चारयन् दक्षिणहस्तेनोर्ध्वं चालयेदिति सूत्रार्थः।

हवि "यज्ञं नयत" प्रापयत। "अग्रे यज्ञपतिं नयत। 'सुधातुं' (४) शोभनदक्षिणं यज्ञपतिम्। 'देवयुवम्"। देवान्कामयते इति देवयुः। 'इदं युरिदंकामयमान' इति यास्कः। एतदुक्तं भवति। यज्ञं यजमानं पुष्कलदक्षिणं देवकामं च अग्रे नयत ॥ १२ ॥ "युष्माइन्द्रोऽवृणीतवृत्रतूर्ये"। युष्मान् इन्द्रः साङ्नाय्यार्थमवृणीत। किम्पुरस्कृत्य वृत्रतूर्ये तूर्यतिर्वधकर्मा वृत्रवधाय। "यूयं" च "इन्द्रमवृणीध्वं" वृतवत्यः वृत्रतूर्ये तस्मिन्नेवावसरे अतिमनुष्यतया। "प्रोक्षिताः स्थे"ति तासां प्रोक्ष-

न्देवयुवम् ॥ १२ ॥ युष्माऽइन्द्रः। युष्माऽइन्द्रोऽवृणीतवृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये प्रोक्षितास्थ ॥ अग्नयेत्वाजुष्टम्प्रो

णम्। प्रोक्षिता यूयं तावद्भवथ। न ह्यसंस्कृता अन्यसंस्कारक्षमा इति निह्नवः। हविः प्रोक्षति (५)। "अग्नयेत्वा जुष्टम्"। अभिरुचितम्। अग्निशब्दस्य रुच्यर्थानां प्रीयमाण इति चतुर्थी। अग्नीषोमाभ्यामित्युपलक्षणम्। पात्राणि प्रोक्षति। "दैव्याय कर्मणे" देवसंबन्धिने कर्मणे।

(४) सुष्ठु दक्षिणादिना दधाति यज्ञं पुष्णातीति सुधातुरिति महीधरभाष्ये व्याख्यातम् ॥ १२ ॥

(५) हविस्त्वाग्नये त्वाग्नीषोमाभ्यां त्वेति यथादेवतमन्यत्, पात्राणि दैव्यायेति। का० १।३।२५-२८।

तादर्थ्ये चतुर्थी । 'शुन्धध्वम्' । शुध्यध्वमिति कर्मणि यक्प्राप्ते विकरणव्यत्ययः । "देवयज्यायै" । देवयागाय । एताभिरद्भिः शुन्धध्वमिति संबन्धः । "यद्वोऽशुद्धाः पराजघ्नुः" । यद्वः युष्माकं त्वशुद्धाः अक्षप्रभृतयः* (६) पराजघ्नुः पराहतवन्तः । इदमिति प्रत्यक्षनिर्देशः । वः युष्माकं तत् शुन्धामि शोधयामि अपनयामि ॥ १३ ॥ कृष्णाजिनमादत्ते (१) । "शर्मासि" । चर्मासीति प्राप्ते

क्षाम्म्यग्ग्नीषोमाभ्यान्त्वाजुष्टम्प्रोक्षामि ॥ दैव्याय कर्म्मणे शुन्ध-
ध्वन्देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ॥ १३ ॥*

चकारस्य शकारः । "शर्म देवत्रेति" श्रुतिः । अवधुनोति । "अवधूतं रक्षः" । धूञ् कम्पने । अवकम्पितं रक्षः अवकम्पिताश्च अरातयः अदानशीलाः पुरुषाः । न त्वेतद् यज्ञसाधनमित्यपह्नवः ।

(६) महीधरभाष्ये तु अशुद्धा नीचजातयस्तक्षादयो वो युष्माकं यदङ्गं पराजघ्नुः पराहतं कृतवन्तः छेदन-तक्षणादि काले स्वकीयहस्तस्पर्शरूपमशुचित्वं चक्रुरिति व्याख्यातम् ॥ १३ ॥

(१) शर्मासि इति कृष्णाजिनादानम्, अपेतम् पात्र्योऽवधुनोत्यवधूतमिति, प्रत्यग्ग्रीवमास्तृणाति आदित्यास्त्वा-मिति, सव्याधून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा प्रतिलं तूभयोरिति । का० २।४।२-५ ।

* तक्षप्रभृतयः—पा० घा० पु० ।

कृष्णाजिनमास्तृणाति (२)। "अदित्यास्त्वगसि"। अदित्याः पृथिव्यास्त्वं त्वग्भवसि। अतः "प्रतिवेत्तु"। विद ज्ञाने। प्रतिजानातु त्वाम् अदितिः पृथिवी। "प्रतिह्वित्वः संजानीत" इति श्रुतिः। तस्मिन्निदधात्युलूखलम्। "अद्रिरसि"। आ दृणाति विदारयति आदृणात्यनेन व्रीह्यादिकमित्यद्रिः। त्वं भवसि। "वानस्पत्य"श्च। वनस्पतेर्विकारो वानस्पत्यः। अनेन वा निद-

ध्म्मांसि।

शर्म्मास्यवधूतꣳ रक्षोवधूताऽअरातयोदित्यास्त्वगं-सि प्रतित्वादितिर्वेत्तु॥ अद्रिरसि वानस्पत्यो ग्रावासि पृथुबु-ध्नः प्रतित्वादित्यास्त्वग्वेत्तु॥ १४॥ अग्नेस्तनूरसि वाचो विस-

धाति। "ग्रावासि"। हन्ति व्रीह्यादिकमनेनेति ग्रावा त्वमसि। "पृथुबुध्नः"। बृहन्मूलः। अतः "प्रति त्वादित्यास्त्वग्वेत्तु"। प्रतिवेत्तु त्वामुलूखल अदित्यास्त्वक् कृष्णाजिनम्। कथम्, अहं च पृथिव्यास्त्वक् अयं चोलूखलः पृथिव्यास्त्वगिति। त्वगेवात्मनात्मानं हिनस्ति॥ १४॥

(२) पुरा यज्ञो देवेषु रुष्टः कृष्णमृगो भूत्वाऽगमत्तदा देवा ज्ञात्वा तदीयां त्वचमुत्क्षिप्य जगृहुः तस्माच्चर्मास्तरणम्॥ १४॥

5.

हविरावपति (१)। "अग्नेस्तनूरसि"। आहवनीयोत्राग्निरुच्यते। तत्र हविः प्रक्षिप्तमग्निर्भवति। अत एवमुच्यते अग्नेस्तनुः शरीरमसीति। अथवा अग्निशब्देन यस्यै देवतायै हविर्गृह्यते सा लक्ष्यते। तस्या अपि हविस्तनूर्भवतीति। "वाचो विसर्जनम्"। वाक् यस्मिन्हविषि प्रक्षिप्ते विसृज्यतेऽध्वर्युणा तदिदं वाचो विसर्जनम्। "देववीतये"। देवतर्पणाय "त्वा

जुष्टं गृह्णामि"। आवपामीत्यर्थः। मुशलमादत्ते "बृहद्ग्रावासि"। दीर्घत्वापेक्षं बृहत्त्वं, हन्त्यपेक्षं ग्रावत्वम्। दीर्घग्रावा त्वमसि। "वानस्पत्यः" वनस्पतेर्विकारश्च वानस्पत्यः। स इदमित्यवदधाति। स"त्वमिदं"देवेभ्योऽर्थाय "हविः शमीष्व"। शम्यतिः संस्कारार्थः। "सुशमि" क्रियाविशेषणमेतत्। साधु यथा संस्कृतं भवति तथा शमीष्वेति। हविष्कृदेहीति त्रिराह्वयति। हविष्कृतो-

(१) हविरावपत्यग्नेस्तनूरसि बृहद्ग्रावेति मुशलमादत्ते सदृदमितत्यवदधाति, हविष्कृदेहीति त्रिराह्वयति। का० १।४।६-१३।

तीति "हविष्कृत्" (२)। "एहि" आगच्छ। अधिदेवं वागुच्यते। अधियज्ञं पत्नी ॥ १५ ॥
आहन्ति अन्यो दृषदुपले (१)। "कुक्कुटोसि"। अत्र मनोर्हं वा ऋषभ आसेत्यादीतिहास
उत्प्रेक्षितव्यः (२)। कुत्सितं शब्दमसुरघ्नमसुराणां तनोतीति कुक्कुटः। अथवा असुरघ्नीं

**वेब्भ्यो हुविःशमीष्वसुशमिंशमीष्व॥ हविंष्कृदेहिहविंष्कृदेहिं ॥१५॥**

**कुक्कुटोसि। मधुंजिह्व इषमूर्ज्जमावंदत्त्वयांव्वयꣳसंङ्घा तꣳसंङ्घा-**

वाचमुपादाय क्व क्व असुरा एवं योऽटति असौ कुक्कुटः। अस्मिन्पक्षे कुशब्दस्य संप्रसारण-

(२) यजमानः पत्नी वान्योवा यो व्रीहीनवहन्ति स संबोध्यते। त्रिवारमुक्तमर्थं देवा मन्यन्त इति त्रिराह्वानम् ॥१५॥

(१) 'आहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति त्रिः शम्यया दृषदं सकृदुपलमिति' २। ४। १५।

(२) मनो राज्ञ एक ऋषभ आसीत्तस्मिन्नासुरघ्नी वाक् स्थिता, तस्मिन्शब्दं कुर्वति तं श्रुत्वैवासुरा म्रियन्ते, ततः किलाताकुलीनामानौ असुरयाजकौ गत्वा तेनैवर्षभेन याजयातां मनुं, इतीतस्मिन् ऋषभे सा वाङ्मनोर्जायां प्रविष्टा, तौपुनस्तयापि मनुमयाजयातां, ततः सा वागसुरपराभवाय यज्ञपात्राणि प्रविष्टा, तद्वाक्प्रकटनार्थं शम्यया दृषदुपहननमिति, इतिहासः।

शु० य० सं० १८ उ० भा०

मटतेश्चाकारस्य 'संप्रसारणाच्चे'ति पूर्वरूपत्वम्(३)। कुक्कुटस्त्वमसुराणां, देवानां "मधुजिह्वः"(४)। अत "इषं" इष्टिम् "ऊर्ज्जं" मन्नं च "आवद" आभिमुख्येन वद (५)। त्वया च सहायभूतेन "वयं संघातम्"। संपूर्वस्य हन्तेः संघातेन संग्रामः समुदायो वाभिधेयः। वीप्सार्थं द्विर्वचनम्। संग्रामं संग्रामं जेष्म। शूर्पमादत्ते(६)। "वर्षवृद्धम्"। इष्ट्या इद्धं त्वमसि(७)। हविरुद्वपति। "प्रति त्वा वर्षवृद्धं

तञ्जेष्म्म वर्षवृद्धमसि प्रतिं त्वा वर्षवृद्धं वेत्तु परापूतꣳ रक्षः परापूता अरातयोपहतꣳ रक्षो वायुर्वो विविनक्तु देवो वः सविता हिरण्यपाणिः

वेत्तु"। प्रतिवेत्तु प्रतिजानातु त्वा इष्ट्या इद्धं हे हविः। समानजन्मत्वाद्धविःशूर्पयोर्भीतत्वार्थं

(३) कुक्कुटाख्यपक्षिवद् ध्वनिविशेषमसुराणां भीत्यर्थं तनोतीति कुक्कुट इति वेति महीधरभाष्यम्।

(४) मधुमधुरभाषिणी जिह्वा यस्य सः।

(५) तच्छब्देनासुरेषु पराभूतेषु (इष्टिं) रसमन्नं च यजमानः प्राप्नोतीति तात्पर्यम्।

(६) वर्षवृद्धमस्येति सूर्पमादत्ते। २।४।१५।

(७) वर्षवृद्धवेणुशलाकानिर्मितत्वाच्छूर्पस्य वर्षवृद्धत्वम्।

१ अ०

वचनम् । निष्पुनाति(८)। "परापूतं रक्षः" । पराचिन्नं रक्षः। "परापूता" पराचिन्नाश्च "रातयः" अदानशीलाः पुरुषाः । तुषान्निरस्यति । "अपहतम्"। हन्तिर्गत्यर्थः। अपगतं रक्षः। विविनक्ति। "वायुर्वः"। तण्डुला उच्यन्ते। वायुः वः युष्मान्विविनक्तु पृथक्करोतु व्रीहिभ्यः सकाशात्। पात्रीमोप्याभि मन्त्रयते। "देवोवः सविता"। वो युष्मान् हे तण्डुलाः। "हिरण्यपाणिः"। "तस्यविन्ने प्राशित्रं परिजह्रुः। तस्य पाणी परिचिच्छेद। तस्मै हिरण्मयौ प्रतिदधुः तस्माद्धिरण्यपाणिरितुग्र-

**पाणिः॒ प्र॑ति॑गृभ्णा॒त्त्वच्छि॑द्रेण पा॒णिना॑* ॥ १६ ॥ धृष्टि॑रसि। धृष्टि॑रस्य**

चग्रते" इति बह्वृचानां श्रुतिः। "प्रतिगृभ्णातु"प्रतिग्रहं करोतु (९)। "अच्छिद्रेण" शिथिलेन हस्तेन ॥ १६ ॥ उपवेषमादत्ते (१)। "धृष्टिरसि"। ञिधृषा प्रागल्भ्ये। अनेनाग्निर्धृष्टमुपचरतीति

(८) 'परापूतमिति पुनाति, अपहतमिति तुषान्निरस्यति, वायुर्व इति विविनक्ति, देवो व इति पात्र्यामोप्याभिमन्त्रयते, इति। का० २।४।१७-२१।

(९) हृग्रहोर्भश्छन्दसीति हस्य भः ॥ १६ ॥

(१) मूलतः शाखां परिवास्योपवेषं करोति, धृष्टिरसीत्युपवेषमादाय, अपाग्ने इत्यङ्गारान् प्राचः करोति, आदेवयजमित्यङ्गारमाहृत्य, कपालेनावच्छादयति ध्रुवमसीति। का० २।४।२५-२।४।२१।

धृष्टिः। उपवेष (२) उच्यते। धृष्टिस्त्वमसुग्रपवेष। अङ्गारान्प्राञ्चः करोति। "अपाग्ने अग्निमामादं जहि"। अपजहि परित्यज *। हे भगवन्नग्ने अग्निमामादम् आममत्तीत्यामात् तम् (३) येनेदं-मनुष्या अपक्वमन्नमश्नन्ति स उच्यते। जहातिस्त्यागार्थः। "निष्क्रव्यादं"सेध। निःसेध क्रव्यादमग्निम्। येन पुरुषं दहन्ति स क्रव्यात्। सेधतिरपि † त्यागार्थः। अङ्गारमाहरति। "आदेवयजं वह"। आवह ‡ देवयजमग्निम्। देवा यस्मिन्निज्यन्ते स देवयट् तं देव-

पाग्नेऽअग्निमामादं जहि निष्क्रव्यादꣳ सेधा देवयजं वह। ध्रुव-मसि पृथिवीन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्न्युपदधामि भ्रातृ-

यजमग्निम्। कपालेनाच्छादयति। "ध्रुवमसि पृथिवीं दृꣳह"। त्रिभिः कपालैस्त्रीँल्लो-कान्यजमानो जयति चतुर्थेन दिशः। यस्मिंषु संस्कृतेषु पुरोडाशः सोऽध्याधारवशात्चिलोक-

(२) पलाशशाखाया मूलदेशेच्छिन्नः काष्ठभागः उपवेषः।

(३) त्रिविधा हि भवन्त्यग्नयः आमात् लौकिकोऽग्निः, क्रव्यात् चिताग्निः, श्रौतस्मार्तोऽग्निः यागयोग्यः। एत-

* परित्यजेति—पा० पु० नास्ति। † सेधतिः परित्यागार्थः—पा० पा० पु०। ‡ आवहानय—पा० १ पु०।

विग्रह एव भूत्वा देवान्प्रीणातीति प्रकरणार्थः। "यद्व वा आत्मसंमितमन्नं तदवति तन्न हिनस्तीति" श्रुतिः। "ध्रुवमसि" *। ध्रुवं स्थिरं त्वमसि। अतः पृथिवीं दृंह। दृढीकुरु। न हि स्वयमप्रतिष्ठितोऽन्यस्य प्रतिष्ठां कर्तुं समर्थः। किंच इत्थं भूतं त्वामुपदधामि। "ब्रह्म-वनित्वा" ब्रह्मयद्वनोति संभजति संश्रयते तत्कपालं ब्रह्मवनि। एवं क्षत्रवनि। सजातवनि समानं

व्यस्य वधाय ॥ १७ ॥ अग्ने ब्रह्म । गृभ्णीष्व धरुणमस्यन्तरि

जाताः सजाता भ्रातृप्रभृतय उच्यन्ते। भ्रातृव्यन्तपत्ने इति आद्युदात्तत्वाद्भ्रातृव्यशब्देन शत्रुरभि-धेयः। शत्रोश्च वधाय त्वामुपदधामीत्यनुषङ्गः ॥ १७ ॥ सव्याङ्गुल्या मूर्ध्न्येऽङ्गारं निदधाति (१)। "अग्ने ब्रह्म"। हे भगवन्नग्ने ब्रह्म ब्राह्मणमङ्गुलिप्रदानेन व्यावृत्तमनुगृह्णीष्व अनुग्रहं कुर्वि-दिदान् अङ्गारान् गार्हपत्यात्प्राग्भागे पृथक्कृत्य तेषां मध्ये यागयोग्यताहीनौ आमात्क्रव्यात्संज्ञौ त्याजयितुं गार्ह-त्यं प्रयुज्यते आमादं जहीत्यादि ॥ १७ ॥

(१) सव्याङ्गुल्याग्नूर्ध्न्येऽङ्गारं निदधात्यग्ने ब्रह्मेतीति, धरुणमिति पश्चात्, पुरस्ताद्धर्त्रमिति, विश्वाभ्य इतिरद्भि-घातः। का० २।४।२०-२३।

* ध्रुवमसि—१ पु० नास्ति।

त्यर्थः (२)। द्वितीयं निदधाति। "धरुणमसि"ति साधारणं धारकमसि। 'अन्तरिक्षं दृंह'(३)। शेषं पूर्ववत् *। तृतीयं निदधाति। "धर्त्रमसि"। धारयितृ असि। "दिवं दृंह"। चतुर्थं निदधाति †। "विश्वाभ्यस्त्वा" सर्वाभ्य "आशाभ्यो" दिग्भ्य "उपदधामि"। इतराणि कपालान्युप-दधाति। "चितस्थ"। चिञ् चयने। क्विबन्तस्य रूपमिदं बहुवचनं च पूर्वोपहितकपाल-

क्षन्दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥ धर्त्रमसि दिवं दृंह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥ विश्वाभ्यस्त्वाशाभ्य उपद-

विषयम्। चितानि यूयं भवथ। "ऊर्ध्वचितः" पश्चादुपहितकपालेषु चित इति उर्द्ध-

(२) अङ्गुलिदानादुक्तं मां मादृं हेत्यर्थः। ब्रह्म प्रौढ़ं कर्मास्माभिः क्रियमाणं नाशकरक्षोवधेनानुग्रहाणेत्यर्थो वा।

(३) अन्तरिक्षं दृढ़ीकुरु। पुरोडाशपाकोत्पन्नज्वालया यथान्तरिक्षलोकोप द्रवो न भवति तथा कुरु इत्या-शयः। अत्र कपालदेवता प्रार्थ्यते।



---

* शेषं पूर्ववत्। तृतीयं निदधाति—पा० पु० नास्ति।

† चतुर्थं निदधाति—पा० पु० नास्ति।

चित् तस्योर्द्ध्वचितः उपचीयमानस्येति शेषः। अङ्गारैरभ्यूहति। "भृगूणामङ्गिरसाम्"। भृगोरपत्यानि बहूनि भृगवः तथा अङ्गिरसः 'तद्राजस्य बहुषु' लुक्। भृगूणामङ्गिरसां च तपसा यूयं कपालानि तप्यध्वम् (४) ॥ १८ ॥ शर्मासीत्यादि त्रीणि यजूंषि व्याख्यातानि। कृष्णाजिने दृषदं निदधाति (१)। "धिषणासि"। धीः (२) कर्म बुद्धिर्वा तदुभयं सीदति सनोति

**धाम्निचितंस्त्थोर्द्ध्वचितोभृगूंणामङ्गिंरसान्तपंसातप्यध्वम् ॥ १८ ॥***

**शर्म्मासि। शर्म्मास्यवधूतꣳरक्षोवधूताऽअरातयोदित्त्यास्त्वगसिप्प्रति-त्त्वादितिर्व्वेत्तु ॥ धिषणासिपर्व्वतीप्प्रतित्त्वादित्त्यास्त्वग्वेत्तु दिवस्कं-**

व्याप्नोति ददाति वा * कर्माङ्गत्वात् दृषद् धिषणोच्यते। धिषणे त्वमसि "पर्वती" पर्ववती।

(४) अग्नेस्तदीयतपोरूपत्वं भावनीयमिति पर्यवसितम् ॥ १८ ॥

(१) कृष्णाजिनमादत्ते पूर्ववत्, तस्मिन्दृषदं धृषणासीति, पश्चाच्छम्यामुपोहत्यदीति दिव इति, दृषदुपलां धृषणासीति। का० २।४।३८-२।५।५। (२) धिषणाशब्दे छान्दसो ह्रस्वः ॥ १९ ॥

---

* व्याप्नोति ददाति पा—१४० नास्ति।

अतः "प्रतिवेत्तु" प्रतिजानातु "त्वामदित्यास्त्वक्" पृथिव्यास्त्वक्। कृष्णाजिने शम्यामुपदधाति। "दिवस्कम्भनीरसि"। दिवोद्यावापृथिव्योः दृषदुलूखलयोः पृथिवी। दृशम्यामुपलक्षितत्वात् शम्याया अन्तरिक्षभक्तित्वमुपपद्यते। दिवोद्यावापृथिव्योः "स्कम्भनीः" स्कम्नोतिः संस्तम्भनकर्मा। संस्तम्भनीर्भवसि। "अन्तरिक्षमेव रूपेण होमे द्यावापृथिवी विस्तब्धे" इतिश्रुतिः। दृषदुपलमुपदधाति। "धिषणासि"। व्याख्यातम्। "पार्वतेयी"। पर्वत्या अपत्यम् पार्वतेयी। "कनी-

स्कम्भनीरसि धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु धान्यमसि ॥१९॥

धान्यमसि। धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा ॥

यसौ ह्येषा दुहिता पार्वतेयी भवती"तिश्रुतिः ॥ १९ ॥ दृषदि तण्डुलानावपति (१)। "धान्यमसि"। धिनोतेः प्रीणनार्थस्य धान्यमिति भवति। तदभिप्रायेणैवमाह। यतस्त्वमेवं

(१) धान्यमसीति तण्डुलानोप्य, पिनष्टि प्राणायत्वेति प्रतिमन्त्रं, दीर्घामिति कृष्णाजिने प्रोहति, चक्षुषे त्वेतीक्षते, पिष्यमाणेषु निर्वपत्यन्योमध्यहीनामित्याज्यम्। का० २।५।१६-ए०।

स्वभावमसि † अतः प्रीणीहि देवान्। पिनष्टि। "प्राणाय (२) त्वा"। अत्र श्रुतिः। "जीवं वै देवानां हविरमृतममृतानां" इत्युपक्रम्य "दृषदुपलाभ्यां हविर्यज्ञं घ्नन्तो"ति प्रतिपाद्य यदाह "प्राणाय त्वोदानाय त्वे"ति तत्प्राणापानौ दधाती"त्येवमादिना ग्रन्थेन यथा हविषः पुनर्जीवनं क्रियते तथा श्रुतिः प्रतिपादयति। तदनुसारेण व्याख्यानं (३) करिष्यामः। प्राणाय त्वा पिनज्मि"। न तु हिंसायै। एवमुत्तरावपि मन्त्रौ व्याख्येयौ। कृष्णाजिने प्रक्षिपति। "दीर्घामनुप्रसि-

दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णा

तम्"। षिञ् बन्धने। प्रसितिः प्रसवनात्तन्तुर्वा जालं वा। इह तु प्रसितिशब्देन कृष्णाजिनमभिधीयते, तदपि हि पिष्टानि गृह्णाति। दीर्घां कृष्णाजिनाख्यां प्रसितिमनु। "आयुषे" आयुर्दानाय त्वा "धां" दधामि। "देवो वः"। इति व्याख्यातम्। ईक्षते। "चक्षुषे त्वा" चक्षु-

(२) प्रकर्षेणानिति सुखिसर्वदा चेष्टते इति प्राणः श्वासवायुः, उत् अनिति ऊर्ध्वं चेष्टते उदानः उत्क्रान्तिवायुः, व्यानिति व्याप्य चेष्टते व्यानो बलप्रदो वायुः।

(३) महीधरभाष्येतु प्रसयनं प्रसितिः कर्मसंततिः, षिञ् बन्धने, 'दीर्घामविच्छिन्नां प्रसितिमनु' कर्मसन्तति-

† प्रीयनस्वभावमसि—पा० १पु०।

दीनाय त्वामहमीचे। "एतानि वै जीवतोभवत्यवसुपैतज्जीवमेव देवानां हविर्भवती"तिश्रुतिः। आज्यं निर्वपति। "महीनां पयोसी"ति। महीति गोनाम। महीनां गवां पयो भवसि। पयश्श-ब्देन लक्षणया घृतमभिधीयते॥ २०॥ प्राच्यां पिष्टान्यावपति (१) "देवस्यत्वेति"। व्याख्या-तम्। ननु ग्रहणे देवस्येतियदुक्तं तेनैव दर्शनेनाब्राह्मणतर्पणान्तं कर्म करिष्यति किमनेन पुन-

त्वचिक्षेह यापाणिना चक्षुषेत्वामहीना स्पयोंसि ॥ २० ॥* देवस्य-त्वा। सवितुः प्रसवे ऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ संव-

देवस्यत्वेति। संस्कारोज्ज्वलनार्थं हितं च पथ्यं च पुनःपुनरुपदिश्यमानं न दोषाय भवतीति। "संवपामि"। समित्येकीकृततामाचष्टे एकत्र क्षिपामि। अथ उपसर्जनीः प्रतिगृह्णाति। "समाप ओषधीभिः संपृच्यन्ताम्"। पृची संपर्के। संगच्छन्ताम् आप ओषधीभिः पिष्टाभिः।

मनुलच्य यजमानस्यायुषे आयुरभिवृध्यर्थं हे हविः त्वा धां कृष्णाजिने दधामि। यजमानस्यायुर्वृद्धौ सत्यां कर्मसंततिः प्रवर्त्तेत इति। एवं चक्षुषे इत्यस्यापि यजमानस्य चक्षुरिन्द्रियपाटवायेतिचार्थ उक्तः॥ २०॥

(१) प्राचयां सपवित्रायां पिष्टान्यावपति देवस्येत्वेति, उपसर्जनीरानयत्यन्यः पवित्राभ्यां प्रतिगृह्णाति समाप

"समोषधयो रसेन" । संगच्छतां च ओषधयः पिष्टाख्यरसेन उपसर्जनीभिः । आपो हि ओष-
धीनां रसः । "सꣳ॰रेवतीर्जगतीभिः पृच्यन्ताम्" । पृची संपर्के । "रेवत्य आपो जगत्यः ओषधय"
इति श्रुतिः । संपृच्यन्तां रेवत्य आपः जगतीभिरोषधीभिः पिष्टाख्याभिः । "सम्मधुमतीभिः
पृच्यन्ताम्" । मधुशब्दो रसवचनः । संपृच्यन्तां मधुमत्स्वादोपेता आपः मधुमतीभिः । संपृ-
च्यन्तां वा मधुमत्स्वादोपेताभिरोषधीभिः पिष्टाख्याभिः ॥ २१ ॥ संयौति (१) । "जनयत्यै त्वा" ।

# पामि समापऽओषधीभिः समोषधयो रसेन ॥ सꣳ रेवतीर्जगतीभिः पृच्यन्ताꣳ सम्मधुमतीर्मधुमतीभिः पृच्यन्ताम् ॥ २१ ॥ जनय

द्यर्थीयं मन्त्रः । श्रुतिर्व्याचष्टे । जनेर्ण्यन्तस्य क्तिन् । जनयतिः । यजमानस्य जनयत्यै स्त्रीप्रजा-
पशुभिर्यजमानं जनयितुं संमिश्रयितुं त्वां संयौमि । अथवा पुरोडाश उच्यते । जनयत्यै
उत्पादनाय त्वां संमिश्रयामि । यथा त्वं मिश्रितः पुरोडाशभावमासाद्य अधिश्रितः सन्
इति । का॰ २।५।११-१२ । पिष्टसं वपनीया आप उपसर्जन्य इत्युच्यन्ते ॥ २१ ॥

(१) संयौति जनयत्यै त्वेति, संविभज्यार्धं हविष्मन्नालभते इदमग्नेरिदमग्नीषोमयोरिति, इषे त्वेत्याज्यमधिश्रयति, घर्मोऽसीति पुरुपाश्वं, उरुप्रथा इति प्रथयति, यावत्कपालन्,अग्निष्ट इत्यङ्गिरभिमर्शति. देवस्त्वेति अपणम् । का॰२।५।१५-१२

देवाद्योनेरग्ने अभिजायस इति। न ह्यतोऽन्यः कश्चित् त्वां मर्त्यो जनयितुमर्हति। असंहरन्निभ्यन्वालभते। "इदमग्ने रिदमग्नीषोमयोः"। अर्द्धशब्दः समविभागवचनो नपुंसकलिङ्गः तदभिप्रायमिद-मिति नपुंसकलिङ्गता। आज्यमधिश्रयति (२)। "इषे त्वा"। व्याख्यातम्। पुरोडाश-मधिश्रयति। "घर्मोसि"। प्रवर्ग्यस्त्वमसि (३)। "विश्वायुः"। सर्वायुः। विश्वं सर्वमायु-रस्येति विश्वायुः। "विश्वायुरिति तदायुर्दधाती"तिश्रुतिः। पुरोडाशं प्रथयति। उरुप्रथस्व

त्यै त्वा। जनयत्यै त्वा सं यौमी दमग्नेरिदमग्नीषोमयोरिषे त्वा घर्मोऽसि विश्वायुरुरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्

उरुप्रथाः"। उरु विस्तीर्णं प्रथसे स्वभावतः तं त्वां ब्रवीमि "उरुप्रथस्व"। किञ्च उरु ते तव यज्ञपतिर्यजमानः पुत्रान्नपश्वादिभिः प्रथतां विस्तारमाप्नोतु। अङ्गारैरभिस्पृशति। "अग्निष्टे"। हे पुरोडाश अग्निः ते तव त्वचं माहिंसीदिति। अपयति। "देवस्त्वा"। देवः सविता त्वां श्रपयतु वर्षिष्ठे उत्कृष्टे नाके स्वर्गे अधि उपरिस्थितम्। सविता वा नाके स्थितः। सविता

(२) आज्यस्य विलापनार्थं तत्पात्रस्याग्नौ स्थापनमधिश्रयणम्। (३) घर्मशब्देन दीप्यमानः प्रवर्ग्य उच्यते। घृतक्षरणदीप्तत्वात्: ॥२२॥

नः संस्तर एव स ह्याधियज्ञिको यज्ञमधिकृत्य वर्त्तते। देवलोकः पुरोडाशशरीरस्य च यद्यस्यै-
तज्जन्म यज्ञरूपत्वम्, स यदि देवलोके जायते अतस्तत्समानयोगक्षेमो यजमानोपि तत्रैव जनि-
ष्यत इति तत्र जन्माशास्यत इति ॥२२॥ पुरोडाशमभिमृशति (१)। "माभेर्मासंविक्थाः"। मा त्वं
भैषीः मा च त्वं संविक्थाः। ओविजी भयचलनयोः। तत्र भयं प्रतिषिद्धं चलनं त्वत्र निषिध्यते।
न भेतव्यं न चलितव्यमित्यर्थः। पुरोडाशमभिवासयति। "अतमेरुर्यज्ञः"। तमु अभिकाङ्क्षा-

मग्निष्टे त्वचम्मा हिंᳬसीद्देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ॥२२॥
माभेः । माभेर्म्मा संविक्थाऽअतमेरुर्यज्ञोऽतमेरुर्यजमानस्य-

याम्। यद्यपि धातुरभिकाङ्क्षाभावे पठ्यते तथापि ग्लासाभिकाङ्क्षायां भविष्यति। तमनशीलस्त-
मेरुः न तमेरुः अतमेरुः यज्ञः। अतमेरुर्यजमानस्य प्रजा भूयात्। भवेत*। पाण्यङ्गुलिप्रक्षालन-
माप्त्येभ्यो निनयति। "त्रिताय त्वा द्विताय त्वा एकताय त्वा"। निनयामीति द्रव्यपरो निर्देशः।

(१) माभेरित्यालभते, अतमेरुरिति शृतावभिघारयति भस्मना वेदेनोपवेषेण वा। का॰ २।५।२४-२५।

* भवेदिति १पु नास्ति।

निनयामीति शेषः । एवं द्विताय एवमेकताय । तत आप्त्याः संबभूवुः त्रितो द्वित एकत इत्येव-मादिरितिहासोयमवगन्तव्यः (२) ॥ २३ ॥ स्फ्यमादत्ते (१) । "देवस्य त्वे"ति व्याख्यातम् । "आददे" गृह्णामि । अध्वरं करोतीति "अध्वरकृतम्* देवेभ्यो"धीय । आलभ्य जपति । "इन्द्रस्य बाहुर्दक्षिणस्त्वमसि" । एष वै वीर्यवत्तमो य इन्द्रस्य बाहुर्दक्षिणः "सहस्रभृष्टिः" बहुभारः

प्प्रजाभूयात्त्रिताय त्वा द्विताय त्वैकताय त्वा ॥ २३ ॥ देवस्य त्वा । सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ आददेऽध्वरकृतन्देवेभ्यऽइन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वा-

"शततेजा" बहूनि तेजांसि यस्य स शततेजाः । "वायुरसि तिग्मतेजाः" । तिग्मं तेजः । तेनतेज-

(२) पूर्वं कृतयुगे देवेभ्योऽभीतोऽग्निरपः प्राविशत्ततो देवास्तं जगृहुस्तदाग्निना वीर्यमप्सु मुक्तं तत आप्त्या उत्पन्ना-स्त्रितद्वितैकतसंज्ञास्ते देवैः सह चरन्तो यज्ञे पात्रीप्रक्षालनजललक्षणं भागं लेभिरे इति श्रुत्युक्त इतिहासः ॥ २३ ॥

(१) देवस्येति स्फ्यमादाय, स त्वं सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरिति । का० २।६।१३-१४ ।

*अध्वरकृतम् । अध्वरंकरोतीत्यध्वरकृत् तम् — इति पा० १पु० ।

स्वाहकर्मणः उत्साह एव तेजो यस्य स तथोक्तः। "द्विषतः" शत्रो"र्वधः"वधकः (२) ॥२४॥
प्रहरति (१)। "पृथिविदेवयजनि"। वेदिः संबोध्यते। हे पृथिवि देवयजनि देवा यस्यामिज्यन्ते सा तथोक्ता। "ओषध्यास्ते" तव संबन्धिन्या "मूलं माहिꣳसिषम्"। टहि हिसि हिंसायाम्। 'माङ्लिङ्' माविनाशिषं वज्रेण प्रहरन्। पुरीषमादत्ते। "व्रजं गच्छ" व्रजन्त्यस्माद्गाव इति व्रजो घोषः गोवाटो वा उच्यते। गोव्रजे वा परिष्ठितं वा गवां स्थानं गच्छ।

युरसितिग्मतेजाद्विषतोव्वधः ॥२४॥ पृथिविदेवयजनि। पृथिविदेवयजन्न्योषंद्ध्यास्तेमूलम्माहिꣳसिषंव्व्रजङ्गच्छगोष्ठानंव्वर्षतुतेद्यौ-

वेदिं प्रेक्षते। "वर्षतु ते द्यौः"। वर्षतु तव द्युलोकः। शान्त्यर्थं वचनम्। उत्करे करोति। "बधान"। बध बन्धने, बन्धनं कुरु। हे "देव सवितः परमस्यां पृथिव्याम्" इति। श्रुतिः

(२) भृष्टिर्भर्जनं पाको मारणमिति यावत्। शतसंख्याकानां शत्रूणां मारक इत्यर्थो महीधरभावे ॥ २४ ॥

(१) पृथिवी देवयजनीति तृणोन्तर्हिते प्रहरति, व्रजं गच्छेति पुरीषमादत्ते, वर्षतु ते इति वेदिं प्रेक्षते, बधानेत्युत्करे करोति। २।३।१५-१९।

शु० य० सं० २५ उ० भा०

"परमस्यां पृथिव्यां" यत्र अन्धतामिस्रो नरकः (२) तत्र अन्धेतमसि बधानेति यदाह"। "शतेन पाशैः"। बहुभिः पाशैः। "योऽस्मान्द्वेष्टि" शत्रुः। "यं च वयं द्विष्मः"। शत्रुं "तम्" "अतः"। अस्मात् अन्धतमसः "मा मौक्"। मुच्लृ मोक्षणे। मा मुञ्च॥ २५॥ द्वितीयं प्रहरति। "अपाररुम्"। अररुः असुरः तमपनीय। "पृथिव्यै" पृथिव्याः देवयजनाच्च

बध्धा॒नदे॑वसवितः पर॒मस्या॑म्पृथि॒व्याᳪ᳟शतेन॒ पाशै॒र्योऽस्मान्द्वेष्टि॒ यञ्च॑ व॒यन्द्वि॒ष्मस्तमतो॒मामौ॑क्॥ २५॥ अपा॑ररुम्। अपार॒रुं-मपृथि॒व्यै दे॑व॒यज॑नाद्व॒ध्यासं॒व्व्र॒जङ्ग॑च्छगो॒ष्ठानं॒व्वर्ष॑तु॒ते॒द्यौ॑र्ब॒धा॒नदे॑-वसवितःपर॒मस्या॑म्पृथि॒व्याᳪ᳟शतेन॒पाशै॒र्योऽस्मान्द्वेष्टि॒ यञ्च॑व॒यन्द्वि॒

अपाररुं "वध्यासम्"। व्रजं गच्छेति समानम्। अभिन्यस्यत्यग्नीदुत्करमररोदिवमिति। हे "अररो" त्वं "दिवं" द्युलोकं "मा पप्तः"। मा गमः। तृतीयं प्रहरति द्रप्सस्तेद्याम्। योऽस्याः

१ श्रु० खिलम् २५

(२) "अन्धे तमसि बधानेति यदाह परमस्यां पृथिव्यामिति" श्रुतिः परमस्यामित्यत्र छान्दसः स्यात्॥ २५॥

पृथिव्या उपजीवनीयो रसः स द्रप्सः ते तव द्युलोकम् “मा स्कन्” मास्कांसीत्। मा स्कन्दतु । व्रजं गच्छेति समानम्(१) ॥२६॥ पूर्वं* परिग्रह्णाति(१) । “गायत्रेण त्वा” । त्वाशब्देन विष्णुरुच्यते । ते

ष्मस्तमतोमामौ'क् ॥ अर'रोदिवम्माप'प्तोद्र'प्सस्तेद्याम्मास्क'-न्व्रजङ्ग'च्छगोष्ठानंवर्षतुतेद्यौर्बधानदेवसवितः परमस्याम्पृथिव्या ठँशतेनपाशैर्योऽस्मान्द्वेष्टियञ्च'वयन्द्विष्मस्तमतोमामौ'क् ॥२६॥

“प्राञ्चं विष्णुं निपाद्ये”ति श्रुतिः (२) । “गायत्रेण त्वा छन्दसा परिगृह्णामि” । एवमुत्तरयोः ।

(१) अपाररुमिति द्वितीयं प्रहरति, अभिन्यस्यत्यमीदुत्करमररो दिवमिति, द्रप्सस्त इति तृतीयम्। का० २।६।२१—२४ ॥ २६ ॥

(१) पूर्वं परिग्रहं परिग्रह्णाति दक्षिणतः पश्चादुत्तरतःस्फ्येन गायत्रेणेति प्रतिमन्त्रं, उत्तरं परिग्रहं बध्नाति सद्या स्योनोर्जस्वतीति । २।६।२५-३१ ।

(२) प्रजापतिपुत्रा देवा असुराश्च स्पर्धां चक्रुस्तदा देवान् पराजयं प्राप्तास्ता भूमिमसुरा विभेजुस्तदा देवा

---

* पूर्वं परिग्रहं पा० १ पु०।

लैष्टुवेन जागतेनेति विशेषः। उत्तरं परिग्रहं परिगृह्णाति। पूर्वेण परिग्रहेण विष्णुं यज्ञं परिगृह्य तेन इमां पृथिवीं लब्ध्वा चोत्तरेण परिग्रहेण वज्ररूपेणासुरान् यज्ञवेदेर्निरस्यन्तो देवाः। "सुक्ष्मा चासि शिवा चासीति" दक्षिणतः। सुक्ष्मा इति पृथिवीनाम। शोभना पृथिवी त्वमसि। शिवा शान्ता च त्वमसि। पश्चिमतः। "स्योना चासि सुषदा चासि"। स्योनमिति सुख-

गायत्रेण त्वा। गायत्रेण त्वा छन्दसा परिगृह्णामि त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि जागतेन त्वा छन्दसा परिगृह्णामि॥ सुक्ष्मा-

नाम। सुखनामरूपा च त्वमसि। शोभनं यस्यां सीदन्ति सा सुषदा। उत्तरतः। "ऊर्ज-

वामनरूपविष्णुमग्रे कृत्वाऽसुरानागत्यास्मभ्यमपि भूम्यंशो दातव्य इति तानयाचिषुः, ततोऽसुरा अस्यन्तोऽयंविष्णु-र्यावति भूभागे शेते तावान् भवदीयो स्त्विूतूचुस्ततो देवा बह्वेतदस्माकमितुक्त्वा ते प्राच्यं विष्णुं निपात्य गायत्रेणेत्यादि-मन्त्रैर्यज्ञभूमिं जगृहुः। यज्ञो विष्णुस्स यत्र तिष्ठति सैव यज्ञभूमिरितितैर्विदितत्वाद्वेदिरिति तन्नामेनामेति श्रुति-कथामनुसंधाय वेदिग्रहणं विवेचम्।

स्वती चासि पयस्वती च"। अन्नवती चासि पयोविकारै रसैस्तद्वती च ॥ २७ ॥ वेदिमनुमार्ष्टि (१)। "पुराक्रूरस्येति"। निदानवतां मन्त्राणां पूर्वं निदानं वक्तव्यं पश्चान्मन्त्रार्थः तथा क्षिप्रमवगमो भवतीति। देवा असुरैः सह संग्रामं करिष्यन्त इदमूचुः यदस्याः पृथिव्या अनुपहतं देवयजनं तच्चन्द्रमसि स्थापयामः। तत्र यदि कथंचिदस्मानसुरा जयेयुः

चासिं शिवा चासिं स्योना चासिं सुषदा चास्यूर्जस्वती चासि पयस्वती-
च ॥ २७ ॥ पुराक्रूरस्यं। विसृपों विरप्शिन्नुदादायं पृथिवी-

ततस्तेनैव देवयजनेन पुनः प्रतिक्रियां करिष्यामः। तदेतच्चन्द्रमसि कृष्णमुपलभ्यते। एतदियमृक् त्रिष्टुप् उक्तवती। "पुराक्रूरस्य" क्रूरशब्दः संग्रामवचनः (२) पञ्चम्यर्थे षष्ठी। प्राक् संग्रामात्। "विसृपः" "सृपितृदोः कसुन्नि"ति कसुन्प्रत्ययान्तन्तुमर्थेऽव्ययं पञ्चम्यर्थे। विविधं सर्पन्ति योद्धारोऽस्मिन्निति विसृपाः "विरप्शिन्नि"ति आमन्त्रितं महन्नाम। स च विष्णुर्यज्ञवेदित्वौ

(१) पुरा क्रूरस्येत्यनुमार्ष्टि, द्विषतो वध इति स्फ्यमुदस्य प्रहरति। का० २।६।३२-४२।

(२) संग्रामो वै क्रूरमिति श्रुतेः ॥ २७ ॥

मापन्नः सन्निग्निभि र्वैदैर्निर्वर्त्यमानो विविधं स्पृशति शब्दं करोति। हविरग्निशन् विष्णोरुष्णु।
"उदादाय" उत्क्षिप्य प्रकृतत्वाद्देवाः "पृथिवीं जीवदानुम्"। जीवितस्य दात्रीं सारभूतामित्यर्थः।
"यामैरयंश्चन्द्रमसि स्वधाभिः" या मैरयन्। ईर गतौ। अनेकार्थत्वाद्धातूनामिह स्थापनार्थः।
चन्द्रमसि स्थापितवन्तः। "स्वधाभिः" स्वधाशब्दोऽन्नवचनः, इह त्वन्नहेतुभूतास्तिस्रो विद्या गृह्यन्ते।

**जीवदानुम् ॥ यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासोऽअनुदिश्य यजन्ते ॥ प्रोक्षणीरासादय द्विषतो वधोऽसि ॥ २८ ॥** प्रत्यु-

"यां चन्द्रमसि ब्राह्मणा दधु"रिति श्रुतेः। वयीलक्षणे ब्राह्मणाः संहितां यां पृथिवीं चन्द्रमसि न्यदधुः। "तामु धीरासो अनुदिश्य यजन्ते"। तां पृथिवीं धीरासो मेधाविनः अनुदिश्य दर्शनेन सम्यक् संपाद्य अद्यापि यजन्ते इति दर्शनप्रसंसा। प्रैषः। "प्रोक्षणीरासादय"। प्रोक्ष्यते आभिरिति प्रोक्षण्यः ता आसादय स्थापय। स्फ्यं प्रहरति। "द्विषतो वधोऽसि।" द्विष्टु र्वधो विनाशस्त्वमसि ॥२८॥ अथ स्रुवमादत्ते तं प्रतपति (१)। "प्रत्युष्ट" मिति। व्याख्या-

(१) स्रुवं प्रतप्य पूर्ववत्, वेदाग्रैरन्ततः प्राग्दंमाष्टि अनिम्रित इति प्रतथ प्रतप्य प्रयच्छत्यनिम्रितेति स्रुच इति। का० २।३।४५-१२।

तम्। स्रुवं संमार्ष्टि। "अनिशितोऽसि"। शोनूकरणे। निशितस्तीक्ष्णीकृतः न निशितः अनिशितः अतीक्ष्णीकृतस्त्वमसि। तथापि "सपत्नक्षित्" सपत्नान् क्षिणोतीतिसपत्नक्षित्। क्षिणक्षिणिहिंसायाम। क्षिणहिंसार्थः। यतस्त्वं यजमानस्य सपत्नक्षित अतो "वाजिनं त्वा"। वाजशब्दोन्नवचनः इह तु यज्ञवचनः। यतोसि देवानामन्नम्। "यज्ञोदेवाना-

ष्टꣳ रक्षः। प्रत्युष्टꣳ रक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽअरातयः। अनिशितोसिसपत्नक्षिद्वाजिनं त्वा वाजेध्यायै सम्मार्ज्मि॥ प्रत्युष्टꣳ रक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳ र-

मन्नमि" तिश्रुतिः। तं वाजमन्नं यज्ञाख्यं योर्हति स वाजी अर्हार्थे इतिणिन्। वाजिनं यज्ञियं त्वाम् "वाजेध्यायै" ञिइन्धी दीप्तौ। यज्ञोज्ज्वलनार्थम्। "संमार्ज्मि"। संशोधयामि। मृजूशुद्धौ। स्रुवं च प्रतपति। "प्रत्युष्टमि"ति। व्याख्याते यजुषी। संमार्ष्टि

(१) वाजस्य यज्ञस्य इध्यै दीप्तिर्वाजेध्यातदर्थमित्यर्थः।

(२) स्रुवस्य पुरस्तात्प्रथमं समार्गः स्रुचः स्तोलात्पश्चात्। "योषा वै स्रुक् वृषावास्रुव इति श्रुतेः॥ २८॥

स्रुचम् (३) "अनिशितासि"। व्याख्यातम्। अनिशितेति स्त्रीत्वविवक्षायां टाप् प्रत्ययः (४) वाजिनीमितिङीप् प्रत्ययः। एतावानेव विशेषः ॥२९॥ "योक्त्रेणपत्नीॅ० संनह्यति (१)। "अदित्यै रास्नासि" अदित्याः संबन्धिनी या रास्ना सा त्वमसि। रास्ना रसनाः। ऊर्द्ध्वं मुद्गूहति "विष्णोर्वेष्पोऽसि" । विष्णोर्यज्ञस्य वेष्पः। विष्लृ व्याप्तौ वेष्ट वेष्टने। अनयोर्द्धात्वोरन्यतरस्य रूपम्। यज्ञस्य व्यापनं

त्वो॒ निष्ट॑प्ता॒ऽअरा॑तयः ॥ अनि॑शितासि सपत्न॒क्षिद्वा॒जिनीं॑ त्वा वा॒जेध्या॒यै सम्मा॑र्ज्मि ॥ २९ ॥ अदि॑त्यै॒ रास्ना॑सि॒ विष्णो॑र्वे॒ष्पो॑ऽसि॒-

वेष्टनं वा त्वमसि। वेष्प आवर्त्त उच्यते दुत्थपरम्। आज्यमुद्वासयति। "ऊर्जेत्वे"ति। व्याख्यातम्। पत्न्याज्यमवेक्षते। "अदब्धेनेति"। आज्यमुच्यते। "अदब्धेन"। दभ्नातिर्हिंसार्थः अनुपहिंसितेन त्वां चक्षुषा अर्वाचीनं पश्यामि। किञ्च "अग्नेर्जिह्वासि"। यदा वा एतदग्नौ जुह्वति

(१) पत्नीं संवह्यति प्रत्यग्दक्षिणात उपविष्टां गार्हपत्यस्य, मुञ्जयोक्त्रेण त्रिवितापरिहरत्यधोवासोऽदित्यै रास्नासीति, दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वंमुद्गूहति विष्णोर्वेष्प इति न ग्रन्थिं करोति, ऊर्जेत्वेत्यन्यमुद्वास्य, पत्नीमवेक्षयत्यदब्धेनेति। २।७।१-५ ॥ २९ ॥

अथाग्नेर्जिह्वा इवोत्तिष्ठन्ति ज्वालोत्पत्तिनिमित्तमित्यर्थः। "सुहूर्देवेभ्यः"। साधु हूयतेऽनेनेति सुहूः। अथवा शोभनमाह्वानं यस्य देवेभ्योऽर्थाय तदाज्यं सुहूः। उपकृत्य प्रत्युपकारं प्रार्थयते। "धाम्ने धाम्ने मे भव यजुषे यजुषे"। धामानि त्रीणि भवन्ति स्थानानि नामानि जन्मानीति च। धाम्ने धाम्ने यजुषे यजुषे इति द्विर्वचनं वीप्सार्थम्। मम यज्ञस्य यावन्ति स्थानानि

ऊर्ज्जे त्वादब्धेन त्त्वा चक्षुषावपश्यामि ॥ अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्ने धाम्ने मे भव यजुषे यजुषे ॥ ३० ॥ सवितुस्त्वा । प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ सवितुर्वः प्रस

यावन्ति यजूंषि तावन्ति व्याप्नुहीत्यर्थः ॥ ३० ॥ आज्यमुत्पुनाति (१)। "सवितुस्त्वा" सवितुः प्रसवे (२) वर्त्तमानस्त्वामुत्पुनामि। व्याख्यातमन्यत्। प्रोक्षणीरुत्पुनाति। "सवितुर्वः"

(१) सवितुस्त्वेत्याज्यमुत्पुनाति, प्रोक्षणं च पूर्ववत्, आज्यमवेक्षते तेजोसीति, स्रुवेणाज्यग्रहणं चतुर्जुह्वां धामनामेति सकृन्मन्त्रः इति। का० २।६।७-१२।

(२) आज्ञायां वर्त्तमानः सन् त्वामुत्पुनामि शोधयामीत्यर्थः।

शु० य० सं० २९ उ० भा०

इति। व्याख्यातम्। आज्यमवेक्षते। "तेजोसि शुक्रमसि अमृतमसि" योऽयं तदवेक्षयति ददाति जुहोति वा तस्य तेजः प्रभृतीनि भवन्तीति वाक्यार्थः। यद्वा यत एवैतद्गुणयुक्तमाज्यम्(३)। आज्यं गृह्णाति। "धामनामासि"। धाम स्थानम्, अन्नम् आयतनम्। धीयतेऽस्मिन्निति धाम इति। धाम असि। नामयति सर्वाणि भूतानि आत्मानं प्रति अतो नाम। "प्रियं देवानाम्" इष्ट-

वसोः पवित्रम् अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः॥ तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि॥ ३१॥ इति संहितापाठे प्रथमोऽध्यायः॥ १॥

तमभिप्रेतं देवानाम्। "अनाधृष्टम्"। अनाधर्षितम् अप्रतिहतं रक्षोभिः। "देवयजनमसि"। देवा अनेन इज्यन्ते इति देवयजनम् (४)॥ ३१॥ इति मन्त्रभाष्ये उवटकृतौ प्रथमोऽध्यायः॥ १॥

(३) शरीरकान्तिहेतुत्वात्तेजस्त्वम्। स्निग्धरूपत्वाच्छुक्रत्वम्। बहुदिवसावस्थानेऽप्योदनादिवत्पर्युषितत्वादिदोषाभावादविनाशित्वम्। (४) ईदृशं त्वमस्यतस्त्वां गृह्णामीति योजना।

भारद्वाजोपनाम्ना श्रीगोविन्दविदुषा कृते। अफाणीत् प्रथमोऽध्यायो मन्त्रभाष्यस्य टिप्पणे॥ १॥

१ अ०

निबन्ध २९

इध्मं प्रोक्षति (१) "कृष्णोऽस्याखरेष्ठः।" अस्ति कृष्णशब्दो वर्णवचनोऽन्तोदात्तः। अस्ति कृष्णशब्दो मृगवचन आद्युदात्तः। तदिहाद्युदात्तत्वात्कृष्णमृगो गृह्यते। तथाहि श्रुतिः। "यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचारेति।" इध्मपूलक उच्यते। कृष्णमृगो यज्ञस्त्वमसि यज्ञसाधनत्वाद् यज्ञ इत्युच्यते। "आखरेष्ठः"। आङ्गर्थे। आहवनी-

ॐ ॥ कृष्णोऽसि । कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि वेदि-

रसि बर्हिषे त्वा जुष्टां प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षा-

याख्ये खरे, खं स्वर्गं राति ददाति, (२) तत्र अधि उपरि तिष्ठतीत्याखरेष्ठः। एतदुक्तं भवति।

ॐम्। पूर्वाध्याये शाखाच्छेदनमारभ्याज्यग्रहणान्ता मन्त्रा व्याख्याताः। द्वितीयेऽध्याये इध्मप्रोक्षणादयो दर्शपूर्णमासमन्त्राः पिण्डपितृयज्ञमन्त्राश्च व्याख्येयास्तदर्थमुपक्रमते। अनुवाकसूत्रं कृष्णोऽसिषट् इ अग्नेवाजजित्तिस्रो ३, मयीदमग्नीषोमयोः पञ्चका ५, वसन्तेरुद्रा चतस्रः ४, संवर्चसा पञ्च ५, अग्नये कव्यवाहनाय षट्, सप्तचतुस्त्रिंशत्।

(१) 'इध्मं प्रोक्षति विस्रंस्य वेदिं च बर्हिः प्रतिग्रह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थिं कृष्णोऽसीति प्रतिमन्त्रम्। का० २।७।१९। इध्मं विस्रंस्य प्रोक्षति वेदिं च प्रोक्षति, बर्हिरादाय वेद्यां पूर्वग्रन्थिं कृत्वा प्रोक्षेत्क्रमान्मन्त्रत्रयेणेति सूत्रार्थः।

आहवनीयाख्ये खरे स्थितस्त्वं कृष्णमृगो यज्ञो भवसि अतोग्नये त्वा जुष्टमभिप्रेतमभिरुचितं प्रोक्षामि। वेदिं प्रोक्षति। "वेदिरसि"। "तद्यदेतेनेमां सर्वं समविन्दत तस्माद्वेदिर्नामेति"। तां व्युत्पत्तिमङ्गीकृत्याह (३)। "वेदि" स्त्वं "असि" अतो बर्हिषे त्वामभिरुचितां प्रोक्षामि। बर्हिः प्रोक्षति। बर्हिरसि" बर्हिस्त्वमसि। अतः स्रुग्भ्यस्त्वामभिरुचितं प्रोक्षामि॥ १॥ शेषं मूलेषूपसिञ्चति (१) "अदित्यै व्युन्दनमसि"। इयं वै पृथिव्यदितिः।

## स्रुग्भ्यस्त्वा॥ अदित्यै व्युन्दनम्॥ १॥ अदित्यै व्युन्दनमसि विष्णोस्तुपोस्यूर्ण-

षष्ठ्यर्थे चतुर्थी। अदित्याः पृथिव्याः व्युन्दनम्। उन्दी क्लेदने। क्लेदनं सेचनं भवसि। उदकमुच्यते। प्रस्तरं गृह्णाति। (१) "विष्णोस्तुपोसि"। विष्णोर्यज्ञस्य। स्तुपः। ष्टुपैस्तै शब्दसंघातयोः।

(२) आसमन्तात् खरे कठिने वृक्षे तिष्ठति आखरेष्ठ इति वार्थः। यज्ञः कदाचिद्देवेभ्योपक्रान्तः स्वगोपनाय कृष्णमृगोभूत्वा वने यज्ञियतरुरूपे प्रविश्य कुत्रचित्कठिने वृक्षे तस्थौ तमिममितिहासमुद्बोधयत्याखरेष्ठ इति।

(३) विद्यते लभ्यते देवैरसुरेभ्य इति वेदिरितिमहीधरभाष्यम्॥ १॥

(१) शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनम्, बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति, वेदिस्तृणाति ऊर्णं-

स्त्यायतेः संघातः शिखा असि *। वेदिं स्तृणाति। "ऊर्णम्रदसम्" ऊर्णामिव म्रद्वीं त्वां कर्तुं स्तृणामि। स्तृञ् आच्छादने। आच्छादयामि। "स्वासस्थां" साधु मर्यादया यस्यामासीदन्ति सा तथोक्ता। तां त्वां स्तृणामि देवेभ्योऽर्थाय। स्रुचमभिमृशति। "भुवनपतये-स्वाहा" †। अस्याग्नेर्ये भ्रातरः पूर्वे त्रयो बभूवुः ते वषट्कारभयादिमां पृथिवीं प्राविशन् प्रविष्टाः, अयं चाग्निः अपलाय्याप्सु प्राविविक्षत् ‡ प्रवेष्टुमैच्छत् तं देवैरानीय स्वाधिकारे नियुज्यमान

## म्र॒द॑सन्त्वास्तृणामिस्वा॒स॒स्थान्दे॒वेभ्यो॒भुव॑पतये॒स्वाहा॒भुव॑नपतये॒-स्वाहा॒भूता॒नाम्पत॑ये॒स्वाहा॑ ॥ २ ॥ ग॒न्ध॒र्वस्त्वा॑। वि॒श्ववा॑वसुः

एवमुवाच एतैरग्निभिर्मां परिधत्त त एते परिधयः तेषां चायं भागः कृष्णोऽग्नीनाम्। भुवःशब्देन मध्यमा व्याहृतिरुच्यते, भुवनशब्देन जगदुच्यते, भूतानामितिशब्देन भूतान्येवोच्यन्ते तेषां येऽधिपतयोऽग्नयस्तेभ्यः स्वाहेति संबन्धः ॥२॥ परिधीन् परिदधाति(१)। "गन्धर्वस्त्वा"। परिधिरुच्यते

म्रदसम्, स्रुचमभिमृशति भुवपतये स्वाहेति। का० २।७।२०-२२ ॥ २ ॥

(१) परिधीन् परिदधाति मध्यमदक्षिणोत्तरान् गन्धर्वं इति प्रतिमन्त्रम्। २।८।५।

---

* संघातकर्षणः शिखाऽसि वर्हिस—पा० पु०। † भुवनपतये स्वाहा। भूतानांपतये स्वाहा मा० पु०। ‡ प्रवष्टुमैच्छत्—नास्ति मा० पु०।

गन्धर्वोविश्वावसुस्त्वां (२) परिदधातु सर्वतः स्थापयतु "विश्वस्य" सर्वस्य "अरिष्ट्यै" अविनाशाय। रिषिरिषि हिंसायाम्। रिष्टतिः हिंसार्थः। सा तत्र प्रतिषिद्धा। किञ्च "यजमानस्य परिधि-रसि" न केवलमाहवनीयस्य किन्तर्हि यजमानस्यापि परिधिरसि। किञ्च "अग्निरसि" आहवनी-यस्य भ्राता। अत एवमुच्यते। "इड़े" स्तोतव्य। हेतावभिप्रायमेतत् "इडितः"। इडस्तुतौ। स्तुत

परिदधातुविश्वस्य स्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडईडितः॥ इन्द्रस्यबाहुरसिदक्षिणोविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडईडितः॥ मित्रावरुणौत्वोत्तरतः

इत्यर्थः। दक्षिणं परिदधाति। "इन्द्रस्य बाहुरसि दक्षिणः"। इन्द्रस्य दक्षिणेन बाहुना परिक्षिप्य-सीयते। व्याख्यातः शेषः। उत्तरं परिदधाति। "मित्रावरुणौ त्वोत्तरतः"। मित्रावरुणौ वायवादित्यौ त्वाम् उत्तरतः सर्वतः परिधत्ताम्। "ध्रुवेण" अचलेन "धर्म्मणा" धारकेण। "विश्वस्यारिष्ट्या"



(२) विश्वजित् सर्वजित् सदेषि वसतीति विश्वावसुः। दुग्लोकस्थं सोमं रक्षितुं तत्पार्श्वे वसन् गन्धर्वा

इति व्याख्यातम् ॥ ३ ॥ आहवनीये इध्मकाष्ठमादधाति (१)। "वीतिहोत्रम्"। आग्नेयी गायत्री।
"वीतिहोत्रम्"। वी गतिप्रजननकान्त्यशनखादनेषु। वीतिः अभिलाषः होतृकर्म्मणि यस्य सवीतिहोत्रः। अथवा विविधा ईतिर्गतिर्होत्प्रशास्त्रादिषु होत्रासु यस्य स वीतिहोत्रः। हे भगवन्नग्ने वीतिहोत्रं त्वाम्। "कवे" क्रान्तदर्शन। अतीतानागतविप्रकृष्टविषयं युगपद्दर्शनं यस्य सः क्रान्ति-

परिधत्तान्धु वेणुधर्म्मणाव्विष्ठभ्युवसयारिष्ट्यै यजमानस्यपरिधिरस्यग्निरिडईडितः ॥ ३ ॥ व्वीतिहोत्रन्त्वा। कवेद्युमन्तुं समिधीमहि ॥ अग्नेबृहन्तमध्वरे ॥ ४ ॥ समिदसि। समि-

दर्शनः। "द्युमन्तम्" दीप्तिमन्तम्। "समिधीमहि"। इन्धी दीप्तौ। सन्दीपयामः। अनेन इध्मकाष्ठेन "बृहन्तं" महान्तम् "अध्वरे" यज्ञे (२) ॥ ४ ॥ द्वितीयमादधाति। "समिदसि"।

अवसन्निति श्रुत्यन्तरकथा। इति महीधरभाष्ये ॥ ३ ॥

(१) अथ परिधिं समिधोपस्पृश्य वीतिहोत्रमित्यादधाति। का० २।८।२। (२) इण्गतौ। इतिर्गतिः व्याप्तिः पुत्रपौत्रपशुधनादिभिः समृद्धिरित्यर्थः। इति महीधरभाष्यम् ॥ ४ ॥

शु० य० सं० ३२ उ० भा०

(१) अङ्गप्रधानार्थस्याग्नेः * "समिन्धनमसि"। समित् स्तूयते। आहवनीयमीक्षमाणो जपति। "सूर्यस्त्वा पुरस्तात्पातु"। गोपायतु। गुप्तेश्च वाभितः परिधयो भवन्ति। "अथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोतीति" श्रुतिः(२)। "कस्याश्चिदभिशस्त्यै"। यः कश्चिदभिशापस्तस्मादित्यर्थः। अभिशस्त्या इति चतुर्थी षष्ठ्यर्थे। बर्हिषस्तृणे तिरश्ची निदधाति। "सवितुर्बाह्व स्थः"। अनेन प्रस्तरस्य

दसि सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्यै ॥ सवितुर्बाहू स्थऽऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यऽआ त्वा वसवो-

धारणाङ्गमेण युवां सवितुर्बाहू भवथः। तयोः प्रस्तरं स्तृणाति। "ऊर्णम्रदसम्"। ऊर्णामिव म्रदुं त्वां स्तृणामि। "स्वासस्थम्, देवेभ्यः" साधुअस्मिन्नासीदन्ति तिष्ठन्ति इतिस्वासस्थः प्रस्तरः। देवेभ्य इति षष्ठ्यर्थे चतुर्थी देवानामिति यावत्। प्रस्तरमभिनिदधाति। "आत्वावसवः"।

(१) अनुपस्पृश्य द्वितीयं समिदसि, सूर्यस्त्वेतिजपत्याहवनीयमीक्षमाणो, बर्हिषस्तृणे तिरश्चो दधाति सवितुरिति, तयोः प्रस्तरं स्तृणात्यूर्णं म्रदसमिति अभिविदधात्यात्वा वसवइति। का-२।८।३।-११। (२) इतरदिक्त्रयी

* आहवनीयस्यं प्रधात्—पा० शु० उधिकम्।

२ अ० विषय ३२

स्कन्दिरगति शोषणयोः। आसदन्तु आसीदन्तु त्वां सवनदेवता वसवो रुद्रा आदित्याः॥ ५॥
जुहूं निदधाति (१)। "घृताच्यसि"। अञ्चु गतिपूजनयोः। घृतमञ्चितं प्राप्तं यस्यां स्रुचि घृतं
वा अचयते यया स्रुचा सा घृताची। "जुहूर्नाम्ना"। क्रियाभिप्रायमेतत्। हूयते अनयेति
जुहूः। "सेदंप्रियेणधाम्ने"ति तदः श्रवणाद्यदोध्याहारः। या त्वं घृताच्यसि जुहूश्च नाम्ना

रुद्राऽआदित्याः सदन्तु ॥ ५ ॥ घृताच्यसि । जुहूर्नाम्ना-
सेदम्प्रियेणधाम्ना प्रियꣳसदऽआसीद घृताच्यस्युपभृन्नाम्ना सेद-
म्प्रियेणधाम्ना प्रियꣳसदऽआसीद घृताच्यसि ध्रुवानाम्ना सेदम्प्रि-

सा इदं प्रियं सदः स्थानम् आसीद अधितिष्ठ। प्रियेण धाम्ना सहिता। "एतद्वै देवानां प्रियं
धाम यदाज्यमि"ति श्रुतिः। आज्यसहितेत्यर्थः। अथ वा धामानि भवन्ति स्थानानि नामानि
रचकं भवति पूर्वस्यां तदभावात्सूर्यं इति श्रुति तात्पर्यम्॥ ५॥

(१) सव्यापूर्व्ये जुहूं प्रतिगृह्य निदधाति घृताचीत्येवमितरे उत्तराभ्यां प्रतिमन्त्रम्; प्रियेण धाम्नेति हवींषि वेद्यां कृत्वा ध्रुवा असदन्निति सर्वाण्यालभते पाहिमामित्यात्मानमिति। का० २।८।१२-२०।

9.

जम्मानीति वा। अस्मिन् पक्षे प्रियेण नाम्ना सहिता सतीति योज्यम्। उपभृतं सादयति। "घृताचग्रसुग्रपभृन्नाम्ना"। उपभरणादुपभृत्। व्याख्यातमन्यत्। ध्रुवां सादयति। "घृताचग्रसिध्रुवा-नाम्ना"। ध्रुवा स्थिरा (२)। व्याख्यातमन्यत्। अन्यद्धविः सादयति। "प्रियेण धाम्ना"। व्याख्यात-मन्यत्। तानि हवींऽषि अभिमृशति। "ध्रुवा असदन्"। ता विष्णो पाहीति तदः सत्राद्यदोऽध्या-

येण धाम्नां प्रियꣳसदऽआसीदप्रियेण धाम्नां प्रियꣳसदऽआसीद॥

ध्रुवाऽअसदन्नृतस्य योनौ ताविष्णोपाहि पाहियज्ञम्पाहियज्ञपतिं-

म्पाहिमांऽयज्ञन्यम्॥ ६॥ * अग्नेवाजजिद्वाजन्त्वासरिष्य

हारः। यान्येतानि ध्रुवाणि असदन् आसादितानि "ऋतस्य योनौ" यज्ञस्योत्सङ्गे "ता विष्णो" तानि हवींषि पाहि गोपाय। किञ्च "पाहि यज्ञम्" गोपाय यज्ञम्। किञ्च "पाहि यज्ञपतिं" यजमानम्। आत्मानमुपस्पृशति। "पाहिमाम्"। अध्वर्युरात्मानं ब्रवीति। गोपाय माम्। "यज्ञन्यम्"। यज्ञं नयतीति यज्ञनीः। गोपाय मां यज्ञस्य नेतारमित्यर्थः॥ ६॥ अग्नेः संमार्गं

(२) यथा होमार्थं जुह्वपभृतोश्चलनं तद्वदस्याश्चलनाभावेन स्थिरतया नाम्ना ध्रुवत्वम्॥ ६॥

करोति (१)। "अग्ने वाजजित्"। हे भगवन्नग्ने वाजजिद् वाजस्यान्नस्य जेतः "वाजं त्वा सरिष्यन्तमि"ति। सृ गतौ। यज्ञं त्वां प्रापयिष्यन्तम् "वाजजितम्"। अन्नस्य जेतारं संमार्ज्मि। स्रुजूव् मृष्टौ। अञ्जलिं करोति। "नमोदेवेभ्यः" देवेभ्यो निन्हवः। दक्षिणत उत्तानं पाणिं करोति। "स्वधापितृभ्यः"। पितृभ्योनिन्हवः। जुहूपभृतावादत्ते। "सुयमेमे"। स्रुचावुच्येते। साधु

न्तं॑ वाजजित॒ꣳ सम्मा॑र्ज्मि नमो॑ देवेभ्य॑: स्वधापितृभ्य॑: सुय-
मे॑मे भूयास्तमस्क॑न्नमद्य ॥ ७॥ अस्क॑न्नमद्य। देवेभ्य॑ऽआज्य-

यमे (२) मे मम "भूयास्त" भवतम् ॥ ७ ॥ यथाहं सुसंयताभ्यां स्रुग्भ्याम् अस्कन्नं सकलम् अद्य अस्मिन् कर्मणि देवेभ्योर्थाय "आज्यम्" आज्यशब्देन यज्ञो लक्ष्यते यज्ञं "संभ्रियासं" संबिभृयाम्। दक्षिणातिक्रामति। "अंघ्रिणाविष्णो" अंघ्रेर्गत्यर्थस्य अंघ्रिः पादः।

(१) इध्मसंनहनैरनुपरिधिं संमार्ष्ट्यग्ने वाजजिदिति त्रिस्त्रिः परिक्रामति, अपरमाहवनीयादञ्जलिं नमोदेवेभ्य इति, स्वधापितृभ्य इति दक्षिणत उत्तानम्, सुयमे म इति जुहूपभृतावादायेति। का० ३।१।१२-१६।

(२) सुयमे सुयते इत्यर्थः ॥ ७ ॥

पादेन "विष्णो" यज्ञ। "मात्वावक्रमिषम्"। माङ्लिलुङ्‌मात्वासवाचीनं क्रमिषम्। "वसुमती" मित्यवस्थाय, वसुमतीं धनवतीम् हे भगवन्नग्ने ते तव "छायाम्"। छायाशब्द आश्रयवचनः। युष्माकं पादच्छायायां वसामीति यथा आश्रयम्, "उपस्थेषम्" उपतिष्ठेयम्। विष्णोर्यज्ञस्थानं भवसि। यज्ञस्य ह्येतत्स्थानं यत्र स्थितैर्यागः क्रियते यत्*

ॐ सम्भ्रियास मङ्घ्रि शा विष्णो मात्वावक्रमिषं वसुमतीमग्ने ते च्छायामुपस्थेषं विष्णोस्स्थानमसीत इन्द्रो वीर्य्यमकृणोदूर्द्ध्वो ध्वर आ-

जुहोति। "इतइन्द्रः" इत अस्मात् यजतिस्थानाद् उत्थायेतिशेषः। "इन्द्रो वीर्य" वीरस्य कर्म वीर्यम् "अकृणोत्"। कृञ् हिंसाकरणयोः। कृतवान्। "अतोहीन्द्रस्त्रिष्टन्दक्षिणतोनाष्ट्रारक्षांस्यपाहन्तीति" श्रुतिः। किञ्च "ऊर्द्ध्वो ध्वर आस्थात्" यतश्च यजतिस्थानादूर्द्ध्वः प्रगुणः यज्ञः आस्थात् आस्थितः। अध्वर्युमुख † यागाभिप्रायमेतत् (१)॥८॥ 'अग्ने वेर्होत्रं वेदूत्यम्'। हे अग्ने वेः।

(१) दक्षिणातिष्ठन्नमस्यदक्षिणाविष्णाविति, वसुमतीमित्यवस्थाय, इत इन्द्र इति जुहोति। का ३।१।१७-१८।३।२।१ ॥८॥

* यत्—इति क्वचिन्नास्ति।

विद् ज्ञाने विद्धि जानीहि अवगतार्थो भव। मया हौत्रं कर्त्तव्यम्। "वेर्दूत्यम्"। विद्धि च दूत्यं दूतस्य कर्म मया कर्त्तव्यम्। "उभयं वा एतदग्निर्देवानां होता च दूतश्चेति" श्रुतिः। "अवतां त्वा द्यावापृथिवी"। त्वां कर्मणि प्रवृत्तं पालयेतां द्यावापृथिव्यौ "स्विष्टकृत्" साधु इष्टं करोतीति स्विष्टकृत् देवेभ्योऽन्येभ्यः सकाशात् प्रथमम्। "इन्द्र आज्येन" अजगतिक्षेपणयोः। अजनेन हविषा हवस्त्यात् ॥ ८ ॥ अग्नेर्वेः। अग्ने र्वेर्होत्र्वेर्दूत्यमवतान्त्वान्द्यावापृथिवीऽअवत्त्वन्द्यावापृथिवीस्विष्टकृद्देवेभ्यऽइन्द्रऽआज्येनहविषाभूत्स्वाहासञ्ज्योतिषाज्ज्योतिः ॥ ६ ॥ * मयीदम्। नेन भूत् भूयात् स्वाहा सुवाक् आह। "वाचे वा एतमाघारयतीन्द्रो वागित्युवाच आज्ज"रिति श्रुतिः। ज्, ह्वाध्रुवां समनक्ति (१) "संज्योतिषाज्योतिः"। सं गच्छतामित्यध्याहारः। ज्योतिषा आज्येन ज्योतिः आज्यं सङ्गच्छताम् ॥९॥ यजमानो जपति "मयीदमिन्द्रः"। मयि इदम् इन्द्रः

(१) जुह्वाध्रुवां समनक्ति ज्योतिषेति। का ३।२।२ ॥ ६ ॥

---

† स्वाहा—इति वा, पु, नास्ति।

इन्द्रियं वीर्यम् आधातु स्थापयतु। किञ्च "अस्मान् रायः" धनानि "मघवानः" मघं धनं विद्यते येषां ते मघवानः धनिनः "सचन्तां" सेवन्ताम्। षच सेवने। एतदुक्तं भवति धनानि धनिनश्चास्मान् सेवन्ताम्। किञ्च अस्माकं सन्त्वाशिषः "सत्या" अवितथाः "नः" अस्माकं भवन्तु आशिषः। अग्नीन् प्राश्नाति(१)। "उपहूता" अभ्यनुज्ञाता "पृथिवीमाता" जगतो निर्मात्री। "उपमां पृथिवी

मय्यीदमिन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम्॥ अस्माकं सन्त्वाशिषः सत्या नः सन्त्वाशिष उपहूता पृथिवी माता उप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात् स्वाहा॥ १०॥ उप-

माता ह्वयताम्"। अभ्यनुजानातु मां पृथिवी माता भक्षणाय। अहं तु अग्निः सन् भक्षयामि। अग्नीत् द्वितीयं प्राश्नाति। "उपहूतो द्यौः पिता" अभ्यनुज्ञातो द्यौः पिता पाता। "उपमां द्यौः

(१) प्राश्नातुपहूता पृथिवीति। का० ३।४।१८-२० एतत्सूत्रार्थस्तु यदा होता द्यावापृथिव्योरुपह्वानं करोति तदोभयोः पुरोडाशयोरेकैकमंशं षड़वत्ते षड़वत्तेऽङ्गलाग्नीधे ददाति सचोपहूतेतिमन्त्रेण तत्प्राश्नातीति। (२) महीधराचार्यैस्तु अग्नीध इदं कर्माग्नीध्रं तस्माद्धेतोरग्निः सन् तं भागं प्राश्नातीत्यर्थ उक्तः। (३) जठरेऽग्नावितिशेषः॥१०॥

पिताह्वयताम्" । उपहूयताम् अभ्यनुजानातु मां द्यौः पिता माता । अहं तु "अग्निः" आग्नीध्रादिति समानम् । इत उत्तरं ब्रह्मत्वं * प्रतिष्ठान्तं बृहस्पतिराङ्गिरसोपश्यत् । प्राशित्रं गृह्णाति (१) "देवस्यत्वेति" व्याख्यातम् । प्रति गृह्णामीत्युत्तमः पुरुषः । प्राश्नाति । "अग्नेष्ट्वास्येन" । अग्नेः संबन्धिना आस्येन मुखेन त्वां प्राशित्रं प्राश्नामि भक्षयामि ॥११॥ समिदाधानेनित: प्रासीति (१) ।

हूतो द्यौः । उपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहा ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । प्रतिगृह्णाम्यग्नेष्ट्वास्येन प्राश्नामि ॥११॥

"एतं ते देव" । अध्वर्युराह ब्रह्मन् प्रस्थास्यामीति । एतं यज्ञं ते तव हे "देव" दानादिगुणयुक्त सवितः प्रसवितः प्राहुः । एकवचनस्य स्थाने बहुवचनम् । प्राहब्रवीति । "तत्सवितारं प्रसवायो-

(१) देवस्य त्वेति प्रतिगृह्णाति, अग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन् इति । का० २।२।१६।१७ ॥ ११ ॥

* ब्रह्मकर्मत्व—पा, वा, पु ।

शु० य० सं० २६ उ० भा०

पद्यावतीति" श्रुतिः। किञ्च "बृहस्पतये ब्रह्मणे" प्राह बृहस्पतिर्वै देवानांब्रह्मा तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति "तेन यज्ञमव"। तेन हेतुना यज्ञम् अवपालय। तेन च "यज्ञपतिं यजमानं च पालय। तेन च "माम्" अव पालय ॥१२॥ किञ्च "मनोजूति-

एतन्ते। देवसवितर्य्यज्ञम्प्राहुर्बृहस्पतयेब्ब्रह्मणे। तेनयज्ञमव तेनयज्ञपतिन्तेनमामव ॥ १२ ॥ मनोजूतिः। मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञᳬसमि-

र्जुषतामाज्यस्य" मनो जुषताम् सेवताम् आज्यस्य स्वांशम्। कथंभूतं मनः जूतिः। जवतेर्गति-कर्मणो जूतिः। अतीतानागतवर्तमानेषु कालेषु पदार्थेषु यद्गन्तृ गच्छति। "किञ्च बृहस्पतिर्यज्ञ-मिमं तनोतु" विस्तारयतु "अरिष्टं यज्ञᳬं समिमं दधातु"। रिषतिर्हिंसार्थः। अरिष्टमविनष्टं

(१) एतमिति समिदामन्त्रितः प्रसौति, का०२।२।२७ समिधमाधातुमनुज्ञाप्रदानाय बोधितो ब्रह्मा एतं त इत्यादिना ओं प्रतिष्ठत्यन्तेन मन्त्रेणानुजानीयात् ॥ १२ ॥

विषम २६

यज्ञमिमं ज्ञात्वा दधातु। इडाभक्षणेन हि यज्ञोविच्छिन्नः इत्यत एवमुच्यते। किञ्च "विश्वे-देवासः" देवा एव देवासः। 'आज्जसेरसुक्'। सर्वे देवा इह कर्मणि मादयन्ताम् (१)। मदी हर्षे। हर्षं कुर्वन्तु। स्वार्थिको णिच्। अवतेराप्नोतेर्वा। ओंकारः इडाभ्युपगमार्थः। "प्रतिष्ठ" प्रकर्षेण तिष्ठ॥ १३॥ "एषा ते अग्ने" (१)। इतः प्रभृति प्राकृतमार्षम्। आग्नेयी अनुष्टुप् समिदनुमन्त्रणे विनियुक्ता। हे भगवन्नग्ने एषा ते तव "समित्" समिन्धनम्। "तया"

मन्दधातु॥ विश्वेदेवासऽइह मादयन्तामो३म्प्रतिष्ठ॥ १३॥

एषाते। अग्ने समित्तया वर्द्धस्वचाचप्यायस्व॥ वर्द्धिषीमहि

समिधा "वर्द्धस्व च आचप्यायस्व"। चकारो भिन्नक्रमः। आप्यायस्व च। वर्द्धमाना-प्यायने समिधा कुर्वित्यर्थः। किञ्च त्वत्प्रसादाद्वयं "वर्द्धिषीमहि"। पुत्रपश्वादिभिः। "आचप्या-सिषीमहि"। चकारो भिन्नक्रमः। आप्यासिषीमहि च। प्यायतेर्लिङि सीयुटि उत्तमपुरुषैक-

(१) मादयन्ताम् तृप्यन्ताम्। मदतृप्तौचुरादिरिति महीधराः॥ १३॥

(१) एषाते इति होतानुमन्त्रयतइति। का० ३।५।२। ब्रह्मत्वं समाप्तम्।

वचने एतद्रूपम्। तत्र सौयुटश्छान्दसोऽध्यासः। अग्निं संमार्ष्टि (२)। "अग्नेवाजजित्"। "सहृवांस" (३) स्ववन्तमितिविशेषः॥ १४॥ जुहूपभृतौ व्यूहति (१)। तत्र जुह्वाय मान-संतवः अग्नीषोमयोः प्रधानदेवतयोः "उज्जितिमनु" ऊर्द्ध्वं जयनमनु। "उज्जेषम्" ऊर्द्ध्वं जयेयम्। किञ्च "वाजस्य" अन्नस्य पुरोभाशादेः। "मा"मां "प्रसवेन" अभ्यनुज्ञया करणभूतया प्रोहामि

सम्युग्मावय्योसिषीमहि॥ अग्नेवाजजिद्वाजन्त्वासस्वाᳪं संवाजजितᳪं सम्मार्ज्मि॥१४॥ *॥ अग्नीषोमयोरुज्जितिम्। अग्नीषोमयोरुज्जितिमनूज्जेषंवाजस्यमाप्रसवेनप्रोहामि॥ अ-

प्रेरयामि। मद्धलत्वादग्नीषोमयोरुज्जितिमनु हविषः प्रसवस्य करणत्वेन विवक्षितत्वात मामि-

(२) संमार्ष्टि पूर्ववत्परिक्रामन् सकृत्सकृत्सहृवांसमितीति। का० ३।५।८। पूर्वमग्नेवाजजिदितिमन्त्रेण यथेष्ठं त्रैस्त्रेसंमार्गः कृतस्तथात्रापि, परं पूर्वं त्रिस्त्रिः कृतः इह तु परिक्रमणमन्तरा एकवारमेव।

(३) अन्नसु दिश्य गतवन्तमन्नं सम्यान्तिवन्तमित्यर्थः॥ १४।

(१) जुहूपभृतौ व्यूहत्यग्नीषोमयोरिति। का० ३।५।१७-१८।

स्यात्मनः कर्मत्वं प्रोहामीतिकर्तृत्वं चोपपद्यते (२)। उपभृतं प्रतीचीं प्रेरयति। "अग्नीषोमौ" प्रधानहविर्भाजौ "तं" शत्रुम् "अपनुदताम्"। णुद प्रेरणे। अपगमं नयताम्। "यो ऽस्मान्द्वेष्टि"। द्विष अप्रीतौ। योऽस्माभिर्न प्रीयते "यं च वयं द्विष्मः"। येन च वयं न प्रीयेमहि। किञ्च एवमग्नीषोमाभ्यामपनुद्यमानं शत्रुमन्नस्य "प्रसवेन अपोहामि" अपाञ्चं प्रेरयामि अधो

ग्नीषोमौ तमपनुदतां योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मो वाजस्यैनम्प्रसवेनापोहामि ॥ इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ॥ इन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मो वाजस्यैनम्प्रसवेनापोहामि ॥ १५ ॥ वसुभ्यस्त्वा रुद्रेभ्यस्त्वा

नयामीत्यर्थः। उत्तरौ मन्त्रौ समानव्याख्यानौ ॥ १५ ॥ परिधीननक्ति अध्वर्युः। "वसुभ्यस्त्वा"

(२) तत्र जुहूं प्राचीं प्रेरयति यजमानः। व्यूहनं परस्परविपरीतत्वेनापनोदनम्। अग्नीषोमयोः द्वितीयपुरोडाश-देवतयोरुज्जितिमनु अविघ्नेन हविः स्वीकाररूपमुत्कृष्ट जयमनुसृत्याहमुज्जेषमुत्कृष्टं जयं प्राप्तवानस्मि। इति महीधर-भाष्ये स्पष्टोऽर्थः उत्तरौ मन्त्रौ दर्शदेवताविषयौ समानार्थौ ॥ १५ ॥

शु० य० सं० २८ सू० भा०

परिधिरुच्यते(१)। "वसुभ्यो"र्थाय "त्वा"मनज्मि। "रुद्रेभ्यो"र्थाय "त्वा"मनज्मि। "आदित्येभ्यो" र्थाय त्वामनज्मि। एतदुक्तं भवति। इत्थं भूता यूयं येन युष्मदभ्यञ्जनेन सवनदेवतानां तृप्तिः। प्रस्तरमादत्ते। "संजानाथाम्"। हेद्यावापृथिव्यौ युवां संजानाथाम्। अवगतार्थं भवतं युवाभ्यां वृष्टिर्दातव्येति। किञ्च "मित्रावरुणौ वां वृष्ट्यावताम्"। वायुर्वै वर्षस्येष्टे स चाध्यात्मम्। प्राणोदानभूतौ मित्रावरुणशब्दाभ्यामुच्यते। तद्योयं वायुरध्यात्मगतः स प्रस्तररूपापन्नं यजमानं

दि॒त्येभ्य॑स्त्वा ॥ सञ्जा॑नाथान्द्यावापृथिवी मि॒त्रावरु॑णौ त्वा वृ॒ष्ट्याव॑ताम् ॥ व्यन्तु॒ वयो॒क्तꣳरिहा॑णा म॒रुतां॒ पृष॑तीर्गच्छ व॒शा पृश्नि॑र्भू॒त्वा दि॒वं॑ ग

त्वां वृष्ट्या अवतु पालयतु। "यजमानो वै प्रस्तर" इति श्रुतिः। अनक्ति। "व्यन्तु वय" इति। छन्दांस्यभिधीयन्ते गायत्र्यादीनि। वेतिर्गत्यर्थः। व्यन्तु गच्छन्तु। वयोरूपाणि छन्दांसि प्रस्तरमादायेतिशेषः। "अक्तं" इत्तमेव प्रस्तरं "रिहाणाः" लिहाना आस्वादयन्तः।

(१) जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रतिमन्त्रमिति, संजानाथामितिप्रस्तरादानं, अनक्तोग्रं व्यन्तु वय इत्यग्रं जुह्वामुपभृति मध्यं मूलमितरस्यामिति, मरुतामिति नीचैर्हृत्वा तृणमादायानुप्रहरति इति का. ३।३।२४-३।६।८

नीचैर्हरति। "मरुतां पृषती:"। बृहती प्रस्तरदेवत्या चतुर्थः पाद आग्नेयः। आकृतिपरिणाम त्रिभिः पादैराह। अन्तरिक्षस्थाना मरुतः तेषामादिष्टोपयोजनं पृषत्यो गावो वाहनं मरुतां संबन्धिनीः पृषतीर्गच्छ। ततः अन्तरिक्षं तर्पयित्वा। वशा त्वं पृश्निर्भूत्वा दिवं गच्छ। "इयं वै वशा पृश्निर्यदिदमस्यां" मूलि चामूलञ्चानाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरितिश्रुतिः। पृथिवी संबन्धिभिर्भोगैर्द्युलोकं तर्पयित्वा, द्युगन्ता भवति। "ततो नो वृष्टिमावह"।

चक्षुस्ततो॑ नो॒ वृ॒ष्टिमाव॑ह ॥ च॒क्षु॒ष्पाऽअ॑ग्नेऽसि॒ चक्षु॑र्मे पाहि ॥ १६ ॥

ततस्तस्मात् द्युलोकात् नः अस्माकं वृष्टिमावह। वृष्ट्या इमां पृथिवीं तर्पयेत्यर्थः। आत्मानमुपस्पृशति "चक्षुष्पाः"। हे भगवन्नग्ने यतस्त्वं चक्षुष्पा भवसि स्वरसाप्रवृत्त्या "अतश्चक्षुर्मे पाहि" गोपाय (२) ॥ १६ ॥ परिधीपनुहरति "यं परिधिम्"। त्रिष्टुप्विराट्रूपा यजुरन्ता। अग्नेः प्रियमितियजुः। आहवनीयोग्निरभिधीयते। हे आहवनीय यं परिधिं "पर्यधत्थाः"।

एकं तृणं प्रस्तरात्पृथक्कृत्य प्रस्तरं नीचैर्हृत्वाग्नौ प्रक्षिपेदिति सूत्रार्थः।

(२) प्रस्तरप्रहरणप्रभवं चक्षुष उपद्रवं मे परिहरेत्यर्थः ॥ १६ ॥

† स्वभावतः प्रवृत्त्या—पा० वा० पु०।

परिहितवानसि (१)। "अग्ने देव"। "पणिभि"रसुरैः प्रतिपक्षभूतैः "गुह्यमानः"। गुह्व संवरणे। संव्रियमाणः अवरुध्यमानः। "तन्त एतम्"। तमेतं परिधिं ते तव "अनुजोषं भरामि"। अनु-रुपसर्गः भिन्नक्रमः। भरामीत्येतेन संबध्यते। 'हृग्रहोर्भश्छन्दसि'हस्येति हकारस्य भकारः। अनुहरामि "जोष"मभिप्रेतम्। तथाच स्तुतिः। "वायुरेवाग्निः तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोति अथैतमेवाप्येतीति"।* एतत्सङ्गमात्प्रीतो भवति। "एषनेत्त्वदपचेतयातै"। एष

यम्पारिधिम् । यम्परिधिम्पर्य्यधत्थाऽअग्ग्ने देवपणिभिर्गुह्यमानः ॥ तन्तऽएतमनु जोषम्भराम्य्येषनेत्त्वदपचेतयाताऽअग्ग्ने ः

परिधिः। न इत् नेत् निपातसमाहारः परिभवार्थः। त्वत् त्वत्तः सकाशात अपचेतयातै। आशङ्कायां पञ्चमो लकारः। चिती संज्ञाने। अपचेतयतु। एतदुक्तं भवति। एष परिधिर्मा कथञ्चित्त्वत्तो वियुक्तः सन् मात्स्वान्विगतचेतस्कान् कुर्यात्। मात्स्वान्विमनस्कान् करोतु। इत-

(१) परिधीननुप्रहरति यं परिधिमिति प्रथमम् इतरौ च युगपदग्ने प्रियमिति। का० ३।६।१८-१८।

* तथाचेत्यारभ्य—प्येतीतिपर्यन्तं या० पु० नास्ति।

यावत्तु समर्स्यति। "अग्ने: प्रियम्"। अग्नेः संबन्धि प्रियं "पाथः" पाथ इत्यन्ननाम अभिप्रेत-मन्नम् "अपीतम्" अपिगच्छतम् (२) ॥१७॥ जुहूपभृद्भ्यां संस्रवान् जुहोति (१) "सꣳस्रवभागाः"। वैश्वदेवी त्रिष्टुप् यजुरन्ता। स्वाहावाडिति यजुः। संस्रवः भागो येषां ते संस्रवभागाः विश्वे-देवाः। यद्यपि यूयं संस्रवभागाः "स्थ" भवथ तथापि "इषा" अन्नेन संस्रवलक्षणेनबृहन्तो

प्रियम्पाथोपीतम् ॥ १७ ॥ सꣳस्रवभागास्त्थेषाबृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः ॥ इमांवाचमभिविश्वेगृणन्तऽआस

महान्तः। किञ्च "ये च प्रस्तरेष्ठाः" प्रस्तरस्थायिनः ये च "परिधेयाः" परिधिभवा देवास्तानुपशब्द प्रत्यक्षीकृत्य ब्रवीमि "इमां" मदीयां "वाचम्"। "अभिगृणन्तः" अभिष्टुवन्तः "विश्वे" सर्वे "आसद्य" स्थित्वा "अस्मिन्बर्हिषि" "मादयध्वम्" तृप्यध्वम् मोदयध्वं वा। "स्वाहा" (२)। व्याख्यातम्।

(२) अग्नेरन्नं भवद्भ्यां प्राप्यतामित्यर्थः ॥ १७।

(१) संस्रवभागा इति संस्रवान् जुहोतीति। का० ३।६।१८।

(२) स्वाहेति वाडितिशब्दौ हविर्दानार्थौ, सर्वथा दत्तमित्यादरं दर्शयितुं शब्दद्वयप्रयोगः। यद्यपि स्वाहाकारेण

य॰ स॰ सं॰ ४० उ॰ भा॰

"वाट्" वषट्कारः परोक्षम्॥ १८॥ "घृताची" इति धुरि स्रुचौ निदधाति (१)। घृतमञ्चतियोस्ते घृताच्याविति प्राप्ते घृताची इति पूर्वसवर्णदीर्घादेशः। ये युवां घृताञ्चने स्थः। ते ब्रवीमि "धुर्यौ" धुरि भवौ धुर्यावनड्वाहौ तौ पातं गोपायतम्। किञ्च "सुम्ने स्थः" सुम्नमिति सुखनाम। यस्मात्सुखरूपे भवथः तस्मात्सुम्ने। सुखे। "मा" माम् "धत्तं" स्थापयतम्। "यज्ञनमश्च ते" इति वेदिमालभते यजमानः। सूर्यं पवमान् ऋषिरब्रह्मलवान् धनान्तवानित्येते ऋषयोऽस्य

हा ऽस्मिन्न्बर्हिषिमादयद्ध्वꣳ स्वाहाव्वाट्॥१८॥ घृताची स्थः।
घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने माधत्तम्॥ यज्ञ नमश्च

यजुषो, यज्ञो देवता। हे यज्ञ नमश्च ते नमोऽस्तु ते नमस्कारश्चास्तु ते तुभ्यम्। स यदतिरेचयति तन्नमस्कारेण शमयति। "उपच" उपचयश्च तेऽस्तु। "अथ यदूनं करोति उपचति वा वषट्कारेण वेति श्रुतेर्वषट्कारो दानार्थः, तथापि देवानां "परोक्षप्रिया वै देवा" इतिश्रुतेः परोक्षप्रियत्वात्प्रत्यक्षत्वपरिहाराय वाडिति मन्त्रः प्रयुक्तः॥ १८॥

(१) घृताची इति धुरि निदधाति, यज्ञ नमश्च त इति वेदिमालभते इति। का॰ २।६।१८।२।६।२६। ॥ १८॥

२ अ॰

विषय ४०

तेन तदनूनं भवतीति" श्रुतिः। "यज्ञस्य शिवे संतिष्ठस्व"। यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिवं तेन तदुभयं शमयति। "स्विष्टे मे संतिष्ठस्व"। साधु इष्टं स्विष्टं तस्मिन् मे मम संतिष्ठस्व समाप्तिं याहि॥ १६॥ स्रुक् स्रुचं प्रतिगृह्णाति (१)। "अग्नेदब्धायो"। गार्हपत्योग्निरुच्यते। हे भगवन्नग्ने अदब्धायो दभ्नोतिर्हिंसाकर्मा। आयुरितिमनुष्यनाम। अदब्धः अनवखण्डित आयुर्मनुष्यो यजमानो यस्य स तथोक्तः। तस्य संबोधनम् अदब्धायो।

तुऽउप॑ चयज्ञस्य॑ शिवेसन्तिं॑ष्ठस्व स्विष्टे मे सन्तिं॑ष्ठस्व॥१६॥ *॥ अग्ने॑दब्धायो। शीतमपाहिमादिद्योःपाहिप्रसित्यैपाहिदुरिष्ट्यै

यद्वा अग्निरेव अनवखण्डितायुः। अस्मिन्पक्षे छान्दसी पुंल्लिङ्गता। "अशीतम" अशभोजने। अशूव्याप्तौ। एतौ धातू संदिह्येते। अशीतम अतिशयेन भोक्तः। अतिशयेन व्यापक। अशीतमेति दीर्घत्वं छान्दसम्। एवं स्तुत्वा याचते। "पाहि मादिद्योः"। दिद्यु-

(१) स्रुक्स्रुचं प्रतिगृह्णात्यग्ने दब्धायो इति, दक्षिणाग्नौ जुहोत्यमय इति सरस्वत्या इति चेति। का० ३।७।१७-१८।

शु० य० सं० ४१ उ० भा०

दिति वज्रनाम। गोपाय मां दिद्युतः। "पाहि प्रसित्यै" प्रसितिः प्रसयनात्तन्तुर्वा जालं वा। पाहि मां वज्रपात्। "पाहि दुरिष्ट्यै" (२)। दुर्यागात् पाहि। "पाहि दुरद्मन्यै" अद्मन्यन्ननाम पाहि दुर्भोजनात्। भीतार्थानां भयहेतुरिति सर्वाश्चतुर्थ्यः पञ्चम्यर्थे। "अविषन्नः पितुं कृणु" पितुरित्यन्ननाम। विषरहितमन्नमस्माकं कुरु। "सुषदायोनौ"। योनिरिति गृहनाम। साधु सदने गृहे स्थितानामस्माकमेतद्भवतु। "स्वाहावाडि"ति व्याख्यातम्। दक्षिणाग्नौ जुहोति।

पाहि दुरद्मन्यै पाहि दुरिष्ट्यै ... अविषन्नः पितुं कृणु सुषदा योनौ स्वाहा वाडग्नये

संवेशपतये स्वाहा सरस्वत्यै यशोभगिन्यै स्वाहा ॥२०॥ वेदोऽसि।

"अग्नये संवेशपतये"। स्त्रीपुंसयोरभिलाषपूर्वकमेकत्र शयनं संवेशः। तस्य पतिः संवेशपतिः तस्मै। "सरस्वत्यै यशोभगिन्यै"। जीवतः प्रशंसा यशः। भगिनीति संबन्धिशब्दः स्वसेत्युच्यते ॥२०॥ पत्नी वेदं प्रमुञ्चति (१)। "वेदोसीति"। विद ज्ञाने। वेदिता त्वमसि। यो ह्युपग्रहः स

(२) दुष्टा दृष्टिः दुरिष्टिः, दुर्मार्गः। अध्वास्थीयो मार्गइत्यर्थः ॥ २० ॥

(१) पत्नीवेदं प्रमुञ्चति वेदोसीति, समिष्टयजुर्जुहोतिरेवागात्तुविद इति। का० ३।८।१-४।

२ अ०

सन्निकर्षाद्यज्ञं जानाति। यतस्त्वं वेदोसि अतस्त्वां ब्रवीमि। येन कारणेन त्वं देव वेद "देवेभ्यो" देवानामिति विभक्तिव्यत्ययः। "वेदः अभवः" भूतः तेनैव कारणेन मह्यं मम वेदो भूयाः भवेः। समिष्टयजुर्जुहोति। "देवागातुविद" इति। विराडियं त्रिंशदक्षरा। अस्याः पूर्वेणार्द्धेन देवतां व्यवसृजति। हे "देवा गातुविदः"। गातुरिति यज्ञनाम। यज्ञ-विदः। युष्मत्प्रसादात्तथा भवतु यथा आगामिनं "गातु" यज्ञं "वित्वा" विदित्वा। "गातुमित"।

व्वेदोसि येन त्वन्देव्वेदेवेभ्योव्वेदोभवस्तेन मह्यं व्वेदोभूयाः ॥ देवागातुविदोगातुंवित्वागातुमित ॥ मनसस्पतऽइमन्देवयज्ञं

ततोवाक्काले यज्ञमित आगच्छत। यज्ञपरम्परानुच्छिन्नागमना यूयं भवतेत्यर्थः (२)। एवं देवान् यथापथं विसृज्य अथेदानीं मनसस्पतिमाह। हे "मनसस्पते" मनसोधिपतिश्चन्द्रमाः हे चन्द्रमः इमं यज्ञं देव "वातेधाः" धारय। वाते हि यज्ञोवतिष्ठते। तथाच श्रुतिः। वायुरेवाग्निस्तस्माद्यदेवाध्वर्युरुत्तमं कर्म करोत्यथैतमेवाप्येतीति ॥ २१ ॥

(२) गातुर्गन्तव्यो मार्गस्तं गच्छतेति वार्थो महीधरभाष्ये ॥ २१ ॥

शु० य० सं० ४२ उ० भा०

बर्हिर्जुहोति (१)। "संबर्हिरङ्क्ताम्"। बर्हिर्देवत्या विराड्रूपा त्रिष्टुप्। सं बर्हिरङ्क्ताम्। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। बर्हिरिति द्वितीया। समङ्क्तां बर्हिः, क, इन्द्र इत्युपरिष्टात् श्रूयते स इहाभि संबध्यते। इन्द्रः समङ्क्तां बर्हिः। केन "हविषाघृतेन" कैः सहितः समङ्क्तात्। "आदित्यैर्वसुभिर्मरुद्भिः विश्वैर्देवैः" सहित इन्द्रो बर्हिः समङ्क्ताम्। तच्चाक्तं सत् * दिव्यं

स्वाहाव्वातेधाः ॥ २१ ॥ सम्बर्हिः। सम्बर्हिरङ्क्ताᳯंहविषांघृतेनसमादित्यैर्व्वसुभिःसम्मरुद्भिः ॥ समिन्द्रोव्विश्वेभिर्देवेभिरङ्क्तान्दिव्यन्नभोगच्छतुयत्स्वाहा ॥२२॥ कस्त्वाव्विमुञ्चतिसत्वाव्विमुं

नभो गच्छतु। यद्दिव्यं दिवि भवं नभः। नभ इत्यादित्यनाम। आदित्यलक्षणं ज्योतिस्तद्गच्छतु ॥२२॥ वेद्यां प्रणीतां निनयति। "कस्त्वाविमुञ्चति" व्याख्यातम्। अयं तु विशेषः। तत्र यच्च

(१) बर्हिः संबर्हिरितीति। का० ३।८।५। ॥ २२ ॥

* आहवनीयलक्षणेन ज्योतिषा एकीभूतमस्त्वक्तं सत्—पा० पा० पु०।

युनक्ति इह तु विमुञ्चति। "पोषाय" यजमानस्य पोषाय निनयामीति शेषः। कपालानपास्यति। "रक्षसां भागोसी"ति। निगदव्याख्यातम् (१) ॥२३॥ इत उत्तरं याजमानं, † पूर्णपात्रस्य प्रतिगृ-ह्णाति (१)। "सं वर्चसेति" त्वाष्ट्री त्रिष्टुप्। समित्युपसर्गः अगन्महीत्याख्यातेन संबध्यते। समगन्महि। "ब्रह्मवर्चसा" ब्रह्मवर्चसेन। "पयसा" गोभिः "तनूभिः" भार्यापुत्रादिभिः।

उचतिकस्मैं त्वा विमुंचतितस्मैं त्वा विमुंचति ॥ पोषांयरक्षं साम्भागोसि ॥ २३ ॥ * संवर्चसा। सं वर्चसा पयसा सन्तनूभिर गंन्महि मनंसा सं शिवेन ॥ त्वष्टां सुदत्रो विदंधातु रायोनुं मार्ष्टु

"मनसा" च "शिवेन" शान्तेन। यज्ञमुपगच्छतः पुरुषस्य सर्वमेवैतदुपैति वर्च आदि अतो-

(२) वेद्यां प्रणीतां निनयति, परित्य कस्वेति, पुरोडाशकपालेन कपालानपास्यत्यधः कृष्णाजिनं रक्षसामितीति का० ४।८।५-७। नीचजातित्वात्तुषसमूहरूपो भागो निकृष्टो रक्षसामितितात्पर्यम् ॥ २३ ॥

(१) पूर्णपात्रं निनयति परीत्यसन्नतं यजमानोऽञ्जलिना प्रतिगृह्णाति संवर्चसेति मुखं विमृष्टे इति। का० ३।८।१-१०

---

† याजमानं कर्मांयजमानः—पा० वा० पु०।

नेन पुनराप्यायति (२)। किञ्च "त्वष्टा सुदत्रः" कल्याणदानः विदधातु "रायो" धनानि। किञ्च "अनुमार्ष्टु" शुन्धयतु "तन्वः" शरीरस्य "यद्विलिष्टम्" विश्लिष्टम् ॥ २४ ॥ विष्णुक्रमान् क्रमते। (१) "दिवि विष्णुः" द्युलोके विष्णुर्यज्ञो मदीयः "व्यक्रंस्त" विक्रान्तवान्। "जागतेन छन्दसा"

तुन्वो यद्विलिष्टम् ॥ २४ ॥ दिवि विष्णुः। दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः पृथिव्यां विष्णुर्व्यक्रꣳस्त गायत्रेण

"ततो निर्भक्तः"। ततो द्युलोकात् निर्भक्तो निर्गतभागः कृतः। "योऽस्मान् द्वेष्टि" हिनस्ति। "यं च वयं द्विष्मः" हिंस्मः। अनेनोत्तरावपि मन्त्रौ * व्याख्यातौ। भागमवेक्षते। "अस्मादन्नात्"

(२) यज्ञमवगच्छतो नरस्यापगतं ब्रह्मवर्चसादि पुनरनेनाप्यायति ॥ २४ ॥

(१) विष्णुक्रमान् क्रमते दिवि विष्णुरिति प्रतिमन्त्रमिति, अस्मादन्नादिति भागमवेक्षते. अस्यै प्रतिष्ठायै इति भूमिम्।

* विष्णुक्रममन्त्रौ—वा० शु०।

अस्मात् यज्ञभागात्। निर्भक्त इत्यनुषङ्गः। भूमिमवेच्यते। "अस्यै प्रतिष्ठायै"। अस्या भूमेः प्रतिष्ठायाः निर्भक्त इत्यनुषङ्गः। प्राङीच्यते (२)। "अगन्मस्वः"। अनेन कर्मणा अगन्म गताः। कम्, स्वर्गं यज्ञं सूर्यं देवान्। स्वरव्ययमनेकार्थम्। आहवनीयमीच्यते। "संज्योतिषाभूम" समित्येकीभावमाचष्टे आहवनीयलक्षणेन ज्योतिषा एकीभूताः ॥ २५ ॥ सूर्यस्तदीच्यते (१)।

छन्द॑स॒ात॒तोनिर्भ॑क्तोयोस्मा॑न्द्वेष्टि॒यञ्च॑व॒यन्द्वि॒ष्मोस्मादन्नाद॒स्यैप्र॑ति॒ष्ठाया॒ऽअग॑न्म॒स्वः॒सञ्ज्योति॑षाभू॒म ॥ २५ ॥ स्व॒य॒म्भू॒र॑सि। स्व॒य॒म्भू॒र॑सि॒श्रेष्ठो॑र॒श्मिर्व॑र्चो॒दाऽअ॑सि॒वर्चो॑मेदेहि। सूर्य॑स्या॒

"स्वयं भूरसि"। अकृतकस्त्वं (२) भवसि। "श्रेष्ठः" प्रशस्ततमः "रश्मिः"। सप्त रश्मय आदि-

(२) अगन्मस्वरिति प्रागिति, संज्योतिषेत्याहवनीयमिति। का० ३।८।१३-१८ ॥ २५ ॥

(१) स्वयंभूरितिसूर्यं, सूर्यस्येत्यावर्तते प्रदक्षिणमिति। का० ३।८।१७-१८।

(२) (अकृतकः) स्वयं सिद्धः। (अनु) अनुसृत्य ॥ २६ ॥

त्वस्य तव चतसृषु दिक्षु चत्वारो रश्मयः। एकोधस्तादेक उपरिष्टात्। मण्डलशरीराहं-मानी * हिरण्यगर्भाख्यः पुरुषः सप्तमः श्रेष्ठोरश्मिरिति। तथाच श्रुतिः। "अथ यत्परं भाः प्रजापतिर्वा स स्वर्गो वा लोक" इति। यस्त्वं स्वयं भूरसि श्रेष्ठश्च रश्मिस्तं त्वां ब्रवीमि। "वर्चोदा असि"। ब्रह्मवर्चसस्य स्वरसेनैव स्वभावेनैव दातासि, अतो वर्चोमे मह्यं "देहि"। आवर्तते। "सूर्यस्यावृतम्"। आवर्त्तनमावृत्। सूर्यस्यावर्त्तन"मनु" अहम् "आवर्त्ते"। "त

दृतमन्न्वावर्त्ते ॥ २६ ॥ अग्ग्ने गृहपते। सुगृहपतिस्त्वयांग्ग्ने हङ्गृहपतिनाभूयास ँ सुगृहपतिस्त्वम्मयांग्ग्ने गृहपतिनाभूयाः।

देतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमनु आवर्त्तत" इति श्रुतिः ॥ २६ ॥ गार्हपत्यमुपतिष्ठते (१)। "अग्ने गृहपते" हे भगवन्नग्ने गृहपते "सुगृहपतिः शोभनो गृहपतिः अहं त्वया गृहपतिना गृहाणां पालयित्रा भूयासं भवेयम्। किञ्च "सुगृहपतिस्त्वं मया अग्ने"

(१) गार्हपत्यमुपतिष्ठतेऽग्ने गृहपते, सूर्यस्यावर्तते प्रदक्षिणम्। का० ३।८।२१-२३।

* शरीराभिमानी—पा० १ पु०।

"सहायेन गृहपतिना भूया:" भवे: (२)। एवमनेन प्रकारेण। "अस्थूरिणौगार्हपत्यानिसन्तु"। अन्यतरतो युक्तं शकटं स्थूरीत्युच्यते। तत्त्वत: * प्रतिषिध्यते अस्थूरीति। लुप्तोपमञ्चैतत्। यथा उभयतो युक्तं शकटम्, एवं नौ आवयो: "गार्हपत्यानि" गृहपतिसंयुक्तानि कर्माणि "सन्तु"। "शतं हिमा:"शतं वर्षाणि। अथावर्त्तते। "सूर्यस्यावृतमन्ववर्त्ते"इति। व्याख्यातम् ॥२७॥ व्रतं विसृजते (१)। "अग्ने व्रतपते" हे अग्ने व्रतपते "व्रत" महम्। "अचारिषं"

अस्थूरिणौगार्हपत्यानिसन्तुशतᳬहिमाः सूर्य्यस्यावृतमन्वावर्ते ॥ २७ ॥ अग्नेव्रतपते। व्रतमचारिषन्तदशकन्त-

चरितवानस्मि। "तदशकं" शक्तवानस्मि। "तन्मे" मम "आराधि"राद्धं फलम् अभिसम्बद्धमित्यर्थः। द्वितीयोव्रतविसर्गे मन्त्रः। "इदमहम्" हे अग्ने त्वत्साक्षिकं व्रतं गृहीत्वा

(२) त्वत्प्रसादेन चाहं, त्वद्भवदीयया सेवया। गार्हपत्यानीत्यत्र गृहपतिना संयुक्ते जयः इति जयः ॥ २७ ॥

(१) व्रतं विसृजते येनोपेयादिति, का० ३।८-२९। व्रतग्रहणे मन्त्रद्वयं विनियुक्तं तत्र प्रथमं येन मन्त्रेण व्रत

* तत्त्व आप्रतिषिध्यति—पा० ना० पु०।

इदं कर्म समाप्य य एव कर्मणः पुरा अहमस्मि मनुष्यः स एवास्मि ॥ २८ ॥ अतः परं पिण्डपितृयज्ञिया मन्त्राः । प्रजापतेरार्षम् । अग्नौ जुहोति (१) । "अग्नयेकव्यवाहनाय-स्वाहा" । कवयः क्रान्तदर्शनाःपितरस्तेषां संबन्धि हविः कव्यम् । तद्वोढव्यं यस्यायमधिकारः स कव्यवाहनः । "सोमायपितृमतेस्वाहा" । पितृमान् पितृसंयुक्तः । वषट्कारेण वा वै स्वाहा-

न्नसेराधीदमुहंठयऽए वास्मिमुस ोस्मि ॥ २८ ॥ अग्गनये कव्य वाहं नाय स्वाहासोमायपितृ मते स्वाहा । अपहता ऽअसुरा रक्षांᳫंसि

कारेण वा देवेभ्योन्नं प्रदीयत इति लिङ्गाद्देवावेतौ मन्त्रौ । उल्लिखति । "अपहताः" अपहताः अस्मात् स्थानात् "असुराः रक्षांसि च वेदिषदः" वेद्यां सीदन्तीति वेदिषदः ॥ २९ ॥ उल्मुकं

ग्रहणं प्रथमेन द्वितीयेन वा तेनैव क्रमेणात्र व्रतं विसृजेत् इति स्वव्रतात्पर्यम् ॥ २८ ॥

(१) सारतण्डुलमपूर्णं अपचिलाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च, दक्षिणेनोल्लिखत्यपहता इति का० ४।१।७-३ ।

(२) तादृशा असुरा वेदिस्थकाशादपगताः । असुरत्वं च देवविरोधि जातिविशेषः ॥ २९ ॥

परस्तात्करोति ये रूपाणीति (१)। त्रिष्टुबाग्नेयी। "ये रूपाणि प्रतिमुञ्चमाना:"। ये पितृरूपाणि आत्मनि प्रतिमुञ्चमाना: (२)। प्रतिपूर्वो मुञ्चतिर्बन्धने वर्त्तते। आत्मनि बध्नन्तः "असुराः सन्तो" भवन्तः "स्वधया" पित्रन्नेन हेतुभूतेन अस्माभिरेतत्स्वादितव्यमिति चरन्ति-सञ्चरन्ति। किञ्च "परापुरः" पराक्रान्ताः पुरः परापुरः। शरीराणि महान्तीति "निपुरः"

क्षे॑दि॒षदः॑॥ २९ ॥ ये रू॒पाणि॑। प्र॒ति॒मु॒ञ्चमा॑ना॒ऽअसु॑रा॒ः सन्तः॑ स्व॒धया॒ चर॑न्ति। प॒रा॒पुरो॑ नि॒पुरो॒ ये भर॑न्त्य॒ग्निष्टाँल्लो॒कात् प्रणु॑दात्य॒स्मात्॥ ३० ॥ अत्र॑ पितरो मादयध्वं यथाभा॒गमा॑वृ-

निकृष्टाः पुरो निपुरः। सूक्ष्माणि शरीराणि ये "भरन्ति" ये बिभ्रति धारयन्ति "अग्निस्तान्" सुरान् "लोकात्" स्थानात् "प्रणुदाति" प्रणुदतु प्रेरयतु। अस्मात्पितृलोकात्॥ ३० ॥ उदङ्-

स्थौल्यमसुरत्वं च प्रच्छादयितुं येस्थूलसूक्ष्मशरीराणि बिभ्रतीत्यर्थः। प्रणुदतु प्रकर्षेणापसारयत्वित्यर्थः। (१) अत्र पितर इत्युत्क्रोदङ्भ्रास्ते आतमनादावृत्तप्रामौमदन्तेति जपतीति। का॰ ४।१।१२-१४।

(१) का॰ ४।१।९। (२) स्वीयं रूपं विहाय पितृसमानरूपाणि स्वीकुर्वन्तः॥ ३०॥

शु०
य०
सं०
४६
सु०
भा०

ङास्ते (१)। "अत्रपितरः"। बृहती। अत्र अस्मिन्बर्हिषि हे पितरः "मादयध्वं" मोदयध्वम्। किञ्च "यथाभागं" यो यस्य भागः तं तथा भागम्। "आवृषायध्वम्"। आङ्पूर्वाद्वृषशब्दात्क्तु:ऋयङ्सलोपस्थेतिऋयङ्। वृष इव स्वेच्छया महद्भिर्ग्रासैरेतान् पिण्डानश्नीत (२)। आवृत्यामीमदन्तेति जपति। "अमीमदन्त" हर्षं प्राप्तवन्तः पितरो "यथाविभागं" च "आवृषायिषत"। अशितवन्तः। "यथाभागमाशिषुरित्येवैतदाहेति" श्रुतिः॥३१॥ नमो व इत्यञ्जलिं करोति(१)।

षायध्वम्। अमीमदन्तपितरोयथाभागमावृषायिषत्॥ ३१ ॥

नमोवः पितरोरसायनमोवःपितरःशोषायनमोवः पितरोजीवाय न

षट्कृत्वा नमस्करोति "षड्वा ऋतवः पितर" इति श्रुतिः। व्याख्यातम्। "नमो वः पितरो रसाय" हे पितरः वः युष्माकं संबन्धिने रसाय रसभूताय वसन्ताय नमः। वसन्तेहिमध्वादयो रसाः संभवन्तीत्यत एवं नमस्क्रियते। एवं वक्ष्यमाणा अपि मन्त्रा व्याख्येयाः। "शोषाय"

(१) आतमनात् श्वासनिरोधेन ग्लानिपर्यन्तमुदङ्मुख आस्ते इति सूत्रार्थः।

(२) यथा वृषः स्वाभीष्टं वाघं प्राप्य तृप्तिपर्यन्तमश्नाति तद्वत् स्वीकुरुत॥३१॥ (१) का० ४।१।१५।

२
मु०

विषय
४६

शोषप्रभावाय ग्रीष्माय नमः। शुष्यन्ति हि ग्रीष्मे ओषधयः। "जीवाय" जीवनहेतुभूताय वर्षाभ्यो नमः। "स्वधायै" "स्वधावै शरत् स्वधावै पितॄणामन्नमिति" श्रुतिः। शरदि हि प्रायशोऽन्नानि भवन्ति। "घोराय" विषमाय। विषमो हि हेमन्तः प्राणिनां शीतप्रचुरत्वात्। "मन्यवे" मन्युः क्रोधः। क्रोध इव हि शिशिरस्ओषधीर्दहति। "नमो वः पितरः पितरोनमोवः"।

मोवःपितरः पितरोनमोवोगृहान्नः पितरोदत्तसतोवः पितरोदेष्मैतद्वःपितरोवासआधत्त ॥३२॥ आधत्तपितरोगर्भंकुमारम्पुष्क

अभ्यासे महत्प्रयोजनं समर्थं मन्यन्ते। "गृहान्नः पितरोदत्त"। भार्यापुत्रपौत्रादयो गृहा उच्यन्ते। गृहान्नः अस्मभ्यं हे पितरो दत्त। किञ्च तथा युष्मत्प्रसादादस्माकं भवतु यथा नः गृहे सतो विद्यमानान् द्रव्यान् "वो" युष्मभ्यं देष्म (२)। सूत्राणि ददाति (१)। "एतद्वः युष्माकं हे पितरो "वासः" परिधानम् ॥ ३२ ॥ मध्यपिण्डं प्राश्नाति पुत्रकामा (१)। "आधत्त"

(२) सतो धनादुदस्मभ्यमस्माभिर्देयं, ददतां चास्माकं कदापि धनक्षयो मा भवतु इति तात्पर्य्यम्।

(१) एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णा दशा वा वयस्युत्तरे यजमानलोमानि वेति ॥ २२॥

(१) आधत्तेति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामेति। ४।१।२३।

गायत्री । हे पितरः आधत्त "गर्भम्" । "कुमारं पुष्करस्रजम्" । स्रक्शब्देन मुण्डमालोच्यते । पुष्करशब्देन पद्मानि । अश्विनौ पुष्करस्रजौ अश्विभ्यां पुत्रोपमानं क्रियते (२) । किञ्च यथा येन प्रकारेण "इह" अस्मिन्नेव क्रतौ "पुरुषः" पूरयिता देवपितृमनुष्याणाम् । "असत्" । भूयात् तथा आधत्तेति संबन्धः ॥ ३३ ॥ अपो निनयति (१) । "ऊर्जंवहन्ती" । अर्द्धं वत्या

रस्रजम् ॥ यथेह पुरुषोऽसत् ॥ ३३ ॥ ऊर्ज्जं वहन्तीः । ऊर्ज्जं वहन्तीरमृतं घृतम्पयः कीलालम्परिस्रुतम् । स्वधास्थ तर्पयत मे

विराट् । हे आपः यूयम् ऊर्जमन्नं वहन्त्यो नानाविधम् "अमृतं घृतं पयः कीलालम्" । अन्नरसम् । कीले अलं पर्याप्तः समर्थोऽन्नमिष्टं कर्तुं रस इति कीलालः । कीलं बन्धनम् । अलमत्यन्तमन्नस्येति वा कीलालम् । "तस्माद्यावन्माच इवान्नस्य रसः सर्वमन्नमवतीत्यादि" श्रुतिः ।

(२) अश्विनीकुमारसादृश्यकथनेन नीरोगत्वं सुन्दरत्वं च पुत्राणां प्रार्थ्यते इति द्योतितम् ॥ ३२ ॥

(१) ऊर्जमित्यापोनिषिञ्चति । का० ४।१।१८।

"परिस्रु,त" । सुराम् । "स्वधास्थ" "स्वधावैपितृणामन्नमि"ति श्रुतिः । ऊर्जाम् धारणपोषणायोः । स्वमात्मीयं पितृणां धानं पोषणं सूधास्थ । "तर्पयत मे पितॄन् ।" सूधा भवथ ततस्तर्पयत मे

पितॄन् ॥ ३४ ॥ * इति संहितायां द्वितीयोऽध्यायः ॥ २ ॥

* ओ३म् । * समिधाग्निम् । समिधाग्निन्दुवस्यतघृतैर्बोधय-

पितॄन् ॥ ३४ ॥ इति उव्वटकृतौ मन्त्रभाष्ये द्वितीयोऽध्यायः ॥ २ ॥

(२) ईदृशस्य सर्व्वरोगनाशकस्य मृत्युनाशकस्य च त्रिविधस्य रसस्य वहनात्पितृतर्पणं साध्यमपन्नं भवति ॥ ३४ ॥ भरद्वाजोपनाम्ना श्रीगोविन्दविदुषा कृते । द्वितीयोयमथाध्यायोऽस्फाणीङ्गाष्यस्य टिप्पणे ॥ २ ॥

---

* समिधाग्निम्, भूर्भुवःस्वश्चतुष्का, वह्निर्ज्योतिर्द्वे, उपप्रयन्तषड्विंशति, भूर्भुव स्वःस्वतस्रो, गृहामातिस्रः, प्र-वासिनः पंच, पूर्णादर्व्विद्वे, ऽअग्नमीमन्तषड्, षतिसप्त, १० त्रिषष्टीः । अ० सू० ॥

ऋ० य० सं० ४८ उ० भा०

“समिधाग्निम्”। आधानमन्त्राः (१)। प्रागग्निर्ज्योतिरित्येतेभ्यः। देवानामार्षं प्रजापतेर्वाग्नेर्वा। आग्नेय्यस्तिस्रो गायत्र्यः। आश्वत्थीस्तिस्रः। समिधो घृताक्ता आदधाति। “समिधाग्निं दुवस्यत”। समिधाश्वत्थसमिधा अग्निं दुवस्यत। दुवस्यतिः परिचरणार्थः। परिचरत। ततो जातं सन्तम् पूर्णाहुतिसंबन्धिभिर्घृतै“र्बोधयत” अवगतार्थं कुरुत। “अति-

## तातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥ १ ॥

थिम्” अतिथिधर्माणम्। ततोनन्तरं तनूहविःसंबन्धिनि “आस्मिन्हाव्याजुहोतन”। आजुहोत अस्मिन्नग्नौ हव्या हवींषि ॥ १ ॥

(१) पूर्वाध्यायाभ्यां दर्शपौर्णमासेष्टिपितृपितृयज्ञमन्त्रा उक्ता इदानीमाधानमन्त्रान्क्रमुपक्रमते। कात्यायनेन अमावास्यायामग्न्याधेयमित्यादिना ब्रह्मौदनपाकपर्यन्तानि कर्माण्युक्त्वा पश्चात् तश्चातुष्प्राश्यं पचतुरुद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचमिति ४।८।४-५। चतुर्णां ऋत्विजां प्राशनयोग्यमोदनं पक्त्वोद्वास्य तदोदनमध्ये घृतसेचनाय निम्नं स्थानं कृत्वा तत्सर्पिषापूर्य तस्मिः समिधस्तिस्रः सर्पिष्टम्न्य तिसृभिः समिधाग्निमित्यादिवक्ष्यमाणाभिः ऋग्भिरग्न्यावश्याद्धातीति सूत्रार्थः ॥ १ ॥

३ अ०

विषय ४८

जयति "सुसमिद्धाय" साधु समिद्धाय। "शोचिषे" शोचिष्मते दीप्तिमते ज्वलनाय। "घृतं तीव्रम्" पटुतरं गव्यं गृहशोद्धासनाधिश्रयणावेक्षणादिभिः संस्कारैः संस्कृतमित्यर्थः। "जुहोतन"। जुहुत कुरुत। नेत्यनर्थका उपजना भवन्ति। कर्त्तन हन्तन यातनेति (१)। "अग्नये जातवेदसे" जातप्रज्ञानाय ॥ २ ॥ "तन्त्वासमिद्भिः"। यस्त्वमुक्तगुणस्तं त्वां समिद्भिः। हे "अङ्गिरः"। अङ्गतिर्गत्यर्थः। रो मत्वर्थीयः। गमनवन्। "अङ्गिराउह्यग्निरिति" श्रुतिः।

सुसमिद्धायशोचिषे। घृतन्तीव्रञ्जुहोतन॥ अग्नयेजातवेदसे ॥२॥

तन्त्वा। समिद्भिरङ्गिरोघृतेनवर्द्धयामसि॥ बृहच्छोचायविष्ठ्य ॥३॥

"घृतेन वर्द्धयामसि"। वर्द्धयामः। इदन्तोमसीति सिकारश्छान्दसः। "बृहत्" महत् "शोच" दीप्यस्व। "यविष्ठ्य" युवतम। इष्ठनि परभूतेटेः स्थूलदूरयुवह्रस्वेत्यादिना यविष्ठ इति सिद्धम्। स्वार्थिको यकारस्तद्धितः॥ ३ ॥ (१) "उपत्वा"। उप "यन्तु" त्वां हे "अग्ने हविष्मती"

(१) जुहोतनेत्यत्र तप्तनप्तनथनाश्चेति पा॰ सू॰ तनबादेशोत्र बोध्य इतितत्त्वम् ॥ १—२ ॥

(१) उपत्वेति जयति का॰ ४।८।३ ॥ ४ ॥

हविषा संयुक्ताः "घृताचीः" घृताञ्चनाः समिधः । "हर्यत" । हर्यं कान्तौ हर्यतिः प्रेप्साकर्मा । प्रेप्सावन् तास्त्वां प्रत्युपगच्छन्त्यः "जुषस्व" आसेवस्व "समिधः मम" संबन्धिनीः ॥ ४ ॥ (१) "भूर्भुवः स्वः" । महाव्याहृतयः, प्रजापतेरार्षम् । गार्हपत्याहवनीययोराधानमन्त्राः । पृथिव्यन्तरिक्षद्युलोका अभिधेयाः, ब्रह्मक्षत्रविशो वा वर्णाः । अन्नप्रजापशवो वा । श्रुतितो व्याख्यातमेतत् । इध्मपूर्वाज्यं गृहीत्वा यजमानो जपति । "द्यौरिवभूम्ना" उपरिष्टादारभ्य तद्व्याख्येयं, तथाहि

उपत्वा । ग्ग्नेहुविष्मतीर्घृताचीर्य्यन्तुहर्य्यत ॥ जुषस्वसुमिधोमम ॥ ४ ॥ * भूर्भुवः । भूर्भुवःस्वर्द्यौरिवभूम्नापृथिवीवव-

सुबोधं भवति । "तस्याः" ते तव हे "पृथिविदेवयजनि" देवा यस्यामिज्यन्ते इति देवयजनी तस्याः संबोधनं क्रियते हे देवयजनि । ते "पृष्ठे" उपरि "अग्निमन्नादम्" अन्नस्यात्तारम् ।

(१) दारुभिर्ज्वलन्तमादधाति भूर्भुव इति संभारेष्विति भूर्भुवः स्वरिति पूर्ववदितिचेति । का० ४।१।८।१६। आपो एवं मृदाखूत्करः शर्करा । पञ्चसम्भारास्तान् संपाद्य स्फ्यग्रेणोल्लिखितायां भुव्वायां भूमौतान् संभारानवस्थाप्य तेषु शुष्ककाष्ठैर्ज्वलन्तमग्निं भूर्भुवः स्वरिति पञ्चाक्षराण्युच्चारयन्नादध्यात् इदमाहवनीयाधानम् । इति सूत्रार्थः

"अन्नाद्याय" अन्नादनाय अन्नभक्षणाय। "आदधे" स्थापयामि। तस्याः पृथिव्याः पृष्ठेऽग्निमाधाय। "द्यौरिवभूम्ना"। यथा द्यौर्भूम्ना नक्षत्रबहुत्वेन बह्वी एवं प्रजादिभिर्बहुभिर्भूयासम्। "पृथिवीवद्वरिम्णा"। यथा पृथिवी वरिम्णा उरुत्वेन सता सर्वप्राणिनामाश्रयभूता एवमहं महत्वेन सता सर्वप्राणिनामाश्रयभूतो भूयासम्। अथवा यथाक्रममेव व्याख्यायते। द्यौरिव भूम्ना भूयासम्, पृथिवीव वरिम्णा भूयासम, हे अग्ने त्वत्प्रसादात्। पृथिव्युच्यते। तस्याः

रिम्णा ॥ तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्याया-

ते तव पृथिवि देवयजनि पृष्ठे उपरि अग्निमन्नादमन्नभक्षणाय आदधे। यस्यास्तव मन्वादयोपि अन्नदाः आधाय संवृत्ताः संजाताः ॥ ५ ॥ (१) "आयं गौः पृश्निः"। सार्पराज्ञ्या आर्षम्। गायत्र्यस्तृचः। आहवनीयाग्न्युपस्थाने विनियुक्ताः। अग्निः परापररूपेण स्तूयते। "आयंगौः पृश्नि-

रक्रमीदित्याद्याः" इति संहिता। पूर्वाधं गृहीत्वा द्यौरिव भूम्नेत्याहेति। ४।८।१७। पूर्वाधस्यार्थान्तरं, किम्भूतमग्निं भूम्ना द्यौरिव वर्तमानम्। यथा द्यौर्नक्षत्रादि बहुलेन युक्ता तथा ज्वालाबाहुल्येन विराजमानम्। किञ्च यथा पृथिवी सर्वाश्रयभूता श्रेष्ठा एवं सर्ववस्तुधोधकः श्रेष्ठोऽग्निरिति महीधरभाष्ये उक्तम् ॥ ५ ॥

(१) आयङ्गौरिति चोपतिष्ठते सार्पराज्ञीभिर्दक्षिणाग्निमादधातीति का० ४।८।१८-१९।

रक्रमीत्”। आक्रमीत् आक्रमते ऐश्वर्यरूपेणायमग्निः गौः गन्ता (२) सर्वासु तासु तासु क्रिया-पृश्निर्नानारूपः “असदन्मातरं पुरः” इमं लोकमग्निरूपेणानुगृह्य ततः प्रातरादित्यात्मना सीदति मातरं पृथिवीं पुरः पुरस्तात्प्राच्यां दिशि। “किञ्च पितरं च प्रयन्स्व” पितरं द्युलोकं च प्रयन् गच्छन् सीदतीत्यनुवर्त्तते। स्वः आदित्यः॥ ६॥ एवमादित्यरूपेणाग्निं स्तुत्वा अथेदानीं वायुरूपेणाग्निं स्तौति। “अन्तश्चरतिरोचनास्य”। द्यावापृथिव्योरन्तरञ्च-रति अग्नेर्वायुव्याख्या शक्तिः। “अन्तरिक्षेयं तिर्यङ् वायुः पवत इति” श्रुतिः। “रोचना”।

दधे ॥ ५ ॥ आयम्। आयङ्गौःपृश्निरक्रमीदसदन्मातरं-म्पुरः॥ पितरञ्चप्रयन्त्स्वः॥ ६॥ अन्तश्चरति। रोचनास्य-

दीप्तौ। दीपना “अस्य अग्नेः। किं कुर्वाणा चरति। “प्राणादपानती”। अन प्राणने। सर्वप्राणिषु प्राणादनन्तरम् अपानती चरति अपानादनन्तरं प्राणती चरतीति समर्थ्योदय-सर्थो लभ्यते (१)। एवं वाय्वादित्याभ्यां स्वशक्तिभ्यामिदं जगदनुगृह्याथ य एनामेव-

(२) यज्ञनिष्पत्तये तेषु तेषु यजमानसदनेषु गन्तेति तात्पर्यम्॥ ६॥

(१) सामर्थ्यात्प्राणापानयोः प्रविकेत्यर्थः। जठरस्थितो जाठरोऽग्नौ जीवनहेतोरौष्ण्यस्य शरीरे सद्भावात् प्राणापानौ

स्तुपनिष्ठति तस्य किं करोतीत्याह । "व्यख्यन्महिषोदिवम्" । विविधं तस्य पुरुषस्योपभोगार्थं मवलोकयति पश्यति भोगप्रत्वेन दिवं द्युलोकम् महिषः । "अग्निर्वै महिषः स हीदं जातो महानिति" श्रुतिः ॥७॥ (१) "त्रिंश० शद्धाम" । त्रिंशत्सु धामस्विति विभक्तिव्यत्ययः । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति स्थानान्यत्राभिप्रेतानि । त्रिंशच्चाहोरात्रे

प्राणादपानती ॥ व्यख्यन्महिषोदिवम् ॥७॥ त्रिंशद्धाम ।
त्रिंशद्धाम विराजति वाक्पतङ्गाय धीयते ॥ प्रतिवस्तोरह-

मुहूर्तास्त इह गृह्यन्ते । त्रिंशत्सु स्थानेषु मुहूर्ताख्येषु स्तुतिभिरग्निरयं स्तूयते । यच्च यावाग्वि"राजति" शोभते स्तूयमाना सा वाक् "पतङ्गाय" पतन्गच्छतीति पतङ्गोग्निः सञ्चरप्रवर्त्तते तस्मादग्निः प्राणापानरूप इति तात्पर्यम् ॥ ७ ॥

(१) यद्वैतस्याऋचोऽयमर्थः—धामस्थानं तच्च त्रिंशत्रिंशत्संख्याकमासगतदिनरूपेण तद्विराजते विशेषेण दीप्यते । यजमानानुष्ठानेन अग्नीनां स्थानं मासगतेषु त्रिंशत्संख्याकदिनेषु विशेषेण शोभते । वाक् स्तुतिरूपा पतङ्गायाग्नये धीयते उच्चार्यते, पतङ्गः पक्षी तत्सादृश्यादग्निः पतङ्गः । यथा कश्चित्पक्षी एकस्मात् स्थानात् स्थानान्तरे गच्छति

ण्याः पतन् गार्हपत्यभावं गच्छति गार्हपत्यादाहवनीयमित्यादिना तादर्थ्ये चतुर्थी। पतङ्गार्थं धीयते अग्न्यर्थमुच्चार्यत इत्यर्थः। एतदुक्तं भवति। सर्वदेवतासंबन्धिनीभिः स्तुतिभिरग्निरेव स्तूयते स हि सर्वात्मा। "प्रति वस्तोरहद्युभिः"। वस्तोःद्युश्चानुरित्यहर्नामसु पठितम्। अह इति निपातो विनिग्रहार्थीयः। न केवलं या त्रिंश० ग्रत्सुधामसु वाग्विराजति सा पतङ्गाय धीयते किं तर्हि द्युभिः॥ ८॥

अ॒ग्निर्ज्योति॒र्ज्योति॑र॒ग्निः स्वाहा॒ सूर्यो॒ ज्योति॒र्ज्योतिः॒ सूर्य॒ः स्वाहा॑॥ अग्नि

प्रति वस्तोः प्रत्यहं च यास्तुतिलक्षणा वाक् सा च द्युभिः अहोभिरुत्सवभूतैः। उत्सवाः यागपारायणादयः स्तुतिलक्षणा वाक् सा च पतङ्गाय धीयते नान्यस्यै देवतायै (१)॥ ८॥ (१) "अग्नि-

तद्दग्निरपि गार्हपत्यस्थानादाहवनीयपस्थानं गच्छतीति अग्नेः पक्षिसादृश्यम्। अहेति निपातः पूर्वोक्तनिषेधार्थस्तदपेक्षया विशेषद्योतक इति यावत्। तं विशेषमाह प्रतिवस्तोः। प्रत्यहं द्युभिर्दीप्तैनैरयमग्निः स्तूयते इत्यध्याहारः। इति महीधरभाष्ये इत्यग्न्याधानमन्त्राः॥ ८॥

(१) अथाग्निहोत्रहोममन्त्राः अग्निर्ज्योतिरित्यारभ्य उपप्रयन्त इत्यन्ताः महीधराममभिजहोत्यग्निर्ज्योतिरितीति,

ज्योति" अग्निहोत्रमन्त्राः प्रागुपप्रयन्त इत्येतस्मात्। प्रजापतेरार्षम्। अग्निर्वर्च्च इति द्वे तत्त्वा पश्चात्परांजीवलस्यैलकिः। सलिङ्गोक्ता देवता गायत्र्यः। पूर्वाः पञ्चैकपदाः॥ "अग्नि-र्ज्योतिर्ज्योतिरग्निः स्वाहा"। 'नमः स्वस्तिस्वाहे'त्यादिना सूत्रेण प्रथमायाः स्थाने चतुर्थी। अग्निर्ज्योतिर्ज्योतिरग्निरितिमन्त्राभ्यासः। अभ्यासे भूयांसमर्थं मन्यन्त इत्यभिप्रायः। अथ

र्वर्च्चो ज्ज्योतिर्वर्च्चः स्वाहा। सूर्य्यो र्वर्च्चो ज्ज्योतिर्वर्च्चः स्वाहा।
ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा॥ ९॥ सजूर्देवेन।

कोऽर्थः। अग्नये ज्योतिषे स्वाहा सुहुतमस्तु। अथवा स्वस्याहानमस्तु। हानं हाऽनहाः अहाः स्वस्य अहा अपरित्यागः। आत्मनो द्रव्यस्य वेति। अथवा योऽग्निर्ज्योतिर्ज्योतिश्चाग्निस्तस्मै स्वाहा। सूर्योज्योतिरित्यनेनैव व्याख्यातम्। अथ ब्रह्मवर्चसकामस्य। "अग्निर्वर्च्चः" योऽग्निर्वर्च्चसा अनन्यभूतः यस्य च ज्योतिर्वर्च्चसा अनन्यभूतम्, तद्रूपं तस्मै हुतमस्तु। अने-नैव सूर्यो वर्च्च इत्याख्यातः। प्रातर्होममन्त्रः "ज्योतिः सूर्य्य" इति व्याख्यातः सूर्यो

अग्निर्वर्च इति ब्रह्मवर्चसकामस्य ज्योतिः सूर्य इति वा प्रातः। का॰ ४।१४।१४।१५—१६।१॥९॥

ज्योतिरित्यनेनैव ॥ ९ ॥ अनयो होममन्त्र विकल्पः (१)। "सजूर्देवेन"। अग्निरुच्यते। सजूर्देवेन सवित्रा। जुषी प्रीतिसेवनयोः। योग्निः समानप्रीतिः देवेन सवित्रा समानप्रीतिश्च "रात्र्या इन्द्रवत्या" इन्द्रसंयुक्तया स जुषाणः "सेवमानः आस्वादयन् आहुतिं वेतु वेत्तिरिह पानार्थः। खादनार्थो वा स्वाहा सुहुतं हविरेव भवतु। अथ प्रातः सूर्य उच्यते। "सजूर्देवेन सवित्रा"। समानप्रीतिर्देवेन सवित्रा भूत्वा समानप्रीतिश्च "उषसा" उषसाशब्देन

सवित्रा सजू रात्र्येन्द्रवत्या ॥ जुषाणोऽअग्निर्वेतु स्वाहा ॥ सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या। जुषाणः सूर्यो वेतु स्वाहा ॥ १० ॥ उपप्रयन्तोऽअध्वरम्। उपप्रयन्तोऽ

सूर्यप्रभोच्यते। इन्द्रसंयुक्तया भूत्वा जुषाणः सेवमानः स्वादयन् सूर्यः वेत्तु पिबतु स्वाहेति व्याख्यातम् ॥ १० ॥ अथ यजमानाग्न्युपस्थानम् (१)। "उपप्रयन्तो अध्वरं सुपोषः पोषै"-

(१) सजूर्वेति—का० ४।१४।९ ॥ १० ॥

(१) सायमाहुत्यां हुतायां यजमानोऽग्नीनुपतिष्ठते। का० ४।१२।१-२ ॥ ११ ॥

रित्यन्तम्। देवानामार्षम्। आद्ये द्वे आग्नेय्यौ गायत्र्यौ। उपप्रयन्तः उपगच्छन्तः अध्वरं यज्ञम् "मन्त्रम्" आर्षम्। "वोचेम" ब्रूयाम "अग्नये"। "आरे" दूरेपि स्थिताय "अस्मे च" "शृण्वते" अस्माकं च मन्त्रं शृण्वते अस्मन्मन्त्रश्रवणादभिमुखायेत्यर्थः ॥ ११ ॥ "अग्निर्मूर्द्धा"। परापररूपेण व्यवस्थितोऽस्माभिरग्निः स्तूयते। अभिनयेन दर्शयति। योऽय"मग्निर्मूर्द्धा दिवः"

अद्ध्वरम्मन्त्रं व्वोचेमाग्नये ॥ आरेऽअस्मेचंशृण्वते ॥ ११ ॥ अग्निर्म्मूर्द्धा। दिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳪरेताᳪसि जिन्वति ॥ १२ ॥ उभावाम्। उभावामिन्द्राग्नीऽआहुव

अहनि आदित्यात्मना लोकस्य मूर्द्धा भवति। अयमेव "ककुत"। ककुदिति महन्नामसु पठ्यते। तस्य छतान्तलोपश्छैतद्रूपम (१)। अयमेव महानात्मा जगतः कारणमित्यर्थः। अयमेव

(१) महीधरभाष्येतु ककुच्छब्दो गोपृष्ठोन्नतावयववाची तद्वदादित्यरूपेण सर्वोपरिस्थत्वात्ककुत्सदृशः ॥ १२ ॥

पृथिव्याः पतिः। तापपाकप्रकाशादिभिरयमग्निः सर्वाः प्रजा अनुगृह्णातीत्ययमभिप्रायः। किञ्च अयमेव "अपां रेतांसि जिन्वति"। या एता द्युलोकात्पतन्ति तासामपां रेतांसि रेतःकारणमुच्यते। तानि कारणानि जिन्वति। जिन्वतिः प्रीतिकर्म्मा। तर्पयति परिपुष्यतीति यावत्। आहुतिः परिणममाना दृष्टिं जनयतीत्येतद्दर्शयति। तथाच श्रुतिः अग्निहोत्रं प्रकृत्यभवति। "ते वा एते आहुती हुते उत्क्रामत"इत्यारभ्य "यस्ततः पुत्रो जायते सलोक"

ह्वांऽउभाराधसᳪं सहमादयध्यै ॥ उभादातारांविषाᳪंरयीणा

इत्येवमन्ता आहुतिपरिणामवादिनी ॥१३॥ "उभावामिन्द्राग्नी"(१)। ऐन्द्री त्रिष्टुप्। हे इन्द्राग्नी उभौ वां युवाम् "आहुवध्यै" कध्यै प्रत्ययः आख्यातोत्तमपुरुषस्यैकवचनस्थाने। आह्वयामि। किमर्थमु भावाह्वयामि। "राधसः सहमादयध्यै" राधसो धनस्य हविर्लक्षणस्य सह एकस्मिन्नेव प्रदाने। मादयध्यै। मादयतिर्भोजनार्थः, सह भोजनाय। किमर्थं पुनरुभावाह्वायामि सहभोजनायेत्यत आह। "उभादातारावियां रयीणाम्"। उभावाहुतभुक्तौ सन्तौ दातारौ दानशीलौ इषामन्नानां

(१) इयं भारद्वाजदृष्टा। इन्द्रशब्देनात्राहवनीयः तस्य यज्ञसाधकत्वरूपैश्वर्य्ययुक्तत्वात्। अग्निशब्देन गार्ह-

रयीणां धनानां च भवथो युवाम्। "उभावाजस्यसातयेहुवेवाम्"। यतश्चैवं युवां विशिष्टान्नधन-दातारौ अतो भूयो भूय उभावपि वाजस्यान्नस्य सतये लब्धये हुवे आह्वयामि वां युवाम् ॥१३॥ "अयं ते योनिः"। आग्नेय्यस्तिस्रोनुष्टुब्जगतीगायत्र्यः। आहवनीयोग्निरुच्यते। हे अग्ने आहवनीय "अयं" गार्हपत्योग्निः "ते तव योनिः" उत्पत्तिस्थानम् (१)। कथं भूतो

मुभाव्वाजस्यसातयेहुवेवाम् ॥ १३ ॥ अयन्ते। अयन्तेयोनिर्
ऋत्वियोयतोजातोऽअरोचथाः ॥ तञ्जानन्नग्नऽआरोहाथानो

योनिः "ऋत्वियः" ऋतावृतौ प्राप्तः काले काले भवति। "यतोजातो अरोचथाः"। रुचि दीप्तौ। यस्मात्त्वं जातः सन् पूर्वमस्याधानेष्टिपशुचातुर्मास्यसोमेष्वङ्गभावमुपगतः सन् दीप्ति-वानसि। तं जानन्नग्ने आरोह"। तं तथाभूतं योनिं गार्हपत्याख्यं विद्वानारोह पुन-रुद्धरणाय। "अथा"नन्तरमेव "नः" अस्माकं "वर्द्धय" स्फीतं कुरु "रयिं" धनम्। येन

पत्यः अन्यधेनीयते इति यास्कोक्तेः मादयध्वै मादयितुं हर्षयितुं वा। इति विशेषो महीधरभाष्ये ॥ १२ ॥

(१) सायं प्रातःकाले उत्पादनयोग्यो योनिः ॥ १४ ॥

शु० य० सं० ५४ उ० भा०

पुनरपि तत्रां यन्त्राम इत्यभिप्रायः ॥ १४ ॥ "अयमिह"। अयमाहवनीयोऽग्निः इह खरस्थाने "प्रथमः" मुख्यः, दक्षिणाग्न्यभिप्रायं च प्राथम्यम्। "धायि"। डुधाञ् धारणपोषणयोः। निहितः। "धातृभिः" अग्निधातृभिरध्वर्युभिः। "होता" आह्वाता देवानाम्। "यजिष्ठः" यष्टृतमः मानुषाद्धोतुः। "अध्वरेषु' यज्ञेषु "ईड्यः" स्तुत्यः। "यमप्नवानः" (१)। यमग्नि-माधाय पूर्वेऽपि ऋषयः अप्नवानप्रभृतयः। "भृगवः"। भृगवश्च भृगोरपत्यानि। "विरुरुचुः"।

त्वइँयारयिम् ॥ १४ ॥ अयमिह। प्रथमो धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः ॥ यमप्नवानो भृगवो विरुरुचुर्वनेषु

रुचि दीप्तौ विविधां दीप्तिं प्राप्तवन्त इत्यर्थः। क्वावस्थितं सन्तमाधाय विरुरुचुः। "वनेषु" अरण्योराधानाभिप्रायम्। "चित्रं" चयनीयम्। "विश्वे विश्वे"। एतञ्च इदानीमपि आदधाति विभूतिशक्तियुक्तं मनुष्याय। विश् इति मनुष्यनाम ॥ १५ ॥ अस्य प्रत्नांगांप्रक-त्याग्निहोत्रब्राह्मणे श्रूयते। "तासुहाग्निरभिदध्यौ मिथुनेन स्यामिति। तां सं बभूव तस्यां

(१) अप्नवानः पुत्रवन्तो भृगुवंशोत्पन्ना मुनयः। अप्नशब्दोऽपत्यनामसु पठितः इतिवार्थः महीधरभाष्ये ॥ १५ ॥

३ अ० निघम ५४

एतः प्राक्सिञ्चादि त्यादि तदर्थाभिवादिन्येषा ऋग्भवति। "अस्य" वाग्नेः "प्रत्नां" चिरन्ततीं "द्युत" दीप्तिं गवि अनुषिक्तां "शुक्र" रूपापन्नाङ्गाम् "दुदुह्रे"। दुदुहिरे दुग्धं रक्षन्ति दुहन्ति। का दुहन्ति रक्षन्ति काः। "अह्रय:" गावः। ह्री लज्जायाम्। अविद्यमानह्रियः अलज्जिता उज्ज्वलाः प्रशस्या इत्यर्थः। किं तच्छुक्रं या एता गावः रक्षन्ति "पयः" दुग्धम्। "सहस्रसाम्"। सहस्रसंख्यानां चातुर्मास्यपशुसोमानां "सनितारं" संभक्तारम्। "ऋषि"

चि॒त्रंवि॒भ्र॑त्वि॒शेवि॑शे ॥ १५ ॥ अ॒स्यप्र॒त्नाम् । अ॒स्यप्र॒त्नाम॒नु॒द्युतं॑ऽशु॒क्रन्दु॑दु॒ह्रे॒ऽअह्र॑यः ॥ पयः॑ सह॒स्र॒साम्ऋषि॑म् ॥ १६ ॥

द्रष्टृ। द्रष्टृत्वं च गवि सत् पयस्युपचर्यते। "साहैनानुदीक्ष्य हिं चकार" तस्यैनमग्र ते देवा विदां चक्र,रेष साम्नो हिं चकारेत्येवमादिना ग्रन्थेन गोभिर्हिंचकारो दृष्ट इत्येतत्प्रतिपादितम्। स एष मन्त्रो गां वाग्निं वा पयो वा स्तौति (१) ॥ १६ ॥ अथयजूंषि। "तनूपा अग्ने"।

(१) अस्याग्नेः प्रत्नां द्युतं दीप्तिमनु अह्रयः लज्जारहिताः ऋषिं गां शुक्रं शुचं पयो दुदूह्रे दुदुहिरे। सायं दोहनकाले अग्निप्रकाशाभावे दुह्यमानं पयो भूमौ पतिष्यतीति दोग्धॄणां लज्जा भवति इति महीधरभाष्ये ॥ १६ ॥

हे भगवन्नग्ने यस्त्वं स्वभावत एव अग्निहोत्रिणां तनूपा असि तनूः शरीरं तस्य गोपायिता भवसि स त्वं "तन्वं मे" मम पाहि गोपाय। "आयुर्दा अग्नेऽसि"। यस्त्वमायुषो दातासि हे अग्ने स आयुर्मे मम देहि। "वर्चोदा अग्नेऽसि वर्चो मे देहि"। यस्त्वमग्ने वर्चोदा असि स त्वं वर्चो मे मम देहि। यतो दर्शनादेव महानयं ब्राह्मणो विद्वान् तपसाग्निरिव ज्वलतीति प्रतिपत्तिस्तद्वर्च इत्युच्यते। हे "अग्ने यत्" मे" मम "तन्वाः" शरीरस्य 'ऊनं' न्यूनम् अवखण्डितं। "तत्" मे

तनूपाऽअग्ग्नेसितन्न्वम्मेपाह्यायुर्द्दाऽअग्ग्नेस्यायुर्म्मेदेहिव्व
र्च्चोदाऽअग्ग्नेसिव्वर्च्चोमेदेहि॥ अग्ग्नेयन्मेतन्न्वाऽऊनन्त
न्मऽआपृण॥१७॥ इन्धानास्त्वा। शतᳬहिमाद्द्युमन्तᳬ

मम "आपृण" आपूरय॥१७॥ "इन्धानास्त्वा" महापङ्क्तिस्त्र्यवसाना आग्नेयी। हे अग्ने इन्धानाः। इन्धी दीप्तौ। आदीपयन्तः प्रकाशयन्तस्त्वाम् "शतᳬहिमाः" शतं वर्षाणि "द्युम-

(१) दृष्टिपाटवादिरहितं यन्मेऽङ्गं तदङ्गं सर्वतः पूरयेत्यर्थः॥१७॥

न्तर्ठं समिधीमहि" दीप्तिमन्तं त्वां समिधीमहि सन्दीपयाम इत्यर्थः। "वयस्वन्तो वयस्कृतम्" कथं भूतं त्वां, कथं भूताश्च सन्तो वयं समिधीमहि। वयस्वन्तः। वय इत्यन्ननाम। अन्नवन्तः। "वयस्कृतम्" अन्नस्य कर्त्तारम्। "सहस्वन्तः" सह इति बलनाम। बलवन्तः। "सहस्कृतम्" बलस्य कर्त्तारम्। "अग्ने सपत्नदम्भनम्" हे भगवन्नग्ने सपत्नदम्भनम् सपत्नाः

समिधीमहि ॥ वयस्वन्तोवयस्कृतं सहस्वन्तः सहस्कृतम्। अग्ने सपत्नदम्भनमदब्धासोऽअदाभ्यम्। चित्रावसोस्वस्ति

शत्रवः दम्भोतिर्हिंसार्थः। सपत्नानां हिंसितारम्। "अदब्धासः" अदब्धा एव अदब्धासः। आज्जसेरसुक्। अनुपहिंसिताः सन्तः। "अदाभ्यम्" अनुपहिंसयम्। समिधीमहीत्यनुवर्त्तत। "चित्रावसो" रात्रिरुच्यते "रात्रिर्वै चित्रावसुः सा हीयर्ठं संगृह्येव चित्राणि वसतीति" श्रुतिः। हे चित्रावसो (१)। "स्वस्ति" स्वस्तीत्यविनाशिनाम। अस्तिरभि-

(१) चित्राणि विविधानि चन्द्रनक्षत्रान्धकाररूपाणि वसन्ति यस्यां वा रात्रिश्चित्रावसुः। यथा मनुष्येषु

पूजितः सु अस्तौति सुस्तुत्रा "ते" तव "पारम्" अन्तम्। "अशीय" अश्नुयां व्याप्नुयाम् ॥ १८ ॥
"संत्वमग्ने"। अथोपविश्य जपति (१)। आहवनीय उच्यते। समित्ययमुपसर्गः अगथा इत्य-
नेनाख्यातेन संबध्यते। समगथाः संगतस्त्वम् अग्ने सूर्यस्य संबन्धिना वर्चसा तेजसा। श्रुतिर्मन्त्रं
विवृणोति। "तद्यदस्तंयन्नादित्य आहवनीयं प्रविशति" तेनै तदाह। "सम्टषीणां स्तुतेन"
संगतस्त्वमग्ने ऋषीणां संबन्धिभिर्मन्त्रैः। तद्यदुपतिष्ठते तेनै तदाह। "संप्रियेण धाम्ना"।

तेंपारमंशीय ॥ १८ ॥ सन्त्वम्। सन्त्वमंग्ग्ने सूर्य्यंस्य व्वर्च्चं
सागथाः समृषीणांᳫंस्तुतेनं ॥ सम्प्प्रियेणधाम्म्नासमुहमायुंषा
सं व्वर्च्चंसासम्प्रजयासᳫंरायस्पोषेंणग्मिषीय ॥ १९ ॥ अन्धं

संगतस्त्वं प्रियेण धाम्ना प्रियाभिराहुतिभिः। धामानित्रीणि भवन्ति स्थानानि नामानि जन्मा-
नीति श्रुतिः। "आहुतयो वा अस्य प्रियं धामेति"। यथात्वमग्ने एतैस्त्रिभिः संगतः एवं
सुप्तेषु रात्रौ चोरा गृहं प्रविशन्ति तद्वदत्र राक्षसा देवयज्ये प्रविशन्तीति शङ्कया तन्निवारणाय रात्रि प्रार्थनम् ॥ १८ ॥

(१) संलमितुरपविशति। का० ४।१२।४ ॥ १९ ॥

त्वत्प्रसादात् "इह" अपि "आयुषा वर्चसा" तेजसा अन्नेन वा "प्रजया" पुत्रादिकया "रायस्पोषेण," राय इति धननाम, धनस्य पोषेण पुष्ट्या "ग्मिषीय"। गमेरेतद्रूपम्। सं गच्छेयम्। आयुः प्रभृतीनि मम सन्त्वित्यर्थः ॥ १९ ॥ अथगामभ्येति (१)। "अन्धस्थ" अन्ध इत्यन्ननाम श्रुत्या तु लक्षणया वीर्यमित्युक्तम्। यानि वो वीर्याणि यानि वो महांसीति यतो यूयं वीर्यहेतुभूत- "मन्धः स्थ" भवथ अतोऽन्धः "वः" युष्मत्सम्बन्धि भक्षीय। भजतेरेतद्रूपं न भक्षयतेः। भजेयम्।

# स्तथान्धोवोभक्षीयमह स्थमहोवोभक्षीयोर्जस्थोर्जं वोभक्षीयरायस्पोषस्थ-

महस्थ" (२)। महश्शब्देन तस्यै घृतं तस्यै शिर इत्यादीनि दश वीर्याणि उच्यन्ते। यतो महस्थ अतो महो वीर्यं वो भक्षीय। "ऊर्जस्थ" ऊर्जशब्दो रसवचनः। यतो यूय मूर्जस्थ अत ऊर्जं वो भक्षीय। "रायस्पोषस्थ"। यतो यूयं धनपुष्टिकराः स्थ अतो धनपोषं "वो"

(१) अथ गां गच्छत्यन्धस्थेति। का० ४।१२।५।

(२) यूयं महस्थ। महपूजायां, अतो वः पूज्यानां प्रसादादहमपि महो भक्षीय पूज्य त्वं सेवेय। गौर्नपदास्पृष्टेत्यादिस्मृतेर्गवां पूज्यत्वम्। इतिवार्थः ॥ २० ॥

भक्षीय ॥ २० ॥ "रेवतीरमध्वम्" । हे रेवत्यो धनवत्यः गावः रमध्वं रतिं कुरुत । अस्मिन् योनौ । अस्यां गोयूथसंबन्धिन्यां प्रजनन्यां रमध्वमित्यनुवर्त्तते । "अस्मिन् गोष्ठे" अस्मिन् गोवाटे रमध्वम् । "अस्मिल्लोके" । लोकदर्शने । मदीये अस्मिन्नवलोकने रमध्वम् । "अस्मिन् क्षये" (१) गृहे रमध्वम् । क्षयो निवास इत्याद्युदात्तः क्षयशब्दः । किञ्च "इहैवस्तमा-

स्पोषँस्त्वथ रायस्पोषँ त्वोभक्षीय ॥ २० ॥ रेवतीरमध्वम् । रेवतीरमध्वमस्मिन्योनावस्मिन्गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षये ॥ इहैवस्तमापगात ॥ २१ ॥ सँहितासि । विश्वरूप्यूर्जा

पगात" । इहैव यजमानगृहे स्तो भवत मापगात मा अपगच्छत यजमानं परित्यज्य ॥ २१ ॥ गामभिमृशति (१) । "संहितासि" । संलग्नासि यज्ञहोम सम्बन्धेन । अथवा संदधाति क्षीणान् प्राणिनः स्वपयोभिरिति संहिता । "विश्वरूपी" । शुक्लकृष्णादिभेदैः पशूनां वैश्व-

(१) क्षयशब्दो निवासवचनः ॥ २१ ॥

(१) सँहितेत्यालभते । ४।१२।६ ॥ २२ ॥

रूपम्। या त्वं संहितासि विश्वरूपी च सा ऊर्जा "अन्नेन माम्" आविश। "गौपत्येन" च गवां पतित्वं गौपत्यम्। गार्हपत्यमुपतिष्ठते तिसृभिर्गायत्रीभिः। "उपत्वाग्ने" उपेत्ययमुप-सर्ग एमसीत्यनेनाख्यातपदेन सह संबाध्यते। इमसीति सिद्धे छन्दसि वर्त्तमानार्थेऽस्मद् लिटि "इदन्तो मसी"तिरूपम्। "उपेम" उपेयामः उपगच्छामः त्वां हे अग्ने "दिवेदिवे" अहन्यहनि। हे "दोषावस्तः" दोषेति रात्रिनाम। वस निवासे। रात्र्यां वसनशीलो दोषावस्ता तस्य संबो-

मावि॑श्वगौप॒त्त्येन॑ ॥ उप॑त्वाग्ने दि॒वेदि॑वे॒दोषा॑वस्तर्द्धि॒या व॒यम्॥ नमो॒भर॑न्त॒ऽएम॑सि ॥ २२ ॥ राज॑न्तमध्व॒राणा॑म्। राज॑न्त-

धनं हे दोषावस्तः। "अग्नौ ह वै देवा इत्युपक्रम्य तौ संगृह्य रात्रिं प्रविवेशेति" यदनेनेति हासेनोच्यते तदयं मन्त्रो दृष्ट्वाह। दोषावस्तरिति। "धिया" बुध्या प्रोक्तं। यतमनस्काः श्रद्दधानाः वयं "नमोभरन्तः" नम इत्यन्नाम। अन्नं बिभ्रतः उप आइमसीत्याख्यातपदं व्याख्यातमेव ॥२२॥ "राजन्तमध्वराणाम्"। अस्मिन्मन्त्रे आख्यातं नाम्नातमतोऽधस्तनमन्त्रे यदाख्यातं तदनुवर्त्तते।

राजन्तं दीप्यमानम् अध्वराणां "गोपां" यज्ञानां गोप्तारम्। "ऋतस्य दीदिविम्" सत्यस्य दीपयितारम्। अग्निसमीपे व्रतं गृहीत्वा सत्यं वदंति तदभिप्रायमेतत्। "वर्द्धमानम्"। चातुर्मास्य पशुसोमैः। "स्वेदमे" स्वकीये यज्ञगृहे। दम इति गृहनाम। दाम्यन्ति हि गृहस्थाः। उप आइमसीत्यनुवर्त्तते॥ २३॥ "स नः पितेव"। यस्त्वमुक्तगुणः सोऽस्माकं पिता इव सूनवे

मध्व॒राणां॑ गो॒पामृ॒तस्य॑ दीदि॑विम्॥ वर्द्ध॑मान॒ꣳ स्वे दमे॑॥ २३॥

स नः॑। स नः॑ पि॒तेव॑ सू॒नवेऽग्ने॑ सूपाय॒नो भ॑व। सच॑स्वा नः स्व॒स्तये॑॥ २४॥ अग्ने॒ त्वम्। अग्ने॒ त्वन्नो॒ऽअन्त॑म॒ऽउ॒त त्रा॒ता

पुत्राय हे भगवन्नग्ने "सूपाय नः" सुखोपगमनो भव (१)। किञ्च "स च स्वा नः स्वस्तये"। सेवस्व नः अस्मान् स्वस्तये अविनाशाय॥ २४॥ "अग्नेत्वन्नः"। चतस्रो द्विपदा विराजआग्नेय्यः। हे भगवन्नग्ने त्वन्नो अन्तमः त्वमस्माकं निकटतमः। अन्तिकशब्दस्य तमपि

(१) यथा पुत्राय पिता सुखेनोपगन्तुं शक्यस्तद्वत्॥ २४॥

तद्रूपम् । ब्रह्मचर्यप्रभृति अग्निमुपासते तदभिप्रायमेतत् । देशविवक्षया वा सन्निकृष्टो ह्यग्नि-र्विप्रकृष्टा ह्यन्या देवताः । "उतत्राता" । अपिच स्वभावत एव सर्वप्राणिनां पालयितासि । यत एवम् । अतो ब्रूमः । "शिवो भवावरूथ्यः" । शिवः शान्तो भव । वरूथमिति गृहनाम । वरूथाय हितो वरूथ्यः । "वसुरग्निः" । अग्निशब्द आमन्त्रितविभक्त्या विपरिणमय्यते वाक्य-संबन्धात् । हे अग्ने यस्त्वं वसुः । वासयिता जनानाम् । यद्वा वसु धनम् । तापपाक-प्रकाशैरुपकुर्वन्नुपस्कर इव भवसि । "वसुश्रवाः" । वसुश्रवाश्च । वसुना धनदानेन यः श्रूयते

**शिवोभवावरूथ्यः । वसुरग्निर्वसुश्रवाऽअच्छानक्षिद्युमत्तमᳪरयिन्दाः ॥ २५ ॥ तन्त्वा । तन्त्वाशोचिष्ठदीदिवः सुम्ना**

स वसुश्रवाः । धनदानैरित्यर्थः सः । "अच्छानक्षि" । अच्छाभेराप्तुमितिशाकपूणिः । नक्षतिराप्नोतिकर्मा । अभिव्याप्नुहि अस्मान् (२) । किञ्च "द्युमत्तमं दीप्तिमत्तमम् । "रयिं" धनम् "दाः" देहि ॥२५॥ "तन्त्वाशोचिष्ठ" । यस्त्वमुक्तगुणस्तं त्वां ब्रवीमि हे अग्ने शोचिष्ठ

(१) पुत्रादिसमूहो वा वरूथः ।

(२) यद्वा अच्छ्रहें निर्मलस्वभाव अस्मान् नक्षि अस्मद्धोमस्थानं गच्छ इति महीधरभाष्ये ॥ २५ ॥

मु० य० सं० ५९ उ० भा०

शोचिष्मत्तमः। शोचिरिति ज्वालानामसु पठितम्। छान्दसो मतुब्लोपः। "दीदिवः"। संदीप्यस्व। दिवेर्ज्वलनार्थस्य लिट्येतद्रूपम्। "सुम्नाय" द्वितीयार्थे चतुर्थी सुम्नम्। "नूनं" निश्चयेन। "ईमहे" याचामहे। त्वत्तोवश्यं सुखं भवतीत्यभिप्रायः। "सखिभ्यः"। सखिभ्यो-र्थाय। सुम्नं नूनमीमह इत्यनुषङ्गः। "सनोबोधि"। यस्त्वमुक्तगुणः सोस्माकं बुध्यस्वाभि-

य॑ नू॒नमी॑महे॒ सखि॑भ्यः ॥ स नो॑ बोधि श्रु॒धी हव॑मुरु॒ष्या णो॑ऽअ॒घाय॒तः स॑मस्मात् ॥ २६ ॥ इड॒ऽएहि॑ । इड॒ऽएह्यदि॑त॒ऽ

प्रायम्। बुद्ध्वा च "श्रुधीहवम्" शृणु अस्मदीयमाह्वानम्। श्रुत्वा चाह्वानम् "उरुष्याणः" उरुष्यतो रक्षतिकर्मा। रक्ष अस्मान् कुतो रक्ष "अघायतः" अघं पापं य इच्छति स अघायत् तस्मादघायतः शत्रोः। "समस्मात्" सर्वस्मात् ॥२६॥ गां गच्छति(१)। "इडएहि" इडा मनोर्दुहिता अदितिर्देवमाता इडेव मनोरस्मान्प्रत्येहि। अदितिरिवादित्यानामस्मान् प्रत्येहि। अनिजायाम

(१) गां गच्छतीडएहेति। श्रा० ४।१२।८ ॥ २६ ॥

३ अ०

विषम ५९

निदितौ च इडा * अदितिशब्दप्रयोग उपमार्थः। अतस्मिंस्तच्छब्दस्तद्वदतिदेशार्थः। गामभि-ऋशति। "काम्याएत"। "मनुष्याणां ह्येतासु कामाः प्रविष्टा" इति श्रुतिः। हे काम्याः आहूत एत आगच्छत। "मयिवः" युष्माकं। "कामधरणम्"। कामा यस्मिन् भ्रियन्ते तत्काम धरणम्। श्रुतिर्व्याचष्टे अहं वः प्रियो भूयासमिति॥ २७॥ अग्निमीळमाणो जपति (१)। "सोमानं स्वरणम्"। ब्रह्मणस्पत्योगायत्र्यस्तृचः। बृहस्पतिरेव ब्रह्मणस्पतिः। हे ब्रह्मणस्पते

एहिकाम्म्य ऽएत ॥ मयि वः कामधरणम्भूयात् ॥ २७ ॥ सोमा
मꣳस्वरणम्। कृणुहिब्रह्मणस्पते ॥ कक्षीवन्तंयऽऔ-

सोमानम्। "षुञ् अभिषवे अतोमनिन्वनिप्वनिपः। अन्येभ्योपि दृश्यन्ते" इति मनिप्। सोमानं सोतारं पातारमितिपर्यायः। केषां सोतारम् सामर्थ्यात् सोमानाम्। स्वरणम्। स्वृशब्दोपतापयोः। शब्दयितारं सोतारं च सोमानां स्तोतारं च देवानाम्। "कृणुहि"। कुरु धनप्रदानैः। "ब्रह्मणस्पते"। कमिव। "कक्षीवन्तम्" लुप्तोपममेतत्। कक्षीवन्तमिव ऋषिं

---

* अतद्वदभिडायामदितौ च गतिः इडा—क्वचित्।

दीर्घतमसः पुत्रम्। "यः औशिजः"। उशिजः पुत्रः उशिक् माता अस्यासीत्॥ २८॥ "यो रेवान्" रै इति धननाम। यो ब्रह्मणःस्पतिर्धनवान् यश्च "अमीवहा"अमीवा व्याधिः। व्याधेर्हन्ता। "वसुवित्"। वसुनो धनस्य सारासारतां वेत्ति विदित्वा च यथायोगं स्तोतृभ्यो ददाति "पुष्टिवर्द्धनः"। पुष पुष्टौ पुष्टेः पोषस्य वर्द्धयिता। सनः सिषक्तु सिषक्ति सच इति सेवमानस्य। सोऽस्मान् सेवताम्। "यस्तुरः"। यस्तुरणः अविलम्बकारी। यद्वा पुनः प्रार्थ्यते। हे ब्रह्मण-

**शिजः॥ २८॥ योरेवान्। योरेवान्यो॑ऽअमीवहा व॑सुवित्पु॒ष्टिवर्द्धनः॥ सनः सिषक्तु॒यस्तुरः॥ २९॥ मानः। मानः॑**

स्पते यः पुत्रः धनवान् यश्च व्याधेर्हन्ता। ज्योतिःशास्त्राभिप्रायमेतत्। धनस्य च लब्धा पुष्टेश्च वर्द्धयिता सोऽस्मान् पुत्रः सेवताम्। यस्तुरः शीघ्रकारी। कालातिक्रमो हि प्रत्यग्रं कार्यरसं पिबतीत्याहुः॥ २९॥ "मानःशंसः"। मा इत्ययं प्रगागित्याख्यातेन संबध्यते। प्रपूर्वस्य वशेर्व्याप्त्यर्थस्यैतद्रूपम्। मा व्याप्नोतु नः अस्मान् "शंसः"। शसनं शंसः अनिष्टचिन्तनम्।

(१) सोमानमित्यमुदकं ब्रलोपायनम्। का० ४।११।१० ॥ २८ ॥

ऋ० य० ध० ६० उ० मा० ३ अ० भिषज ६०

कस्य संबन्धि, अररुषः । रा ला दाने । अस्य क्वसौ षष्ठ्यां ररुष इति भवति, तन्नञा प्रतिषिध्यते । "अररुषः" अदातुः । अनुपभोगयस्य शत्रोरित्यर्थः । "धूर्तिः" हिंसा । ध्वरति धूर्वति इति वधकर्मसु पठितम् । "मर्त्यस्य" मरणधर्मिणो मनुष्यस्य । मास्मान् व्याप्नोतु अररुषो मर्त्यस्य संबन्धि शंसनं धूर्तिश्चेति वाक्यार्थः । किञ्च "रक्षाणः" । रक्ष नः गोपायास्मान् हे ब्रह्मणस्पते ॥ ३० ॥ "महित्रीणाम्" । आदित्यदेवत्यृचो गायत्र्यः । पथि

**मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३० ॥ महिंत्रीणाम् । महिंत्रीणामवोऽस्तु द्युक्षम्मित्रस्यार्य्यम्णः ॥ दुराधर्षं वरुणस्य ॥ ३१ ॥ नहि तेषाम् । नहि ते-**

स्वस्त्ययनम् । "महि" महत् त्रीणां त्रयाणामादित्यानाम् "अवोऽस्तु" अवनमवः पालनं भवतु । कथंभूतं पालनम् । "द्युक्षम्" द्युतिमन्ति द्रव्याणि यस्मिन्पालने क्षियन्ति निवसन्ति तद्द्युक्षम् । किन्नाम्नामादित्यानाम् "मित्रस्य" "अर्यम्णः" "वरुणस्य" च । दुराधर्षमित्यवनविशेषणम् । "दुराधर्षम्" । नञोऽर्थे दुरुपसर्गः अनाधर्षम् । अशक्यमाधर्षयितुमन्यैः ॥ ३१ ॥ "नहितेषाम्" ।

न हि कदाचित्तेऽग्न्यादित्यपालितानां यजमानानाम् "अमाचन" अमाशब्दो गृहवचनः चन-शब्दोऽप्यर्थे। गृहेऽपि सताम्। "नाध्वसु वारणेषु"। नच मार्गेषु सताम्। कथं भूतेषु वारणेषु। यत्रावस्थिताश्चौराः पथिकान्वारयन्ति ते वारणाः पन्थानः। एतदुक्तं भवति। न गृहस्थितानां नापिगृहाद्बहिः। "ईशेरिपुरघशंसः"। ईश ऐश्वर्ये। 'लोपस्त आत्मनेपदेष्वि'तितकारलोपः। न ईष्टे रिपुः। अघं पापं यः शंसति चौरादिः सोऽघशंसः॥ ३२॥ "तेहि पुत्रासः"। कस्मात्

षांमुमाचुनमाध्वसुवारणेषु॥ ईशेरिपुरघशंसः॥ ३२॥ तेहि पुत्रासोऽअदितेः प्रजीवसेमर्त्याय॥ ज्योतिर्यच्छन्त्यजस्रम्॥३३॥

पुनरादित्यगुप्तानां गृहे बहिश्च खलु नेष्टे, यतस्ते पुत्रा अदितेः। एवं तावदेकम्। इदमपरम्। "प्रजीवसे मर्त्याय ज्योतिर्यच्छन्ति"। प्रयच्छन्ति ददति। कस्मै मर्त्याय मनुष्याय। किं प्रयच्छन्ति ज्योतिः। "अजस्रम्" अनुपक्षीणम्। किमर्थं ज्योतिः प्रयच्छन्ति। "जीवसे"। चिरञ्जीवाय॥ ३३॥ "कदाचन"। ऐन्द्री बृहती। नकारो भिन्नक्रम आदौ वर्त्तते। हे इन्द्र भूयो भूयो याच्यमानस्त्वं न कदाचिदपि "स्तरीरसि"। स्तृणातेर्हिंसार्थस्यैतद्रूपम्।

"न स्तोतासि" न क्रुध्यसि। किम्पुनः करोषि। "सश्चसि दाशुषे"। दाशुष इति द्वितीयार्थे चतुर्थी। सश्चतिः सेवनकर्मा सेवसे। दाशुषे दाश्वांसम् हवींषि दत्तवन्तं यजमानम्। किञ्च उप "पृच्यते" एव क्षिप्रम्। पृची संपर्के। संपृच्यते हि दाश्वांसम्प्रति। प्रसमुपोदः पादपूरण इत्युपशब्दः पादपूरणे। इच्छब्दः एवार्थे। नुशब्दः क्षिप्रवचनः। हे मघवन् कथं भूतमुपपृच्यते। "भूयो" बहुतरमेव क्षिप्रम् इत् नु उक्तार्थे। ते तव स्वभूतं दानम् देवस्य

कुदाचन। स्तुरीरसि नेन्द्र सश्चसि दाशुषे॥ उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते॥ ३४॥ तत्सवितुः। तत्सवितु-

दातुः। एतदुक्तं भवति न कदाचित्त्वं यजमानं प्रति क्रुध्यसि सेवसे च दाश्वांसम् उपपृच्यते वा त्वदीयं दानं भूयो भूयो दाश्वांसं प्रति॥३४॥ "तत्सवितुः"। साविली गायत्री (१)। तदिति षष्ठ्या विपरिणम्यते। तस्य सवितुः सर्वस्य प्रसवदातुः। आदित्यान्तर पुरुषस्य। "देवस्य"

(१) विश्वामित्रदृष्टेयम्। अत्र यो विशेषः सोऽस्मत्तातचरणश्रीवालकृष्णमाखिकृतायां गायत्रीतत्त्वसमीक्षायां द्रष्टव्यः॥ ३५॥

हिरण्यगर्भोपाध्यवच्छिन्नस्य वा विज्ञानानन्दस्वभावस्य वा ब्रह्मणः। "वरेण्यम्"। वरणीयम्
"भर्गः"। भर्गशब्दो वीर्यवचनः। "वरुणाद्वा अभिषिषिचानाद्भर्गोऽपचक्राम वीर्यं वै भर्ग इति"।
श्रुतिः। तेन हि पापं भृज्जन्ति दहन्ति। भृजी भर्जने। अथवा भर्गस्तेजोवचनः। यद्वा
मण्डलं पुरुषो रश्मय इत्येतत्त्रितयमभिप्रेयते। "देवस्य" दानादिगुणयुक्तस्य। "धीमहि"। ध्यै
चिन्तायाम्। अस्य छान्दसं संप्रसारणम्। ध्यायामः। चिन्तयामः। निदिध्यासं तद्विषयं
कुर्म इति यावत्। "धियोयोनः"। धीशब्दो बुद्धिवचनः कर्मवचनो वा वाग्वचनश्च। बुद्धीः

वरे॑ण्यम्भर्गो॑ देवस्य॑ धीमहि। धियो॒यो नः॑ प्रचो॒दया॑त् ॥ ३५ ॥

कर्माणि वा वाचो वा। यः सविता नोऽस्माकम्। "प्रचोदयात्"। चुद संचोदने। प्रकर्षेण
चोदयति प्रेरयति तस्य सवितुः संबन्धि वीर्यं तेजो वा ध्यायाम इति संबन्धः। वाक्यभेदेन वा
योजना। तत्सवितुर्वरेण्यं वीर्यं तेजो वा देवस्य ध्यायामः। यश्च बुद्धीः प्रचोदयात् प्रेरयत्य-
स्माकं तं च ध्यायामः स च सवितैव भवति॥ लिङ्गव्यत्ययेन वा योजना। तत्सवितुर्वरेण्यं
भर्गो देवस्य ध्यायामः धियोयद्भर्गः अस्माकं प्रेरयति॥ ३५॥ "परिते"। आग्नेयी गायत्री।

हे अग्ने "पर्यश्नोतु" परिव्याप्नोतु। "ते" तव सम्भूतो "रथः"। अस्मान् "विश्वतः" सर्वतः। कथं भूतो रथः "दूडभः" दुर्दभः"। दुरुपसर्गः प्रतिषेधार्थीयः। दभ्नोतिवधकर्मा। अवग्रः। "येन" रथेन "रक्षसि दाशुषः" यजमानानाम्। "यजमाना वै दाश्वांस इति" श्रुतिः। स रथोऽस्मान् पर्यश्नोतु इति संबन्धः। इन्द्रदुपस्थानं समाप्तम्॥ ३६॥ क्षुल्लकोपस्थानमुच्यते (१)। आसुरेरार्षम्। यजूंषि। "भूर्भुवः स्वः"। हे भगवन्नग्ने यस्त्वं महाव्याहृत्यात्मकस्तं

(शतम् १००) परिंतेदूडभो रथोस्मा २ँ ऽअश्नोतुव्विश्वतः॥ येन रक्षसिदाशुषः॥ ३६॥ भूर्भुवः। भूर्भुवः स्वः सुप्रजाः

त्वां याचे। शोभनप्रजाः "प्रजाभिः स्यां" भवेयम्। शोभनवीरश्च "वीरैः" शोभनपोषश्च "पोषैः" पोषो भूगोहिरण्यधान्यादिभिः। प्रवसन् यजमानः गार्हपत्यमुपतिष्ठते (२)। "नर्यप्रजांमेपाहि"।

(१) वामदेवदृष्टेयम्॥ ३६॥

(१) भूर्भुवः स्वरितिवोभाविति। ४।११।१२।

(२) प्रवत्स्यन् सर्वान्नयैति मतिमन्त्रम् इति। का० ४।१२।१२॥ ३७॥

रेभ्यो हितो नर्यः । हे नर्य प्रजां मे पाहि गोपाय । आहवनीयमुपतिष्ठते । "शंस्य" । शंसु स्तुतौ । हे स्तुत्य । "पशून्मे पाहि" गोपाय । दक्षिणाग्निमुपतिष्ठते । "अथर्य" । अतनवान् अथर्यः । अत सातत्यगमने । सततं हि दक्षिणाग्निर्गार्हपत्यस्य स्थानं गच्छति । हे अतनवन् अन्नं मे गोपाय ॥ २७ ॥ प्रत्यागत आहवनीयमुपतिष्ठते (१) । "आगन्म" । अनुष्टुप् । हे आहवनीय यं त्वामागता वयम् । "विश्ववेदसं" सर्वतोधनम् । "अस्मभ्यम्" । षष्ठ्यर्थे चतुर्थी ।

प्रजाभिः स्याᳪ सुवीरो वीरैः सुपोषः पोषैः ॥ नर्य प्रजां मे पाहि शᳪस्य पशून्मे पाह्यथर्य पितुं मे पाहि ॥ ३७ ॥ आग-

अस्माकम् "वसु वित्तमम्" । अतिशयेन धनस्य वेदितारम् । सः त्वं हे भगवन् अग्ने "सम्राट्" । राजृ दीप्तौ । सम्यग्दीप्तिमत् । "अभि द्युम्नम्" द्युम्नं द्योततेर्यशो वा अन्नं वा ।

(१) समित्पाणिरनुपेत्य कश्चिदुपतिष्ठते आहवनीयगार्हपत्यदक्षिणाग्नीनागन्मेति प्रतिमन्त्रम् । का० ४।१२।१८। समिधं हस्ते गृहीत्वा कंचिदपि जनमगत्वैव प्रथममेवाग्न्यागारं प्राप्यागन्मेति मन्त्रेणाहवनीयादीनुपतिष्ठते इति सूत्रार्थः ॥ ३८ ॥

"अभिसहः" । सह इति बलनाम । "आयच्छस्व" । यमेरेतद्रूपम् । एतदुक्तं भवति । अस्मानभि अन्नं यशो वा बलं वा गृहीष्व आगमयेत्यर्थः । यद्वा अस्मान् द्युम्नमभिबलं वाऽभियच्छस्व स्थापयस्व समर्पय । आयच्छतिः स्थापनार्थः ॥ ३८ ॥ गार्हपत्यमुपतिष्ठते । "अयमग्निः" न्यङ्कुसारिणी बृहती । यो यमग्निर्गृहपतिर्गार्हपत्याख्यः प्रजायाश्च अतिशयेन धनस्य वेदिता तमेतं

न्म । विश्ववेदसमस्मभ्यं वसुवित्तमम् ॥ अग्ने सम्राड भिद्युम्नमभिसहऽआयच्छस्व ॥ ३८ ॥ अयमग्निः । अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः ॥ अग्ने गृहपतेभिद्युम्नमभिसहऽआयच्छस्व ॥ ३९ ॥ अयमग्निः । अय

याचे हे अग्ने गृहपति । अभिद्युम्नेति व्याख्यातम् ॥ ३९ ॥ दक्षिणाग्न्युपस्थानम् । "अयमग्निः" । अनुष्टुप् । योयमग्निः "पुरीष्यः" पशव्यः । "पशवो वै पुरीषमिति" श्रुतिः । "रयिमान्" धनवान् पुष्टेर्वर्द्धयिता । तमेतं प्रत्यक्षीकृत्य याचे । हे अग्ने पुरीष्य द्युम्नं बलं च

शु० य० सं० ६४ उ० मा०

प्रत्यक्षान्निधेहि ॥ ४० ॥ गृहानुपैति (१)। "गृहामाविभीत"। त्रिष्टुब्विराड्रूपा। हे "गृहाः माविभीत" भयं मुञ्चत "मा वेपध्वम्"। टुवेपृ कम्पचलनयोः। वेपतिः कम्पनार्थः। कम्पनं मुञ्चत। यतो वयम् युष्मान् "ऊर्जं" अन्नं "बिभ्रतः" धारयमाणान् अनुपक्षीणान् अन्नेनैव "आइमसि" आगताः स्मः किञ्च अहमपि "ऊर्ज्जं" अन्नं "बिभ्रत्" धारयन् "वः" युष्मान्

मग्निः पुरीष्यो रयिमान्पुष्टिवर्द्धनः॥ अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व ॥ ४० ॥ गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि ॥ ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानै

मि "सुमनाः" शोभनमनाः "सुमेधाः" शोभनप्रज्ञः सन् "गृहानैमि" गृहान्प्रत्यागच्छामि। "मनसामोदमानः" हृष्यन्। आइमः बहुवचनम् एमि एकवचनम्। आत्मनि विकल्पेन बहुवचनं स्मर्य्यत इत्यदोषः॥ ४१ ॥ "येषामध्येति"। अनुष्टुप्। येषां गृहाणामध्येति। इक्

(१) गृहामाविभीतेति गृहानुपैति। का० ४।१२।२३ ॥ ४१ ॥

२ अ०

विभव

६४

स्वरयो इत्येतस्यैतद्रूपं न तु इङ् अध्ययन इत्येतस्य। येषां गृहाणां स्मरति प्रवसन् गृह-पतिः। "येषु च सौमनसो बहुः"। येषु गृहेषु बहुप्रकारं सौमनस्यं विद्यते तान् "गृहा-नुपह्वयामहे। आह्वयामः। "ते" चाहूताः सन्तो "नोजानन्तु"। अस्मद्विषयां प्रत्यभिज्ञां कुर्वन्तु। "जानतो" ऽस्मान् प्रत्यभिज्ञावतोस्मान् ॥४२॥ "उपहूताइह"। त्र्यवसाना महापङ्क्तिः। अक्ष्यनु-

स्मिन्म॒न॑स्सा॒मोद॑मानः ॥ ४१ ॥ येषा॑म॒ध्ये॒ति॑ प्र॒वस॒न्ने॒षु॑ सौम॒न॒सो ब॒हुः ॥ गृ॒हानुप॑ह्वयामहे॒ते नो॑ जान॒न्तु॒ जान॒तः ॥ ४२ ॥ उप॑हूता॒ऽइ॒ह। गाव॒ऽउप॑हूता॒ऽअ॒जा॒व॑यः॑ ॥ अथो॒ऽअन्न॑स्य की॒

लाल॒ उप॑हूतो गृ॒हेषु॑ नः ॥ क्षेमा॑य वः॒ शान्त्यै॑ प्र प॑द्ये शि॒वꣳ श॒ग्मꣳ शं॒योः शं॒योः ॥ ४३ ॥

ज्ञाता इह गृहेषु न इत्येतत्पदद्वयं विप्रकृष्टमिह संबध्यते। इहास्माकं गृहेषु "गावः अजा अवयः उपहूताः"। "अथो" अपिच "अन्नस्य कीलालः"। कीलालशब्दो रसवचनः। पटुरसमिद-मन्नमभ्यनुज्ञायते। "क्षेमायवः" इति प्रविशति (१) गृहाः उच्यन्ते। क्षेमाय अविनाशाय वः

(१) क्षेमाय व इति प्रविशतीति का० ४।१२॥ ४२॥

इत्युपस्थानमन्त्राः ॥ ४३ ॥

17.

युष्मान् "शान्त्यै" च "प्रपद्ये" प्रविशामि । "शिवं शग्मं" द्वे अप्येते सुखस्य नाम्नी । अनेक-प्रकारं सुखं भवत्विति शेषः । कस्य "शंयोः" । शमितिसुखनाम । इदं युरिदं कामयमानः । सुखकामस्य । नर्यं प्रजामित्यादि आदित्यार्षम् ॥ ४३ ॥ "प्रघासिनोहवामहे" । चातुर्मास्य मन्त्राः (१) प्रजापतेरार्षम् । गायत्रीमारुती । शुक्रज्योतिश्चेति सप्त सप्त मारुता गणाः । तत्र स्वतवाश्च प्रघासी चेति पठ्यते । तदेतदुच्यते । प्रघासुप्रपलक्षिता मरुतः प्रघासिनः हवामहे

त्रातारउपहूतोगृहेषु नः ॥ क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳ शग्मꣳ शंय्योः शंय्योः ॥४३॥ प्रघासिनोहवामहे । मरुतश्च रिशादसः ॥

आह्वयामः । ये च शुक्रज्योतिप्रभृतयो "मरुत" स्तांश्च हवामहे । "रिशादसः" । रिशतिर्हिं-सार्थः । दस् उपक्षये । ब्राह्मणान् रेशयन्त उपक्षयन्तीति रिशद्वासिनः सन्तो रिशादस इत्युच्य-

(१) अथचातुर्मास्यमन्त्राः । चातुर्मासाख्यो यागः स पर्वचतुष्टयात्मकः । वैश्वदेव वरुणप्रघास साकमेध शुनासीरीयाख्यानि चत्वारि पर्वाणि । तत्र वरुणप्रघासाख्ये द्वितीये पर्वणि दक्षिणोत्तरयोर्द्वयोर्वेद्योर्हविःष्वासा-दितेषु प्रतिप्रस्थाता पत्नीमुदानयं स्तदीयं जारं पृच्छेत्केनचरसीति । सापि तं ब्रूयात् । आख्याते प्रघासिन

यन्ते। कथं भूतान्ह्वामहे। "करंभेण सजोषसः"। करम्भपात्रैः समानप्रीतयः ॥ ४४ ॥
पत्नीवाचनो मन्त्रः। पत्नी दक्षिणाग्नौ करंपात्राणि जुहोति (१)। अनुष्टुभा सावल्या।
यच्च "ग्रामे वसन्तो यच्चा "रण्ये" यच्च "सभाया"मवस्थिताः यच्च "इन्द्रिये" प्रजननेनावस्थिताः
सन्तो "यदेनश्चकृमा वयम्"। एनः शब्दः पापवचनः। यच्छब्दस्याधस्तनैः चतुर्भिर्यच्छब्दैरे-

कुरुम्भेणासजोषसः ॥४४॥ यद्ग्रामे। यद्ग्रामेयदरण्येयत्सभायां
यदिन्द्रिये॥ यदेनश्चकृमावयमिदन्तदवयजामहेस्वाहा ॥४५॥

कीभूय वीप्सार्थो भवति। अथ कोर्थः। यत्र यत्र ग्रामादिष्ववस्थिताः सन्तः पापं "चकृमः"
कृतवन्तो वयम्। "इदं तदवयजामहे"। अवपूर्वो यजिर्नाशने वर्त्तते। एतत्पापं नाशयामः।
इत्येनां वाचयति नयन्निति। का० ५।५।१० ॥ ४४ ॥

(१) करम्भपात्राणि जुहोति शूर्पेण मूर्धनिकृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखौ जायापती वा दक्षिणेनाहृत्य तीर्थेण पूर्वेण वेदिमपरेण वा यद्ग्रामे इतीति। का० ५।५।११। यवपिष्टेन निर्म्मितानि सन्तानपरिमितानि एकाधिकानिवर्तुलादिरूपाणि करम्भपात्राणि, तानि शूर्पेण पत्नी दक्षिणाग्नौ जुहयादित्येकः पक्षः दम्पती द्वौ वा जुहुयातामित्यपरः।

"स्वाहा"। सुकृतं चैतत् हविर्भवतु ॥ ४५ ॥ "मोषूणः" (१)। ऐन्द्रीमारुती विराजं यजमानो जपति। यत्र वै प्रजापतिः प्रजानां मरुतः पाप्मानं विमेथिरे इत्यादिना इतिहासेन निदानवचनं स्तुतिः करोति। "मोषूणः"। मो इत्ययं निपातः प्रतिषेधार्थीयः पुरस्तादाख्यातस्य भवति। यस्यार्थं प्रतिषेधयति। नचाख्यातं विद्यते। अतः अनुग्रहमध्याह्रियते। हे इन्द्र "मा विमन्योः" माहिंसीः। सु इत्यनर्थकः। नोऽस्माकं प्रजाः। अत्र "पृत्सु" एषु संग्रामेषु वर्त्त-

मोषूणः। मोषूण॑ऽइन्द्रा॒त्र॑पृ॒त्सुदे॒वैरस्ति॒हि॒ष्मा॑तेशुष्मि॒न्नव॒याः॥ म॒हश्चि॒द्यस्य॑मी॒ढुषो॑य॒व्या ह॒विष्म॑तो म॒रुतो॒वन्द॑ते॒गीः॥ ४६ ॥

मानः। "देवैः" मरुद्भिः सहितः। क उपकार इतिचेत्, उपकृत्य हि प्रत्युपकारः प्रार्थ्यते। "अस्तिहि"। यस्मादस्ति। स इत्यनर्थकः। "ते" तव विषये 'शुष्मिन्'। शुष्म इति बलनाम। हे बलवन् 'अवया' "अवपूर्वस्य यजतेतद्रूपम्। अवयुतो यागः पृथग्भागः तद्योगी। किञ्च "महश्चि-

तौ च दक्षिणेन मार्गेण तानि पात्राण्याहृत्य वेद्याः पूर्वदिशि पश्चिमदिशि वा स्थित्वा जुहुयाताम् इति महीधरभाष्ये॥ ४५॥ (१) मोषूण इति यजमानो जपति। का० ५।५।१२। ॥ ४६ ॥

द्यस्य"। मरुत: चित् यस्य तव 'मीढुष:'। मिह सेचने। सेक्तु: वरुणस्य वर्षयितुर्वा। "यव्याहविष्म-
तोमरुत:"। यवमयै: करम्भपात्रै: हविष्मतो मरुत: तव स्वभूता: संजाता: त्वदनुग्रहात्। "मरु-
तो" यस्य मीढुष:। "वन्दते गी:"। वदि अभिवादनस्तुत्यो:। स्तौति गी: वाक् स्तोतृणाम्॥४६॥
पत्नीं वाचयति (१)। "अक्रन्कर्म"। अनुष्टुप्। पत्नी ऋत्विजो ब्रवीति। य एते अक्रन् अकार्षु:
कृतवन्त: कर्म वारुणप्रघासम्, कर्मकृत: ऋत्विज:। "सहवाचा" मन्त्रेण। "मयोभूवा"।

अक्रुन्कर्म्मकर्म्मकृत॑:सुहव्वाचाम॑योभुवा॥ दे॒वेब्भ्य॒:कर्म्म॑कृ॒त्त्वा
स्तम्प्रे॑तंसचाभुव॒: ॥४७॥ अवं॑भृथनिचुम्पुण। निचे॒रुर॑सिनिचु॒म्पुण:॥

वाग्विशेषणमेतत्। मय इति सुखनाम। सुखेन या भावयति वाक् तामहं ब्रवीमि। "देवेभ्यो"
र्थाय "कर्मकृत्वा" अस्तं गृहान् "प्रेत" गच्छत मया सहिता:। हे "सचाभुव:"। सचासहे-
त्यर्थ:। सहभवनशीला ऋत्विज:॥ ४७॥ (१) "अवभृथनिचुम्पुण:"। अवभृथो यज्ञ: हे

(१) अक्रन्कर्मेत्येनां वाचयति। का० ५।५।१२॥ ४७॥
(१) मज्जयत्यवभृथेति। का० ५।५।२८॥

अवभृथ यज्ञ। अवाचीनं पात्राण्यस्मिन् भ्रियन्त इत्यवभृथः। "निचुम्पुण" (२) नीचैः क्वण। "उपांश्ववभृथेनेष्ट्वा चरन्तीति" श्रुतिः। यस्त्वं नीचैः क्वणोसि नीचैः क्वणनः तं त्वां प्रार्थ्येव "अवदेवैर्देवकृत "मेनो यासिषम्"। अवनीतवानहम्। किमवनीतवान्। एनः पापम् कैः सहिभूतैर्देवैः। किं विषयम्, "देवकृतम्"। देवविषये यत्कृतम्। "अवमर्त्यैर्मर्त्यकृतम्"। अवनीतवांश्च मर्त्यैर्मनुष्यैः ऋत्विग्भिः सहिभूतैः। "मर्त्यकृतम्"। मनुष्यविषये यत्कृतम्पापम्।

अवदेवैर्देवकृतमेनोयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देवरिषस्पाहि ॥४८॥ पूर्णादर्वि । पूर्णादर्व्वि परापत सुपूर्णा पुनरापत ॥

अतस्त्वं हे अवभृथ हे देव रिषः पाहि"। रिषतिर्हिंसार्थः क्विबन्तः। तस्य रक्षामीरिषः बन्धनात् पाहि गोपाय। कथं भूताद्बन्धनात्। "पुरुराव्णः"। रा दाने। बहुकर्मोपभोगसन्तानदातुः संसारलक्षणाद्बन्धनात्। यद्वा रुशब्दे। रुवन्ति शब्दं कुर्वन्ति प्राणिनोस्मिन् संसा-

(२) चुप मन्दायां गतौ, नितरां चोपति मन्दं गच्छति निचुम्पुणः। यद्वा नीचैः क्वणन्त्यस्मिन् वीणास्थूणाद्यपभृणोत्यादिना नीचैः शब्दोपपदात्क्वणतेः णक् प्रत्ययः ॥ ४८ ॥

यमाणाः स पुनरावाखसात्पुनरावृत्तः ॥ ४८ ॥ दर्व्योपहन्ति (१)। "पूर्णादर्वि"। हे ऐन्द्रा-वनुष्टुभौ। हे दर्वि अस्याः स्थालीतोऽन्नं गृहीत्वा पूर्णा सती "परा" इन्द्रं प्रति "पत" गच्छ। ततः कर्मफलेन शोभने "पूर्णा पुनरापत" पुनरागच्छ। एवं दर्वीमुक्त्वा इन्द्र-माह। "वस्नेवविक्रीणावहै"। वस्नशब्देन मूल्यमुच्यते। वस्ना इव मूल्येनेव आवामध्वर्यु-यजमानौ विक्रीणावहै। किं तद्विक्रेयं द्रव्यमित्यत आह। "इष" मन्नम्। ऊर्जमुपसेचनम्।

व॒स्नेव॑ वि॒क्री॑णावहा॒ऽइष॒मूर्जं॑ꣳशतक्रतो ॥ ४९ ॥ दे॒हि मे॑।

दे॒हि मे॒ ददा॑मि ते॒ नि मे॑ धे॒हि नि ते॑ दधे ॥ नि॒हारं॑ च॒ हरा॑सि मे नि॒हा

हे शतक्रतो बहुकर्मन् ॥ ४९ ॥ इन्द्र उच्यते (१)। "देहिमे" मह्यं प्रथमं तावत् ततो "ददा-मिते" तुभ्यं पश्चात्। "निमेधेहि" निधेहि मे मम प्रथमम् पश्चा"न्नितेदधे" निदधे ते तव। "निहारं च हरासि मे"। नितरां हरणं निहारः। अवश्यकर्त्तव्यमुच्यते। मूल्यमितिपर्यायः।

(१) स्थाल्याः दर्व्यादत्ते पूर्णादर्वीति। का० ५।६।३४। ॥ ४९ ॥

(१) देहि मे इति जुहोति। का० ५।६।३८। ॥ ५० ॥

स हरसि मे मम। अहमपि "निहारं निहराणिते" तव। प्रत्यग्रफलतां मन्त्रदृगाशास्ते ॥५०॥

आहवनीयमुपतिष्ठते (१)। "अक्षन्नमीमदन्ते"ति। द्वाभ्यामैन्द्रीभ्यां पङ्क्तिभ्यां पितृयज्ञे पितर उच्यन्ते। "अक्षन्" अदेर्लुङि घस्लादेशः। अदितवन्तः भुक्तवन्तः पितरः। कथं ज्ञायत इति चेत् "अमीमदन्त" हि मद तृप्तौ। हिशब्दो यस्मादर्थे। यस्मात्तृप्तास्तस्मादभुक्तवन्त इत्यनुमानम्। तृप्तिविशेषणुतराणि। "अपप्रियाः अधूषत"। अवाचीनमन्नविच्छिप्रियाः अन्नभक्तीः

र॒न्निह॑र॒।णि॒ते॒स्वाहा॑ ॥ ५० ॥ अक्ष॒न्नमी॑मदन्त । अक्ष॒न्नमी॑मदन्त॒ ह्यव॑प्रि॒याऽअ॑धूषत ॥ अस्तो॑षत॒ स्वभा॑नवो॒ विप्रा॒ नवि॑ष्ठया

रूपस्यत्य अधूषत। धूञ् कम्पने। धुनन्ति गात्राणि। किञ्च "अस्तोषत स्वभानवः"। प्रिया अन्नभक्तीरूपस्यत्य दातृन् स्तुवन्ति। अहोदत्तमहोदत्तं स्वाद्वन्नं बहु। "स्वभानवः स्वयं दीप्ताः अन्नविस्मयात्। "विप्राः" प्राप्तप्रज्ञाः मेधाविनः। "न विष्टयामती" नवतमया अपूर्वया मत्या स्तुवन्तीत्यनुवर्त्तते। एवं पितृनुपलभ्याथेन्द्रमाह। "योजान्नु"। क्षिप्रनाम। योज-

(१) यज्ञोपवीतिनः सर्वे निष्क्रम्योदङ्मुखोऽक्षन्नमीमदन्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्याम्। का० ५।८।२१। ॥ ५१ ॥

चास्मान् सर्वकर्मणामन्तं प्रापयेदित्यर्थः ॥ ५८ ॥ "भेषजमसि"। हे रुद्र यस्त्वं स्वभावत एव भेषजमौषधं भवसि सर्वप्राणिनाम् अतः प्रार्थ्यते देहि "भेषजम्। गवे अश्वाय पुरुषाय-भेषज" देहि। "सुख" देहि। सुहितं खेभ्यः प्राणेभ्यः इति सुखम्। "मेषाय मेष्यै च" ॥ ५९ ॥ "त्र्यम्बकम्" (१)। द्वावनुष्टुभौ। यं वयं त्र्यम्बकं "यजामहे" पूजयामः।

यात् ॥५८॥ भेषजमसि। भेषजङ्गवेऽश्वाय पुरुषायभेषजम् ॥ सुखम्मेषायम्मेष्यै ॥ ५९ ॥ त्र्यम्बकंयजामहे। सुगन्धिम्पुष्टिवर्द्धनम् ॥

"सुगन्धिम्"। 'गन्धस्येदुत्पूतौ'त्यादिना समासान्तः। पुष्टिवर्द्धनम्"। पोषस्य वर्द्धयितारम्। योऽस्मान् "उर्वारुकमिवबन्धनात्"। उर्वारुकः फलविशेषः स यथा पक्वः सुबन्धनाद्वियुज्यते एवं

(१) अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नाना, त्र्यम्बकमिति दैववच्चैतेनैव दक्षिणानाघ्नाना इति। का० ५।१०।१५-१६। यथा देवतासेवायां दक्षिणोरून् ताडयन्तस्त्रिः प्रदक्षिणं परियन्ति, एवमत्र पुरुषाः प्रथमेनैव त्र्यम्बकमन्त्रेणाग्निमप्रदक्षिणत्रयेण प्रदक्षिणत्रयेण च परियन्तीति सूत्रार्थः। कुमार्यस्त्वोत्तरेणेति। का० ५।१०।१७ ॥ ६० ॥

मित्र मनोगतमासीदत आह्वयते। केनाह्वयामः। "नाराशꣳसेनस्तोमेन" येन नराः प्रशस्यन्ते दीर्घायुषः पुत्रवन्तो धनवन्तो भूयासुरित्यादिभिर्गुणैः स नाराशꣳसः स्तोमः स्तुतिः। "पितॄणां च मन्मभिः" मननीयैः स्तोमैर्मन आह्वयाम इत्यर्थः॥ ५३॥ "आनएतु"। आगच्छतु नोऽस्माकं "मनः पुनः"। किमर्थम् "क्रत्वे" क्रतवे। क्रतुः संकल्पः यज्ञो वा। "दक्षाय"। दक्षः संकल्पसमृद्धिः उत्साहो वा। "स यदेव मनसा कामयत इदं मेस्यादिदं कुर्वीयेति स

हेनाराशꣳसेनुस्तोमेन। पितृणाञ्चमन्मभिः॥ ५३॥ आनः।

आनंऽएतुमनःपुनःक्रत्वेदक्षायजीवसे॥ ज्योक्चसूर्यन्दृशे॥५४॥

पुनर्नःपितरोमनोददातुदैव्योजनः॥जीवंव्रातꣳसचेमहि॥५५॥

एव क्रतुरथ यदास्मैतत्समृध्यते स दक्ष" इति श्रुतिः। "जीवसे" जीवनाय। "ज्योक् चसूर्यंदृशे"। ज्योक् निपातश्चिरवचनः चिरं सूर्यं दृशे द्रष्टुम्॥ ५४॥ "पुनर्नः पितरः"। हे पितरः पुनरस्माकं "मनः ददातु दैव्योजनः" देवसंबन्धी जनः। ततस्तेन देवजनदत्तेन मनसा जीवं जीवनवन्तम् "व्रात" गणम् पुत्रपश्वादिकम् "सचेमहि"। षच परिष्वङ्गे। परिष्वजे-

शु० य० सं० ७० उ० भा०

मूषिका "ते" तव पशुः ॥ ५७ ॥ आगत्य जपति (१)। "अवरुद्रम्"। द्वे पङ्क्तिककुभौ। अवयुत्य पृथक् कृत्वान्याभ्यो देवताभ्यो रुद्रम् अदीमहि। अद भक्षणे छान्दसो णिचो लोपः। रुद्रमादयामः। भोजयामः। "अव" गत्य च तं ज्ञात्वा देवं "त्र्यम्बकम्"। तथाच भोजयामः यथा नोवस्यसस्करत्" येन प्रकारेणास्मान्वसीयसः कुर्यात्। वस निवासे तृच्य

आखुस्तेपशुः ॥ ५७ ॥ अवरुद्रम् । अवरुद्रमदीमह्यवदेवन्त्र्यम्बकम् यथानोव्वस्यसस्करद्यथानःश्श्रेयसस्करद्यथानोव्व्यवसाय

तृजन्तस्य वस्तेतिभवति। ततस्तु छन्दसीति इयसुनि कृते वसीयस इति भवति तत इकारलोपे वस्यस इति भवति। वस्तृतरानिति पर्यायः। वसनशीलानित्यर्थः। तथाचास्मान् "श्रेयसः" प्रशस्यतरान् कुर्य्यात् यथा चास्मान् "व्यवसाययात्"। विपूर्वस्यावपूर्वस्य च षोन्तकर्मणोत्यस्य णयन्तस्य आशिषि लुङि सार्वधातुके यासुटि व्यवसाययादित्येतद्रूपं भवति। यथा

एवस्मातिरिक्तं पुरोडाशनं जुहुयात्तिन्त्वाखूत्करे विनिक्षिपेत् ॥ ५७ ॥

(१) आगत्यावरुद्रमदीमहीति जपति। का० ५।१०।१४ ॥ ५८ ॥

३ अ०

चास्मान् सर्वकर्मणामन्तं प्रापयेदित्यर्थः ॥ ५८ ॥ "भेषजमसि"। हे रुद्र यस्त्वं स्वभावत एव भेषजमौषधं भवसि सर्वप्राणिनाम् अतः प्रार्थ्यते देहि "भेषजम्। गवे अश्वाय पुरुषाय-भेषज" देहि। "सुख" देहि। सुहितं खेभ्यः प्राणेभ्यः इति सुखम्। "मेषाय मेष्यै च" ॥ ५९ ॥ "त्र्यम्बकम्" (१)। द्वावनुष्टुभौ। यं वयं त्र्यम्बकं "यजामहे" पूजयामः।

यात् ॥५८॥ भेषजमसि। भेषजङ्गवेऽश्वाय पुरुषाय भेषजम्॥ सुख म्मेषाय मेष्यै ॥ ५९ ॥ त्र्यम्बकं यजामहे। सुगन्धिम्पुष्टिवर्द्धनम्॥

"सुगन्धिम्"। "गन्धस्येदुत्पूती"त्यादिना समासान्तः। पुष्टिवर्द्धनम्"। पोषस्य वर्द्धयितारम्। योऽस्मान् "उर्वारुकमिवबन्धनात्"। उर्वारुकः फलविशेषः स यथा पक्वः सुबन्धनाद्वियुज्यते एवं

(१) अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नाना, त्र्यम्बकमिति दैववद्दक्षिणानाघ्नाना इति। का० ५।१०।१५-१६। यथा देवतासेवायां दक्षिणोरून् ताडयन्तस्त्रिः प्रदक्षिणं परियन्ति, एवमत्र पुरुषाः प्रथमैनैव त्र्यम्बकम-न्त्रेणाजिमप्रदक्षिणत्रयेण प्रदक्षिणत्रयेण च परियन्तीति सूत्रार्थः। कुमार्यसीत्तरेणेति। का० ५।१०।१७॥ ६०॥

"मृत्योर्मुक्षीय" मोचय मोचयतु। पुरुषव्यत्ययश्छान्दसः। "मामृतात्"। मा कदाचित् अमृतात् मोचयतु। अग्निं त्रिः परियन्त्यनेन मन्त्रेण। कुमार्यश्चोत्तरेण परियन्ति। यं "त्र्यम्बकं यजामहे शोभनगन्धम्। "पतिवेदनम्" भर्तृलम्भयितारम्। "उर्वारुकमिव बन्धनात्" "इतोमुक्षीय"। ज्ञातिवर्गान्मोचयतु। "मामुतः"। पतिवर्गान्मोचयतु। "सा यदित इत्याह

**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥ त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्॥ उर्वारुकमिव बन्धनादितो मुक्षीय मा-**

ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाहेति" श्रुतिः॥ ६०॥ त्र्यम्बकानासजति (१)। "एत-

(१) मूतयोः कृत्वा वेणुयष्ट्यां वा कुपेवासज्योभयतः स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासजत्ये तत इतीति। का० ५।१०।२१। व्रीहियवादीत् बध्वा वहनार्थं त्वपावंशादिनिर्मितः पात्रविशेषो मूतमित्युच्यते। तयो-भयोर्मूतयोस्त्र्यम्बकात् हविःशेषात् प्रक्षिप्य स्वकीयेनांसेन वोढुं शाखायां वंशयष्ट्यामग्रद्वये तन्मूतद्वयमवासज्योन्नते स्थाणौ वृक्षे वंशे वल्मीके वा मूतद्वययुतां वंशयष्टिं संसृजति ततो गोभिराघ्रातुमशक्यत्वान्नानो रोगं न प्राप्नुवन्ती-त्यर्थः॥ ६१॥

त्तेरुद्र"। एतत् ते तव रुद्र "रुद्र अवसम्" पथ्यदानं शं बलम्। तेन पथ्यदानेन "पर:" परस्तात्, मूजवान्नामपर्वतः भगवतो रुद्रस्य वसतिः ताम् "अतीहि" गच्छ। कथं भूतो गच्छ। "अवततधन्वा" अवतारितधनुः। "पिनाकावसः"। पिनाको रुद्राङ्कुशः रुद्राङ्कुशकृतकुशलः। "कृत्तिवासाः" चर्मवसनः। "अहिंसन्नः"। अविनाशयन्नः अस्मान् "शिवः" शान्तो भूत्वा

सुतं॑ ॥ ६० ॥ एतत्ते॑ । रुद्रावसन्ते॑न पुरो मूजंवतोती॑हि ॥ अव॑त-
तधन्वा पिना॑कावसः कृत्ति॑वासाऽअहिं॑सन्नः शिवोती॑हि ॥ ६१ ॥
त्र्यायुषं॑ जमदंग्नेः कश्यपंस्य त्र्यायुषम् ॥ यद्दे॒वेषु॑ त्र्यायुषन्तन्नो॑ऽ

"अतीहि" पूजितं गच्छ ॥ ६१ ॥ यजमानो मुखं स्पृशमानो जपति (१)। त्र्यायुषम्। उष्णिक्। लिङ्गोक्ता देवता। त्रीण्यायूंषि समाहृतानि त्र्यायुषम् बाल्ययौवनस्थविराणि त्र्यायुषम्। "जमदग्नेः" त्र्यायुषम् यच्च "कश्यपस्य" यच्च "देवेषु तन्नो अस्तु"। तदस्माकमस्तु भवतु त्र्यायुषमि-

(१) त्र्यायुषमिति यजमानो जपति। का० ५।२।१६ ॥ ६२ ॥

त्वायोः ॥ ६२ ॥ लोहक्षुरमादत्ते (१) । "शिवोनामासि" । हे क्षुर यतः त्वं शान्तनामासि । यस्य च तव "स्वधितिः पिता" स्वधिः वज्रः । तस्मै "नमः ते" तुभ्यं भवतु । "मामाहिꣳसीः" माविनाशय । वपति । "निवर्तयामि" निपूर्वो वपतिरिह मुण्डनार्थः । मुण्डयामि त्वाम् ।

अस्तु त्र्यायुषम् ॥ ६२ ॥ शिवोनाम॑ । शिवोनामा॑सि स्वधि॑तिस्ते पिता नम॑स्तेऽअस्तु मामा॑हिꣳसीः ॥ निव॑र्त्त॑याम्यायु॑षेऽन्नाद्या॑य प्रज॑ननाय रायस्पोषा॑य सुप्रजास्त्वाय॑ सुवीर्याय ॥ ६३ ॥ इति संहितायां तृतीयोऽध्यायः ॥ ३ ॥ हरिः ॐम् ॥

आयुरर्थम् । अन्नाद्यर्थम्, धनस्य पोषार्थम् शोभनापत्यतायै । शोभनवीर्याय च ॥ ६३ ॥ इति उवटकृतौ मन्त्रभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

(१) शिवो नामेति लोहक्षुरमादाय, निर्वर्त्तयामीति वपति । का० ५।२।१८-१८ ॥ ६२ ॥

भारद्वाजोपनाम्ना श्रीगोविन्दविदुषा कृते ॥ तृतीयोयं गतोऽध्यायो मन्त्रभाष्यस्य टिप्पणे ।

ओँम् (१) "एदमगन्म"। आग्निष्टोमिका मन्त्राः अवभृथपर्यन्ताः। प्रजापतेरार्षम्। द्वे अर्धे ते ऋचौ अत्यष्टी अवसाने। शालस्तम्भमन्वारभ्य यजमानो जपति। द्वावर्धर्चौ देवयजनदेवत्यौ। आद्यः "एदम्" देवयजनम् "अगन्म" वयम् आगताः स्मः। "पृथिव्या" उत्कृष्टम्। "यत्र" यस्मिन्देवयजने "देवासः" देवा एव देवासः। 'आज्जसेरसुक्'। "अजुषन्त"। जुषी प्रीतिसेवनयोः। सेवितवन्तः कामान्। "विश्वे" सर्वे तमागत्य देवयजनम्। "ऋक्सामाभ्यां" स्तवभूताभ्यां

ओँम्*एदम्।एदमंगन्मदेवयजंनम्पृथिव्यायत्र देवासोऽअजुषन्तविश्वे॥ ऋक्सामाभ्यांᳪसन्तरंन्तोयजुर्भी रायस्पोषेणसमि-

यज्ञसमुद्रं "सन्तरन्तः यजुर्भिश्च रायस्पोषेण" धनस्य पुष्ट्या निमित्तभूतया "इषा" अन्नेन

ॐ नमो वेदपुरुषाय श्रीगुरवे। तृतीयेऽध्याये आधानाग्निहोत्राग्न्युपस्थानचातुर्मास्यमन्त्रा उक्ता इदानीं तुरीयाध्यायत आरभ्याष्टमस्य द्वात्रिंशत्कण्डिकापर्यन्तमग्निष्टोममन्त्रा उच्यन्ते तत्र यजमाने संस्कारपूर्वकं सोमक्रयमन्त्राः प्राधान्ये

---

* एदं द्वे महीनां पयस्त्वतस्र, आकूत्या ऋक्सामयोर्द्विकौ, व्रतं कृणुतषट्, एषते चतस्रो वस्व्यस्तितिस्र, एषते द्वे, युञ्जा त्वा चतस्रो, दित्यास्त्वगष्टौ इमच्छतलिंगत् १० ॥ अ० क्र० ॥

च समदेम व्यधेमहि तुध्येमहि ॥ उन्दति (२)। "इमा आपः शमु मे सन्तु देवीः"। शमिति सुखनाम। उ इति पादपूरणे। इमा आपः सुखरूपा मम भवन्तु। देव्यो दानादिगुणयुक्ताः। यागे वज्रस्तुतौ वज्रसंस्तवोऽतः शमाशास्यते। कुशतरुणमन्तर्दधाति। "ओषधे त्रायस्व"। त्रायतिः पालनार्थः। हे ओषधे पालय एनं यजमानं क्षुरात्। क्षुरस्यापि वज्रसंबन्धः। क्षुरेणाभिनिदधाति (३)। "स्वधिते मैनर्ठ० हिर्ठसीः"। स्वधितिर्वज्रः। वज्रकर्म कुर्वन्नवज्रोपि वज्रमुच्यते।

## षामदेम ॥ इमाऽआपुःशमुमेसन्तुदेवीरोषधेत्रायस्वस्वधितेमैनर्ठं

हे स्वधिते मा एनं हिंसीः ॥ १ ॥ स्नाति (१)। "आपो अस्मान्मातरः शुन्धयन्तु"। आप मातराध्याये उच्यन्ते। तदादौ यजमानो स्नात्वा योऽङ्गस्त्विजोऽग्नीनरणीः समारोप्य शालांगच्छेत्। समारोप्याग्नीन् शालास्तम्भपूर्वार्धं स्तीलाऽरणिपाणिराहैदमगन्मेति। का० ८।१।२६ ॥ (२) दक्षिणं गोदानं वितार्यां नत्ति आप इति। का० ८।२।९ ॥ (३) यूपवत्तु मतरुणं क्षुरेण चाभिनिधाय छिनत्ति। का० ८।२।११ ॥ पञ्चर्त्वयूपस्य यथा छेदे मन्त्र एवमत्रापि तृणान्तर्धानं क्षुरस्थापनं च मन्त्रद्वयेन कर्तव्यमिति सूत्रार्थः ॥ १ ॥

(१) शापोऽस्मानिति स्नात्वा, उदङ्मुखः इतुरस्तावत्पुत्तरपूर्वार्धं, क्षौमं वस्ते निष्टेष्टे वै ब्रूयादहतं चेदङ्गिदध्युत्स

उच्यन्ते। या एता आपः जगतो निर्मात्र्यः ता अस्मान् शुन्धयन्तु शोधयन्तु। किञ्च "घृतेन" च "नः" अस्मान् "घृतप्वः"। घृतेन पुनन्तीति घृतप्वः। घृतं हि अपां परमं तेजः पवित्रं च। "तद्वै सुपूतं यं घृतेन पुनन्तीति श्रुतिः। 'सुवर्णप्राशो घृतप्राश इति मेध्यानी'ति गौतमः। पुनन्तु यज्ञयोग्यं कुर्वन्तु। स्तुतिपूर्वं हि याच्ञाक्रियते नचास्तुतिरत आह। "विश्वं हि रिप्रं प्रवहन्तिदेवीः"। हि शब्दो यस्मादर्थे। रयो रिपमिति पापनाम्नी भवतः। यस्मात्तु-

हिᳬसीः ॥ १ ॥ आपोऽअस्मान्। आपोऽअस्मान्मातरः शुन्धयन्तु घृतेनं नो घृतप्वः पुनन्तु ॥ विश्वᳬ हि रिप्रम्प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतऽएमि ॥ दीक्षातपसोस्तनूरसि तान्त्वा शि-

भावत एव सर्वं पापं प्रकर्षेण दहन्ति। देव्यः। उत्क्रामतुत्तरपूर्वाद्दिशम्। "उदिदाभ्यः शुचि-रापूतएमि"। उदेमि उद्गच्छामि। इत् शब्दोनर्थकः। आभ्योद्भ्यः शुचिः सन् आपूतश्च। याव-त्पापं पावितः। वासःपरिधत्ते। "दीक्षातपसोः"। दीक्षा एव दीक्षा। तपः शब्देन उप-स्नानवस्त्रं वासौवधौतं निश्चितकेयं दीक्षातपसोरिति। का॰ ७।२।१४।१९ ॥ २ ॥

शु० य० सं० ७४ उ० भा०

सद् उच्यन्ते तपःप्रधानत्वात्। तन्वाख्यायाः वाचः तनूशब्देनोच्यते। या त्वं दीक्षातपसोस्तनूः शरीरं भवसि "तां त्वाशिवां" शान्ताम् "शग्मां" सुसुखां साध्वीं वास्तुतः। परिदधे आच्छादयामि। "भद्रं" कल्याणम्। "वर्णं" दीक्षितरूपम् "पुष्यन्" वर्द्धयन्। अनेन हि दीक्षित रूपमभिव्यज्यते॥ २॥ तमभ्यनक्ति (१)। नवनीतमुच्यते। "महीनांपयोसि"। पयोविकारे

वा॒तꣳ शग्मा॒म्परि॑दधे भ॒द्रं वर्ण॒म्पुष्य॑न्॥ २॥ म॒हीना॒म्पयः॑।
म॒हीना॒म्पयो॑सि॒ वर्चो॒दा॑ऽअ॑सि॒ वर्चो॑ मे देहि॥ वृ॒त्रस्या॑सि क॒नीन॑

नवनीते पयःशब्दः। महीनां गवां पयोसि। यतस्त्वं "वर्चोदाअसि"। वर्चस्तेज इत्यनर्थान्तरम्। अतो "वर्चोमें देहि"। अक्षिणी अनक्ति। "वृत्रस्यासि"। "यत्र वा इन्द्रो वृत्रमहं स्तस्य यदक्ष्यासी"दित्यादिना त्रैककुदस्य चक्षुः संस्तवस्तदयं मन्त्रोभिवदति(२)। वृत्रस्य चक्षुषः संबन्धिनी

(१) शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुश्येषु नवनीतेन शीर्षेऽध्यनुलोमं सपादको महीनां पयोसीति। वृत्रस्य त्वचावनक्ति त्रैककुदाञ्जनेनाभावेन्यदिति। का० ७।२।२३-२४॥ (२) तथाच तित्तिरिः इन्द्रो वृत्रमहन् तस्य कनीनिका परापतत्तदेवाञ्जनमभवदिति॥ २॥

४ अ० त्रिपा० ७४

भवसि त्वम्। कनीनकः पुरुषो यतः "नीलैककुद्" यतश्च स्वभावत "स्वचक्षुर्दा" असि अतः चक्षुर्मे देहि ॥ ३ ॥ कुशपवित्रैः पावयति (१)। "चित्पतिर्मा पुनातु"। चिती संज्ञाने। अस्य चित्। विज्ञानात्मा मनो वाभिधीयते। चित्पतिर्मा पुनातु। "प्रजापतिर्वै चित्पति रिति" श्रुतिः। "वाक्पतिः"। "प्रजापतिर्वै वाक्पति"रिति श्रुतिः। "देवो मासविता पुनातु"।

कश्यस्य चक्षुर्दाऽअसि चक्षुर्म्मे देहि ॥ ३ ॥ चित्पतिर्म्मा। चित्पतिर्म्मा पुनातु वाक्पतिर्म्मा पुनातु देवो मासविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छ-

अच्छिद्रेणेति व्याख्यातम्। "तस्य ते पवित्रपते"। तस्य पवित्रपूतस्येति च षष्ठ्यन्तयोः संबन्धः। यजमानवाचित्त्वं च। तस्य मम पवित्रपूतस्य सतः। ते तव प्रसवे वर्त्तमानस्य हे पवित्रपते देव सवितः एतद्भवतु "यत्कामः" अहमात्मानं "पुने" पावयामि। "तच्छकेयम्" तच्छक्नुयाम्। "यज्ञस्योदृचं गच्छामि" श्रुतिः। अच्छिद्रेणेत्येवमादित्रयाणामनुषङ्गो योज्यः ॥४॥ "आवो देवा

(१) कुशपवित्रैः चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्रेति। का० ७।२।१ ॥४॥

स" इति वाचयति (१)। दैवी अनुष्टुप्। ईमहे इति याच्ञाकर्मसु पठितम्। हे देवासः आ "ईमहे" आयाचे "वो" युष्मान्। किम्। "वासम्" वन षन संभक्तौ। वननीयं संभजनीयं वस्तु। "प्रयत्यध्वरे(२)" प्रगच्छति यज्ञे। किञ्च। हे "देवासः आह्वयामहे"। आह्वयामः "वः" युष्माकं संबन्धिन्य "आशिषः यज्ञियासः" यज्ञसंपादिन्यः। दक्षिणा एव यज्ञियासः। आईमहे आयाचे वः॥ ५॥ अथ अङ्गुलीर्न्यचते (१)। "स्वाहायज्ञं मनसः"।

केयम्॥४॥ आर्बं। आवोदेवासऽईमहेव्वामम्प्रयत्यध्वरे॥ आवो देवासऽआशिषोयज्ञियासोहवामहे॥५॥ स्वाहायज्ञम्। स्वाहायज्ञं

यज्ञं मनसः सकाशादहमारभे इत्यनुषङ्गः। "उरोविस्तीर्णादन्तरिक्षादहमारभे यज्ञं,

(१) ७।३।६॥ (२) प्रयति प्रैतीति प्रयन् प्रपूर्वादिणः शतरि रूपम्॥ ५॥

(१) स्वाहा यज्ञमित्यङ्गुलीर्न्यचते भानाहस्तयोरेवं मेषं प्रतिमन्त्रं मुष्टीकृत्वा स्वाहेत्युक्त्वा वागप्रतोऽङ्गुष्ठौ तत्सहितौ चोत्सृजतीति। का० ७।३।७-१०। आद्यमन्त्रेण हस्तद्वयकनिष्ठिकाद्वयं संकोचयति एवमन्यत्रयेणान्याः, स्वाहावाता द्वारभ्यद्वत्युत्तमेन मुष्टिद्वयं कुर्यादिति सूत्रार्थः॥ ६॥

द्यावापृथिवीभ्यां महमारभे यज्ञम्। "वातादहमारभे यज्ञम्"। पञ्च स्वाहाकारा येषु यज्ञेषु तदर्थवादः। "यज्ञो वै स्वाहाकारो यज्ञमेवैतदालभं धत्त" इति। स्वाहाकारेण हि हविः प्रदीयत इति स्वाहाकारो यज्ञः॥ ६॥ औद्ग्रभणानि जुहोति (१)। "आकूत्यैप्रयुजे"। आकुवनमाकूतिः प्रयत्नः आत्मनो धर्मः। मनसः प्रेरणाय भवति। प्रयुङ्क्त इति "प्रयुक्"

मन॑सः॒ स्वाहो॒रोर॒न्तरि॑क्षात्स्वाहा॒ द्यावा॑पृथि॒वीभ्या॒ᳪ स्वाहा॒ वाता॒दार॑भे॒ स्वाहा॑॥ ६॥ आकू॑त्यै प्र॒युजे॑। आकू॑त्यै प्र॒युजे॒ऽग्नये॒ स्वाहा॑ मे॒धायै॒ मन॑से॒ऽग्नये॒ स्वाहा॑ दी॒क्षायै॒ तप॑से॒ऽग्नये॒ स्वाहा॒ सर॑-

आकूतलक्षणाय प्रयोगलक्षणाय च "अग्नयेस्वाहा" सुहुतमस्तु। "मेधायैमनसे" मेधालक्षणाय मनोलक्षणाय च अग्नयेस्वाहा। जपति "दीक्षायै तपसे"। दीक्षालक्षणाय तपोलक्षणाय च अग्नये स्वाहा। तपःशब्देन चोपसद उच्यन्ते। "सरस्वत्यैपूष्णे"। वाग्वै सरस्वती पशवो

(१) औद्ग्रभणानि जुहोति स्रुवेणाकूत्या इति प्रतिमन्त्रमिति। का० ७।७।९॥ २॥

वै पूषा इति श्रुतिः। वाग्लक्षणाय पशुलक्षणाय च अग्नये स्वाहा। पशुसाध्यत्वाद्यज्ञस्य पशुग्रहणम्। "आपोदेवीः" विराट् लिङ्गोक्ता देवता। हे आपो देव्यः "बृहत्यो" महत्यः। विश्वशंभुवः सर्वस्य जगतः सुखेन भावयित्र्यः। हे "द्यावापृथिव्यौ" हे "उरो" हे विस्तीर्ण "अन्तरिक्ष युष्मभ्यं च बृहस्पतये च। "हविषाविधेम"। विदधातिर्दानकर्मा। हविषेति प्रथमाया

स्वत्यै पूष्णे ऽग्नये स्वाहा॥ आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावा पृथिवी ऽउरो ऽअन्तरिक्ष। बृहस्पतये हविषा विधेम स्वाहा॥७॥

विश्वो देवस्य। विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम्॥

विपरिणामः। हविर्दद्मः॥७॥ "विश्वोदेवस्य"। सावित्र्यनुष्टुप्। विश्वः सर्वो जनः देवस्य दानादिगुणयुक्तस्य "नेतुः" प्रणेतुः प्रसवितुः "मर्त्तः" मनुष्यः "वुरीत" वृणीत "सख्य" सखिताभावम्। किञ्च "विश्वः" सर्वः "राये" धनाय "इषुध्यते" प्रार्थयते सवितारम्। इषुध्यतिर्याच्ञाकर्मसु पठितः। किञ्च "द्युम्नं वृणीत"। द्युम्नं द्योततेर्यशो वाऽन्नं वा प्रार्थयते। "पुष्यसे"

पोषाय स्थितये। य इत्थंभूतः सविता तस्मै स्वाहा (१) ॥ ८ ॥ कृष्णाजिनयोः शुक्लकृष्णसंधिमा-
लभते (१)। "ऋक्सामयो"रिति। ये युवामृचां साम्नां च। "शिल्पेस्थः" "यद्वै प्रति-
रूपं तच्छिल्प"मिति श्रुतिः।(२)। प्रतिरूपे प्रतिभूते भवथः। "ते वां" युवाम्। "आरभे"
आलभे। "ते च मापात" गोपायतम्। "आ अस्य यज्ञस्य उदृचः"। उत्तमा ऋचः

व्विश्वो राय॑ऽइषुध्यति द्युम्नं वृ॑णीत पुष्यसे स्वाहा॑ ॥ ८ ॥ ऋक्सामयोः॑। ऋक्सामयोः॑ शिल्पे॑स्थस्ते वामार॑भे ते मा॑ पातमास्य

आसमाप्ते रित्यर्थः। दक्षिणजानुमारोहति। "शर्मासि"। कृष्णाजिनमुच्यते। शर्म शरणं
यतस्त्वमसि अतः शर्म शरणं "मे" मह्यं "यच्छ" प्रयच्छ। "नमस्ते अस्तु" नमस्तुभ्यं भवतु।

(१) समाप्ता औद्ग्रहणमन्त्राः ॥ ८ ॥

(१) कृष्णाजिनयोः सन्धिमालभते ऋक्सामयोरितीति। दक्षिणजानुमारोहति शर्मासीति। का० ७।३।२३-२४।

(२) ऋक्सामाभिमानिन्यौ देवते देवानां यज्ञार्थं स्थिते सत्यौ केनापि निमित्तेन कृष्णमृगरूपं कृत्वा देवेभ्यः पलाय्य दूरे-
कृत्वाप्यतिष्ठतां तस्मिन् मृगचर्मणि यच्छुक्लं तदृचो रूपं यत्कृष्णं तत्साम्नो रूपं, तदुक्तं तित्तिरिणा ऋक्सामे वै देवेभ्यो

"मामाहिꣳसीः" ॥ ९ ॥ मेखलां बध्नीते (१)। "ऊर्गसि"। अङ्गिरसामार्षमस्मिन्यजुषि। ऊर्गसि अन्नं भवसि। "आङ्गिरसी" अङ्गिरोभिर्दृष्टा। "ऊर्णम्रदाः"। ऊर्णेव मृद्वी। यतस्त्वमवस्त्रनैर्गुणैर्युक्तासि अत"ऊर्ज"मन्नं "मयिधेहि"स्थापय। नीवीं कुरुते। "सोमस्य नीविरसि"। पितृदेवत्या वै नीविरित्यदीक्षितस्योक्तम्। इह तु सोमयागार्था नीविः सोमेन व्यप-

युच्छस्योहृचंः॥ शर्म्मासि शर्म्म मेयच्छ नमस्तेऽअस्तु मामाहिꣳसीः॥९॥

ऊर्गस्याङ्गिरस्यूर्णम्म्रदाऽऊर्ज्जं मयि धेहि। सोमस्यनीविरसिविष्णोः शर्म्मासिशर्म्म यजमानस्ये न्द्रस्य योनिरसिसुसस्याः कृषी-

दिश्यते। शिरः प्रोर्णुते। "विष्णोः शर्मासि"। "उभयं वा एषोत्र भवति यो दीक्षिते

यज्ञार्थं तिष्ठमाने कृष्णमृगरूपं कृत्वापक्रम्य तिष्ठतामेषवा ऋचोवर्णौ यच्छुक्लं कृष्णाजिनमस्ये साम्नो यत्कृष्णमिति ॥८॥

(१) मेखमां बध्नीते वेणिं त्रिवृतं शणासुञ्जमिश्रमन्तरा वासस ऊर्गसीति, नीविं कुरुते सोमस्य नीविरिति, शिरः प्रोर्णु ते विष्णोः शर्मेति, कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते, तयाकण्डूयनमुपस्पृशत्यनेया दक्षिणस्याः स्रुवत्परीन्द्रस्य योनिरितीति, भूमौ चोल्लिखति सुसस्या इतीति, मुखसंमितमौदुम्बरं दण्डं प्रयच्छत्युच्छ्रयस्वेत्येन

विष्णुस्त्व यजमानस्येत्यादि" निदानम्। "विष्णो र्दीक्षितस्य शरणं भवसि शरणं च "यजमानस्य"। कृष्णविषाणां शिरसि बध्नीते। "इन्द्रस्य योनिः"। "देवाश्च वा असुराश्चेत्यादि" निदानम्। यथा इन्द्रस्य योनिर्जन्मस्थानं पूर्वं त्वमसि एवमिदानीं यजमानस्येतिदर्शनार्थोऽर्थवादः। भूमौ लिखति। "सुसस्याः कृषीस्कृधि"। कल्याणधान्याः कृषीः कृधि जनानां कुरु। दण्डमुच्छ्रयति। "उच्छ्रयस्व"। ऊर्द्ध्वो भव। हे "वनस्पते" ऊर्द्ध्वो भूत्वा मां पाहि

स्कृधि॥ उच्छ्रयस्व वनस्पतऽऊर्द्ध्वो मां पाह्यᳬहसऽआस्य यज्ञस्योदृचः॥ १०॥ व्रतङ्कृणुत। व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः।

गोपाय। "अंहसः पापात्। कियन्तं कालम्। "आसस्य यज्ञस्योदृचः"। आ अस्य यज्ञस्य समाप्तेः॥ १०॥ वाचं विसृजते (१)। "व्रतं कृणुत"। व्रतशब्देन पयोऽभिधीयते। मम

मुच्छ्रयतीति। का॰ ७।३।२६-२२। (२) पुराकदाचिद्यज्ञपुरुषो दक्षिणां देवीं सम्भवत्तस्मादिन्द्रोऽजायत तदानीं मत्तोऽन्यस्योत्पत्तिर्माभूदिति विचार्येन्द्रः स्वां योनिं दक्षिणाया आच्छिद्य मृगेषु न्यदधात् निहिता सा योनिः कृष्णविषाणाभूदिति तित्तिरिश्रुतौ यज्ञो दक्षिणामभ्यध्यायदित्याख्याने कथा सा चात्रानुसंधेया॥ १०॥

(१) व्रतं कृणुतेति वाग्विसर्जनं विकल्पेति, अग्निर्ब्रह्मेति च सकृद्, दैवीं धियमिति व्रतायोपसर्जनं शासने, ये

क्षिप्रं भोजनार्थं पयः कुरुत। "अग्निः ब्रह्म" नयोलक्षणम्। "अग्निः यज्ञः" अग्निं प्रत्याख्याय यज्ञो न प्रवर्त्तत इत्याशयः। "वनस्पतिर्यज्ञियः"। "न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युरिति" श्रुतिः। "देवीं धियम्"। शक्वरी अतिशक्वरी वा। असत्यास्य पूर्णेनार्द्धर्चेन व्रतायोपसृशति(२)"दैवीं धियं मनामहे"। मनामहे इति याच्ञाकर्मसु पठितम्। देवसंबन्धिनीं धियं याचामहे। "सुमृडीकाम्"। मृडसुखने। सुसुखाम्। "अभिष्टये"। अभिपूर्वस्य यजतेरादिलोपः

ज्ञोव्वनुस्पतिर्य्यज्ञियः ॥ दैवीन्धियम्मनामहेसुमृडीकाम्भिष्टये व्वर्च्चोधाठसुत्त्ववाहसठंसुतीर्त्थानोऽअसद्वशे ॥ येदेवामनोजाता

अभिइष्टिः अभियागाय। अथवा अभिपूर्वस्य सिञ्चतेः अभिष्टिः। "अभिषेकाय" प्रज्ञादेवा इति व्रतयत्यमन्त्रये इति। का० ७।४।१५-१६-२२-२३। मौनोपस्थितस्य यजमानस्यैतन्मन्त्रोच्चारणं वाग्विसर्जनसाधनम्। वाक्यावृत्तिरादरार्था। (२) पूर्वार्धेनाचामतीत्यर्थः। (३) रूपादिदर्शनकाले मनसा युक्ताः, अन्यमनस्कस्य रूपादिप्रतिभासाभावात् ॥ ११ ॥

त्वनाय। "वर्चोधाम्" ब्रह्मवर्चसो धारयित्रीम्। "यज्ञवाहसम्" यज्ञस्य वोढ्रीम्। सा च "सुतीर्थानोऽसत्"। यज्ञं प्रति शोभनावतारा अस्माकं भवतु। "वशे"। वश्या भवतु। व्रतं व्रतयति। "ये देवाः"। अत्राग्निहोत्रसंपदं यजमानः करोति। ये मयि प्राणेषु देवाः "मनोजाताः" मनसो जाताः। मनः पूर्विका हि तेषां प्रवृत्तिः। "मनोयुजः"। मनसा युज्यन्ते स्वभावस्थायामिति मनोयुजः। "दक्षक्रतवः"। क्रतुः संकल्पः। तस्यैव समृद्धिर्दक्षक्रतुशरीरा।

मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥११॥ श्वात्राः पीताः ॥ श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे-

वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वेदेवाः" य एते अध्यात्मश्रुतौ पठ्यन्ते त इहोच्यन्ते। "ते नः" अस्मान् "अवन्तु" ते अस्मान् पान्तु पालयन्तु "तेभ्य"स्य स्वाहा सुहुत-मस्तु। सुहुतमेतद्धविर्भवतु ॥ ११ ॥ "श्वात्राः पीता" (१)। जगत्याब्दैवत्यया नाभिमुपस्पृ-शति। हे आपः "यूय" श्वात्राः। श्वात्रमिति क्षिप्रनाम। क्षिप्रपरिणामाः। "पीता भवत"

(१) श्वात्राः पीता इति नाभिमालभते। का० ७।४।३५। (२) महीधरपादास्तु, हे आपः यूयं देव्योद्योतमानाः

ऋ० य० सं० ७९ छ० आ०

"अस्माकमन्त"मध्ये। पुनरपि शिनष्टि "उदरेविशेवाः"। शेवद्दति सुखनाम। सुसुखाः। "ता अस्मभ्यम् अयक्ष्माःअनमीवा अनागसः"। आगइत्यपराधनाम। अनपराधाः। "स्वदन्तुदेवीः"। स्वदस्वर्द आस्वादने। देवीरिति निःसंशयं द्वितीयान्तम्। एतत्पदसामानाधिकरण्यात्तु ता इत्येतदादीन्यपि द्वितीयान्तान्येव। ता युष्मान् अस्मभ्यम् अस्मदर्थम् अयक्ष्माः सतीः। यक्ष्मा व्याधिराजः। तद्रहिताः "अनमीवाः" अमीवा व्याधिरेव आदरार्थं तु यक्ष्मग्रहणम्। "अना-

सुशेवाः॥ ताऽअस्मभ्यमयक्ष्माऽअनमीवाऽअनागसःस्वदन्तु देवीरमृताऽऋतावृधः॥ १२॥ इयन्ते। यज्ञियातनूरपोमुञ्चा

गसः" अनपराधाः सतीः। आग इत्यपराधनाम। स्वदन्तु। स्वदस्वर्द आस्वादने। आस्वादयन्तु। कस्मादेवम्, "अमृताः" प्राणाः वागेवाग्निरित्यादयः। "ऋतावृधः" सत्यवृधः यज्ञवृधो वा (२) ॥१२॥

प्रबलरोगरहिताः सामान्यरोगरहिता अपराधहारिण्यो यज्ञवृद्धिहेतवो मरणनिवर्तका अस्मदुपकारार्थं स्वदन्तः स्वादयतः लाभवन्तः इति प्रथमान्तमपि स्वीकुर्वन्ति। ऋतावृधइत्यत्र दीर्घं आर्षः ऋतं यज्ञः॥ १२॥

सेञ्चन् "लोष्टं किंचिद्दादत्ते (१)। इयं "ते यज्ञिया स्तनूः"। पृथिव्यभिधीयते। इयम् तव यज्ञार्हतनूः तामादद इति शेषः। मेहति। "आपोमुञ्चामि"। अपो मूत्रं मुञ्चामि त्यजामि न तु प्रजाम्। उभयं वा। अत एवापस्वरितञ्च स एतदाप एव मुञ्चति न प्रजाम्। "अꣳहो-मुचः"। अꣳहः पापमसुखं तस्मात्पुरुषं मुचन्ति पृथक्कुर्वन्तीत्यꣳहोमुचः। हे मूत्राख्या आपः

सि नप्र जाम्॥ अꣳहोमुचः स्वाहाकृताः पृथिवीमाविंशतपृथिव्या सम्भव॥ १३॥ अग्ने त्वम्। अग्ने त्वꣳसुजागृहि वयꣳसुमन्दि

यूयम् अꣳहोमुचः ताः "स्वाहाकृताः" सुष्टु त्यक्ताः "पृथिवीम् आविशत" प्रविशत। आत्तं निदधाति (२)। "पृथिव्या संभव। भूम्या सह एकीभव॥ १३॥ स्वपिति। (१) "अग्ने-त्वम्"। अनुष्टुबाग्नेयी। हे अग्ने त्वं "सुजागृहि"। साधु जागृहि। "वयꣳ सुमन्दिषी

(१) मेच्छन् कृष्णविषाणया लोष्टं किंचिद्दादत्ते इयं त इति, आपो मुञ्चामीति मेहति, पृथिव्या संभवत्यात्तं निदधा-तीति। का० ७।४।३६-३८। (२) आत्तं गृहीतं लोष्टादिकं मूत्रस्थाने क्षिपतीत्यर्थः॥ १२॥

महि"। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। वयं स्वप्स्यामः। मन्दतिः स्वप्नार्थः। किञ्च "रक्षन:" अस्मान् "अप्रयुच्छन्"। युच्छप्रमादे। किञ्च "प्रबुधे: प्रबोधाय "नः" अस्मान् "पुन:" कृधि" कुरु (२)॥ १४॥ विबुद्धमस्वपन्तं पुनर्मन इति वाचयति। "पुनर्मन:"। मे मम

# षीमहि ॥ रक्षाणोऽअप्रयुच्छन्प्रबुधे न पुनस्कृधि ॥१४॥ पुनर्मनः। पुनर्मनः पुनरायुर्म्मऽआगन्पुनः प्राणः पुनरात्मा ऽआगन्पुनश्चक्षुः पुनः श्रोत्रम्म ऽआगन्। वैश्वानरोऽअ

मनः आगन् आगतम्। "पुनरायु" जीवितं मम आगमत्। "पुन: प्राणो" समागतः। मुख नासिकासंचारीवायुः प्राणः। "पुनः श्रोत्र" मम आगतम्। "सर्वे ह वा एते स्वपतोपक्राम-न्तीति" श्रुतिः। किञ्च "अग्निर्वैश्वानरो" "अदब्धः" अनुपहिंसितः "तनूपाः" शरीरस्य गोपायिता

(१) अग्ने त्वमित्यस्ता स्वपित्यथः प्राङ् दक्षिणात इति। का० ७।४।२५। (२) स्वपतोऽग्नेः प्रार्थनं रक्षसां नाशाय, तदुक्तं तित्तिरिणा - अग्निमेवाधिप कृत्वा स्वपिति रक्षसामपहत्यै इति॥ १४॥

"नः" अस्मान् "पातु" रक्षतु "दुरितात्" अशुभात् "अवद्यात्" अवदनीयात् (२) ॥ १५ ॥
अथात्र व्याहृत्य जपति (१)। "त्वमग्ने"। आग्नेयी गायत्री। हे अग्ने त्वं व्रतस्य पाल-
यिता भवसि। "देव आमर्त्येष्वा"। आकारौ समुच्चयार्थीयौ। देव "आ" त्वं च मर्त्येषु मनुष्येषु
च "व्रतपा" इति शेषः। त्वं च यज्ञेष्वीड्यः। सत्कारपूर्वो व्यापारोऽध्येषणा। ईडिरध्येषणकर्मा वा
पूजाकर्मा वा। अथेर्याषितव्यः याचितव्यः। त्वमतो व्रतं पाहीतिशेषः। लब्धमालभ्य वाच-

दब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् ॥१५॥ त्वमग्ने।
व्रतपा असि देव आ मर्त्येष्वा ॥ त्वं यज्ञेष्वीड्यः। रास्वे-

यति (२)। "रास्वेयत्"। सोम उच्यते। "रास्व"। रा दाने देहि। इयदिति लब्धद्रव्यपरि-
माणवचनम्। हे सोम। किञ्च "आभूयोभर" 'हृग्रहोर्भश्छन्दसी'ति हकारस्य भकारश्छा-

(१) ७।४।४०। का०। (२) अवद्यात् दुर्यशसो दुरितात् पात्विति वा योजना ॥ १५ ॥

(१) त्वमग्ने इत्याद्यृचं व्याहृत्य वा व्यवहृत्य, लब्धमालभ्य जपति रास्वे यदिति। का० ७।५।१२-१६। (२) ऋतौ प्राप्तं धनं स्पृष्ट्वा मन्त्रमिमं पठेदित्यर्थः ॥ १६ ॥

न्द्रस्:। आहर भूयो बहुतरम्। किञ्च "देवः सविता नः" अस्माभ्यम् "वसोर्दाता" धनस्य दाता "वस्वदात्" धनमदात् दत्तवान् पूर्वमेवेत्यभिप्रायः॥ १६॥ "एषाते" (१)। अनुष्टुभौ पूर्वार्द्धेर्नो हिरण्यदेवत्यः उत्तरो वाग्देवत्यः विनियोगोध्रौवाज्ये। आज्यं जुह्वां चतुः क्षिप्त्वा तत्र हिरण्यं निदधाति। आज्यमुच्यते। एषा हिरण्यलक्षणा ते तव हे शुक्राज्य तनुः शरीरम्। "समानजन्म वै पयश्च हिरण्यं चोभयᳬं ह्यग्निरेतसमिति" श्रुतिः। एतच्च हिरण्य-

य॑त्सोमाभूयो॑भरद्देवोन॑ःसवि॒ताव्वसो॑र्दा॒ताव्वस्वं॑दात्॥१६॥ एषा-

ते॑शुक्र॒त॒नू॒रे॒ऽतद्वर्च्च॒स्तया॒सम्भ॑व॒भ्रा॒जं॑गच्छ। जूर॑सिधृ॒तामन॑-

लक्षणं वर्च्चस्तेजः "तया" तन्वा "संभव" एकीभव, एकीभूय च भ्राजं सोमं गच्छ। जुहोति "जूरसि" जीव आणधारणे। अस्य क्विबन्तस्यापि ऊ प्रत्यये जूरिति भवति। या त्वं जीवनमसि। "धिया धिया ह्येतया मनुष्या जुजूषन्तीति" श्रुतिः। अथवाजवत इति जूः। "एतᳬं ह्याकाशमनुजवत" इति

(१) मानाहाराख्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति बर्हिस्तरणेन हिरण्यं बध्नावदधात्येषा त इतीति, जूरसीति जुहोतीति। का० ७।६।७-९।

स्तुतेः। या च त्वं "घृता" धारिता "मनसा"। जुषी प्रीतिसेवनयोः। अभिरुचिता च। "विष्णवे" विष्णोः सोमस्य (२) ॥ १७ ॥ "तस्यास्ते" तव "सत्यसवसः" अवितथाभ्यनुज्ञायाः। "प्रसवे" अभ्यनुज्ञायां वर्त्तमानाः। "तन्वोयन्त्रम् अशीय"। शरीरस्य यमनं दार्ढ्यम् अशी-य व्याप्नुयाम् आ यज्ञसमाप्तेः। हिरण्यमुद्धरति (१)। "शुक्रमसि" अग्ने रेतोसि। "चन्द्र-

# सा जुष्टा विष्णवे ॥ १७ ॥ तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ॥ शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥ १८ ॥

मसि"। चदि आह्लादने। "अमृतमसि" अमरणधर्मासि। "वैश्वदेवमसि" सर्वदेवत्यमसि

(२) महीधरभाष्ये तु हे शुक्रदीप्यमानाग्ने ते तव एषा तनूर्दृश्यमानमाज्यं शरीरं, आज्ये क्षिप्यमाणं हिरण्यं वर्चः तयाज्यरूपया तन्वा एकीभवेति च व्याख्यातम्। एतन्मन्त्रपाठेनाग्निः सतेजस्त्वं सतनुस्त्वं च संपद्यते। तदुक्तं तित्तिरिणा सतेजसमेवैनं सतनुं करोतीति ॥ १७ ॥

(१) शुक्रमसीति हिरण्यमुधृत्य वेद्यां तृणं निदधाति। का० ८।६।१०। (२) अग्निसंयोगेऽपि हिरण्यस्य विनाशाभावः अग्नौ सुवर्णमस्तोपामिति याज्ञवल्क्यः। 'वैश्वदेवं' सर्वदेव संबन्धि सर्वोपि देवो हिरण्यदानेन तुष्यतीत्याशयः ॥ १८ ॥

शु० य० सं० ८२ उ० भा०

इति ॥ १८ ॥ (२) सोमक्रयणीमभिमन्त्रयते वाग्रूपाध्याहारोपकल्पनया। त्वं "चिदसि"। चित्तस्य मनसोनुवादिनी भवसि। या च "मनोसि" प्रज्ञासि। या च "धीरसि" बुद्धिर्भवसि। "धिया ह्येतया मनुष्याजुजूषन्ति जीवितु मिच्छन्ति" श्रुतिः(२)। या च त्वं "दक्षिणासि"। भूमिदानात्परं नास्ति विद्यादानं ततोधिकमित्येतदभिप्रायम्। तेभ्योवाचं दक्षिणामानयन्नित्येतदभिप्रायं वा। या च "क्षत्रियासि"। क्षतात् त्रायत इति क्षत्रियः। जात्या स्तूयते वा। या च "यज्ञि-

चिदसि। मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिर-स्युभयतःशीर्ष्णी॥ सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि-

यासि"। यज्ञार्हासि। या च "अदिति रसि"। अदीनासि। या च "उभयतः शीर्ष्णी"। उभ-

(१) चिदसीत्येनामभिमन्त्रयते। का० ७।६।१५। (२) अन्तःकरणस्य चित्तमनोबुद्धयस्तिस्रो वृत्तयः। तत्राचेतनदेहादिसंघातस्य चेतनत्वं संपादयन्ती बाह्यवस्तुषुवानिर्विकल्परूपं सामान्यज्ञानं जनयन्ती वृत्तिश्चित्तं तदेवात्र चिदित्युच्यते। एवं कश्चित्पदार्थमालोच्यैवं भवति न वेति संकल्पविकल्पौ कुर्वाणः वृत्तिर्मनस्तदेवात्र मनेत्युच्यते। इदमित्थं भवत्येवेति निश्चयरूपा वृत्तिबुद्धिः सैवात्र धीशब्देनोच्यते। एवं च वागात्मिका सोमक्रयणी चिन्मनोधीरूपत्वेन

४ अ० ४ मन्त्र ८२

यतोऽमुखी। वाक्ये पदानामन्यथाचान्यथा च क्रमो भवतीत्येतदभिप्रायम्। "सयदेनया सयानर्ठं सविपर्यासं वदतीत्यादि" श्रुतिः। "सानः सुप्राची सुप्रतीचीएधि"। या त्वमुक्तगुणासि सास्माकं सुप्राची भव सोममभिगच्छेत्यर्थः। सुप्रतीच्येधि। साधु अस्मान् प्रति सोमं गृहीत्वा आगच्छे-त्यर्थः। "सुप्राची न एधि सोमं नोच्छेहीत्येवैतदाह सुप्राची न एधि सोमेन नः सह पुन र्गृहीत्वैवैतदाह" इति श्रुतिः। किञ्च। "मित्रस्त्वापदि बध्नीताम्"। मित्रआदित्यस्त्वां। पदि

बध्नीताम्पूषाध्वनस्पात्विन्द्रायाध्यक्षाय ॥ १९ ॥ अनु त्वामाता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः। सादेवि दे-

पादे बध्नातु अपलायनाय। किञ्च "पूषाध्वनस्पातु" इयं वै पृथिवी पूषा सा त्वामध्वनः मार्गात् पातु रक्षतु। किञ्च "इन्द्रायाध्यक्षाय"। चतुर्थ्यां षष्ठ्या विपरिणामः। अधि उपरि अक्षिणी यस्य सो-ध्यक्षः। इन्द्रस्याधयक्षस्य सतः॥ १९ ॥ किञ्च सोमाहरणे प्रवृत्तां त्वामेते "ऽनुमन्यन्तां त्वा माता

प्रशंस्यते। (२) क्षत्रियजात्यभिमानिसोमक्रयसाधनत्वेनेत्यर्थः। सोमस्य क्षत्रियजात्यभिमानिता च "यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमोरुद्र" इति बृहदारण्यके सुस्पष्टा॥ १९ ॥

शु० य० सं० ८३ उ० भा०

अनुमन्यतां त्वा पिता अनुमनयतां त्वां माता "सगर्भ्यः" । समानगर्भभव: । अनुमनयतां त्वां सखा 'सयूथ्य' समानयूथप्रभव: सखा अनुमनयताम् । किञ्च यात्वं कृतसामग्रीकाऽस्माभिः सोमं प्रति गमने सा त्वं हे "देवि" दानादिगुणयुक्ते "देवमच्छेहि" इच्छाभिरामस्मिति शाकपूर्णिः । "देवं सोममभ्येहि" अभिगच्छ । इन्द्राय सोमम् आहर्तुमिति शेषः । किञ्च । "रुद्रस्त्वावर्त्तयतु" रुद्रः त्वाम् आवर्त्तयतु । रुद्राज्ञां नातिक्रामन्ति पशवः । ततः "स्वस्ति" अविनाशेन

देवमच्छेहीन्द्रायसोमंरुद्रस्त्वावर्त्तयतुस्वस्तिसोमसखा पुनरेहि ॥२०॥

वस्व्यसि । वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि ॥

सोमसखा सती पुनरागच्छ ॥ २० ॥ उदीचीं नीयमानामनुगच्छति (१) । "वस्व्यसि" । अनष्टप्रवृत्ती वा । वसुरूपेणादितिरूपेणादित्यरूपेण रुद्ररूपेण चन्द्ररूपेण स्तूयते गौः । किञ्च "बृहस्पतिः त्वा सुम्ने" सुखे "रम्णातु" संयमयतु" । रम्णातिः संयमकर्मा । "रुद्रो वसुभिः" सहितः

(२१) का० ७।६।१३। ॥ २१ ॥

"आचके" कामयतु । रक्षितुमितिशेषः । आचक इति कान्तिकर्मसु पठितम् ॥ २१ ॥ पदे जुहोति (१) । "अदित्यास्त्वा" । अदित्याः पृथिव्यास्त्वाम् हे आज्य "मूर्द्धनि" शिरसि "आजिघर्मि" । घृ क्षरणदीप्त्योः । आक्षारयामि । "देवयजने पृथिव्याः इडायाः" गोः पदं यतस्त्वमसि अतो "घृतवत् घृतयुक्तं त्वां कर्तुं जुहोमीतिशेषः । पदं लिखति । "अस्मे रमस्व" ।

बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिराचके ॥ २१ ॥ अदित्यास्त्वा । मूर्द्धन्नाजिघर्मि देवयजने पृथिव्याऽइडायास्पदमसि घृतवत्स्वाहा ॥ अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो मा वयम्

अस्मासु रतिं कुरु । पदं स्थाल्यामावपति । "अस्मे ते बन्धुः" । वयं ते तव बन्धुभूताः ।

(१) षट्पदान्यतीत्य सप्तमं पर्युपविशन्ति हिरण्यमस्मिन्निधायाभि जुहोत्यदित्यास्त्वेति, स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति, समुद्धृत्य पदं स्थाल्यामावपत्यस्मे ते बन्धुरिति, यजमानाय पदं प्रयच्छति त्वे राय इति, मेराय इति यजमानः प्रतिगृह्णातीति, मावयमित्यध्वर्युरात्मानं स्पृशति, हुत्वा पत्न्यै पदं प्रयच्छति मैष्ट्यन्तेन दूत्येनां वाचयतीति । का० ७।६।१८-२६ । अत्रसूत्रे अस्मे इत्यस्य वयमर्थो तोतः शब्दः कलत्रवाची अव्ययं, स्पष्टमन्यत् ॥ २२ ॥

यजमानाय पदं प्रयच्छति। "त्वे राय:"। "पशवो वै राय:"। त्वयि पशव: सन्त्विति शेष:। पदं यजमान: प्रतिगृह्णाति। "मे राय:"। मयि पशव: सन्त्विति शेष:। अध्वर्युरात्मानमुपस्पृशति। "मा वयं रायस्पोषेण वियौष्म"। मा वियौष्म मा विभक्ता: स्याम वयं धनस्य पोषेण। गृहीतपदां पत्नीं वाचयति। "तोतो राय:"। त्वयि राय: पशव: सन्त्विति-शेष: ॥ २२ ॥ सोमक्रयण्या समीक्षयति (१)। "समख्ये"। पलराशी:। आस्तारपङ्क्ति:

**यदे॒ रा॒यस्पोषे॑ण॒ वियौ॑ष्म॒ तोतो॒ राय॑: ॥ २२ ॥ सम॑ख्ये॒ दे॒व्या धि॒या सन्द॑क्षि॑णयो॒रुच॑क्षसा । मा म॒ऽआयु॒: प्रमो॑षी॒र्मोऽअ॒हं**

सोमक्रयणीत: पलराशिप्रमाशास्ते। यथा त्वया अहं "समख्ये"। ख्या प्रकथने। संदर्शनं कृतवती। "देव्या" दानादिगुणयुक्तया। "धिया" प्रज्ञया सहार्थे तृतीया। "संदक्षिणया उरुचक्षसा" समख्ये च दक्षिणया सह गौर्हि प्रायशो दक्षिणा दीयते। उरुचक्षसा विस्तीर्णदर्शनया। वाचाभिरतीता नागत वर्तनविप्रकृष्टं ज्ञायते। सा त्वं "मा मऽ आयु: प्रमोषी:"। त्वम

(१) सोमक्रयण्या च समीक्षमाणां समकुख्यम इतीति। का० ७।६।२६ ॥ २२ ॥

स्तेये। "मा प्रमोषीः" मावखण्डय मम आयुः। मा अहं तवायुः प्रमोषिषम्। किञ्च "वीरं विदेय"। विदिर्लाभार्थः। पुत्रं लभेय। "तव देवि संदृशि"। हे देवि तव संदर्शने सति ॥२३॥ यजमानं वाचयति (१)। "एषते गायत्रो भागः"। हे सोम एष ते तव गायत्रीसंबन्धी भागः अंशः इति एवं "मे" यजमानाभिधायकं पदम्। "सोमाये"ति षष्ठ्यर्थे चतुर्थी। मम वचनमेवं सोमस्य "ब्रूतात्" कथयत हे अध्वर्यवः। छन्दोऽर्थं तव क्रयो न वधार्थम्। एवं यज-

**हन्तवंवीरंविंदेय तवदेविसन्दृशि ॥ २३ ॥ एषते। गायत्रो भागऽइतिमे सोमायब्रूतादेषतेत्रैष्टुभोभागऽइतिमे सोमायब्रूता**

मानाभिप्रायः। एतदध्वर्यवः सोमस्य कथयन्तीति वाक्यार्थः। "एष ते त्रैष्टुभो भागः"। एष ते जागत इत्यनेनैव व्याख्यातौ। "छन्दोनामानाम्"। नाम शब्दोऽनर्थकः। अन्येषामपि छन्दसां "साम्राज्य" माधिपत्यं "गच्छ" इति एवं मे ममाभिप्रायं सोमस्य ब्रूतात् कथयत हे

(१) एषते इति वाचयतीति प्राक्प्रविस्रंसाकोर्णीति सोममालभते। का० ७।७।८-९ ॥ (२) यः सोमायच्छन्दसामाधिपत्यं दत्वा क्रीणाति स स्वानामाधिपत्यं प्राप्नोति। तदुक्तं तित्तिरिणा—"यो वै सोमं राजानं साम्राज्यलोकं

अध्वर्युः । अत्रापि मे इत्येतत्पदं यजमानवाक्यमेव । सोममालभते । "आस्माकोऽसि" । यस्त्वां हे सोम क्रयार्थमुपागतः स आस्माको मदीयः संजातः । "शुक्रस्ते ग्रह्यः" । उपरवधार्यः शुक्रमन्थिनयो ग्रहास्तव गृहीष्यन्ते । किञ्च "विचितः" विचयनकर्त्तारः त्वां "विचिन्वन्तु" विविक्तं कुर्वन्तु ॥ २४ ॥ सोमं मिमीते (१) । "अभित्यं देवम्" । सावित्र्यत्यष्टिः । "अभ्यर्चामि"

टेषतेजागतोभागऽइतिमेसोमायब्रूताच्छन्दोनामानाꣳसाम्राज्य-
ङ्गच्छेतिमेसोमायब्रूतादास्माकोसिशुक्रस्तेग्रह्योविचितस्त्वाविचिन्वन्तु ॥ २४ ॥ अभित्त्यम् । अभित्त्यन्देवꣳसवितारमोण्योः

अभिपूजयामि । "त्यम्" तम् । "देवं" दानादिगुणयुक्तम् । "सवितारम् ओण्योः" द्यावापृथिव्योरन्तरा वर्त्तमानम् "कविक्रतुं" मेधाविकर्माणम् "सत्यसवम्" अवितथप्रसवम् "रत्नधाम्"
गमयित्वा क्रीणाति गच्छति स्वानां साम्राज्यमिति ॥ २४ ॥

(१) सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति प्रागग्रमुदगग्रं वा तस्मिन्त्सोमं मिमीते त्र्यङ्गुलोऽमित्यमितीति । का० ७।७।१२-१३ ।

रमणीयानां धनानां दातारम्। अभिरनर्थकः। "प्रियम्" सर्वजनानां प्रियम्। "मति" बुद्धिं व्याप्यावस्थितम्। मतीनां हि सविताऽधिष्ठात्री देवता। "कवि" क्रान्तदर्शनम्। किञ्च "ऊर्ध्वां यस्यामतिः भा अदिद्युतत् सवीमनि"। यस्य सवितुः ऊर्ध्वां गमनाभिमुखी अमतिः आत्ममयी मतिः अनन्यभूता। कतरा भा दीप्तिः अदिद्युतत् द्योतयते सवीमनि प्रसवे पूर्णे हि दातव्ये। स सविता "हिरण्यपाणिः" सुवर्णपाणिः "अमिमीत"। मिमीते सोमं परिच्छिनत्ति। "सुक्रतुः"

कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिं कविम्। ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः

साधु कर्मा शोभनयज्ञो वा। "कृपा" कल्पनया सोमस्य कल्पना। "स्वः" आदित्यः सु अरणः। अन्तान् संगृह्योष्णीषेण बध्नाति (२)। "प्रजाभ्यस्त्वाम्"। बध्नामीतिशेषः। उत्पत्तये स्थितये च प्रजानां हे सोम त्वां बध्नामि। अङ्गुल्या मध्ये विवृणोति। "प्रजास्त्वा नुप्राणन्तु"। हे

(२) अन्तान् संगृह्योष्णीषे बध्नाति प्रजाभ्यस्त्वेति, अङ्गुल्यामध्ये विवृणोति प्रजास्त्वानुप्राणन्त्विति। का० ७।७,२०-२१ ॥ २५ ॥

शु० य० सं० दी० भा०

सोम त्वां प्रायान्तमुच्छ्वसन्तम् "प्रजा अनु प्रायन्तु" उच्छ्वसन्तु। त्वं च प्रजाः उच्छ्वसतीः "अनुप्राणिहि" अनूच्छ्वसिहि। "तमयतीतिवा एनमेतत्समायच्छन्नं प्राणमिव करोति तस्यैतदृतएव सधरतः प्राणसुतच्छजति तं ततः प्रयान्तं प्रजा अनुप्रायन्ती" त्यादिब्राह्मणम् ॥२५॥ हिरण्यमालब्ध्यवाचयति (१)। "शुक्रं त्वा"। हे सोम शुक्रमक्लिष्टकर्माणं त्वां शुक्रेण हिरण्येन क्रीणामि। एवं सर्वमपि व्याख्येयम्। सोमविक्रयिणं हिरण्येनाभिकम्पयति। "सग्मे-

## क्रपास्वंः ॥ प्रजास्त्वाम्प्रजास्त्वान्प्राणान्तुप्रजास्त्वमनुप्राणिहि ॥ २५ ॥ शुक्रन्त्वा। शुक्रेणक्रीणामिचन्द्रञ्चन्द्रेणामृतम्

तेगौः" गौरिति विपरिणामः॥ सह गवा वर्त्तत इति सग्मो यजमानः। तव संबन्धिनी या गौः सा यजमाने वर्त्तत इति। सोमक्रयिणं निराशं करोति। यजमानसहितं निदधाति। "अस्मे"। हे सोम क्रयिन् अस्मासु तव संबन्धीनि हिरण्यानि वर्त्तन्ते। अजा- विषम

(१) शुक्रं त्वेति हिरण्यमालभ्य वाचयति, सग्मेत इति सोमविक्रयिणं हिरण्येनाभिकम्पयतीति, अस्मे त इति यजमानसहितं निदधातीति, अजां मय्यङ्मुखीमालभ्य वाचयति, तपसस्तनूरिति। का० ७।८।२२। (२) "तपसोऽसा

मालभ्य वाचयति । "तपसस्तनूरसि" । तपसः "प्रजापतेः" हे अजे "तनूः" शरीरं त्वमसि(२)। "प्रजापते" स्व "वर्णः" रूपं त्वमसि । "सा यत्त्रिः संवत्सरस्य विजायते तेन प्रजापतेर्वर्णः" । एवमजां सोमक्रयणीमभिष्टुत्य अथेदानीं सोममाह । "परमेण पशुना क्रीयसे" त्वं हे सोम । सा यत्त्रिः संवत्सरस्य विजायते तेन परमपशुः । यस्मात्त्वं परमेणोत्कृष्टेन पशुना क्रीयसे तस्मात्तव प्रसादादहम् "सहस्रपोषम्" सहस्रं प्राणिनां यत्पुष्णाति धनं तदहं पुषेयं वर्द्ध-

मृतेन ॥ सुगग्मे तुगोर स्मितेचन्द्राणितपसस्तनूरसि प्रजापतेर्वर्ण-सींःपरमेणपशुनाक्रीयसेसहस्रपोषम्पुषेयम् ॥ २६ ॥ मित्रोनःं ।

येयम् । सहस्रप्राणिपोषो मम गृहे वर्द्धमानोस्तु इत्यभिप्रायः ॥ २६ ॥ सोमनादत्ते (१) । "मित्रो

एषा प्रजापतेः सम्भूता सहजेति श्रुतेः ।' प्रजापतेस्त्रिगुणत्वात् अस्याश्च प्रतिवत्सरं त्रिवारं प्रसूतेः साम्यात्प्रजापतिवर्ण-वर्णत्वं । यद्वायमर्थः—हे अजे त्वं तपसः पुरुषस्य तनूरसि, दिविस्थितस्य यज्ञियस्यानयनायाजां गृहीत्वा गायत्री जगा-मेति तित्तिरिणा सोमायतरणोपाख्याने उक्तत्वात् हे अजे त्वं प्रजापतेर्वर्णो देहः प्रजाप्रतिवदजायाः सर्वप्रियत्वादिति महीधरभाष्ये ॥ २६ ॥

शु॰ य॰ सं॰ ८७ उ॰ भा॰

न एहि"। हे सोम मित्रस्त्वं सन्नोऽस्मानभ्येहि। मित्रशब्देन ह्यादित्यो गृह्यते पुंलिङ्गार्थात्। "सुमित्रधः"। शोभनानि मित्राणि दधाति पुष्णातीति सुमित्रधः। यस्त्वं सुमित्रधः। यजमानस्य दक्षिणं करौ निदधाति "इन्द्रस्योरुम्"। स इन्द्रस्य यजमानस्य ऊरं दक्षिणं "माविश" उपविश (२)। "एष वा अत्रेन्द्रो भवति यद्यजमान" इति श्रुतिः। "उशन्न,शन्तम्"। वश कान्तौ। कामयमानस्त्वं कामयमानमेव। यजमानस्योरुमाविश इत्यनुवर्त्तते। "स्योनः

मित्त्रो न ऽएहि सुमित्त्रधऽइन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳस्योनः स्योनम्॥ स्वानभ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानव्

स्योनम्"। स्योनमिति सुखनाम। सुखरूपस्त्वं सुखरूपम्। यजमानस्योरुमाविश इत्यनु-

(१) सव्ये नाजां प्रमच्छन् मित्रो न इति दक्षिणेन सोममारोपयेति,दीक्षितोरौ दक्षिणे प्रत्युच्य वामो निदधातीन्द्रस्योरुमितीति, स्वानभ्राजेति जपति सोमविक्रयिणमभिसमाण इति। का॰ ७।८।२३-२४। (२) पुरादेवाः सो॰ क्रीत्वमिन्द्रस्योरावुपवेशयन् तस्मादत्रेन्द्रशब्देन यजमानः। तदाहतित्तिरिः "देवा वै सोमं क्रीतमिन्द्रस्योरौ दक्षिण आसादयन् स खलु वा एतर्हीन्द्रो यो यजते तस्मादेवमाहे"ति॥ २७॥

क्षिण ८७

वर्त्तते। एवं परस्परप्रीत्या अवियुक्तौ भवेतामित्यभिप्रायः। सोमक्रयणाननुदिशति। "स्वान-भ्राज"। सप्तदशानां मध्यात्सप्त तावत्सोमक्रयणाननुदिशति। हे स्वान भ्राज "अङ्घारेबम्भारे हस्त सुहस्त कृशानो"। एवं सप्तधिष्ण्यान् संबोध्य अथेतरानाह। "एते वः सोम-क्रयणाः"। एते वः युष्माकं मध्ये तावत् सोमक्रयणाः "तान्रक्षध्वम्" तान् गोपायत। "धिष्ण्यान् मावोदभन्" एते होत्रका अपि स्वानभ्राजादयः युष्मान् मा दभन्।

एते वः सोमक्रयणास्तान्रक्षध्वम्मा वो दभन् ॥ २७ ॥ परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज। उदायुषा स्वायुषोदस्थाम्

दम्भोतिर्हिंसाकर्मा। मा युष्मान् दभन्तु॥ २७॥ गृहीतसोमं वाचयति (१)। "परि-माग्ने"। आग्नेयी पुरस्ताद्बृहती। हे भगवन्नग्ने "परिबाधस्व" परित्रायस्व मां "दुश्च-रिता"त्पापाचरणात्। "आभजमाम्" आसेवस्व माम् "सुचरिते" वर्त्तमानम्। उत्तिष्ठति। "उदस्थाम्" उत्तिष्ठामि आयुषानिमित्तभूतेन चिरं जीवनाय स्वायुषा निमित्तभूतेन शोभनेन

(१) गृहीतसोमं परिमाग्ने इति वाचयति, उदायुषेत्युत्थाममिति। का० ७।९।१-२॥ २८॥

प्रकारेण दानहोमयागादिभिः। येनास्मदीयमायुर्यात्यनेन च हेतुना उदस्थाम्। उत्तिष्ठामि च। "अमृतान्" देवा "ननु" अतः। परिमाण्ने दुश्चरितादाघस्खेति संबन्धः। अमृतशब्देनात्र बहुवचनात्तेन सोमोभिधीयते। आगते सोमे दीक्षित उत्तिष्ठति। तस्यैषा प्रायश्चित्तिः ॥२८॥

अनोयुक्त्येति(१)। "प्रतिपन्थाम्" अनुष्टुप्। पन्थानं स्तौति। "मत्यपद्महि" प्रतिपद्येमहि पन्था-

मृमृतां॥ ऽअनु॥ २८॥ प्रतिपन्थाम्। प्रतिपन्थामपद्महि स्वस्तिगामनेहसम्॥ येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु॥ २९॥ आदित्यास्त्वक्। आदित्यास्त्वगस्यादित्यै सदऽआ

नम्। "स्वस्तिगाम्"। अविनाशेन यत्र गम्यते तं स्वस्तिगाम्। "अनेहसम्"। एह इत्यपराधनाम। न विद्यते यत्र गतानामपराधः स तथोक्तः। किं च। "येन पथा गच्छन् विश्वाः" सर्वाः "परि वृणक्ति"। परिवर्जयति। वृजी वर्जने। "द्विषः" दुष्टान्। किञ्च "विन्दते वसु"। लभते धनम् ॥२९॥

(१) मौर्वीं सोमं कृत्वा पाणिमन्तर्धाय म. तपन्थामित्यतोऽस्येति। का० ७।९।४॥ शकटमभिलक्ष्य गच्छेदित्यर्थः ॥२८॥

कृष्णाजिनमास्तृणाति (१)। “अदित्यास्त्वगसि”। व्याख्यातः शेषः। सोमं निदधाति। “अदित्यै सदः” स्थाने“आसीद”। सोममालभ्य वाचयति। “अस्तभ्नाद् द्याम्” लिङ्गौ वारुणौ। योयं “वृषभः” वर्षिता “अस्तभ्नाद्द्याम्”। स्तम्भितवान् द्युलोकम्। यश्चा“न्तरिक्षम-स्तभ्नात्। यश्चा“मिमीतवरिमाणं पृथिव्याः”। मिमीते वरिमाणं गुरुत्वं पृथिव्याः (१)। यश्च “सम्राट्”देवताविशेषः। “आसीदद्विश्वाभुवनानि”। आसीदति हि सर्वाणि भूतजातानि

सी॑द । अस्त॑भ्नाद्द्यां॑वृ॑षभोऽअ॒न्तरि॑क्षममि॑मीतव्वरि॒माणम्पृथि॒व्याः ॥ आसी॑दद्वि॒श्वा॒भुव॑नानिस॒म्म्राड्विश्वेत्तानि॒व्वरु॑

आत्मत्वेनाधिपत्येन च। “विश्वेत्तानि”। इच्छब्द एवार्थे (२)। सर्वाण्येवैतानि “वरुणस्य व्रतानि” कर्माणि। ये इमान् लोकान् स्तभ्नुवन्ति ये च सर्वजनानाविशन्ति तेपि च वरु-

(१) कृष्णाजिनमस्मिन्नास्तृणाति अदित्यास्त्वगितीति, तस्मिन्सोमं निदधात्यदित्यै सद इतीति, अस्तभ्नाद द्यामिति सोममालभ्य वाचयतीति। का० ७।९।८। मिमीते एतावती भूरिति परिमाणं जानातीत्यर्थः। (२) यद्वा इदिति इत्यमर्थे, इत्थं प्रकारेण द्युलोकस्तम्भनादीनि करोतीत्यर्थः॥ ३०॥

य० य० सं० ८९ उ० भा०

गाढ्मां कुर्वन्तीति परब्रह्मरूपेण वरुणस्य स्तुतिः ॥ ३० ॥ (१) "वनेषुवि"। वीत्ययमुपसर्ग स-तानेत्यनेन संबध्यते। यो वरुणः "वनेषु" वृक्षाग्रेषु "विततान" वितनोत् "व्यन्तरिक्षमा"काशम्। यद्यपि सर्वगतमन्तरिक्षं तथापि तत्र मूर्तद्रव्याभावादुपलभ्यतएव। "वाजमर्वत्सु"। "वीर्यं वै वाजः पुमाꣳसोर्वन्तः" इति श्रुतिः। वाजं वीर्यम्। अर्वत्सु पुरुषेषु। ततानेत्यनुवर्त्तते। "पयउस्रियासु"। उस्रियासु गोषु पयो विततान। "हृत्सुक्रतुम्"। क्रतुः संकल्पः हृदयेषु

गाऽस्यव्व्र॒तानि॑ ॥ ३० ॥ व्वने॑षु॒व्वि। व्वने॑षु॒व्व्य॒न्तरि॑क्षन्ततान॒ व्वा॒जमर्व्व॑त्सु॒पय॑ऽउ॒स्रियां॑सु॥ हृ॒त्सुक्क्र॒तुं॒ व्वरु॑णोव्वि॒क्ष्व॒ग्निन्दि॒वि सूर्य्य॑मदधा॒त्सोम॒मद्रौ॑ ॥ ३१ ॥ सूर्य्य॑स्य॒ चक्षुः॑ सूर्य्य॑स्य॒ चक्षु॒रा

संकल्पं विततान। "विक्ष्वग्निम्"। प्रजास्वग्निं विततान। "दिवि" द्युलोके "सूर्यमदधात्" स्थापितवान्। "सोममद्रौ"। अद्रिषु सोमं स्थापितवान् (२)। य एवं परब्रह्मलक्षणो वरुणस्तं

(१) वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परितत्येति। का० ७।८।८। (२) तथाच तित्तिरिः—सोममद्राविद्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोमं निदधाति ॥ ३१ ॥

४ अ०

विषय ८९

वयं स्तुम इतिशेषः ॥ ३१ ॥ कृष्णाजिनं सोमस्य चिन्हं करोति (१)। "सूर्यस्यचक्षुः"। अनुष्टुप्। कृष्णाजिनमुच्यते। सूर्यस्य संबन्धि चक्षुः "आरोह"। तथाऽभ्युच्छ्रितं भव यथा सूर्यश्चक्षुषा पश्यतीत्यभिप्रायः। "अग्ने" अक्ष्णः "कनीनक" मारोह। "यत्र" ताभ्यां दृष्टो लक्षितः (२)। "एतशेभिः"। एतश इति अश्वनामसु पठितम्। एतशै रश्मिभिः "ईयसे" नीयसे। "भ्राजमानः" देदीप्यमानः। "विपश्चिता" सूर्येण सहितः। अग्निना वा विपश्चिता सहितः ॥ ३२ ॥ अन-

**रोहाग्नेरक्ष्णः कनीनकम्॥ यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता ॥ ३२ ॥ उस्रावेतं धूर्षाहौ युज्येथामनश्रूऽअवीरहणौ**

डुहौ युनक्ति (१) "उस्रावेतम्"। ऊर्ध्वबृहती। हे उस्रौ अनड्वाहौ आ इतम् आगच्छतम्। एत्य च स्वयमेव "युज्येथाम्" योगं कुरुतम् हे "धूर्षाहौ"। षह मर्षणे। धुरं सोढु

(१) कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरितीति। का० ७।८।१०। (२) सूर्याग्निभ्यां दृष्टोमार्गो रक्षोबाधारहितो भवति। "एष वाव खलु रक्षोहणः पन्था योऽग्नेश्च सूर्यस्य चेति तित्तिरिप्रोक्तेः ॥ ३२ ॥

(१) अनड्वाहौ युनक्त्युस्रावेतमितीति। का० ७।८।११।

यौ शक्तुतस्तौ तथोक्तौ। "अनश्रू"। अश्रुरहितौ हृष्टावित्यर्थः। "अवीरहणौ"। वीराणां यौ युवां वधं न कुरुतं ताववीरहणौ (२)। प्रशस्तावित्यर्थः। "ब्रह्मचोदनौ"। ब्राह्मणानां यज्ञं प्रति प्रेरयितारौ। एवमनड्वाहौ संबोध्य अथेदनीं प्रयोजनमाह। "स्वस्ति" अविनाशेन "यजमानस्य गृहान् गच्छतम्" ॥ ३३ ॥

वाचयति (१)। "भद्रोमेसि"। भदि कल्याणे सौख्ये च। सोम उच्यते। भन्दनीयः स्तुत्यः

ब्रह्मचोदनौ ॥ स्वस्तियजमानस्यगृहान्गच्छतम् ॥ ३३ ॥ भद्रोमे।
सिप्रच्यवस्वभुवस्पतेविश्वान्यभिधामानि ॥ माल्वापरिपरि

यतस्त्वं मे मम भवसि अतो ब्रवीमि। "प्रच्यवस्व"। च्युङ् ज्रुङ् जिङ् किङ् प्रुङ् कुच् सैङ् गाङ् गतौ। गच्छ। "भुवस्पते" भूतजातस्य पते। "विश्वान्यभिधामानि"। सर्वाणि स्थानानि पत्नीशालाहविर्धानप्रभृतीनि। किञ्च त्वां प्रच्यवमान"माविदन्" मा जानन्तु। "परिपरिणः"। परिपणितारो दुर्जनाः। मा च त्वां "परिपन्थिनः"। सर्वतः पन्थानं ये

(२) वीराणां प्रियूमाम् ॥ ३३ ॥ (१) भद्रोमे इति वाचयतीति। का० ७।६।१८ ॥ ३४ ॥

तिष्ठन्ति ते माविदन्। "मा" त्वां "वृका अघायवो विदन्" वृका विकर्त्तनशीलाः अघायवः अघं पापं ये परस्य कर्तुमिच्छन्ति ते अघायवः। एते च त्वां गच्छन्तं मा जानन्तु। किञ्च त्वमपि "श्येनो भूत्वा परापत"। श्येन रूपमवस्थायोत्पत। ततो "यजमानस्य गृहान् गच्छ। तत् नौ" आवयोः तव च मम च "संस्कृत" सर्वोपकरणयुक्तं स्थानं विद्यते ॥ ३४ ॥ वाच-

# यो॑विदन्न्मात्वा॑परिपन्थिनो॑विदन्न्मात्वा वृकाऽअघायवो॑विदन् ॥ श्येनोभूत्वापरा॑पतयजं॑मानस्यगृहान्न्गं॑च्छ तन्नौ॑सँस्कृतम् ॥३४॥ नमो॑मित्रस्य॑। नमो॑मित्रस्यवरु॑णस्य चक्ष॑से महोदेवाय तदृतꣳ स॑

यति (१)। "नमो मित्रस्य"। सौरी जगती। ऋषिर्दृष्टार्थः। परब्रह्मरूपेणादित्यमवगम्य स्वयं नमस्कारं कृत्वान्येषां कथयति। "नमः सूर्याय"। कथं भूताय "मित्रस्य वरुणस्य चक्षसे"। मित्र आदित्यो वरुणस्य। उपलक्षणार्थं चैतत्। सर्वद्यावापृथिवीनिवासिलोकग्रहणार्थं वा। तदेव

(१) शालापूर्वं या प्रतिप्रस्थाताग्नीषोमीयं पशुमादाय तिष्ठति. कृष्णसारङ्ग. मेध्यसमावे लोहितसारङ्गं नमो मित्रस्ये-- त्यं नमालभ्य वाचयति।। ७।९।२१-२२ ॥३५॥

स्तुतिः "अयं वै लोको मित्रोऽसौ वरुण इति"। चक्षसे दृष्टे ईश्वररूपेणाधरच्चाय। "महो-देवायतदृतर्ठ०सपर्यत"। महते देवाय तत्सत्यं पूजयत हे ब्राह्मणाः। सपर्यतीत्यर्चाकर्मसु पठि-तम्। किञ्च "दूरेदृशे" दूरेस्थितो दृश्यत इति दूरेदृक्। यद्वा अतीतानागतवर्त्तमानकालसंद-र्भान् प्राणिनो दूरेवस्थितान्पश्यतीति दूरेदृक्। "देवजाताय" देवानुग्रहार्थं जातो देवजातः। यद्वा जाता देवा अस्मादितिदेवजातः। 'निष्ठावाहिताग्न्यादिष्वि'ति बहुव्रीहौ परनिपातः। "केतवे"।

पर्य्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्त्राय सूर्य्यायशर्ठ-सत ॥ ३५ ॥ वरुणस्योत्तम्भनम्। वरुणस्योत्तम्भनमसि-

केतुरिति प्रज्ञानामसु पठितम्। प्रज्ञानरूपाय। विज्ञानघनानन्दस्वभावायेत्यर्थः। "दिवस्पु-त्राय" द्युलोकाद्धि सूर्य्यो विजायते। द्युलोकं वा बहुधा त्रायत इति दिवस्पुत्रः सूर्यः। "सूर्याय शर्ठ०सत"। शंस स्तुतौ। इत्थं स्वरूपाय सूर्याय स्तुतीरुच्चारयत। किमन्यैर्देवताविशेषैः॥ ३५॥ उत्तम्भनेनोपस्तभ्नाति (१)। "वरुणस्योत्तम्भनमसि"। वरुणस्य त्वमुत्तम्भनं भवसि न

(१) समीपेनोपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमितीति, मन्त्रे चोहति वरुणस्य स्कम्भसर्जनीस्थ

तु शकटस्य । 'उदस्थास्तम्भोः पूर्वस्ये'तिस्तम्भनस्थकारस्य तकारः । शकटे उदहृति । "वरुणस्य स्कम्भसर्जनीस्थः" । स्कभ्नोतिः स्तभ्नोतिना समानार्थः । अर्ज सर्ज अर्जने । स्कम्भशब्देनात्र युगमुच्यते । तस्य सर्जनी वशीकरण्यौ "स्कम्भसर्जनी" वरुणस्य युवां स्कम्भसर्जनी शम्ये "स्थः" भवथः । आसन्दीमभिमृशति । "वरुणस्य ऋतसदनी" सत्यसदनी त्वं भवसि । कृष्णाजिनमस्यामास्तृणाति । "वरुणस्य ऋतसदनमसि" । वरुणस्य सत्यसदनं त्वं भवसि । सीद-

**वरु॑णस्य स्कम्भ॒सर्ज॑नीस्थो वरु॑णस्य ऋत॒सद॑न्यसि॒ वरु॑णस्य ऋत॒सद॑नमासी॑द ॥३६॥ या ते॑ । या ते॒ धामा॑नि ह॒विषा॒ यज॑न्ति॒ ता ते॒**

न्त्यस्मिन्निति सदनम् । तस्मिन् सोमं निदधाति । "वरुणस्य ऋतसदनमासीद" । सत्यसदनम् । आसीद उपविश ॥ ३६ ॥ सोमं प्रवेशयन्वाचयति (१) । "यातेधामानि" । सौमी त्रिष्टुप् । हे सोम "या ते धामानि" । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति । यानि तव

इति, औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमुतामाहरति चत्वारोऽभिमृशन्त्येनां वरुणस्य ऋतसदन्यसीति, तस्मिन्- सोमं निदधाति वरुणस्य ऋतसदनमासीदेतीति । का० ७।९।२५-२९ ॥३६॥ (१) या त इति वाचयति । का० ७।९।३२ ।

सम्बन्धीनि धामानि नामानि "हविषायजन्ति" यष्टारः। "ता ते विश्वा:" तानि ते सर्वाणि। "परिभू:"(२)। नपुंसकबहुवचनस्थाने पुंलिङ्गैकवचनम्। परिभूणि सर्वतो भवितृणि। "अस्तु" एतदपि बहुवचनं वाच्यसंयोगात्। सन्तु। "यज्ञं" यज्ञं सर्वतो गृह्णे भवन्त्वित्यर्थः। यद्वा यज्ञ-शब्देन प्रथमान्तानि च धामानि तव विश्वानि नामानि यज्ञः परिभूः भवतु यज्ञः परिगृह्य वर्तता-मित्यर्थः। त्वं च। "गयस्फानः" गृहस्य पुत्रपशुभूहिरण्यादिभिर्वर्द्धयिता। "प्रतरणः" प्रतरन्ति-

विश्श्वापरिभूरस्तुयज्ञम्॥ गयस्फानःप्प्रतरणःसुवीरोवीरहा प्प्रचरासोमदुर्य्यान्॥ ३७॥ इतिसंहितापाठेचतुर्थोध्यायः॥

येनापदः स प्रतरणः। "सुवीरः" शोभनवीरः। "अवीरहा"। अहन्ता वीराणाम्। "प्रचर" इत्थंभूतस्त्वं परिभ्रम। "सोमदुर्य्यान्" गृहानस्मदीयान्॥ ३७॥ इति उव्वटकृतौ मन्त्रभाष्ये चतुर्थोध्यायः॥ ४॥

(२) परितो भवति प्राप्नोति परिभूः। भूप्राप्तौ। प्रतरण इत्यस्य प्रतारयति यज्ञपारं प्रापयतीति वार्थो बोध्यः॥ ३७॥

भारद्वाजोपनाम्ना श्रीगोविन्दविदुषाकृते॥ चतुर्थोयं गतोध्यायो मन्त्रभाष्यस्य टिप्पणे॥

आतिथ्य हविर्गृह्णाति पञ्चभिर्वैष्णवैर्यजुर्भिः। "अग्नेस्तनूरसि" (१)। "अग्निशब्देन परोक्षं गायत्र्युच्यते" इति श्रुतिः। अग्नेस्तनूः शरीरं भवसि। हुतं हविरग्नेः शरीरं भवत्येव। "विष्णवे त्वा" जुष्टं गृह्णामि। सोमस्य शरीरमसि विष्णवे त्वां जुष्टं गृह्णामि। "सोमः परोक्षेण त्रिष्टुबुच्यते" इति श्रुतिः। "अतिथेरातिथ्यमसि"। अतिथेः सोमस्य आतिथ्यं भोजन-

ॐ * अग्ग्नेस्तनूरसि विष्ण्णवेत्वासोमस्यतनूरसि विष्ण्णवे त्वातिथेरातिथ्यमसि विष्ण्णवे त्वाश्येनायत्त्वासोमभृते विष्ण्णवे-

मसि। "विष्णवे" त्वां जुष्टं गृह्णामि। "श्येनायत्वासोमभृते"। गायत्र्यै त्वां सोमहारिण्यै

ॐ तुरीयेऽध्याये सलिंगयजमानस्य शालाप्रवेशमारभ्य क्रीतस्य सोमस्य राज्ञः शालाप्रवेशपर्यन्ता मन्त्रा उक्ताः। अथ पञ्चमे आतिथ्येष्टौ हविर्ग्रहणादिमन्त्रा उच्यन्ते। निर्वपत्यग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रमिति। का० ८।१।१४। अग्नि-सोमस्य नवसंख्याकाः सोमराजानुचरास्तत्प्रीत्यर्थं निर्वपामि। तिथिविशेषं विनैव क्षुधया पीड़ितेऽतिथौ समागते तत्-

---

* अग्ने स्तनू, रापतयेचतुष्की, तप्तायनीद्वे, इन्द्रघोषस्तिस्रो, युंजतेष्टौ, देवस्यत्वाचतस्रो, देवस्यत्वापंच, विभूरसिचतस्रो, ज्योतिरसिषड्‌, सविषोतिस्रो, इत्यनिचत्वारिंशत् ॥

विष्णवे त्वामिति संबन्धः। "गायत्र्या हृतो श्येनो भूत्वा दिवः सोममहरदिति" श्रुतिः। "अग्नयेत्वारायस्पोषदे"। धनपोषस्य दात्रे विष्णवेत्वेति संबन्धः। "पशवो वै रायस्पोषः पशवो जगतीति" श्रुतिः॥ १॥ आतिथ्येऽग्निमन्थनं शकलमादत्ते। "अग्नेर्जनित्रम्"। जायतेऽस्मिन्नग्निरिति जनित्रम्। दर्भतरुणके निदधाति। "वृषणौस्थः"। वृषसेचने। वृषणौ वर्षितारौ

त्वाग्नये त्वा रायस्पोषदे विष्णवे त्वा॥ १॥ अग्नेर्जनित्रम्।
अग्नेर्जनित्रमसि वृषणौस्थ उर्वश्यस्यायुरसि पुरूरवाऽअसि॥

सेक्तारौ भवथः। अधरारणिं निदधाति। "उर्वश्यसि"। उत्तरारण्याऽऽज्यविलापनीमुपस्पृशति।
संस्काराय क्रियमाणः पादप्रक्षालन भोजनसंवादनादिसंस्कार आतिथ्यमुच्यते। तदाह त्तित्तिरिः यावद्भिर्वै राजानुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दांसि खलु वै सोमस्य राज्ञोऽनुचराणीति। इतिमहीधरभाष्ये॥ १॥

(१) अग्नेर्जनित्रमिति शकलमादाय वेद्यां करोति, वृषणाविति कुशतरुणे तस्मिन्, उर्वश्यसीत्यधरारणिं तयोः, (शकलस्थापितयोर्दर्भयोरधरारणिं निदध्यादित्यर्थः) आयुरसीत्युत्तराज्यस्थाल्यां संस्पृश्य, पुरूरवा इत्यभिनिधानं तया, मथ्नाति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणमिति। का० ५।१।३०-५।२।२॥ २॥

"आयुरसि"। उत्तरारणिं निदधाति। "पुरूरवा असि"। इतिहासपक्षेण मन्त्रत्रयं व्याख्यातं श्रुत्या। "उर्वशी वा अप्सराः पुरूरवाः पतिरथयत्तस्मान्मिथुनादजायत तदायुरिति"। मन्थति। "गायत्रेणत्वा"। हे अग्ने गायत्रेण त्वा छन्दसा मन्थामि जनयामि। उत्तरौ मन्त्रौ समानव्याख्यानौ। त्रैष्टुभेन जागतेनेति विशेषः॥ २॥ प्रास्यति (१)। "भवतन्नः" पङ्क्तिः।

गायत्रेणत्वाच्छन्दसामन्थामित्त्रैष्टुभेनत्वाच्छन्दसामन्थामि जागतेनत्वाच्छन्दसामन्थामि ॥ २ ॥ भवतन्नः। भवतन्नः समनसौसचेतसावरेपसौ॥ मायज्ञꣳहिꣳसिष्टम्मायज्ञपतिञ्जात-

आहवनीयनिर्मथ्यावुच्येते। भवतं युवां नः अस्माकं "समनसौ" समानमनस्कौ "सचेतसौ" समानप्रज्ञौ (२)। "अरेपसौ"। रेप इति पापनाम। अपापौ "मायज्ञꣳहिꣳसिष्ट" विनाशिष्टम्।

(१) भवतं न इति प्रास्यति। का० ५।२।३। (२) सचेतसौ समानचित्तयुक्तौ, अन्यविषयं मनः परिहृत्यास्मदनुग्रहाभिमुखत्वं समानत्वम् अनुग्रहे परस्परविप्रतिपत्तिराहित्यं सचेतस्त्वम्। अरेपसौ पापरहितौ, प्रमादादस्माभिः कृतेऽपि पापे कोपाभावः पापराहित्यम्॥ ३॥

"मा च यज्ञपतिं" यजमानम् । किञ्च "शिवौ" शान्तौ "भवतं" भवथः "अद्य" अस्मिन्यज्ञे "नः" अस्माकम् ॥ ३ ॥ जुहोति (१) । "अग्नावग्निः" । आहवनीयनिर्मथ्यावुच्येते । विराट् । अग्नौ आहवनीयाख्ये योयमग्निः निर्मथ्यः "चरतिप्रविष्टः" । "ऋषीणां" विदुषामग्निहोत्रिणां पुत्रः । "स यदग्नौ आधत्ते तदेतं जनयतीति" श्रुतिः । "अभिशस्तिपावा" अभिशंसनमभिशस्तिः अभि-

वेदसौशिवौभवतमद्यनः ॥ ३ ॥ अग्नावग्निः । अग्नाव-
ग्निश्चरतिप्रविष्टऽऋषीणाम्पुत्रोऽअभिशस्तिपावा ॥ सनःस्यो

शस्तेः पाति गोपायति यः सोभिशस्तिपावा । "स नः" सोस्माकमग्निः "स्योनः" सुखरूपः । "सुयजा" सुयागेन । "यज" । परोक्षकृतत्वान्मन्त्रस्य प्रथमपुरुषेण व्यत्ययः । यजतु । "इह" अस्मिन् यज्ञे । "देवेभ्यो हव्यं" हविः । "सदम्" सदा । "अप्रयुच्छन्" । युच्छीप्रमादे ।

(१) अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेणेति । का० ५।१।६ । देवेभ्यइन्द्रादिभ्योहव्यं सोमादि यज प्रापयेत्यर्थोवा महीधरभाष्ये ॥ ४ ॥

अप्रमाद्यन्। "स्वाहा" सुहुतं हविर्जुहोमि ॥ ४ ॥ तनूनप्त्रमाज्यं गृह्णाति (१)। "आपतये त्वा"। वायुदेवत्यं यजुः। आ पततीत्यापतिः परितः सर्वतः पततीति परिपतिः। उभयगुणविशिष्टाय वायवे हे आज्यं त्वा गृह्णामि। "तनूनप्त्रे"। तनूशब्देनात्माभिप्रेतः। तन्यते हि तस्मादाकाशः ततो वायुर्भवति। तस्मादाकाशो जायते शक्वरनामा आकाशाद्वायुः। एत-

न॑ सुयजा॑ यज॒ ह॒ देवेभ्यो॑ ह॒व्यं घर्मास॒त् दुमप्र॑युच्छ॒न्त्स्वाहा॑ ॥ ४ ॥ आ-पतये त्वा। आप॑तये त्वा॒ परि॑पतये गृह्णामि॒ तनू॒नप्त्रे॑ शाक्व॒राय॒ शक्व॑न॒ ओजि॑ष्ठाय ॥ अना॑धृष्टमस्यनाधृ॒ष्यं दे॒वाना॒मोजो

दभिप्रेत्योक्तम्। तनूनप्त्रे ब्रह्मणः पौत्रायेत्यर्थः। "शाक्वराय"। शक्नुवन्त्याकाशे भूतानि

(१) ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति दिव स्थाल्याः स्रुवेणेति। येन पात्रेण व्रतं प्रदीयते तत्र ध्रुवायाज्यं गृह्णीयादिति सूत्रार्थः। का० ८।१।१८-२०। (२) यद्यप्यस्य मन्त्रस्य व्याख्यान्तरं तित्तिरिव्याख्यातं, हे आज्य त्वामापतये प्राणदेवताप्रीत्यै गृह्णामि। प्राणो वा आपतिः प्राणमेव प्रीणातीति तित्तिरिः। परिपतिर्मनस्तत्प्रीत्यै। मन एव परिपतिर्मन एव प्रीणातीति तित्तिरिः। तनूं शरीरं न पातयतीति तनूनपात् जाठरोऽग्निस्तत्प्रीतये। शक्नशील:

स्थातुमिति शक्वर आकाशस्तस्यापत्यं शाक्वरो वायुस्तस्मै। "तस्माद्वा एतस्मादाकाशः संभूत आकाशाद्वायुरिति" श्रुतिः। "शक्वने"। शक्लृ शक्तौ। 'अन्येपि दृश्यन्त' इति वनिप्। शक्ताय। "ओजिष्ठाय" बलिष्ठाय। आज्यमवस्पृशन्त्यृत्विजः परस्परमद्रोहाय शपथयन्तः। "अनाधृष्टमसि"। अनाधर्षितमनुल्लङ्घितम्त्वं भवसि। हे आज्य शपथकारिभिः पूर्वमधृष्टमिदानीमप्यनाधृष्य-मनुल्लङ्घनीयं त्वं भवसि। "अनभिशस्ति"। अभिपूर्वः शंसतिर्गर्ह्यार्थे वर्त्तते। न विद्यते अभि-

न॑भिशस्त्यभिशस्तिपाऽअ॑नभिशस्तेन्न्यमञ्ज॑सासत्त्यमुप॑गेषꣳस्वि-

शस्तिर्यस्य तत्तथोक्तम्। "अभिशस्तिपाः" अभिशस्तेः पाति रक्षतीत्यभिशस्तिपाः। अनभिशस्ते प्रदेशे स्वर्गादौ नयतीति "अनभिशस्तेन्यम्"। यतस्त्वमित्थंभूतमतः त्वामभिस्पृशाः। "अञ्जसा-सत्यमुपगेषम्"। अञ्जसा प्रगुणेन मार्गेण यथास्वरूपं सत्यमुपगच्छेयम्। त्वं चानेन सत्येन

शक्वरः शक्तिमान् पुरुषस्तस्येदं शाक्वरं शक्तिस्वरूपाभिमानिदैवताप्रीत्यै। शक्वने ओजिष्ठाय। शक्वने इति चतुर्थी सप्तम्यर्थे। शक्वनि शक्तिमति यदोजिष्ठं सारं तस्मै त्वां गृह्णामीति सर्वत्र। तानूनप्त्रमेतद्दक्षिणस्यां वेदिश्रोण्यां निधा-यावस्पृशन्त्यृत्विजो यजमानश्चानाधृष्टमित्यद्रोहस्तेभ्य इति। का० ८।१।२४-२६ ॥ ५ ॥

"स्वितेमाधाः"। सु इते साधुगते कल्याणे लोके स्वर्गे मां निदध्याः॥ ५॥ आहवनीये समिधमादधाति (१)। "अग्ने व्रतपाः"। यजमानोनेन यजुषा अग्निशरीरात्मशरीरयोः व्यत्यासं करोति। "हे अग्ने व्रतपाः" ।हे अग्ने व्रतं पातिरक्षतीति व्रतपाः। व्रतमिति कर्मनाम। "त्वे व्रतपाः" अवधारणार्थं पुनः संबोधयति। त्वमेव व्रतस्य गोपायिता। तं शरणं व्रजाम इति शेषः। केन प्रकारेणेतिचेत्। "या तवतनूरियꣳसामयि"। या इयं तव तनूः सा मयि भवत्विति-

तेमाधाः ॥ ५ ॥ अग्ग्ने व्रतपास्त्वे व्व्रतपायातवतनूरियꣳसामयि

योममतनूरेषासात्वयि ॥ सहनौव्व्रतपतेव्व्रतान्यनुमेदीक्षान्दी

शेषः। "या मम तनूरेषा सात्वयि"। या चैषा मम तनूः सा त्वयि भवत्विति शेषः। एवं कृतशरीरव्यत्यययोरावयोः "सहनौव्रतपतेव्रतानि"। एकत्र आवयोः हे व्रतपते व्रतानि कर्माणि सन्त्विति शेषः। किञ्च "अनुमेदीक्षांदीक्षापतिर्मन्यताम्"। अनुमन्यतां मे मम दीक्षां दीक्षापतिः सोमः। अनुतपस्तपसस्पतिः। अनुमन्यतां च तपःशब्देन च। उपसद उच्यन्ते।

(१) अग्ने व्रतपा इत्याहवनीये समिधमाधायेति। का० ८।२।४॥ ६॥

तपस्पतिः सोमः ॥ ६ ॥ सोममाप्याययन्ति (१)। "अंठं०शुरंठं०शुः"। चतुरवसाना चतुरस्त्री-ष्टच्चारा प्रकृतिरुच्यते सौमी। चतुर्थोऽद्धर्चो लिङ्गोक्तदेवताकः। हे "सोम अंशुः"। वीप्सा। "ते तव "आपप्रायतामुपचीयताम् (२)। कस्मै "इन्द्राय"। तादर्थ्ये चतुर्थी। "एकधनविदे"। एकधनान् वेत्ति एकधनवित् तस्मै एकधनविदे (३) कथंभूतान् वेत्ति। "एकैकोंऽशुः सोमस्य

त्वापतिस्सन्न्यतामनु तपस्तपस्पतिः ॥ ६ ॥ अंठंशुरंठंशुष्टे ।

देवसोमाप्यायतामिन्द्रायैकधनविदे ॥ आतुभ्यमिन्द्रः प्याय

देवान् प्रति भक्षत्वेन गच्छन् शतमेकधनानाप्याययति दशदश वा सोमस्य इंद्रशीर्षक्ति"रिति-श्रुतिः।" (४) आतुभ्य"मिन्द्रःप्यायताम्"। आप्यायतामुपचीयताम् इन्द्रः हे सोम तुभ्यं त्वदर्थम्।

(१) यजमानषष्ठाः सोममाप्याययन्त्यंशुरंशुरिति। का० ८।२।२६। (२) चिरावस्थानतो यत्सोमास्यावयवो म्लानः शुष्कश्च तदुभयं मन्त्रेणाप्यायितं भवति। यद्देवस्य शुष्यति यन्म्लायते तदेवास्यैतेनाप्याययतीति तित्तिरिः।(३) एकं मुख्यं सोमरूपं धनं वेत्ति तस्मै, सोमकण्डनाय जलाहरणकुम्भाएकधनाः तानानीतान् जानाति तस्मै वा। (४) अनेन चोभयोरपि वृद्धिः। अतएव उभावेवेन्द्रं च सोमं चाप्याययतीति तित्तिरिः। ऋत्विजो वास्य सखाय इत्युक्ताः ऋत्वि-

उपचितोऽयमिन्द्रो बहु सोमं पिबति। "आत्वमिन्द्रायप्यायस्व"। आप्यायस्व त्वमिन्द्रार्थमात्मानम्। सोम "आप्यायय"वर्द्धय "अस्मान् सखीन्"समानख्यानान् परिचारकान्। "सन्या" धनलाभेन "मेधया" प्रज्ञया च। "स्वस्तितेदेवसोम"। स्वस्ति अविनाशः अस्तु तव हे देव सोम। अहं च "सुत्यामशीय" व्याप्नुयाम्। यद्वा स्वरत्यविनाशेन तव संबन्धिसवनं सुत्यां हे देव सोम अहं व्याप्नुयाम्। प्रस्तरे निन्हुवते (६)। "एष्टारायः"। यजतेः कृतसंप्रसारणस्यैतद्रूपं निष्ठा-

**तामात्त्वमिन्द्रायप्प्यायस्व ॥ आप्प्यायया स्मान्त्सखी न्त्सन्न्या मे धयां स्वस्तिते देवसोमसुत्त्याम शीय ॥ एष्टा रायः प्रेषे भगाय ऋत**

प्रत्यये परतो दानार्थस्य। आ इष्टा रायः मर्यादया दृष्टानि धनानि। दक्षिणाभिप्रायमेतत्। किमर्थमितिचेत् "प्रेषेभगाय"। प्रकृष्टाय इषेन्नाद्याय भगाय धनाय च। "ऋतमृतवादिभ्यः" सत्यमेतञ्चिन्तितमस्माकं भूयात्सत्यवादिनामिति विभक्तिव्यत्ययः षष्ठ्यर्थे चतुर्थी। "नमो द्यावा

(६) प्रत्येत्य प्रस्तरे निन्हुवत उत्तानहस्ता दक्षिणोत्ताना वेष्टाराय इति का॰।८।२।२९। सर्वेपि ऋत्विजः प्रस्तरे निजहस्तानुत्तानान् कृत्वा दक्षिणहस्तं वोत्तानमुपर्यवस्थाप्यनिन्हुवते सोमं परिचरन्तीति सूत्रार्थः।

पृथिवीभ्याम्"। द्यावापृथिव्योः संभोगमनुसर्वं सिध्यतीति नमस्कारः (७) ॥ ७ ॥ उपसदं जुहोति (१)। "ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे अयस्मयीमेवास्मिल्लोके रजतामन्तरिक्षे हारिणीं दिवीत्यादी"तिहास्मो निदानभूतः। "या ते अग्ने"। हे अग्ने या ते तव "अयः-शया" अयसि शेते इत्ययःशया "तनूः" शरीरम् "वर्षिष्ठा उरुतमा विस्तीर्णतमा। "गह्वरेष्ठा"

तम्म॑ त्वादि॒भ्यो॒ नम॑ो॒ द्यावा॑पृथि॒वीभ्या॑म् ॥ ७ ॥ या ते॑ऽअग्ने यः॒शया॑ त॒नूर्वषि॑ष्ठा गह्व॒रे॒ष्ठा। उ॒ग्रं वचो॒ऽअपा॑वधीत्त्वे॒षं वचो॒ऽअपा॑वधी॒त् स्वाहा॑ ॥ या ते॑ऽअग्ने रजः॒शया॑ त॒नूर्वर्षि॑ष्ठा गह्व॒रे॒ष्ठा।

निगूढदेशस्थायिनी। सा असुरसंबन्धिनी। "उग्रं वचः" उद्गूर्णं वचः जहिजहि मारयमारय इतीत्थंभूतं वचनम् "अपावधीत्" अपहन्तु "त्वेषं" दीप्तं भृष्टं बलेन ऊर्जस्वितया च युक्तमपहन्तु।

(७) द्यावा पृथिवीभ्यामेव नमस्कृत्यास्मिंल्लोके प्रतितिष्ठतीति तित्तिरिः ॥ ७ ॥

(१) उपसदं जुहति स्रुवेण यात इति। का० ८।२।२५। एवमितरे अन्वहं रजःशयां हरिशयां चेति। का० ८।१।२८ ॥ ८ ॥

हतसर्वोद्यमा निर्वीचः असुराः सन्निवर्त्यर्थः । यद्वा या तवाग्ने ऽयःशया तनूः विस्तीर्णानिगूढ-
देशस्थायिनी च उग्रं समसह्यं वचनमपहतवती दीप्तं वचनमपहतवती । सैनां पुनरपहन्त्विति
शेषः । "रजःशया" रजतशायिनी । "हरिशया" हरितसुवर्णशायिनी । एतावदुत्तरयोर्मन्त्र-
योर्विशेषव्याख्यानम् ॥ ८ ॥ चात्वालं परिलिखति (१) । "तप्तायनीमेसि" । चत्वारो मन्त्राः

उग्रं वचोऽअपावधीत्त्वेषं वचोऽअपावधीत्स्वाहा ॥ याते ऽअग्ने हरि
शयातनूर्वर्षिष्ठागह्वरेष्ठा । उग्रं वचोऽअपावधीत्त्वेषं वचोऽअ
पावधीत्स्वाहा ॥ ८ ॥* तप्तायनीमे । तप्तायनीमेसिवित्ता
यनीमेस्यवतान्मानाथितादवतान्माव्यथितात् ॥ विदेदग्नि

पृथिवीदेवत्याः । तप्त इव इत्यर्थं पुरुषोऽस्यामेतीति तप्तायनी पृथिवी । "मे" मम "असि" ।

(१) शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करं सम्वरं परिहाय शम्यामुदीचीं निदधाति पुरस्ताच्चदक्षिणतः प्राची-
मुत्तरतश्च स्फ्येनान्तर्लिखति तप्तायनीति प्रतिमन्त्रमिति, (उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वालः ।

द्वितीयं परिलिखति । "वित्तायनी" । अस्यां हि विविदानोर्थमुपलभमानः पुरुषएतीति वित्ता-
यनी । वित्तत्रात्वा भवतीति वित्तायनी "मे" मम "असि" । तृतीयं परिलिखति । "अवतात्
मा नाथितात्" । अवतु रक्षतु मां नाथितात् । नाथतिर्याच्ञार्थः । परियाचनात् । यथाहं न
याचेयं तथा पृथिवी मां करोत्वित्यर्थः । चतुर्थम् । "अवतात्" अवतु रक्षतु मां "व्यथितात्"

न्नर्भोनामाग्ग्नेऽअङ्गिरुऽआयुं नानाम्म्ने हिय्योस्याम्पृंथिव्व्यामंसिय-
त्तेनांधृष्टं नामंयज्ञियन्तेनत्वादंधेव्विदेदग्गिनर्न्नभोनामाग्ग्नेऽअ-
ङ्गिरुऽआयुंन नाम्म्नेहियोहितीयंस्यामपृथिव्व्यामसियत्तेनांधृष्टं

व्यथ दुःखभयचलनयोः । भयात् चलनाद्वा पृथिवी । चात्वाले प्रहरन्ति । "विदेदग्निः" । "स
वः अग्नीनामेव नामानि गृण्हन्हरति । यां त्वा अमू देवा अग्ने अग्नीन् होत्राय प्रवृणते-
तत्रोत्करात्पूर्वस्यां संचरपरिहारेण उदगग्रां शम्यां निधाय तत्प्रमाणां तत्पूर्वपार्श्वे स्फ्येन रेखां कुर्यात् अभ्यन्तरे एवं
दक्षिणोत्तरयोरपि प्रागग्रां शम्यां निधाय रेखाद्वयं कुर्यादिति सूत्रार्थः । विदेदग्निरिति चात्वाले प्रहरति स्फ्येनेति,
स वा अग्नीनामेव नामानि गृण्हन् हरति, अग्ने अङ्गिर इति पुरीषं प्रहरति, यो स्यामिति निवपति पूर्वार्धे प्रह्व स्वहि-

त्यादीतिहासः तदनुवादिन एते मन्त्राः। "विदेत्" जानीयात् अग्निः। कतमः। "नभः"। नभातीति नभःस्वकीयं नाम। पुरीषं हरति। "अग्ने अङ्गिरः"। हे अग्ने अङ्गिरः। "अङ्गिरा उ ह्यग्निरिति" श्रुतिः। "आयुनानाग्ने"। आयुरित्यनेन नाम्ना अभिहितः। "आ इहि" आगच्छ। निवपति। "योस्यां पृथिव्याम्"। यस्त्वमस्यां पृथिव्यां भवसि। यत्ते तव आना-

न्नामँयज्ञियन्तेन त्वादधे विदेदग्निर्नभोनामाग्ने ऽअङ्गिर ऽआयु नानाम्न्ने ह्यियस्तृतीयस्याम्पृथिव्यामसि यत्तेनाधृष्टं न्नामँयज्ञियन्तेन त्वादधे॥ अनु त्वादेववीतये॥ ६॥ सिंहृासि। सपत्

धृष्टम्" अनाधर्षितं नाम "यज्ञिय" यज्ञसंपादि तेन नाम्ना "त्वामादधे" स्थापयामि। "यो द्वितीयस्यां "पृथिव्यामसि"। पृथिवीशब्देनान्तरिक्षलोक उक्तः। तृतीयस्यां "पृथिव्यामसि"। पृथिवी-शब्देन द्युलोक उक्तः। चतुर्थं प्रहरति। "अनुत्वादेववीतये"। देवतर्पणाय अनुहरामि त्वां देववी-तये, एवं द्विरपरं द्वितीयस्यां तृतीयस्या मिति विशेषः; अनुत्वेति चतुर्थं यथार्थमाह्वयेति। का० ५।२।२०-२२॥ ६॥

तये। गौतिरर्थ्यर्थः ॥ ९ ॥ व्यूहत्युत्तरवेदिम् (१)। "सिंह्यसि"। "तेभ्यो ह वाक् चुक्रोध" इत्युपक्रम्य सिꣳही भूत्वाऽऽददाना चचार" गौतिहासो वेदिमन्त्राणां निदानभूतः। या त्वं सिꣳही भवसि। "सपत्नसाही"। सपत्नान् सोढुं शीलमस्या इति सपत्नसाही शत्रूणामभिभवित्रीत्यर्थः। सा त्वमस्माभिरनुनीयमाना देवेभ्योऽर्थाय कल्पस्व। उत्तरवेदिरूपेण क्लृप्ता भव। प्रोक्षति।

त्नसाही देवेभ्यः कल्पस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्व सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्व ॥१०॥ * इन्द्रघोषस्त्वा। इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः

"शुन्धस्व"। आभिरद्भिराप्लुता सती शुद्धा भव। सिकताः प्रकिरति। "शुम्भस्व"। शुम्भतिरलङ्कारार्थः। अलङ्कृता भव ॥ १० ॥ उत्तरवेदिं प्रोक्षति (१)। "इन्द्रघोषः"। घोष इति वाङ्-

(१) सिंह्यसीति व्यूहत्युत्तरवेदिं शम्यामात्रीमिति, प्रोक्षत्युत्तरवेदिं सिकताश्च प्रकिरति सिंह्यसीति प्रति मन्त्रमिति। का० ५।३।२२-२७ ॥ १० ॥

(१) वेद्यन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षतीन्द्रघोषः (इन्द्रशब्दे नघुष्यते विस्पष्टमुच्चार्यतेऽसः) इति प्रतिमन्त्रं प्रतिदिशं

नामस्तु पठितम् । इन्द्रस्त्वां "वसुभिः" सहितः "पुरस्तात्" गोपायतु । "प्रचेताः" प्रकृष्टज्ञानो वरुणः त्वा "रुद्रैः" सहितः "पश्चात्पातु" । "मनोजवाः" । मनोगतिर्यमः त्वां "पितृभिः" सहितः दक्षिणतः पातु । "विश्वकर्मा" । विश्वकर्मेति निगदव्याख्यातो मन्त्रः । बहिर्वेदिदेशे निषिञ्चति । "इदमहं" वेदिदेशमनेन "तप्तं" सावर्तितं "वाः" उदकम् "बहिर्धा यज्ञात्" बाह्यतो

पुरस्तात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वा

दित्यैरुत्तरतः पात्विदमहं तप्तं वार्बहिर्धा यज्ञान्निःसृजामि ॥११॥

सिᳪं ह्यसि । सिᳪं ह्यसि स्वाहा सिᳪं ह्यस्यादित्यवनिः स्वा

यज्ञात् "निःसृजामि" निक्षिपामि ॥ ११ ॥ नाभिव्याघारयति (१) । "सिᳪं ह्यसि" । "स्वा

यथालिङ्गम्, बहिर्वेदिदेशे निषिञ्चतीदमहं तप्तं वारिति । का० ५।४।११-१२ । वसुभिरष्टसंख्याकैर्गणदेवैर्युक्तः । एतैर्मन्त्रैरन्वा प्रार्थनीया । तदाह तित्तिरिः असुरावज्रमुद्यम्य देवानभ्यायन्त तामिन्द्रघोषो वसुभिः पुरस्तादपानुददिति॥११॥

(२) नाभ्याः श्रोण्यंसेषु पञ्चगृहीतं जुहोत्यवृणाया दक्षिणांसेश्रोण्यांश्रोण्यामंसे मध्ये च हिरण्यं पश्यन् सिंह्यसीति भूतेभ्यस्त्वेति स्रुचमुद्यच्छतीति । का० ५।४।१४-१५ ॥ १२ ॥

यद्देवाद: सिंह०ह्री भूत्वा शान्तेश्चचचारे”त्यादि निदानोद्घाटनं श्रौतम्। “सिंह्यसिस्वाहा”। सिंहीऽसि आदित्यवनि:”। ‘छन्दसि वनसनरक्षिमथा’मिति इन्प्रत्यय:। आदित्यादिन्वनुते सं भजत इत्यादित्यवनि:। “सिंहीऽसि ब्रह्मवनि: क्षत्रवनि:”। “सिंहीसिसुप्रजावनि:”। “रायस्पोषवनि:”। ब्रह्मक्षत्रं शोभनां प्रजां“रायस्पोष” धनपोषाम्। एतान्यादित्यवनिसमानवराख्या-

हासि ॐ ह्यसिब्रह्म वनि: क्षत्रवनि: स्वाहासि ॐ ह्यसिसुप्रजावनी रायस्पोषवनि: स्वाहासि ॐ ह्यावह देवान्यजमानाय स्वाहा भूतेभ्यस्त्वा ॥ १२ ॥ ध्रुवोसि। पृथिवीन्दृ ठंहध्रुवक्षिदस्य

नानि। “सिंहीऽस्यावह देवान् यजमानाय”। आगमय देवान् यजमानाय। स्रुचसुद्य-च्छति। “भूतेभ्यस्त्वा”। भूतशब्देन चतुर्विधो भूतग्रामोऽभिधीयते। चतुर्विधाय भूतग्रामाय। उत्पत्तये स्थितये च स्रुचमुद्यच्छामीतिशेष: ॥ १२ ॥ परिधीन्परिदधाति (१)। “ध्रुवोसि”।



(१) नाभिं पैतुदारवै: (पीतुदारुदेवदारुखदीर्यै:) परिदधाति ध्रुवोसीति प्रतिमन्त्रम्। अग्ने: पुरीषमिति वपति

यस्मादधियज्ञं "ध्रुवः" स्थिरः त्वमसि तस्मात् "पृथिवीं दृꣳह" दृढीकुरु। "ध्रुवक्षित्"। ध्रुवे नित्ये यज्ञे क्षियतीति ध्रुवक्षित्। यस्मात्त्वं ध्रुवक्षिदसि तस्मादन्तरिक्षं दृढीकुरु। "अच्युतक्षित्"। अच्युते यज्ञे क्षियतीत्यच्युतक्षित्। यस्मात्त्वमच्युतक्षिदसि तस्माद्दिवं दृढीकुरु। संभारानुपनिवपति। "अग्नेः पुरीषमसि"। अग्नेः पूरयितृ भवसि। "शरीरं ह्येवास्य पीतुदारु" इत्यादि श्रुतिः॥ सम्भाराणां शरीरपूरणात् पुरीषत्वमुपपद्यते॥ १३ ॥ सावित्रं

न्तरिक्षं दृꣳहाच्युतक्षिदसि दिवं दृꣳहाग्नेः पुरीषमसि ॥ १३ ॥ यु-

ञ्जते मनः। युञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपु

जुहोति (१)। "युञ्जते मनः"। अधियज्ञानुवादिनी सावित्री जगती यस्मात्सवित्रा प्रसूता। ऋत्विजो युञ्जते मनः मनांसि। "उत युञ्जते धियः"। अपि च। युञ्जते प्रेरयन्ति

गुग्गुलुसुगन्धितेजनवृष्णस्तुकाश्चोपरिष्टीर्षस्था अभावे न्या इति। का० ५।४।१६-१७। सुगन्धितेजनं तृणविशेषः वृष्णेःस्तुका अविरोमाणि ॥ १३ ॥

(१) अस्तितावत्प्राचीनवंशा शाला, तस्यामाहवनीयाद्यग्नित्रयमैष्टिकवेदिश्चास्ति, तस्याः शालायाः पुरतः षट्-

धियो वाचः। कथंभूता ऋत्विजः प्रेरयन्ति। "विप्राः" ब्राह्मणाः शुश्रुवांसोऽनूचानाः। "विप्रस्य"। प्राप्तक्रियाशक्तेः फलदानं प्रतियज्ञस्य कर्मणि ब्राह्मणस्य। श्रुतौ वैश्यक्षत्रियावपि यजमानावग्निष्टोमे दीक्षितोऽयं ब्राह्मण इत्युच्येते। अतस्तावपि ब्राह्मणशब्देनोच्येते। "बृहतो" महतः। "विपश्चितो" मेधाविनः सर्वस्य यज्ञस्य। किञ्च त एव सवित्रा प्रसूता ऋत्विजः। "विहोत्रादधे" विदधत इति वचनविपर्ययः। अथ होत्राः सप्त वषट्कर्त्तारो होत्रा इत्युच्यन्ते।

**श्चितः। विहोत्त्रांदधेव्वयुनाविदेकऽइन्न्महीदेवस्यसवितुःपरि**

अथ "होत्राः संयाजयन्तीति" श्रुतिः। सौत्येऽहनि सप्त होतारो वषट्कुर्वन्ति। तदेतदुच्यते। "वयुनाविदेक इत्"। वयुनं वेत्तेः कान्तिर्वा प्रज्ञा वा। इच्छब्द एवार्थे। सर्वेषामेवर्त्विजां मध्ये सवित्रा प्रसूतो ब्रह्माख्यः एक एव ऋत्विक् "वयुनावित्" त्रिवेदज्ञानान्वितो भेषज्यं करोति।

त्रिंशत्पददीर्घा सौमिकी वेदिर्विधेया, तद्वेद्या अग्रभागे पूर्वोक्तोत्तरवेदिः ततः पश्चान्मध्यभागे हविर्धानाख्यो मण्डपो विधेयः, ततोपि पश्चात्सदोभिधानोदग्वंशा शाला निर्मातव्या तस्याः स्थाने प्राचीनशालायाः पुरतो दक्षिणोत्तरभागयो-र्हविर्धानसंज्ञकेद्वे शकटे स्थापिते स्तः तच्छकटद्वयं पुरतः प्रवर्त्य तदावरकत्वेन हविर्धानाख्यो मण्डपो विधेयः,तच्छकटद्वयं

“महीदेवस्यसवितुः परिष्टुतिः”। महती देवस्य दानादिगुणयुक्तस्य सवितुः सर्वस्य प्रसवितुः परिष्टुतिः परिस्तवनम्। को हि नाम यज्ञं प्रत्यृत्विजः प्रसूय समापयति यज्ञम्। यज्ञो हि वृष्टिद्वारेण समस्तं जगद्बिभर्तीति सवितुर्महती स्तुतिरित्युक्तम् ॥१४॥ दक्षिणे वर्त्मनि हिरण्यं निधाय जुहोति(१)। “इदं विष्णुः”। गायत्री वैष्णवी। इदं जगत् विष्णुः “विचक्रमे” विक्रान्तवान्। सर्वप्राणिनो हि भूतेन्द्रियमनोजीवभावेनाविशतीति विष्णुः। किञ्च “त्रेधा निदधे पदम्”। पद्यते ज्ञायतेऽने-

## ष्टुतिः स्वाहा ॥ १४ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।

नेति पदम्। भूम्यन्तरिक्षद्युलोकेषु अग्निवायुसूर्यरूपेण त्रिधा निहितवान् पदम्। किञ्च “समूढमस्य पांसुरे”। अस्यैव विष्णोरन्यत्पदान्तरं विज्ञानघनानन्दमजममृतमक्षरमित्येवं स्व-

सावित्रहोमादूर्ध्वं प्रवर्तनीयम्। तदाह तित्तिरिः-सावित्र्या चाहुत्याहविर्धाने प्रवर्तयतीति। चतुर्गृहीतं शालाद्वार्ये जुहोति युञ्जत इति सगार्हपत्योत इति का० ८।३।२९। प्राचीनशालायाद्वारसमीपे पूर्वसिद्ध आहवनीयो वर्तते तस्मिन् जुहूयात् स-पूर्वमाहवनीयोपि सन्नुत्तरवेद्यामग्रेऽन्यस्मिन्नाहवनीये निष्पन्ने सति तदपेक्षया स्वयं गार्हपत्यो भवतीति सूत्रार्थः ॥ १४ ॥

(१) दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोति इदं विष्णुरिति। का० ८।३।३१। स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ १५ ॥

चणम्, समूढमन्तर्हितमविज्ञातमज्ञाताम्भिः। "पांसुरे"। लुप्तोपममेतत्। पांसुल इव प्रदेशे निहितं न दृश्यते तत्समूढमिति। द्रष्टव्यमिति वाक्यशेषः। तदुक्तम्। "तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्" इति ॥ १५ ॥ द्वितीयस्थानसो वर्त्मनि जुहोति(१)। "इरावती"। वैष्णवी त्रिष्टुप्। हे विष्णो यस्मात्तव प्रशासनमनुकुर्वन्त्यौ द्यावापृथिव्यौ इरावती सस्यवत्यौ "धेनुमती" धेन्वादिभिः पशुभिः तद्वत्यौ। "हि" शब्दो यस्मादर्थे। व्याख्यातः। एवं

समूढमस्यपाꣳसुरेस्वाहा ॥ १५ ॥ इरावतीधेनुमती। इरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसी

भूतां "भूतम्" अभूतामितिपुरुषव्यत्ययः। संहृते इत्यर्थः। "सूयवसिनी" शोभनयवसवत्यौ। सुसस्यवत्यौ। "मनवे" यजमानाय। "दशस्या" दात्र्यौ यज्ञसाधनानाम्। अतः कारणात्

(१) लुकस्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावतीति पूर्ववदिति। का० ८।३।३५। यथाध्वर्युणा दक्षिणशकटदक्षिणचक्रमार्गे हुतमेवं प्रतिप्रस्थात्रा उत्तरशकटोत्तरचक्रमार्गे होतव्यमिति सूत्रार्थः। (२) स्वतेजोरूपैर्नानाजीवैर्वराहाद्यवतारैर्वा महीधरभाष्ये। स्वाहा तस्मै विष्णवे हविर्दत्तम् ॥ १६ ॥

"व्यस्कभ्ना:"। स्कभ्नोति: स्तम्भनार्थ:। स्तम्भितवानसि। "रोदसी" द्यावापृथिव्यौ एते। किञ्च। "दाधर्थ" धारयसि च। पृथिवीं द्यां चेत्यध्याहार:। "अभित:"। इतस्ततश्च। "मयूखै:" रश्मिभि: (२)। यस्मात्त्वमेव प्रभावस्तस्मात्त्वां स्तुम इति शेष:॥ १६॥ पत्नी अक्षधुरावनक्ति (१)। "देवश्रुतौ"। देवा एते धुरौ शृण्वन्ति इति देवश्रुतौ। ये युवां देवश्रुतौ ते "देवेषु आघोषतम्"। घुषिर् शब्दे। आशब्दयतम्। वाचयति। "प्राचीप्रेतम्"। हे हविर्द्धाने प्राची प्राग्ञ्चले। इत्थ

दसीविष्णवेतेदाधर्त्थं पृथिवीमभितोमयूखैःस्वाहा॥ १६॥ देवश्रुतौदेवेष्वाघोषतम्प्राचीप्प्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वंयज्ञ

गतौ। प्रइत प्रेत प्रगच्छतम् "अध्वरं कल्पयन्तौ"। यज्ञं समर्थं कुर्वाणे। किञ्च "ऊर्ध्वं यज्ञं-नयतम्"। ऊर्ध्वं स्वर्गं प्रति यज्ञं नयतम्। "माजिह्वरतम्"। ह्वल चलने। मा चलनं कुरुतम्। अचलितमप्रतिष्ठिते युवां भवतम्। शब्दं कुर्वत्यनसि वाचयति। "स्वं गोष्ठम्"। हे हविर्द्धाने

(१) दक्षिणया द्वारानीता पत्नी पाणिभ्यां मेषं प्रतिगृह्याक्षधुरावनक्ति परागदेवश्रुताविति प्राचीप्रेतमिति वाचयति, स्वं गोष्ठमिति चक्रवर्तीति पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्वा वा नभ्यस्थेत्यभिमन्त्रयतेऽग्नेरमेधामिति। का०

शु० य० सं० १०३ उ० भा०

स्वमात्मीयं गोष्ठं स्थानम् "आवदत" मुच्चारयतम् । हे "देवी" दानादिगुणयुक्ते हे "दुर्ये" गृह-भूते । आमन्त्रितद्विवचनान्ते द्वे पदे । किञ्च "आयुर्मानिर्वादिष्टम्" । निरुपसर्गः कुत्सायाम् । निकृष्टमल्पं पशुधनादिरहितमायुर्मानिर्वादिष्टं मा उच्चारयतम् । "प्रजां मानिर्वादिष्टम्" । प्रजां निकृष्टाम् निस्वं शां मा उच्चारयतम् । युवाभ्यामुच्चारितं तथैव स्यादित्यभिप्रायः । नभ्यस्ते करोति ।

**ष्वं यत स्माजिंह्वरतम् ॥ स्वङ्गोष्ठमावंदतन्देवीदुर्य्ये॑ऽआयुर्मानि र्वादिष्ट्मप्र जाम्मानिर्वादिष्टम्मत्र॑ रमेथां॒ वर्ष्म॑न्पृथि॒व्याः॥१७॥**

"अत्ररमेथाम्" । अस्मिन् प्रदेशे रमेथाम्, रतिं कुरुतम् । "वर्ष्मन्" । 'नङिसंबुद्ध्योरिति नलोपाभावः । 'सुपांसुलुगिति' सप्तम्यालोपः । "पृथिव्याः" ॥ १७ ॥ दक्षिणामुपस्तभ्नाति (१) । "विष्णोर्नुकम्" इत्याद्यास्तिस्रो वैष्णव्यस्त्रिष्टुभः । द्वयोरन्ते विष्णवे त्वेति यजुः । नुकमिति

८।३।२३।८।४।५ । प्रतिप्रस्थातानीतापत्नी होमयोग्याज्ये नाक्षस्योभावग्रावनक्तीति सूत्रार्थः । खर्जति शब्दं कुर्वन्ति अक्षे । (२) पृथिव्याः वर्ष्मन् भूमिशरीरभूते देवयजने, स्तोर्णे वा ॥ १७ ॥

(१) उत्तरेण परिक्रम्य दक्षिणामुपस्तभ्नाति विष्णोर्नुकमिति, दक्षिणतः स्थूणामुपनिहन्तीति विष्णवेत्वेति ।

पृ० अ०

निपातसमाहारोऽवधारणार्थः। विष्णोरेव वीर्याणि प्रवोचं ब्रवीमि। यो विष्णुः "पार्थिवानि विममे" पृथिव्यन्तरिक्षद्युलोकानि निममे निर्मितवान्। "रजांसि"। लोका रजांस्युच्यन्ते इति रजःशब्दो लोकवचनः। किञ्च यश्च "विचक्रमाणस्त्रेधोरुगायः"। उरुगमनः "अस्कभायत्" स्तंभितवान् "उत्तरं" द्युलोकाख्यम् "सधस्थं" सहस्थानं देवानाम्। 'सधमादस्थयोश्छन्दसि'

विष्णोर्नुकं॑ वी॒र्या॑णि॒ प्रवो॑चं॒ यः पार्थि॑वानि विम॒मे र-
जाᳬंसि॥ योऽअस्क॑भाय॒दुत्त॑रᳬं स॒धस्थं॒ विच॒क्रमा॒णस्त्रे॒धोरु॑-
गा॒यो विष्ण॑वे त्वा॥ १८॥ दि॒वो वा॑। विष्ण॒ऽउ॒त वा॑ पृथि॒व्या-

तिसहशब्दस्य सधादेशः। तस्य विष्णोर्वीर्याणि प्रवोचमिति संबन्धः। स्थूणामुपनिहन्ति "विष्णवे त्वा"। निहन्मीति शेषः॥ १८॥ उत्तरस्तम्भमुपस्तभ्नाति (१)। "दिवोवाविष्णो" हे विष्णो द्युलोकात् वा "उतवापृथिव्याः" अपि वा पृथिवीलोकात्। "महोवाविष्णो उरोरन्त-

का॰ ८।४।६-७। निहन्मि निखनामि॥ १८॥

(१) दिवोवे त्युत्तरं प्रतिप्रस्थातोत्तरस्थूणं पूर्ववदिति। का॰ ८।४।९॥ १९॥

रिक्षात्" महतो वा विष्णो उरोर्विस्तीर्णाद् अन्तरिक्षलोकात् । एतेभ्यो वा त्रिभ्यो लोकेभ्यो धनमादाय अन्यतो वा यतः कुतश्चित् "उभा" उभौ "हस्तौ" वसुना धनेन "पृणस्व" आपूरय तत "आप्रयच्छ" आभिमुख्येन देहि । दक्षिणात् आउतसव्यात्" पञ्चम्याः तृतीयया व्यत्ययः । दक्षिणेन हस्तेन अपिच सव्येन हस्तेन । उभाभ्यां हस्ताभ्यामकृपणतया प्रयच्छेत्ययमभिप्रायः ।

मुहोर्वाविष्णोऽउरोरन्तरिक्षात् । उभाहिहस्ताव्वसुनापृणस्वा प्प्रयच्छदक्षिणादोतसव्व्याद्विष्णवेत्वा ॥ १६ ॥ प्रतत् । प्रत-द्विष्णुस्तवतेव्वीर्य्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्यो

विष्णवेत्वेति पूर्ववत् ॥ १६ ॥ मध्यमं छदिरालभ्य वाचयति (१) । "प्रतद्विष्णुः" । उत्तरो-र्द्धर्चः प्रथमं व्याख्यायते यद्वृत्तयोगात् । "यस्य विष्णोः "उरुषु" महत्सु "त्रिषु विक्रमणेषु" लोकेषु "अधिक्षियन्ति" उपरि निवसन्ति "भुवनानि" भूतजातानि "विश्वा" विश्वानि सर्वाणि । इदानीं प्रथमोर्द्धर्चः । "प्रतद्विष्णुः स्तवते" । स विष्णुः स्तूयते । यकः स्थाने शप्छान्दसः ।

(१) प्रतद्विष्णुरिति वाचयति मध्यमं छदिरालभ्येति । का० ८।४।१२ ॥ २० ॥

"वीर्येण" वीरकर्मणा। कथं स्तूयते। "मृगोनभीमः"। यथा मृगः सिंहः स्तूयते। भीमः। बिभेत्यस्मादिति भीमः। "कुचरः"। कुत्सितचारी प्राणिवधजीवनः। "गिरिष्ठाः" पर्वतस्थानः॥ यद्वा हीनोपमानत्वादन्यथा व्याख्यायते। सर्वैरेतैर्मृगादिभिः पदैः इन्द्रोविशिष्यते। स हि विष्णोरुपमानं भवितुमर्हति। "मृगो" न। मृजूष् शुद्धौ। यथामृष्टोपहतपाप्मा इन्द्रः। भीमो भीषणः। "कुचरः"। क्वायञ्चरतीति कुचरः। कुशब्दस्य संप्रसारणं छान्दसम्। गिरिष्ठाः। गिरि-

यस्यो॒रुषु॑ त्रि॒षु वि॒क्रम॑णेष्वधिक्षि॒यन्ति॒ भुव॑नानि॒ विश्वा॑ ॥ २० ॥

विष्णो॑र॒राट॑म् । विष्णो॑र॒राट॑मसि॒ विष्णोः॒ श्नप्त्रे॑स्थो॒

मैवः तत्र इन्द्रो हृष्टार्थं तिष्ठति। अथ कौ पृथिव्यां चरतीति कुचरः मत्स्यकूर्मादिरूपेण। अथ गिरि वेदवाक्ये तिष्ठति गिरिष्ठाः। अथ देहोपि गिरिरुच्यते। तस्मिन्नात्मत्वेन तिष्ठतीति गिरिष्ठाः॥ २०॥ रराट्यामालभ्य वाचयति (१)। "विष्णोरराटम्"। विष्णोर्यज्ञस्य ललाट-

(१) विष्णो रराटमिति रराट्याम्, विष्णोः श्नप्त्रे स्थ इत्युच्छ्रायाविति। दार्वीः परिषीव्यति—स्यूरसि, विष्णोः ध्रुवोऽसीति ग्रन्थिं करोति, प्राग्वंशं हविर्धानं निष्ठाप्य वैष्णवमस्येत्यालभते इति। का० ८।४।१५-२१। उच्छ्रायौ

27.

"मसि"। उक्तमाप्यायानुपस्थश्च वाचयति। "विष्णोः श्नप्त्रे स्थः"। विष्णोर्यज्ञस्य श्नप्त्रे सृक्किणी स्थः। ओष्ठसंधिरुच्यते श्नप्त्रशब्देन। सीव्यति। "स्यूरसि"। षिवु तन्तुसन्ताने। सीव्यत्यनेनेति स्यूः। सूचिर्वा। ग्रन्थिं करोति। "विष्णोर्ध्रुवोऽसि" ग्रन्थिरसि। समाप्तम् स्पृशति। "वैष्णवमसि" विष्णुर्देवतास्य वैष्णवम्। "विष्णवे" याय "त्वा" सुपस्पृशमीतिशेषः॥ २१॥ इतउत्तरम्

विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि ॥ वैष्णवमसि विष्णवे त्वा ॥ २१ ॥ * देवस्य त्वा । सवितुः प्रसवेऽश्विनोर्बाहु-

उपरवमन्त्राः प्राग्देवस्य त्वेत्यस्मादाम्नानात्। अभ्रिमादत्ते (१)। देवस्य त्वेति व्याख्यातो मन्त्रः।

ललाटप्रान्तदेशो। वृहत्सूचित्रमर्पितया रज्वाहारमाला: सीव्यतीत्यर्थः। हविर्धानाख्ये शकटे द्वे दक्षिणोत्तरभागयोः स्थापयित्वा तदावरकत्वेन परितः कृतो हविर्धानाख्यो मण्डपो विष्णुर्देवताकत्वाद्विष्णुरित्युपचर्यते। विष्णोश्च सर्वावयव सद्भावाल्ललाटाद्यवयवाः सन्ति हविर्धानमण्डपस्यापि पूर्वद्वारस्तम्भयोरूर्ध्वं संबद्धो माला ग्रथ्यते तां मालां तद्बन्धनाधारतिर्यग्वंशे वा संबोध्य पुरस्ताल्ललाटत्वेनोपचर्यत इति महीधरभाष्ये ॥ २१ ॥

(१) हविर्धानस्थानशोधः खनत्युपरवान्प्रादेशमात्रादिकरोत्यवटवत्, देवस्य त्वेत्यभ्रिमादाय, यूपावटं परिलिखतीदमिति,

“आददे गृह्णामि। “नार्यसि”। नारीति प्रशस्यतेऽभ्रिः। नरस्यापत्यं स्त्री नारी। परि-
लिखति। “इदमहम्”। उपरतान् परिलिखामि। “इदमहं रक्षसां” यज्ञविघ्नकारिणां “ग्रीवा अपि
कृन्तामि” छिनद्मि। यथापरिलिखितं खनति। “बृहन्नसि”। यस्मात्त्वं हे उपरस बृहन्महा-
नसि। क्रमेण परिमाणेन च। “बृहद्रवाश्च” बृहन्महत् रवो यस्येति बृहद्रवाः। तस्मात् “बृहतीं”
महतीं “मिन्द्राय वाचं वद” ॥२२॥ किं बृहतीमेव केवलां नेत्याह। “रक्षोहणम्”। रक्षांसि या वा

**भ्याम्पूष्णोहस्ताभ्याम् ॥ आददेनार्य्यसीदमहꣳरक्षसाङ्ग्रीवाऽ-**
**अपिकृन्तामि ॥ बृहन्नसि बृहद्रवा बृहतीमिन्द्रायवाचंवद ॥२२॥ रक्षो**

गपहन्ति सा रक्षोहा तां रक्षोहणम्। ‘ब्रह्मभ्रूणवृत्रेषु क्विप्’। धातूपपदकालप्रत्ययनियमान्नप्राप्नो-
तीति “बहुलं छन्दसी”ति क्विप्प्रत्ययः। “वलगहनम्”। वलगान् कृत्याविशेषान् (१) भूमौ

बृहन्नसीति यथा परिलिखितं खनतीति। ८।४।२५-८।५।७। रवस्पन्दीव सकारान्तः ॥ २२ ॥

(१) महीधरभाष्ये तु पराजयं प्राप्य पलायमानै राक्षसैरिन्द्रादिवधार्थं भूमौ निखाताः अस्थिकेशनखादिपदार्था
वलगाः कृत्याविशेषा वा इत्युक्तम्। तदाह तित्तिरिः असुरा वै निर्यन्तो देवानां वलगानन्वखनन्, तान् बाहुमात्रेऽन्वविन्दन् तस्मा-

निखनितान् शत्रुभिर्विनाशार्थं हन्तीति वलगहा वाक्। पूर्ववत्क्विप्प्रत्ययः। तां वलगहनम्। वलो हणोतेः। यस्य वधार्थं क्रियते तं रोगादिभिर्वृणान् आ प्रच्छादयन् गच्छतीति वलगः। "वैष्णवी" विष्णुदेवत्यां वाचं वदेतिसंबन्धः। उत्किरति। (२) "इदमहम्" यत्करोमि तद्वलगं कृत्याविशेषम् "उत्किरामि" उद्वपामि। "यंमेनिष्ट्यः"। यं वलगं मे मम निष्ट्यः पुत्रः। स

हणं वलगहनम्॥ रक्षोहणं वलगहनं वैष्णवीमिदमहन्तं वलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तं वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं वलगमुत्किरामि य-

हि निर्गत्य शरीरात्ततो विस्तीर्णो भवति। "यं" च "अमात्यः" वलगं निचखान निखनति। 'छन्दसि लङ्लुङ्लिटः' सर्वेषु कालेषु भवन्ति। द्वितीयमुत्किरति। "यं मे समानः"। विद्यादिभिः

बाहुमाता: खायन्ते इति। "तान् बाहुमातान् खनेदिति" श्रुतेश्चोपरवस्य तावन्मात्रखननम्। (२) इदमहमुत्कि-रतिययाखातं प्रतिमन्त्रम्. उत्कृत्यां किरामीति पश्चात्सर्वेष्व: इति। का० ८।५।८-९॥ २३॥

सदृश:। "असमान:" विद्यादिभिरसदृश:। शेषं व्याख्यातम्। तृतीयमुत्किरति। "यं मेस-
बन्धु:"। सबन्धु: स्वजन:। "असबन्धु"स्तद्विपरीत:। शेषं व्याख्यातम्। चतुर्थमुत्किरति।
"यं मे सजात:"। सजातो भ्राता स हि समानजन्मा भवति। "असजात:"। असमानजन्मा
भ्रातुरसदृश:। शेषं व्याख्यातम्। सर्वमुत्किरति। "उत्कृत्यां किरामि" उत्किरामि इत्याम्॥२३॥
यथा खातं स्पृशति (१)। "स्वराडसि"। स्वकीयमेव राज्यं यस्य स: स्वराट्। सपत्नान् शत्रून् ह-

**मे सबन्धुर्यमसबन्धुर्नि चखानेदमहं तं वलगमुत्किरामि यं मे सजातो**
**यमसजातो नि चखानोत्कृत्याङ्किरामि ॥२३॥ स्वराडसि। सपत्नहा**

न्तीति "सपत्नहा"। यस्त्वं स्वराडसि सपत्नहा च सोऽस्मानपीत्थंभूतान् कुरु इति शेष:। एवं
वत्सरसाध्येष्वपि सत्रेषु योज्वलन्। "सत्रराट्"। सत्रं द्वादशाहादि तत्र राजति सततं
वा राजति सत्रराट्। "अभिमातिहा" अभिमातिरननुकूल: शत्रु: तं हन्ति अभिमातिहा।
"जनराडसि"। जने राजति जनराट्। "रक्षोहा"। रक्षांसि हन्ति रक्षोहा। "सर्वराडसि"।

(१) स्वराडित्यभिमर्शयति यथा खातं प्रतिमन्त्रमिति। का० ८।५।१२ ॥ २४ ॥

सर्वस्य राजतीति सर्वराट्। "अमित्रहा" अमित्रान्हन्तीत्यमित्रहा ॥ २४ ॥ प्रोक्षत्येतान् (१)। "रक्षोहणः"। रक्षसां हन्तॄन् "वः" युष्मान् "वलगहनः" वलगस्य हन्तॄन् "प्रोक्षामि" सिञ्चामि "वैष्णवान्" विष्णुः देवत्यान्। अपनयति। रक्षसां हन्तॄन् "वः" युष्मान् वलगस्य हन्तॄन् प्रति "अवनयामि" अवाचीनम् अपः प्रापयामि। "वैष्णवान्"। अवस्तृणाति। रक्षसां हन्तॄन् युष्मान्

हास'त्त्वं राड'स्यभिमातिहाजनं राड'सिरक्षोहास'र्व्वं राड'स्यमित्र-
हा ॥ २४ ॥ रक्षोहणोवः। रक्षोहणोवोवलगहनः प्रोक्षामि
वैष्णवान्रक्षोहणोवोवलगहनोवनयामिवैष्णवान्रक्षोहणोवो

(१) प्रोक्षत्येतान् रक्षोहण इति, भेदे मन्त्रावृत्तिः,(तस्य मन्त्रस्य गर्तभेदे पुनरावृत्तिः) अवनयनेऽवस्तरणेचावट-वद्रक्षोहणोरक्षोहण इति, (अवनयनं प्रोक्षणशेषोदकसेचनं) तन्नूनुपरिकुर्वान् शुलाधिषवणे फलकेव्द्रग‍ङ्गुलान्तरे प्रक्षालिते प्राचो अरत्निमात्रे संहते वोपदधाति पर्यूहति च रक्षोहणौ रक्षोहणाविति, तयोश्चर्माधिषवणं परिकृत्तं सर्वरोहितं निदधाति वैष्णवमसीति, (यस्मिंश्चर्मणि सोमोऽभिपूर्यंतेतच्चर्माधिषवणम्) तस्मिन् ग्रावाणः पञ्चवैष्णवाः स्थ इति का० ८।५।२३-२७ ॥ २५ ॥

वलगस्य च हन्तॄन् प्रति अवाचीनान्दर्भान् स्तृणामि वैष्णवान्”। अधिषवणे फलके उपदधाति। रक्षसां हन्तारौ “वां” युवां वलगस्य हन्तारौ उपदधामि स्थापयामि “वैष्णवी” विष्णुदैवत्ये। पर्यूहति रक्षोहणौ वां पर्यूहामि परिप्रापयामि। संलग्ने करोमि। व्याख्यातमन्यत्। तत्राधिषवणं चर्म निदधाति। “वैष्णवमसि”। विष्णुदेवत्यमसि। तस्मिन् ग्रावाणः पञ्च। “वैष्णवाः स्थ”।

**व्वलगहनोऽवस्तृणामि वैष्णवान्रक्षोहणौ वां व्वलगहनाऽउप दधामि वैष्णवी रक्षोहणौ वां व्वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवा स्थ ॥२५॥ देवस्य त्वा। सवितुः प्रसवेऽश्विनोर्बाहु**

विष्णुदेवत्या भवथ ॥ २५ ॥ इत उत्तरमौदुम्बरीमन्त्राः। अभ्रिमादत्ते (१)। “देवस्य त्वेति” व्याख्याते द्वे यजुषी। यवानावपति। “यवोऽसि”। यु पृथग्भावे। यौतीति यवः। यस्माद्यवन-

(१) औदुम्बरीं मिनोति यजमानमात्रीं यूपवच्छ्रेत्यादिकरोत्यावस्तरणात्, देवस्य त्वेत्यभ्रिमादाय, यूपवटं परिलिखतीदमहमिति, यवोऽसीत्यप्सु यवानोप्य, प्रोक्षत्यग्रमध्यमूलानि, देवस्य त्वेति प्रतिमन्त्रं प्रोक्षामीति सर्वं व्याकाङ्क्ष-लात्, बर्हींषि प्रत्यदिक्षि च प्रास्यति पितृषदनमसीति। का० ८।५।२०-६।२।१७। अत्र खननेनोत्पन्नस्य क्रौर्यस्य शान्तये

शु० य० सं० १०८ उ० आ०

५ अ०

क्रियायोगाद्यव इत्येतन्नामात्वमभूः। तस्मात् "यवय इति पृथक्कुरु" "अस्मत्" अस्मत्तः "द्वेषो"ऽप्रीतिः दौर्भाग्यम्। "यवय अरातीः" अदानानि। सौभाग्यं दानं च प्रार्थ्यते। औदुम्बरीं प्रोक्षति। "दिवे त्वा"। दिवेऽर्थाय त्वां प्रोक्षामीति शेषः। "अन्तरिक्षाय त्वा पृथिव्यै त्वा"। प्रथमेन यजुषा व्याख्याते यजुषी। अवटशेषमासिञ्चति। "शुन्धन्तांल्लोकाः"।

भ्यां॑म्पूष॒णो हस्ता॑भ्याम्॥ आद॑देनार्य॑सी॒दम॒हꣳरक्ष॑सां ग्री॒वा ऽअपि॑कृन्तामि॥ यवो॑ऽसि य॒वया॒स्मद्द्वेषो॑ य॒वयारा॑तीर्दि॒वे त्वा॒ऽन्तरि॑क्षाय त्वा पृथि॒व्यै त्वा॒ शुन्ध॑न्तांल्लो॒काः पि॑तृ॒षद॑नाः पितृ॒षद॑नमसि ॥ २६ ॥

शुन्धन्तामिति विकरणव्यत्ययः। दिवादिभ्यः श्यन्प्राप्नोति न भवति। पितरो येषु लोकेषु सीदन्ति आसते "पितृषदनाः"। बर्हिषि प्राश्यति "पितृषदनमसि"। पितर एषु सीदन्तीति पितृषदनम् ॥ २६ ॥ उच्छ्रयति (१)। "उद्दिवꣳ स्तभान"। दिवं द्युलोकं स्तम्भय। "आऽन्त-

पितृ० १०८

उदकसेचनम्। तदाह तित्तिरिः। क्रूरमिव वा एतत्करोति यत्खनति यत्पयोऽवनयति शान्त्यै तदिति ॥ २६ ॥

(१) उद्दिवमित्युच्छ्रयति, (ऊर्ध्वाग्रं स्थापयति) द्युमतान इति मिनोति, पर्यूहणाद्युदकसेचनान्तं कृत्वा,(पर्यूहणादि

रिक्षं पृण” । पृ पालनपूरणयोः । आपूरय आपूरयान्तरिक्षम् । “दृंहस्व पृथिव्याम्” । द्विती-
यार्थे सप्तमी । दृढीकुरु पृथिवीम् । यद्वा पृथिव्यामवस्थितां पृथिवीं दृढीकुरु । मिनोति ।
“द्युतानः त्वा” । द्युतानो दीप्यमानः त्वां “मारुतो” वायुः “मिनोतु” । डुमिञ् प्रक्षेपणे ।
प्रक्षिपतु । “मित्रावरुणौ” च मिनुतां “ध्रुवेण” स्थिरेण “धर्मणा” धारणेन । पर्यूहति । “ब्रह्म-

उदिवम् । उदिवꣳस्तभानान्तरिक्षम्पृण दृꣳहस्व पृथिव्यान्द्यु
तानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्म्मणा ॥ ब्रह्मवनि
त्वा क्षत्रवनि रायस्पोषवनि पर्य्यूहामि ॥ ब्रह्म दृꣳह क्षत्रं दृꣳह

वनि” । ‘छन्दसि वनसनरक्षिमथाम्’ इतीन् प्रत्ययः । ब्रह्म वनोति ब्रह्मवनि । अविभक्तिको निर्देशः ।
क्रियाविशेषणतया पर्य्यूहणविशेषणतया वा नपुंसकलिङ्गत्वम् । ब्रह्मवनि त्वाम् क्षत्रवनित्वाम् ।

आद्रव्यसेचनान्तं कुर्वीत्यर्थः) ब्रह्मवनित्वेति पांसुभिः पर्यूहति, ब्रह्मदृंहेति मैत्रावरुणदण्डेन समन्तं खनिः पर्यूषति इति ।
का० ८।५।२४-६।३।११ ॥ २७ ॥

२८.

छत्रं करोतित्युत्तरानि । एवं "रायस्पोषवनि त्वाम्, "धनपोषवनि त्वां पर्यूहामि । ऊह वितर्को परिपूर्वः सूत्रार्थः । पर्यूषति । "ब्रह्मादीनि हढीकुरु दृ॰ह । ब्रह्मा इति व्याख्यातम् ॥ २७ ॥ आलभ्य वाचयति (१) । "ध्रुवासि" । यथा त्वं ध्रुवासि स्थिरासि एव "अयं यजमानो" ध्रुवः शाश्वतः "अस्मिन्नायतने" अस्मिल्लोके "प्रजया" वा "पशुभिर्वाभूयात्" । विशाखे जुहोति ।

हायुर्दृ॰ह प्रजां दृ॰ह ॥ २७ ॥ ध्रुवासि । ध्रुवोयं यज-मानोस्मिन्नायतनेप्रजयापशुभिर्भूयात् । घृतेनद्यावापृथिवी-पूर्वैथामिन्द्रस्यछदिरसिविश्वजनस्यछाया ॥ २८ ॥ परित्वा ।

"घृतेनद्यावापृथिवी" । घृतेनानेन हे द्यावापृथिव्यौ युवां पूर्य्येथाम् । सदसि छदिरधि निदधाति । "इन्द्रस्य छदिः" असि । सर्वजनानां छाया । "विश्व गोत्रा ह्यस्मिन् ब्रह्मणा आसत" इति

(१) ध्रुवासीति वाचयत्यौदुम्बरीमालभ्य, स्रुवेण विशाखेजुहोति घृतेन, इन्द्रस्य छदिरिति मध्यमं छदिरारोप्यति । का० ८।५।२५-९।१० । औदुम्बरीनिखनोर्ध्वं सदोनामकं मण्डपं विधाय तस्योपरिआवरणाय मध्यं कटमारोपयेदिति सूत्रार्थः ॥ २८ ॥

स्तुतिः ॥ २८॥ परिश्रयति "परि त्वा"। अनुष्टुबैन्द्री। अनिरुक्ता। परिभवन्तु परिगृह्णन्तु त्वां हे "गिर्वणः"। "इन्द्रो वै गिर्वा" इति श्रुतिः। "गिरो" वाचः इमा ऋग्यजुःसामलक्षणाः "विश्वतः" सर्वतः। कथंभूतं त्वां परिगृह्णन्तु। "वृद्धायुम्" वृद्धा आयवो मनुष्या ऋत्विग्लक्षणा यस्य स तथोक्तः। यद्वा वृद्धायुरिति समानाधिकरणः। वृद्धश्चायुश्च महामनुष्य इत्यर्थः। "अनुवृद्धयः"। सवनक्रमे-

गिर्वणोगिरंऽइमाभंवन्तुविश्वतंः ॥ वृद्धायुमनुवृद्धंयोजुष्टांभवन्तु जुष्टंयः ॥ २९ ॥ इन्द्रंस्यस्यूरसि। इन्द्रंस्यध्रुवोसि ॥

णानुवृद्धा वाचः। किञ्च "जुष्टा भवन्तु" त्वां परिगृह्णानाः त्वया परिसेविता भवन्तु। प्रीति-करा "जुष्टयः" ॥२९॥ परिषीवनग्रन्थिकरणाऽभिमर्शनानि सदसः(१) इन्द्रोपलक्षितानि भवन्ति।

(१) परित्वेति परिवार्येति—का० ८।६।१२। गीर्भिःस्तुतिभिर्भजनीयो गिर्वणा इन्द्रः। अनुवृद्धयः। प्रातरादि-सवनक्रमेण प्रवृद्धस्वराः ॥ २९ ॥

(१) परिषीवणग्रन्थ्यभिमर्शनान्यैन्द्रेरिति। का० ८।६।१३। हे रज्जो त्वमिन्द्रस्य सदोभिमानिदेवस्य "स्यूः" सीव-नमसि। हे ग्रन्थे त्वमिन्द्रसम्बन्धी भूत्वा स्थिरो भव। हे सदस्त्वमिन्द्रसंबन्धी भवसि। हविर्धानापरान्तं (वायव्यकोणं)

आग्नीध्रं स्पृशति। "वैश्वदेवमसि" ॥ ३० ॥ अत उत्तरं षोडशधिष्ण्य मन्त्राः (१)। तत्र श्रुतिः। "ते वै द्विनामानो भवन्तीति"। आग्नीध्रं "विभूरसि प्रवाहणः"। विभवतीति विभूः प्रवाहयति गमयतीति प्रवाहणः। तस्य हि दक्षिणत उत्तरस्य ऋत्विजो गच्छन्ति। यस्त्वं विभूर्नामतः प्रवाहणश्चासि तं त्वां स्थापयामीतिशेषः। एवमुत्तरेष्वपि योज्यम्। होतु-

ऐ॒न्द्रम॑सि वैश्वदे॒वम॑सि ॥ ३० ॥ वि॒भूर॑सि । प्र॒वाह॑णो॒ वह्नि॑रसि हव्य॒वाह॑नः ॥ श्वा॒त्रो॑ऽसि॒ प्रचे॑तास्तु॒थो॑ऽसि वि॒श्ववे॑दाऽ-

उत्तरेणाग्नीध्रमध्यागारद्वारमन्तर्वेद्यर्धं भूयः स्थ वा निष्ठाप्य वैश्वदेवमसीत्यालभते इति। का० ८।६।१४ ॥ ३० ॥

(१) धिष्ण्याग्निवपत्युत्तरावीक्षते पुरीषं निवपति यजमानोऽन्वारब्ध उदङ् उपविश्य विभूरसीति प्रतिमन्त्रमिति, (अङ्गारास्पदा अग्निर्मिताः स्वल्पवेदिका धिष्ण्याः।) आग्नीध्रीयं पूर्वम्, सदसि प्रत्यङ्मुखो द्वारमपरेण होतुर्धिष्ण्य-पूर्वं चौदुम्बरीं मैत्रावरुणस्य होतृधिष्ण्यमुत्तरेण चतुरः समानान्तरान् ब्राह्मणाच्छंसिपोतनेष्ट्रच्छावाकानामिति। का० ८।६।१५-२१। तुथशब्देन देवानां दक्षिणा विभागकर्ता [पुरुषः]। तुथो ह वै विश्ववेदा देवानां दक्षिणा विभजतीति तैत्तिरिः ॥ ३१ ॥

धिष्ण्यम् । "वह्निरसि हव्यवाहनः" । प्रशास्तुः । "श्वात्रः" । आशु क्षिप्रम् अततीति श्वात्रः । "प्रचेताः" प्रकृष्टज्ञानः । ब्राह्मणाच्छंसिनः । "तुथोसि विश्ववेदाः" । "ब्रह्म वै तुथ" इति श्रुतिः । विश्ववेदाः सर्वज्ञः सर्वधनो वा ॥ ३१ ॥ पोतुः । "उशिगसि कविः" । वश कान्तौ । तस्य कृतसम्प्रसारणस्योशिक् । कान्तोसि । "कविः" क्रान्तदर्शनः । नेष्टुः । "अङ्घारिरसि बम्भारिः" । अंहः शब्दः पापवचनः । तस्य हकारस्य घकारश्छान्दसः । तस्यारिः अङ्घारिः । बम्भारिः ।

**उशिगसि ॥ ३१ ॥ उशिगसि । कविरङ्घारिरसि बम्भारिरवस्यूरसि दुवस्वाञ्छुन्ध्यूरसि मार्जालीयः सम्राडसि कृशानुः परिषद्योसि**

डु,धाञ् डु,भृञ् धारणपोषणयोः । भर्त्ता (१) । अच्छावाकस्य । "अवस्यूरसि दुवस्वान्" । अवसन्नं तदिच्छतीति क्विप् । ऊप्रत्यय औणादिकः । स हि पुरोडाशशकलमिच्छति । दुवस्वान् । दुव इति हविर्नाम । दुवस्वान् हविष्मान् । अच्छावाको हि पुरोडाशशकलं लभते । मार्जा-

(१) द्यावेतौ दिवि सोमरक्षकौ । (२) आग्नीध्राद्दक्षिणां संप्रति वेद्यन्तं दक्षिणामुखो मार्जालीयमिति. सदोद्वारं पूर्वेण तिष्ठन्. अनुदिश्यत्याहवनीयमभिहिक्षवमानदेयचालालमाभिलौदुम्बरीवृभ्याणमाबादानमजहिताम् संम्राडसीति प्रति-

लीयः "शुन्ध्युरसि"। शोधनः मार्जालीयः। शुन्ध्यू शुद्धौ। तत्र हि पात्राणि प्रक्षाल्यन्ते। इत उत्तरमनुदिशति आहवनीयम्। "सम्राडसि"। सम्राट् संगतदीप्तिः "कृशानुः" कृशो यजमानः पयोव्रतेनयज्ञीयाः एतमनुगच्छतीति कृशानुः बहिष्पवमानदेशः। "परिषद्योसि पवमानः"। परिषदनीयः उद्गात्रादिभिः पवमानः। प्रस्तिद्वा चात्वलम्। "नभोसि प्रतक्वा"

पर्वमान॒ नभो॑ऽसि॒ प्रत॒क्वा मृ॒ष्टो॑ऽसि हव्य॒सूद॑न ऋ॒तधा॑मासि॒ स्व॒

न भातीति नभः। यद्वा नभ आकाशः आकाशरूपः। प्रतक्वा। तक्वतिर्गत्यर्थः। प्रदक्षिणमेनं तक्वन्ति निर्गच्छन्ति ऋत्विजः। शामित्रदेशः। "मृष्टोसि हव्यसूदनः"। मृष्टो मृष्टकारी। अत्र हविर्मृष्टं भवति। हव्यसूदनः। सूदः सूपकार उच्यते। हविषः पक्ता। औदुम्बरी। "ऋतधामासि स्वर्ज्योतिः"। ऋतो यज्ञस्तस्य धाम स्थानं जन्म वा। तत्र हि उद्गातारो

मन्त्रम्, इति। का० ८।६।२२।२३। अग्नीदारस्य पूर्वभागे स्थित्वाहवनीयादीन् सम्राडसीत्याद्यष्टमन्त्रैः क्रमेण निर्दिशे-दित्ति सूत्रार्थः ॥ ३२ ॥

यज्ञस्य कारणभूतास्तिष्ठन्ति जनयन्ति वा यज्ञम्। "स्वर्ज्योतिः"। आदित्यज्योतिः ॥ ३२ ॥
ब्रह्मासनम्। "समुद्रोऽसिविश्वव्यचाः"। समुद्र इव त्वमसि सर्वव्यञ्जनः। तव हि समुद्र इव
अगाधो ज्ञानेन ब्रह्माधितिष्ठति। विश्वं च यज्ञं च व्यञ्चति कृताकृतप्रत्यवेक्षणेन। शाला-
द्वार्यम्। "अजोऽस्येकपात्"। अजः। अज गतिक्षेपणयोः। अजनः अयमेवाहवनीयादि-
भावेन अजनि गच्छति। "एकपात्"। एकः प्राजहितः(१)। एकं पाति एकपात्। यज्ञानुगतस्त-

ज्ज्योतिः समुद्रोऽसि ॥ ३२ ॥ समुद्रोऽसि। विश्वव्यचाऽअ-
जोऽस्येकपादहिरसिबुध्न्योव्वागस्यैन्द्रमसि सदोऽस्यृतस्यद्वारौमामा

सन्तापुप्रियते। प्राजहितम्। "अहिरसिबुध्न्यः"। अहिः। अयनः शालाद्वार्यादिभिर्भावैरिति।

(१) वागसीति सदोऽभिमर्शनम्, ऋतस्य द्वाराविति द्वार्ये, अभिमन्त्रणमुत्तरैरध्वनामधेयपत इति। का० ८।८।२२-२५।
(२) प्राजहितशब्देन पत्नीशालापश्चिमभागवर्ती पुरातनो गार्हपत्योऽग्निरुच्यते। अजोऽस्येकपात् इत्यनेन आहवनीय-
रूपेण यज्ञप्रदेशे गच्छतीत्यजोऽग्निः परब्रह्मरूपेणोच्यते, एवमेकः पादः सर्वाणि भूतानि यस्येति "पादोऽस्य विश्वा-
भूतानी"ति श्रुति प्रतिपाद्यत्वमुपचर्यते इति वा ॥ ३२ ॥

वृभ्रमादित्यच्यते तत्र भवो वृभ्रः। स हि प्रथमं मथ्यते। नाम्नैवात धिष्ण्यानां स्तुतिः। उक्तं च। स्तुतिस्त्वनाम्ना वाथ कर्मरूपैः। सदोभिमृशति। "वागस्यैन्द्रमसि"। वाचास्मिन् कुर्वन्तीति वाक् शब्देनाभेदोपचारेण सदोऽभिधीयते। "ऐन्द्रमसी"तिदेवताभिप्रायं सदोसीति नामवुग्रत्यभिप्रायम्। सीदन्त्यस्मिन् ब्राह्मणा इति सदः। द्वार्यौ। "ऋतस्यद्वारौ"। ऋतस्य यज्ञस्य ये युवां द्वारौ द्वारदेशस्थायिनौ ते मां "मा सन्ताप्तम्"। सन्तापस्य प्रवेशनिष्क्रमणास्खलनाभिप्रायः।

सन्तांप्तमद्ध्वंनामध्वपतेप्रमांतिरस्वस्तिमेस्मिन्पथिदेवयाने भूयान्निमुत्तस्यमा ॥ ३३ ॥ मित्रस्यमा। चक्षुषेक्षद्ध्वमग्नयः

अभिमन्त्रयत्युत्तरैः। सूर्यमभिमन्त्रयते। "अध्वनाम्"। हे सूर्य "अध्वपते" मार्गपते। अध्वनां संचाराणां मध्ये वर्त्तमानमितिशेषः। "प्रमातिरः" वर्द्धयस्व माम्। संचारेण हि गच्छतो वृद्धिर्भवत्येव। किञ्च त्वत्प्रसादात् "स्वस्ति" अविनाशः "मे" मम "अस्मिन् पथि" मार्गे "देवयाने" देवयानप्रापके भूयात् भवेत् ॥ ३३ ॥ ऋत्विजः (१)। "मित्रस्यमा"। मित्रस्यादित्यस्य

(१) मित्रस्येत्यृत्विजः, अग्नयः सगरा इति धिष्ण्यानिति। का० ८।८।२६-२७।

"चक्षुषा" मा "मीत्तध्वम्"। मित्रस्य हि शान्तं चक्षुः। धिष्ण्यान्। "अग्नयःसगराः"। गृ स्तुतौ। हे अग्नयः सगराः समानगराः समानस्तुतयः। ये यूयं समानस्तुयो भवथ ते "सगरेणनाम्ना" समानस्तुतिनाम्नाभिहिताः सन्तः। "समानं हि नाम धिष्ण्या इति। ते वै द्विनामनो भवन्ती"ति द्विनामता च। "रौद्रेण" "रुद्रदेवत्येन" अनीकेन मुखेन (२) "पात" पालयत मा "मा"म्। हे "अग्नयः पिपृत"।

सगराःस्सगरास्थसगरेणनाम्नारौद्रेणानीकेनपातमाग्नयः
पिपृतमाग्नयोगोपायतमानमोवोस्तुमामाहिंसिष्ट ॥ ३४ ॥*

पूरयत धनैर्माम्। हे "अग्नयः गोपायत" रक्षत माम्। किञ्च हे अग्नयः "नमोवोस्तु"। अयं नमस्कारो वो युष्मभ्यं भवतु। "मामाहिंसिष्ट"। तृहि हिंसि हिंसायाम्। मा हिंसिष्ट माम्। यदत्र पुनरुक्तं तदभ्यासेन भूयांसमर्थं मन्यन्त इति परिह्रियते ॥ ३४ ॥ पृषदाज्यं गृह्णाति (१)।

(२) अनीकं सैन्यं तेन वा। अनीकं मुखं सैन्यं चेति महीधराः ॥ ३४ ॥

(१) ध्रुवायाः पुरस्तात्पृषदाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति समिदन्तेन प्रदीप्तमिध्मं त्वं सोमेति, जुष्टाथो-सु रिति द्वितीयामिति, ५।७।२६-८।७।१-२ ॥ ३५ ॥

29.

"ज्योतिरसि"। यथा त्वं ज्योतिरसि आज्यत्वात् यथा च "विश्वरूप" वैचित्र्यात्त्वमसि। एवं "विश्वेषांदेवानांसमित्" समिन्धनमसि। वैसर्जिनानि जुहोति। "त्वं०सोम"। सौमी गायत्री अनवसानीया। हे सोम त्वं "तनूकृद्भ्यः"। कृती छेदने। तनूः शरीरम्। तत्कृन्तन्ति छिन्दन्ति ये वृकादयः ते तनूकृतः तेभ्यः गोपायेत्येतदध्याक्रियते। "द्वेषोभ्योन्यकृतेभ्यः"। यानि च द्वेषांसि अन्यकृतानि दुर्जनकृतानि तेभ्यश्च गोपाय। यतस्त्वं "उरुयन्तासि" बहुप्रकारं

ज्योतिरसि। विश्वरूपं विश्वेषान्देवानाꣳसमित्॥ त्वꣳसोमतनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यऽउरुयन्तासिवरूथꣳस्वा

नियन्तासि नियामकोसि। किञ्च "वरूथ" गृहं च यत्स्वरूपं मे गोपाय। यद्वा तन्वा शरीरेण क्रियन्ते यानि द्वेषांसि अन्यकृतानि पुत्रदारप्रभृतिभिः कृतानि तेभ्यो गोपायेत्युत्तरम्। द्वितीयं जुहोति। "जुषाणः"। एकपदा विराट् अप्तुर्देवत्या। अप्तुश्चात्र सोमः। जुषाणः सेव्यमानः प्रीयमाणो वा। अप्तुः। आप्नोति तूर्णं पीतः सन् शरीरमित्यप्तुः सोमः। "आज्यस्य

वेतु पिबतु ॥ ३५ ॥ वाचयति (१)। "अग्नेनये"ति द्वे आग्नेय्यौ त्रिष्टुभौ। हे भगवन्नग्ने नय प्रापय "सुपथा" शोभमानेन मार्गेण। "राये" धनाय यज्ञफलाय। "अस्मान् विश्वानि" सर्वाणि। "देव" दानादिगुणयुक्त। "वयुनानि" प्रज्ञानानि प्रकृष्टज्ञानानि "विद्वान्" जानानः। न हि ते विज्ञानशक्तीनां प्रमाणमस्तीत्यभिप्रायः। किञ्च "युयोधि"। यु पृथग्भावे। पृथक्कुरु।

होञ्जु षा णोऽअ प्तुराज्ज्यं स्यव्वे तुस्वाहा ॥३५॥ (शतम् २००) अग्ने नय। सुपथाराये ऽअस्म्मान्विश्श्वानिदेवव्वयुनानिव्विद्वान्। युयो

"अस्मत्" मत्तः। "जुहुराणमेनः"। हृर्छा कौटिल्ये। हृर्छतेः'सनोलोपश्चे'त्यौणादिकेन सूत्रेण सिद्धिः। हृर्छितुमिच्छतीति कुटिलीकर्तुमिच्छतीति। यत् "एनः" पापम् अभिलषितक्रिया-प्रतिबन्धि बत्पापम्। किं कारणमिति चेद् "भूयिष्ठां" बहुतमाम् "ते" तव। "नम उक्तिं विधेम"। नम इति अन्ननाम। वच परिभाषणे। अस्य स्त्रियां क्तिन् उक्तिर्भणनम् नमसा

(१) अग्ने नयेति वाचयति। का० ८।७।१६ ॥ २६ ॥

शु० य० सं० ११४ उ० भा०

हविर्लक्षणेन । पुरोनुवाक्यायाज्यावचनं नमउक्तिः तां नमउक्तिं विधेम । दधातिः करोत्यर्थः करवाम ॥ ३६ ॥ आग्नीध्राय जुहोति (१) । "अयन्नः" । अयमग्निः नः अस्माकम् । "वरिवः" धनं "कृणोतु" करोतु । अयमेव च "मृधः" संग्रामान् "प्रभिन्दन् पुरएतु" अग्रतो यातु । अयमेव च "वाजान्"न्नानि "जयतु" । "वाजसातौ" । अन्नस्य भजनसेवने निमित्तभूते ।

ध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम ॥ ३६ ॥ अ-
यन्नः । अयन्नोऽअग्निर्वरिवस्कृणोत्वयम्मृधःपुरएतुप्रभिन्दन् ॥
अयंव्वाजाञ्जयतुव्वाजसातावयꣳशत्रूञ्जयतुजर्हृषाणःस्वाहा ॥३७॥
उरुविष्णो । उरुव्विष्णोव्विक्क्रमस्वोरुक्षयायनस्कृधि । घृतंघृत-

अयमेवच "शत्रून् जयतु जर्हृषाणः" । हृष तुष्टौ । अत्यर्थं हृष्यन् तुष्यन् ॥ ३७ ॥

(१) उत्तरेण सदो हुत्वाग्निं निदधाति ग्रावद्रोणकलशसोमपात्राणि चायं न इति जुहोत्यस्मिन्निति । का० ८।७।९ ॥ ३७ ॥

धु० अ० मिवम ११४

आहवनीये जुहोति (१)। "उरुविष्णो"। वैष्णव्यनुष्टुप्। हे विष्णो यज्ञ उरु महत् विक्रमस्व" व्याप्नुहि। देवयानाभिप्रायंत्रिलोकाभिप्रायं वा। "उरु"विस्तीर्णंशरीरान्"क्षयाय"संनिवासाय। महत् ब्रह्म गृहनिवासाय। "नः" अस्मान्"कृधि"कुरु। 'उरुक्षयो निवास' इति आद्युदात्तत्वात् क्षयशब्दो निवासवचनः। किञ्च "घृतं पिब घृतयोने" अग्ने। अग्निर्यस्यै योनिरसृज्यत तस्यै

योनेपिबप्रप्रयज्ञपतिन्तिरस्वाहा ॥ ३८ ॥ देवसवितः। देवस वितरेषतेसोमस्तꣳरक्षस्वमात्वादभन्। एतत्त्वन्देवसोमदेवोदे

घृतसुत्वमासीदितिश्रुतिः। "प्रप्रयज्ञपतिं तिर"। 'प्रसमुपोदः पादपूरणे' इत्यभ्यासः। तिरतिर्वृद्ध्यर्थः। प्रतिर प्रवर्द्धय यज्ञपतिं यजमानं पुत्रपश्वादिभिः ॥ ३८ ॥ सोमं निदधाति (१)। "देवसवित."। हे देवसवितः अयं तव "सोमः" समर्पितः "तं रक्षस्व" गोपाय। "मात्वा-

(१) उरुविष्णाविति जुहोति। का० ८।७।१५। पूर्वेणाग्नीध्रीयेहोमोऽनेनाहवनीये इति विवेकः ॥ ३८ ॥

(२) दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन् सोमं निदधाति देवसवितरिति, एतत्त्वमिति विसृज्योपतिष्ठते, स्वाहा-

शु० य० सं० ११५ उ० श्रा०

दभन्"। तस्मिन् त्वयकर्मणि प्रवृत्तं त्वां मा अनुदहन्नुयु:। दभ् नोतिवर्धकर्मा। यजमान उप-तिष्ठते।"एतत्त्वं देव"हे देव"सोम एतत्त्वं देवः सन्"देवानुप अगाः" उपआगतवानसि। अभिन-येन दर्शयति।"इदमहं मनुष्यान्"। उपगच्छेयमित्यनुषङ्गः।"सहरायस्पोषेण"सहितो धनपोषेण। उपनिष्क्रामति। "स्वाहानिर्वरुणस्य"। स्वाहा स्वः अहमिति निगृह्यवचसा। अनेन देवानां

वार्ँ॥ उपांगाऽइदम् हम्मनु ष्यान्त्सहरायस्पोषेणस्वाहानि र्वरुणस्य पाशान्मुच्येय॥ ३९॥ अग्ने व्रतपाः। अग्ने व्रत

सोमप्रदानेनात्मानं निष्क्रीयस्व आत्मीयोऽहमस्मि अस्माद्धेतोर्निर्मुच्ये निर्मुक्तोऽहं "वरुणस्य" "सर्वस्मिनः" पाशात्। यद्वा सुकृतः सोमस्तु अहं त्विदानीमेव वरुणस्य पाशान्निर्मुच्ये॥३९॥ समिधमादधाति (१)। "अग्ने व्रतपाः"। यजमानोऽग्निशरीरेणात्मशरीरस्य हतत्वत्वयोऽग्न-निरिति निष्क्रम्य। का० ।८।७।१७-१९॥ ३९ ]

५ अ०

विवस्

११५

(१) अग्ने व्रतपा इत्याहवनीये समिधमाधायेति। का० ८।२।४॥ ४०॥

स्तनकर्मकलापं कृत्वाथेदानीं स्वस्वं शरीरेणानुकुर्वाण आह। "अग्ने व्रतपाः त्वे व्रतपाः या तव तनूः"। व्रतपाशब्दस्यामन्त्रितस्याभ्यासः। अभ्यासे भूयांसमर्थं मन्यन्त इत्यतिशयार्थः। त्वे इति द्वितीयार्थे शेप्रत्ययः। हे अग्ने अतिशयेन व्रतस्य त्वं गोपाः अतस्त्वां ब्रवीमि या तव संबन्धिनी तनूर्मयि अभूत्। अभिनयेन दर्शयति। "एषा सा त्वयि" भवतु। "यो मम तनूः"।

अग्ने॑ व्रतपास्त्वे॑ व्रतपा या तव॑ तनूर्मय्यभू॑देषा सा त्वयि॒ यो मम॑ त॒नूस्त्वय्यभू॑-दि॒यꣳ सा मयि॑ ॥ य॒था॒य॒थं नौ॑ व्रतपते व्र॒तान्यनु॑ मे दी॒क्षां दी॒क्षाप॑ति॒रम॒ꣳस्तानु॒ तप॒स्तप॑स्पतिः ॥ ४० ॥* उ॒रु वि॒ष्णो। उ॒

"या तु मम तनूः" त्वयि अग्ने अभूत् इयं सा मयि भवतु। किञ्च "यथायथं नौ व्रतपते व्रतानि"। यथायथं यथास्वं यथात्मीयम् आवयोः हे व्रतपते अग्ने व्रतानि कर्माणि सन्तु। किञ्च "अनु मे दीक्षां दीक्षापतिरमꣳस्त"। अन्वमंस्त अनुमतवान् मे मम दीक्षां दीक्षापतिः सोमः। "अनुतपस्तपस्पतिः"। अनुमतवांश्च तपः उपसदः तपस्पतिः तपसः पतिः सोमः तपःप्रधान-

शु० त्वात् तपःशब्देनोपसद उच्यन्ते ॥ ४० ॥ यूपाहुतिः (१)। "उरुविष्णो"। व्याख्यातम् ॥ ४१ ॥
य० अभिद्रवति यूपम् (१)। "अत्यन्यान्"। अतीत्यान्यान्। यूपलक्षणलक्षितान् वृक्षान्। "अगाम्"
सं० त्वां प्रत्यागतः। "नान्यान् उपागाम्"। भवन्तं च दृष्ट्वा न अन्यान् यूपवृक्षान् उप अगाम्।
११६
उ० तव्वि॑ष्णो॒ विक्र॑मस्वो॒रु क्षया॑य नस्कृधि। घृतं घृ॑तयोने पिब॒ प्रप्र॑
भा० य॒ज्ञप॑तिन्ति॒र स्वाहा॑ ॥ ४१ ॥ अत्य॒न्याँ२ ऽअ

उप आगतवानस्मि। किन्तु "अर्वाक्त्वापरेभ्योविदन्"। ये त्वत्तः परांश्चो वृक्षास्तेभ्यस्त्वामवीक्
अविदम्। विदिर्लाभार्थो ज्ञानार्थो वा। लब्धवानस्मि ज्ञातवान्वा। "परः" परस्ताच्च "अव
रेभ्य" स्त्वाम् अविदमित्यनुवर्त्तते। "तं त्वां लक्षण्यं जुषामहे"। सेवामहे। "देववनस्पते"।

(१) अहेषु यूपाहुतिं (यूपं छेत्तुं गमिष्यन् यज्जुहोति सायूपाहुतिः) जुहोति चतुर्गृहीतां स्रुवेण वीरु विष्णो-
वितीति। का० ६।१।२-४ ॥ ४१ ॥

(२) आज्यमेवसादाय स तत्रागच्छति यूपमभिगम्य त्वन्यानिति,प्राङ्तिष्ठन्नाभिमन्त्रयते वा इति स्रुवेणोपस्पृशति।

प० अ० विषम ११६

देव दानादिगुणयुक्त वनस्पते । "देवयज्यायै" । देवयागाय । किञ्च देवास्त्वां भवन्तं देवयागाय जुषन्तां सेवन्ताम् । उपस्पृशति । "विष्णवेत्वा" । तादर्थ्ये चतुर्थी । विष्णवे यज्ञाय त्वाम् उपस्पृशामीतिशेषः । कुशतरुणमन्तर्दधाति । "ओषधेत्रायस्व" । व्याख्यातम् । प्रहरति ।

गान्नान्याँ२ ॥ ऽउपागामर्वाक्त्वा परेभ्योऽविदम्परोवरेभ्यः । तन्त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्तां विष्णवे त्वा ॥ ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥ ४२ ॥ द्यां मा । द्यां मा लेखीरन्तरिक्षं मा हिꣳसीः पृथि

"स्वधितेमैनꣳहिꣳसीः" । व्याख्यातम् ॥ ४२ ॥ पतन्तमभिमन्त्रयते (१) । "द्यांमालेखीः" लिख अक्षरविन्यासे । इह तु हिंसार्थः । द्युलोकं मा हिंसीः "अन्तरिक्षं मा हिंसीः ।

विष्णवेत्वेति, ओषधे इतिकुशतरुणं तिरस्कृत्य, स्वधित इति परशुना प्रहरतीति । का० ६।१।५।१३ ॥ ४२ ॥

(१) द्यां मालेखीरितिपतन्तमभिमन्त्रयते, अतस्त्वमित्वाव्रश्चने जुहोति यूपे वा । का० ६।१।१६-१८ ॥ ४३ ॥

पृथिव्यास्त्वं भव" । संगतो मन्त्र । वज्ररूपत्वात् यूपस्य लोकानां शान्तिराशास्यते । कस्मात्त्वमेव-- मुत्रास्ते द्यांसाल्लेखीरित्यत आह "अयं ही"ति । हिशब्दो यस्मादर्थे । यस्मादयं त्वां"स्वधितिः" वज्ररूपः कुठारः "तेतिजानः" । तिज निशाने । द्रुह तु हिंसार्थः । उत्सहमानः । "प्रणि- नाय" प्रणयति । "महतेसौभगाय" । सुभगो यज्ञः तस्य हि महदैश्वर्यं विद्यते शोभनं

व्व्यासम्भं व ॥ अयर्ठ० हित्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय । अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयर्ठ० रुहेम ॥ ४३ ॥ इतिसंहितायां पञ्चमोऽध्यायः ।

च । स्वार्थे अण् । महते यज्ञायेत्यर्थः । सौभागाय वा । स्थाणौ जुहोति । "अतस्त्वम्" । हे "देववनस्पते" अतः अस्मात् स्थाणोस्त्वं शतवल्शः" बह्वङ्कुरः शतशाखो विरोह" । वयं च "सहस्रवल्शाः" बह्वङ्कुराः पुत्रपौत्रादिभिः । "विरुहेम" । प्रजायेमहीत्याशीः ॥ ४३ ॥

इति उव्वटकृतौ मन्त्रभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

भारद्वाजोपनाम्ना श्रीगोविन्दविदुषा कृते ॥ अफाणीत्यपञ्चमोऽध्यायो मन्त्रभाष्यस्य टिप्पणे ।

अभ्रिमादत्ते (१) । "देवस्य त्वा" । परिलिखति । "इदमहम्" । यवानावपति । "यवोऽसि" । प्रोक्षति "दिवे त्वा" । शेषमासिञ्चति । "शुन्धन्तांल्लोकाः पितृषदनाः" । दर्भान् क्षिपति । "पितृ-षदनमसि" । एतानि षड् यजूंषि व्याख्यातानि ॥ १ ॥ प्रथमशकलं प्रास्यति (१) । "अग्रेणी-

ॐम् ॥ देवस्य॑ त्वा । सवि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णो ह॒स्ताभ्या॑म् । आद॑दे नार्य॒सीद॒म॒हꣳ रक्ष॑सां ग्री॒वा अपि॑ कृन्तामि । यवो॑ऽसि य॒वया॒स्मद्द्वेषो॑ य॒वयाराती॑र्दि॒वे त्वा॒न्तरि॑क्षाय त्वा पृथि॒व्यै त्वा॒ शु-

ॐ पञ्चमेऽध्याये सौमिकवेदिप्रधाने आतिथ्यादियूपनिर्माणान्तमन्त्रा व्याख्याताः, अथ षष्ठे यूपसंस्कारमारभ्य सोमाभिषवोद्योगपर्यन्ता मन्त्रा व्याख्यायन्ते ॥ (१) देवस्येत्यभ्रिमादाय यूपावटं परिलिखतीदमहमिति । यवोऽसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रं प्रोक्षामीति सर्वत्र साकाङ्क्षत्वादवटे शेषमासिञ्चति शुन्धन्तामिति बर्हींषि प्राच्युदग्राणि च प्रास्यति पितृषदनमसीति । का० ६।२।८-२।१५-१८ ॥ १ ॥

---

*देवस्यत्वाषड्वावीरञ्चिपंचमाद्भिः षट्संज्ञेतिस्रः समुद्रं गच्छद्वाविंशतोर्द्विर्यौद्विर्देवेभ्यापंचदेवस्यत्वाष्टावष्टौचप्रविंठ • यत् । (अनु)

रसि"। अग्रे प्रथमं यूपस्य छिद्यमानस्यापनीयत इत्यग्रेणीः यूपावयवभूत इत्यर्थः। यद्वा अग्रेऽवस्थितो यूपमवटं प्रति नयतीत्यग्रेणीः पुरःसर इत्यर्थः। यस्त्वमग्रेणीरसि। "स्वावेश-मुन्नेतृणाम्"। ऊर्ध्वं नेतृणामध्वर्यूणां स्वावेशः। ते ह्येनमस्मिन्नूपावटे सुखेनावेशयन्ति स्थापयन्ति स हि लघुप्रमाणो भवति। स त्वं हे यूपशकल "एतस्य वित्तात्"। विद ज्ञाने। एतस्य कर्मणो विद्धि। विदितार्थो भव। कतमं तत्कर्म चेत्। "अधि त्वा स्थास्यति"। अधी-

न्धर्न्तांल्लोकाः पितृषदंनाः पितृषदंनमसि ॥ १ ॥ अग्रेणीरंसि ॥ स्वावेशऽउन्नेतृणामेतस्यं वित्तादधिंत्वास्त्थास्यतिदेवस्त्वांसविता

युपरिभावमैश्वर्यं वा। अधि उपरि यूपस्त्वां स्थास्यति। यूपमनक्ति। अञ्जू व्यक्तिम्रक्षण-कान्तिगतिषु। "देवस्त्वा"। देवः त्वां हे यूप "सविता मध्वा"। मधुस्वादेन आज्येन "आनक्तु" म्रक्षयतु। चषालं प्रतिमुञ्चति। "सुपिप्पलाभ्यः"। पिप्पलं फलम्। शोभनफलाभ्यः ओष-धीभ्यो"र्थाय त्वाम् प्रतिमुञ्चामीति वाक्यशेषः। उच्छ्रयति। "द्यामग्रेण"। यूपस्य महिमो-

च्यते। "द्यां" द्युलोकम् "अग्रेण अपस्पृक्षः" स्पृष्टवानसि। "आ अन्तरिक्षं मध्येनाप्राः"। प्रा पूरणे। आ अप्राः। आ पूरितवानसि अन्तरिक्षं मध्येन। "पृथिवीम् उपरेण"। उपरमित्यधस्तनेन प्रदेशेन, यूप इत्यपरशब्देन तेन प्रदेश उच्यते यूपस्य। "अदृंहीः"। दृढीकृत-

मद्धा॑नक्तु सुपिप्पुलाभ्य॒स्त्वौष॑धीभ्यः॥ द्यामग्रे॑णास्पृक्षुऽआ

न्तरि॑क्षुम्मध्ये॑नाप्प्राः पृथिवीमुप॑रेणादृ॑ꣳहीः॥ २॥ याते॑। याते

धामा॑न्युश्मसि गम॑ध्यै यत्त्र गावो भूरि॑शृङ्गाऽअयास॑:॥ अत्राह

वानसि ॥ २ ॥ मिनोति (१)। "यातेधामानि"। ऋ मिञ् प्रक्षेपणे। त्रिष्टुप् यूपदेवत्या। यूप उच्यते। यानि ते तव संबन्धीनि धामानि। स्थानजन्मज्योतिर्वचनो वा धामशब्दः।

(१) प्रथमशकलं चाग्रे णीरसि, (यूपावटे प्रथमशकलं निःक्षिपेत्) देवस्त्वेत्यनक्ति, चषालमुभयतोक्तं प्रतिमुञ्चति सुपिप्पलाभ्य इति, द्यामग्रेणेत्युच्छ्रयतीति। का० ६।२।२-७॥ २॥

(१) यात इति मिनोति, ब्रह्मवनित्वेति पांसुभिः। का० ६।३।८-११॥ ३॥

स्थानानीहाभिप्रेतानि। “उश्मसि”। कामयामहे। “गमध्यै गमनाय। यानि त्वदीयानि स्थानानि कामयामहे वयं गमनायेति यच्छब्दयोगादिह तदनुप्रयोगो भवितुमर्हति। तत्र तेषु स्थानेषु “गावः” रश्मयः “भूरिशृङ्गा” बहुदीप्तयः। ज्वलन्नामसु” शृङ्गाणीति पठितम्। “अयासः” अयनाः गन्तारः। “अत्राह तदुरुगायस्य विष्णोः”। अत्रशब्दस्तत्रशब्दस्यार्थे परोक्षत्वात्। अह इति विनिग्रहार्थीयः। तत्र चैतद् उरुगायस्य बहुगतेर्विष्णोः सम्बन्धि परम-

तदुरुगायस्य विष्णोः परमं पदमव भारि भूरि। ब्रह्मवनिं त्वा क्षत्रवनिं रायस्पोषवनिं पर्यूहामि॥ ब्रह्म दृꣳह क्षत्रं दृꣳह आयुर्दृꣳह प्रजां दृꣳह॥ ३॥ विष्णोः कर्माणि। पश्यत यतो

मुत्कृष्टं पदमादित्यमण्डलाख्यमर्वाचीनं “भारि” भाति। तकारस्य स्थाने छान्दसो रेफः। “भूरि” बहुप्रकारम्। पांसुभिः पर्यूहति। “ब्रह्मवनि त्वा”। व्याख्यातम्। पर्यूषति। “ब्रह्म दृꣳह”। व्याख्यातम्॥ ३॥ वाचयति (१)। “विष्णोः कर्माणि”। द्वे गायत्र्यौ वैष्णव्यौ।

(१) विष्णोः कर्माणीति वाचयति यूपमन्वारब्धमिति। का० ६।३।१२॥ ४॥

हे ऋत्विजः विष्णोः यज्ञस्य कर्माणि वीर्याणि पश्यत । "यतः" । तस्मिन्प्रकरणे 'आद्यादिभ्य उपसंख्यानं वक्तव्यम्' । यतो येर्वीर्यैः । "व्रतानि" । व्रतमिति कर्म नाम । आधानपशुसोम-प्रभृतीनि कर्माणि आत्मनि "पस्पशे" । स्पश बन्धने । बद्धवान् । विष्णुर्हि अधिष्ठात्री देवता यज्ञानाम् । यद्वा "विष्णोर्वीर्य्याणि पश्यत" । येर्वीर्यैस्तानि व्रतानि कर्माणि अग्निवायुसूर्याणां स्थानि स्थानप्रमत्ताः एतानि कुरुतेत्येवं पस्पशे निबद्धवान् । किञ्च यश्च विष्णुः "इन्द्रस्यसखा"

**व्र॒तानि॑ पस्प॒शे ॥ इन्द्र॑स्य॒ युज्य॒ः सखा॑ ॥ ४ ॥ तद्विष्णो॑ः ।**

वृत्रवधादिषु कर्मसु । कथं भूतः सखा । "युज्यः" । युजिर् योगे । योगार्हः अनुरूप इत्यर्थः ॥४॥ चत्वालमुदीच्यते (१) । "तद्विष्णोः" । तदः प्रतियोगिनाच पूर्वं यदुक्तेन भवितव्यम् । यद्विज्ञानघनबहुलमानन्दस्वभावं "च" तद्विष्णोः परमं पदं सदापश्यन्तिसूरयः" पण्डिताः । वेदान्तज्ञानरहस्यविस्तृतसंपुटाः । कथं भूतं पदं पश्यन्ति । "दिवीव" द्युलोकमध्यगत-मिव । "चक्षुः" । आदित्यमण्डलम् । "आततम्" विततम् विस्तारितम् । चक्षुःशब्देना-

(१) तद्विष्णोरिति चत्वालमीक्षमाणमिति । का० ६।३।१२ ॥ ५ ॥

तत्रापि मण्डलमुच्यते। "चक्षुर्मित्रस्य वरुणस्याग्नेः"। "तच्चक्षुर्देवहितमि"ति च। यद्वा। यद्वृत्तसंबन्धो द्वितीयोऽर्द्धर्चः प्रथमः क्रियते। परमपदशब्देनादित्य उच्यते। इवस्त्वानर्थकः तद् दिवि चक्षुरादित्याख्यं विततं तद्विष्णोः परमं पदं तृतीयं सदा पश्यन्ति पण्डिता अधियज्ञविदः ॥ ५ ॥ परिव्ययति(१)। "परिवीरसि"। वेञ् संवरण इत्यस्य क्तप्रत्ययार्थे क्विपि संप्रसारणम्। अस्माभिः परिवीतः परिवारितः परिवेष्टितो वा त्वमसि। अतः परिव्ययन्तां त्वां हे यूप।

पर॒मम्प॒दꣳ सदा॑ पश्यन्ति सू॒रय॑ः॥ दि॒वी᳖व॒ चक्षु॒रात॑तम् ॥५॥ परि॒

वीर॑सि। परि॒ वीर॑सि॒ परि॑ त्वा॒ दैवी॒र्विशो॑ व्ययन्ता॒म्परी॒मं यज॑

"दैवीर्विशः"। "दैव्यो वा एता विशो यत्पशव" इति श्रुतिः। त्वत्प्रसादाच्च "परिव्ययन्ताम्" परिवारयन्तु इमं यजमानं "रायो" धनानि। "मनुष्याणाम्" मनुष्याणां मध्ये। निर्द्धारणे षष्ठी।

(१) त्रिगुणात्रिव्यामा कौशी रशना तयानाभिपात्ले त्रिवृतं परिव्ययति परिवीरसीति, यूपशकलमस्यामवगूहन्नुपरेणाग्निष्ठां दिवः सूनुरसीति, वर्षिष्ठाद्दक्षिणं वितष्टं द्वादशं निदधात्येषतद्वति। का० ६।३।१५-१७-२२ ॥ ६ ॥

स्वरूमवगूहति" "दिवः सूनुरसि"। द्युलोकस्य त्वं सूनुः पुत्रोऽसि। द्युलोकाद्वर्षति तस्माद्यूपो जायते यूपात्स्वरुरित्यनया प्रणालिकया दिवः सूनुः स्वरुः। द्वादशमुपशयस्तं निदधाति। "एषते पृथिव्याम्"। एष ते तव पृथिव्यां लोकः आश्रयः स्थानमित्यर्थः। "पशवे यूपमुच्छ्रयन्तो" तिश्रुतिः। यूपस्य पशुना भवितव्यमित्यत आह। आरण्यस्तव पशुः॥ ६॥ तृणमादत्ते (१)। "उपावीरसि"। उप समीपे अवस्थितः अवति रक्षति उपावीः। द्वितीयः

मान ठं॰ रायोमनु षष्ठ्यागाम्॥ दिवः सूनुरस्येषते पृथिव्याँल्लोकऽ आर ण्यस्तेप शुः॥ ६॥ * उपावीरसि। उपावीरस्युप देवा

सखा त्वमसीत्यर्थः। पशुमुपस्पृशति। "उपदेवान् उपागुः" उप गच्छन्तु देवान् प्रति। "दैवीर्विशः"। "दैव्यो वा एता विशो यत्पशव" इति श्रुतिः। कथं भूतान्देवान्। "उशिजः" मेधाविनः। "वह्नितमान्" वोढृतमान्। वहन्ति हि ते यजमानं स्वर्गं प्रति कामयमानभावमुपगच्छन्तः हे "देवत्वष्टः वसुरम"। पशुलक्षणं वसु रमय। णिज्लोपश्छान्दसः।

(१) उपावीरसीति तृणमादाय; तेनपशुमुपस्पृशत्युपदेवानिति॥ का॰ ६।३।१९-२०॥ ७॥

3.I.

"हव्या ते स्वदन्ताम्"। एवं त्वष्टारमुक्त्वा अथेदानीं पशुमाह। "हव्या" हवींषि "ते" त्वदीयानि "स्वदन्ताम्"। ष्वद ष्वर्द आस्वादने। णिचो लोपः। आस्वादयन्तु देवा इति शेषः ॥ ७ ॥ "रेवतीरमध्वम्"। लिङ्गव्यत्ययः। हे रेवन्तो धनवन्तः पशवो रता भवत। त्वमपि "बृहस्पते" धारय निश्चलीकुरु "वसूनि" पशुलक्षणानि। पशुं बध्नाति। "ऋतस्य त्वा"। ऋतस्य यज्ञस्य

न्दैवीर्विशः प्रागुरुशिजो वह्नितमान् ॥ देवं त्वष्टर्वसु रम हव्या ते स्वदन्ताम् ॥ ७ ॥ रेवतीरमध्वम्। रेवतीरमध्वं बृहस्पते धारया वसूनि ॥ ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामि धर्षा मा-

"पाशेन "त्वा" त्वां हे "देव हविः" पशो "पाशेन प्रतिमुञ्चामि"। प्रतिपूर्वो मुञ्चिर्बन्धने वर्त्तते। बध्नामि। एवं पशुं संबोध्याथ मनुष्यस्य शमितादेः समर्पयति। "धर्षा मानुषः"। धर्षेति विकरणव्यत्ययश्छान्दसः। प्रथमपुरुषस्य स्थाने मध्यमः। धृष्णोतु शक्नोतु शमयितुं

(१) द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वान्तरामृङ्गमभिदक्षिणं बध्नात्यृतस्यत्वेति। का० ६।३।२६ ॥ ८ ॥

मानुषः । यद्वा यस्माद् ऋतस्य यज्ञस्य त्वां हे देव हविः पाशेन प्रतिमुञ्चामि बध्नामि तस्माद्-
इष्णोतु त्वां मानुषः ॥ ८ ॥ यूपे बध्नातिपशुम् (१) । "देवस्य त्वा" । व्याख्यातः । अग्नी-
षोमाभ्यां जुष्टमभिरुचितं "नियुनज्मि" निबध्नामि । पशुं प्रोक्षति । "अद्भ्यस्त्वौषधीभ्यः" । हे
पशो अद्भ्यः त्वामारभ्य ओषधीभ्यश्च आरभ्य आदितः सर्वं संपद्यते । "अग्नीषोमाभ्यां" त्वां जुष्ट-

नु॑षः ॥ ८ ॥ दे॒वस्य॑ त्वा । स॒वि॒तुः प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्याम् । अ॒ग्नीषोमा॑भ्यां॒ जुष्टं॒ नियु॑नज्मि ॥ अ॒द्भ्यस्त्वौष॑धीभ्यो॒ऽनु॑ त्वा॒ मा॒ता म॑न्यता॒मनु॑ पि॒तानु॒ भ्राता॒ सग॑र्भ्यो॒

मभिरुचितं पशुं प्रोक्षामि मेध्यं करोमि । अमुमेवार्थं स्तुत्या स्पष्टयति । "इदं हि यदावर्ष-
त्यथोषधयो जायन्ते" इत्यादिकया । "अनुत्वे"तिव्याख्यातम् । इह त्वेवं संबन्धः । अद्भ्य
आरभ्य अग्नीषोमाभ्यां त्वां जुष्टं प्रोक्षामि हे पशो प्रोक्षमाणं त्वां मात्रादयोऽनुमन्यन्ता-

(१, देवस्यत्वेति यूपे, अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षति । का० ६।३।२७-३० ॥ ९ ॥

मिति ॥ ९ ॥ आसे उपगृह्णाति (१)। "अपांपेरुः"। अपां पानशीलस्त्वमसि हे पशो। अधस्तादुप्रोक्षति। "आपोदेवीः"। आपो देव्यः "स्वदन्तु" आस्वादयन्तु "उत्तचरन्त्वेन" पशुम्। को गुण इति चेत्। "स्वात्तं चित्सद्देवहविः"। आस्वादितं हि सत् शोभनं देवानां हविः पशुलक्षणं भूयात्। पशुं समनक्ति। "सन्तेप्राणाः"। सङ्गच्छतान्ते प्राणाः "वातेन"

नुसखास्य त्वयाह॥अग्नीषोमाभ्यान्त्वा जुष्टम्प्रोक्षामि ॥ ९ ॥

अपाम्पेरुः। अपाम्पेरुस्यापोदेवीः स्वदन्तुस्वात्तञ्चित्सद्देवहविः ॥

सन्तेप्राणोवातेनगच्छताᳶसमङ्गानियजत्रैःसंयज्ञपतिराशि-

हे पशो। "समङ्गानियजत्रैः"। संगच्छतां हे पशो तवाङ्गानि यजत्रैः यागैः। "संयज्ञपतिराशिषा"। संगच्छतां यज्ञपतिर्यजमानः आशिषा यज्ञफलेन स्वर्गशाखाभ्याम् ॥ १० ॥

(१) अपां पेरुरित्यास्य उपगृह्णाति, आपोदेवीरित्यधस्तादुपोक्षति, उत्तरमाघारमाघार्य पशुं पूर्वं समनक्ति विपर्यासानाटां श्रोणिषु सन्त इति प्रतिमन्त्रमिति। का० ६।३।२१-२२-६।४।२॥ १०॥

पशोर्ललाटमुपस्पृशति (१)। "घृतेन"। स्वरुशासावुच्येते। घृतेनाक्तौ म्रक्षितौ भवन्तौ युवां "पशून्"। पूजनार्थं बहुवचनम्। पशुं "त्रायेथां" पालयेथाम्। यजमानं वाचयति। "रेवति।" वाग्वै रेवती। हे वाक् रेवति धनवति। "यजमाने प्रियं धा आविश"। अस्मिन् यजमाने प्रियमभिप्रेतं धाः धेहि आविश च यजमानम्। "उरो" महतो "न्तरिक्षाच्च" गोपायेति शेषः।

षां ॥ १० ॥ घृतेनाक्तौ। पशूँस्त्रायेथाᳬं रेवति यजमाने प्रियं धा आविश ॥ उरोरन्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव। वर्षो वर्षीयसि यज्ञे यज्ञपतिं धाः स्वा

"सजूर्देवेन वातेन"। समानप्रीतिः देवेन वातेन भूत्वा। किञ्च "अस्य" पशुलक्षणस्य "हविषः त्मना यज"। आत्मना यज। 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः। "समस्य तन्वा भव"। संभव चास्य पशोः तन्वा शरीरेण। एतदुक्तं भवति यजमानरूपेण पशुरूपेण वात्मना भूत्वा-

(१) स्वरुमादायाक्तौ भौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति; रेवति यजमान इति वाचयति, पराक्तु पशुपास्यति वर्षोवर्षीयसीति, देवेभ्यः स्वाहेति जुहोति। का० ६।४।१२-२४ ॥ १३ ॥

तमनैव यज हे देवति। पश्चात्त्वमुपास्यति। "वर्षोवर्षीयसि"। त्वमुच्यते हे वर्षोवर्षप्रस्रव। अथवा त्रिस्तोर्थी "वर्षीयसि" विस्तीर्णतरे यज्ञे यज्ञपतिं यजमानं धाः" धेहि। जुहोति। "स्वाहादेवेभ्यः"। जुहोति। "देवेभ्यः स्वाहा"। द्वे यजुषी॥ ११॥ नियोजनीं चात्वाले प्रास्यति। "माहिर्भूः"। रज्जुरुच्यते। मा सर्पाकारा भूदाः "मा" च "पृदाकु" भूयाः। पृदाकुरजगरः। पत्नी पशुं प्रतिनयन्वाचयति। "नमस्त आतान"। पत्नी नमस्कारादिराशिभिर्यज्ञं

हान्देवेभ्यो देवेभ्यः स्वाहा॥ ११॥* माहिर्भूः। माहिर्भूर्मा पृदाकुर्नमस्तऽआतानानर्वाप्रेहि। घृतस्य कुल्याऽउप ऋत-

पूजयति। नमस्तव हे "आतान" यज्ञ। "यज्ञो वा आतानो यज्ञं हि तन्वत" इति श्रुतिः। "अनर्वाप्रेहि"। अनर्वा अप्रत्यृतोऽन्यस्मिन् अनाश्रितोऽन्यस्मिन् "प्र इहि "प्रेहि" प्रगच्छ आसमाप्तेः। "घृतस्य कुल्याउप"। कुल्या नद्यः। घृतनदीरुपतिष्ठमानाः प्रेहि। बहुघृत-

(१) वपाश्रपण्योभ्यां नियोजनी चात्वाले प्रास्यति, माहिर्भूरिति, पान्नेजनहस्तां (पान्नेजनं पादक्षालनं तदर्थं यः कलशस्तद्धस्तां पत्नी) वाचयति नयन्नमस्त आतानेति। का० ६।५।२६।६।६।१॥ १२॥

त्यमभिप्रायः। "ऋतस्य पथ्या अनु"। ऋतस्य यज्ञस्य पथ्याः। पथिभवाः पथ्याः घृत-कुल्याः। सन्नाज्यपृषदाज्यकुल्योपलक्षणार्थं घृतकुल्याग्रहणम्। "अनुप्रगच्छ" ॥ १२ ॥

एवं यज्ञं स्तुत्वाथेदानीमपः प्राह। हे देव्यः "आपः शुद्धाः" सत्यः "वोढ्वम्" वहत वहध्वम्। "सुपरिविष्टाः" साधु सर्वतो निविष्टाः "पान्ने" जनीपाले देवेषु पशुं प्रापयतेति सम्बन्धः।

तस्य पथ्याऽअनु ॥ १२ ॥ देवीरापः। देवीरापः। शुद्धा वो-ढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा वयम्परिवेष्टारो भूयास्म ॥ १३ ॥ वाचन्ते। वाचन्ते शुन्धामि प्राणन्ते शुन्धामि च

किञ्च वयं "सुपरिविष्टाः" देवेष्वितीहाप्यनुवर्त्तते। देवेषु मध्येऽवस्थिताः तैरेव सुपरिविष्टा देवैः तेषामेव देवानां मध्यतः परिवेष्टारो भूयास्म" वयमित्याशीः ॥ १३ ॥ पशोः प्राणान् शुन्धयति पत्नी यथालिङ्गम्। "वाचं ते शुन्धामि"। वाचं तव शोधयामि "उदकेन" उन्दनेन।

(१) पशोः प्राणाच्छुन्धति पत्नी (मृतस्य पशोर्मुखादीन्यष्टौ प्राणायतनानि प्रतिमन्त्रं शोधयति) मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान् संहृत्य वाचं ते शुन्धातीति प्रतिमन्त्रम्। का० ६।६।२-३ ॥ १४ ॥

शु० य० सं० १२४ उ० भा०

एवं सर्वत्र व्याख्येयम्। मेढ्रशब्देन शिश्नमुच्यते। पायुशब्देन ह्रदनप्रदेशः। चरित्रशब्देन पादाः। सुपरिचरन्ति गच्छन्त्येभिरिति चरित्राः। चरित्रशब्देन पादा उच्यन्ते॥ १४॥

अध्वर्युयजमानौ पशुमाप्याययतः (१)। "मनस्ते"। मनस्ते तव "आप्यायतां" हे पशो। एवं

त्त्वँस्ते शुन्धामि श्रोत्रन्ते शुन्धामि नाभिन्ते शुन्धामि मेढ्रन्ते शुन्धामि पायुन्ते शुन्धामि चरित्राँस्ते शुन्धामि॥ १४॥ मनस्त ऽआप्यायतां वाक् त ऽआप्यायताम्प्राणस्त ऽआप्यायताञ्चक्षुस्त ऽआप्या

वागादीन्यपि व्याख्येयानि अङ्गानि। "यत्ते क्रूरम्"। यत् तव हे पशो क्रूरं विकृतमशान्तं वा। यच्चावकृत्तम् "आस्थितम्" अधस्ताद्गृसितम् शमित्रा यत्र स्थितः शमितेत्यर्थः। तत् आप्या-

(१) अत्रेषा यजमानश्च शिरः प्रभृत्यनुपिञ्चतो मनस्त इति। शिर इति, (यजमानश्चेति चकारादध्वर्युश्च) यत्ते क्रूरमित्यङ्गानि, शमहोभ्य इति पश्चात्पशोर्निषिञ्चति, उत्तानं पशुं कृत्वाग्रेण नाभिं तृणं निदधात्योषधइति (नाभ्यग्रे ङ्गुलचतुष्टये तृणं निदध्यात्) स्वधित इति प्रज्ञातया (प्रस्तुतया कृतचिह्नया घृताक्तयासिधारया) अभिनिधाय (तृणोपरितां निधाय) छिनत्ति। का० ६।६।४-९॥ १५॥

६ अ० षिणम १२४

यताम्"। "निष्ट्यायताम्"। ष्ट्यै संघाते। संहतं भवतु संहननं भवतु। "तत्तेशुध्यतु"। तच्च तव शुद्ध्यतु। जवनेन पशुमुदकं निनयतः। "शमहोभ्यः"। शं सुखम् अहरादिभ्यः कालविशेषेभ्यः, अस्माकमस्त्विति शेषः। यद्वोवो अहरादिभ्यः सुखं भवतु। अग्रेण नाभिं तृणं निदधाति। "ओषधेत्रायस्व" व्याख्यातः। प्रज्ञातयाभिनिदधाति। "स्वधितेमैनम्"।

यताँव्वाक्तऽआप्प्यायताम्प्राणस्तऽआप्प्यायताञ्चक्षुस्तऽआप्प्यायताँ श्रोत्रन्तऽआप्प्यायताम्॥ यत्ते क्रूरं यदास्थितं तत्तऽआप्प्यायतान्निष्ट्यायतान्तत्ते शुध्यतु शमहोभ्यः॥ ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः॥ १५॥ रक्षसाम्भागः। रक्षसाम्भागोसि निर-

व्याख्यातः॥ १५॥ "रक्षसां भागः"। व्याख्यातम्। अपास्यति (१)। "निरस्तꣳरक्षः"।

(१) अग्रं मध्ये कृत्वा दक्षिणेन मूलमुभयतोनक्ति लोहितेन रक्षसामिति, निरस्तमित्यपास्यति, इदमहमित्य भितिष्ठति यजमानः, वपामुत्खिद्य वपाश्रयण्यौ प्रोर्णौ घृतेन द्यावा पृथिवी इति, तथाग्रन्याध्वर्युर्वायो वेरिति, वपां

शु० य० सं० १२५ उ० भा०

अस्तु त्वेपच्यो। निवृत्तं रक्षः। यजमानोऽभितिष्ठति। "इदमहम्"। यदेतत्तृणमभितिष्ठामि तदिदमहं रक्षः अभितिष्ठामि। न केवलमभितिष्ठामि किन्तर्हि, "इदमहं रक्षः" अवाचीनं "बाधे"। एवमेव "इदमहं रक्षः अधमम्" अधमानलक्षणं निकृष्टं तमो नयामि। वपाश्रयण्या-च्छादयति वपया। "घृतेनद्यावापृथिवी"। वपाश्रपण्यौ द्यावापृथिव्याववध्यास्ते उच्येते। हे द्यावापृथिव्यौ युवां घृतेन उदकेन आत्मानं "प्रोर्णुवाथाम्"। ऊर्णुञ् आच्छादने। आच्छा-

**स्तृठं रक्षो॒ऽइ॒द॒म॒हꣳ रक्षो॒ऽभिति॑ष्ठामी॒द॒म॒हꣳ रक्षो॒ऽवबा॑धऽइ॒द॒म॒हꣳ रक्षो॒ऽध॒मन्तमो॑नयामि॥ घृ॒ते॒न॑ द्यावापृथिवी॒ प्रोर्णु॑वाथां॒ वायो॒ वे॑स्तो॒**

दयेथां परस्परम्। आकृतिपरिणामाभिप्रायमेतत्। तथाचोक्तम्। "ते वा एते आकृती कृते उत्क्रामत" इत्युपक्रम्य "आकृतिपरिणाममिदं जगदिति"। तयोरुपरिष्टादध्वर्युराहव-नीये प्रास्यति। "वायो वेः स्तोकानाम्"। हे वायो वेः। विद ज्ञाने अस्य 'दस्ते'तिरूपे कृते रूपम्

स्तु वेपाश्रिधारयति अग्निराज्यस्येति, हुत्वा वपाश्रयण्या वत्प्रास्यति प्राचीं विभिन्नां प्रतीचीमितरां स्वाहा कृते इति।

का० ६।६।१९-२८॥ १६॥

६ अ०

शिवम्

विद्धि अवगतार्थो भव । स्तोकानां विप्रुषां वपासम्बन्धिनाम् । ते ह्यत्र प्रतिष्ठन्ति । वपामभिघारय-
ति । "अग्निराज्यस्य" । आहवनीयोऽग्निः आज्यस्य घृतस्य "वेतु" पिबतु "स्वाहा" सुहुतमेतद्भ-
विर्भवतु । वपाश्रपण्यावनुप्रास्यति । "स्वाहाकृते" । हे वपाश्रपण्यौ युवां स्वाहाकृते सत्यौ
आहुतिभावमुपगते सत्यौ "ऊर्ध्वनभसम्" ऊर्ध्वं नभ आकाशो यस्य स ऊर्ध्वनभाः तमूर्ध्वनभसम्
आकाश"मारुतं वायुं "वा गच्छतम्" प्राप्नुतम् । वायुर्हि प्रतिष्ठा यज्ञस्य ॥ १६ ॥

कानाम्ग्निराज्यस्य वेतु स्वाहा स्वाहाकृते ऊर्ध्वनभसम्मारुतङ्गच्छतम् ॥ १६ ॥ इदमापः । इदमापः प्रवह

चात्वाले मार्जयन्ते (१) । "इदमापः" । त्र्यवसाना महापङ्क्तिरब्दैवत्या पावमानस्याद्यः पादः ।
हे आप इदं पशुसंज्ञपननिमित्तं पापं "प्रवहत" अपनयत । किञ्च "अवद्यं च" । अव-
दनीयं च यत् अभिशापादि "मलं च यत्" यच्च मलं शरीरसंलग्नं प्रसिद्धम् । तच्च प्रव-

(१) चात्वाले मार्जयन्त उपवेषो वा इदमापः प्रवहतेति । का० ६।६।२९ ॥ १७ ॥

हत। "यच्चाभिदुद्रोहानृतम्"। द्रुह जिघांसायाम्। यदपि चाभिद्रुग्धवानस्मि असत्यमु-च्चार्य्य। "यच्च शेपेअभीरुणम्"। आक्रोशे। यच्च शपितवानस्मि अभीरुणमनपराधिनम्। अन-पराधी हि न बिभेति। यद्वा अभिलुनाति छिनत्ति कर्माणि यद्दुश्चरितं तत् तदभीरुणम्। "आपः मां तस्मात् एनसः" पापात् "पवमानश्चमुञ्चतु"। पवमानः सोमो वायुर्वा मां मुञ्चतु

तावृद्यञ्च मलंञ्च यत्॥ यच्चाभिदुद्रोहानृतं यच्चशेपेअभीरुणम्॥ आपोमातस्मादेनसः पवमानश्चमुञ्चतु ॥ १७ ॥

सन्ते। सन्ते मनोमनसासम्प्राणःप्राणेन गच्छताम्॥ रेडसि

पृथक्करोति ॥ १७ ॥ पशुहृदयमभिधारयति। "सन्तेमनः"। संगच्छतां ते तव मनः "मनसा"। अनेन पृषदाज्येनाभिघारितम्। "संगच्छतां" च "प्राणः प्राणेन" पृषदाज्येनाभि-

(१) संतेमन इति हृदयमभिघार्यं (जुहूस्थेन पृषदाज्येन पश्चात्) सर्वम्, (पशुम्) रेडसीति वसां गृहीत्वा, (मांस-पाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसा) द्विरभिघार्य अयुतमिति पार्श्वेन संस्तत्यसिना वेति, (पार्श्वेनास्थिना-नाज्यं वसां चमिश्रयेदित्यर्थः) का० ६।८।१।१२।२०-१२।

धारितस्य पशोः प्राणः। वसां गृह्णाति। "रेडसि"। रिषतिर्हिंसार्थः। या त्वं रिष्टासि हिंसितेवाभासि अल्पत्वात्। अल्पत्वं च पृष्याः श्रुतिः प्रतिपादयति। "रेडसीति लेलयेव ह्यियः"। लेलयशब्दश्चाल्पवचनः। "अग्निष्ट्वा श्रीणातु"। यां च त्वामग्निः श्रपयन् श्रीणाति भूयसीकरोति। "आपस्त्वा समरिणन्"। यां च त्वामापः समरिणन्समभरन्, रिणातिर्बिभर्त्यर्थः। आपो हि पच्यमानेभ्यः पश्वङ्गेभ्यः यं रसमाददते सा वसेत्युच्यते। तां "त्वां

**ग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रं**

वातस्य ध्राज्यै"। गृह्णामीति शेषः। ध्राजिर्गतिः। वातस्यान्तरिक्षेण गतिर्भवत्विति। "पूष्णोरंह्यै"। पूषा आदित्यः। रंहतिर्गत्यर्थः। आदित्यस्य द्युलोकेन गतिर्भवत्विति गृह्णामि। "ऊष्मणो व्यथिषत्"। ऊष्मा अन्तरिक्षम्। तद्धि बाष्पेण ऊष्मेव। अन्तरिक्षार्थं च वसा गृह्यते होममन्त्रे अन्तरिक्षस्य हविरसीति लिङ्गात्। ऊष्मणोऽन्तरिक्षस्य या भोक्त्रीशक्तिस्तां व्यथिषत् व्यथतु। इयं वसान्तरिक्षस्य तृप्तिं करोत्वतिरिक्ता भवत्वित्यर्थः। अन्तरिक्षे च तृप्ते तत्स्थभवत्वाद्वायुसूर्ययोरपि स्वकर्मक्षमता भवति। तस्मादुच्यते वातस्य त्वा ध्राज्या इत्यादि। प्रयौति।

“प्रयुतं द्वेषः”। द्विष अप्रीतौ। निह्नत्तं पृथग्भूतं वसाया द्वेषः (२)॥१८॥ वसां जुहोति (१)। “घृतं घृतपावानः”। वसायां हि घृतं विद्यते द्विरभिघारणस्य विहित-त्वात्। अतएवसाह। घृतं पिबत हे घृतपावानः। धेट् प पाने। ‘आतोमनिन्क्वनि-नि’त्यादिना वनिप्। पातार उपभोक्तारः। वसां पिबत हे वसायाः पातारः। हे वसेत्त्वम

यां॒ऽउ॒रुष्म॒णो॒व्यथिषु॒त्प्रयु॑त॒न्द्वेष॑ः॥१८॥ घृत॒ङ्घृ॑तपावानः।

घृत॒ङ्घृ॑तपावानःपिबत॒व्वसां॒व्वसापावानःपिबता॒न्तरि॑क्षस्य॒हविर॑सि

“अन्तरिक्षस्य हविरसिस्वाहा”। सुहुतमेतद्धविर्भवतु। दिशोव्याघारयति। “दिशः प्रदिशः”। अलस्वाहाकारः सर्वत्र साकाङ्क्षत्वादिति कात्यायनः। अतएवं व्याख्या। दिग्भ्यः स्वाहा

(२) हवीलदौर्भाग्यम्॥१८॥ (१) वेसैकदेशं जुहोति, घृतं घृतपावान इति, दिशो व्याघारयति वसा-शेषेण वाजिमवत् (यथा वाजिनशेषेण दिग्व्याघारणं तद्वत्) दिशो व्याघारयति दिशइति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथमसुत्तमाभ्यां मध्ये पूर्वार्धे चेति। का० ।६।८।१७-२१।४।४।१६-१०॥१९॥

प्रदिग्भ्यः स्वाहा । आदिग्भ्यः स्वाहा । विदिग्भ्यः स्वाहा । उद्दिग्भ्यः स्वाहा । दिग्भ्यः स्वाहा ॥ १९ ॥ पशुं संस्पृशति (१) । "ऐन्द्रः प्राणः" । इन्द्र आत्मा तस्य सम्भूतः प्राणः ऐन्द्रः प्राणः । अस्य पशोः "अङ्गे अङ्गे" । वीप्सा । यावन्ति पशोरङ्गानि तेषु सर्वेषु । "निदीध्यत्" । दीधीङ् दीप्तिदेवनयोः । अस्य धातोर्दधात्यर्थे वर्त्तमानात्कर्मणि लकारश्छान्दसः । निधीयते

स्वाहा ॥ दिशः॑ प्र॒दिश॑ऽआ॒दिशो॑ वि॒दिश॑ऽउ॒द्दिशो॑ दि॒ग्भ्यः स्वा-हा॑ ॥ १९ ॥ ऐ॒न्द्रः प्रा॒णः । ऐ॒न्द्रः प्रा॒णोऽअङ्गे॑ऽअङ्गे नि॒दी॑ध्य दै॒न्द्रऽउ॑दा॒नोऽअङ्गे॑ऽअङ्गे॒ निधी॑तः ॥ देव॑त्वष्ट॒र्भूरि॑ ते॒ सꣳस॑मे

निहितः । ऐन्द्रश्चास्य "उदानः अङ्गे अङ्गे निधीतः" निहितः । एवं तावदनेन यजुषा पश्व-ङ्गेषु प्राणं दत्वा अथेदानीं "देवत्वष्ट" रित्यादिकायास्त्रिष्टुभोर्द्धर्चेन त्वष्टारमाह । त्वष्टा हि रूपाणामीष्टे । हे "देवत्वष्टः भूरि ते सꣳ समेतु" । बहुप्रकारं तव संबन्धि रूपं यद्विहतमासिना तत्संगत्य एकीभवतु । कथं भूतम् । "लक्ष्म" समानलक्षणं सत् "यद्विषुरूपं भवति" । तत्

(१) ऐन्द्रः प्राण इति पशुं संस्पृशति । (पश्वङ्गं स्पृशेत्) का० ६।५।१ ।

मेत्विति संबन्धः । एवं त्वां हे पशो प्राणैश्चाङ्गैश्चानेन मन्त्रेण छत्स्नीकृतं सन्तम् दृढीकृतं सन्तं "देवत्रायन्तम् । देवान् प्रति गच्छन्तम् "अवसे" अवनाय प्रीत्यै(२) । "सखायः" समानख्यानाः पशवः "अनुमदन्तु" अभ्यनुजानन्तु त्वां "मातापितर"श्च । बहुवचनं पूजार्थम् ॥२०॥ प्रतिप्रस्थातोपयजति(१)। "समुद्रं गच्छ । हविरुच्यते । समुद्रं गच्छ तर्पणायेतिशेषः । एवमुत्तरेष्वपि योज्यम् ।

तु सलंदम्मायद्विषु रूपम्भवाति । देवुत्रायन्तुमवंसे सखायोनु त्वामातापितरो मदन्तु ॥ २० ॥ समुद्रङ्गच्छ । समुद्रङ्गच्छ स्वाहान्तरिक्षङ्गच्छ स्वाहा देवᳬं सवितारङ्गच्छ स्वाहा मित्रावरुणौ-

मुखं विसृष्टे । "मनोमे" मम "हार्दि" हृदये "गच्छ निबध्नीष्व । निबध्यमानो हि स्वादायतनाम्न

(१) अवसे अवतुमर्थे असे प्रत्ययः । अवितुं त्वन्मुखेन स्वर्गप्राप्त्या सकलं सर्वमवितुमित्यर्थोवा ॥ २० ॥

(१) प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेदम् (गुदतृतीयभागमेकादशधा प्रच्छिन्न) अनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रं जुहोति प्रतिवषट्कारं हुत्वा मनो मे इति मुखोपस्पर्शनं, (गुदकाण्डं हुत्वा सर्वान्ते मुखं स्पृशेत्) अनुयाजान्तेस्वरुं जुहोति दिवं ते धूमइति । का० ६।८।१०-१३ ॥ २१ ॥

च्यवते। "तथोऽस्योपयष्टात्मानं नात्युपदृष्णोतीति" श्रुतिः। स्वरुं जुहोति। "दिवन्ते"। स्वरुरुच्यते द्युलोकं तव "धूमो गच्छतु" इष्टे। "स्वर्ज्योतिः"। स्वःशब्देनादित्योऽभिधीयते। ज्योतिः आदित्यं गच्छतु तव। "पृथिवीं" च "भस्मनापृण" आपूरय "स्वाहा" ॥२१॥ हृदयशूलमुपगू-

**गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमं गच्छ स्वाहा दिव्यं नभो गच्छ स्वाहाग्निं वैश्वानरं गच्छ स्वाहा मनो मे हार्दि यच्छ दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहा ॥२१॥ माऽपः। मापो मौषधीर्हिꣳसी**

हति (१)। "मापोमौषधीः"। इदं वै पशोः संज्ञप्यमानस्योदुपक्रम्य हृदयशूलं शुक्समवैतीत्यलम्। अत एवमुच्यते। "माहिꣳसीरपः मापो मौषधीः" हिंसीः। इदानीं वरुणमाह। हे भगवा

(१) अन्ववेत्य शुष्कार्द्रं संधौ हृदयशूलमुपगूहति शुगसि, तमभिशोच योऽस्मान्द्वेष्टि यं च वयं द्विष्मो मापोमौषधी-रितिचधाम्नोधाम्नः सुमित्रिया न इत्यु पशुमन्तरम्, (अवनेष्टलिंग्यजमाना मन्त्राभ्यां जलं स्पृशन्ति)। का० ६।१०।२-५

राजन् "धाम्नोधाम्न."। धामशब्दः स्थानवचनः। यतो यतः प्रापसमन्वितात्स्थानाद्विभीमः ततः ततः नोऽस्मान्विमुञ्च। यदाहुः। गायत्रीवाक्यौ अनवसाना। "यदाहुरघ्न्या इति"। अघ्न्या गोनाम। प्रकरणादिहानूबन्ध्याविषयं बहुवचनम्। अनूबन्ध्याबहुत्वे अर्थवत्। एकानूबन्ध्यापक्षे तु पूजार्थम्। "य" इदस्मतिलोकवाक्यानि आहुः अघ्न्या अवध्या अहन्तव्या वन्द्याः

धाम्नोधाम्नोराजँस्ततोव्वरुणनोमुञ्च। यदाहुरघ्न्याऽइतिव्वरुणेति शपामहे ततोव्वरुणनोमुञ्च॥ सुमित्रियानऽआपऽओषधयः

पूजनीया "इति"। इतिकरणो वाक्यस्यार्थमभिनयेन दर्शयति। वयं तु हे "वरुणइतिशपामहे"। इतिः करणप्रदर्शनार्थः। शपतिर्हि सार्थः। एवमनेन विधिना हिंस्मः अघ्न्याः अतएव वयं याचामहे। "ततो वरुणनोमुञ्च"। ततस्तस्मादेनसो वरुण नः अस्मान्विमुञ्च। अर्थाभिमन्त्रयते। धाम्नो धाम्न इति मन्त्रः प्रलोपगूहनमन्त्रणे वा, सुमित्रिया इति मन्त्रोऽपामभिमन्त्रणे वा॥ २२॥

॥ एवमग्नीषोमीयः पशुः समाप्तः॥

"सुमित्रियाः" साधुमित्रत्वेनावस्थिताः "नः" अस्माक"मापस्रोषधय"श्च "सन्तु"। "दुर्मि-
त्रियाः" दुष्टमित्रत्वेनावस्थिता"स्तस्मै सन्तु योऽस्मान्द्वेष्टि" शत्रुः "यं च" शत्रुं "द्विष्मो वयम्" ॥२२॥
वसतीवरीर्गृह्णाति (१)। "हविष्मतीः"। अनुष्टुप् लिङ्गोक्तदेवता। हविष्मतीः हविषा संयुक्ता
इमा आपः। "यत्रवै यज्ञस्य शिरोऽच्छिद्यते तस्य रसो द्रुत्वापः प्रविवेश"त्येतदभिप्रायम्।"

सन्तुदुर्म्मित्त्रियास्तस्म्मै सन्तुयोस्म्मान्द्वेष्ट्टियञ्चवयन्द्विष्म्मः॥२२॥*

हविष्म्मतीरिमाऽ। हविष्म्मतीरिमाऽआपोहविष्म्माँ२ऽआविवा

"हविष्मान्"। हविषा संयुक्तो यजमान "आविवासति"। विवासतिः परिचर्यायाम्। परिच-

(१) अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञकानामपां ग्रहणमभिधीयते॥ अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणं स्यन्दमानानामनस्तमितेऽस्तमितश्चेन्निनाह्यात्पुरेजानश्चेदनेजानोऽन्यस्यापि समीपावसितस्य पुरेजानस्योभयाभाव उल्मुकं हिरण्यं वोपर्युपरि धारयन् हविष्मतीरिति। का० ८।९।७-१०। अस्यार्थः-अग्नीषोमीयपशोः वपामार्जनपर्यन्ते कर्मणि जाते अनस्तंगते रवौ हविष्मतीरितिमन्त्रेण वहन्तीनामपामेकदेशाद्वसतीवरीसंज्ञकानामपां ग्रहणं, अस्तंगते रवौ यजमानो पुरा ईजानः सोमयाजी तदा गृहे एव निनाह्याभ्यधिकाद्वसतीवरीग्रहणं, यदि पुरायजमा

शु० य० सं० १.३० उ० भा०

एषा शुश्रूषा । इमा आपः "हविष्मान्" हविषा संयुक्तो "देवोऽध्वरो" यज्ञः आभिरद्भिः । "हवि-
ष्मान् अस्तु सूर्यः" । "एतस्मै वै गृह्णाति य एष तपतीत्येतदभिप्रायम् ॥ २३ ॥ शालाद्वार्यं
समपरेण निदधाति (१) । "अग्नेर्वः" । अग्नेर्वीयुष्मान् "अपन्नगृहस्य" । पद्यतेरेतद्रूपम् ।
"अगृहाम्" । अपतितगृहस्येतिपर्यायः । "सदसि" । सीदन्त्यस्मिन्निति सदः निकटस्थाने साद-

यामि ॥ हविष्मान्देवोऽअध्वरो हविष्माँ२ ॥ ऽअस्तु सूर्य्यः ॥ २३ ॥

अग्नेर्व्वः । अग्नेर्व्वोऽपन्नगृहस्य सदसि सादयामीन्द्राग्न्योर्भाग-
धेयी स्त्थ मित्रावरुणयोर्भागधेयी स्त्थ विश्वेषान्देवानाम्भागधेयी

नः सोमभाजो न तदा यजमानस्य सोमयाजिनो गृहस्थितमधिकात्, तस्यासोमयाजित्वे उत्तरां कनकं वा वहन्तीनामपां
समीपे धारयेत् वहन्तीर्वा वसतीवरीग्रहणं मार्गमिति । निनहनीयो निखननीयो निनाह्यो मणिकः पात्रविशेषो यो
निखन्य भूमौ स्थाप्यते (कुण्डा) इति भाषायाम् ॥ २३ ॥

(१) अग्ने वै इति निदधाति शालाद्वार्यंमपरेणेति, (नूतनगार्हपत्यपश्चिमे भागे ताः स्थापयेत्) दक्षिणेन निहत्य
दक्षिणस्यामुत्तरवेदिश्रोण्यौ निदधातीन्द्राग्न्योरिति (ताः शालाद्वारेण नीत्वोत्तरवेदेर्दक्षिणश्रोण्यौ निदध्यात्) उत्त-

६ अ०

विषय १३०

यामि। दक्षिणस्यामुत्तरवेदिश्रोण्यां निदधाति। "इन्द्राग्न्योर्भागधेयीस्थ"। इन्द्राग्न्योः संबन्धिनो भागस्य धारयित्र्यः स्थ हे आपः। उत्तरस्यामुत्तरवेदिश्रोण्यां निदधाति। "मित्रावरुणयोर्भागधेयीस्थ"। आग्नीध्रे निदधाति। "विश्वेषां देवानां भागधेयीस्थ"। ऋक् "अमूर्याः। अब्देवत्या गायत्री। अभिनयेन दर्शयन्नाह। "अमूर्याः" आपः "उप" समीपे। सूर्यस्येति विभक्तिव्यत्ययः। य"ाभिर्वा सूर्यः सह"। अत्रापि समुच्चयार्थे भवतीति वाशब्दः समुच्चयार्थीयः

स्त्थ॥ अमूर्याऽउपसूर्य्ये याभिर्व्वासूर्य्यःसह॥ तानोहिन्न्वन्त्वध्वरम्॥ २४॥ * हृदेत्वा। हृदेत्वामनसेत्वादिवेत्वासूर्य्यायत्वा॥

याभिस्त्वाद्भिः "सूर्यः सह" याति। "ताः" आपः "नः" अस्माकं "हिन्वन्तु"। हिन्वतिस्तर्पणार्थः। तर्पयन्तु "अध्वरं" यज्ञम् ॥२४॥ सोममुपावहरति(१)। "हृदेत्वा"। सोम्यनुष्टुप् ब्रह्मार्षेया। वह्नौ

रस्यां पूर्ववत् (इन्द्राग्न्योरितिमन्त्रेण) मित्रावरुणयोरिति वा (मन्त्रेण) विश्वेषां देवानामित्याग्नीध्रे (आग्नीध्रीयस्य पश्चात्)। का० ८।९।११-१८-२२-२३। भागा एव भागधेय्यः। स्वार्थे धेयः। कैवलमाकेत्यादिनाङीप्॥ २४॥

(१) आज्याशादनात्कृत्वा (आज्यास्तरणपर्यन्तं कृत्वा) एषामन्तरेणार्धसोममद्रिषु संमुखेषु निदधाति हृदेत्वेति,

शु० य० सं० १३१ अ० भा०

निश्चयात्मिकार्थे। कामाय एतन्मम स्यादिति। त्वां सोममुपावहरामि। "दिवेत्त्वा"। हे सोम देवलोकप्राप्तये त्वामुपावहरामि। 'सूर्याय' सूर्यप्रमुखेभ्यो देवेभ्यः हे देवसोम त्वामुपावहरामि। त्वं चोपावहृतो भिट्,त "ऊर्ध्वमिममध्वरं" यज्ञं कृत्वा" दिवि" देवलोके "देवेषु" च होत्राः। वषट्कारयाजिनोऽब्रह्मर्षयो होत्रा उच्यन्ते। "यच्छ" नियच्छेहि ॥ २५ ॥ किञ्च। हे "सोम-

ऊ॒र्ध्वमि॒मम॑ध्व॒रन्दि॒वि दे॒वेषु॒ होत्रा॑ यच्छ ॥ २५ ॥ सोम॑ राजन्॒ । सोम॑ राज॒न्विश्वा॒स्त्वम्प्र॒जा उ॒पाव॑रोह॒ विश्वा॒स्त्वाम्प्र॒जा उ॒पाव॑रोहन्तु ॥ शृ॒णोत्व॒ग्निः स॒मिधा॒ हव॑म्मे शृ॒ण्वन्त्वापो॑ धि॒षणा॑

राजन् विश्वा" सर्वाः "त्वं प्रजा उपावरोह" अधितिष्ठ "आधिपत्याय" राज्याय। विश्वज्योपतिष्ठते (१)। "विश्वास्त्वां प्रजाउपावरोहन्तु"। प्रत्युत्थानाभिवादवादिभिः। जुहोति।

(सोममादायार्धं विस्तस्य दक्षिण शकटेऽभिषवार्थंपाषाणेषु निदध्यात्)। का० ८।२।५ ॥ २५ ॥

(१) विश्वास्त्वामिति विश्वज्योपतिष्ठते, अभूदुषासपत्नमुग्रित्यु ल्यमाने चतुर्थं हीतं प्रचरण्या जुहोतिशृणोत्वग्नि-रिति। का० ८।१।६।-८।२।२४-२-१ ॥ २६ ॥

ऋ० षिमव

१३१

"शृणोत्वग्निः"। त्रिष्टुप् लिङ्गोक्तदेवता। शृणोत्वनुजानात्वग्निः। "समिधा" समित्पूर्विकया-हुत्या। "हव" माह्वानम् "मे" मम। "शृण्वन्त्वापः" "धिषणाश्चवाचः" धीसादिन्यो वाधीसा-रिन्यो वा। "देवी" देव्यः। चशब्दः समुच्चयार्थः। "श्रोताग्रावाणः"। यूयमपि शृणुत हे ग्रावाणः। कथमिव। "विदुषोनयज्ञम्"। उपमार्थीय उपरिष्टादुपाचारो नकारः। विदि-

र्श्चदेवीः। श्रोतांग्ग्रावाणोव्विदुषोनयज्ञठंशृणोतुदेवःसविताहवंम्मेस्वाहा॥ २६॥ देवीरापः। देवीरापोऽअपान्नपाद्योवऽऊ

तार्थ इव। परिहृष्यकारिणो यज्ञं। प्रत्यक्षकृतः पादो मध्यमपुरुषयोगात्। "शृणोतु देवः सविता हव" माह्वानं "मे" मम "स्वाहा" सुहुतमस्तु। स्वाहा वागाह॥ २६॥ अप्सु जुहोति। "देवीराप:"। पङ्क्तिरब्देवत्या। हे देव्यः आपः "अपान्नपा" त्संज्ञकाः "योवः" युष्माक "मूर्मिः"

(१) अवपोथेगत्वा देवीराप इति जुहोति। का० ८।३।७। "स्वाहा" इदमाज्यं युष्मभ्यं हुतमस्तु। ग्रहीष्यमाणा-नामस्मामिदं मूल्यमाहुतिः तदुक्तं तित्तिरिणा—देवीरापो अपान्नपादित्याहाहुत्या वैनिष्क्रीय गृह्णातीति॥ २७॥

अस्य ग्राव: कल्लोल: "हविष्य:" यज्ञिय:। "इन्द्रियावान्"। इन्द्रियशब्देन वीर्यमभिधीयते। इन्द्रियावान् वीर्यवान्। छान्दसं दीर्घत्वम्। "मदिन्तम:" मदयितृतम: तर्पयितृतम: श्रेष्ठत्वेन। "तं" "मूर्मि" "देवेभ्यो देवत्रा"। 'देवमनुष्ये'त्यादिनात्रा प्रत्यय:। देवान्प्रतियाधिनं "दत्त" प्रयच्छत। "शुक्रपेभ्य:"। शुक्रशब्द उपलक्षणार्थ:। शुक्रादिसोमग्रहपातृभ्यो देवेभ्य:। "येषां" च देवानां

र्म्मिर्ह॑विष्य॒ऽइन्द्रि॒यावा॑न्मदि॒न्तम॑:। तन्दे॒वेभ्यो॑ देवत्रा द॑त्त शुक्र॒पेभ्यो॒ येषां॑ भा॒गस्थ॒ स्वाहा॑ ॥ २७ ॥ का॒र्षि॑रसि। का॒र्षि॑

"यूयं भाग: स्थ" भवत। तेभ्यो दत्तेति संबन्ध: ॥ २७ ॥ कार्षिरसि"। अनुष्टुप् यथाविनियोगं देवता:। चमसेनाज्यमपोहति। (१) "कार्षिरसि"। कृष विलेखने। हे आज्य आकृष्टं त्वमसि त्वं श्वेततया भक्षितमित्यर्थ:। तेन गृह्णाति। "समुद्रस्यत्वा"। "आपो वै

(१) कार्षीरसीति मैत्रावरुणचमसेनाज्यमपोहति, समुद्रस्यत्वेति तेन (मैत्रावरुणचमसेन) गृह्णाति, प्रत्येत्य (जन्मापराव) चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च संस्पर्शयति समाप इति। (मैत्रावरुणचमस्था आप: वसतीवरीभि संयोजयतीत्यर्थ:)। का० ९।३।८-१२ ॥ २८ ॥

समुद्र" इति श्रुतिः। वसतीवरीलक्षणस्याम्बु समुद्रस्य "त्वाम् अच्छेत्यै" अनुपक्षीणतायै "उन्नयामि उद्‌गृह्णामि। वसतीवरीणां हि वर्द्धनाय एता आपो गृह्यन्ते। संहुजन्ति। "समापोऽद्भिरग्मत"। संगच्छताम् आपो वसतीवरीलक्षणा आभिरद्भिर्मैत्रावरुणचमसस्थाभिः। संगच्छतां च ओषधीभिः व्रीहियवादिभिः। ओषधीः मुद्गमसूरादिकाः। अपां कारणभूतत्वादोषधीनामपि तथोपयोगो भवत्वित्यभिप्रायः॥ २८॥ जुहोति (१)। "यमग्ने"।

रसिसम् द्रस्य त्वाच्छित्या ऽउन्नयामि॥ समापो ऽअद्भिरग्मत समोषधीभिरोषधीः॥२८॥ यमग्ने। यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जु

गायत्र्याग्नेयी। हे अग्ने यं "मर्त्यं" मनुष्यं "पृत्सु" संग्रामेषु "अवाः"। अवते रक्षणार्थस्यैतद्रूपम्। अवसि रक्षसि। "वाजेषु"। वाज इत्यन्ननाम। हविर्लक्षणेष्वन्नेषु अभ्युद्यतेषु। "यं" च पुरुषं। "जुनाः" जुनातिर्गत्यर्थः। अभिगच्छसि। "स" पुरुषो "यन्ता"। जिनात्यन्नं, तज्जन्तमेतत्

(१) प्रचरणी संस्रवमग्निष्टोमे जुहोति अभावे चतुर्गृहीतं यमग्ने इति (अभावे होमपर्याप्तप्रभावे)। का० ८।२।१६।

आलुप्रदानात्मात् । लब्धा सतस्य भवति । "शश्वतीः" शाश्वतिकाः । "इषः" अन्नानि (२) ॥२८॥

अद्रिमादत्ते (१) । "देवस्यत्वा" । व्याख्यातम् । "आददे" गृह्णामि । "रावासि" । रासतेर्दी-

नार्थस्य रावा । "एतद्वोपदस्यं रासत" इतिश्रुतेः । आहुतीनां च दातासि । "गभीरं महा-

न्तम् "इमम् अध्वरं यज्ञं "कृधि कुरु । "इन्द्राय" इन्द्रार्थम् । "सुषूतमम्" । सुरुपसर्गः पूर्वः ।

ना॒ ॥ मयन्तामश्श्वतीरिषु॒ स्वाहा॑ ॥ २८ ॥ * देवस्यंत्वा । देव

सयंत्वासवितु॒प्र्प्रंसवे॒ ऽश्विनोर्बाहुभ्यांम्पूष्णोहस्तांभ्याम् ॥ आदं

देरावासिगभीरमिममसंध्वरङ्कृधीन्द्रांयसुषूतमम् ॥ उत्तमेनं पवि

षुञ् अभिषवे । तस्य निष्ठातकारलोपः छान्दसः दीर्घत्वं च तमपि प्रत्यये । अथ कोर्थः । साधु

अभिषुतम् अतिशयेन "उत्तमेन" उत्कृष्टेन "पविना" पावनेन सोमेन पवनशीलेन वा । "ऊर्ज-

(२) उक्थसंस्थे यमन्न इति मन्त्रेणाद्यं परिधिं स्पृशेत् । षोडशिसंस्थे ररातीं स्पृशेत् । अतिरात्रे छर्दिं स्पृशेत्

अन्यसंस्थासु हविर्धानं प्रविशेत् । महीधरभाष्ये ॥ २८ ॥

(१) देवस्यत्वेत्यद्रिमादाय वाचं यच्छति प्रागहिङ्काराल्ल उपांशुसवनः, निग्राभ्यासु वाचयत्यृत्विजां नियम्य

शु० य० सं० १२२ उ० भा०

६ अ०

यिवन १२२

स्वन्त" रसवन्तम् "मधुमन्त" मधुस्वादुना रसेनोपेतम् "पयस्वन्तं" पयःस्वादुना रसेनोपेतम् स्वरं कुर्वीति संबन्धः। निगृभ्यास् वाचयति। "निगाभ्यास्" । यस्मादिन्द्रेण यूयं गृहीतास्तस्मान्निगाभ्या उच्यन्ते। यस्मादेवं बहुमाननामधेयप्रतिलम्भयुक्ता भवथ। देवैश्च स्तुता-

नोर्ज्जस्वन्तम्मधुमन्तम्पयस्वन्तन्निगृभ्याः स्थ देवश्रुतस्तर्प्पयतमा मनो मे ॥ ३० ॥ मनो मे। तर्प्पयत वाचम्मे तर्प्पयत प्राणम्मे तर्प्पयत चक्षुर्म्मे तर्प्पयत श्रोत्रम्मे तर्प्पयतात्मानम्मे तर्प्पयत प्रजाम्मे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणा मे मा वि

स्तस्माच्च बहुनामान्विताः सत्यः "तर्पयतमा" समासव्यासेन ॥३०॥ "मनो मे" मम "तर्पयत"। इति विस्तारः व्यासेनोक्तः। समासेनाह। "आत्मानं" पिण्डशरीरम् "प्रजां" पशून् गणान्म- नुष्यसंघातान्। "गणा मे मा वितृषन्"। मद्दत्तदानेन पूरिता अपि सन्तो मा विगततृष्णा- निग्राभ्य स्थेति। का० ५।४।५-७ ॥ ३० ॥

भवन्तु। अनुरक्तगणोऽहं भवेयमित्यर्थः॥ ३१॥ सोमं मिमीते (१)। "इन्द्राय त्वा वसुमते रुद्रवते"। मिमइतिशेषः। "इन्द्राय त्वा आदित्यवते" मिमे। प्रातःसवनमाध्यन्दिनसवन तृतीयसवनदेवतायुक्तायेन्द्रायेत्यर्थः। "इन्द्राय त्वा अभिमातिघ्ने" मिमे। "सपत्नोवाभिमाति" रितिश्रुतिः। सपत्नस्य हन्त्रे। "श्येनाय"। श्येनरूपिण्यै गायत्र्यै त्वां, "सोमभृते"।

तृंषन्॥ ३१॥ इन्द्रायत्वा। इन्द्रायत्वाव्वसुमतेरुद्रवतऽइन्द्रायत्वादित्यवतऽइन्द्रायत्वाभिमातिघ्ने॥ श्येनायत्वासोमभृतेग्नये-त्वारायस्पोषदे॥ ३२॥ यत्ते। सोमदिविज्ज्योतिर्य्यत्पृथिव्यां

'ह्रग्रहोर्भश्छन्दसी'ति हस्य भकारः। "सोमहृते" सोमस्याहर्त्र्यै गायत्र्यै मिमे। "अग्नयेत्वारायस्पोषदे"। रायो धनं तस्य पोषो वृद्धिस्तं ददातियस्तस्मै रायस्पोषदे। अग्निशब्देनात्र गायत्र्यभिधीयते भक्तिश्रुतेः। "अथैतान्यग्निभक्तीन्ययं लोकः प्रातःसवनं वसन्तो गायत्री"ति॥३२॥

(१) उपांशुसवने सोमं मिमीते इन्द्रायत्वावसुमते रुद्रवते इति पञ्चकृत्वः प्रतिमन्त्रम्। का० ९।४।८॥ ३२॥

मितालम्भनम् (१)। "यत्तेसोम"। सोमविपरीता बृहती। स्तुतक्रमस्य मन्त्रस्य कारणं निदानम्। "यदा किल देवानां हविरभूत् सोमः तदेषु लोकेषु तिस्रस्तनूर्विन्यदधात्।" तासामनेनाग्निः क्रियते। यत्ते तव हे सोम "दिवि" द्युलोके "ज्योतिः"। यच्च "पृथिव्यां ज्योतिः"। यच्च "उरौ" विस्तीर्णे "अन्तरिक्षे" "तेन" तन्वाख्येन ज्योतिषा "अस्मै" यजमानाय अस्य यजमानस्य संबन्धिनि यज्ञे "उरु" विस्तीर्णं कृत्स्नं शरीरमात्मनः "कृधि" कुरु। ऋत्विजां च

स्यदुरावन्तरिक्षे ॥ तेनास्मै यजमानायोरुरायेकृध्यधिदात्रे-

ब्वोचः ॥ ३३ ॥ श्वात्रास्थ। श्वात्रास्थवृत्रतुरोराधोगूर्ताऽ-

"राये" दक्षिणाप्राप्तये उरु शरीरं "कृधि" कुरु स्वकीयम्। किञ्च। "अधिवोचः" अधिब्रूहि। "दात्रे" यजमानाय। कृत्स्नोऽहमागत इति ॥ ३३ ॥ आसिञ्चतिनिग्राभ्याः (१)। "श्वात्रास्थ"। उपरिष्टाद्बृहती निग्राभ्या। आपो देवताः। या यूयं "श्वात्राःस्थ"। श्वत्रमिति क्षिप्रनाम।

(२) यत्त इति मितालम्भनमिति का० ८।४।८ ॥ ३२ ॥

(१) श्वात्रा स्थेति आसिञ्चति निग्राभ्या इति। का० ८।४।१२ ॥ ३४ ॥

क्षिप्रकारिण्यो भवथ शिवा वा भवथ। "इन्द्रतुरः"। तुर्वतिर्वधकर्मा। इन्द्रस्य हन्त्रः। "राधोगूर्त्ता"। राधो धनमुद्गिरन्तीति राधोगूर्त्ताः। "अमृतस्यपत्नीः" अमृतत्वस्य पालयित्र्यः। "ताः" हे "देवीः"। 'वाछन्दसी'तिदीर्घत्वम्। "देव्यः" देवान् प्रति। "इमं" यज्ञं "नयत" प्रापयत। किञ्च अध्वर्युणा "उपहूताः" सत्यः "सोमस्यापिबत"॥ ३४॥ प्रहरति (१)। "माभेः"। हे सोम मा भैषीः। "मासंविक्थाः"। ओविजी भयचलनयोः। संपूर्वः

अमृतस्य पत्नीः। ता देवी देवत्रेमं यज्ञं नयतोपहूताः सोमस्य पिबत॥ ३४॥ माभेः। माभेर्मासंविक्था ऊर्जं धत्स्व धि

कम्पनमभिधत्ते। मा च त्वं कम्पनं कृथाः देवदर्थ्यार्थमहमभिषुणोमि। यतः। "ऊर्जं धत्स्व" रसं धेहि। एवं सोमं संबोध्य अधेदानीं द्यावापृथिव्यौ संबोधयति। हे "धिषणे" हे द्यावापृथिव्यौ। "वीड्वी सती वीडयेथाम्"। वीडुशब्दो दृढवचनः। युवां स्वत एव दृढे सत्यौ वीडयेथां दृढमात्मानं कुरुतम्। अस्मात् ग्राव्णः उद्यतात्। किञ्च "ऊर्जं दधाथां", रसं

(१) माभेरिति प्रहरति। का० ८।४।१॥ ३५॥

दधाथाम्। अग्निष्टोमे अनेन उद्गात्रा यज्ञसंयुक्तेन "पाप्मा" यजमानस्य "हतः" न तु "सोमः" ॥ ३५ ॥ निग्राभं वाचयति (१)। "प्रागपागुदक्"। द्वाभ्यामनुष्टुभ्यामुष्णिग्बृहतीभ्याम्। सौमी द्वितीया ऐन्द्री। सा दिग्भिर्मिथुनमिच्छति। तच्च देवाः संपादितवन्तः। तदेतदृचा-भ्युक्तम्। हे सोम "प्राक्" प्रागञ्चनाः। "अपाक्" अपागञ्चनाः। अधराञ्चनाः। एवं

षणे वीड्वी सती वीडयेथामूर्जं दधाथाम्॥ पाप्मा हतो न सोमः॥ ३५॥ प्रागपाक्। प्रागपागुदगधराक्सर्वतस्त्वा दिश आ-

सर्वतः त्वां दिशः "आधावन्तु अभिसमागच्छन्तु। दिग्वासिनो जनाः किमभिभाषमाणाः परस्परं त्वामभिधावन्तु। "अम्ब निष्पर"। हे अम्ब प्राच्यादिविशेषदिगभिधाने निष्पिब्य सोमं "पर"। पृ पालनपूरणयोः इत्यस्यैतद्रूपम्। पूरय स्वैरङ्गैरेतं सोमम्। किं प्रयोजन-मिति चेत् "समरीर्विदाम्"। प्रजा वा अरीरि"ति श्रुतिः। संविदा" सविदन्ताम्।

(१) प्रतिवर्गं निग्राभं वाचयति होतृचमसेऽल्पानं भूनवधाय प्रागपागिति। का० ९।७।२०॥ ३६॥

अरीः प्रजाः । एतदुक्तं भवति । सोमसमागमेऽस्माकं सन्ति नानादिग्वासिनो जनाः संजानते एवम् ॥ ३६ ॥ "त्वमङ्ग" (१) । हे इन्द्र यतः त्वम् अङ्ग । अङ्गेति क्षिप्रनाम । क्षिप्रं "प्रशंसिषः" प्रशंससि । "देवः" सन् हे "शविष्ठ" बलिष्ठ "मर्त्यं" मनुष्यं यजमानम् । अतः कारणात् "नत्वत्" नत्त्वतः अन्यः हे मघवन् "धनवन्" "अस्ति" विद्यते "मर्डिता"

आधावन्तु । अस्मे निष्परंसमरीर्विदाम् ॥ ३६ ॥ त्वमङ्ग । त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम् । नत्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ ३७ ॥ इति संहितायां षष्ठोऽध्यायः ।

मृड सुखने । सुखयिता यजमानानाम् । "इन्द्र ब्रवीमि" अत्यद्भुतं तव सबन्धि "वचः" वचनमार्षम् ॥ ३७ ॥ इति उव्वटकृतौ मन्त्रभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

(१) इन्द्रदेवत्या पथ्या बृहती गोतमदृष्टेयं ऋक् ॥ ३७ ॥

भारद्वाजोपमाख्येन गोविन्दविदुषा कृते । षष्ठो गतोयमध्यायो मन्त्रभाष्यस्य टिप्पणे ॥ १ ॥

“वाचस्पतये”। उपांशुग्रहणस्य पुरोरुक्। अनुष्टुप् प्राणदेवत्या। गृह्णाति (१)। “वाचस्पतये पवस्व”। “प्राणो वै वाचस्पति”रितिश्रुतिः। वाचस्पतये प्राणाय पवस्व (२)। पवनं गमनम्, देवतार्थां प्रवृत्तिः। “वृष्णोअंशुभ्यां गभस्तिपूतः”। यस्त्वं वृष्णोर्वर्षितुः सोमस्यांशुभ्याम् अध्वर्युगभस्तिभ्यां पूतः। “प्राणौ वै गभस्ती” इतिश्रुतिः। द्वितीयं गृह्णाति। “देवो-

ॐ वाचस्पतये ॥ वाचस्पतये पवस्व वृष्णोऽअꣳशु भ्याङ्गभस्तिपूतः ॥ देवो देवेभ्यः पवस्व येषाम्भागोऽसि ॥ १ ॥

देवेभ्यः पवस्व”। देवः सन् देवेभ्योऽर्थाय पवस्व प्रवृत्तिं कुरु। न ह्यदेवो देवान्तर्प्पयितुमलम्।

(१) षष्ठेऽध्याये यूपसंस्कारादिसोमाभिषवपर्यन्तामन्त्रा उक्ताः सप्तमे ग्रहग्रहणमन्त्रा उच्यन्ते। उपांशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरिति। का० ४।१।१२-९। अत्र मन्त्रत्रयादौ उपयामगृहीतोऽसीत्यूह्यम्। मन्त्रत्रयेण चैकैकवारमुपांशुं ग्रहं गृह्णीयात्। (२) यद्वा पतये पालकदेवतार्थं वाचः वाचा तृतीयया विपरिणामः, वाक्सम्बन्धि-

---

ॐ वाचस्पतयउपयामगृहीतोसित्रिकावावायोयं वाहिकौ यस्तएकाअणायतिसोमपवइन्द्राग्नी आगतमाद्यौ मारुधर्ष- णीधृतोविश्वे देवासआगतेन्द्रमरुत्सोमरुत्वं वृषभं मरुत्वांतौजसे सजोषाइन्द्रमरुत्वा इन्द्रमहा इन्द्रोमहा इन्द्रएके- कोइत्यमष्टौ पञ्चविंशं अतिरष्टचत्वारिंशं मत्। (अनुः)

केषां देवानाम् "येषां" त्वं देवानां "भागोसि" ॥ १ ॥ तृतीयं गृह्णाति (१)। "मधुमतीः"। मधुरस्वादोपेताः "नः" अस्माकम् "इषः" अन्नानि "कृधि" कुरु। गृह्यमाणः अंशून् सोमे निदधाति। "यत्ते सोम"। यत् ते तव हे सोम "अदाभ्य"नाम। दभ्नोतिर्हिंसार्थः अनुपहिंसितं नाम। किं तत् सोमेति। "जागृवि" जागरणशीलं च अनुपहृतं मानुषै-

मधुमतीर्न ६ । मधुमतीर्न ऽइषस्कृधि यत्ते सोमादाभ्यन्नाम जागृवि तस्मै ते सोम सोमाय स्वाहा स्वाहोर्वन्तरिक्षमन्वेमि स्वाङ्कृतोसि ॥ २ ॥ स्वाङ्कृतोसि । विश्वेभ्य ऽइन्द्रियेभ्यो दि

र्धर्मैः। "तस्मै ते" तव हे "सोम" सोमाय स्वाहा। स्वाहा इत्युक्त्वा निष्क्रामति। "उर्वन्तरि-क्षमन्वेमि"। व्याख्यातम् ॥ २ ॥ जुहोति (१)। "स्वांकृतोसि"। स्वयं कृतोसि। स्वयं

मन्त्रेण पवस्वेत्वयं: ॥ १ ॥

(१) यत्त इत्यन्तान् सोमे निदधाति,स्वाहेत्युक्त्वोर्वन्तरिक्षमिति निष्क्रमणम्। का० ९।४।२८-३४ ॥ २ ॥

(१) स्वां कृत इति हुत्वा पात्रमुन्मार्ष्टि, अथमे परिधावृत्तानं पाणिं प्रागुपामार्ष्टि देवेभ्यस्त्वेति, वास उरोबाहुपि

कृतोसीति प्राप्ते छन्दसि यकारलोपः। स्वयमुत्पन्नोसि। "प्राणो वा अस्यैष ग्रहः स स्वयमेव कृतः स्वयं जात" इति श्रुतिः। स्वयमुत्पन्नोसि "विश्वेभ्यः इन्द्रियेभ्यः" सकाशात्। "दिव्येभ्यः" देवेभ्यः "पार्थिवेभ्यः" द्विपदचतुष्पदेभ्यः सकाशात् स्वयमुत्पन्नोसि इत्यनुवर्त्तते। यस्त्वमेवं स्वतन्त्रोऽकृतकः तं "मनः त्वाष्टु"। मनः प्रजापतिः त्वां व्याप्नोतु (२)। "प्रजापतिर्वै मनः। प्रजापतिष्ट्वाश्नुतामि"तिश्रुतिः। "स्वाहा त्वा सुभव सूर्याय"। स्वाहाकारेण त्वां जुहोमीतिशेषः।

व्व्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यः

हे शोभन "भव ग्रह सूर्याय"। प्रागुपमार्ष्टि मध्यमे परिधौ। "देवेभ्यः त्वा"। देवोभ्यो मरीचिपेभ्योऽर्थाय त्वामुपमार्ज्मीतिशेषः। बाह्लादिग्लिष्टमंशुमभिचारं जुहुयात्। "देवांशो"।

श्लिष्टं पशुमभिचरन् जुहुयाद्देवांशवितिं प्राणायत्वेति पात्रासादनम् उपांशुसवनं पाणिनाप्रमृज्योदञ्चं व्यानायत्वेति संसृष्टमिति। का० ९।४।३७-४। (२) अश्नूङ् व्याप्ताविलस्यांशु इति। हे प्राणरूपग्रह स्वांकृतोसि मयास्वीकृतोसि, देवेभ्यो देवजन्मनि स्थितेभ्यः; पार्थिवेभ्यो मनुष्यजन्मनिस्थितेभ्यः; सर्वेभ्य इन्द्रियेभ्यः, इन्द्रियार्थं मनश्च तेषामधीशं त्वां व्याप्नोतु। हे सुभव प्राणरूपोपांशुग्रह तादृग्रूपं त्वां बहिःप्राणरूपाय सूर्याय जुहोमि। आदित्यो वै बाह्यः प्राणः

हे देव सोमांशो "यस्मै वधाय त्वाम् "ईडे"। ईडिरध्येषणाकर्मा। प्रार्थयामि। तत्सत्य-मस्त्वितिशेषः। "उपरिप्रुष्टा" प्रुतिर्गत्यर्थः। उपर्युपरिगतेन "भङ्गेन" आमर्दनेन हतो निहतः। असाविति नामादेशः। "फट्"। अफला विशरणे। क्विबन्तस्यैतद्रूपम्, डलयोरेकत्वात्। विशीर्यतु। फटिति अभिचारे स्वाहाकारस्य स्थाने प्रयुज्यते। पात्रासादनम्। "प्राणाय-

**स्त्वामरीचिपेभ्यो देवांꣳशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोसौ फट् प्राणाय त्वा व्यानाय त्वा ॥ ३ ॥ * उपयामगृहीतोसि।**

त्वा"। सादयामीतिशेषः। उपांशुसवनं सादयति। "व्यानाय त्वा" ॥ ३ ॥ अन्तर्यामं गृह्णाति (१)। "उपयामगृहीतोसि"। उपयम्यतेऽनेनेत्युपयामः। उपयामेन गृहीतः त्वमसि।

उदरेत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णीतइत्याथर्वणिकश्रुतेः। स्वांकृतशब्देन प्राणापानापग्रहस्य स्वाधीनत्वं दिव्यपार्थिव-शब्दाभ्यां जन्मद्वयं च तित्तिरिणोक्तं स्वां कृतोसीत्याह प्राणमेव स्वमकृत विश्वेभ्यः इन्द्रियेभ्यः दिव्येभ्यः पार्थिवेभ्य इत्या-होभयेष्वेव देवमनुष्येषु प्राणान् दधातीति महीधरभाष्ये ॥ ३ ॥

(१) उदिते अन्तर्यामग्रहणमुपयामगृहीत इति। कां० ८।६।१ ॥ ४ ॥

"इयं वा उपयाम इयं वा इदमि"त्यादिश्रुतिः। "अन्तर्यच्छमघवन्" हे मघवन् अन्तर्मध्ये गृहपात्रे यच्छ निगृह्णीष्व। ततः "पाहि" गोपाय पात्रस्थं सोमम्। ततोनन्तरम् "उरुष्यरायः" उरुष्यतिर्गोपायनार्थः। "पशवो वै राय" इति श्रुतिः। गोपाय पशून्। "इषोयजस्व"। इषोन्नानि तत्प्रभवत्वात्प्रजा लक्षणया इष उक्ताः। "प्रजा वा इष" इति श्रुतिः। यजस्व यायजूकाः

उ॒प॒या॒मगृ॑हीतो॒ऽस्य॒न्तर्य॑च्छमघवन्पा॒हिसोम॑म्॥ उ॒रु॒ष्यरा॒यऽएषो॑

यजस्व॥ ४॥ अ॒न्तस्ते॑। अ॒न्तस्ते॒द्यावा॑पृथि॒वीद॑धाम्य॒न्तर्द॑धा-

कुरु। अस्मिन्नर्थे श्रुत्या एतत्पदं व्याख्यातम्॥ ४॥ "अन्तस्ते"। अन्तर्यामपुरोरुक्। त्रिष्टुप् मघवद्देवत्या। यस्य तव प्राणरूपापन्नस्यान्तः शरीरमध्ये द्यावापृथिव्यौ दधामि स्थापयामि। "अन्त मध्ये च दधामि "उरु" विस्तीर्णमन्तरिक्षम्"। सत्वं "सजूः" समानजोषणः सह प्रीयमाणः। "देवेभि र्देवैः। "अतोभिसऐस् बहुलं छन्दसी"तिभिस्। "अवरैः" परैश्च।

(१) मदयस्व तर्पयस्व। मद तृप्तौ चौरादिक आत्मनेपदी॥ ५॥

अवरैः पृथिवीस्थानैः परैः द्युस्थानैः “अन्तर्यामे” अस्मिन्ग्रहे होमायोद्यते हे मघवन् “मादयस्व” हर्षयस्वात्मानम् (१) ॥ ५ ॥ जुहोति (१)। “स्वाङ्कृतोसि”। व्याख्यातम्। पात्रमासादयति। “उदानायत्त्वा” ॥ ६ ॥ ऐन्द्रवायवं गृह्णाति (१)। “आवायोभूष”। त्रिष्टुप्

म्म्यु ब्ब्रन्तरिक्षम्। सजूर्द्देवेभि रवरैः परैश्चान्तर्यामेमघवन्माद यस्व ॥ ५ ॥ स्वाङ्कृतोसि। स्वाङ्कृतोसि व्विश्वेभ्यऽइन्द्रि येब्भ्योदिव्व्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टुस्वाहात्वासुभव सूर्यायदेवेभ्यस्त्वामरीचिपेभ्यऽउदानायत्वा ॥६॥ * आवायो।

वायुर्देवत्या। हे वायो आ अभूष अभ्याक्रमस्व। के “शुचिपाः” पवित्रं सोमं प्रथमवषट्कारवषट्कृतमप्राप्तमन्यैर्देवताविशेषैः पिबतीति शुचिपाः। “उपनः” उप समीपे नः अस्माकम् “अभ्याक्रम-

(२) स्वाङ्कृत इति निःशेषस्यैव हुमस्तिष्ठतः प्रथमे च गुग्रब्जेन पाणिना मृत्यगिति, उदानायत्वेति पात्रासादनमिति। का० ९।६।२-४ ॥ ६ ॥ (१) ऐन्द्रवायवं गृह्णात्या वाचयति। का० ९।६।५ ॥ ७ ॥

सु"ति सं बन्धः । केनाहमभ्याक्रम इति चेत् "सहस्रं ते नियुतो विश्ववार"। बहुधः ते नियुद्गुणयुक्ता अश्वा विद्यन्ते। "हे विश्ववार"। विश्वं सर्वं वृणोति विश्वैः सर्वैर्वा व्रियते प्राणिभिरिति विश्ववारः तस्य संबोधनं हे विश्ववार। किञ्च "उपोते अन्धोमद्यमयामि"। उपगमयामि च ते तव स्वभूतम् अन्धोन्नं मद्यं मदनीयम्। कथं भूतम् "यस्य" सोमस्य

आवांयोभूषंशुचिपाऽउपंनःसुहस्रंन्तेनियुतोंविश्ववार। उपों तेऽअन्धोमद्यंमयामियस्यदेवदधिषेपूर्व्वपेयंवायवेत्वा ॥ ७ ॥ इन्द्रंवायूऽइमे। सुताऽउपप्रयोभिरागंतम् ॥ इन्दंवोवामुश

हे "देवदधिषे" धारयसि। "पूर्वपेयम्"। प्रथमवषट्कारलक्षणम्। पूर्वपानं प्रथमवषट्कार एव ते सोमस्य राज्ञ इत्याशयः। "वायवेत्वे"ति देवतोद्देशः॥ ७॥ द्वितीयपुरोरुक्(१)। "इन्द्रवायू"। वायवी गायत्री। हे इन्द्रवायू "इमे" अभिषुताः सोमाः अतः कारणात् उप-

(१) उपगृह्य पुनरिन्द्रवायू इतीति, दशापवित्रेण परिमृज्यैष ते योनिरिति ग्रहसादनमिति। का० ९।६।६ ॥ ८॥

प्रयोभिराागतम्"। उपेत्ययमुपसर्ग आागतमित्यनेन संबध्यते। उपागतम् उपगच्छतम्। प्रयोभिः। प्रयःशब्दः हूञ् गतावित्यस्य धातोः शटप्रत्ययान्तस्य। 'हूसोयस्रि'तियणादेशः भिस्। ततस्तकारस्य छान्दसः सकारः। ततो वत्त्वादि ततः प्रपूर्वस्य प्रयोभिरिति सिद्ध्यति। प्रयद्भिरश्वैः शीघ्रैरागच्छतम्। किञ्च। "इन्दवोवामुशन्तिहि"। हिशब्दो यस्मादर्थे। यस्मा-

# न्तिहि । उपयामगृहीतोसिवायवइन्द्रवायुभ्यांत्वैषतेयो निःसजोषोभ्यान्त्वा ॥ ८ ॥ * अयंवाम् । अयंवामित्वा

दिन्दवः सोमाः वा युवाम् उशन्ति। वश कान्तौ। कामयन्ते। यदस्मादिन्द्रवायू पिवतमिति। "उपयामगृहीतोसिवायव इन्द्रवायुभ्यां चत्त्वा"। गृह्णामीतिशेषः। सादयति। "एषतेयोनिः"। एष पृथिवीलक्षणः ते तव योनिः स्थानम्। योनिशब्दो हि स्थानवचनः। "स जोषाभ्याम्"। सह प्रीतिभ्यां त्वां सादयामीति शेषः॥ ८॥ मैत्रावरुणस्य पुरोरुक्। "अयंवाम्" (१)। गायत्री मैत्रावरुणी। हे "मित्रावरुणौ" अयं वां युवयोः अयमभिषुतः सोमः" हे

(१) मैत्रावरुणमयं वा मिति। का० ९।६।७॥ ९॥

"ऋताहृधौ" सत्यहृधौ वा यज्ञहृधौ वा। अतः वाक्यात् "मम इत् इह श्रुतं हवम्"। इदितिनिपात एवार्थे। ममैव इह यजमानानां मध्ये श्रुतम् आह्वानम्। "उपयाम गृहीतोसि मित्रावरुणाभ्यां त्वा"। देवतादेशः॥ ९॥ पयसा श्रीणाति (१)। "रायावयम्"। मैत्रावरुणी त्रिष्टुप्। उपरितनेर्द्धर्चे तदः श्रवणादिह यदोध्याहारः। इह कामदुघां प्रार्थयते मन्त्रदृक्।

ब॒रु॒णा॒सु॒तः॒ सोम॑ऽऋतावृधा॥ ममेदि॒ह श्रु॑तं॒ हव॑म्॥ उ॒प॒यामगृ॑हीतोसि मि॒त्राव॒रु॑णाभ्यान्त्वा॥ ९॥ रा॒यावयम्। रा॒याव॒यᳪं स॑स॒वाᳪं सो॑मदेम ह॒व्येन॑ दे॒वा य॑व॒सेन॒ गावः॑॥ तान्धे॒नुम्मि॑

यथा धेन्वा गृहे सत्या। "रायावयᳪं ससवाᳪं सोमदेम"। राया धनेन वयं ससवांसः। वन सन संभक्तौ। संभक्ताः सन्तो हृष्टाः स्याम। कथमिव। "हव्येन देवाः"। यथा हविषा संभक्ता देवा हृष्यन्ति। यथा च "यवसेन" गवाह्निकादिना "गावो" हृष्टा भवन्ति "तां" तथाभूतां "धेनुं" हे "मित्रावरुणौ युवं" युवाम् "नः" अस्मभ्यं "विश्वाहा" सर्वदा। "धत्त"

(१) पयसा श्रीणात्येनं कुम्भावन्तर्धाय रायावयम्। का० ९।३।८॥ १०॥

दत्तम् "अनपस्फुरन्तीम्" स्फुरतिर्गत्यर्थः। अपेत्यापेत्य या पुरुषान्तरात्पुरुषान्तरं गच्छति सा अपस्फुरन्ती अपस्फुरन्ती न भवतीत्यनपस्फुरन्ती ताम् अनन्यगामिनीं दत्तमित्यर्थः। "विद्धाहे" तिसततं दानक्रियार्थम्। "एष ते योनिः ऋतायुभ्यां त्वा"। सादयामीतिशेषः। ऋतशब्देनात्र मित्रोऽभिधीयते, अयुशब्देन वरुणः। अयं तावत् सूत्यभिप्रायः येनैवमाह। ब्रह्म वा ऋतम् ब्रह्महिमित्रो ब्रह्मोह्यृस्तम्। वरुण"एवायु"रिति। पदकारस्तु ऋतायुशब्यामित्येकं पदं कृतवान्

त्वावरुणायुवन्नौविद्धश्ववाहावत्तमनपस्फुरन्तीमेषतेयोनिर्ऋतायुभ्यान्त्वा॥ १०॥ * यावाम्। यावाङ्कशामधुमत्त्यश्विनासू

तस्यायमभिप्रायः। ऋतं सत्यं यज्ञं वा यौ कामयेते तौ ऋतायू ताभ्यामृतायुभ्याम्॥ १०॥

आश्विनस्य पुरोरुक्। "यावांकशा" (१)। गायत्री आश्विनी। हे आश्विनौ या वां युवयोः कशा। कशेति वाङ्नाम। सा प्रकाशयति अर्थान्। "मधुमती" मधु ब्राह्मणोपनिषत् प्रशंसायुक्ता। "सूनृतावती" शोभनाप्रिया ऋतावती सत्यवती च या वाक् सा सूनृतावती।

(१) आश्विनं दण्डहात्यन्वारब्धे वायावामिति, सादयत्येषते, इति। का० ७।६।७॥ ११॥

"तया यज्ञं मिमिक्षतम्"। मिह सेचने। सिञ्चतम्। अश्विनौ हि यज्ञे अध्वर्यू अत एवमुच्यते। "उपयाम गृहीतोऽस्यश्विभ्यां त्वा गृह्णामि। "एषतेयोनिः माध्वीभ्यां त्वा सादयामि"। "दध्यङ् ह वा आभ्यामाथर्वणो मधुनामब्राह्मणमुवाच" इत्युपक्रम्य "तस्मान्मधुमत्यर्धर्चिक् गृह्णाति माध्वीभ्यां त्वेति सादयती"त्याह श्रुतेः। अतएवं व्याख्येयम्। मधु

नृतांवती॥ तयांयज्ञम्मिंमिक्षतम्। उपयामगृंहीतोस्यश्विभ्यान्त्वैषतेयोनिर्म्माध्वीभ्यान्त्वा॥ ११॥ * तम्प्रत्नथा। पूर्व

ब्राह्मणं यावधीयाते तौ माध्वी इत्युच्येते। इकारोत्र तद्धितः॥ ११॥ शुक्रं गृह्णाति (१)। तस्य पुरोरुक्। "तं प्रत्नथा"। जगती अनिरुक्तामकरणाच्च शुक्रोभिधीतते। अत्र च व्यव-

(१) शुक्रं वैल्वेन वा (बिल्वपात्रेण वैकंकतेन वा) तं प्रत्नथेति। शुक्रामन्थिभ्यां चरतः शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता प्रोक्षिताप्रोक्षितौ यूपशकलावादायापिधानं प्रोक्षिताभ्यामुपमार्जनमप्रोक्षिताभ्यामपमृष्टः शण्ड इत्यध्वर्युः, देवास्त्वेति निष्क्रामतो यथालिङ्गमिति, अपरेणोत्तरवेदिमरत्नी संधायोत्तरवेद्योःश्रोण्योर्निधत्तो विसृजन्तौ दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थातानाधृष्टासीति। का० ४।१।१-८।१०।१-७। अध्वर्युप्रतिप्रस्थातारौ शुक्रामन्थिभ्यां यथाक्रम

ह्विति: पदै: वाक्यं प्रायश: कल्प्यते। हे सोम तमिन्द्रं "ज्येष्ठतातिम्" उत्कृष्टतातिम् उत्कृष्टवि-स्तारम्। अथवा। 'वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसी'ति तद्धित: प्रशंसायाम्। ज्येष्ठतातिं ज्येष्ठप्रशस्यम्। "बर्हिषदम्"। यज्ञेषु बर्हिषि सीदतीति बर्हिषदम्। "स्वर्विदम्"। स्व:शब्देन द्युलोकोऽभिधीयते। द्युलोकं जानाति। तत्र हि तस्य निवास:। "धुनिम्"। धूञ् कम्पने। कम्प-यितारं शत्रूणाम्। "आशुं जयन्तम्" शीघ्रं जयन्तं जेतव्यानि वस्तूनि। तमेवं गुणविशिष्टमिन्द्रं

थांविश्वथेमथांज्ज्येष्ठतातिम्बर्हिषदंᳬस्वर्विदम्॥ प्रतीचीनं वृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुवर्द्धसे॥ उपयामगृहीतो

हे सोम "यासु अनु वर्द्धसे"। यासु विक्षु येषु यजमानेषु वर्द्धसे पुन:पुन: संस्क्रियसे तासु तासु क्रियासु त्वमवस्थित:। तत्र "प्रतीचीनं वृजनं दोहसे"। प्रतीचीनमात्मनोऽभिमुखमिन्द्रमवस्थाप्य मनुतिष्ठेताम्, तत्प्रकारोयं प्रोञ्छिताभ्यां द्वाभ्यां यूपशकलाभ्यां सहाप्रोञ्छितौ द्वौ यूपशकलावादाय प्रोञ्छिताभ्यां तयोर्ग्र-हयो: क्रमेणाच्छादनं कृत्वा प्रोञ्छिताभ्यां ग्रहावपमृज्यात्। तत्र प्रोञ्छितेन शकलेन ग्रहं विधायाप्रोञ्छितेनाध्वर्यु: शुक्र-ग्रहमपमार्ष्टीति सूत्रार्थ:। शेषं स्पष्टमितिदिक्॥ १२॥

स्वाहेति तर्पयित्वा अस्मै यजमानाय हृजनम्। हृजनमिति बलनाम। बलवच्च यज्ञफलं दोहसे प्रचारयसि। कथं पुनर्दोहसे। "प्रत्नथा" था उपमार्थीयः। प्रत्नशब्दः पुराणवचनः। चिरन्तनानामिव ऋषीणां भृगुप्रभृतीनां दोहसे। "इमथा"। इदानीन्तनानामिव यजमानानां दोहसे। अस्य यजमानस्य। "उपयामगृहीतोसिशण्डायत्वागृह्णामि"। शण्डोऽसुरः। "एष ते योनिः

तोसि शण्डायत्वै॒ष ते॒ योनि॑र्वी॒रतां॑म्पा॒ह्यप॑मृष्ट॒ः शण्डो॑ दे॒वास्त्वां॑शु॒-

क्र॒ पा॒ः प्रण॑यन्त्व॒नाधृ॑ष्टासि ॥ १२ ॥ सु॒वीरो॑व्वी॒रान् । सु॒वीरो॑

वीरतां" वीरत्वं "पाहि" गोपाय सादयामीतिशेषः। यूपशकलेनाभिमार्ष्टि। "अपमृष्टःशण्डः" अपमार्जनीकृतोस्य ग्रहस्य शण्डोऽसुरः। निष्क्रामति। "देवास्त्वा"। देवास्त्वां हे ग्रह शुक्रपायिनः यजतिस्थानं प्रापयन्तु दक्षिणस्यां वेदिश्रोणावासादयति। "अनाधृष्टासि"। अनुपहिंसितासि ॥ १२ ॥ यूपदेशं गच्छति (१)। "सुवीरोवीरान्" हे ग्रह कल्याणवीरः सन्

(१) सुवीरइति दक्षिणं यूपदेशं गच्छत्यध्वर्युः; अपरेण यूपमरत्नीसंधत्तसंजगमान इति यथा लिङ्गम्, अग्नो-

त्वं यजमानस्य वीरान् प्रजनयन् उत्पादयन् "परीहि" परिगच्छ। किञ्च "अभिरायस्पोषेण यजमानम्"। अभियोजयस्व धनस्य पोषेण यजमानम्। परीहीत्यनुवर्त्तते। अपरेण यूपमरत्नौ संधत्त। "संजग्मानः"। अयं शुक्रः संगच्छमानः "दिवा" द्युलोकेन संगच्छमानस्व "पृथिव्याः" पृथिवीलोकेन संगच्छमानस्व। कोसौ शुक्रः। "शुक्रशोचिषा"। शुक्लदीप्त्य।प्रजा

वीरान्न्प्रज नयन्न्परीह्यभिरायस्पोषेणयजमानम्॥ सञ्जग्मानोदिवापृथिव्याशुक्रःशुक्रशोचिषानिरस्तःशण्डःशुक्रस्याधिष्ठानमसि॥

बिभर्तीतिशेषः। यूपशकलं निरस्यति। "निरस्तः शण्डः"। निःक्षिप्तः शण्डो यज्ञाद्बहिःकृतः। आहवनीये प्रोक्षितं प्रास्यति। "शुक्रस्याधिष्ठानमसि"। शुक्रो ग्रहः तस्याधिष्ठानम् अधिकरणमसि॥ १३॥ जपति (१)। "अच्छिन्नस्य"। हे देव सोम अच्छिन्नस्य अनवक्षितौ निरस्यति निरस्तः शण्ड इत्यध्वर्युः, आहवनीये प्रोक्षितौ प्रास्यतः शुक्रस्याधिष्ठानमित्यध्वर्युरिति। का० ९।१०।८-१३॥ १३॥

(१) अच्छिन्नस्येति जपित्वा, उभयतो यूपं प्रत्यङ्मुखौ (अध्वर्युप्रतिप्रस्थातारौ यूपोभयपार्श्वयोः) जुहुतः

खण्डितस्य ते तव सुवीर्यस्य कल्याणप्रभावस्य "रायस्पोषस्य" धनपोषस्य "ददितारो भवेम। त्वत्प्रसादात् भूयोभूयःकरणं यजमानस्याशास्यते। जुहोति। "साप्रथमा"। यस्येन्द्रस्य सा" प्रथमा "संस्कृतिः"। स प्रथमः सोमसत्कारः क्रियते सोमक्रये। "सा दिवि देवमच्छेहीन्द्राय सोममि"ति। कथं भूता संस्कृतिः। "विश्ववारा। विश्वैः सर्वैर्यत्र सोमो व्रियते ऋत्विग्भि-

सि ॥ १३ ॥ अच्छिन्नस्यते। देवसोमसुवीर्य्यस्य रायस्पोषस्य द दितारःस्याम ॥ साप्रथमासंस्कृतिर्विश्ववारासप्रथमोवरुणो मित्रोऽअग्निः ॥ १४ ॥ सप्रथमः। सप्रथमो बृहस्पतिं

राहुतिभिश्च। विश्वं वा वृणोतीति। सोमे क्रीयमाणे यत्र जगदुत्पत्तिबीजत्वात् सा विश्ववारा संस्कृतिः। स च "प्रथमोवरुणः"। स च प्रथमो मित्रः" स च प्रथमो "ग्निः"। यस्येन्द्रस्यान्येषां देवगणानां प्रभुः ॥ १४ ॥ "स प्रथमः"। स च प्रथमो "बृहस्पतिः"। "चिकित्वान्" चेतना-

सा प्रथमेत्यध्वर्युः प्रथमं समनुप्रतिप्रस्थाता इति। का० ८।१०-१४ ८।१।१।१ ॥ १४ ॥

वान् उत्कृष्टधीः। अन्येषां मन्त्रिगणानां यस्येन्द्रस्य तस्मै इन्द्राय "सुत"मभिषुतं सोमम् "आजुहोत" धारयत स्वाहाकारेण हे ऋत्विजः। जपति (१)। "तृम्पन्तु होत्राः"। होत्राशब्देन होतृकयाज्याच्छन्दांस्यभिधीयन्ते। तृम्पन्तु। तृपतृम्प तृप्तौ। तृम्पन्तु होत्रा याज्याच्छन्दांसि। "मध्वः" मधुसोममित्योपमिकम्। माद्यतेः मधुस्वादस्य सोमस्य। "याः स्विष्टा" याः

धिक्षुकित्वाँ स्तम्मुाऽइन्द्रांयसुतमाजु॑होतुस्वाहाँ॥ तृम्पन्तुहोत्र्॥। मद्धोयाः॒स्विष्ट्॥याः॒सुप्प्री॑ताः॒सुहु॑तायत्स्वाहायाँडग्गनीत्॥१५॥ *

शोभनमिष्टाः। "याः सुप्रीताः" याः साधुप्रीताः। कथमेतज्ज्ञायत इति चेत्। "सुहुतायत्स्वाहा"। साधुहुता यस्मात्स्वाहाकारेण। प्रत्यङ् उपविशति। "अयाडग्नीत्"। अग्नीत्। एवं होतुराचष्टे॥ १५॥ मन्थिनं गृह्णाति (१)। "अयं वेनः"। सोम्यानया त्रिष्टुभाधि-

(१) तृम्पन्त्विति जपति, होतारं प्रत्यङ् उपसादयत्ययाडग्नीदिति।। का० ९।१२।९-१०॥ १५॥

(१) मन्थिनमयं वेन इति।। का० ९।५।१२।

देवमन्तरिक्षे व्यवस्थितः स्तूयते। अधिदैवं तावच्चन्द्रात्मना संस्तूयते। "अयं वेनश्चोदयत्पृश्निगर्भाः"। वेनः। वेनतेः कान्तिकर्मणः। अयं चन्द्रमा वेनः कान्तः। चोदयत्। चुद सञ्चोदने। प्रेरयति। "पृश्निगर्भाः" द्युलोकः पृश्निरादित्यो वा। साधारणत्वाद् द्युलोकगर्भा वा आदित्यगर्भा वा आपः। "ज्योतिर्जरायू"। ज्योति (२) रस्य जरायुस्थानीयं भवति चन्द्रमसः। "रजसोविमाने"। उदकं रज उच्यते। उदकस्य विनिर्माणकाले प्राप्ते ग्रीष्मान्ते। इदानीमन्तरिक्षमवस्थितमुच्यते। "इम" मेव च सोम "मपां" च "सूर्यस्य" च संगमे गृहीताभिरद्भिर्वसतीवरीवत्वाभिरभिषुतं सन्तं "शिशुंन" "शिशुमिव "विप्रा" मेधाविनो ब्राह्मणाः "मतिभिः रिहन्ति" स्तुवन्ति स्तोत्रशस्त्रैः। रिहतिर्हि अर्चतिकर्मसु पठितः। वसतीवर्यस्त्वापः। अपां संगमे

अयंवेनः। अयंवेनश्चोदयत्पृश्निगर्भाज्योतिर्जरायूरजसोविमाने। इममपाथंसङ्गमे सूर्यस्य शिशुन्नवि

(२) ज्योतिर्विद्युदस्यजरायुस्थानीयमेवं भूतोयं ग्रीष्मान्ते वर्षतीतिभावः।

सूर्यस्य च सङ्गमे गृह्यन्ते। तत्रह्येवं पठ्यते। "ता वै स्यन्दमानानां गृह्णीयात्। दिवा गृह्णीयादिति" च। उपयामगृहीतोसिमर्कायत्वा"। गृह्णामि। मर्कोऽसुरः॥ १६॥ सक्तुभिः श्रीणाति (१)। "मनोनयेषु"। त्रिष्टुप् शुक्रामन्थिप्रचाराभिधयज्ञानुवादिनी। "मनोन"। मन इव क्षिप्रम् येषु "हवनेषु" सोमहवनेषु सोमहोमेषु। "तिग्मम्"। तेजतेरुत्साहकर्मणः।

प्राम् तिभी रिहन्ति ॥ उपयामगृहीतोसि मर्कायत्वा ॥ १६ ॥

मनोन। येषु हवनेषु तिग्मं विपः शच्याव्वनुथो ह्वन्ता ॥ आ यत:-

उत्साहयुक्तम्। "विपः" विपश्चितौ मेधाविनौ अध्वर्यू। छान्दसः प्रातिपदिकैकदेशलोपः। "शच्या"। शचीतिकर्मनाम। कर्मणा निमित्तभूतेन। "वनुथः"। प्रथमपुरुषस्य स्थाने मध्यम-

यद्वा अपां सूर्यस्य सङ्गमेनिमित्ते वृष्टिगर्भनिष्पत्तये विप्रा इमं सोमं स्तुवन्ति। यथावालो वस्तुलाभाय स्तूयत इत्यर्थो महीधरभाष्ये ॥ १६ ॥ (१) सक्तुभिः श्रीणात्येनं मनो न येष्विति, अपमृष्टो मर्क इति प्रतिप्रस्थाता, देवास्त्वेति निष्क्रामतो यथा लिङ्गम्। ८।६।१२-८।१०।६ ॥ १७ ॥

पुरुषश्छान्दसः । "वनुतः" । वयाम्नुवतो युगपत् । शुक्रामन्थिहोमं द्रवन्तौ गच्छन्तौ तेष्वेव होमेषु कर्त्तव्येषु । "आयः शर्याभिस्तुविनृम्णो अस्याश्रीणीत" । योऽध्वर्युः अश्रीणीत शर्याभिरङ्गुलीभिः । "तुविनृम्णः" । तुवीतिबहुनाम । नृम्णमिति धननाम । बहुधनो महादक्षिणः । अस्येति गृहनिर्देशः । अस्य मन्थितः अश्रीणीत । "आदिशं" प्रतिदिशम् । क्वावस्थितस्य सतः । "गभस्तौ" पाणौ । यद्यप्यत्राध्वर्युप्रतिप्रस्थातारौ समानकर्माणौ तथापि यः अपणं करोति स एव

आर्य्याभिस्तुविनृम्णोऽअस्याश्रीणीतादिशं गभस्तावेषतेयोनिः प्रजाः पाह्यपमृष्टोमर्क्कोदेवास्त्वामन्थिपाः प्रणयन्त्वनाधृष्टासि ॥१७॥

प्रधानमित्याशयः । "एषतेयोनिः प्रजाः पाहि" । यजमानसंबन्धिनीः प्रजाः गोपाय । यूपशकलेनोपमार्ष्टि । "अपमृष्टोमर्कः" । अपमार्जनीकृतो मर्कोऽसुरः । निष्क्रामति । "देवाः त्वा मन्थिपाः प्रणयन्तु" प्रापयन्तु यजतिस्थानम् । मन्थीति गृहनाम । "अनाधृष्टासि" । निर्विशेषम् ॥ १७ ॥ पूर्वेण गच्छति (१) । "सुप्रजाः" । यतस्त्वं सुप्रजाः । हे मन्थिन् सुप्रजाः ।

(१) सुप्रजा इति प्रतिप्रस्थानोत्तरम्, अपरेणयूपमरत्नीसंधत्तः संजग्मानइति, निरस्तो मर्क इति प्रतिप्रस्थाता,

अतस्त्वं सु "प्रजाः" यजमानस्य "प्रजनयन्परीहि" परिगच्छ। किञ्च "अभि" गच्छस्व धनस्य पोषेण यजमानम्"। परीहीत्यनुवर्त्तते। अपरेण यूपमरत्नी संधत्तः। "सञ्जग्मानः"। संगच्छमानो "दिवा" द्युलोकेन संगच्छमानश्च "पृथिव्या" पृथिवीलोकेन। कोसौ, "मन्थीमन्थिशोचिषा" च। मन्थिनः शोचिर्दीप्तिः मन्थिशोचिः तेन मन्थिशोचिषा। संजग्मान इतिवर्त्तते। यूपशकलं

सुप्प्रजाःप्प्रजाःप्प्रजनयन्न्परीह्यभिरायस्प्पोषेणयजमानम् ॥ सञ्जग्मानोदिवापृथिव्यामन्थीमन्थिशोचिषानिरस्तोमर्क्कोमन्थिनोधिष्ण्ण्यानमसि ॥ १८ ॥ * येदेवासः। येदेवासोदिव्व्येकादशस्त्थ

प्रास्यति। "निरस्तोमर्को"ऽसुरः। आहवनीये प्रास्यति। "मन्थिनोधिष्ठानमसि"। मन्थी ग्रहः। अधिष्ठानमधिकरणम्॥ १८॥ आग्रयणं गृह्णाति। "येदेवासः"। वैश्वदेवी त्रिष्टुप्। मन्थिन इति प्रतिप्रस्थाता। ८।१०।९-१२॥ १८॥

(१) आग्रयणं द्वयोर्धारयोर्यें देवास इति। का० ८।६।१४॥ १९॥

ये यूय हे देवासः। "आज्जसे रसुक्‌ छान्दसः। "दिवि" द्युलोके "एकादश" संख्यया भवथ। "पृथिव्याम् अधि" उपरि "एकादशस्थ"। ये च यूयम् "अप्सुक्षितः"। अप्सु इत्यन्तरिक्षनामसु पठितम्। क्षयतिर्निवासार्थः। अन्तरिक्षनिवासिनः। "महिना" महाभाग्येन एकादशस्थ। महिनेति त्रिष्वपि स्थानेषु संबध्यते। सर्वत्र हि महाभाग्यविशेषात्। ते यूयं हे

पृथिव्यामध्येकादशस्थ॥ अप्सुक्षितोमहिनैकादशस्थतेदेवा

सोयज्ञमिमञ्जुषध्वम्॥१९॥ उपयामगृहीतोसि। उपयाम

देवाः "यज्ञमिमम्" आग्रयणलक्षणम्। "जषध्व" मासेवध्वम्॥१९॥ "उपयामगृहीतोसि" (१)। व्याख्यातम्। "आग्रयणोसीतिनाम्ना संबोधनं स्तुत्यर्थम्। नामधेयप्रतिलम्भो ह्यस्य साधक्रियायोगात्। "स्वाग्रयणः" यस्मिन् त्वयि गृहीते अग्रे प्रथमं वाचः अयनं गमनम् उत्सर्गः अध्वर्योः संजातः। यस्त्वमेवं साधुकारी तं त्वां ब्रवीमि। "पाहि यज्ञं पाहियज्ञपतिम्"।

(१) त्रिहिंकृत्य सोमः पवत इति। (जपेदिति शेषः) का० ९।६।१५॥२०॥

शु० य० सं० १४७ उ० आ०

गोपाय यज्ञं गोपाय यजमानम्। किञ्च "विष्णुः त्वामिन्द्रियेण पातु"। विष्णुर्यज्ञस्याधिष्ठात्री देवता स त्वामिन्द्रियेण वीर्येण पातु। "विष्णु त्वं पाहि"। त्वं च विष्णुं गोपाय। "अभि-सवनानि पाहि"। अभितः सर्वतः सवनानि पाहि त्रीण्यपि। सर्वेषु स हि सवनेषु गृह्यते ॥२०॥

"सोमः पवते"। पवत इति गतिकर्मसुपठितम्। गृहपालेषु गच्छति स्वकीये कर्मणि प्रवर्त्तते।

गृहीतोस्याग्रयणोसि स्वाग्रयणः पाहि यज्ञम्पाहि यज्ञपतिं विष्णुस्त्वामिन्द्रियेणपातु विष्णुन्त्वम्पाह्यभिसवनानिपाहि ॥२०॥

सोमः पवते। सोमः पवते सोमः पवतेऽस्मै ब्रह्मणेऽस्मै क्षत्राय। अस्मै सुन्वते यजमानाय पवतऽइषऽऊर्जे पवतेऽद्भ्यऽओषधीभ्यः

"अस्मै ब्रह्मणे" उत्पत्तिस्थित्यर्थं पवते। "अस्मै क्षत्राय"। पूर्ववद्व्याख्या। अस्मै "सुन्वते यज-मानाय" कामप्राप्त्यर्थं "पवते"। "इषे ऊर्जे" अन्नाय तदुपसेचनाय क्षीरादेः पवते। "अद्भ्यः ओषधीभ्यः पवते" अद्भ्यः वृष्टिभ्यः ओषधीभ्यो यवादिभ्यः। उत्पत्तिस्थितये पवते। "द्यावापृथि-

७ अ० मन्त्र १४७

वीभ्यां" शोधनाय पवते "सुभूताय पवते"। किं वा बहुनोक्तेन सर्वस्मै साधुभवनाय पवते। "विश्वेभ्यः त्वा देवेभ्यः"। देवतादेशः। "एष ते योनिर्विश्वेभ्यः त्वा देवेभ्यः"। सादयामीति-शेषः ॥ २१ ॥ उक्थ्यं गृह्णाति (१)। "उपयामगृहीतोसि"। इन्द्राय त्वां गृह्णामीति संबन्धः। कथं भूताय। "बृहद्वते"। बृहदिति सामाभिप्रायम्। "वयस्वते" विशिष्टं यौवन-

पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ २१ ॥ * उपयामगृहीतोसीन्द्राय त्वा बृहद्वते वयस्वतऽउक्थाव्यं गृह्णामि ॥ य

लक्षणवीर्यसमेतं सदाकालं वयो यस्य स तथोक्तः। "तस्मै वयस्वते"। कथं भूतं त्वां गृह्णामि। "उक्थाव्यम्" उक्थानि मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकसंबन्धीनि अवति गोपायतीत्युक्थाव्यम्। तत्र ह्यस्य विनियोगः। "यत्ते" तव हे "इन्द्र बृहत्" महत्

(१) उक्थ्यमुपयामगृहीतइति, उक्थ्यं जिघृक्षन्गृह्णाति तं धं देवेभ्यस्त्वेति सर्वेभ्य इति का० ८।६।२०।८।१४।८ ॥२२॥

ऊर्जितं "वयो" यौवनलक्षणं "तस्मै त्वां" गृह्णामि। अत्र च ते इन्द्रेति युष्मदामन्त्रिताभ्यां प्रत्यक्षमिन्द्र उच्यते। त्वेति युष्मदादेशोपि प्रत्यक्ष एव। तयोः सामर्थ्यं कथमिच्चेत्। यस्येन्द्रस्य बृहद्वयस्तस्मै त्वां गृह्णामीति पदद्वयस्य व्यत्ययेनेति ब्रूमः। ते इत्यस्य पदस्य यस्येत्यनेन पदेन व्यत्ययः। इन्द्र इत्यस्य पदस्य इन्द्रस्येत्यनेन व्यत्ययः। "विष्णवे"

त्वंऽइन्द्रबृहद्वयस्तस्मैत्वाविष्णवेत्वैषतेयोनिरुक्थेभ्यस्त्वादेवेभ्यस्त्वादेवाव्यंयज्ञस्यायुषेगृह्णामिमित्रावरुणाभ्यान्त्वा ॥ २२ ॥ मित्रावरुणाभ्यान्त्वा। देवाव्यंयज्ञस्यायुषेगृ

यज्ञाय च त्वां गृह्णामीतिशेषः। "एषतेयोनिः" उक्थेभ्यः त्वां सादयामीतिशेषः। विगृह्णाति। "देवेभ्यस्त्वा"। देवेभ्योर्थाय त्वां "देवाव्यं" देवतर्पणम्। "यज्ञस्यायुषे"। अनवच्छिन्ना आकस्मिकभ्रेषरहिता परिसमाप्तिः यज्ञस्यायुः। यज्ञस्यायुः। यज्ञस्यायुषे यज्ञस्य समाप्तये गृह्णामि। यद्वा यज्ञो यजमानस्य शरीरमिति यजमानस्यायुराशास्यते ॥ २२ ॥

उक्थविग्रहणेषु द्वितीयो मन्त्रविकल्पो मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां यथासङ्ख्यम्। "मित्रा-वरुणाभ्यांत्वा इन्द्रायत्वा" इन्द्राग्नीभ्यांत्वा" एवमादयोमन्त्रा ऋजवः। चरकाणां मन्त्रविकल्पाः। "इन्द्रावरुणाभ्यांत्वा। इन्द्राबृहस्पतिभ्यांत्वा। इन्द्राविष्णुभ्यांत्वा"। एतेपि ऋजवः ॥२३॥ भ्रुवं

ह्णामीन्द्रांयत्वादेवाव्यं यज्ञस्यायुषे गृह्णामीन्द्राग्निभ्यां-न्त्वादेवाव्यं यज्ञस्यायुषेगृह्णामीन्द्रावरुणाभ्यान्त्वादेवाव्यं यज्ञस्यायुषेगृह्णामीन्द्राबृहस्पतिभ्यान्त्वादेवाव्यं यज्ञस्यायुषे गृह्णामि ॥ २३ ॥ * मूर्द्धानंन्दिवः। मूर्द्धानंन्दिवोऽअरतिम्पृथिव्या

गृह्णाति। (१) "मूर्द्धानन्दिवः"। वैश्वानरी त्रिष्टुप्। वैश्वानरश्चात्र सर्वात्मा स्तूयते। यं वैश्वा

(१) मित्रावरुणाभ्यां त्वेति वा प्रशास्त्रे, एवं प्रतिप्रस्थातोत्तराभ्यामिन्द्राय त्वेति ब्राह्मणाच्छंसिन इन्द्राग्निभ्यां त्वेत्यच्छावाकायेति, उत्तरेष्विन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति। का० ९।१५।९।१०।७।११ ॥२२॥

(१) दिवं मूर्धानं दिव इति। का० ९।६।२१।

38.

नरमित्थंभूतं जनयन्त देवाः । मूर्द्धानं दिवः द्युलोकस्य सूर्यात्मनावस्थितं मूर्द्धानं शिर आहुर्ब्रह्मविदः । यं च "अरतिं पृथिव्याः" । पृथिवीशब्देनाचान्तरिक्षमभिधीयते । पठितं चैतदन्तरिक्षनामसु । एतद् अन्तरिक्षम् आकाशम् आपः पृथिवीति । "अरतिम्" अलमतिं पर्य्याप्तमतिं पृथिव्या अन्तरिक्षलोकस्याहुः । तत्र ह्यसौ स्थितो यथाकालं वृष्ट्या पुष्णाति भूतानि । "वैश्वानरमृतआजातमग्निम्" । यं वैश्वानरम् ऋते यज्ञे "आजात"मुत्पन्नम् अरणिद्वयाद् अग्निमाहुः । यं च

वैश्वानरमृतऽआजातमग्निम् । कविᳪ सम्राजमतिथिं जनानाम्

"कविं" क्रान्तदर्शनमाहुः । "संम्राजं" सम्यगैश्वर्येण युक्तमाहुः । यं च "अतिथिं जनानाम्" आहुः । विज्ञायते हि "अग्निरतिथिरूपेण गृहान् प्रविशति" । तस्मात्तस्योदकमाहरन्ति । "आसन्नापात्रं जनयन्त देवाः" । योयमुक्तगुणो वैश्वानरस्तमासन् । आस्यशब्दस्य 'पद्दन्नि'त्यादिना आसन् आदेशः । सप्तम्याश्छान्दसो लोपः । देवानामासनि आस्ये मुखे । आ आभिमुख्येन । "पात्र"

पृथिव्या अरतिमित्यस्य पृथिव्युपरिदाहपाकप्रकाशादिकर्मस्य उपरतिरहितमित्यर्थो वा महीधरभाष्ये ॥ २४ ॥

पीयतेनेनेति पात्रम् विज्ञायते हि "चमसोदेवपान" इति । "चमसेन ह वा एतेन भूतेन देवा भक्षयन्तीति" । "जनयन्तदेवा" इन्द्रादयः ॥ २४ ॥ "उपयामगृहीतोसि ध्रुवोसि" नाम्ना । क्रियाजमेतत्तन्नामेति प्रशंसा । "ध्रुवक्षितिर्ध्रुवाणाम्" । क्षि निवासगत्योः । ध्रुवाणामपि त्वं ध्रुवक्षितिः ध्रुवनिवासः । "ध्रुवतमोच्युतानाम्" । अच्युतानामपि त्वमेव ध्रुवतमः ।

मासन्नापात्वं जनयन्तदेवाः ॥ २४ ॥ उपयामगृहीतोसि । ध्रुवोसिध्रुवक्षितिर्ध्रुवाणांध्रुवतमोच्युतानामच्युतक्षित्तमऽएष तेयोनि

"अच्युतक्षित्तमः" । अच्युते क्षयतीत्यच्युतक्षित् अतिशयेन अच्युतक्षिद् अच्युतक्षित्तमः । सादयति । "एष ते योनिः वैश्वानराय त्वा" । सादयामीतिशेषः । ध्रुवं निनयति (१) । "ध्रुवं-ध्रुवेण" । बृहती । पूर्वोर्द्धर्चो ध्रुवदेवत्यः उत्तरऐन्द्रः । ध्रुवं त्वाम् "अवनयामि" अवसिञ्चामि । "ध्रुवेण" एकाग्रेण "मनसा वा चा" चतन्मन्त्रोच्चारणप्रवणया सोमं प्रति । स हि

(१) ध्रुवं होतृचमसेऽवनयति ध्रुवंध्रुवेणेति । का० ८।६।२८ ॥ २५ ॥

होटचमसे अवसिच्यते द्वादशे शस्त्रे। "अथान:" अथास्माकमवसिक्तसोमानाम्। "इन्द्र इत्"। इत् शब्द एवार्थे इन्द्रएव "विश:" मनुष्यान् "असपत्ना:" सपत्नरहितान्। "समनस:" समनस्कान् वृत्तरा-युक्तान "करत्" करोतु॥२५॥ विप्रुषां होम:(१)। "यस्ते द्रप्स:"। सौमी त्रिष्टुप्यजुरन्ता। "स्वाहादेवा-नामुपक्रमण" मिति यजु:। हे सोम यस्ते द्रप्स: विप्रुड् रसैकदेश:। "स्कन्दति" भूमौ वा

धि॑ष॒ण॑वान् रायं॑त्वा ॥ धु॒व॒न्धु॒ वे॒णा॒म॒न॒ सा॒ब्धा॒चा॒सोम॒ सर्वं॑नयामि ॥

अ॒थांन॒ऽइन्द्र॒ इद्वि॒शोऽस॒पत्ना॒ऽस॒म॑नस॒स्कर॑त् ॥ २५ ॥ * यस्ते॑ ।

द्र॒प्सस्क॒न्द॑ति॒यस्ते॑ऽअ॒ꣳशुर्ग्ग्रा॒विच्यु॒तोधि॒ षव॑णयोरु॒पस्थात्॑ ॥

अन्यत्र वा पतति। "य" श्च तव "अंशु:" स्कन्दति। "ग्रावच्युत:" ग्रावण्श्च्युत: पतित:। "अधिषवणयोरुपस्थात्"। अधिषवणफलकयो: उपस्थाद् उत्सङ्गात्। "अध्वर्योर्वाय:" स्कन्दति। "परिवाय: पवित्रात्"। परिस्कन्दति वा य: पवित्रात्। यत: कुतश्चित्स्कन्दतीत्यभिप्राय:। "तन्ते

(१) यस्त इति विप्रुषां होमं जुहोति, अन्यतरत्तृणं चात्वाले प्रास्यति। का० ८।६।२८-३२ ॥ २६ ॥

जुहोमि"। तं विप्रुषं ते तव संबन्धिनमंशुं वा अग्नौ जुहोमि। "मनसा" संकल्प्य। "वषट्-कृतं स्वाहा"। वषट्कारेण स्वाहाकारेणेत्यर्थः। तृणं चात्वाले प्रास्यति "देवानामुत्क्रमण-मसि"। चात्वालमुच्यते। अतो हि देवाः स्वर्गं लोकमुपोदक्रामन्॥ २६॥ गृहान्दर्शयत्य-वकाशान्वाचयन् यज्ञस्यैते प्राणा यजमानस्य वानूचानस्य उपांशुं प्राणरूपेण दर्शयति। "प्रा-

अ॒ध्व॒र्योर्वा॒ परि॑ वा॒यः प॒वित्रा॒त्तन्ते॑ जु॒होमि॒ मन॑सा॒ व्वष॑ट्कृत॒ᳪ स्वाहा॒ दे॒वाना॑मु॒त्क्रम॑णमसि॥२६॥ * प्रा॒णाय॑ मे॒। व्वर्चो॒दा व्वर्च॑से पवस्व व्व्या॒नाय॑ मे व्वर्चो॒दा व्वर्च॑से पवस्वोदा॒नाय॑ मे व्वर्चो॒दा व्वर्च॑से पव-

णाय मे वर्चोदाः"। हे उपांशो यस्त्वं स्वभावत एव "वर्चोदा"स्तं त्वां ब्रवीमि। प्राणाय मे मदीयाय "वर्चसे पवस्व" प्रवर्तयस्व। अनेन तुल्यव्याख्याना अवकाशमन्त्राः। उपांशुसवनम्।

(१) ग्रहानवेक्षयति यथागृहीतमवकाशान्वाचयन् प्राणाय म इति प्राणाय त्वेति प्रतिमन्त्रम्। का० ८।७।८॥ प्राणायेत्याद्यो मन्त्रा अवकाशसंज्ञास्तान्वाचयेत् ग्रहपाक्रमेण ग्रहान्यजमानं दर्शयति॥ २७॥

"व्यानायमे"। अन्तर्यामम्। "उदानायमे"। ऐन्द्रवायवम्। "वाचेमे" मैत्रावरुणम्। "क्रतूदक्षाभ्यांमे"। कामः क्रतुरुच्यते। तस्य सम्पद्धिर्दक्षः। आश्विनम्। "श्रोत्रायमे" शुक्रामन्थिनौ युगपत्। "चक्षुर्भ्यांमेवर्चो दसौवर्च्चसेपवेथाम्"। शुक्रामन्थिविषयं द्विवच-

स्वव्वाचेमे व्वर्चोदा व्वर्च्चसे पवस्व क्रतूदक्षाभ्यांम्मे व्वर्च्चोदा व्वर्च्चसे पवस्व श्रोत्रायमे व्वर्च्चोदा व्वर्च्चसे पवस्व चक्षुर्भ्यांम्मे व्वर्च्चोदसौ व्वर्च्चसे पवेथाम् ॥ आत्मने मे ॥२७॥ आत्मने मे। व्वर्चोदा व्वर्च्चसे पवस्वौजसे मे व्वर्चोदा व्वर्च्चसे पवस्वायुषेमे व्व

नम् ॥ २७ ॥ आग्रयणम्। "आत्मने मे"। उक्थ्यम्। "ओजसे मे"। ओजो जेष्यामीत्याशंसा। ध्रुवम्। "आयुषेमे"। पूतभृदाहवनीयौ च युगपत्। "विश्वाभ्यो मे"। यौ युवां स्वभावत एव वर्चोदसौ तौ ब्रवीमि। "विश्वाभ्यः" सर्वाभ्यो "मे" मम प्रजाभ्यो-

(१) कोशीति द्रोणकलशं, (अवेक्षते) भूर्भुवः स्वरिति जपतीति। का० ९।७।१४-१५ ॥ २८ ॥

वर्चोदसौ "वर्चसे पवेथाम्"। प्रवृत्तिं कुरुतम् ॥ २८ ॥ अथद्रोणकलशम्। "कोसि" (१)। वर्द्धमान उष्णिक्। अनुष्टुप् वा। अध्वर्युः प्रजापतिरूपं द्रोणकलशमाह। कोसि कः प्रजापतिः स त्वमसि। "कतमोसि" अतिशयेन प्रजापतिरसि। अनन्यभूतः प्रजापतिना। "कस्यासि"।

च॒र्चो॒दा॒व्वर्च॑से पवस्व॒ व्विष्ट्ठबांभ्व्योमे॑ प्प्र॒जाभ्व्यो व्वर्च॒दस॑ौ॒ व्वर्च॑से पवेथाम् ॥२८॥ कोसि। कत॒मो॑सि॒ कस्या॑सि॒ कोना॑मा॑सि ॥ यस्य॑ते॒ नामाम॑न्न्महि॒ यन्त्वा॒ सोमे॑ नाती॑तृपाम ॥ भू॒र्भु॒वः॒स्व॒ः सुप्प्र॒जाः प्प्रजाभिः॑ स्याᳪसुवीरो॑ व्वीरैः सुपो॒षः पोषैः॑ ॥ २९ ॥ *

कस्य प्रजापतेरनन्यभूतोसि। "कोनामासि"। प्रजापतिनामासि। किञ्च "यस्य" तव "नामामन्महि"। मन ज्ञाने। विजानीमः। "य" च त्वां "सोमेनातीतृपाम"। तर्पितवन्तः। सोस्मान्विदितनाम्नः कुरु तर्प्पय च कामैरितिशेषः। जपति। "भूर्भुवः स्वरिति"। व्याख्यातम् ॥२९॥

चैतत्। नभ इव आदित्यमिव वरणीयं सोममागत्य च। "अस्यसोमस्यपातम्"। पिवतम्। "धियेषिता"। यजमानस्य सं बन्धिन्याबुद्ध्या इषिता प्रेषितौ सन्तौ। "उपयामगृहीतोसीन्द्राग्निभ्यां त्वा" गृह्णामि। "एषतेयोनि:"। इन्द्राग्नीभ्यां त्वा" सादयामि॥ २१॥ गृहस्य द्वितीयो मन्त्र-

सु तद्गीर्भिर्नभो वरेण्यम्॥ अस्य पातं धियेषिता॥ उपयामगृहीतोसीन्द्राग्निभ्यान्त्वैष ते योनिरिन्द्राग्निभ्यान्त्वा॥२१॥

* आघं। आघा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्॥ येषामिन्द्रो युवा सखा॥ उपयामगृहीतोस्यग्नीन्द्राभ्यान्त्वैष ते यो

विकल्प:। "आघाये"। आग्नेन्द्री गायत्री। "आघाये अग्निमिन्धते"। इन्धी दीप्तौ। आदीपयन्ति ये अग्निम् इष्टिपशुसोमचातुर्मास्यैर्यज्वान:। घ इति निपातोनर्थक:। ये च "स्तृणन्ति बर्हि: आनुषक्"। आनुषगिति नामानुपूर्वस्यानुषक्तं भवति। आनुपूर्व्येण क्रमेण। स्तृणन्ते-

षामिति। "येषामिन्द्रः युजा"। अनुपस्तनराम्नुयशरीरः। "सखा"। समानख्यानः। नेतरेषाम-यज्वनाम्। "उपयाम" इति व्याख्यातम्॥ ३२॥ वैश्वदेवं गृह्णाति (१)। "ओमासः"। वैश्वदेवी गायत्री। हे ओमासः अवितारः तर्पयितारः तर्पणीया वा। "चर्षणीधृतः"। चर्षणयो मनुष्यास्तान्धारयन्ति तैर्वा ध्रियन्ते चर्षणीधृतः। "विश्वेदेवा स आगत"। हे विश्वे-

नि॑रग्गनी॒न्द्राभ्यां॑न्त्वा॥ ३२॥ * ओमा॑सश्चर्षणीधृतः। ओमा॑सश्चचर्षणीधृ॒तो॒विश्वे॑देवास॒आग॑त॥ दाश्वाꣳसो॑दाशु॒षः॑सु॒तम्। उ॒प॒य॒ामगृ॑हीतोसि॒विश्वे॑भ्य॒स्त्वा॒दे॒वेभ्य॑ऽए॒ष

देवा ये यूयम् ओमासः अवितारो रक्षितारः चर्षणीनां मनुष्याणाम्। तेनोपकारेणावनीया वा तर्पणार्हाः धारयितारश्च सं वित्तिकर्त्तारः ते यूयम् "दाश्वांसः" चेतसा दत्तवन्तः शत-

(१) वैश्वदेवं गृह्णाति शुक्रपात्रेण द्रोणकलशादन्वारब्धे (अध्वर्योर्यजमाना स्पृष्टेऽस्पृष्टे वा सति) ओमास इति। का० ९।१४।१॥ ३२॥

संकल्पा भूत्वा इदं नामास्माभिरस्मै देयमिति ततोस्यदाशुषः दत्तवन्तो यजमानस्यैतमभिषुतं सोमं पातुमागच्छत इत्येवमाशास्महे। हे विश्वेदेवा इहागच्छत। कथं भूताः दाश्वांसः। दाश्व दाने। 'दाश्वानि'तिनिपात्यते दत्तवन्तो यजमानास्त्र कामान्। किमर्थं पुरस्कृत्यागच्छत। "दाशुषः सुतम्"। हवींषि दत्तवतो यजमानस्याभिषुतं सोमं पातुम्।

तेयोनि विश्वेभ्यस्त्वादेवेभ्यः ॥ ३३ ॥ विश्वेदेवासः। विश्वेदेवास आगत शृणुताम इमं हवम् ॥ एदम्बर्हिर्निषीदत ॥ उपयामगृहीतोसि विश्वेभ्यस्त्वादेवेभ्य एषतेयोनि विश्वेभ्यस्त्वादेवेभ्यः ॥ ३४ ॥ इन्द्रमरुत्वः। इ

उपयाम इत्यादि व्याख्यातम् ॥ ३३ ॥ द्वितीयो मन्त्रविकल्पः। वैश्वदेवीगायत्री। हे "विश्वेदेवा" इह आगच्छत। आगत्य च "शृणुतमे" मम "इमं हवं"माह्वानम् श्रुत्वा चावधार्य च "आनिषीदत इदं"मस्मदीयं "बर्हिः"। उपयामगृहीतोसीत्यादि व्याख्यातम् ॥ ३४ ॥

मरुत्वतीयं गृह्णाति (१)। "इन्द्रमरुत्वः"। मरुद्भिः सहित इन्द्रो देवता। इत उत्तरञ्च तिसृणामृचां त्रिष्टुभामिन्द्र ऋषिम् प्राङ्माहेन्द्रात्। हे इन्द्र मरुत्वः। 'मतुवसो रु सम्बुद्धौ-छन्दसी'ति रुत्वम्। मरुत्वः हे मरुत्वन् मरुद्भिः सहित "इह" सदीये यज्ञे "पाहि" पिब "सोमम्"। कथं पिबेत्यत आह। "यथाशार्याते अपिबः"। शार्यातो मानवः। तस्यापत्यं

न्द्र मरुत्वऽइह पाहि सोमं यथा शार्याते ऽअपिबः सुतस्य ॥ तव प्रणीती तव शूर शर्म्मन्ना विवासन्ति कवयः सुयज्ञाः। उपयामगृहीतो

शार्यातः। "शार्यातो ह वा इदं मानवो ग्रामेण चचारेति" श्रुतिः। यथा येन प्रकारेण शार्यातेरजनि "अपिबः" पीतवानसि। "सुतस्य" अभिषुतस्य स्वसोमस्य एकमंशम्। किञ्च। "तव-प्रणीत्या" प्रणयनेन "तव च शूर शर्मन्" शर्मणि शरणे यज्ञगृहे। "आविवासन्ति" विवासति:

(१) एते प्रातःसवनग्रहाः पूर्णाः। अथ माध्यन्दिनसवनग्रहाः। अत्र मरुत्वतीया गृह्यन्त इति तित्तिरिवचनात् त्रये मरुत्वतीयास्तत्र प्रथममाह। मरुत्वतीयमृतुपात्रेणेन्द्रमरुत्त इति। का० १०।१।२४॥ ३५॥

शु० य० सं० १५५ उ० आ०

परिचर्याम् आमिसुख्येनावस्थितास्त्वा परिचरन्ति । "कवयः" क्रान्तदर्शनाः । "सुयज्ञाः" कल्याणयज्ञाः । उपयामेत्यादि व्याख्यातम् ॥ ३५ ॥ द्वितीयं मरुत्वतीयं गृह्णाति । "मरुत्वन्तम्" । मरुद्भिस्तद्वन्तमिन्द्रम् "वृषभ" वर्षितारम् "वावृधान" वर्द्धमानम् "अकवारि" मकुत्सितारिम् । शत्रवोपि यस्याकुत्सितदृ‌ढादयः । अथवा अकुत्सितदानम् । अथवा अकुत्सितश्वर्यम् ।

तोसीन्द्राय त्त्वा मरुत्त्वं तऽएष ते योनि रिन्द्राय त्त्वा मरुत्त्वं ते ॥ ३५ ॥

मरुत्त्वं न्तं वृष भं । वावृधानमकंवारिन्दिव्य‍ᳪ शासमिन्द्रम् । विश्वासा

"दिव्य" द्युलोकजम् । "शासं" प्रशासनवन्तं शासितारं वा । "विश्वासाहम्" । सहतिरभिभवार्थः । सर्वस्य जनस्य सर्वस्याभिभवितारम् । "उग्रम्" उद्गूर्णवज्रम् । "सहोदाम्" बलस्य दातारम् । यमित्थंभूतमिन्द्रमाहुस्तम् "अवसे नूतनाय" । अवनाय चिरन्तनाय । "हुवे"

(१) वज्रिना मरुत्वतीयग्रहणं मरुत्वत्तमिति, ऋतुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोऽसि मरुतां त्वौजस इति । का० १०।२।६-२ ॥ ३६ ॥

७ अ० विषय १५५

यस्य गृहे "हुवेम" आह्वयामः। उपयामगृहीतइत्यादि व्याख्यातम्। तृतीयं मरुत्वतीयं यजुषा ग्रहं गृह्णाति। "उपयाम गृहीतोसि मरुतान्त्वा ओजसे" गृह्णामीतिशेषः। ओजइति बलनाम। स्वकीयमोजो निधाय इन्द्रं प्रति मरुत आयातास्ततोनेन गृहीतेन सबला आयाताः तदेतद्यजुर्वदति ॥ ३६ ॥ द्वितीयो मन्त्रविकल्पः। "सजोषा इन्द्र"। हे इन्द्र यः त्वं सजोषाः।

**साहमव॑से नू॒तना॑यो॒ग्रᳫं सहो॑दामि॒ह तᳫं हु॑वेम ॥ उ॒प॒या॒मगृ॑हीतोसीन्द्रा॑य त्वा म॒रुत्व॑तऽए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा म॒रुत्व॑ते ॥ उ॒प॒या॒मगृ॑हीतोसि म॒रु॒तान्त्वौज॑से ॥ ३६ ॥ स॒जोषा॑ऽइन्द्र। स॒जो**

समानजोषणः समानपात्रभोजनः तं त्वां ब्रवीमि। "समानगणो मरुद्भिः सोमं पिब"। समानगणो मरुद्भिः भूत्वा सोमं पिब। "वृत्रहा" वृत्रस्य हन्ता भविष्यामीतिशेषः। हे "शूर" विक्रान्त। "विद्वान्" एतमर्थं संजानानः। ततः पीत्वा सोमं मरुद्भिः सह। "जहि शत्रून्" इत्यप्रसुवान्। "अपमृधोनुदस्व"। अपनुदस्व मृधः। नुद प्रेरणे। मृधः संग्रामात्। कृत्वा

शत्रून् ये हतावशिष्टाः शत्रवः तान् संग्रामात् प्रेरयस्व। "अथाभयं कृणुहि विश्वतो नः"। अथानन्तरमभयं कुरु सर्वतोऽस्माकम्। उपयामइत्यादिव्याख्यातम्॥ ३७॥ "मरुत्वान् इन्द्र"। हे इन्द्र "यस्त्वं मरुत्वान् मरुद्गणयुक्तस्त्वं "वृषभस्त्वं" वर्षिता अपामन्तरिक्षे वसितः तं त्वां ब्रवीमि। "रणायपिबसोमम्"। रणं संग्रामं करिष्यामीतिपिब सोमम्"। "अनुष्वधम्"

षाऽइन्द्र सगणोमरुद्भिः सोमम्पिबवृत्रहाशूरविद्वान्॥ जहि- शत्रूँ १ रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनः॥ उपयामगृ हीतोसीन्द्रायत्वामरुत्वतऽएषतेयोनिरिन्द्रायत्वामरुत्वते॥ ३७॥ मरुत्वाँ २ ँ। ऽइन्द्र॥ वृषभोरणाय पिबासोमनुष्वधम्मदाय।

अनुपश्चात् स्वधान्नं पुरोडाशधानामन्थदधिपयस्यालक्षणं यस्य सोमस्य स तथोक्तः। "मदाय"। मदे हि सति योद्धा भवतीन्द्रः। कथं पुनः पिब। "आसिञ्चस्व जठरेमध्व ऊर्मिम्"। अङ्गपालमासिञ्च स्वजठरे उदरे। मध्वः मधुसोमभित्यौपमिकं माद्यतेः। मधुस्वादस्य

सोमस्योर्मि महा संघातम्। विशिष्टस्य सोमपानस्य मन्त्रदृक् हेतुमाह। हे "त्वꣳ राजासिप्रति-पत्सु,तानाम्"। यतस्त्वमेव राजा ईश्वरोसि प्रतिपत्प्रमुखास्वपितिथिषु सुतानामभिषुतानां सोमा-नाम्। किमुत चतुर्दश्यन्तेभिषुतानाम्। त्वदर्थमेव सर्वासु तिथिषु सोमोऽभिषूयत इत्यभिप्रायः। छन्दोगानामपि प्रतिपद्विद्यते तदभिप्रायं चैतत्। उपयामइत्यादि व्याख्यातम् ॥ ३८ ॥

आसिंञ्चस्वज ठरेमद्ध्वं ऽऊ र्म्मिन्त्वꣳ राजासिप्प्रतिपत्सु तानाम्। उ पु यामगृ हीतोसीन्द्रायत्वाम न्त्व तऽए षतेयोनि रिन्द्रायत्वाम न्त्व-ते ॥३८॥ * मुहा२ँ ॥ ऽइन्द्र÷ ॥ मुहा २ँ ॥ ऽइन्द्रो नृवदाचर्ष णिप्प्रा

माहेन्द्रं गृह्णाति। महा२ँ इन्द्रः"। त्रिष्टुम्माहेन्द्री। महान्प्रभवत इन्द्रस्तथापि "नृवत्" मनुष्य वदाहूयमानं आगच्छति। "आचर्षणिप्राः"। चर्षणयो मनुष्याः। प्रा पूरणे। आगत्य च चर्षणीनां मनुष्याणां पूरयिता कामैः। "किञ्च" उतद्विबर्हाः। अपि द्वयोः स्थानयोः परिवृढः मध्यमे च स्थाने उत्तमे च परिवृढः परिवृढः प्रभुः। "अमिनः सहोभिः"। "अमिनो" ऽमित-

माव: सहोभिर्वलैः। अप्राकृतोलितवलः यद्वा। [अनुपहिंसितः शत्रुवलैः। "अस्मद्र्यग्ग्वावृधेवीर्याय"। अस्मद्दर्शनोत्सुकः सन् वर्धते वीर्याय वीरकर्मणेय इन्द्रः सोऽस्मदीये. कर्तृभिस्तूयमानः "उरुः" प्रमाणतः "पृथुश्च" विस्तारेण। "सुकृतः" शोभनकृत्यभिप्रायः। "भूत्" भूयात्। उपयामगृहीत्यादि व्याख्यातम्॥ ३९॥ द्वितीयो मन्त्रविकल्पः। "महाँ२ इन्द्रः"। गायत्री

ऽउ तद्द्वि बर्हाँऽअमिनःसहोभिः॥ अस्मद्र्यग्ग्वावृधेवीर्यायोरुः पृथुः सुकृतःकर्तृभिर्भूत्॥ उपयामगृहीतोसिमहेन्द्रायत्वैषतेयोनिर्म्महेन्द्रायत्वा ॥३९॥ * महा२ँ॥ ऽन्द्रः॥ महा२ँ॥ इन्द्रोयऽओजसापर्ज्जन्योवृष्टिमा२ँ॥ ऽइव॥ स्तोमैर्व्वत्सस्यवावृधे। उपया

माहेन्द्री। महानिन्द्रो यः प्रभावतः स "ओजसा" वलेन "पर्जन्योवृष्टिमानिव"। यथा हि वृष्टिमान्पर्जन्यो धाराभिरसंख्याभिरपरिच्छिन्नसंख्यः एवमोजसा असंख्यातमहाभागेन।

(१) माहेन्द्रं गृह्णाति वैश्वदेवमहांतं॰इन्द्रइति। का॰।३।१०॥ ३९॥

"स्तोमैः" स्तूयमानो "वत्सस्य" वसनशीलस्य यजमानस्य "वावृधे" वर्द्धते। उपयामगृहीत्यादि समानम् ॥ ४० ॥ दाक्षिणानि जुहोति (१)। "उदुत्यम्"। सौरी गायत्री। उत् इत्ययमुपसर्गो वहन्तीत्यनेन संबध्यते। उद्वहन्ति। कम्। "त्य" तं सूर्यम्। "जातवेदसम्" जातप्रज्ञानम्।

मगृहीतोसिमहेन्द्राय त्वैषतेयोनिर्म्महेन्द्राय त्वा ॥ ४० ॥ * उदु त्यम्। उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः॥ दृशेविश्श्वाय सूर्य्यं स्वाहा ॥ ४१ ॥ चित्रन्देवानाम्। चित्रन्देवानामुदगादनी

"देव" दातारं द्युस्थानं वा। "केतवो" रश्मयः। किमर्थमुद्वहन्ति। "दृशे" दर्शनाय। "विश्वाय" षष्ठ्यर्थे चतुर्थी, विश्वस्य जगतः ॥ ४१ ॥ द्वितीयं जुहोति (१)। "चित्रं देवानाम्"।

(१) आम्नाहार्यं दाक्षिणहोमो वासः मग्रहं (वस्त्रवद्) हिरण्यं हवन्यामवधाय चतुर्गृहीतमुदत्यमिति। का० १०।२।४-५ ॥ ४१ ॥

(१) चित्रं देवानामिति द्वितीयाम्। का० १०।२।६ ॥ ४२ ॥

सौरो त्रिष्टुप्। सूर्य्यश्चात्र परापररूपेणावस्थितः स्तूयते। "चित्रं देवानामुदगादनीकम्"। उदय-कालादारभ्य तावदपररूपेण स्तूयते। चित्रमिति क्रियाविशेषणम्। यस्मित्रमुदगात्। चित्र-माश्चर्यभूतमुदगमत्। आश्चर्यं हि यः स्वकीयेन ज्योतिषा शार्वरं तमोपहृत्यान्येषां ज्योतिषां ज्योतिरादायोद्गच्छति। यद्वा चित्रं चायनीयं पूजनीयमुदगमत्। देवानामनीकमित्यनयोः पदयो संबन्धः। "देवानां" रश्मीनामनीकं मुखम्। "चक्षुर्मित्रस्य"। चक्षुर्मित्रादिकस्य सदेव मनुष्यस्य

# कुञ्चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवीऽअन्त

जगतः। आदित्योदये हि रूपाण्यभिव्यज्यन्ते। यच्च "आप्राद्यावापृथिवी अन्तरिक्षम्"। यच्च उदयसमनन्तरमेव आ अप्राः। प्रा पूरणे। आपूरितवत् स्वकीयेन प्रकाशेन द्यावापृ-थिव्यौ अन्तरिक्षञ्च। अधस्तनानि विशेषणानि मण्डलाभिप्रायाण्यनुं सकलिङ्गान्यनूद्य अथे-दानीं पररूपेण स्तौति। "सूर्य आत्मा"। पुरुषाभिप्रायमेतत्। "जगतो" जङ्गमस्य "तस्थुषश्च" स्थितिवतः स्थावरस्य चेत्यर्थः। तथाच श्रुतिः। "यमेतमादित्यपुरुषं वेदयन्ते स इन्द्रः प्रजा-

प्रतिरूपद्वचः । सूर्योद्दैवतमनेन मन्त्रेण स्तूयते स सूर्योऽस्त्वेनापास्य एवं तावदधियज्ञं गतोऽ-
प्ययं मन्त्रोधिदैवमाचष्टे । अध्यात्मं तु वक्ष्यति । "योवासावादित्ये पुरुष" इत्यादिना ॥ ४२ ॥
आग्नीध्रे जुहोति (१) । "अग्ने नय" ॥ ४३ ॥ "अयन्नो अग्नि" रित्युक्तार्थौमन्त्रौ । चतस्रो-

रिंचतुर्ऽ स ऊर्ध्वं ऽआत्क्रमाजगंतस्तुस्तुथुष ऽश्च स्वाहा ॥ ४२ ॥ अग्ने नय । सु पथाराये ऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्य स्मज्जुहुराणमेनोभूयिष्ठान्ते नमऽ उक्तिं विधेम स्वाहा ॥ ४३ ॥ अयन्नः । अयन्नोऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुरऽएतु प्रभिन्दन् ॥ अयं वाजाञ्जयतु वाजसातावयं शत्रूञ्ज

(१) आग्नीध्रीयेऽग्ने नयेति, अयं न इत्यपरामिति । का० १०।२।७-८ ॥ ४३ ॥
(१) ५. अ: २६।२७ व्याख्याती ॥ ४४ ॥

प्येता यजुरन्ताः स्वाहाकारेण अग्रेण शालां तिष्ठन्नभिमन्त्रयते। दक्षिणतः स्थिताः दक्षिणाः ॥ ४४ ॥ "रूपेणवोरूपम्" (१)। "अग्रे पशव आत्मनो दानमसहमाना अन्यानि रूपाण्यादधिरे तान्देवाः स्वैः रूपैः प्रत्युपतिष्ठन्त: ततस्तैः स्वैः रूपैराजग्मुः"। एतन्निदानमस्य मन्त्रस्य। रूपेण मूर्त्या। वः युष्मत्सम्बन्धि रूपम्। "अभ्यागाम्" अभ्यागतः। सर्वो हि स्वं रूप-

यतुजर्ह्ंपाणुः स्वाहा ॥ ४४ ॥ रूपेणंवः। रूपेणवोरूपम्

भ्यागांन्तुथोवोविश्ववेदाविभंजतु ॥ ऋतस्यंपथाप्रेतंच

मागच्छतीत्यभिप्रायः। किञ्च "तुथोवोविश्ववेदाविभजतु"। "तुथो" ब्रह्मा प्रजापतिः। "वः" युष्मान् "विश्ववेदाः" सर्वज्ञो विभजतु यथार्हमृत्विजां विभागं करोतु। यूयं चैतज्जानानाः "ऋतस्य" यज्ञस्य प्रस्तुतस्य "पथा" मार्गेण "प्रेत" प्रगच्छत। "चन्द्रदक्षिणाः"। चन्द्रं सुवर्णं यजमानस्य

(१) सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा बहिर्वेदि तिष्ठन्तीर्दक्षिणतो रूपेण वइति, (दक्षिणागाः अभिमन्त्रयते) उदी गच्छति विस्वरिति, प्रेचते यत्नस्य सहस्यानिति। का० १०।२।२०-१७-१८ ॥ ४५ ॥

हस्तगतं द्वितीयं यासां तास्वन्द्रद्वितीयदक्षिणा इति प्राप्ते चन्द्रदक्षिणा इत्युक्ताः। शाक-पार्थिवादित्वान्मध्यमपदलोपी समासः। सदो गच्छति। "विस्वः पश्य व्यन्तरिक्ष"मिति। दक्षिणोच्यते। विपश्यामि त्वया दक्षिणया सोपानभूतया स्वः स्वर्गं देवयानमार्गम्। विपश्यामि च अन्तरिक्षलोकं पितृयानमार्गम्। विपश्येति मध्यमपुरुषस्योत्तमपुरुषो व्याख्यातः श्रुत्या। सदसि स्थितान् ब्राह्मणान् प्रेक्षते। "यतस्वसदस्यैः"। दक्षिणोच्यते। यतो प्रयत्ने। तथा

न्द्रदक्षिणा॒ विस्व॒ः पश्य॒ व्य॒न्तरिक्षं॒ यत॑स्व सद॒स्यैः॑ ॥ ४५ ॥

ब्रा॒ह्म॒णम॒द्य । वि॒देयम्पितृ॒मन्त॑म्पैतृम॒त्यम्‌षि॑मार्षे॒यꣳसु-

भूतं यतमातिष्ठस्व यथा "सदस्यैः" पूरितैरतिरिच्यसे ॥ ४५ ॥ आग्नीध्रं गच्छति (१)। "ब्राह्मणमद्य"। ब्राह्मणम् "अद्य" अस्मिन् "विदेय" लभेयम् अनुशिष्टेन अतिविशिष्टेन पित्रा जातम्। न हि कश्चिद्विना पित्रा जायते। "पैतृमत्यम्" यस्य पितामहप्रभृतयोऽपि श्रश्या श्रोत्रियाः स एवमुच्यते। "ऋषिमार्षेयम्" ऋषिमन्त्राणां व्याख्याता। आर्षेयो जात्या प्रवरैश्च

(१) ब्राह्मणमद्येत्याग्नीध्रगमनम्, उपविश्य हिरण्यमस्मै ददात्यध्वाताता इति। १०।२।१९-२० ॥ ४६ ॥

जातः। "सुधातुदक्षिणम्"। शोभनोधातुः सुवर्णं दक्षिणा यस्य ससुधातुदक्षिणः तम्। सुवर्णं हि आग्नीध्रे दीयते। दक्षिणां ददाति। "अस्मद्राताः"। रा दाने। हे दक्षिणाः अस्माभिः एताः दत्ताः सत्यो देवत्रा गच्छत। देवान्प्रति गच्छत। ततोनन्तरं यज्ञफलं साधयन्त्यः" "प्रदातारमाविशत"। प्रकर्षेण दातारम् आविशत यजमानम्॥ ४६॥ इत उत्तरं पञ्च प्रतिग्रहमन्त्राः। हिरण्यं प्रतिगृह्णाति (१)। "अग्नयेत्त्वामह्यं वरुणोददातु"। अग्निरूपा-

धातु दक्षिणम्। अस्मद्राता देवत्रा गच्छत प्रदातारमावि-शत॥ ४६॥ अग्नये त्वा। अग्नये त्वामह्यं वरुणोददातु सो-

पन्नाय मह्यं हे हिरण्य त्वां वरुणो ददातु। वरुणेन हि हिरण्यमग्नये दत्तं पूर्वमतस्ते-नैवात्मना गृह्णानो न रिष्यामीतिदेवतादेशः। "सोमृतत्त्वमशीय" सोहमनेन विधानेनेन गृह्णानोऽमृतत्वं व्याप्नुयाम्। "आयुर्दात्रे एधि"। आयुष्मान्दाता भवतु। "मयोमह्यं प्रतिगृहीत्रे।

(१) अग्नयेत्वेति हिरण्यं प्रतिगृह्णीत इति, रुद्रायत्वेति गाम्, बृहस्पतये त्वेति वासः, यमायत्वेत्यश्वम् इति। का० १०।२।१८-२१॥ ४७॥

मयः सुखम् एधि भव मह्यं प्रतिगृहीत्रे । गां प्रतिगृह्णाति । "रुद्राय त्वा" । रुद्रभूताय मह्यं हे गौः त्वां वरुणो ददातु सोऽहमनेन विधानेन गृह्णानोऽमृतत्वं व्याप्नुयाम् । "प्राणो-दात्र एधि" । प्राणरूपा दात्रे भव । "वयो मह्यं प्रतिग्रहीत्रे" । वयोऽन्नं पशुर्वा भव । "मह्यं प्रतिग्रहीत्रे" । वासो गृह्णाति । "बृहस्पतये" । बृहस्पतिरूपापन्नाय मह्यं त्वां वरुणो ददातु ।

मृतत्वमशीयायुर्दात्रऽएधिमयो मह्यम्प्रतिग्गृहीत्रे रुद्राय त्वा मह्यंवरुणो ददातु सोऽमृतत्वमशीय प्राणो दात्रऽएधि वयो मह्यम्प्रतिग्गृहीत्रे बृहस्पतये त्वा मह्यंवरुणो ददातु सोऽमृतत्वमशीय त्वग्दात्रऽएधिमयो मह्यम्प्रतिग्गृहीत्रे यमाय त्वा मह्यंवरुणो द

सोऽहमनेन विधानेन गृह्णानोऽमृतत्वं व्याप्नुयाम् । "त्वग्दात्र एधि" भव । "मयः" सुखं भव "मह्यं प्रतिगृहीत्रे" । अश्वं प्रतिगृह्णाति । "यमाय त्वा" । यमरूपापन्नाय मह्यं त्वां वरुणो ददातु । सोऽहं यमरूपापन्नोऽमृतत्वं व्याप्नुयाम् । "हयो" ऽश्वः "दात्रे" भव । वयोऽन्नं पशुर्वा

भव ममत्वं प्रतिगृह्णीते ॥ ४७ ॥ अथ यदन्यद्ददाति तदनेन प्रतिगृण्हाति (१)। "कोदात्" कः पुरुषः अदात् दत्तवान्। एकः प्रश्नः। "कस्मै" पुरुषाय "अदात्" दत्तवान्। द्वितीयः प्रश्नः। "कामोदात्कामायादात्"। द्वौ प्रतिप्रश्नौ यथासंख्यम्। एवं च "त्काम एव दाता कामः प्रतिगृहीता" च। अतो ब्रवीमि हे "काम एतद् द्रव्यं "ते" तव। त्वमेव केन

दातुसोम्तुत्त्वमंशीयुहयोंदात्त्वऽए'धिव्वयोमह्यंम्प्रतिगगृह्णीत्त्वे ॥४७॥ कोंदात्। कोंदात्कस्म्मांऽअदात्कामोंदात्कामांयादात् कामोंदाता कामंःप्प्रतिगगृह्णीताकामै तत्ते ॥ ४८ ॥ इतिसंहितायांसप्तमोध्यायः ॥ ७

चित्प्रयोजनेन ददासि त्वमेव च केनचित्प्रयोजनेन प्रतिगृण्हासीति ॥ ४८ ॥ इति उवटकृतौ मन्त्रभाष्ये सप्तमोध्यायः ॥ ७ ॥

(१) कोदादित्यन्यदिति। का० १०।२।३२ ॥ ४८ ॥

भारद्वाजोपनाम्ना श्रीगौविन्दविदुषा कृते। अफाणीत्सप्तमोध्यायो मन्त्रभाष्यस्य टिप्पणे।

आदित्यगृहस्य सवोत्थं प्रतिप्रस्थातादित्यपात्रे द्रोणकलशादुपयामगृहीतोसीति गृहीत्वा द्विदेवत्याननुजुहोति। तत्रैते मन्त्राः। "उपयामगृहीतोस्यादित्येभ्यस्त्वा"। गृह्णामीतिशेषः। आदित्यस्थाली पात्रेणापिदधाति। "विष्णो उरुगाय"। हे विष्णो उरुगमनाय "एष ते" तत्र"सोमः"समर्पितः। "तं रक्ष"गोपाय। गोपायनप्रवृत्तं च त्वां "मा दभन्नुयः हिन्तुः रक्षांसि।

ॐ उपयामगृहीतोसि। उपयामगृहीतोस्यादित्येभ्यं

सप्तमाध्याये उपांशुग्रहादिसवनद्वयगता मन्त्रादक्षिणाहोमान्ता उक्ता, अथाष्टमे तृतीयसवनगता आदित्यग्रहादिमन्त्रा उच्यन्ते।

(१) प्रतिप्रस्थाताऽऽदित्यपात्रेण द्रोणकलशादुपयामगृहीतोऽसीति गृहीत्वा द्विदेवत्याननु जुहोत्युत्तरार्धे, प्रेषं

---

* उपयामगृहीतोसि। आदित्येभ्यः पञ्च वाममयहे सुषमांस्येका वृहस्पतिसुतस्यद्वे हरिरसिचतस्रः समिन्द्रणोष्टौ माहिरेजतुदशमास्यः पञ्च कावातिष्ठयुञ्चाह्री द्रप्सिदेकैका यस्मान्नद्वे मे पवस्वोत्तिष्ठन्नाद्धस्मसुदुत्यमेकैका ज्ञिधृद्वे विनद्विन्द्रवाचस्पतिंविश्वकर्मन्नेकैका मयेत्वाचतस्रः द्रुहरतिस्तिस्रः परमेष्ठीदश नयोविंशति॰प्रतिस्त्रिषष्टिः। अनुः

दभ्नोतिर्हिंसाकर्मा ॥ १ ॥ आदित्यग्रहं गृह्णाति (१)। "कदाचन"। व्याख्यातोऽयं मन्त्रः यदि नाम अधस्तादैन्द्रः, इयांस्तु विशेषः। इह त्वादित्यदेवतो यजुरन्तः। आदित्येभ्य-स्त्वेति यजुः ॥ २ ॥ द्वितीयं गृह्णाति (१)। "कदाचन"। वृहत्यादित्यदेवत्या यजुरन्ता। आदित्येभ्यस्त्वेति यजुः। कदाशब्दः कालवचनः। चनेति निपातः पुनरर्थे। प्रयुच्छतिः प्रमादार्थः

स्त्वा ॥ विष्ण॒ऽउरुगायै॒ष ते॒ सोम॒स्तꣳ र॑क्षस्व॒ मा त्वा॑ दभन् ॥ १ ॥ कदा॒च॒न ॥ स्त॒रीर॑सि॒ नेन्द्र॑ सश्चसि दा॒शुषे॑ ॥ उपो॒पेन्नु म॑घव॒न्भूय॒ऽइन्नु ते॒ दानं॑ दे॒वस्य॑ पृच्यत॒ऽआदि॒त्येभ्य॑स्त्वा ॥ २ ॥ कु

मेषमादित्यस्थाल्यामासिञ्चत्यादित्येभ्यस्त्वेति, समासिच्य तेनापि दधाति (तेनादित्यपात्रेण स्थालीमाच्छादयति) विष्ण उरुगायेति। का० ९।९।१८-२०-२१ ॥ १ ॥

(१) आदित्यग्रहं गृह्णाति संस्रवेभ्यः कदाचनेति। का० १०।४।४ अत्रेन्द्रनामभिरादित्यएवस्तूयते ॥ २ ॥

(१) अवगृह्य (धारातो विच्छिद्य पूतभृतः सकाशादात्मसमीपं नीत्वा) पुनः (आदित्यग्रहं गृह्णाति) कदाचनेति। का० १०।४।५।

हे भगवन्नादित्य कस्मिन्नहनि पुनः प्रमाद्यसि उदयतापपाकप्रकाशादीननुग्रहान् प्राणिषु कुर्वन् न कदाचिदित्यभिप्रायः। एवं काकुगतेन विशेषणेन व्याख्येयम्। अथवा कदाचनेति व्यतिकीर्णमेतत्पदद्वयं व्याख्येयम्। यन्न कदाचिदपीत्यनेनार्थेनार्थवत्त्वम्। चकारगर्भं सवितुर्निधानम् अस्य भाष्यं चकारैनां गर्भनिधानीमिति यथा यास्केन दर्शितम्। न कदाचित्प्रमाद्यसि

दाच न। प्रयुच्छस्युभे नि पासि जन्मनी॥ तुरीयादित्य सवनं त इन्द्रियमा तस्थावमृतं दिवि॥ ३॥ प्रमोदे-

स्वकीयं कर्म कुर्वन्। उभे च नितरां "पासि" गोपायसि देवमनुष्यसम्बन्धिनी "जन्मनी" तुरीयेत्यविभक्तिको निर्देशः। तुरीयं च आदित्यसवनम्। तव इन्द्रियं च वीर्यं च तवैव "आतस्थौ" उपस्थितम् "अमृतम्" अनश्वरं विज्ञानानन्दस्वभावम् "दिवि" द्युलोके आदित्यमण्डलान्तःस्थम्। तदुक्तम्। "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी"ति। एवं परापर-

(२) अथवा ऋचोर्थान्तरम् प्रशब्दो निषेधे चशब्दोऽप्यर्थे, हे आदित्य त्वं कदाचनकदापि प्रयुच्छसि

रूपेणास्यामृच्यादित्यस्तुतिः। "आदित्येभ्यस्त्वा" गृह्णामीतिशेषः(२) ॥ ३ ॥ दश्वा श्रीणाति (१)। "यज्ञोदेवानाम्" त्रिष्टुप् यजुरन्ता आदित्यदेवत्या। आदित्यस्तुति यजुः। यस्माद्यज्ञोदेवतानामादित्यानां "सुम्नं" सुखं कर्त्तुं "प्रत्येति" तस्माद्धेतोः हे "आदित्यासः"। आदित्या एव आदित्यासः। 'आज्जसेरसुक्'। "भवतामृडयन्तः"। मृड सुखने टचोर्थे शट प्रत्यायोल छान्द-

## यज्ञोदेवानाम्प्प्रत्येति सुम्नमादित्यासोभवतामृडयन्तः॥ आवोर्व्वाचीसुमतिर्ववृत्याद्ठं होश्चिद्याव्वरिवोवित्तरासत्

सः। मृडयितारः सुखयितारो भवतास्माकम्। "आवोर्वाचीसुमतिर्ववृत्यात्"। आवृत्ता भवतु वः युष्मत्संबन्धिनी सुमतिः अर्वाची च अस्मदभिमुखा च। "अंहोश्चिद्यावरिवोवित्तरासत"। अंहुः न प्रमाद्यसि किंतूभे वर्तमनभाविनी जन्मनी पासि रक्षसि। तृतीयार्थे तुरीयशब्दः। ते यत्तुरीयसवनं तस्मिन्निन्द्रियलोकसमाने सवने इन्द्रियमिन्द्रियवद्विकरणमस्तं सुधासमं हविः आ तस्थौ समन्तात् स्थितम्। त्वामादित्येभ्योर्थाय गृह्णामीति महीधरभाष्ये ॥ ३ ॥

(१) दश्वाश्रीणात्येनं पयसिमेन्ते मध्ये वा यज्ञो देवानामिति। का० १०।४।६ ॥ ४ ॥

पापकारी। चिच्छब्दोऽप्यर्थे। अंहोः पापकारिणोऽपि या सुमतिः। "वरिवो वित्तरा:"। वरिव इति धननाम। अतिशयेन धनस्य लम्भी असत् भवतु। सा सुमतिः अस्मदभिमुखी आवर्त्त्यादिति संबन्धः॥ ४॥ उपांशुसवनेन ग्रहं विमिश्रयति। "विवस्वन्नादित्य"। तमांसि विवासयतीति विवस्वान् आदित्य उच्यते। हे विवस्वन् आदित्य "एष ते सोमपीथः"। एत-

संदादित्यै भव्यं स्त्वा॥ ४॥ विवंस्वन्नादित्य। विवंस्वन्नादित्यै

षतें सोमपीथस्तस्मिन्मत्स्व॥ अदं स्मैनरोवचं सं दधातन यदांश्री

र्दादम्पंतीव्वामममंश्नुतः॥ पुमांन्पुत्रोजांयतेव्विन्दते व्वस्वधा

त्तव सोमपानम् "तस्मिन्मत्स्व"। मद तृप्तौ। तृप्तिं कुरु, चित्तमाशिरं सोमे। अवेक्षते पत्नी। अदस्मैनरः"। जगती आशीर्यजमानपत्नीविषया। अदिति सत्यनामस्तु पठितम्। "अद्धा-

(१) उपांशुसवनेन मिश्रयति विवस्वन्नादित्येति, अदस्मै नर इत्येनमवेक्षते पत्नी। का० १०।४।७-५।४। विश्वाहा विश्वानि च तान्यहानि च विश्वाहा अत्यन्तसंयोगे द्वितीया। समासान्तविधेरनित्यत्वाट्टजभावः॥ ५॥

तन "श्रद्दधानान् कुरुत । नेत्थनर्थका उपजना भवन्तीति नकारोनर्थकः । श्रद्धां कुरुत "अस्मेवर्चसे" हे नरः । ऋत्विग्यजमानाः । यत् किमित्यत आह । "आशीर्दा" आशिषो दातारः । "दम्पती" पत्नीयजमानौ । "वाम" वननीयम् । "अश्नुतः" व्याप्नुतः यज्ञफलम् । किञ्च इहैव "पुमान् पुत्रोजायते" । दुहितापि पुत्रशब्देनोच्यते इत्यतः पुमानिति विशेष्यते । किञ्च "विन्दतेवसु" लभते धनम् । अधाअथेत्येतौ छन्दसि समानार्थौ "विश्वाहा" सर्वदा । अपरः ।

विश्वाहारपऽएधतेगृहे ॥ ५ ॥ * वाममद्य ॥ सवितर्वाममश्वोदिवेदिवेवाममस्मभ्यंसावीः ॥ वामस्यहिक्षयस्यदेव

अपो रिप्रमिति पापनामनी भवतः । अपापः सन् "एधते" वर्द्धते । गृह एवावस्थितः ॥ ५ ॥ सावित्रं गृह्णाति (१) । "वाममद्य" । सावित्री त्रिष्टुप् । हे "सवितः" वामं वननीयम् अद्य अस्मिन् अद्य सावित्रीरितिसम्बन्धः । "वाममुश्वः" । वामं च उपांशुसानीये काले सावीः 'श्वः' उपांशुशंसनीयः । काल इति हि यास्क आह । किं वा बहुनोक्तेन । "दिवे दिवे वाममस्मभ्यं

(१) अग्रयणादुपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति । का० १०।५।१२ ॥ ६ ॥

सावीः"। अहन्यहनि वाममस्माकं प्रसूयाः। किञ्च "वामस्यहिक्षयस्यदेवभूरे"। क्षयशब्दो निवासवचन आद्युदात्तत्वात्। 'क्षयो निवास' इति हि पाणिनिराद्युदात्तत्वं स्मरति। वामस्य च निवासस्य हे देव दानादिगुणयुक्त भूरेर्बहुनो धनपूर्णस्य दाता भवेति शेषः। "अनया-धिया"। धीरिति कर्मनाम। अनेन च सोमाख्येन कर्मणा "वामभाजः"। अभिलषितभा-

भूरे॑र्या धि॒या वा॑म॒भाजः॑ स्याम ॥ ६ ॥ उ॒प॒या॒मगृ॑हीतोसि। सा॒वि॒त्रो॑सि चनो॒धाश्च॑नो॒धा अ॑सि॒ चनो॒ मयि॑ धेहि। जिन्व॑

जिनो वयं संभवेम ॥ ६ ॥ "उपयामगृहीतोसि सावित्रोसि"। सवितृदेवत्योसि "चनोधा-श्चनोधा" असि। चन इत्यन्ननाम। अभ्यासे भूयांसमर्थं मन्यन्ते। अतिशयेन चान्नस्य धार-यितासि। अतः "चनो" ऽन्नं मयि "धेहि" स्थापय। किञ्च "जिन्व यज्ञम्"। जिन्वतिः प्रीति-

(१) भक्षयित्वेडामुपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति। का० १।५।१२।

(२) भगमस्यास्तीतिभगः। 'अर्श आदिभ्योच्'। ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णांभग इतीरणा ॥ ७ ॥

कर्मा। तर्पय यज्ञं तर्पय च यज्ञपतिं" यजमानम् "भगाय" यज्ञफलाय (२)। "देवाय सवित्रे त्वा" गृह्णामीतिशेषः ॥ ७ ॥ (३००)। वैश्वदेवं गृण्हाति (१)। "उपयामगृहीतोसी"ति। व्याख्यातम्। "सुशर्मासि"। स्वाश्रयोसि। "सुप्रतिष्ठानः"। शोभनं प्रतिष्ठानं प्रतिष्ठा अस्येति सुप्रतिष्ठानः। महत्साधनसंपन्नः। "प्राणो वै सुशर्मा सुप्रतिष्ठान"इतिश्रुतिः। प्राणहेतुत्वादन्नाय

**सु॒ज्ञस्मिन्न्वय॒ज्ञप॑ति॒म्भगा॑यदे॒वाय॑ त्वासवि॒त्त्रे ॥ ७ ॥ ***

**(शतम्॒ ॥ ३०० ॥) उ॒प॒या॒मगृ॑हीतोसि। सु॒शर्म्मा॑सिसु॒प्प्रतिष्ठा॒नो-**

**बृ॒हदु॑क्षायनमः॑ ॥ विश्श्वे॑भ्भ्यस्त्वादे॒वेभ्भ्य॑ऽए॒षतेयोनि॒र्विश्श्वे॑भ्भ्य**

इत्युच्यते। "अन्नं वै गृहो अन्नं वै प्राण हेतुः"। यास्मात्त्वं सुशर्मासि सुप्रतिष्ठानश्च तस्मात् "बृहदुक्षायनमः"। महासेचनाय जगदुत्पत्तिबीजाय प्रजापतये नमो भवितुमर्हतीतिशेषः। नम-

(१) अभ्यवितेन महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्मासीति। का० १०।६-२ ॥ ८ ॥

इत्यन्ननामसु पठितम् । "प्रजापतिर्वै बृहदुक्थ" इति श्रुतिः । "विश्वेभ्यस्त्वादेवेभ्य" इति व्याख्यातम् ॥८॥ पत्नीवतं गृह्णाति(१) । "उपयामगृहीतोसी"ति । व्याख्यातम् । "बृहस्पतिसुतस्य" ब्रह्मणाऽभ्यनुज्ञातस्य । हे देवसोमते तव "इन्दोः इन्द्रियावतः" । वीर्यवतः । "पत्नीवतः" । पत्नीसंयुक्तस्य सतो "ग्रहान्"न्यानुपांशुप्रभृतीन् "ऋध्यासम्" समर्द्धयेयम् । प्रचरणीसंस्रवशेषेण श्रीणाति । "अहं परस्तात्" । त्रिष्टुप् । प्रजापतिरूपेणात्मानं पश्यन् श्रीणाति ।

स्त्वादेवेभ्यः ॥ ८ ॥ * उपयामगृहीतोसि । उपयामगृहीतोसिबृहस्पतिसुतस्यदेवसोमतऽइन्दोरिन्द्रियावतः पत्नीवतोग्ग्रहाँ२ ॥ ऽऋद्ध्यासम् ॥ अहम्परस्तादहमवस्ताद्यदन्तरिक्षन्तदु मे

"अहं परस्ता"दस्य जगतः अहं चावस्तात् । "य"च्चैत"दन्तरिक्षं तदुमे"तदेव मे "पिता" पाता

(१) उपयामगृहीतोसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पत्नीवतं गृह्णाति, प्रचरणीसंस्रवशेषेण श्रीणात्येनमहं परस्तादिति । का० १०।७।१८।

भूत्। "अहं च सूर्यमुभयतो ददर्श"। परस्तादधस्ताच्च पश्यामि। सूर्यस्य परस्तान्मम शिर इत्यभिप्रायः। यच्च "देवानांपरमं गुहा" तदप्यहमेव (२) ॥ ९ ॥ जुहोति (१)। "अग्नाऽइप-त्नीवन्"। 'एचो प्रगृह्यस्यादूराद्धूते' इति प्लुतः। हे अग्ने पत्नीसंयुक्त। "सजूर्देवेन त्वष्टा"। सह प्रीतिर्देवेन त्वष्ट्रा "सोमं पिब स्वाहा"। पत्नी उद्गातारमवेक्षते। "प्रजापतिः"। त्वं पिताभूत्

पिताभू॑त् ॥ अ॒हर्ठ॑सूर्य्य॑मु॒भ॒यतो॑दद॒र्शा॒हन्दे॒वाना॒म्प॒र॒मङ्गु॒हा-यत् ॥ ९ ॥ अग्ग्ना ३ ॥ ऽइपत्नी॒ व॒न्। अग्ग्ना ३ ॥ ऽइ-पत्नी॒व॒न्त्स॒जूर्दे॒वे॒न॒ त्वष्ट्रा॒ सोमं॑म्पिबस्वाहा ॥ प्र॒जाप॑ति॒र्वृषा॑सि

प्रजापतिः "वृषा" च। "रेतोधाः" रेतसः सेक्ता धारयितासि स्वभावत एव त्वां ब्रवीमि। "रेतो मयि धेहि" स्थापय। "प्रजापते"स्त्र तव वृष्णः सेक्तुः "रेतोधसः" रेतोधारयितुः

(२) देवानामिन्द्रादीनां यत्परमं गुह्याऽत्यन्तं गोप्यं हृदयेस्ति तदप्यहमेवेत्यर्थः ॥९॥

(१) अग्ना ३ इ पत्नीवन्नित्युत्तरार्धं जुहोति, पत्नी उदः प्रवेश्योत्तरत उपविष्टामुद्गाता समीक्षयति प्रजापतिर्वृषा-ऽसीति। का० १०।६।१९-७।३ ॥ १० ॥

सम्भूत "रेतोधाम्" रेतसो धारयितारम् पुंस्पुत्रम् अशीय" प्राप्नुयाम् ॥ १० ॥ हारियोजनं गृह्णाति (१)। "उपयामगृहीतोसि" "हरिरसि" हरितवर्णोसि। "हरिः सोमो हरितवर्ण" इति। हारियोजनः"। इन्द्राश्वौ हरितावत्र युज्येते इति हरियोजनः। हरियोजन एव हारियोजनः। स्वार्थे तद्धितः "ऋक्सामे वै हरी" इति श्रुतिर्ष्वपेक्षः। "हरिभ्यां त्वा"। गृह्णामीतिशेषः।

रेतोधारेतोमयि धेहिप्र जापतेस्तेवृष्णोरेतोधसोरे तोधाम'शीय॥१०॥

*उपयामगृहीतोसि। उपयामगृहीतोसिहरि'रसिहारियोजनो हरि'भ्यान्त्वा॥ हर्योर्धानास्थसहसोम'ाऽइन्द्राय ॥११॥ यस्ते॥

धाना आवपति। "हर्य्योर्धानास्थ"। हरितवर्णयोरिन्द्राश्वयोर्धाना भवथ यूयं सोमेन च सहिता "इन्द्राय" भवथ प्राप्यभक्षः ॥ ११ ॥ "यस्ते अश्वसनिः"। यस्त्वामश्वान्सनोति संभ-

(१) द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोसीति, धानाश्वावपति हर्यो धाना इति। का० १०।८।२-६ ॥११॥

(२) यस्ते अश्वसनिरिति भक्षभक्षं भक्षयित्वोत्तरवेदौ (सर्वर्त्विजो धाना आदाय मन्त्रेणावघ्राय) निवपन्ति (क्षिपन्ति)। का० १०।८।५ ॥ १२ ॥

शु० य० सं० १६७ उ० भा०

जते। "भक्षः"। यस्य गाः सनोति तस्य तव संबन्धिनः। "दृष्टयजुषः"। दृष्टानि हि यजूंषि भवन्ति। "स्तुतः स्तोमस्य"। अस्मिन्नेवावसरे स्तुताः स्तोमा भवन्ति। "शस्तोक्थस्य"। शस्तानि उक्थानि भवन्ति। "उपहूतस्य" अभ्यनुज्ञातस्य "उपहूतोऽभ्यनुज्ञातो "भक्षयामि" ॥१२॥

शकलाधानम् (१)। "देवकृतस्य"। देवविषयकृतस्य "एनसः" पापस्य "अवयजनम्"। अवपूर्वो

ऽश्वसव सनिर्भर्ग्घोसीग्गोसनिस्तस्य तऽइष्टयजुषस्तुतस्तोमस्य श॒स्तोक्थस्योपहूतस्योपहूतोभक्षयामि ॥ १२ ॥ देवकृतस्यैनसः ॥ देवकृतस्यैनसोवयजनमसि मनुष्यकृतस्यैनसोवयजनमसि पितृकृतस्यैनसोवयजनमस्यात्मकृतस्यैनसोवयजनमस्येनसऽए

यजिर्नाशने वर्त्तते। नाशनं भवसि। मनुष्यविषयस्य पापस्य नाशनमसि। पितृविषये कृतस्य पापस्य नाशनमसि। आत्मविषये कृतस्य पापस्यात्मनिन्दादेः नाशनमसि। "एनसएनसः"।

(१) शकलाधाने देवकृतस्येति प्रतिमन्त्रम् (षड् यूपशकलान्सर्वेऽग्नौ निदध्युः) का० १०।८।६ ॥ १२ ॥

८ अ०

विषय १६७

यावन्ति पापानि तेषां सर्वेषां नाशनमसि। "यच्चान्यदप्येनः पापं "विद्वान् चकार" कृतवान्। यच्चा"विद्वान्" अजानानः तस्य सर्वस्य नाशनमसि॥ १३॥ चमसानभिमृशन्ति (१)। "सं वर्चसेति"। व्याख्यातम्॥ १४॥ नवसमिष्टयजूंषि जुहोति (१)। समिन्द्रेण इत्याद्याः षट् त्रिष्टुभः। तत्र त्रिभिः परिधीनाप्याययति त्रिभिर्देवता व्यवसृजति। "समिन्द्रणः"।

नसोवयजंनमसि॥ यच्चाहमेनोविद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोवयजंनमसि॥ १३॥ सं वर्चसा। सं वर्चसापयं सासन्तनूभिरगन्महि मनसा सं शिवेन। त्वष्टासुदत्रो विदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम्॥ १४॥ * समिन्द्र।

(१) अपरेण चात्वालं यथास्वं चमसान् पूर्णपात्रान् (उदकपूर्णान्) अवमृशन्ति हरितकुशानवधाय संवर्चसेति। का० १०।८।७॥ १४॥ (१) समिन्द्रेण इति नव समिष्टयजूंषि जुहोति प्रतिमन्त्रम्। का० १०।८।११। नवमन्त्रावयवमाणाः समिष्टयजुःसंज्ञकाः॥ १५॥

ऐन्द्री। समित्ययमुपसर्गो नेषीत्यनेन क्रियापदेन संबध्यते। हे भगवन्निन्द्र संनेषि संगमयसि। "नः" अस्मान्। मनसा संगमयसि च। "गोभि"र्वाग्भिर्वादिभिः पशुभिः संगमयसि च सूरिभिः" पण्डितैः। हे "मघवन्" संगमयसि च "स्वस्त्या" अविनाशेन। स्वस्तीत्यविनाशनाम। संगमयसि च "ब्रह्मणा देवकृत" देवैर्दृष्टं लयीलक्षणाम्। तदेव स्पष्टयति।

सं॒ मन॑सा नेषि॒ गोभिः॒ सꣳसू॒रिभि॑र्मघवन्त्सꣳस्व॒स्त्या॥ सम्ब्रह्म॑णा दे॒वकृ॑तं॒ यदस्ति॒ सन्दे॒वाना॑ꣳसुम॒तौ य॒ज्ञिया॑ना॒ꣳ स्वाहा॑॥१५॥

संव्वर्च्च॑सा। संव्वर्च्च॑सा॒ पय॑सा॒ सन्त॒नूभि॒रग॑न्महि॒ मन॑सा॒ सꣳशि॒वे-

"यदस्ति"। यन्नित्यमित्यर्थः। संगमयसि च "देवानां सुमतौ"। तृतीयया विपरिणामः। शोभनया मत्या। "यज्ञियानां" यज्ञसंपादिनाम्। यद्वास्मानेवं सर्वैर्मनःप्रभृतिभिः संगमयसि तस्मै त एतद्धविः "स्वाहा" सुहुतमस्तु इति शेषः॥१५॥ "संवर्च्चसापयसा"। व्याख्या-

तम् ॥ १६ ॥ "धातारातिः"। षट् देवता अस्यामृचि। "धाता सविता प्रजापतिः अग्निः त्वष्टा विष्णुः" एते षट् "निधिपा देवाः। इदं समिष्टयजुर्लक्षणं "राति" दानम्। "जुषन्तां" सेवन्ताम्। जुषित्वा च "प्रजयासंरराणाः"। यजमानसंबन्धिन्या प्रजया संरममाणाः। यजमानाय एतद् द्रविणं, दधातेति प्रथमपुरुषस्य स्थाने मध्यमपुरुषश्छान्दसः, दधतु

नं। त्वष्टा॑ सु॒दत्रो॒ व्वि द॑धातु॒ रायो॒ऽनु॑ मार्ष्टु त॒न्वो॒ यद्वि॑लि॒ष्टम्॥१६॥
धा॒ता रा॒तिः स॑वि॒तेदं जु॑षन्तां प्र॒जाप॑ति॒र्न्नि॑धि॒पा दे॒वो ऽअ॒ग्निः। ॥
त्वष्टा॒ विष्णुः॑ प्र॒जया॑ सꣳ र॒राणा॒ यज॑मानाय॒ द्रवि॑णन्दधात॒ स्वा-
हा॥ १७॥ सुगावः। सु॒गा वो॑ देवाः॒ सद॑ना ऽअकर्म॒ य ऽआ॑ज॒ग्मे

स्थापयन्तु। एवं तावदस्य मन्त्रस्य सम्यग्योजना प्रतिभाति॥ १७॥ "सुगावः"। हे देवाः सुगमनीयानि "वो" युष्माकं "सदनानि" स्थानानि। अकर्म कृतवन्तो वयं ये यूयं "आजग्मुः"। आजग्मुरागताः। "सवनमिदं जुषाणाः" यज्ञमेतं सेवमानाः। अथेदानीं परिसमाप्ते यज्ञे।

"भरमाणा वहमाना हवींषि"। ये तु रथिनः तै रथेषु "भरमाणा (१) वहमाना हवींषि"। ये तु अरथिनस्ते तु स्कन्धावसक्तिकासु हवींषि वहमानाः। "अस्मे धत्त वसवो वसूनि"। अस्मासु दत्त हे वसवो वासयितारः "वसूनि" धनानि ॥ १८ ॥ "यां आवहः"। हे भगवन्नग्ने यान् "आवहः" आहूतवानसि। "उशतः" कामयमानान्। हे "देव देवान् तान् प्रेरय"।

दृ३सवंनञ्जुषाणाः ॥ भरंमाणाव्वहंमानाहुवीथ्ठंष्यु स्स्मे धंत्तव्वसवोव्वसूंनिस्वाहां ॥ १८ ॥ याँ२ ॥ ऽआवंहः। याँ२ ॥ ऽआवंहऽउशुतोदेंवदेवाँस्तान्प्रेरंय स्वे अंग्गने सुधस्त थे ॥ जक्षिवाथ्ठंसः

अनुत्रज्यादिभिः। "स्वे" स्वकीये "सधस्थे" सहस्थाने गृहे। किमुक्त्वा प्रेरयेतिचेदत आह। ये यूयं "जक्षिवांसः" पशून् पुरोडाशञ्च। "पपिवांसश्च" सोमम्। "विश्वे" सर्वे ते इदानीं परिसमाप्ते यज्ञे "अस्तुं घर्मं स्वरातिष्ठतानु"। 'अनुर्लक्षणे' इति कर्मप्रवचनीयसंज्ञा। "अस्तुं"

(१) भरमाणाः पुष्णन्त इत्यर्थो वा ॥ १८ ॥

प्राणवातमन्वातिष्ठत। "घर्मं" चादित्यमन्वातिष्ठत। "स्व"र्द्युलोकमन्वातिष्ठत। यस्य यत्र गृहा इत्यभिप्रायः॥ १९॥ "वयर्ठ०हित्वा"। अग्निं व्यवसृजति। वयमेव त्वां "प्रयति" प्रगच्छति प्रारभ्यमाणो "यज्ञे अस्मिन्" हे "अग्ने होतारमवृणीमहि" इतवन्तः। "इह" मन्त्रे अग्निर्देवो दैव्यो होतेति। त्वञ्च इतः सन् "ऋधगयाः"। ऋध्नोतेः पूर्वं पदं, यजते-

पपिवाꣳसꣳसरस्वतीमिन्द्रꣳसुत्रामाणꣳस्वाहा॥ १९॥

व्वयꣳहि। त्वाम्प्रयतियज्ञेऽअस्मिन्नग्नेहोतारमवृणीमहीह॥

ऋधगयाऽऋधगुताशमिष्ठाःप्रजानन्यज्ञमुपयाहिव्विद्वान्त्स्वाहा॥ २०॥ देवागातुविदः। देवागातुविदोगातुंव्वित्त्वागातु

रुत्तरं पदम्। ऋध्नुवन्नयाक्षीः समर्धयन्निष्टवानसि। किञ्च "ऋधगुताशमिष्ठाः"। "उत" अपि च ऋध्नुवन्नेव यज्ञप्रायश्चित्तं शमितवानसि। इदानीं "प्रजानन्यज्ञ" परिसमाप्तिं गृह"मुपयाहि। विद्वान्" जानानः स्वमधिकारम्॥ २०॥ "देवागातुविद" इति व्याख्यातम्॥ २१॥ यज्ञं

शु० य० सं० १७० उ० भा०

व्यस्तगति । "यज्ञ यज्ञं गच्छ" । हे यज्ञ यज्ञमेव त्वं गच्छ" । नहि त्वत्तोन्यदस्ति सर्वात्मना हि त्वमित्यभिप्रायः । "यज्ञपतिं" यजमानं "गच्छ", "स्वां" च "योनिं गच्छ" । द्रव्यं देवता हि यज्ञस्य स्वा योनिः । "एष ते यज्ञः" । अयं तव शरीरभूतो यज्ञः संस्कृतः ऋत्विग्भिः । हे "यज्ञ-

स्मि॑त ॥ मन॑सस्पतऽइ॒मन्दे॒वय॒ज्ञ॑ᳪस्वाहा॒ वाते॑धाः ॥ २१ ॥

यज्ञ॑ य॒ज्ञम् । यज्ञ॑ य॒ज्ञं ग॑च्छ य॒ज्ञप॑तिं ग॑च्छ॒ स्वां योनिं॑ ग॑च्छ॒ स्वाहा॑ ॥

ए॒ष ते॑ य॒ज्ञो य॑ज्ञपते स॒हसू॑क्तवाक॒ᳪ सर्व॑वीर॒स्तं जु॑षस्व॒ स्वा

हा॑ ॥ २२ ॥ * माहि॑ः । माहि॑र्भू॒र्मा पृदा॑कुः । उ॒रुᳪहि राजा॒ व्व

पते सह सूक्तवाक:" । साङ्गः सर्वशरीरः । सर्वं वीरैरुपेतः । सोमः पशुः सवनीयाश्च पुरोडाशा वीरा उच्यन्ते । "तं" च "जुषस्व" आसेवस्व ॥ २२ ॥ कृष्णाविषाणामेखले चात्वले ऽस्यास्यति (१) । "माहिर्भूः" । व्याख्यातम् । आपोऽवभृथमयन्वाचयति । "उरुᳪहि" । वारुणी

८ अ०

विषम १७०

त्रिष्टुप्। एकं तावद् उरुं विस्तीर्णं हि अतिशयेन "राजा वरुणः चकार" कृतवान्। "सूर्याय"। षष्ठ्यर्थे चतुर्थी। सूर्यस्य पन्थानम्। "अन्वेतवाउ"। अन्वेतवान् अन्वहमागमनाय। अपदम्। "अपदे पादाप्रतिधातवे अकः"। यत्र पदं दत्तं प्रतिमुद्रान्यायेन नोपलक्ष्यते तस्मिन्

रुणश्चकार सूर्याय पन्थामन्वेतवाऽउ ॥ अपदे पादा प्रतिधातवेकरुतापवक्ता हृदयाविधश्चित् । नमो वरुणा

पदे पथि अन्तरिक्षलोके। "पादा" पादानाम्। षष्ठीबहुवचनस्थाने आकारः। "प्रतिधातवे" प्रतिनिधानाय। अकः कृतवान् आलम्बनमिति शेषः, सूर्यस्येव। "उतापवक्ता हृदयाविधश्चित्"। उत अपिच। अपवक्ता अपवदिता आक्षेप्ता। हृदयाविधश्चित्। चिच्छब्दोऽप्यर्थे। हृदयं

(१) कृष्णाविषाणामेखले चात्वाले प्रास्यति माहिर्भूः; उरुं हीति वाचयन्ति, नमो वरुणायेति वाचयत्यपोक्रमन्निति। का० १०।८।१३-१५-२१॥२३॥

यो विध्यति मर्माण्य,च्चार्यौच्चार्य पिशुनः तस्याप्यपवदिता किमुतान्येषामप्य,नकारिणामिति । य इत्थं भूतो वरुणः सोवभृथाय तीर्थं ददात्विति शेषः । अपोवक्रमयन्वाचयति । "नमोवरुणाय" । "अधिष्ठितः" आक्रान्तः "वरुणस्य पाशो" नालं बन्धनाय ॥ २३ ॥ समिधं प्रास्याभिजुहोति (१) । "अग्नेरनीकम्" । आग्नेयी त्रिष्टुप् । अग्नेरनीकमिति परोक्षलिङ्गम् । "दमेदमेसमिधं यक्ष्यग्ने" प्रत्यक्ष लिङ्गमेवास्मिन्वाक्ये अत एवं व्याख्यायते । यस्य तवाग्नेः सतः अनीकं मुखम् "अप" उदक

यऽअभिष्ठितो वरुणस्य पाशः ॥ २३ ॥ अग्नेरनीकम् । अग्ने

"माविवेश" प्रविवेश प्रविष्टम् । "अपान्नपा त्स" स्त्वं प्रति रक्षत् "असुर्यम्" असुरस्य स्वं माया-दिकम् । स त्वमिदानीं दमेदमे । दम इति गृहनाम । यज्ञगृहे यज्ञगृहे । अश्वमेधविषया वीप्सा । तत्र हि नानावभृथान्यहानि भवन्ति । "समिधं यक्षि" यजति । यजतिः संगति-करणार्थः । समिधं संगतां कुरु आत्मसात्कुरु । ततोनन्तरं "हुतं" प्रति "ते" तव "जिह्वा" । ज्वाला "सुश्चरण्यत्" उच्चरन्तु समिधः सकाशात् ॥ २४ ॥ ऋजीषकुम्भं प्लावयति ।

(१) प्राश्य समिधं चतुर्गृहीतेनाभिजुहोति अग्नेरनीकमिति । का० १०।८।२२ ॥ २४ ॥

"समुद्रे ते"। सौमी विराट्। यदित्ययं निपातो हृदयशब्देन सह सम्बध्यते समानलिङ्गत्वात्। यत् हृदयं समुद्रे ते तव "अप्सु अन्तः" अपां च अन्तर्मध्ये वर्त्तते तत्र त्वां गमयामि। तत्रस्थं च त्वां "संविशन्तु ओषधीः"। "उत आपः" अपि च आपः"। किंच "यज्ञस्य" च "सूक्तोक्तौ" शोभन-

रत्नी॑कम॒ प्र॒आवि॑वे॒ग्धापा॑न्नपा॑त्प्रति॒रक्ष॑न्नसु॒र्य॑म्। दमे॑दमे-

स॒मिधं॑यक्ष्यग्ने॒प्रति॑ ते जि॒ह्वाघृ॒तमुच्च॑रण्य॒त्स्वाहा॑ ॥ २४ ॥

स॒मुद्रे ते॒हृद॑यम॒प्स्व॒न्तः सन्त्वा॑विश॒न्त्वोष॑धीरु॒तापः॑। य॒ज्ञ

वचनोच्चारणेन "नमोवाकेन" नमस्कारवचनेन च "विधेम"। विधितिः स्थापनार्थः। हे "यज्ञ-पते" सोम ॥ २५ ॥ विसृज्योपतिष्ठते (१)। "देवीरापः"। पङ्क्तिर्वा बृहती वा। अपां च सोमस्य च संगतिं वदति। हे देव्य आपः "एष" सोमो "वः" युष्माकं गर्भो "वर्त्तते"। "तं

(१) समुद्रे त इति ऋजीषकुम्भं प्लावयतीति। का० १०।९।१ ॥ २५ ॥

(२) देवीराप इति विसृज्योपतिष्ठते। का० १०।९।२ ॥ २६ ॥

शु० य० सं० १७२ उ० आ०

सुप्रीतं" साधुतर्पितम्। सुभृतं सुपुष्टम् "बिभृत" धारयत। हे "देव सोम एष ते लोकः" स्थानं तस्मिन्नवस्थितः "शं च वक्ष्व" परि च वक्ष्व। शं सुखमस्मान्प्रति वह प्रापय। परिवह च अस्मत्तः सर्वा आर्त्तीः तस्मिन्नः शं चैधि। "सर्वाभ्यश्च न आर्तिभ्यो गोपायेति" श्रुतिः ॥ २६ ॥

स्यं त्वा सत्रपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहा ॥ २५ ॥ देवीरापः । देवीरापऽएष वो गर्भस्तꣳ सुप्रीतꣳ सुभृतम्बिभृत ॥ देवसोमैष ते लोकस्तस्मिञ्छं च वक्ष्व परि च वक्ष्व ॥२६॥ अवभृथ निचुम्पुण । निचेरुरसि निचुम्पुणः ॥ अव देवैर्देवकृतमेनोयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि देवानाꣳ समिदसि ॥२७॥ *

मज्जति (१)। "अवभृथे ति। व्याख्यातम्। समिधमादधाति (२)। "देवानाम्" दैवीभूतानामस्माकं समिन्धनं त्वं भवसि ॥२७॥ इत उत्तरमनूवन् ध्यायदि गर्भिणी स्यात्तत्र प्रायश्चित्तम्-

(१) अवभृथे मज्जयति। का० १०।८।३। (२) स्नात्वोत्तरमाहवनीयमेत्य तस्मिन् समिधं दध्यात् ॥ २७ ॥

८ अ०

विषय १७२

च्यते (१)। त्र्यवसाना महापङ्क्तिः। "एजतु दशमास्यः"। एजतु चलतु। एजृ कम्पने। दशमास-कालावच्छिन्न इव "गर्भो जरायुणा सह"। जरायुर्गर्भवेष्टनम्। कथं चलतु इत्यत उपमया दर्शयति। "यथायं वायुरेजति यथा" च "समुद्र एजति"। एतौ हि सदाचलनौ। "एवमयं दशमास्यः"। "तमेतदथ दशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोती"ति श्रुतिः।

एजतु दशमास्यः। एजतु दशमास्यो गर्भो जरायुणा सह॥ यथायं वायुरेजति यथा समुद्र एजति॥ एवायं दशमास्यो अस्रज्जरायु

"अस्रत्"। स्रंसतेरेतद्रूपं स्रवतेर्वा। स्रंसतु स्रवतु वा। "जरायुणा सह" अस्रत् अपसरतु गर्भो वेष्टनेन सह॥ २८॥ अवदानान्यनु जुहोति (१)। "यस्यै तेयज्ञियः"। अनुष्टुप्। वशोच्यते। यस्यास्ते तव यज्ञियो "गर्भः" यज्ञार्हो गर्भः। यस्यास्तव "योनिर्हिरण्ययी"-

(१) निरुह्यमाणमभिमन्त्रयत एजतु दशमास्य इति। का० २५।१७ ॥२८॥

(१) अवदानान्यनुजुहोति यस्यै त इति। का० २५।१०।११ ॥ २९ ॥

क्रियते अनया यजुषा तां त्वां गर्भेण संगमयामि। यस्य च गर्भस्य "अङ्गानि अह्रुता" अकुतानि अनवखण्डितानि। 'कुह्वरेश्छन्दसी'ति कुरादेशः। तं गर्भं "माता" अनूवन्ध्या-लक्षणया "समजीगमम्" संगमयामि॥ २९॥ अध्वर्योरनुहोममेषं जुहोति (१)। गर्भः सूयते इन्दुसंस्तवेन। "पुरुदस्मो" बहुदानः। "विषुरूपः" बहुरूपो हि गर्भो भवति। "इन्दुः"

यासुह ॥ २८ ॥ यस्यैते। पुरुदस्मो विषुरूप इन्दुरन्तर्महिमानमानञ्ज धीरः। एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानु प्रथन्ताᳬस्वाहा ॥ ३० ॥

अङ्गान्यहुता यस्य तं मात्रा समजीगमᳬ स्वाहा ॥ २९ ॥ पुरु-

सोमः यथोर्हि सोमसंस्तवो विद्यते। "अन्तः" उदरे व्यवस्थितो "महिमानम्" महाभाग्यम् "आनञ्ज" अञ्जतेर्व्यक्तीकरणार्थस्यैतद्रूपम्। व्यक्तीकरोति। "धीरः" मेधावी। इत्थंभूत "महिमानमान-ञ्ज धीरो" येन "एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं" मपि वशामवगणयित्वा भूत-



(१) स्विष्टकृतमनु ( अध्वर्युर्वा स्विष्टकृद्धोमे कृते प्रतिप्रस्थाता प्रचरण्यां स्रुचि सर्वं गर्भरसमवदाय जुहुयात् ) जुहोति पुरुदस्म इति। का० २५।१०।१५॥ ३०॥

रूपेण "भुवनानि" भूतजातानि "अनुप्रथन्ताम्"। वशाया अङ्गमनुप्रथयते। इष्टिरेवं भूतानां भविष्यतीत्यभिप्रायः। कथमियं वशा चतुष्पदी सती एकपद्यादिभिर्वर्ण्यते। अवग्लृत्य सूयत इति बह्वृचः। वशेत्येकपदी, वपया अङ्गैश्च द्विपदी, उपयट्होमैश्च त्रिपदी, चतुष्पदी पत्नीसंयाजैश्च-

रु॒द्रस्मो॑ऽवि॒षु रू॒पं॑ । पु॒रु द्र॒स्मो वि॑षु॒रूप॒ इन्दु॑र॒न्तर्म॑हि॒मान॑मान॒ञ्ज धीरः॑ । एक॑पदीं द्वि॒पदीं॑ त्रि॒पदीं॒ चतु॑ष्पदीम॒ष्टाप॑दीं॒ भुव॒नानु॑ प्रथन्ता॒ᳪं स्वाहा॑ ॥३०॥ म॒रुतो॒ यस्य॑ । म॒रुतो॒ यस्य॒ हि क्षये॑ पा॒था दि॒वो वि॑

तुर्भिर्वा पादैः। अष्टापदी तु गर्भसंबन्धिभिः पादैः ॥ ३० ॥ जुहोति (१)। "मरुतो यस्य"। मारुती गायत्री। "मरुतः यस्य क्षये" निवासे गृहे। 'क्षयोनिवासे' इत्याद्युदात्तः। "पाथ"। पा पाने, शपो लुप्। पिबथ पानादीन्कुरुथ। हे "दिवो विमहसः"। द्युलोकस्य महयितारः

(१) समिष्टयजुरन्ते (समिष्टयजुर्होमान्ते) आमिक्षा(म्नौ) जुहुयात् (स्वाहान्तेन मन्त्रेणोपवेष्टितगर्भं जुहोति) तिष्ठन् मरुत इत्यस्वाहाकृत्येति (स्वाहाकारमनुच्चार्य)। का० २५।१०।१० ॥ ३१ ॥

पूजयितारः। "सस्तुगोपातमोजनः"। सस्तुगुप्ततमो यजमानजनः। युष्मद्गुप्तानां न भयमस्तीत्यभिप्रायः॥ ३१॥ अङ्गारैरभिसमूहति। "महीद्यौः"। द्यावापृथिव्यौ गायत्री। महती द्यौः "पृथिवी च नः" अस्माक"मिमं यज्ञं मिमिक्षताम्"। मिह सेचने। सिञ्चतु स्वैः स्वैर्भागैः। "पिपृतानः"। बिभृतां नः अस्मान् "भरीमभिः" भरणैः हिरण्यपशुधान्यादिभिः॥ समाप्तोऽग्निष्टोमः॥३२॥

महसः॥ सस्तुगोपातमोजनः॥ ३१॥ महीद्यौः। पृथिवीच न ऽइमं यज्ञम्मिमिक्षताम्॥ पिपृतान्नो भरीमभिः॥ ३२॥ * आ-

अथ षोडशी अग्नेपवस्वेत्येतस्मात्प्राक् (१)। "आतिष्ठ"। तिस्र ऐन्द्र्योऽनुष्टुभः। आतिष्ठ अभितिष्ठ आरोह हे "वृत्रहन्" वृत्रस्यहन्तः "रथं युक्ता" ते तव "नु ब्रह्मणा" नवीलक्षणेन इन्द्रागच्छेत्यादिना "हरी" हरितवर्णावश्वौ। तौ हि आह्वानानीन्द्रस्योपश्रुत्य, प्राप्त आवयोर्नियोजनकाल इति मन्यमानौ स्वयमेवात्मानं रथे युञ्जाते अत एवमाह। "युक्ता

(१) महीद्यौरित्यङ्गारैः (आमित्रे चित्रं गर्भम्) अभ्यूहतीति। का० २५।१७।१८॥ ३२॥

ते ब्रह्मणा हरी” इति । अथेदानीं रथारूढस्य “अर्वाचीनम्” । अस्मदभिमुखम् “सु” साधु “ते” तव “मनः” हे इन्द्र “ग्रावा” सोमाभिषवकारी “कृणोतु” करोतु “वग्नुना” वग्नुरितिवा ग्नामसु पठितम् । सोमाभिषवध्वनिना । “उपयाम गृहीतोसीन्द्राय त्वा षोडशिनं गृह्णामि

तिष्ठ । वृत्त्रहुन्नरथं ध्युक्तातेब्रह्मणाहरी ॥ अर्वाचीन ऽं सुतेमनो ग्ग्रावांकृणोतुवृग्नुनां ॥ उपयामगृहीतोसीन्द्रायत्वाषोडशिनंऽए षतेयोनि रिन्द्रायत्वाषोडशिने ॥ ३३ ॥ * युक्ष्वाहि । केशिना हं

एष ते योनिः इन्द्राय त्वा षोडशिने ॥३३॥ द्वितीयो ग्रहणमन्त्रः । “युक्ष्वाहि” । युजिर् योगे । युङ्ग्धि । “हि” यस्मात् “केशिनौ” प्रलम्बकेशरौ “हरी” हरितवर्णावश्वौ “वृषणौ” वर्षितारौ सेक्तारौ तरुणौ । “कक्ष्यप्रा” कक्ष्या अश्वस्य संनाहरज्जुः । प्रा पूरणे । कक्ष्यां यावापूरयतः तावेव-

(१) प्रातः सवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं खादिरेण चतुःस्त्रक्तिना (चतुष्कोणेन) आतिष्ठ युक्ष्वाहीति । का० १२।५।२ ॥ ३३ ॥

मुच्येते। तौ युक्त्वा रथे तमास्थाय "अथ" समनन्तरमेव "नो"ऽस्माकम् हे "इन्द्र सोमपाः" सोमपानशील: "गिरामुपश्रुतिं चर" स्तुतिलक्षणां गिरं वाचमुपश्रुत्य चर आगच्छास्मद्-गृहम्। "उपयाम" इत्यादि समानम्॥ ३४॥ तृतीयोमन्त्रविकल्प: "इन्द्रमिद्धरी"। इन्द्रस्य

रीबृहंशाकन्द्यापम्। अथानऽइन्द्रसोमपागिरामुपश्रुतिञ्चर॥ उपयामगृहीतोसीन्द्रायत्वाषोडशिनं ऽएषते योनि रिन्द्रायत्वाषोडशिने॥ ३४॥ * इन्द्रमित्। इन्द्रमिद्धरीव्वहतोप्रतिधृष्टशवसम्॥ ऋषीणाञ्चस्तुतीरुपयज्ञञ्चमानुषाणाम्॥ उपया

एवार्थे। इन्द्रमेव हरितवर्णावश्वौ "वहतः" प्रापयतः। * अत्र "ऋक्सामे वै हरी" इतिश्रुतेः द्विवचनान्तहरिशब्दस्य ऋक्सामवाचकत्वात् हरितवर्णावश्वाविन्द्रमेनं वहतम् इति व्याख्यानं न घटते। हरितवर्णयोर्ह्यश्वयो: सर्वत्र सुलभत्वात्। इन्द्राश्वयोश्च हरितवर्णत्वम-प्रसिद्धम् "मयूररोमभिः इषती अभूतामि"त्यादिश्रुतेर्दर्शनात्। "पशवो वै देवानां छन्दा-

ठं०सौ"त्यादिश्रुतिपर्य्यालोचनया नानावर्णच्छन्दोमये ऋक् सामे एवेन्द्रं वहत इति यन्ना न तु हरितवर्णावश्वौ। * कथं भूतमिन्द्रम् "अप्रतिधृष्टशवसम्"। न प्रतिधर्षयितुं शक्यते शवो बलं यस्य स अप्रतिधृष्टशवाः तमप्रतिधृष्टशवसम्। क्व वहत इत्याह। "ऋषीणां" च वशिष्टप्रभृ-

मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा षो॒ड॑शिने॑ऽए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा षो॒ड॑शि-
ने॑ ॥ ३५ ॥ * यस्मा॒न्न। जा॒तः परो॒ऽअ॒न्यो॒ऽअस्ति॒ यऽआ॑वि॒वे
श॒ भुव॑नानि॒ विश्वा॑ ॥ प्र॒जाप॑तिः प्र॒जया॑ सᳬरर॒ाणस्त्रीणि॒ ज्यो

तीनां च "स्तुतौः"। "उप"समीपे। "यज्ञं च मानुषाणाम्"। मनुष्याणां यजमानानामुप समीपे वहत इति वर्त्तते। "उपयाम" इत्यादि समानव्याख्यानम् ॥ ३५ ॥ षोडशिग्रहस्तुप-

* अत्रेत्यारभ्य—अश्वौ * इत्यन्तं वा० पु० नास्ति।

तिष्ठते (१)। "यस्मान्नजातः"। त्रिष्टुप्। षोडशी परब्रह्मरूपेण स्तूयते। यस्मा "दन्यः पर" उत्कृष्टो जातो देवो नास्ति न विद्यते महिम्नातस्मा "विवेश" आविशति "भुवनानि" भूतजातानि "विश्वा" विश्वानि सर्वाणि अन्तर्यामिरूपेण। तथाच श्रुतिः। "यः सर्वेषु भूतेषु तिष्ठति

त्री॑ꣳषि सचते स षो॑डशी ॥ ३६ ॥ इन्द्र॑श्च स॒म्राड्वरु॑णश्च॒ राजा॒ तौ ते॑ भ॒क्षं च॑क्रतु॒रग्र॑ ए॒तम् ॥ तयो॑र॒हमनु॑ भ॒क्षं भ॑क्षयामि

यस्य प्रजापतिर्भवति"। "प्रजया संरराणः" संरममाणः क्रीडन्। यस्य "त्रीणि ज्योतींषि" अग्निवायुसूर्यलक्षणानि "सचते" सेवते परमात्मरूपेण स षोडशीग्रहः ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानयुक्ता ॥ ३६ ॥ षोडशिनं भक्षयति (१)। "इन्द्रश्चसम्राट्"। त्रिष्टुप् यजुरन्ता। सह

(१) उपस्थापनं यस्मान्न जात इति। का० १२।५।१९ ॥ ३६ ॥

(१) इन्द्रश्च सम्राडिति भक्षणम्। का० १२।५।२०। इतिषोडशिग्रहः ॥ ३७ ॥

प्राणेनेति यजुः। इन्द्रवरुणौ देवता षोडशीग्रहो वा। "इन्द्रश्चसम्राट्" यो वाजपेययाजी। "वरुणश्च" चकारौ समुच्चयार्थीयौ। "राजा" यो राजसूययाजी। "राजा वै राजसूयेनेष्ट्वा भवति सम्राट् वाजपेयेनेति" श्रुतिः। "ता"विन्द्रवरुणौ"ते" तव हे षोड़शिग्रह "भक्षं चक्रतुः" क्षत-वल्लौ "अग्रे" प्रथमम्। एतस्मिंस्तस्य भक्षेण सह संबन्धः। "तयो"र्भक्ष"मनु" कुर्वे"न्नहं" भक्ष

मि वागदेवीजुषाणासोमस्यतृप्यतुसहप्राणेन स्वाहा ॥३७॥ *

अग्ने पवस्व। अग्नेपवस्व स्वपाऽअस्मे वर्चः सुवीर्यम्॥ ह-

"भक्षयामि"। मदीयेन च भक्षणेन "वागदेवी जुषाणा" सेवमाना "सोमस्य तृप्यतु सह प्राणेन"॥ ३७॥ अथातिग्राह्यपुरोरुचः तिस्रो गायत्र्योग्नीन्द्रसूर्यदेवत्याः (१)। "अग्नेपवस्व"। हे भगवन्नग्ने पवस्व। पवतिः प्रवृत्त्यर्थोन्तर्भावितण्यर्थः। पवस्व प्रवर्तयस्व। यस्त्वं "स्वपा"

* अथ द्वादशाहमन्त्राः। (१) पृष्ठ्यः षडहाः (तदाख्यः क्रतुः) तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वेऽग्ने पवस्वो तिष्ठन्नहस्मि-मित्यन्वह मेकैकम् अग्नेवर्चस्विन्निन्द्रौजिष्ठ सूर्यभ्राजिष्ठेतिभक्षणं यजमानैरिति। का० १२।३।१-२॥ ३८॥

45.

ऋ० य० सं० १७६ उ० भा०



तिष्ठते (१)। "यस्मान्नजातः"। त्रिष्टुप्। षोडशी परब्रह्मरूपेण स्तूयते। यस्मा "दन्यःपर" उत्कृष्टो जातो देवो नास्ति [ न विद्यते महिम्नातस्मा "द्विवेश" आविशति "भुवनानि" भूतजातानि "विश्वा" विश्वानि सर्वाणि अन्तर्यामिरूपेण। तथाच श्रुतिः। "यः सर्वेषु भूतेषु तिष्ठति

तौ॑ ष॑चसचते॒ सषो॒ड॒शी ॥ ३६॥ इन्द्र॑श्च । स॒म्राड्वरु॑णश्च॒ रा॒जा॒तौ॑ते॒ भ॒च॒ञ्च॑क्रतुर॒ग्र॑ ए॒तम्॒ ॥ तयो॑र॒हमनु॑ भ॒चम्भ॑क्षया

यस्य प्रजापतिर्भवति"। "प्रजया सरराणः" संरममाणः क्रीडन्। यस्य "त्रीणि ज्योतींषि" अग्निवायुसूर्यलक्षणानि "सचते" सेवते परमात्मरूपेण स षोडशीग्रहः ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्व्याख्यानयुक्ता ॥ ३६ ॥ षोडशिनं भक्षयति (१)। "इन्द्रश्चसम्राट्"। त्रिष्टुप् यजुरन्ता। सह

(१) उपस्थापनं यस्मान्न जात इति। का० १२।५।१९ ॥ ३६ ॥

(१) इन्द्रश्च सम्राडिति भक्षणम्। का० १२।५।२०। इतिषोडशिग्रहः ॥ ३७ ॥

प्राणेनेति यज्ञः। इन्द्रवरुणौ देवता षोडशीगृहो वा। "इन्द्रश्च सम्राट्" यो वाजपेययाजी। "वरु णश्च" चकारौ समुच्चयार्थीयौ। "राजा" यो राजसूययाजी। "राजा वै राजसूयेनेष्ट्वा भवति सम्राट् वाजपेयेनेति" श्रुतिः। "ता"विन्द्रवरुणौ "ते" तव हे षोडशिग्रह "भक्षं चक्रतुः" हत- वन्तौ "अग्रे" प्रथमम्। एतस्मिन्नस्य भक्षेण सह संबन्धः। "तयो"र्भक्ष "मनु" कुर्वन् "न्नहं" भक्ष

मि व्वाग्ग्देवीजु॑षा॒णासोम॑स्यतृप्प्यतुस॒हप्प्रा॒णेन॒स्वाहा॑ ॥३७॥ *

अग्ग्नेपवंस्व। अग्ग्नेपवंस्व॒स्वपा॑ऽअ॒स्म्मे व्वर्च्चः॑सुवीर्र्यं॑म्॒ ॥ द-

"भक्षयामि"। मदीयेन च भक्षणेन "वाग्देवी जुषाणा" सेवमाना "सोमस्य तृप्यतु सह प्राणेन" ॥ ३७ ॥ अथातिग्राह्यपुरोरुचः तिस्रो गायत्र्योग्नीन्द्रसूर्यदेवत्याः (१)। "अग्नेपवस्व"। हे भगवन्नग्ने पवस्व। पवतिः प्रवृत्त्यर्थोन्तर्भावितण्यर्थः। पवस्व प्रवर्तयस्व। यस्त्वं "स्वपा"

अथ द्वादशाहमन्त्राः। (१) पृष्ठ्यः षडहाः (तदाख्यः क्रतुः) तत्रातिग्राह्यग्रहणं त्व हे पूर्वेऽग्ने पवस्वो तिष्ठन्नहन्य- मिलन्नन्न मेकैकम् अग्नेवर्चस्विन्निन्द्रौजिष्ठ सूर्यभ्राजिष्ठेतिभक्षणं यजमानैरिति। का० १२।३।१-२ ॥ ३८ ॥

45.

सुकर्म्मा। अप इति कर्मनामसु पठितम्। "अग्ने" अस्मासु "वर्च्चः" ब्रह्मवर्च्चसम् "सुवीर्यं" शोभनवीर्यम्। "दधद्रयिं मयि पोषम्"। धारयन् स्थापयन् रयिं धनं मयि पोषं पुष्टिञ्च प्रवर्त्तयस्वेति संबन्धः। "उपयाम गृहीतोसि अग्नये त्वा वर्च्चसे। एष ते योनिः अग्नये त्वा वर्च्चसे"। व्याख्यातम्। भक्षमन्त्रः। "अग्नेवर्च्चस्विन्"। हे "अग्ने वर्च्चस्विन्" हे अग्ने ब्रह्म-

दधद्रयिम्मयिपोषम्॥ उपयामगृहीतोस्यग्नयेत्वा वर्च्चसऽएष ते योनिरग्नयेत्वा वर्च्चसे॥ अग्ने वर्च्चस्विन्वर्च्चस्वांस्त्वन्देवेष्वसि वर्च्चस्वानहम्मनुष्येषु भूयासम्॥ ३८॥ * उत्तिष्ठन्नोजसा।

वर्च्चसेन संयुक्त। यथा त्वं "देवेष्वसि" वर्च्चोयुक्तः एव "अहं मनुष्येषु" वर्च्चोयुक्तो "भूयासम्" भवेयम्। स्वयंभूरसीत्येतस्मिन्मन्त्रे वर्चोदा असीतिवचर्चःशब्दो ब्रह्मवर्च्चसपर्यायोवर्णितः श्रुत्या "तद्वेत्र ब्राह्मणेनेष्टव्यं यद्ब्रह्मवर्च्चसे। स्या" दिति: अतोस्मिन्मन्त्रे वर्च्चशब्दो ब्रह्मवर्च्चसप-र्यायो दर्शितः॥ ३८॥ "उत्तिष्ठन्नोजसा"। मातुरुत्सङ्गादुत्तिष्ठन् ओजसा बलेन "सह पीत्वी"

पीत्त्वा। "शिप्रे अवेपयः"। शिप्रे हनू नासिके वा। टुवेपृ कम्पने। अतिपानोद्वेगान्नासिके कम्पितवानसि। किन्तद्द्रव्यं यत्पीत्त्वा अवेपय इत्यत आह। "सोमम्"। हे भगवन्निन्द्र "चमूसु-तम्"। अधिषवणचर्म चमूशब्देनोच्यते। अधिषवणचर्मण्यभिषुतं सोमं पीत्त्वा अवेपय इतिसंबन्धः।

उत्तिष्ठन्नोजसासहपीत्वीशिप्रेऽअवेपयः॥ सोममिन्द्रचमूसुतम्॥ उपयामगृहीतोसीन्द्रायत्वौजसऽएषतेयोनिरिन्द्रायत्वौजसे॥ इन्द्रौजिष्ठौजिष्ठस्त्वन्देवेष्वस्योजिष्ठोहम्मनुष्येषुभूयासम्॥ ३९॥ * अहंप्रस्यमस्य। अंहप्रस्यमस्यकेतवोव्विरश्मयः

"उपयाम गृहीतोसीन्द्राय त्वौजस एष ते योनिरिन्द्राय त्वौजसे"। प्रगुणं ग्रहं भक्षयति। "इन्द्रौजिष्ठ"। हे इन्द्र, ओजिष्ठ अतिशयेनौजसा युक्त यथा "ओजिष्ठस्त्वं देवेष्वसि" एव "मोजि-ष्ठोहं मनुष्येषु भूयासम् ॥३९॥ "अहंप्रस्य"(१)। इशिर् प्रेक्षणे। अस्य कर्मणि प्रथमपुरुषवङ्गव-

चनस्थाने छान्दसं रूपमदृश्रमिति। दृश्यन्ते अस्य सूर्यस्य प्रज्ञानहेतुत्वात् "केतवो रश्मयः"। केतुरिति प्रज्ञानामसु पठितम्। "वि"इत्यनर्थको निपातः। अथवा व्यदृश्रमिति संबन्धः। "जनान् अनु"अनुगताः भ्राजन्तः देदीप्यमानाः। कथंभूता दृश्यन्ते। "अग्नयो यथा" अग्नय इव"उपयाम

योजनाँ२ ॥ ऽअनु ॥ भ्राजन्तोऽअग्नयो यथा॥ उपयामगृहीतोसि सूर्य्यायत्वाभ्भ्राजाये षतेयोनिः सूर्य्यायत्वाभ्भ्राजाय ॥ सूर्य्य भ्राजिष्ठ भ्राजिष्ठ स्त्वन्देवे ष्ष्वसि भ्राजिष्ठोहम्मनुष्ष्ये षुभूयासम् ॥ ४० ॥ * उदुत्यम्। उदुत्यञ्जातवेदसन्देवंव्वहन्ति

गृहीतोसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्यायत्वा भ्राजाय। भक्षयति। हे"सूर्यभ्राजिष्ठ"अतिशयेन भ्राजिष्ठ यथा"भ्राजिष्ठस्त्वं देवेष्वसि"एवं"भ्राजिष्ठोहं मनुष्येषु भूयासम्"॥४०॥ विषुवति गृ

गृह्णाति (१)। "उदुत्यञ्जातवेदसम्"। व्याख्यातम्। देवार्षन्तु॥ ४१॥ अथ रोहिणीगोरभि-मन्त्रणं द्वाभ्यामृग्भ्यां महापङ्क्तिप्रस्तारपङ्क्तिभ्यां द्रोणकलशमवघ्रापयति(१)। "आजिघ्र"। कुसु-रुविन्दोरार्षम्। महीतिगोनामसु पठितम्। आभिमुख्येन जिघ्र द्रोण "कलश" हे "महि"। किञ्च

केतवं॥ इन्द्रो विश्वस्य वाय सूर्य्यम्॥ उपयामगृहीतोसि सूर्य्याय त्वा भ्राजायैषते योनिः सूर्य्याय त्वा भ्राजाय॥४१॥ *

"आत्वाविशन्त्विन्दवः"। आविशन्तु त्वामिन्दवः सोमाः य एते द्रोणकलशसंबन्धिनः। किञ्च। "पुन"रपि "ऊर्जा" अन्नेन सहितानि "वर्तस्व"। यां त्वामेवं स्तुमः "स नः" अस्माकं

(१) उदुत्यमितिग्रहग्रहणम्। का० १२।२।१९॥ ४१॥

(१) हविर्धानाक्षौधुर्योरन्तरे द्रोणकलशमेनाम् (गर्गत्रिरात्रादावहीने त्रिसत्ये गोसहस्रं दक्षिणास्ति तत्र सहस्र-संख्यापूरणी रोहिणीधेनुस्तां) आघ्रापयति आजिघ्रेति। का० १३।४।८॥ ४२॥

"सहस्र" गवां यदेतदस्माभिर्दत्तं तत् "धुक्ष्व"। दुहतिर्दानार्थः पुनर्देहि। त्वत्प्रसादाच्च "उरुधारा" बहुधारा "पयस्वती" पयसा संयुक्ता "पुन"रपि "मामाविशतात्" आविशतु। "रयिः" धनम्॥ ४२॥ दक्षिणेऽस्याः कर्णे यजमानो जपति (१)। "इडे रन्ते"। हे इडे।

आजि॑घ्र ॥ आजि॑घ्र क॒लशं॑म्म॒ह्यात्वा॑विश॒न्त्विन्द॑वः ॥ पुन॑रू॒र्ज्जानिव॑र्त्तस्व॒ सानः॑ स॒हस्र॑न्धुक्ष्वो॒रुधा॑रा॒पय॑स्वती॒पुन॒र्म्मा वि॑शताद्र॒यिः ॥ ४२ ॥ इडे॒ रन्ते॑ । इडे॒ रन्ते॒ हव्ये॒ काम्ये॒

इडानाम मनोर्दुहिता तया गौरुपमीयते। इडेव त्वमसि। रन्ते रमयतीति "रन्ता"। हव्ये ह्वयन्त्येनां यिकारा यज्ञेष्विति "हव्या"। "काम्ये।" मनुष्याणां ह्येतासु कामाः प्रविष्टाः। "चन्द्रे"। चन्दतेराल्हादयतीति चन्द्रा। "ज्योते"। तस्यैव ज्योतिर्ज्योतना। द्युतदीप्तौ

(१) इडेरन्त इति दक्षिणेऽस्याः कर्णे यजमानो जपति। का० १३।४।२० ॥ ४२ ॥

"अस्मज्योता"। "अदि"ति अदीने। "सरस्वति"। सर इत्य,दकनाम। सर्तेः। तद्वति। हे "महि"महति। "विश्रुति" विविधं श्रूयत इति विश्रुति। एतानि "ते" तव हे "अघ्न्ये" अहन्तव्ये "नामानि"अतिशयगुणयुक्तानि तैरभिहिता सती"देवेभ्यो मां सुकृतं"सुकृत-

चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रु॑ति ॥ एता ते॑ अघ्न्ये

नामा॑नि देवेभ्यो॑ मा सुकृतं॑ ब्रूतात् ॥ ४३ ॥ * विन॑ः ॥ विन॑ इन्द्र

मृधो॑ जहि नी॒चा य॑च्छ पृतन्य॒तः ॥ यो अ॒स्माँ अ॑भि॒दा

कारिणं "ब्रूतात्" ब्रूहि ॥ ४३ ॥ महाव्रतीयं ग्रहं गृह्णाति (१)। "विनइन्द्र"। अनुष्टुप्। इन्द्रो विमृद्गुणयुक्तो देवता।"वि न इन्द्र मृधो जहि" विजहि विनाशय नः अस्माकं हे इन्द्र मृधः

(१) ग्रहं गृह्णाति विनइन्द्र, वाचस्पतिं विश्वकर्मन्निवेति। का० १३।२।१७ ॥ ४४ ॥

संग्रामान्। किञ्च "नीचा यच्छ पृतन्यतः"। ये पृतनां संग्राममिच्छन्ति ते पृतन्यतः तान्पृतन्यतो मनुष्यान् नीचा यच्छ नीचैर्निगृहाणीष्व। यद्वा "स्मान् अभिदासति"। दासृउपक्षये। उपक्षिपति तमधरं निकृष्टमर्वाचीनं तमो गमय। "उपयाम गृहीतोसीन्द्राय त्वा विश्वध एष ते योनिरिन्द्राय त्वा विश्वधे"। व्याख्यातम्॥ ४४॥ द्वितीयोमन्त्रविकल्पः (१) वाच-

स त्वधरं गमय तमः॥ उपयामगृहीतोसीन्द्रायत्वाविश्वधऽएषते योनिरिन्द्रायत्वाविश्वधे॥ ४४॥ * व्वाचस्पतिं।

स्पतिं"। त्रिष्टुप् विश्वकर्मणो। स नो विश्वानीति तदः श्रवणाद्यदोध्याहारः कर्त्तव्यः। नित्य सवन्धौ हियत्तदौ। यं वाचोधिपतिं प्राणरूपेण इन्द्ररूपेण वा विवक्षते। "तस्मादाहुतिरिन्द्रोवागि"तिश्रुतिः। "विश्वकर्माणं" सर्वस्य कर्तारम्। "ऊतये" अवनाय तर्पणाय वा। "मनोजुवम्"। मनस इव यस्य जुवः मानोजुवः स एवमुच्यते। मनोगतिमित्यर्थः। "वाजे"

न्ने अस्मिन्महाव्रतीयलक्षणे विषयभूते। "अद्य" अस्मिन् द्यवि। "हुवेम"। आह्वयामः। "स" आहूतः सन् "नो"ऽस्माकं "विश्वानि" सर्वाणि "हवनानि" आह्वानानि "जोषत" जुषतां सेवताम्। "विश्वशंभूः"। शमिति सुखनाम। सर्वस्य सुखेन भावयिता। "अवसे"

व्विश्श्वकर्म्माणमूतयेमनोजुवं व्वाजेऽअद्याहुवेम॥ सनोव्विश्श्वानि हवनानिजोषद्विश्श्वशंम्भूरवसे साधुकर्म्मा॥ उपयामगृहीतोसीन्द्रायत्वाव्विश्श्वकर्म्मणऽएषते योनिरिन्द्रायत्वाव्विश्श्वकर्म्मणे॥ ४५॥ * व्विश्श्वकर्म्मन्न्हविषा॥ विश्श्वकर्म्मन्न्हविषा।

अन्नं हविरन्ननाम। अस्माकमन्नदानाय "साधुकर्मा"। "उपयामगृहीतोसी"ति व्याख्यातम्॥ ४५॥ अपरो मन्त्रविकल्पः। "विश्वकर्मन् हविषा"। त्रिष्टुबैन्द्री वैश्वकर्मणी च। हे विश्वकर्मन् अन्नेन हविषा महाव्रतीयलक्षणेन "वर्द्धनेन" च वर्द्धयिता। "त्रातार"जगतः "इन्द्रम्

अकर्णो:" कृतवानसि। "अवध्य" च। "तस्मै" चैवंप्रभावायेन्द्राय "विशो" मनुष्याः "समनमन्तपूर्वीः" सन्नताः पूर्वे वशिष्ठप्रभृतयः इदानीन्तना अपि सन्नताः। अयमेव हि इन्द्रः "उग्रः" उद्गूर्णवज्रः "विहव्य"श्च। विविधेषु कार्येषु आहूयत इति विहव्यः। "यथा असत्"। पञ्च-

त्वर्द्दे नेनत्व ातारुमिन्द्र मकर्णोरवध्याम् ॥ तस्मै विशः समनमन्तपूर्वी रयमुग्रो विहव्यो यथासत्। उपयामगृहीतोसीन्द्राय त्वा विश्वकर्म्मणऽएष ते योनिरिन्द्राय त्वा विश्वकर्म्मणे ॥ ४६ ॥*

म्यर्थे थाल्प्रत्ययः। यतः कारणादसद् भवेत् हे विश्वकर्मन् त्वद्भविस्सामर्थ्यादिन्द्रस्यायं प्रभाव इत्यभिप्रायः। "उपयाम गृहीतोसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे" इति व्याख्यातम् ॥ ४६ ॥ अदाभ्यं गृह्णाति (१)। "उपयाम गृहीतोसि"। देवाना-

(१) अदाभ्यं ग्रह्णात्यासिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं तस्मिंस्त्रीनंशूनवधाय (यस्मिन्नौदुम्बरे पात्रेऽंशुर्ग्रही तस्तत्र होतृचमसस्था निग्राभ्यासंज्ञा अप आनीय तस्मिं क्षिप्तः सोमलताः प्रक्षिप्य) अन्नयेत्वा गायत्र छन्दसमिति प्रति-

मार्षम्। "अग्नये त्वां गायत्रच्छन्दसं गृह्णामि"। एकं ग्रहणम्, "इन्द्राय त्वा त्रिष्टुपच्छन्दसं गृह्णामि"। द्वितीयं ग्रहणम्। "विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णामि"। तृतीयं ग्रहणम्। एवं सवनदेवताभ्यः स्वच्छंदस्कं सोमं गृहीत्वा। अथेदानीमाह। "अनुष्टुप्ते" तव

उपयामगृहीतोसि। उपयामगृहीतोस्यग्नयेत्वागायत्रच्छन्दसङ्गृह्णामीन्द्रायत्वात्रिष्टुप्छन्दसङ्गृह्णामि विश्वेभ्यस्त्वादेवेभ्योजगच्छन्दसङ्गृह्णाम्यनुष्टुप्तेभिगरः ॥४७॥ ब्रू-

हे सोम "अभिगरः"। गृ स्तुतौ। अभिष्टव इत्यर्थः। "यद्वा ऊर्द्ध्वं सवनेभ्यस्तदानुष्टुभमिति" श्रुतिः ॥४७॥ गृहपालस्यासु निगृभ्यासु अंशूनाधूनोति। "वृशीनां त्वापत्मन्नाधूनोमि"। मन्त्रमुपयामसर्वत्राविशेषात्, (अग्नयेत्वेत्यादित्रिभिर्मन्त्रैः क्रमेणादाभ्यं गृह्णाति, एतैर्मन्त्रैः सोमलताप्रक्षेप इति केचित्, उपयामेति विधव्याद्रो योजनीयम्) अनुष्टुप्प्रदत्युत्ता इति। का० १२।५।१२।१५ ॥ ४७ ॥

मेघस्य वृनत उदरे शेरत इति वृष्य उदरस्था आप उच्यन्ते। हे सोम वृशीनामपां त्वां पत्मन् पतने आधूनोमि कम्पयामि। "कुकूननानां त्वा"। कूङ् शब्दे। अत्यर्थं कुवन्त्यः शब्दं कुर्वाणाः नमन्ते प्रव्हीभवन्तीति कुकूननाः मेघ्या आपः। "भन्दनानाम्"। भदि कल्याणे सुखे

## घ्शीनान्त्वा। वृघ्शीनान्त्वा पत्मन्ना धूनोमि कुकूननानान्त्वा पत्मन्ना धूनोमि भन्दनानान्त्वा पत्मन्ना धूनोमि मदिन्तमाना-न्त्वा पत्मन्ना धूनोमि मधुन्तमानान्त्वा पत्मन्ना धूनोमि शुक्रन्त्वा

च। कल्याणकारिण्यः सुखयित्र्यो वा भन्दनाः। "मदिन्तमानाम्"। अत्यर्थं मदयन्ति तर्पयन्तीति मदिन्तमाः। माद्यते 'नोह्रस्वे' तिनुमागमः। "मधुन्तमानाम्"। अतिशयेन मधुस्वादोपेता मधुन्तमाः। "शुक्रं त्वा" शुक्रमक्लिष्टकर्माणं त्वां शुक्रे अक्लिष्टकर्मणि निग्राभ्यालक्षणे

उदकं "आधूनोमि"। "अन्होरूपे" दिवसस्य रूपे तदपि शुक्रमेव भवति। "सूर्यस्यचरश्मिषु"। रश्मयस्तु प्रकाशरूपत्त्वाद्देवं भवन्ति॥ ४८ ॥ (१) "ककुभर्ठं॰ रूपंहृषभस्य"। ककुभमिति महन्नामसु पठितम्। अस्य सोमलक्षणस्य हृषभस्य ककुभमादित्यलक्षणंरूपं "राचते" देदी-

शुक्रआधूनोम्म्यन्न्होरूपेसूर्य्यस्यरश्मिषु॥ ४८ ॥ ककुभर्ठंरूपं॥

वृषभस्यरोचतेबृहच्छुक्रः शुक्रस्यपुरोगाःसोमः सोमस्यपुरोगाः॥

प्यते। "बृह"न्महत्प्रभावतः "शुक्रः" शुक्रस्य पुरोगाः। शुक्र आदित्यः शुक्रस्य आदित्यस्य पुरोगामी। सोम एव सोमस्य पुरोगामी भवितुमर्हति यस्माद् अतः कारणात् "यत्ते" तव

(१) धुनोत्य,शुभिर्ग्रीनां स्तोति गच्छन्नाहवनीयम् इति। का॰ १२।५।१७॥ ४८॥

हे सोम "अदाभ्य" मनुष्यैर्हिंस्यं नाम "जागृवि" जागरणशीलं तस्मै त्वा गृह्णामि। जुहोति। "तस्मै" ते तत्र हे सोम "सोमायस्वाहा"। "तत्सोममेवैतत्सोमाय जुहोतीति" श्रुतिः॥ ४९॥ अंशून् सोमे निदधाति (१)। "उशिक् त्वम्"। वश कान्तौ। अस्य क्विपि

यत्ते॑ सोमादा॑भ्यन्नाम जागृ॑वि तस्मै॑ त्वा गृह्णामि तस्मै॑ ते सोम सोमा॑य स्वाहा॑॥ ४९॥ उशिक् त्वम्। उशिक् त्वन्दे॑व सोमाग्नेः प्रि॒यम्पाथोपी॑हि व॒शी त्वन्दे॑व सोमेन्द्र॑स्य प्रि॒यम्पाथोपी॑

उशिगिति भवति। यतः उशिक् कान्तः वल्लभः त्वं "हे देव सोम" अस्माकमतः "अग्नेः प्रियं पाथः" अन्नम् "अपिइहि" अपि गच्छ। "वशी" च त्वम्। वश कान्तौ। शेषं

(१) तस्मै त इति जुहोति। का० १२।५।९१॥ ४७॥

व्याख्यातम्। "अस्मत्सखा"। अस्माकं सखा। शेषं प्रगतार्थम् ॥ ५० ॥ सत्रोत्थानं देवानामार्षम्। गार्हपत्ये द्वे आहुती जुहोति (१)। "इह रतिः"। उत्क्रामन्तः पशवो नियम्यन्ते। इह यजमानेषु भवतां रतिः रमणम्। रम्णातिः संयमनकर्मा। यत एवमत "इहै" व"रमध्वम्"। "इह धृति"र्भूयात्। "इहस्वधृतिः"। यत एवमत इहैव साधु धारयां

हृद्य॒स्मत्स॑खा॒ त्वन्दे॑वसोम॒ विश्वे॑षान्दे॒वाना॑म्प्रि॒यम्पाथोपे॑-हि ॥ ५० ॥ * इ॒ह रति॑रि॒ह र॑मध्वमि॒ह धृति॑रि॒ह स्वधृ॑ति॒ः स्वाहा॑ ॥

भूयात्। पशूनां यजमानविषया धृतिः प्रार्थ्यते। द्वितीयां जुहोति। "उपसृजन्"। उष्णिक्। उपसृजन् संसृजन् "धरुण" धारयितारमग्निं "मात्रे" पृथिव्यै। मातात्र पृथिव्युच्यते।

(१) अंमून् निदधात्युग्निक्लमिति प्रतिमन्त्रम्। का० १२।५।१८ ॥५०॥

"वरुणो" धारयिताग्नि"मातरं" पृथिवीं "धयन्" पिबन् "रायस्पोषम्"। "पशवो वै रायस्पोष" इति श्रुतिः। "पशून् अस्मासु दीधरत्"। धारयत ॥ ५१ ॥ सत्रस्य ऋद्धिं गायन्ति (१)। "सत्रस्य ऋद्धिरसि"। बृहती। यजमानानां संस्तवः। सत्रस्य समृद्धिस्त्वमसि। यतो "ऽगन्म"

उपसृजन्धरुणं मात्रे धरुणो मातरं धयन्॥ रायस्पोषमस्मासु दीधरत्स्वाहा॥ ५१॥ सत्रस्य ऽऋद्धिः। सत्रस्य ऽऋद्धिरस्यगन्म ज्योतिरमृताऽअभूम॥ दिवं पृथिव्याऽअध्यारुहामाविदाम

आगताः "ज्योति" रादित्यलक्षणम्। "अमृता" श्च "भूम" भूताः। "दिवं" चाध्यारुहाम अध्या-

१ अथ सत्रोत्थानमन्त्र देवदृष्टाः। शालाद्वार्ये अन्वारब्धेषु इह (सर्वेषु दीक्षितेष्वध्वर्युः सृष्टे ष्विदानीन्तन गार्हपत्ये) रतिरिति जुहोति, अपरामुपसृजन्निति। का० १२।४।१०-११ ॥ ५१ ॥

रूढ़ाः। पृथिव्याः सकाशात् द्युलोकं चारूढ़ाः सन्तः "अविदाम देवान्" जानीमः पश्यामो देवान् "स्वः" स्वर्गं च पश्यामः "ज्योति"रादित्यलक्षणञ्च। अविदामेत्यनु वर्त्तते (१) ॥५२॥

दक्षिणस्य हविर्द्धानस्याधोऽक्षं संसर्पन्ति। "युवन्तमिन्द्रापर्वता"। अतिच्छन्दा अष्टिः अत्यष्टि-र्वा त्र्यवसाना ऐन्द्री। प्रथमोऽर्द्धर्च्च ऐन्द्रापार्वतः। हे "इन्द्रापर्वतौ" युवं तं यत्नमनु तिष्ठ-तम्। येन यत्नेन "पुरोयुधा" पुरोऽग्रे युत् युध्यति पुरोयुत् तेन पुरोयुधा यत्नेन। "यो नः

मद्देवान्त्स्वर्ज्योतिः ॥ ५२ ॥ युवन्तम्। युवन्तमिन्द्रापर्वता

पृतन्यात्" अप तं तमिद्धतमिति तदो वीप्साश्रवणात् यदोपि वीप्सा क्रियते। यो यः शत्रुर्नो "ऽस्मान्" "पृतन्यात्" संग्रामयेत् योधयेत्। "अप तं तम् इद्धतम्"। अपहतं विनाशयतं शत्रुम्। इच्छब्दोऽनर्थकः। "वज्रेण तं तम् इत् हतम्"। वज्रेणेत्यायुधनियमः शत्रूणामु-

(१) सत्यर्चिं गायन्ति सत्यस्यर्क्षिरिति। का० १२।४।१२॥५२॥

न्मूलनाय। व्याख्यातमन्यत् (१)। इत उत्तरमिन्द्रः प्रत्यक्षो वज्रस्तु कर्तृत्वं विवक्षितं परोक्षस्य सतः। "दूरेचत्तायछन्त्सत्"। चततिर्गतिकर्मा। दूरे गताय नष्टाय शत्रवे। छन्त्सत्। छन्दतिः कामनार्थः। कामयताम्, हे इन्द्र त्वदीयो वज्रः शत्रवे विनाशं कामयताम्। कथं परवशो वर्ततामिति चेत्। कथं वज्रस्य शत्रुविनाशकामना इति चेत्, आत्मैवास्य रथो भवत्यात्मास्य

पुरोयुधायोनःपृतन्याद्पतन्तमिद्धंतं व्वज्रेणातन्तमिद्धंतम्॥ दूरे चत्तायंछन्त्सद्गहनंयदिनक्षत्॥ अस्माकंशत्रून्परिशूर

आत्मायुधमित्यदोषः। "गहनं यदिनक्षत्"। गहनं वनमुच्यते उदकं वा इनक्षतिर्व्याप्तिकर्मा। "इनक्षत्"। रूपशाद्भयादुदकं वनं वा यत् व्याप्नोति पलाय्य गच्छति तथापि विनाशयति शत्रुं रूपेण तस्यापि विनाशं कामयतां त्वदीयो वज्रः। "अस्माकंशत्रून्परिशूर विश्वतो दर्मा

(१) युवं तमिति दक्षिणस्याशोच्य प्राञ्चो निष्क्रामन्ति, पृथक्कामेषु भूमुं व इति। का० १२।४।१४-२८॥ इति सत्रोत्थानम्॥ ५३॥

कथं परवशो वर्ततामिति चेदिति (२) पुस्तके पाठो नास्ति।

दर्षीष्ट"। हे शूर त्वदीयो वज्रः अस्माकं ये शत्रवः तान् परिदर्षीष्ट। दृ विदारणे। परिविदारयतु। कथंभूतो वज्रः। दर्म्मा विदारणशीलः। कुतोऽवस्थितान् शत्रून्। विश्वतः" सर्वतः। जयन्ति"भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः"। एकवचनान्तो

व्विश्श्वतोदम्मादर्षीष्टव्विश्श्वतः॥ भूर्भुवःस्वःसुप्प्रजाःप्प्रजाभिःस्यामसुवीराव्वीरैःसुपोषाःपोषैः॥ ५३॥ * परमेष्ठ्यभिधीतः॥ प्प्रजापतिर्व्वाचिव्व्याहृतायामन्धोऽअच्छेतःसवितासन्न्यां व्विश्श्वकर्म्मादीक्षायाम्पूषासोमक्रयण्यामिन्द्रश्च॥ ५४॥ इन्द्र-

व्याख्यातः। अयं तु बड्जङ्ग वनान्तः। सत्रोत्थानं समाप्तम्॥ ५३॥ "परमेष्ठ्यभिधीतः"। (१) आ

(१) परमेष्ठ्यादीश्चतुस्त्रिं शतं जुहोति धर्म्मधुङ्नाम्ने चादौह्ये चोदीच्या दोहस्थानेऽन्यस्याः शालाया वा पुरस्तात्पा-

अध्यायसमाप्तेर्नैमित्तिकानि । वसिष्ठस्यार्षम् । परमेष्ठ्यादिस्तुतिः चतुस्त्रिंशत्सु सोमाव-स्थासु चतुस्त्रिंशद्देवताभिधायिनी ऋज्वर्था । अभिधीतः अभिध्यातः संकल्पितो यजमानेन ।

श्च । मरुतश्च क्रयायोपोत्थितोऽसुरः पण्यमानो मित्रः क्रीतो विष्णुः शिपिविष्ट ऊरावासन्नो विष्णुर्नरन्धिषः प्रोह्यमाणः ॥ ५५ ॥ प्रोह्यमाणः सोम आगतो वरुण आसन्द्यामासन्नो अग्निराग्नीध्र इन्द्रो हविर्धानेऽथर्वोपावह्रियमाणो विश्वे देवाः ॥ ५६ ॥ वि

च्याः पुच्छकाण्डाद्दक्षिणेऽस्थनि हुत्वा दोहयेत् पृषदाज्यस्कन्दने चैके । का० २५।६।१-६ । अस्यार्थः । मृन्मयघर्मपात्रभे-दे भिन्नमभिमृश्य परमेष्ठिने स्वाहेत्यादि सलिलाय स्वाहेत्यन्ताश्चतुस्त्रिंशदाज्याहुतीर्जुहुयात् । घर्मदुहो गोर्मरणे तत्-स्थाने उदङ्मुख्याः स्थितायाः पत्नीशालापूर्वभागे प्राङ्मुख्या वा पुच्छाद्दक्षिणेऽस्थनि परमेष्ठिने स्वाहेत्याद्याश्चतुस्त्रिं

सोमोपनायनमेतत्। "वाचाभिव्याहृतः"। अहं सोमेन यक्ष्ये इत्युक्तं भवति। "अच्छेतः"। अच्छाभेराप्नुमिति शाकपूणिः। सोममभि इतो गतः सोमं व्याप्नुमितो गतः। अन्योन्द्रमुच्यते।

विश्वे देवाः विश्वे देवाऽ अंशुषु न्युप्तो विष्णुराप्रीतपाऽआप्या

य्यमानो यमः सूयमानो विष्णुः सम्भ्रियमाणो वायुः पूयमानः

शुक्रः पूतः शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीर्विश्वे देवाः ॥ ५७ ॥

विश्वे देवाः । विश्वे देवाश्चमसे प्रनीतोऽसुर्होमायोद्यतो

यदाहुतीर्हुत्वा तां दोहयेत्। स्थालीस्थस्य सक्तुस्थस्य वा पृषदाज्यस्य भङ्गे वा जुहुयादित्येके आचार्या इति। अत्र मन्त्रपञ्चके वाचि व्याहृतायां यक्ष्ये इत्युच्चार्यमाणे सोमः प्रजापतिनामको भवति तदा प्रायश्चित्तापत्तौ प्रजापतये स्वाहा एवं यदा क्षीरश्रीः क्षीरमिश्रितः सोमः तदा शुक्र एव सोमो भवति तदा शुक्राय स्वाहा- सक्तुमिश्रितो मन्थी भवति तदा

अनन्याश्रितौ। सहोभिः स्ववीर्यैरेव बलैः तौ विष्णुवरुणौ। तुल्यकार्यत्वाद् उभावपि विष्णू उभावपि वरुणौ। द्वितीयाद्विवचनमेतत्। "अगन्" गतो यज्ञः। यज्ञसाधनभूतं स्वन्नं द्रव्यं यज्ञशब्देनोच्यते। "पूर्वहूतौ"। पूर्वस्मिन्नाह्वाने। यावत्प्रधानं न हूयते तावद्विष्णुवरुणौ प्रति

तो य॒ज्ञो॑ ओज॑सा॒स्कम्भि॑ता॒ रज॑श्सि वी॒र्ये॒भिर्वी॒रत॑मा॒ शवि॑ष्ठा ॥
या॒पत्ये॑ते॒ऽअप्र॑तीता॒ सहो॑भि॒र्विष्णू॑ऽअग॒न्वरु॑णा पू॒र्वहू॑तौ ॥५९॥
दे॒वान्दिव॑म्। दे॒वान्दिव॑मगन्य॒ज्ञस्ततो॑मा॒ द्रवि॑णमष्टु मनु॒ष्या

यज्ञो गत इत्यर्थः। यद्वा पूर्वं हूयेते इति पूर्वहूतौ विष्णुवरुणौ प्रतिगच्छत्। गतो यज्ञ इति संबन्धः॥ ५९॥

द्वितीयो मन्त्रविकल्पः (१)। "देवान्दिवम्"। देवान् प्राप्य दिवं द्युलोकम् अगन् गतो

(१) देवान् दिवमिति सौमे (स्वन्ने सत्यभिर्घनम्) का० ।२५।२।८॥ ६०॥

"सवितासन्याम्"। सनोतिः सम्भजनार्थः। सोम संभक्तौ सत्याम् ॥५४॥५५॥५६॥५७॥५८॥

"सलिलः प्रसृतः"। प्रसुतोऽभिमग्नः। शेषं प्रगुणम्। स्कन्नमभिस्रवति (१)। "ययोरोजसा"।

वैष्णववारुणी त्रिष्टुप्। "ययो"र्विष्णुवरुणयोः "ओजसा" बलेन। "स्कभितारजांऽसि"।

यह्वोऽह्वः यमानोऽवातोऽभ्यात्तचेतानः पचन्तः प्रतिकर्ष्यातोऽभूच्चोभुवत्

मांगः पितरोनारायणं सागरः सन्नः सिन्धुः ॥५८॥ स न्नः सिन्धुः सन्नः

सिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवर्क्षि यमांग सलिलः प्रप्लुतः

स्कभ्नोतिः स्तम्भनार्थः। लोका रजांस्युच्यन्ते। स्तंभिता लोका न चलन्ति। "यौ च वीर्यैः"

स्ववीर्यैः वीरतमौ "शविष्ठौ" बलिष्ठौ च शेरनाविव परबलेषु पततः। "अप्रतीतौ" अप्रतिगतौ

मन्यिने स्वाहेत्यादि योजना सर्वत्र विधेया स्पष्टमन्यदितिदिक् ॥ ५८ ॥

(१) ययोरोजसेति चोदकेनोपस्थिते दिति। का० २५।२।७ ॥ ५९ ॥

यज्ञः। "ततोमाद्रविणमष्टु"। ततो द्युलोकाद् द्रविणं यज्ञफलम् उत्पन्नं माम् अष्टु व्याप्नोतु। मनुष्यान् प्राप्य अन्तरिक्षलोकं गतो यज्ञः ततः उत्पन्नं फलं मां व्याप्नोतु। पितॄन् प्राप्य पृथिवीलोकमगन् यज्ञः तत उत्पन्नं फलं मां व्याप्नोतु। अन्यमपि यं कञ्च लोकं गतो यज्ञः फलविशेषः ततो लोकात् "मे" मम भद्रमभूत्" भवतु ॥ ६० ॥ मनुष्या-

न्तरि॑क्षमगन्वा यज्ञस्ततो॑मा द्रवि॑णमष्टु पितॄन्पृ॑थिवीम॑गन्यज्ञ

स्ततो॑मा द्रवि॑णमष्टु यङ्कञ्च॑ लोकमग॑न्वा यज्ञस्ततो॑मे भद्रम॑भू-

त् ॥ ६० ॥ चतु॑स्त्रिꣳशत्तन्तवं। चतु॑स्त्रिꣳशत्तन्त॑वो ये वि॑त-

वीरक्षे दे होमः (१)। चतुस्त्रिꣳशत्। पङ्क्तिर्वा त्रिष्टुब्वा। चतुस्त्रिंशत्तन्तवो यज्ञस्य परमे-

ष्ठ्यादयो ये यज्ञं वितत्निरे वितन्वन्ति। ये च इमं यज्ञं स्वधया अन्नेन दधन्ते। दद दाने

इत्यस्य तद्रूपम् पुष्पत्यर्थस्य तु पुष्यन्ति । तेषां वितन्वतां यच्छिन्नं तदेतत्त्वं दधामि । उकारोऽन-र्थकः । "स्वाहा" सुहुतमस्तु । "घर्मो" महावीरो देवान् अपि गच्छतु ॥६१॥ यज्ञस्य दोह इति वाचयति (१) । त्रिष्टुप् । प्रथमेऽर्द्धर्चे परोक्षो यज्ञः, द्वितीये प्रत्यक्षो यज्ञः, अतो यत्तच्छब्दाभ्यां वाक्यपरिपूर्तिः क्रियते । यस्य तव यज्ञस्य सतः दोहः आहुतिपरिणामः "विततः" प्रसारितः

त्रिकुरेयऽडूम उयु ञुठुंम्बु धयादद न्ते ॥ तेषांञ्छि न्नंऽसम्भवे तह

धामिस्वाहांघ र्म्मोऽअप्ये तुदे वान् ॥ ६१ ॥ यज्ञस्य दोह॑ः । यज्ञ

स्य दोहोविततः पुरुत्रासोऽअष्टधादिवमन्वाततान ॥ सयज्ञ

"पुरुत्रा" बहुधा । ब्रह्मादिस्तम्बपर्यन्तो भूतग्रामो यज्ञपरिणाम इत्याशयः । य एव दोहो दिग्भेदेनाष्टधा भिद्यमानो द्युलोकमन्वा ततान । भूमिमन्तरिक्षं च व्याप्य द्युलोकमन्वात-तान । स त्वं हे यज्ञ "धुक्ष्व" प्रक्षर दोहं "महि" महान्तम् "मे" मम प्रजायाम् अक्षं

(१) सोमेज्योपपाते (सोमयागे यज्ञाङ्गविनाशे) एकैकां यथाकालं (पवमानादिस्तुत्युक्ते काले परमेष्ठ्यादि चतुस्त्रिंशन्महाहुतीनां मध्ये एकैकां) हुत्वा यज्ञस्य दोह इति वाचयतीति । का॰ २५।६।७ ॥ ६२ ॥

च "रायस्पोष" धनस्य पुष्टिं "विश्व" सर्वं च "आयुः अशीय" व्याप्नुयाम्, त्वत्प्रसादात्॥ ६२ ॥ ध्वाङ्क्षारोहणे यूपस्य होमः (१)। "आपवस्व"। गायत्री सौमी पावमानी। हे सोम "आपवस्व" प्रक्षर। "हिरण्यवत्"। क्रियाविशेषणान्येतानि। हिरण्यसंयुक्तम्।

ध्रुवन्त्वमहिं मे प्रजायाꣳ रायस्पोषं विश्वमायुरशीय स्वाहा ॥६२॥ आपवस्व। आपवस्व हिरण्यवदश्ववत्सोम वीरवत्। वाजं गोमन्तमाभर स्वाहा ॥६३॥ इति संहितायाम् अष्टमोऽध्यायः।८।

"अश्ववद्"श्वसंयुक्तम्। "वीरवत्" वीरैः संयुक्तम्। "वाज"मन्नं च "गोमन्तं" गोभिः संयुक्तम् आभर। 'हृग्रहोर्भश्छन्दसि' हस्य, इति हकारस्य भकारः। अस्मभ्यमाहर ॥ ६३ ॥

इति उवटकृतौ मन्त्रभाष्येऽष्टमोऽध्यायः ॥ ८ ॥

(१) आपवस्व हिरण्यवदित्युग्राद्वहोमो ध्वाङ्क्षारोहणे यूपस्येति (पशौ सोमे च यूपस्य काकारोहणे उद्गाता-होमः कार्यः।) का० २५।६।९॥ ६३॥ इति प्रायश्चित्तानि। अपाणीदष्टमोऽध्यायः।

——○:○:○——

"देवसवितः"। वाजपेयिका मन्त्रा एष ते निर्ऋते भाग इत्येतस्मात्प्राक्। बृहस्पते-राषेम् इन्द्रस्य च। कर्मणः कर्मणः पुरस्तादाहुतिं जुहोति। गायत्र्या त्रिष्टुभा। हे "देव सवितः प्रसुव"। अभ्यनुजानीहि वाजपेयलक्षणं "यज्ञम्"। अभ्यनुजानीहि यजमानं "यज्ञ-पतिम् भगाय" भजनीयाय यज्ञफलाय। एवं पुरुषमुक्त्वा अथेदानीं मण्डलमाह। त्वत्प्रसा-

ॐ। देवंसवितः। देवसवितुःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय॥ दिव्योगन्धुर्वःकेतपूःकेतन्नःपुनातुवाचस्पतिर्वाजन्नः

दाच्च मण्डललक्षणो "दिव्यो" दिवि भवो "गन्धर्वो" गवां वाचां रश्मीनां वा धारयिता "केतपूः"। केतशब्देनान्नमुच्यते। अन्नस्य पविता। "केत" मन्नं "नो"ऽस्माकं "पुनातु"। शोधयतु त्वत्प्रसादाच्च "वाचस्पतिः वाज" मन्नं "नो"ऽस्माकं "स्वदतु"। स्वद आस्वादने। आस्वा-

---

देवसवितस्वतस्र इन्द्रस्य वचः पञ्च देवस्याहं दशापयेतिस्रो वाजस्येमममष्टावग्निरेकाक्षरेणैषतेचतुष्कौसविताहे अष्टौचत्वारिंश॰मत्॥ अनु॰।

दधत्व (१) ॥ १ ॥ पञ्च वाजपेयिका ग्रहा गृह्यन्ते ऐन्द्राः। "ध्रुवसदं त्वा"। सोमाङ्कतिपरि- णामभूतो रस एष लोकेष्वावर्तमान इह गृह्यते सोमाध्यक्षः। ध्रुवे अस्मिन् लोके सीदतीति ध्रुवसत् तं ध्रुवसदं त्वाम्। "नृषदं" मनुष्यसदम्। मनसि सीदतीति "मनः-

स्वदन्तु स्वाहा ॥ १ ॥ ध्रुवसदं त्वा। नृषदं मनःसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्। अप्सुषदं त्वा घृतसदं व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्। पृथिवि

"सदम्"। "इन्द्राय" त्वां "जुष्टं" अभिरुचितं "गृह्णामि"। "उपयामगृहीतोसी"त्यय- मिन्द्रक्रमः। आदौ मन्त्रावयवो द्रष्टव्यः अर्थसंबन्धात्। सादयति। "एषते योनिरि-

(१) अथ नवमेऽध्याये वाजपेयमन्त्रा उच्यन्ते चतुस्त्रिंशत्कण्डिकापर्यन्तम्। देवसवितरिति जुहोति यजेत्या- दिश्रुतिति। का० १४।१।११ ॥ १ ॥

न्द्रायत्वाजुष्टतम्"मभिरुचिततमम्। द्वितीयं गृह्णाति। "अप्सुषद" सुदकसदं त्वां "घृतसदं व्योमसदम्"। व्योमशब्देनान्तरिक्षमभिधीयते। शेषं व्याख्यातम्। तृतीयं गृह्णाति। "पृथिविसदं त्वान्तरिक्षसदं दिविसदं देवसदं नाकसदम्"। कमिति सुखनाम तत्प्रतिषिद्धं दुःखं प्रतिषिध्यते। यत्र गतानामल्पमप्यसुखं न विद्यते स नाको लोकः स्वर्लोकविशेषः। शेषमुक्तम्॥ २॥

सदं न्त्वान्तरिक्ष सदं न्दिवि सदं न्देव सदं न्नाकसदं मुपयामगृहीतो सीन्द्रायत्वा जुष्टं गृह्णाम्म्येषतेयोनि रिन्द्रायत्वा जुष्टं तमम् ॥३॥

अपाꣳरसम् । अपाꣳरस मुद्वयसꣳ सूर्ये सन्तꣳ समाहितम् ॥

चतुर्थं गृह्णाति। "अपाꣳरसम्"। रसदेवत्यानुष्टुप्। रसः सारः सोऽपां वायुः। "एष वा अपां रसो योयं पवन" इति श्रुतिः। "उद्वयसम्"। उद्गतं वयोऽन्नं यस्माद्वायोस्त "मुद्वयस" वायुम् "सूर्येसन्तं समाहित"मित्यनयोः पदयोर्व्यत्ययो ऽर्थसंबन्धात्। सूर्ये समाहितं सन्तं

(१) प्रातः सवने ऽतिग्राह्यान् गृहीत्वा षोडशिनं पञ्च चैन्द्रानध्रुवसदमिति प्रतिमन्त्रम्। का० १४।२६।२॥२॥

समारोपितं स्थापितं सन्तं गृह्णामीति वचनमात्रेण संबन्धः। "अपां रसस्य यो रसस्तं वो गृह्णाम्युत्तमम्"। अपां रसो वायुस्तस्यापि रसः प्रजापतिः, स हि यज्ञलोककालाग्निवायुसूर्य-ऋग्यजुःसामादिवपुः, तं वःशब्देनाह। हे आपः "गृह्णामि उत्तमम्"। उत्कृष्टतमम्। यद्वा वःशब्दोनर्थकः। अपां रसस्य वायोर्यो रसः प्रजापतिस्तं गृह्णामीति तस्मिन्पक्षे योजना।

अपाᳬं रसᳬंस्युद्वयसᳬं सूर्ये सन्तᳬं समाहितम्। अपाᳬं रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्। ३॥ ग्रहाऽऊर्जाहुतयः। ग्रहाऽऊर्जाहुतयो व्यन्तो विप्राय मतिम्। तेषां

"उप याम" इत्यादि समानम्॥ ३॥ पञ्चमं गृह्णाति (१)। "ग्रहा ऊर्जाहुतयः"। अनुष्टुप्। हे ग्रहा ऊर्जमन्नं रसं ये आह्वयन्ति ते ऊर्जाहुतयः। "व्यन्तः" पश्यन्तो जानन्तः "विप्राय" मेधाविने इन्द्राय "मति" विशिप्रिया" अवतेति शेषः। शिप्रे हनूनासिके वेत्युक्तम्। इह तु हनू एव गृह्येते, विगतं हन्वोः कर्म येषु ग्रहेषु ते विशिप्रियाः शोभनाभिषवसंस्कृताः

सुपूतास्च विशिप्रिया उच्यन्ते। तत्र हि हन्वोर्व्यापारो न भवति। "तेषां" च विशिप्रियाणां सतां" वः सम्बन्धिनम् "अहम् "इष"मन्नम् "ऊर्जं" च रसम् "समग्रभम्" संगृह्णामि। शेषं व्याख्यातम्। "उपयाम" इत्यादि व्याख्यातम्। उपर्युपर्यन्तं सोमग्रहं करोत्यध्वर्युः।

विशिप्रियाणाँ अहमिषु मूर्जं समग्रभमुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्॥ सम्पृचौ स्थः सं मा भद्रेण पृङ्क्तं विपृचौ स्थो वि मा पाप्मना पृङ्क्तम्॥४॥*॥ इन्द्र

अधोऽधोऽन्तं नेष्टा सुराग्रहं करोति। "संपृचौ स्थः"। पृची संपर्के। यौ युवां ग्रहौ संपृक्तौ स्थः तौ संपृक्तं संसृजतं मां भद्रेण भन्दनीयेन कल्याणेन। तौ पुनर्विहरतः। "विपृचौ स्थः" यतो युवां विगतसंसर्गौ स्थः ततो "विमापाप्मनापृङ्क्तम्"। विगतसंसर्गं पाप्मना मां कुरुतम्॥ ४॥

(१) उपर्युपरि अन्तमध्वर्युः (सोमग्रहं धारयति) अधोऽधो नेष्टा सुराग्रहम् सम्पृचौ। (सहैव धारणं मन्त्रपाठश्च) का० १४।२।७॥ ४॥

रथमुपावहरति(१)। "इन्द्रस्य वज्रोसि"। "इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार" इत्युपक्रम्य "स एष तृतीयं वा यावद्वेति" यदुक्तं तदिदमभिधीयते। यस्त्वमिन्द्रस्य वज्रोसि "वाजसास्त्व" वाजमन्नं सनोतीति वाजसाः तं त्वां ब्रवीमि। त्वया वज्रीभूतेनायं यजमानो वाजमन्नं सेत्"। सनोतेर्वा एतद्रूपम्। सनुयात् संभजेदित्यर्थः। सिनुयाद्बध्नीयादित्यर्थः। धूर्गृहीतमश्वावर्त्तयति। "वाज-

स्य॒ नु प्र॑स॒वे मा॒तरं॑ म॒हीमदि॑तिं॒ नाम॒ वच॑सा करामहे। यस्या॑मि॒दं विश्वं॒ भुव॑नमावि॒वेश॒ तस्यां॑ नो दे॒वः स॑वि॒ता धर्म॑ साविषत्॥५॥

वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे। यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत्॥५॥

स्य नु"। जगत्यतिजगती वा पार्थिवी। चतुर्थः पादः सावित्रः। वाजस्य अन्नस्य। नु अनर्थकः। "प्रसवे" अभ्यनुज्ञायां वर्त्तमाना इतिशेषः। या मातरं जगन्निर्मात्रीं महीं महतीम् अदितिम् अदीनां नाम। ताम् अनुकूलां "वचसा" वेदवाक्येनानेन "करामहे" इत्यध्वर्युः सार्हसकाः।

(१) सरस्वतीयान्ते इन्द्रस्य वज्र इति रथावहरणम्, (अवतरणम्) चात्वालमावर्तयति वाजस्येति धूर्गृहीतम्। का० १४।३।१-२॥५॥

आत्मनेपदं करोतेः । यस्यां चेदं "विश्वभुवन" भूतजातम् "आविवेश" आविष्टम् । "तस्यां" पृथिव्यां "नो"ऽस्माकं "देवः" दानादिगुणयुक्तः "सविता" सर्वस्य प्रसविता । धर्मधारणमवस्थानं "साविषत्" प्रसुवताम् ॥५॥ अश्वानद्भिरभ्युक्षति (१) । "अप्स्वन्तः" । अनवसाना पुर उष्णिक् । अश्वदेवत्या । अप्सु अन्तरवस्थित"ममृतम्" "अप्सु" च "भेषजम्" । तत्र हे "अश्वाः" यूयं

अ॒प्स्व॒न्तः । अ॒प्स्व॑१॒न्तर॒मृत॑म॒प्सु भे॑ष॒जम॒पामु॒त प्रश॑स्ति॒ष्वश्वा॒ भव॑त वा॒जिनः॑ ॥ देवी॑रापो॒ यो वं॑ऽऊ॒र्मिः प्र॒तूर्ति॑ः क॒कुन्मा॑ं

भवत "वाजिनः" वाज इत्यन्ननाम तद् येषु विद्यते ते वाजिनः । अन्नवन्तो यूयं तत्र भवतेत्यर्थः । "अपामुतप्रशस्तिषु" । उत अपिच अपां प्रशस्तिषु । प्रशस्तेषु पवित्रेषु भागेषु भवतेत्यनुषज्यते । द्वितीयः प्रोक्षणमन्त्रः । "देवीरापः" । हे देव्यः आपः "योव ऊर्मिः प्रतूर्तिः" । वो युष्माकम् ऊर्मिः कल्लोलो महानुदकसन्नाहः । प्रतूर्तिः प्रत्वरणः । "ककुन्मान्" । ककुदि-

(१) अश्वान् प्रोक्षत्यपोवनीयमावान् स्नानान्वागतानप्सु अन्तरिति देवीराप इति वा समुच्चयोवेति ।

का० १४।३।३-५ ॥ ६ ॥

तिशब्देन ऋषभस्य स्कन्धदेश उन्नत उच्यते। तत्सामान्यादुदकसंघातोऽप्युन्नततमः ककुच्छब्दे-
नोच्यते। बह्वभिरुदकनिचयैः संयुक्तो महाप्राग्भार इत्यर्थः। "वाजसाः" अन्नस्य संभक्ता।
तेनायमश्वः मोचितो वाजमन्नं "सेत्"। सनोतेः सिनोतेर्वा लिटि एतद्रूपम्। सनुयात् संभ-

न्न्वाज॒सास्तेना॒यंव्वाज॑ꣳसेत् ॥ ६ ॥ व्वातो॑वा। व्वातो॑वा॒मनो॑
वागन्धु॒र्व्वाः स॒प्तवि॑ꣳशतिः। तेऽअग्ग्रे॒ऽश्वंमयुञ्ज॒ꣴस्तेऽअस्मि॒
ञ्ज॒वमाद॑धुः ॥ ७ ॥ व्वात॑रꣳहा॒भवं॑व्वाजि॒न्न्यु॒ज्ज्यमा॑न॒ऽइन्द्र॑

जेत्। सिनुयात् बध्नीयात् ॥ ६ ॥ अश्वं युनक्ति (१)। "वातोवा"। उष्णिक्। अश्वस्तुतिः
वाशब्दः समुच्चयार्थीयः। वनश्च मनश्च गन्धर्वाश्च सप्तविंशतिर्नक्षत्राणि। एते त्वां युजन्तु। त्वयि
च जवमादधातु। यत "तेऽअग्ने" प्रथम "अश्वमयुजन्। ते अस्मिन् जवमादधुः" ते च
अस्मिन् जवं वेगमाहितवन्तः ॥ ७ ॥ द्वितीयं युनक्ति (१)। "वातरंहा"। त्रिष्टुप् अश्वस्तुतिः।

(१) दक्षिणं युनक्ति (अश्वं) का० १४।३।६ ॥ ७ ॥

(१) उत्तरं (अश्वं) वातरंहा इति। का० १४।३-७ ॥ ८ ॥

रिहतिर्गत्यर्थः। वातजवो भव। हे वाजिन् युज्यमानः सन्। "इन्द्रस्येव दक्षिणो" ऽश्वः श्रिया एधि भव अस्य यजमानस्य। "युञ्जन्तु त्वां मरुतो विश्ववेदसः" सर्वधना वा सर्वज्ञाना वा। "आदधातु" च ते तव "त्वष्टा पत्सु" पादेषु "जवं" वेगं युज्यमानस्य सतः॥ ८॥ तृतीयं युनक्ति (१)

स्येवुदक्षिणंऽश्रियैधि। युञ्जन्तु त्वाम् रुतौविश्ववेदसुआतेत्व
ष्टापुत्सुजुवन्दधातु॥ ८॥ जवोयस्ते। जुवोयस्तेवाजिन्निहि
तोगुहायःश्येनेपरीत्तोऽअचरच्चवाते॥ तेनंनोवाजिन्बलवान्व

"जवोयस्ते"। जगती अश्वस्तुतिः। जवो वेगो यस्ते तव हे" वाजिन्निहितः" स्थापितः "गुहा"। गुहायामितिविभक्तिव्यत्ययः। गुहाशब्दो रहस्यवचनः। यश्च "श्येने" पक्षिणि "परीतः"। परिपूर्वस्य तनोतेरेतद्रूपम्। परिततो व्यवस्थितः "अचरच्चवाते"। यश्च वाते

(१) दक्षिणाप्रष्टिं जवो यस्त इति बार्हस्पत्यमेनानाघ्रापयन्ति वाजिनः। का० १४।३।६-८। दक्षिणायां धुरि प्रष्टिं दैवमश्वं तेनाद‍ृशं तृतीयमश्वं युनक्ति इति सूत्रार्थः॥ ९॥

त्वदीयो जवः अवत। "तेन नो वाजिन्बलवान्बलेन"। वेगलक्षणेन बलेन बलवान् भूत्वा हे वाजिन् नोऽस्माकं 'वाजजिच्च भव' अन्नस्य च जेता भव। "समनेचपारयिष्णुः"। समने च संग्रामे च पारयिता भव। बार्हस्पत्यमश्वानवघ्रापयति। "वाजिनोवाजजितः"। हे वाजिनोऽश्वाः वाजजितः अन्नस्य जेतारः "वाज" मन्नं जेतुं "सरिष्यन्तो बृहस्पतेर्भाग" चरुम् "अव-

लेनवाजजिच्चभवसमनेचपारयिष्णुः॥ वाजिनोवाजजितोवाजंᳫसरिष्यन्तोबृहस्पतेर्भागमवजिघ्रत॥ ९॥ ५ देवस्याहम्। देवस्याहᳫंसवितुःसवेसत्यसवसोबृहस्पतेरुत्तमन्नाकᳫंरुहेयम्॥ देव

जिघ्रत"॥ ९॥ ब्रह्मा रथचक्रमारोहति (१)। "देवस्याहं सवितुः सवे" अभ्यनुज्ञायां "सत्यसवसः" सत्याभ्यनुज्ञायां वर्त्तमानस्य बृहस्पतेः" संबन्धि "उत्तम"मुत्कृष्ट" नाकं "स्वर्गलोकं





(१) देवस्याहमिति ब्रह्मा रथचक्रमारोहतुरत्नरे नाभिमात्रे स्थाणौ स्थितमिति आगतेषु ब्रह्मावरो ह इति देवस्याहमिति। का० १४।३।१२।४।८ ॥ १०॥

"रुहेयम्" आरोहामि। "देवस्याहं सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकं रुहेयमि"तिदेवतामात्रं विशेषः। रथचक्रादवतरति। "देवस्याहं सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकम् "अरुहम्"। प्रशब्दः प्रकर्षद्योतनार्थः। अरुहमिति च भूतकालाभिधायी। भूतो हि कालः। आरूढवानस्मीत्यर्थः। शेषमारोहणमन्त्रेण समानम्। इन्द्रस्य इति

स्याहꣳ सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकꣳ रुहेयम् ॥ देव

स्याहꣳ सवितुः सत्यप्रसवसो बृहस्पतेरुत्तमं नाकमरुहम् ॥ देव

स्याहꣳ सवितुः सत्यप्रसवस इन्द्रस्योत्तमं नाकमरुहम् ॥ १० ॥ बृह

उत्तरे मन्त्रे विशेषः ॥ १० ॥ दुन्दुभिमाहन्त्येकं सर्वेषां तु संस्कारो बहुवचनान्तत्वान्मन्त्रस्य (१)। "बृहस्पते वाजं जय"। हे दुन्दुभयः यूयमुच्यध्वम् बृहस्पते वाजमन्नं जय।

(१) बृहस्पते वाजमित्येकं दुन्दुभिम् (अनुवेद्युच्छ्रितस्थाणुस्थारोपितसप्तदशदुन्दुभीनां मध्ये एकमन्त्रेण) आहन्ति तूष्णीमितरान् (षोडश)। का० १४।३।१५ ॥ ११ ॥

शु० य० सं० १९५ उ० आ०

इत्थंभूतां वाचं बृहस्पतयेऽर्थाय वदत बृहस्पतिं च वाजमन्नं जेष्यामीति जापयत। जप-
जल्प व्यक्तायां वाचि जपते "र्हेतुमति चे" ति णिच् लोट् मध्यमपुरुषस्य बहुवचनम्। "जापयत"
उद्वादयत। बृहस्पतिना वाजं जितमित्यर्थः। जि जये इत्यस्य वा। जयं कारयतेति वा।
"इन्द्रं वाजं जये" तिदेवतामात्रविशेषः ॥११॥ दुन्दुभिसवत्हरति(१)। "एषावः"। एषा वः युष्मा-

स्पतेर्व्वाजंम्। बृहस्पतेर्व्वाजंञ्जयबृहस्पतयेव्वाचंव्वदतबृह
स्पतिंव्वाजंञ्जापयत। इन्द्रव्वाजंञ्जयेन्द्रायव्वाचंव्वदतेन्द्रंव्वाजं
ञ्जापयत ॥ ११ ॥ एषावः। एषावःसासत्यासंव्वागभूद्ययाबृहस्पतिं

कं "सासत्या" अवितथा संगतवादिनी "वाक् अभूत"। यया वाचा "बृहस्पतिं वाजं"
मन्नं जेष्यामीति इत्थमीदृशम् "अजीजपत"। जपतेर्णिचि लुङि चङि एतद्रूपं भवति।
जापितवन्तः उद्वादितवन्त इत्यर्थः। यद्वा यूयं "मजीजपद्बृहस्पतिं वाजं" मन्नं जेष्यामीति।

(१) एषा व इति मन्त्रावृत्तमवहरते तूष्णीमितरानिति। का० १४।३।१० ॥ १२ ॥

९ अ० मिथम १९५

तच्च बृहस्पतिना जितम् अतो यूयं कृतकृत्याः सन्तः हे "वनस्पतयो" वा वानस्पत्या दुन्दुभयो विसुच्यध्वम्" उत्तरोपिमन्त्रोऽनेनैव व्याख्यातो देवतामात्रं तु विशेषः ॥ १२ ॥ रथमारोहति यजमानः (१) । "देवस्याहम्" । देवस्य सवितुः सत्यप्रसवस्य प्रसवे अहं वर्त्तमानः बृहस्पतेर्वा-

वाज॑मजी॒जपत॒ वाजी॑ज॒पत॒ बृह॒स्पति॒ङ्वाज॑व्वन॒स्पत॑यो॒ व्विमु॑च्यध्वम् । ए॒षा वः॒ सा स॒त्या स॒ंवाग॑भू॒द्ययेन्द्र॒ व्वाज॑मजी॒जपत॒ वाजी॑ज॒पतेन्द्र॒ व्वाज॑व्वन॒स्पत॑यो॒ व्विमु॑च्यध्वम् ॥ १२ ॥ दे॒वस्या॒हम् । दे॒वस्या॒हꣳस॑वि॒तुः स॒त्यप्र॑सवसो॒ बृह॒स्पते॑र्व्वाज॒जितो॒ व्वाज॑ञ्जेषम् । व्वाजि॑नो

जस्य जेतुः सम्बन्धि वाजमन्नं जेषम् । वाचयति "वाजिनोवाजजितः" । अश्वा उच्यन्ते । हे वाजिनः वाजजितः अन्नस्य जेतारः अध्वनः मार्गान् स्कभ्नुवन्तः क्षोभयन्तः । स ह्यश्वानां स्वभावः । "योजनानि । अतिशीघ्रतयामिमानाः" परिच्छिन्दन्तः शीघ्रं "काष्टाम्" आजयन्तं

(१) देवस्याहमिति यजुर्युक्तमारोहति यजमानः वाजिन इति वाचयतीति। १४।२।१८-२२ ॥ १२ ॥

गच्छत । आज्यन्तोपि काष्ठोच्यते । क्रान्त्वा स्थितो भवति ॥ १३ ॥ द्वाभ्यां जगतीभ्यामश्वदेव-
त्याभ्यां जुहोति (१) । "एषस्यवाजी" अयं स वाजी वेजनवान् "क्षिपणिं तुरण्यति" ।
क्षपणमनु कशाघातमनु तुरण्यति । तूर्णमश्नुते ध्वानम् । कथं भूतः सन् इत्यत आह । "ग्रीवा-
यांबद्धोपिकक्ष आसनि" । ग्रीवायामुरो वध्रेण बद्धः । कक्षे पर्याणप्रदेशे सन्नाहरज्वा बद्धः ।

वाजजितोऽध्वनस्कभ्नुवन्तोयोजनामिमानाꣳ काष्ठांगच्छत ॥ १३ ॥

एषस्यꣳ । एषस्यवाजीक्षिपणिन्तुरण्यतिग्ग्रीवायाम्बद्धोऽअपि

कक्षऽआसनि ॥ क्रतुन्दधिक्राऽअनुसꣳसनिष्यदत्पथामङ्काꣳस्य

"आसनि" । आस्ये च मुखे कविकया बद्धः । किञ्च "क्रतुं दधिक्रा अनुसंसनिष्यदत्" ।
क्रतुं कर्म प्रज्ञां वा । दधिक्रा अश्वः । स हि अश्ववारं दधत् क्रामति । सनिष्यदत् ।
स्यन्दतेस्तनोत्यर्थे वर्त्तमानाद्यङ्लुकि निपात्यते । अथ कोर्थः । स्वकीयं कर्म प्रज्ञां वा दधि

(१) एषस्य इति प्रत्यृचं जुहोत्यनुमन्त्रयते वा । का० १४।४।३।४ ॥ १४ ॥

क्रा अत्यर्थमनु संतनोति। किञ्च "पथामङ्गाठ०ऋग्न्वापनीफणात्"। पथां कुटिलानि चक्राणि अतिशीघ्रतया क्षिप्रं प्राप्नोति। अनुपूर्व्वाङ्पूर्वस्य फणातेर्गत्यर्थे वर्त्तमानस्य चर्करीतमेतत् *॥१४॥

"उतस्मास्य"। यजमानरथस्यायुक्तश्चतुर्थोऽश्वो ऽनुगच्छति कविकापर्य्यायुक्तः। तदभिप्रायेणा-यस्तनो मन्त्रो व्याख्यातः। अथेदानीं रथयुक्ताश्वानेकशःस्तौति। अपिच अस्य रथयुक्तस्याश्वस्य "द्रवतो" गच्छतः आज्यन्तं, "तुरण्यतः" तूर्णमश्नुवानस्याध्वानम्। "पर्णं न वेरनुवाति

न्न्वापनीं फणात्स्वाहा ॥ १४ ॥ उत स्म । उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः ॥ श्येनस्येव ध्रजतोऽअङ्कसं परिं द

प्रगर्द्धिनः"। विरिति शकुनिनाम। "पर्णं" पत्रम्। "न" उपमार्थीयः। पत्त्रमिव शकुनेः रथो "ऽनुवाति" वातोद्धतः। "प्रगर्द्धिनः"। आजिं जेतुं प्रगर्द्धोऽस्यास्तीति प्रगर्द्धी अश्वः तस्य प्रगर्द्धिमः। यद्वा शकुनिविशेषणम्। आमिषं प्रगर्द्धिनः शकुनेः। स ह्यामिषग्रहणार्थमति-शयेन धावति अतस्तेनोपमीयते। दक्षिणाप्रष्टिं स्तौति उत्तरेणार्द्धर्चेन। "श्येनस्येवध्रजतः"।

---

* चर्करीतमिति यङ्लुगन्तस्य संज्ञा।

ऋ० य० सं० १९७ उ० भा०

यथा श्येनस्य भजतोऽतिशयेन गच्छतः। "अङ्गम्"। अङ्गशब्दः शरीरवचनः। शरीरासक्तं परिपश्यन्ति पक्षिणं भक्षणाय गृहीतम्। तथा तस्य "दधिक्राव्णः" अश्वस्य रथं सक्तं परिपश्यन्ति। "सहोर्जातरित्रतः"। सहाञ्जेन तरतोतिशयेनाध्वानम्। नैवारं चरुमवजिघ्रति तदभिप्रायेण सहोर्जतुरत्नाम्॥ १५॥ उत्तरेण तृचेनैतानेवाश्वान् स्तौति (१)।

धिक्राव्णः सहोर्जातरित्रतस्वाहा ॥ १५ ॥ शन्नः। शन्नोभवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः॥ जम्भयन्तोहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः॥ १६॥ तेनः। तेनोऽअर्व

"शन्नोभवन्तु"। त्रिष्टुप् विराड् वा। शमिति सुखनाम। सुखरूपा भवन्तु "नः" अस्माकं "वाजिनो" ऽश्वाः "हवेषु" आह्वानेषु। "देवताता" देवतातौ यज्ञे "मितद्रवः"। ते हि मितं द्रवं गच्छन्ति सुखकरम्। "स्वर्काः"। सुरोचनाः स्वञ्चना वा। किञ्च "जम्भयन्तः" चोभ-

(१) उत्तरेण तृचेनेति, (आज्यहोमोऽश्वाभिमन्त्रणं वा)। का० १४।४।५॥ १६॥

६ अ० अध्याय १९७

यन्तः "अहिं"सर्पं च"वृकं"च"रक्षांसि"च । सनेमीतिपुराणनाम । इहतुक्षिप्रवचनोवाक्यवशात् । "सनेमि"क्षिप्रम् "अस्मत्"अस्मत्तः । "युवत्"। यु पृथग्भावे । पृथक् कुर्वन्तु "अमीवाः" व्याधीन् ॥१६॥ "तेनो अर्वन्तः" । जगती । ते अर्वन्तः अश्वाः नोऽस्माकं "हवनश्रुतः"। हवनमाह्वानं ये स्वभावत एव शृण्वन्ति त एवमुच्यन्ते ।"हव"माह्वानं"विश्वे" सर्वे"शृण्वन्तु"वाजिनोऽश्वाः "मितद्रवः"।

त्तोहवनश्रुतोहवंविश्वेशृणवन्तुवाजिनोमितद्रवः ॥ सहस्रसामेधसातासनिष्यवोमहोयेधनंसमिथेषुजभ्रिरे ॥ १७ ॥ वाजेवाजेवत । वाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्यम

यजमानम परिच्छिन्नं ये गच्छन्ति त एवमुच्यन्ते । मितद्रवः शोभनगमना वा । "सहस्रसाः" सहस्रस्य सनितारः संभक्तारः । "मेधसाता" । मेधो यज्ञः स यत्र सन्यते संभज्यतेस मेधसातिः तत्रमेधसातौ । सप्तम्यर्थे आकारः । "सनिष्यवः" संभक्तारः । "महो"महान्तः "ये धनं समिथेषु" संग्रामेषु "जभ्रिरे" आहृतवन्तः । तेनोर्वन्तइत्यतिक्रान्तं प्रतिवचनम् ॥ १७ ॥ "वाजेवाजे" ।

त्रिष्टुप्। अन्ने अन्ने उपस्थिते सति "अवत" पालयत हे "वाजिनो"ऽश्वाः 'नो'ऽस्मान् "धनेषु" च उपस्थितेषु पालयत। हे "विप्राः" मेधाविनः परिदृष्टकारिणः "अमृताः" अमरणधर्माणः "ऋतज्ञाः" सत्यज्ञा वा यज्ञज्ञा वा। किञ्च "अस्य" नैवारचरुलक्षणस्य "मध्वः" मधुनः "पिबत"। "मादयध्वम्" तृप्यध्वम्। नैवारं चरुमवजिघ्रन्त्वश्वा इत्यभिप्रायस्त्वेतत्। "तृप्ताश्च" सन्तः "यात

ष्ठ्ठं÷पिबतमादयध्वन्तृप्तायातपथिभिर्देवयानैः॥ १८ ॥ आमावाजंस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागन्ता

पथिभिर्देवयानैः" देवाध्यासितैः॥ १८॥ यजमानो नैवारं चरुमालभते। "आमावाजस्य"। त्रिष्टुप्। "आजगम्यात्" आगच्छेत् "मा" मां प्रति "वाजस्य" अन्नस्य "प्रसवो"ऽभ्यनुज्ञा। "आ इमे द्यावापृथिवी विश्वरूपे"। आगच्छेतां च इमौ द्यावापृथिव्यौ विश्वरूपे सर्वरूपे। "आमागन्तां पितरामातरा च"। आगतामागच्छेतां च मां प्रति मातापितरौ। 'पितरा-

(१) अवरुह्य नैवारमालभते तीर्थेस्थितमामावाजस्येति यजुषुं त्वानाघ्रापयति वाजिनः। (यजमानो रथादव-तीर्य चात्वालोत्करान्ते स्थितं नैवारं चरुं स्पृशति)। का० १४।४।११ ॥ १९ ॥

मातरा च छन्दसी'ति द्विरूपैकशेषो निपात्यते। "आमासोमो अमृतत्वेन" गम्यात्। आग-च्छेत्तमां प्रति सोमो अमृतत्वेन सहितः। अश्वानवघ्रापयति नैवारं चरुम्। "वाजिनो वाजजितः"। हे वाजिनो ऽश्वाः वाजस्यान्नस्य जेतारः। "वाजं"मन्नं जेतुं "सस्रिवाꣳसः"। सृतवन्तः सन्तो "बृहस्पतेः" संबन्धिनं "भागमवजिघ्रत"। "निमृजानाः"। मृजूष् शुद्धौ। शोध-

भिपितरांमातराचामासोमोऽअमृतत्वेनंगम्यात् ॥ वाजिनोवाज जितोवाजꣳसस्रिवाꣳसोबृहस्पतेर्भागमवजिघ्रतनिमृजानाः॥१९॥

आपयेस्वाहा। स्वापयेस्वाहापिजायस्वाहाक्रतवेस्वाहावसवेस्वा हाहर्पतयेस्वाहाह्नेमुग्धायस्वाहामुग्धायवैनꣳशिनायस्वाहा

यन्त एनं चरुं यजमानं च ॥ १९ ॥ द्वादशाहुतीर्जुहोति (१)। "आपयेस्वाहा"। प्रजापतेः संवत्सरस्य यज्ञस्य चैतानि नामानि। आप्नोतीत्यापिः। शोभनमाप्नोतीति स्वापिः। अपि

(१) द्वादश स्रुवाहुतीर्जुहोति आपयेस्वाहेति प्रतिमन्त्रं वाचयति वेति। का० १४।५।१ ॥ २० ॥

जायत इति "अपिजः"। "क्रतुः" संकल्पो यज्ञो वा। "वसुः" वासयिता। अन्हां पतिः "अह्-र्पतिः"। "अन्ह्नेमुग्धाय"। मुह वैचित्त्ये। दिनाय मुग्धाय। "वैनंशिनाय"। विनाशसंयुक्तेषु वसतीति वैनंशिनः। "विनंशिने आन्त्यायनाय"। अन्ते ऽयने भव आन्त्यायनः। "अन्त्याय भौवनाय," अन्ते भवोन्त्यः भुवने भवो भौवनः। उभयविशेषणविशिष्टमप्येकं नाम।

विनꣳशिनऽआन्त्यायनायस्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतये स्वाहाधिपतयेस्वाहा ॥ २० ॥ आयुर्यज्ञेन। कल्पताम्प्राणोयज्ञेनकल्पताञ्चक्षुर्यज्ञेनकल्पताꣳश्रोत्रंयज्ञेनकल्पताम्पृष्ठं

भुवनस्य पतये "अधिपतये"। प्रकटार्थे नामनी ॥२०॥ षट् कर्म्माः (१)। "आयुर्यज्ञेन कल्पताम्"। मदीयमायुरनेन यज्ञेन क्लृप्तं भवतु। एवमुपरितनानि व्याख्येयानि। मुखनासिकाप्रभवो वायुः

(१) षट् चोत्तराः (वाचयति जुहोति वा) प्रजापतेरित्यारोहत इति (पत्नीयजमानौ निश्रेण्यायूपमारोहतः स्वरितिगोधूमममालभते (गोधूमपिष्टनिर्मितं चषालं स्पृशेद्यजमानः) शिरसा यूपमुज्जिहीते (यूपादूर्ध्वं शिरः करोति) अमृता इति। का० १४।५।६-८ ॥ २१ ॥

"प्राणः"। "चक्षुः श्रोत्रं"च प्रकटार्थम्। 'पृष्ठ" रथन्तरादि। शरीरस्य वा पृष्ठम्। अयं चास्मदी-
यो "यज्ञो" वाजपेयाख्येन "यज्ञेन" क्लृप्तो भवतु। एवं यजमान आरोहति। "प्रजापतेः प्रजा
अभूम"। कृतमिदमस्माभिः कर्म अतो वयं प्रजापतेः अपत्यभूताः संजाताः। गोधूमानुपस्पृ-
शति। "स्वर्देवाः"। हे देवाः स्वः स्वर्लोकमगन्म गताः। शिरसा यूपमतुग्राणिजहीते। "अमृता

ऽयुज्ञो नं कल्पतांऽयज्ञोयज्ञेन कल्पताम् ॥ प्रजापतेंऽप्रजाऽअभूम
स्वर्देवाऽअगन्मामृताऽअभूम ॥ २१ ॥ अस्मेवो॑ । अस्मेवोऽअस्त्वि
न्द्रियमस्मेनृम्णमुत क्रतुरस्मे वर्चांऽसिसन्तुवः । नमोमात्रे

अभूम"। अमृताश्च संजाताः ॥ २१ ॥ दिशोनुवीक्षते (१)। "अस्मे वो अस्त्विन्द्रियम्"। अस्मे
अस्मासु वः युष्मत्सम्बन्धि अस्तु भवतु इन्द्रियं वीर्यम्। "अस्मेनृम्णम्" अस्मासु च धनं युष्मत्स-
म्बन्धि भवत्वित्यनुषङ्गः। "उतक्रतुः"। अपिच क्रतुः कर्म युष्मत्सम्बन्धि भवत्वित्यनुषङ्गः। "अस्मे

(१) अस्मे च इति दिशोवीक्षते (यूपारूढ एव यजमानः) नमोमात्र इति भूमिमवेक्षते, उत्तरवेदिमपरेणो-
दुम्बरीमासन्दीं वस्तचर्मणास्तृणातीयन्तदृसि, सन्वन्तमस्यामुपवेशयन्ति यन्तासीति। का० १४।५।८-१४ ॥ २२ ॥

वर्चांᳩंसि सन्तु वः"। अस्मासु च तेजांसि भवन्तु युष्मत्सम्बन्धीनि। पृथिवीमवेक्षते यजमानः। "नमो मात्रे पृथिव्यै"। पृथिवीं मातरं ब्रवीति नमस्करोति च। अभ्यासे भूयांसमर्थं मन्यन्त इति द्विर्वचनम्। औदुम्बरीमासन्दीं वस्तचर्मणास्तृणाति। "इयं ते राट्" इयमिति लिङ्गव्यत्ययः। इदं ते तव राट् राज्यम्। अभिषिक्तोसि त्वमित्येतत्कथयति। सुन्वतमस्या-

पृ॒थि॒व्यै न॒मो॑ मा॒त्रे पृ॑थि॒व्या॒ऽइ॒यन्ते॒ राड्यन्ता॑सि॒ यम॑नो ध्रु॒वो॑सि ध॒रु॑णः॥ कृ॒ष्यै त्वा॒ क्षेमा॑य त्वा र॒य्यै त्वा॒ पोषा॑य त्वा ॥ २२ ॥ वाज॑स्ये॒मं प्र॑स॒वः सु॑षुवे॒ऽग्रे॒ सोम॒ᳬं राजा॑न॒मोष॑धीष्व॒प्सु ॥

सुपवेशयति। "यन्तासि यमनः"। तवानवच्छिन्नं यमनं कालान्तरेपि। "ध्रुवोसि" स्थिरोसि। "धरुणः" धारकोऽसि। "कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा"। कर्षणाय त्वाम् क्षेमाय च धनाय च पुष्ट्यर्थं चोपवेशयामीतिशेषः॥२२॥ वाजप्रसवीयानि जुहोति (१)। "वाजस्येमम्"। तिस्रस्त्रिष्टुभो वाजप्रसवीयदेवत्याः। अत्र प्रायशो व्यवहितानां पदानां

(१) स्रुवेण संस्रुताज्ज्जुहोति वाजस्येममिति प्रतिमन्त्रमिति। का० १४।५।२१॥ २२॥

संबन्धः । "वाजस्येमं प्रसवः सुषुवे" । वाजस्यान्नस्य संबन्धी प्रसवः अभ्यनुज्ञानम्, इमं सोमं राजानम् अग्रे प्रथमं सुषुवे । षूञ् प्राणिगर्भविमोचने इत्यस्यैतद्रूपम् । जनितवानित्यर्थः । कुतः सुषुवे "ओषधीष्वप्सु" । ओषधीषु वर्त्तमानमप्सु च वर्त्तमानम् । या इत्थंभूताः सोमस्य जनयित्र्य ओषधय आपश्च, । "ता अस्मभ्यम्" अस्मदर्थम् "मधुमती" रसवतीः रसवत्यः

ताऽअस्म्मब्भ्यम्म्मधुंमतीर्ब्भवन्तुव्वयꣳराष्ट्रे जांग्रयामपुरोहिंताः स्वाहा-
॥ २३ ॥ व्वाजंस्येमाम्प्रंसवः शिंश्रियेदिर्वमिमाचुव्विश्वाभुवंनानि
सुम्म्राट् । अदिंत्सन्तन्दापयतिप्प्रजानन्त्सनोरुयिꣳसर्व्ववीरुन्नियं

भवन्तु भोग्या वा भवन्तु । वयं च ताभिरद्भिरभिषिक्ताः सन्तः स्वकीये "राष्ट्रे जागृयाम" अप्रमत्ताः स्याम । "पुरोहिताः" अग्रतो व्यवस्थिताः प्रधाना इत्यर्थः ॥ २३ ॥ "वाजस्येमां प्रसवः" । यस्य वाजस्यान्नस्य संबन्धी प्रसवोऽभ्यनुज्ञानम् "शिश्रिये" आश्रयति । "इमां" पृथिवीं "दिव" द्युलोकं च "विश्वाभुवनानि सम्राट्" इमानि च सर्वाणि भूतजातानि

शु० य० सं० २०१ उ० भा०

घिस्थिये आश्रयति। सम्राट्लक्षणः। यस्य "अदित्सन्तं दापयति" अदातुमिच्छन्तं दापयति। "प्रजानन्" स्वमधिकारम्। "स नो रयिं सर्ववीरं नियच्छतु"। सोऽस्मभ्यं धनं सर्ववीरैः संयुक्तं नियच्छतु निगृह्णातु ददात्वित्यर्थः॥ २४॥ "वाजस्यनुप्रसव आबभूव"। योसौ वाजस्यान्नस्य प्रसवः अभ्यनुज्ञानं विसर्गो वा। नु इति विस्मयार्थः। आबभूव ब्रह्माण्डरूपेण संबभूव। व्याप्त्येन। "इमा च विश्वा भुवनानि सर्वतः"। इमानि च विश्वानि भूतानि

च्छतु स्वाहा॥ २४॥ वाजस्यनु। प्प्रसुवऽआबभूवेमाचुविश्श्वा भुवनानिसुर्व्वतः॥ सनेमिराजापरियातिविद्वान्प्रजाम्पुष्टिंव्वर्द्धयमानोऽअस्म्मेस्वाहा॥ २५॥ सोमर्ठं राजानम्। सोमर्ठं राजानम

हिरण्यगर्भप्रभृतीनि स्तम्बपर्यन्तानि। आबभूवेत्यनुवर्त्तते। "सर्वतः" सर्वतोवस्थितानि। "सनेमिराजा परियातिविद्वान्"। सनेमीति पुराणवचनः। सोयमन्नस्य प्रसवश्चिरन्तनो राजा "परियाति" सर्वतो याति स्वेच्छाचारी सन्। "विद्वान्" स्वमधिकारं जानानः प्रजां च पुष्टिं

९ अ० शिवम २०१

च वर्द्धयमानः । "अच्छ" अस्माकम् ॥ २५ ॥ "सोमं राजानम्" । अनुष्टुप् लिङ्गोक्त-देवता । सोमं राजानम् "अवसे" तर्पणाय "अग्निं" च "अन्वारभामहे" । अन्वारम्भश्च तर्पणार्थं एव । "आदित्यान विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम्" अन्वारभामहे । तर्पणायेतिसर्वेषां

वसेऽअग्निमन्वारभामहे ॥ आदित्यान्न्विष्णुᳬं सूर्य्यम्ब्रह्माणञ्च बृहस्पतिᳬं स्वाहा ॥ २६ ॥ अर्य्यमणम्बृहस्पतिम् । अर्य्यमणम्बृहस्पतिमिन्द्रन्दानायचोदय ॥ वाचंविष्णुᳬं सरस्वतीᳬं सवितारञ्च वाजिनᳬं स्वाहा ॥ २७ ॥ अग्नेऽअच्छ । अग्नेऽअच्छावदेह

शेषः ॥ २६ ॥ "अर्यमाणं बृहस्पतिम्" । अनुष्टुप् लिङ्गोक्तादेवता । अर्यमाणं बृहस्पतिम् । "इन्द्रं दानायदानार्थं चोदय" प्रेरय । आहुतिरुच्यते । "वाचं विष्णुं सरस्वतीं सवितारं च वाजिनं" च । वाजिनो देवाः ॥ २७ ॥ "अग्ने अच्छ" । अनुष्टुब्वाग्नेयी । अच्छाभेराप्तुमिति शाकपूणिः । हे अग्ने "अभिवद" इहाव स्थितान् "आसंधान:" अस्मान् "प्रति नः सुमना भव" । प्रतिन

इत्यनयोः पदयोः व्यत्ययः कर्त्तव्य इति । अस्मान्प्रति सुमनाः शोभनमनस्को भव । "प्रनोयच्छसह-स्रजित्" । प्रयच्छ देहि नः अस्मभ्यं हे सहस्रजित बहुनो जेतः । "त्वं हि धनदा असि" । हि शब्दो यस्मात्त्वमेव धनस्य दातासि नान्यः कश्चिद्देवताविशेषः ॥ २८ ॥ "प्रनोयच्छतु" । गाय-

नः प्रति नः सुमना भव ॥ प्र नो यच्छ सहस्रजित्त्वं हि धनदा असि स्वाहा ॥ २८ ॥ प्र नः । प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः स्वाहा ॥ २९ ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधा

त्रो लिङ्गोक्तदेवता । "प्रयच्छतु नो" ऽस्मभ्य "मर्यमा" । प्रयच्छतु च बृहस्पतिः" । प्रकर्षेण च वा-ग्देवी" दानादिगुणसम्पन्ना । "ददातु नः" अस्मभ्यम् ॥ २९ ॥ अथैनं परिशिष्टेनाभिषिञ्चति । देव-स्यत्वेति व्याख्यातम् । "सरस्वत्यै वाचो यन्तु" । सरस्वत्या "वाचः नियमनकर्त्र्याः यन्त्रिये निय-मने ऐश्वर्ये "दधामि" स्थापयामि । "बृहस्पतेष्ट्वा" । बृहस्पतेस्त्वा साम्राज्येन सम्राड्भावेन

"अभिषिञ्चामि" असाविति नामग्रहणम् ॥ ३० ॥ अथोज्जितीर्वाचयति (१) । "अग्निरेकाक्ष-

मिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥ ३० ॥ अग्निरेका-

क्षरेण । प्राणमुदजयत्तमुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो मनुष्या-

नुदजयतान्तानुज्जेषं विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्तानुज्जे-

षं सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्तानुज्जेषम्पूषा पञ्चाक्षरे-

ण ॥ ३१ ॥ पूषा पञ्चाक्षरेण पञ्चदिश उदजयत्ता उज्जेषं सविता षड-

क्षरेण षडृतूनुदजयत्तानुज्जेषम्मरुतः सप्ताक्षरेण सप्तग्राम्यान्प-

शूनुदजयँस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामु

रेण" प्राणमुदजयत्तमुज्जेषम्" । ओश्रावयेति चतुरक्षरम्, अस्तुश्रौषडिति चतुरक्षरम्, यजेति

(१) अग्निरेकाक्षरेणेत्यनुवाकं (चतुष्कण्डिकात्मकं) ब्रह्मवत्कृत्वा (स्रुवाहुतिं जुहोति वाचयति वा । का० १४ । ५ । १ ॥ २१ ॥

द्व्यक्षरम्, येयजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः । स एष सप्तदशप्रजापतिरधियज्ञं स-

ज्जेषम्मित्त्रोनवाक्षरेण ॥ ३२ ॥ मित्त्रोनवाक्षरेण । त्रिवृतꣳ स्तो

ममुदंजयत्तमुज्जेषंव्वरुणोदशाक्षरेणव्विराजमुदंजयत्तामुज्जेषमि-

न्द्रऽएकादशाक्षरेणत्रिष्टुभमुदंजयत्तामुज्जेषंव्विश्वेदेवाद्वादशाक्ष-

रेणजगतीमुदंजयँस्तामुज्जेषंव्वसवस्त्रयोदशाक्षरेण ॥ ३३ ॥ व्वसव-

स्त्रयोदशाक्षरेण । त्रयोदशꣳस्तोममुदंजयँस्तमुज्जेषꣳरुद्राश्चतु-

र्दशाक्षरेणचतुर्दशꣳस्तोममुदंजयँस्तमुज्जेषमादित्याऽ पञ्चदशाक्ष-

रेणपञ्चदशꣳस्तोममुदंजयँस्तमुज्जेषमदितिः षोडशाक्षरेणषो-

मासव्यासाप्यामुत्सीयते । अग्निः एकाक्षरेणच्छन्दसा प्राणमुदजयत् तमहमप्येकाक्षरेण च्छन्द-

षा उज्जेषम् । एवं सप्तदशोज्जितीर्व्याख्येया ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ वाजपेयः समाप्तः । अथ राजसूयं वरुणोऽपश्यत् ॥ * ॥ "एष ते निर्ऋते भागः" स्वयं प्रदीर्णेन जुहोति (१) । पृथिव्यत्र निर्ऋतिशब्देनोच्यते । एष ते तव हे निर्ऋते भागः तं च सेवस्व पञ्चधाहवनीयं व्युह्य

दशꣳस्तोममुदंजयत्तमुज्जेषम्प्रजापंतिः सुप्तदंशाक्षरेणासप्तद-
शꣳस्तोममुदंजयत्तमुज्जेषम् ॥ ३४ ॥ एषतें । निर्ऋतेभागस्तञ्जुष-
स्वस्वाहाग्निनेत्रेभ्योदेवेभ्यंः पुरःसद्भ्यःस्वाहायमनेत्रेभ्योदेवेभ्यो
दक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्योदेवेभ्यंः पश्चात्सद्भ्यःस्वाहा
मित्रावरुणनेत्रेभ्योवामुरुन्नेत्रेभ्योवादेवेभ्यंऽउत्तरासद्भ्यःस्वाहा-

(१) अथराजसूयमन्त्राः । अष्टाकपालो ऽनुमत्यै अम्यापः पश्चाद्वल्मिषमन्तं स्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्णे इरिणे वाग्नौ जुहोत्येषतेनिर्ऋत इति पञ्चवात्तीयं नामानं आहवनीयं प्रतिदिशंव्युह्य मध्ये च स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्यइति प्रतिमन्त्रम् का० । १५ । १ । ८-१०-२० ॥ ३५ ॥

प्रतिदिशं जुहोति । "अग्निनेत्रेभ्योदेवेभ्यः" । देवार्षं प्रागध्यायोत् । "अग्निनेत्रेभ्यो देवेभ्यः" । अ-ग्निर्नेता येषांदेवानांते अग्निनेत्राःतेभ्यो देवेभ्य इति तादर्थे चतुर्थी । "पुरःसद्भ्यः" पुरः सीदन्तीति पुरःसदः तेभ्यः सुकृतमस्तु । अथदक्षिणार्द्धे जुहोति । "यमनेत्रेभ्यो" । देवेभ्यः । शेषं तुल्यव्याख्यानम् । अथ पश्चार्द्धे जुहोति । "विश्वदेवनेत्रेभ्यो देवेभ्यः" । अथोत्तरार्द्धे जुहोति ।

सोमंनेत्रेभ्योदेवेभ्यऽउपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा ॥ ३५ ॥ येदे-वाः । येदेवाऽअग्निनेत्राःपुरःसदस्तेभ्यःस्वाहायेदेवायमनेत्राद-क्षिणासदस्तेभ्यःस्वाहायेदेवाविश्वदेवनेत्राःपश्चात्सदस्तेभ्यः

"मित्रावरुणनेत्रेभ्यो वामरुन्नेत्रेभ्यो" देवेभ्यः । अथ मध्ये जुहोति । "सोमनेत्रेभ्यो देवेभ्यः ऽदुवस्वद्भ्यः" । "ऽदुवःशब्देन हविरभिधी यतेतद्येषांस्तिते दुवस्वन्तः तेभ्यो दुवस्व-द्भ्यः ॥ ३५ ॥ सार्द्धं समुह्य जुहोति । "येदेवा अग्निनेत्राः पुरःसदः" तेभ्यः स्वाहा । तुल्य-

व्याख्याता: पञ्चमन्त्रा ऋतव: (१) ॥ ३६ ॥ अप्रामार्गहोम: । उल्मुकमादत्ते (१) "अग्ने सहस्वपृ-
तना:" आग्नेय्यनुष्टुप् । हे भगवन्नग्ने सहस्वाभिभव पृतना: संग्रामान् । किञ्च "अभिमातीर-
पास्य ।" सपत्नोभिमातिरुच्यते,सपत्नांश्च अपास्य । अस्य च्छ्रेपणो अस्येतद्रूपम्, अपक्षिप । कस्मा-

स्वाहायेदेवाऽमित्त्रावरुणनेत्त्रावामरुन्नेत्त्रावोत्तरासदस्तेभ्य्यः स्वाहाये देवाऽसोमनेत्त्राऽउपरिसदोदवस्वन्तस्तेभ्य्यः स्वाहा ॥ ३६ ॥ अग्ग्नेसहस्व । अग्ग्नेसहस्वपृतनाऽअभिमातीरपास्य ॥ दुष्टरस्तरन्नरातीर्व्वर्च्चोधायज्ञवाहसि ॥ ३७ ॥ देवस्यत्वा । सवितुःप्प्रसवेश्विनो

त्, तरन्नेवं त्वमुच्यसे यतश्चाह "दुष्टरस्तरन्नरातीः" तरतेस्तृणातेर्वा दुष्टर: । अशक्यप्रतिक्रियो-
दुर्निवारस्त्वम् । किंकुर्वन् तरन्नराती: "विनाशयन् शत्रुसेना: । किञ्च "वर्चोधा यज्ञवाहसि" ।

(१) उत्तरा: समस्य ये देवा: इति प्रतिमन्त्रम् । का० १५ । १ । २१ ॥ ३६ ॥

(१) अग्ने सहस्वेत्युल्मुका दानम् । का० १५ । २ । ५ ॥ ३७ ॥

वर्च्च इत्यन्ननामसु पठितम्। अन्नस्य धाता दाता वा वर्च्चसश्चोजसो वा धारयितासि। यच्च वहतीतियच्चत्राहास्तस्मिन्यच्चवाहसि यजमाने ॥ ३७॥ जुहोति (१)। "देवस्यत्वा"। व्याख्यातम्। "उपांसोर्वीर्य्येण जुहोमि"। अतो "हतं" हिंसितं "रक्षः स्वाहा" सुहुतं चैतद्धविर्भवतु। स्रुवं प्रास्यति। "रक्षसां त्वा वधार्थम्" प्रास्यामीति शेषः। प्रत्यागच्छति। "अवधिष्म"।



ब्बाहुभ्यांम्पूष्णोहस्ताभ्याम्। उपाꣳशोर्व्वीर्य्येणजुहोमिहतꣳ रक्षः स्वाहारक्षसांत्वाव्वधायावधिष्मरक्षोवधिष्मामुमसौहत꣯ ॥ ३८ ॥ [४] सवितात्वासवानाꣳसुवतामग्निर्ग्गृहपतीनाꣳसो

हतवन्तो वयं रक्षः। जातावेकवचनम्। अवधिष्म। अमुमिति नामग्राहम्, असाविति च। अथ कोर्थः। हतवन्तो वयं खदिरवर्माणं खदिरवर्मां वा हतोस्माभिः ॥ ३८ ॥ गृहीत्वा दक्षिणयजमानबाहुं जपति। "सवितात्वांसवानाम्"। प्रसवानामाधिपत्ये

(१) देवस्यत्वेति जुहोति, रक्षसांत्वेति स्रुवमवस्यतितां दिशं यस्यां जुहोति, अवधिष्म इत्यायन्त्यनपेक्षम् इति। का० १५। २। ६—७॥ ३८॥

सुवतां प्रसुवताम् अभ्यनुजानन्तु । स हि तेषामीष्टे "अग्निर्गृहपतीनाम्" आधिपत्ये सुवता-मित्यनुषक्तिः । सोमो वनस्पतीनामाधिपत्ये सुवताम् । "बृहस्पतिर्वाचे" वागर्थमभ्यनुजानातु "इन्द्रो ज्यैष्ठ्याय" । ज्यैष्ठभावायार्थं सुवताम् । "रुद्रः पशुभ्यः" । पश्वर्थं सुवताम् । "मित्रः

सोमो वनस्पतीनाम् ॥ बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम् ॥ ३९ ॥ इमं देवाः । इमं दे-

सत्यः" । सत्यायेति विभक्तिव्यत्ययः । सत्यार्थं सवताम् । "वरुणो धर्मपतीनामाधिपत्ये सुवताम् (१) ॥ ३९ ॥ "इमं देवा असपत्नं सुवध्वम्" । इमं राजानं हे देवा असपत्नं सुवध्वम् ।

(१) उत्तमेन चरित्वा सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा नामास्य गृह्णाति मन्त्रे यथास्थानं मातापित्रोश्च यस्याश्च जाते राजा भवतीति ॥ का० १५ । ४ । १३ ॥ १५ ॥ अन्तिमेन वरुणाय धर्मपतये इति वारुणेन चरुणा चरित्वा यजमानान्तिके गत्वा स्रुचौ सव्ये पाणौ कृत्वा दक्षिणं तद्बाहुमादाय सविता त्वेति कण्डिकाद्वयरूपं मन्त्रमाह मन्त्रे यथास्थानं यजमानस्य तन्मातापित्रोः यस्य जनपदजाते राजा भवति तस्य च नामानि गृह्णाति इति सूत्रार्थः ॥ ३९ ॥

भरद्वाजोपनाम्ना श्रीगोविन्द विदुषा कृते ॥ अष्टाविंश नवमोऽध्यायो मन्त्रभाष्यस्य टिप्पणे ।

"महते जनायमहते ज्यैष्ठ्याय" ज्येष्ठभावाय। महते च जनानां "राज्याय"। इन्द्रस्य च "इन्द्रियाय" वीर्याय। सुवर्णमिति प्रत्येकं सबन्ध:। "इमम् अमुष्यपुत्रम्"। अमुष्येति यजमानस्य पितु: षष्ठ्यन्तं नाम गृह्यते। "अमुष्यै पुत्रम्"। अमुष्यै इति यजमानस्य मातुर्नामग्रह:। "यथादित्यै:नदिवं मिथुनं समभवत" इत्यादिस्तुति:। इममसुष्यपुत्रमित्यादि-

वा॑ऽअसपत्नꣳ सुवध्वम्महते क्षत्राय॑महते ज्यैष्ठ्याय॑महते जान॑रा-
ज्यायेन्द्र॑स्येन्द्रि॒याय॑॥ इममुष्य॑पुत्रम॒मुष्यै॑पुत्रम॒स्यै॑विशऽ
एषवो॑मी॒राजा॒सोमो॒ऽस्माकं॒ब्राह्मणाना॒ꣳराजा॑॥ ४० ॥ [२] ॥ ८ ॥

इतिश्रीसंहितायांनवमोऽध्याय: ९ ॥

तृतीयपाद: सोमपरत्वेन व्याख्येय:। "अस्यै विशे"। जनपदनामग्राह्य:। "एषव:अमीराजा"। एष व: कौरवो राजा सोम: अस्तु। अस्माकं ब्राह्मणानां राजा ॥ ४० ॥

॥ इति उव्वटकृतौ मन्त्रभाष्ये नवमोऽध्याय: ॥ ९ ॥

(१) "अपोदेवामधुमतीः"। वरुणस्यार्षं प्राक् चरकसौत्रामण्याः। अब्देवत्या त्रिष्टुप्। या अप देवाः मधुमतीः मधुस्वादोदकाः "अगृभ्णन्" गृहीतवन्तः। "ऊर्जस्वतीः" अन्नवतीः "राजस्वः" राजानं याः सुवन्ति जनयन्ति ता राजस्वः "चितानाः" चेतयमानाः परिदृष्टकारिण्यः किञ्च "याभिरद्भिर्मित्रावरुणावभ्यषिञ्चन्"। अभिषिक्तवन्तः। देवा इत्यनु-

हरिः ॐम् ॥ अपोदेवाः। अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरि

अपोदेवास्तस्रः सौमस्यत्विषिः पंचावेष्टाः समसौमसयत्वाचतस्रइंद्रस्यवज्रपंचसयोनासिचतस्रःसवित्रे काञ्चिभ्यांचतस्रोष्टौच-तुस्त्रिगुं यत् अनु० सू० ॥

(१) नवमोध्यामे वाजपेयो राजसूयस्य कियानंशश्च निरूपितोऽथदशमेऽभिषेकार्थं जलादानादिराजसूयशेषः चरकसौत्रामणी चोच्यते ॥ इडान्तेऽपो गृह्णाति यूपमुत्तरेण नैमित्तिकीरसम्भवान्नलं तराः पृथक्पात्रेष्वौदुम्बरेषु सारस्वतीर्गृह्णात्यपोदेवा इति। का० १५। ४।२२॥ अभिषेकार्थां वक्ष्यमाणाअपः उच्यमानप्रकारेण सूत्रोक्तेष्वौदुम्बरपात्रेषु पृथग्गृह्णाति विशेषस्तु निमित्तवशा- त्प्राप्यानैमितिक्यः यथान्तरिक्षात्प्रतिगृह्यातपवर्षाप्रुषा इत्यापो राजस यारम्भात्प्रागेन संपाद्य तदानीपपमु-त्तरेण गृह्णीयात् यतस्तदानीं वर्षणादेरसंभवात् इतरास्तु तदानीमेव गृह्णीयात् ॥ १ ॥

इति:। "याभिःइन्द्रम् अनयन्" नीतवन्त:। "अत्यरातीः"। अतीत्य अरातीः अदनवतीः शत्रुसेनाः। प्रकृतत्वाद्देशः पदमस्ति। ताः गृह्णामीति शेषः। ॥१॥ अनेन मन्त्रेण सारस्वतीर्गृहीत्वा अनन्तरं हुत्वा षोडशापो गृह्यन्ते। तत्र प्रथमो होममन्त्रः द्वितीयो ग्रहणमन्त्रः। नदीन्द्र-

न्द्रमनयन्नत्यरातीः॥१॥ वृष्णऽऊर्मिः। वृष्णऽऊर्मिरसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहा वृष्णऽऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि वृषसेनोऽसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देह्यर्थेतस्स्थ॥२॥ अर्थेतस्स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहार्थेतस्स्थ रा

वाहेऽवस्थितस्य पशोर्वा पुरुषस्य वा या ऊर्मिर्व्यर्दतः। तौ गृह्णाति। स यः प्राङुदर्दति प्राङुद्गच्छति तं गृह्णाति। "वृष्ण ऊर्मिरसि राष्ट्रदाः"। यस्त्वं वृष्णो वर्षितुः सेक्तुः सम्बन्धी ऊर्मिरसि। वृषा हि यदि पुरुषो यदि पशुः। "राष्ट्रदाः"। राष्ट्रं जनपदः तस्य स्वभावत एव दातासि तं त्वां

ब्रूमो राष्ट्रं मे मह्यं देहि। स्वाहा गृह्णामि। "वृष्ण ऊर्मिरसि राष्ट्रदाः राष्ट्रममुष्मै"। अमुष्मा इति यजमानस्य नामग्रहः। "देहि"। एवमुपरितना अपि मन्त्रा व्याख्येयाः। द्वितीयमूर्मिं गृह्णाति ।"वृषसेनोसि"। वृषा युवोच्यते। वृषप्रधाना सेना यस्य स वृषसेनः।

ष्ट्रदा राष्ट्रममुष्मै दत्तौजस्वतीस्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहौजस्वती
स्थ राष्ट्रममुष्मै दत्तापः परिवाहिणीस्थ राष्ट्रदा राष्ट्रम्मे दत्त
स्वाहापः परिवाहिणीस्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापाम्पतिरसि रा
ष्ट्रदा राष्ट्रम्मे देहि स्वाहापाम्पतिरसि राष्ट्रदा राष्ट्रममुष्मै देह्य पा

स्यन्दमानाः १ ॥२॥ "अर्थेतस्थ राष्ट्रदाः"। अर्थं प्रयोजनं निष्पादयितुं याः यन्ति गच्छन्ति ता

(१) जुहोत्युत्तरासु चतुर्गृहीतं वृषाऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः (मन्त्रैः) प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति, (स्वाहाहीनैः), संहितायां वृष्ण ऊर्मिरित्यादयोमन्त्राः द्विशः पठितास्तत्र पूर्वपूर्वैः स्वाहान्तैर्होम उत्तरोत्तरैरपामादानम् अनगूढात् (जलेप्रतिष्ठात्) पशोः (पुरुषाद्दा) पूर्वापरा ऊर्मी इति पूर्वां परो कल्लोलौ हुत्वा गृह्णांति। का० १५। ४। ३४। २३॥ २॥

ऋ० य० सं० २०८ उ० भा०

अर्थेतः । अस्तेर्बहुवचनं स्यइति । "राष्ट्रदाः" । एतदपि बहुवचनम् । "राष्ट्रमेदत्त" । दत्तेति ददातेर्बहुवचनम् । व्याख्यातमन्यत् । प्रतिलोमात्तु "ओजस्वतीः" ओजसा बलेन युक्ताः सत्यः एताः प्रतिलोमाः स्यन्दन्ते । "अपयती" । "आपः परिवाहिणीः" । हे आपः याः यूयं परिवा-

वृष्णोस्थराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापाम्पतिरसिराष्ट्रदाराष्ट्रम्मुष्मैदेहिसूर्यत्वचसस्थ ॥ ३ ॥ सूर्य्यत्वचसस्थ । राष्ट्रदाराष्ट्रम्मे दत्तस्वाहासूर्य्यत्वचसस्थराष्ट्रदाराष्ट्रममुष्मैदत्त सूर्य्यवर्च्चसस्थराष्ट्रदाराष्ट्रम्मेदत्त स्वाहासूर्य्यवर्च्चसस्थराष्ट्र-

हिणीः सर्वतो वहनशीलाः स्थ । उक्तमन्यत् । "नदीपतिः" । अपांपतिरसि । ऋज्वर्थः । "निवेष्टाम्" वेष्ट वेष्टने अस्य निपूर्वस्यान्त्यव्यापत्यानिवेष्ट्य आवर्त्त उच्यते । स्यन्दमानाः स्थावराः प्रत्यागताश्चापः ॥ ३ ॥ "सूर्यत्वचसस्थ" । सूर्यस्येव त्वक् यासां ताः सूर्यत्वचसः

(१) स्यन्दमानाः प्रतिलोमाः नदीपतिमिति, निवेष्टया (आवर्तभवाः) का० १५ । ४ । २४ । २९ ॥ ३ ॥

१०अ० शिवम् २०८

"आतपवर्ष्याःस्थ"। "सूर्यत्वचसःस्थराष्ट्रदाः"। सूर्यत्वचसः सूर्यस्येव वर्चस्तेजो यासां ताः सूर्यवर्चसः। "सरस्याः" "मान्दास्थ"। मन्दतेर्मोदनार्थस्य मन्दः तत्र हि मोदन्ति भूतानि बहूदकत्वात्, तत्रभवा आपो मान्दाः। कूप्याः गृह्णाति। "व्रजक्षितस्थ"। व्रज इति मेघ-

मुमुष्मैदत्तव्रजक्षितस्थराष्ट्रदाराष्ट्रमम्मैदत्तस्वाहाव्रजक्षितस्थ
राष्ट्रदाराष्ट्रमुमुष्मैदत्तवाशास्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहा

नामसु पठितम्। इहतूदकवत्त्वसाम्यात्कूप उच्यते व्रजे क्षियन्ति व्रजक्षितः प्रुष्वा अवश्यायाः। "वाशास्थ"। वश कान्तौ। काम्यिता अभिलषिताः स्थ। ता हि सर्व एव कामयन्तो अन्नहेतुत्वात्।

(१) स्यन्दमानानां स्थावराः, (स्थिराः) प्रतग्रातापइति, अन्तरिक्षात्प्रतिगृह्यातपवर्ष्या इति, सरसग्रा इति (तडागभवासु गृह्यमाणासु), कूप्या इति (कूपभवासु), प्रुषग्रासु (प्रुषाग्रवश्यायरूपास्तृणाग्रेषु स्थिताः) (मध्विति (मधुनि होमादानि) गोरुवल्य्वा इति (उल्वंगर्भवेष्टनं तत्र भवाः, प्रसूयमानधेनुगर्भवष्टनोत्थं पूर्वमेव जलं गृह्णीतमस्ति पय इति, (दुग्धस्य) घृतमिति (घृते) आपः स्वराज इति मरीचीः (रात्रिकिरणतप्ताग्रापः) गृहीत्वा गृहीत्वाञ्जलिना सर्वासु संसृजतीति, औदुम्बरेपात्रे समासिञ्चलेनां मधुमतीरिति, (मन्त्रावृत्तिः) मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधात्यनाधृष्टाः सीदतेति का०। १५। ३०। ३७॥ ४॥

“मधुशविष्ठास्थ”। शव इति बलनाम, शविष्ठा बलिष्ठाः। बलिष्ठं हि मधु त्रिदोषशमनत्वात्। उक्तञ्च। ‘त्रिदोषघ्नं मधु प्रोक्तं केचिदिच्छन्तिवातलमिति’। गोरुत्थपागृह्णाति। “शक्वरीस्थ”। शक्लृ शक्तौ। ‘आतो मनिन्क्वनिब्वनिपश्च’। शक्नुवन्ति हि गावो जगदुद्धर्तुं वाहदोहादिभिः।

व्राशांस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तशविष्ठास्त्थराष्ट्रदाराष्ट्र
म्मेदत्तस्वाहाशविष्ठास्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तशक्वरीस्त्थरा
ष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशक्वरीस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तजन
भृतंस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाजनभृतंस्त्थराष्ट्रदाराष्ट्रम
मुष्मैदत्तविश्वभृतंस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाविश्वभृतं

“पयः जनभृतः”। जनान् हि पयो बिभर्ति बालभावे। “घृतम् विश्वभृतः”। विश्वं सर्वं देहाद्यपि घृतं बिभर्ति। मरीचीः। “आपःस्वराजस्थ”। हे आपः या यूयं स्वराजस्थ

स्वकीयमेव राज्यं यासां तास्तथोक्ता अनन्याश्रितराज्या इत्यर्थः। व्याख्यातमन्यत्। औदुम्बरपात्रे समासिञ्चत्येताः। "मधुमतीः"। मधुमतीर्मधुररसवत्यः मधुररसवतीभिरद्भिः पृच्यन्तां सृज्यन्ताम् "महिमत्त्वं क्षत्रियाय राज्ञे वन्वानाः" वनोतिः संभजनार्थः। संभजमानाः। मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति। "अनाधृष्टाः" अनाधर्षिताः रक्षोभिः सीदत उपविशत।

स्वराष्ट्रदा राष्ट्रम्मुष्मै दत्ताप ÷ स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ॥ मधुमतीर्म्मधुमतीभिः पृच्यन्ताम्महि क्षत्रं क्षत्रियाय वन्वानाऽअनाधृष्टाः सीदत सहौजसो महि क्षत्रं क्षत्रियाय दधतीः ॥४॥

[४] शतम् ४०० ॥ सोमस्य त्विषिः। सोमस्य त्विषिरसि तवेव मे

"सहोजसः" सवीर्याः सहबलेन। किञ्च, वीर्याः। महिमत्त्वं क्षत्रियाय राज्ञे दधतीः स्थापयन्त्यः ॥ ४ ॥ व्याघ्रचर्मारोहति। (१) "सोमस्यत्विषिः"। सोमस्य दीप्तिर्भवसि यतः अतः "तव इव"

(१) व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति, पार्थानामग्नये स्वाहेति षट् जुहोति प्रतिमन्त्रम्। का० १५। ५। ६ ॥ ५ ॥

यथा तत्र त्विषिरेवं ममत्त्विषिर्भूयात् । "यत्र वैसोम इन्द्रमत्यपवत सयत्ततः शार्दूलः समभवत्ते-नसोमस्य त्विषि" रितिश्रुतिः । षट् पुरस्तादभिषेकस्य पार्थानि जुहोति । अग्नये स्वाहेतिप्रति-मन्त्रम् षडुपरिष्टात् "इन्द्रायस्वाहेति प्रतिमन्त्रम् ॥ ५ ॥ पवित्रे करोति (१) ॥ "पवित्रेस्थः" ।

त्विषिर्भूयात् ॥ अग्नयेस्वाहासोमायस्वाहासवित्रेस्वाहासरस्वत्यै स्वाहापूष्णेस्वाहाबृहस्पतयेस्वाहेन्द्रायस्वाहाघोषायस्वाहाश्लोकायस्वाहाꣳशायस्वाहाभगायस्वाहार्य्यम्णेस्वाहा ॥५॥ पवित्रेस्थः ।

पवित्रेस्थोवैष्णव्यौसवितुर्वः प्प्रसव उत्पुनाम्यच्छिद्रेणपवि

"पवित्रे स्थो वैष्णव्यौ" । व्याख्यातम् । उत्पुनाति । "सवितुर्वः" । व्याख्यातम् । "अनि-भृष्टमसि" । अ ग्रमन्त्रावयवा एकवचनान्ताः श्रुत्या तु बहुवचनान्ता व्याख्याताःआपोह्यत्राभि-

(१) पवित्रे कृत्वा हिरण्यमेतयोः प्रवयति (बध्नाति) ताभ्यामुत्पुनात्यपः सवितुर्वेतिइति का० १५ । ५ । ४ । ५ ॥ ६ ॥

घेयमिति। अतः श्रुत्यर्थोऽनुक्रियते। भरद्वाजो पाकदूत्यस्य धातुः ऋषिराख्यायते। अनिभृष्ट-
मसीति। कोऽर्थः अनाधृष्टाःस्थ रक्षोभिः। "वाचोबन्धुः"। वाचः बन्धुभूताः। "यावद्वै प्राणे-
ष्वापो भवन्ति तावद्वाचो वदतीति" श्रुतिः। "तपोजाः"। तपःशब्देनाग्निरुच्यते तस्माज्जा-
यन्ते। "अग्नेर्वै धूमोजायत" इत्यादिश्रुतिः। "सोमस्य दात्रमसि"। सोमस्य दात्र्यः स्थः।
"यदा वा एनमेताभिरद्भिः षुण्वन्ति" इत्यादिश्रुतिः। "स्वाहाराजस्वः"। स्वाहाकारेणपूताः

त्वे॑ग्ग्सूर्य॑स्यर॒श्मिभिः॑ ॥ अनि॑भृष्टमसिव्वा॒चोबन्धु॑स्तपो॒जाःऽसो
मस्यद्दात्रमसि॒स्वाहा॑राज॒स्वः॑ ॥ ६ ॥ स॒धमादो॑द्यु॒म्निनी॒रापऽएता
ऽअना॑धृष्टाऽअपस्यो॒व्वसा॑नाः ॥ प॒स्त्या॒सुचक्रे॒व्वरु॑णाःस॒ध स्थ॑म॒पाम्

सत्यः राजस्वः भवथ। राजानं या सुवन्ति जनयन्ति ता राजस्वः ॥ ६ ॥ अभिषेचनीयवेनां व्या-
नयति। "सधमादोद्युम्नीः"। अब्दैवत्या वारुणी त्रिष्टुप्। या एताः सधमादः सह-
मदनाः सहएकस्मिन्पात्रे माद्यन्ति मदनं कुर्वन्तिताः। द्युम्नीः वीर्यवत्यः। आपः एताः "अ-

नाधृष्टाः" अनभिभूता रक्षोभिः । "अपस्यः" अपइति कर्मनामतत्र साधुः अपस्यः । "वसाना" । वस आच्छादनेआच्छादयन्त्यः पालायित्र्यवस्थिताः । तास्वप्सु "पस्त्यासु" । पस्त्यमिति गृह-नामसु पठितम् । गृहरूपासु विशां रूपेणावस्थितासु । "चक्रे" कृतवान् "वरुणोराजा "सधस्थम्" सहस्थानं प्रतिष्ठाम् । कथंभूतो राजा वरुणः । "अपां शिशुः" । "अपां वा

शिशुर्म्मातृतमास्वन्तः ॥ ७ ॥ क्षत्रस्योल्बमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्या

एषशिशुर्भवति यो राजा राजसूयेन यजति" इति श्रुतिः । "मातृतमासु" अतिशयेन निर्मा-तृषु । "अन्तः" मध्ये । चक्रे सधस्थमिति सम्बन्धः ॥ ७ ॥ तार्प्यं परिधापयति (१) । "क्षत्र-स्योल्बमसि" । उल्बङ्गर्भाधारमुदकम् । पाण्डुं परिधापयति । "क्षत्रस्यजराय्वसि" । जरायुर्गर्भवेष्टनम् । अधिवासं प्रतिमुञ्चति । "क्षत्रस्ययोनिरसि" । गर्भसम्भवस्थानं योनिः । उष्णीषं सहृत्य पुरस्तादवगूहति । "क्षत्रस्यनाभिरसि" । नाभ्या सन्नद्धा गर्भा जाद-

(१) तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम् । १५ । ५ । १५ ॥ तार्प्यं क्षौमं वल्कलं घृताक्तवस्त्रंवा ॥ ८ ॥

न्त इत्याशयः। अथ धनुरधितनोति। "इन्द्रस्य वार्त्रघ्नमसि"। इन्द्रस्य सम्बन्धि यद्वार्त्र-घ्नम्, वृत्रो येन हत इति वार्त्रघ्नं धनुरासीत्तत्त्वमसीति शेषः। बाहू विमार्ष्टि। "मित्रस्य त्वमसि" मित्रस्य संबन्धी त्वमसीति दक्षिणम्। "वरुणस्यासि"। वरुणस्य संबन्धि त्वम-सीति सव्यम्। धनुः प्रयच्छति। "त्वयायं वृत्रं वधेत्" धनुषा अयं यजमानो "वृत्रं शत्रुं वधेत् हन्यात्। तिस्र इषूरादत्ते। "दृवासि" दृ विदारणे, दृणातीति दृवा। "रुजासि"। रक्षो

सि मित्रस्य त्वं वरुणस्यासि त्वयायं वृत्रं वधेत्॥ दृवासि रुजासि क्षुमासि॥ पा तैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्य्यञ्चन्दिग्भ्यः पात॥ ८॥ आ

भङ्क्ते। अस्य रुजा। "क्षुमासि"। क्षु मायोविधूनने। अस्य क्षुमा। यजमानाय प्रयच्छति। "पा-तैनं प्राञ्चम्"। पालयत एनं यजमानं प्रागञ्चनम् प्रत्यगञ्चनं तिर्यगञ्चनम्। "दिग्भ्यःपात" अन्याभ्यो दिग्भ्यः पालयत॥ ८॥ अथैनमाविदो वाचयति (१)। "आविर्मर्याः"। आवेदयन्ति ज्ञापयन्ति यजमानमेताभिरित्याविदः। आविर्मर्याः। मर्या इति मनुष्यनाम हे मर्या आविः

(१) आविमर्या इति वाचयति। का० १५। ५। २१॥ ८॥

प्रकाशः प्रकटो यं यजमानो युष्मत्समक्षं कथ्यते । कथिते च श्रुतिः "प्रयोजनं वदति । सोऽस्मै सवनमनुमन्यते दूत्याविर्मर्या दूत्याद्येकवचनादिभिः । स वो जन्म उत्पत्तिरिति यावत् । "आ-वित्तोऽग्निर्गृहपतिः" । अ,व्युत्क्रान्तविभक्तिव्यत्ययैर्व्याख्यायन्ते । आविदितोज्ञापितो ऽग्नये गृह-पतये यजमानः । "आवित्तइन्द्रः" "आविदित "इन्द्राय वृद्धश्रवसो" । वृद्धं श्रवो धनं यस्य

विर्म्मर्य्याऽ । आविर्म्मर्य्याऽआवित्तोऽअग्निर्गृहपतिरावित्तऽइन्द्रो वृद्धश्रवाऽआवित्तौमित्रावरुणौधृतव्रतावावित्तःऽपूषाविश्ववेदाऽआवित्ते द्यावापृथिवीविश्वशम्भुवावावित्तादितिरुरुशर्म्मा ॥ ९ ॥

स वृद्धश्रवाः । "आवित्तौ मित्रावरुणौ" । आविदितो "मित्रावरुणाभ्यां धृतव्रताभ्यांव्रतमिति-कर्मनामधारितकर्मभ्याम् । "आवित्तःपूषा" । आविदितःपूष्णोविश्ववेदसेसर्वज्ञायसर्वधनायवा । "आवित्तोद्यावापृथिवी" । आवित्तोद्यावापृथिवीभ्यांविश्वशंभूभ्याम् सर्वं सुखेन सम्भवायितीभ्या-म् । "आवितादितिः" । आविदितोदितम् उरुशर्मणे उरु पृथु महत् शर्मशरणं यस्याः सा तयोक्ता ।

सर्वा एवार्विदः अनुत्या लक्षणया व्याख्याताः। तद्यथा "आविर्मर्य्या इत्यनिरुक्तं प्रजापतिर्वा अनि-रुक्तइत्यादि" स्तास्तथा व्याख्येयाः। एवं वा मन्त्राणां प्रत्यक्षार्थत्वात्॥ ९ ॥ केशवास्ये लोहा-य समाविध्यति (१)। "अवेष्टादन्दशूकाः"। अवेष्टाः। अविपूर्वो यजिर्नाशने वर्त्तते। नाशि-

[५] अवे॑ष्टादन्दशूकाः॑। अवे॑ष्टादन्दशूकाः॑प्राचीमारो॑हगायत्री त्वा॑वतुरथन्तर॒ꣳसाम॑त्रि॒वृत्स्तोमो॑वसन्तऽऋ॒तुर्ब्रह्म॒द्र॒विणम्दक्षि॑णा मारो॑ह॥ १० ॥ दक्षि॑णामारो॑ह। त्रि॒ष्टुप्त्वा॑वतुबृ॒हत्साम॑पञ्चद॒श

ताः दन्दशूकाः अत्यर्थं दशनशीलाः। क्षत्रव इहाभिप्रेताः। "तदग्नोक्षत्र र्यो वधस्तमेवैतद-तिनयती" तिश्रुतेः। सुन्वन्तमो क्रमयन् दिशो वाचयति। "प्राचीमारोह"। प्राची दिश-

(१) अवेष्टाइति लोहायसं (ताम्रं) आविध्यति (क्षिपति) केशवास्ये (दीर्घकेशनरस्यमुखे) सदोन्त उपविष्टाय (सद समीपोपवि-ष्टस्य) इति। का० १५। ५॥ ३२॥ सुन्वन्तमाक्रमयन् दिशः प्राचीमारोहेतिवाचयति॥ातिमन्त्रं प्रतिदिशं यथालिङ्गमिति। १५।।५।३२॥१०॥

शु० य० सं० २१३ उ० भा०



मारोहस्व । आरोहमाणं च त्वा "गायत्र्यवतु" पालयतु । "रथन्तरं साम" त्वामवतु । "त्रिवृत्स्तोमः" त्वामवतु । "वसन्त ऋतुः" त्वामवतु । "ब्रह्म द्रविणं" ब्राह्मणजातिर्धनभूता त्वामवतु इति वाक्यशेषः । ब्राह्मणजातेः साधनभावाद्धनत्वमुच्यते ॥ १० ॥ एवं दक्षिणामारोहेति

स्तोमो ग्रीष्मऽऋतुःक्षत्रन्द्रविणम्प्रतीचीमारोह ॥ ११ ॥ प्रतीचीमारोह । जगती त्वावतु वैरूपꣳ साम सप्तदशस्तोमो वर्षाऽऋतुर्विड्द्रविणमुदीचीमारोह ॥ १२ ॥ उदीचीमारोहानुष्टुप्त्वावतु वैराजꣳ सामैकविꣳशस्तोमः शरदृतुः फलन्द्रविणमूर्द्ध्वामारोह ॥ १३ ॥ ऊर्द्ध्वामारोह । पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ

चतस्रः कण्डिका व्याख्येयाः छन्दःसामस्तोमर्तुद्रविणप्रभृतिभिर्भेदः । चतुर्थ्यां कण्डिकायां "फलं द्रविणमि"ति पठ्यते । तत्र धान्यफलं वा यज्ञफलं वा अभिप्रेतम् "वर्चो द्रविण" मित्यत्रापि

तेजो ब्रह्मवर्चसं वा अभिप्रेतम्। सीसं निरस्यति (१)। "प्रत्यस्तम्"। अस्तु क्षेपणे। प्रतिगृह्य क्षिप्तम्। "नमुचे" रसुरस्य शिरः॥ ११॥ १२। १३।॥ १४॥ व्याघ्रचर्मारोहति (१)। "सोम-

स्तोमौ॑ हे॒मन्त॑ शिशि॒रावृतू॒ वर्चो॑ द्र॒विण॒म्प्रत्य॑स्त॒न्नमु॑चेः॒ शिरः॑ ॥१४॥ सोम॑स्य॒ त्विषि॑ः। सोम॑स्य॒ त्विषि॑रसि॒ तवे॑व मे॒ त्विषि॑र्भूयात्॥ मृ॒त्योः पा॒ह्योजो॑ऽसि॒ सहो॑ऽस्य॒मृत॑मसि॥१५॥ हिर॑ण्यरूपा॒ऽउषसः॑। हिर॑ण्यरूपा॒ऽउषसो॑ विरो॒कऽउ॒भावि॑न्द्रा॒ऽउदि॑थः॒ सूर्य॑श्च॥ आरो॑हतं वरु

ण त्विषिरसि" व्याख्यातम्। रुक्ममधःपदं कुरुते। "मृत्योः पाहि"। हि रुक्म "मृत्योः सकाशान्मां गोपाय। शिरसि च रुक्मं करोति। "ओजोसि" ओज इति मनोवृत्तिः, जेष्यामस्तुमिति

(१) आक्रम्यपादेन सीसं निरस्यति प्रत्यस्तमिति का०। १५। ५। २४॥ १४॥

१) व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति। १५। ५। २। ७॥ १५॥

या प्रतिज्ञा सोच्यते। "सह" इति वाच्यं बलमुच्यते। "अस्तु" इति प्रकटार्थम् ॥ १५ ॥ बाहू उद्गृह्णाति (१)। "हिरण्यरूपोउषसो" मित्रावरुणाश्लिष्टप्रयज्जुरन्ता। "मित्रोसिवरुणोसी" तियजुः। हे हिरण्यरूपौ मित्रावरुणौ यौ युवां "उषसो विरोके"। उषसो व्युत्थानकाले। उभावपि हे इन्द्रौ। इदि परमैश्वर्ये। परमेश्वरौ। "उदिथः" उद्गच्छथः। "सूर्यस्य" ययोर्युवयोःकार्यसंपादनाय सूर्यं उदेति तौ युवाम् "आरोहतम्" हे वरुण "मित्रगर्त्तं पुरुषम्"।

यामित्त्रगर्त्तन्ततश्चक्षाथामदितिन्दितिञ्चमित्त्रोसिव्वरुणोसि ॥१६॥

[७] सोमस्यत्वाद्युम्नेनाभिषिञ्चाम्म्यग्गनेर्ब्भ्राजसासूर्य्यस्यव्वर्च्चसे

"बाहू वै मित्रावरुणौ पुरुषो गर्त्त इतिश्रुतिः। अध्यात्मविषयं व्याचष्टे। अधिदेवं तु "गर्त्तोरथः। ततश्चक्षाथमदितिं दितिं च। ततोनन्तरं पश्यतम् अदितिम् अदीनम् स्वकर्मविहितानुष्ठतारम्, दितिं दीनं नास्ति इतिम्। अस्मुमेवार्थं श्रुतिराह"ततःपश्यतं स्वं चारणं चेत्यचेतदाह"। अपरो मन्त्रविकल्पः" "मित्रोसि वरुणोसि"। बाहू एवोच्येते। मित्रस्त्वमसि वरुणस्त्वम-



(१) बाहू उद्गृह्णाति हिरण्यरूपा इति मित्रोसि वरुणोऽसीति वा। १५। ५। २८ ॥ १६ ॥

सि ॥ १६ ॥ यजमानमभिषिञ्चति (१) "सोमस्य त्वा द्युम्नेन"। द्युम्नं द्योततेः। यशो वा अन्नं वा। सोमस्य त्वा द्युम्नेन अभिषिञ्चामि। "अग्नेर्भ्राजसा" अग्नेर्दीप्त्या। सूर्यस्य वर्चसा सूर्यस्य रोचिषा। "इन्द्रस्येन्द्रियेण" वीर्येण। श्रुत्या च सर्वाण्येव वीर्याणि व्याख्यातानि। अभिषिञ्चामीति सर्वशेषः। "क्षत्राणांक्षत्रपतिरेधि"। च सर्वशेषः। त्वं च एतैरभिषिक्तः सन् "क्षत्राणां" सर्वेषामधिपतिः एधि भव "अतिदिद्यून्पाहि"। अतीत्यातिक्रम्य दिद्यून् इषून् पाहि गोपायात्मानम्। "इषवो वै दिद्यून् इषुवधमेवैनमेतदत्यति नयतीति" श्रुतिः ॥ १७॥

न्द्रस्येन्द्रियेण ॥ क्षत्राणांक्षत्रपतिरेध्यतिदिद्यून्पाहि ॥ १७ ॥ इमन्देवाः। इमन्देवाऽअसपत्नꣳसुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्याय महतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इममुमुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकम्ब्राह्मणानाꣳराजा ॥ १८ ॥

(१) स्थितं प्राञ्चमभिषिञ्चति यजमानोऽध्वर्युं वा। १५। ५। २०। २२ ॥ १७ ॥

“इमन्देवाः । व्याख्यातम् ॥ १८ ॥ कण्डूयनाभिषेकेण कणान्प्रलिम्पेत् (१) “प्रपर्वतस्य” । अ-
ब्दैवत्या त्रिष्टुप् । या एता आज्ञातपरिणामभूता आपः ताः पर्वतस्य पर्ववतोऽग्नेः पार्थिवस्य । स
हि पर्ववान् पौर्णमास्यमावस्याचातुर्मास्यादिभिः पर्वभिः । “वृषभस्य” वर्षितुः “पृष्ठात्” । उ-
त्थायेति शेषः । “नावः” । णु स्तुतौ । नूयन्ते स्तूयन्ते स्तोत्रशस्त्रहोममन्त्रैरिति नाव आज्ञातप-
रिणामभूता आपः । “चरन्ति” गच्छन्ति आदित्यमण्डलं प्रति । “स्वसिचः” “स्वयमेव सिञ्च-

**प्रपर्वतस्य । वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिचऽइयानाः । ताऽ**

तीति स्वसिचः । “इयानाः” । इण् गतौ । ‘ताच्छील्यवयोवचनशक्तिषु चानश्’ । गमनशीलाः । तौ
हि आदित्यमण्डलं प्राप्य मध्यस्थानमागच्छन्ति । मध्यस्थानं पृथिवीम् । तथा चोक्तम् । ‘अग्नौ प्र-
स्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः’ । “ता आववृत्रन्नध-
रागुदक्ताः” । “आववृत्रन्” । आदित्यमण्डलं प्राप्य ता एवावर्त्तन्ते । “अधराक्” । अधोऽञ्चनाः ।
“उदक्ताः” । उन्दी क्लेदने । क्तिप् । उन्दनेन क्लेदनेनस्तम्भनेनाभ्यक्ता आपः । “अहिर्बुध्न्यम्” ।

(१) कण्डूयन्याभिषेकेण प्रतिलिम्पते प्रपर्वतस्येति । का० १५ । ६ । ८ ॥ १८ ॥

अहिर्मेघ, :वुध्नमन्तरिक्षं तत्रभवोबुध्न्योमेघस्तं बुध्न्यं मेघं मध्यस्थानम्। "अनुरीयमाणाः" । रीयति-गत्यर्थः । अनुप्रविश्य मेघच्छिद्रे गच्छन्त्यो भूमिं प्राप्नुवन्तीतिशेषः ॥ अथवा आदित्यः पर्वतशब्दे-नोच्यते, या एता पर्वतस्यादित्यस्य वृषभस्य पृष्ठात् "इयनाः" निर्गच्छन्त्यः नाना व्या आपः । प्रचरन्ति सर्वतो गच्छन्ति स्वयं सिक्ताः । नाव्याआदित्यस्य या उपरिष्ठादापस्ता उच्यन्ते। तथाच श्रुतिः । "नाव्याउ एव यजुष्मत्य इष्टका" इत्युपक्रम्य "षष्टिश्च ह वै त्रीणि च शतान्यादित्यं

आवर्त्तन्धुराग्गुदत्काऽअहिम्बुध्न्यमनुरीयमाणाः ॥ विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोःक्रान्तमसि ॥ १९ ॥ प्रजा

नाव्या अभिक्षरन्ती" त्याह । ताः प्रावृट्काले आवर्तन्ते । "अग्रराग्वः" उदक्ताव्यक्ताः । "अहिं" मेघं "बुध्न्यम् अनुरीयमाणाः" अनुप्रविश्य शुषिरैरनुगच्छन्त्यः ॥ अथवा याः पर्वतस्य हिमवद्विन्ध्याद्रेः वृषभस्य वर्षितुः सेतुः पृष्ठात् इयानाः । नावश्चरन्ति । नावा तार्या महानद्यः प्रचरन्ति स्वयं सिक्ताः, ता एव राजसूययाजिनोर्थाय आवर्तन्ते गृह्यमाणाः । अभिषेकपा-

तेषु उदक्ता उत्क्षिप्ताः। उत्पूर्वस्याञ्चतेरेतद्रूपम्। "अधराक्" अधराञ्चः अधोऽञ्चनाः। "अहिम्" अहन्तारं यजमानं शत्रूणाम् "बुध्न्यम्" बुध्न्यशब्देन मूलमुच्यते तत्रभवं यजमानं बुध्न्यं प्रधानमित्यर्थः। "अनुरीयमाणाः"। यजमानं प्रत्यनुषिच्यमानाः। ता

पतेन। त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव॥ यत्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्य पितासावस्य पिता वयꣳस्याम पतयो रयीणाꣳस्वाहा॥ रुद्र यत्ते क्रिवि परन्नाम तस्मिन्हुतमस्यमेष्टमसि

आवद्दतमित्यादि संबन्धनीयम्। चर्मणि त्रिविक्रमयति यजमानम्। "विष्णोर्विक्रमणम्"। विष्णोः यच्चास्य विक्रमणं यच्च विक्रान्तं यच्च क्रान्तं तत्सर्वं त्वमसि इति योजना॥ १९॥ जुहोति (१) "प्रजापतेन"। प्राजापत्या त्रिष्टुप् यजुरन्त्या। "अयममुष्य पितासावस्य पिते"

(१) शालाद्वार्ये जुहोति पुत्रे ऽन्वारब्धे प्रजापते इति। आग्नीध्रीये पालशेन शेषान् जुहोति रुद्रो यत्त इत्युत्तरार्द्धे इति। १५।
।६।११—।१२।॥ २०॥

तियन्तुः। हे प्रजापते "नत्वदेतान्यन्योविश्वरूपाणिपरितानभूव"। त्वत्तोन्यो देवताविशेषः एतानि सर्वाणि नानाजातीयानि वर्त्तमानकालसंबन्धानि रूपाणि परिसमन्ततः। ता। तानिच यान्युत्पन्नानि उत्पत्स्यन्ते वा। "बभूव"। अत्र नकारः संबध्यते। न बभूव। न भवति आत्मरूपत्वेन यस्मात् अतो ब्रवीमि। "यत्कामास्तेजुहुमस्तन्नोऽस्तु"। येन कामेन ते तव जुहुमः तत्कामरूपमस्माकमस्तु। कथंभूतम्। यजुः व्याख्यायते। अयमस्मु-

स्वाहा॥ २०॥ [४] इन्द्रंस्युव्वज्ज्रं॑। इन्द्रंस्युव्वज्ज्रोसिमित्रावरु

ष्यपिता। अयं पुत्रः अमुष्ययजमानस्य पिता। असावस्य पिता। असौ यजमानः अस्य पुत्रस्य पिता। सर्वथा सपुत्रा वयमेव स्याम भवेम। "पतयोरयीणां" धनानाम्। स्वाहा स्वहुतमस्तु। जुहोमि। "रुद्रपते"। हे भगवन् रुद्र यत् ते तव "क्रिवि"। क्रिवि हिंसाकरणयोः। कर्त्ट हिंसितृ वा परमुत्कृष्टं नाम। "नमनम्"। एवं रुद्रं संबोध्य अथेदानीं हव्यमाह। तस्मिन् नाम्नि हुतम् असि। "अमेष्टमसि"। अमांशब्दो गृहवचनः। गृहे

इष्टमसि । स्वाहा ॥ २० ॥ रथमुपावहरति (१) । "इन्द्रस्यवज्रोसि" । व्याख्यातम् । तं युनक्ति । "मित्रावरुणयो" र्द्वयोः "त्वा" त्वां "प्रशास्त्रोः । "प्रशासिषा" प्रशासनेन युनज्मि । तमातिष्ठति । "अव्यथायै" । व्यथ भयचलनयोः । अभयाय अचलनाय वा त्वामधितिष्ठामि । "स्वधायै:" । अन्नरसाय च त्वामधितिष्ठामीति शेषः । "अरिष्टः" "अनुपहिंसि-

**ण्योस्त्वाप्प्रशास्त्रोः प्प्रशिषा युनज्मि ॥ अव्यथायैत्वा स्वधायैत्वारिष्टोऽअर्ज्जुनो मरुतांम्प्रसवेनं जयापाम मनंसा समिन्द्रियेण ॥ २१ ॥**

तः । "अर्जुनः" अर्जनशीलः । "अर्जुनोह वैनामेन्द्र" इति श्रुतिः । दक्षिणधुर्यं प्राजयति । "मरुतांप्रसवेनजय" । मरुतां संबन्धिन्यामभ्यनुज्ञायां वर्त्तमानः सन् शत्रून् जय ॥ मध्ये गवास्युद्यच्छति । "अपाममनसा" । व्याप्नवन्तो मनसा वयम् । तदुपरिक्रान्तमर्गः धनुरत्यागासुपस्पृ

(१) वाजपेयनप्रथमवद्धृत्य दक्षिणस्यो वेदिं श्रोणौ युनक्ति पूर्वं वन्मित्रावरुणयोरिति चतुर्भिरिति । अव्यथायैत्वेति सुन्वन्नारोहति । मरुतामिति दक्षिणधुर्यं प्राजति इति । १५ । ६ । १५ । १८ ॥ २१ ॥

शति । "समिन्द्रियेण संगताः स्म वयमिन्द्रियेण वीर्येण ॥२१॥ अग्रेणशालामुद्गच्छति (१)। "मात इन्द्र"। ऐन्द्री त्रिष्टुप्। अत्र द्वितीयोर्द्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात्। "तिष्ठारथमधियं वज्र हस्त"। अडर्थे लोट्। यं रथमधितिष्ठसि हे वज्रहस्त यस्मिंश्चावस्थितः "आरश्मीन्देवयमसे"। आयमसि आयच्छसि रश्मीन्प्रग्रहान् हे देव स्वश्वान् शोभनाश्वान्। इदानीं प्रथमोर्द्धर्चो व्याख्यायते। व्यवहितपदसंबन्धः प्रायः। तस्मिन्रथे ते तव रत्नभूते वयम् "अयुक्तासः"। 'आज्जसेरसुक्'।

माते। मातंऽइन्द्रतेव्वयन्तुंराषाडयुंक्तासोऽअब्रुंह्मताव्विदंसाम॥
तिष्ठारथमधियंव्वंज्रहस्तारुश्मीन्देवयमसेस्वश्श्वान्॥ २२॥ अ

"मा विदसाम"। इसुउपक्षये कर्मणि लकारः। मा विदस्येमहि मा उपक्षीयेमहि। हे इन्द्र "तुराषाट्" तूर्णं सहत इति तुराषाट् तस्य संबोधनं हे तुराषाट्। त इति द्वे पदे अत्रानुदात्ततयोरेकोनर्थकः। माविदस्येमहीत्युक्तम् तदुपमया दर्शयितुमाह। "अब्रह्मता"। लुप्तोपममेतत। अब्रह्म ते तत्र। ब्रह्मविज्ञानानन्दस्वभावमविनश्वरम् तस्यभावो ब्रह्मता नब्रह्मता

(१) उदकुमीदित्याभिमन्त्रयते (पिण्डादुत्तरित्तमम्)। का० १६। २। २०॥ २२॥

अवहमता। यथा वृहमभावादन्यद्विदसग्रेत् एवं माविदसग्रेमहीत्युपमार्थः ॥ २२ ॥ चत्वा-
रिरथविमोचनीयानि जुहोति (१) "अग्नये गृहपतये स्वाहा" "सोमाय वनस्पति" रूपाय।
मरुतां संबन्धिने ओजसे। इन्द्रस्य संबन्धिने इन्द्रियायवीर्याय। भूमिमवेक्षते। "पृथिवि

ग्नयेगृहपंतये। अग्नयेंगृहपंतयेस्वाहासोमांयवनस्पतयेस्वाहामरु
तामोजंसेस्वाहेन्द्रस्येन्द्रियायस्वाहां। पृथिंविमातर्मामांहिꣳसी
र्मोऽअहन्त्वाम् ॥ २३ ॥ हꣳसःशुंचिषत्। हꣳसःशुंचिद्वसुरन्तरि

मातः माहिंसीर्माम्"। मो अहं त्वाम्। मो च त्वाम् अहं हिंसिषम् ॥ २३ ॥ अव-
तरति। "हꣳसः शुचिषत्"। "सप्तपञ्चपरवृह्माभिधायिनी अतिच्छन्दा अतिजगती

(१) उपनिरय स्रुदमभिजुहोतग्रात्वा जिघमींति व्यतिषक्ताभ्यामृग्भ्यांमाहुतीस्रुवेणाश्वपदे। का० १६। २ ॥ २२ ॥ आज्यं-
संस्कृत्य विष्णुसमीपे उपविश्य स्रुदमभि अश्वपदे मृत्पिण्डोपरिस्थिताश्वपदमुद्राया मात्वा आविन्धतद्वृति ऋग्भ्यां व्यति-
षक्ताभ्यां स्रुवेणाहुती द्वेजुहोति, व्यतिषङ्गश्चैवम् मात्वा जिघमींति पूर्वस्याः पूर्वार्धं पृथु तिरस्वेति पूर्वस्या उत्तरार्धंच
पठित्वा द्वितीयाहुतिरिति ॥ २३ ॥

तिश्रुतिः"। "हंसः शुचिषत्"। हन्त्यध्वानमिति हंसो भगवानादित्यः शुचिषत्। शुचौ दीप्तौ सीदतीति शुचिषत्। य आदित्यरूपेण शुचिषत्। यश्च वसुर्वासविता वायुरूपेणा-न्तरिक्षे सीदति। यश्च होता आह्वाता अग्निरूपेण वेदौ सीदति। यश्चअतिथिरूपेण दुरोणे गृहे सीदति। यश्च नृषु मनुष्येषु प्राणभावेन सीदति। यश्च वरेषूत्कृष्टेषु सीदति। यश्च ऋते सत्ये सीदति। यश्च व्योमसु अन्तरिक्षेषु सर्वेषु सीदति। एवं

चुसद्धोतावेदिषदतिथिर्दुरोणसत्॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजाऋतजाअद्रिजाऋतम्बृहत्॥२४॥ इयंदसि। इयंदस्यायु

सर्वत्रस्थितिभावेन स्तुत्वा अथेदानीं सर्वत्रोत्पत्तिद्वारेण स्तौति। यश्च "अब्जा"। अप्सु जायत इत्यब्जा। यश्च गवि पृथिव्यां चतुर्विधभूतग्रामरूपेण जायते। यश्च "ऋते" सत्ये जायते। यश्च "अद्रौ" पाषाणे अग्निरूपेण जायते मेघोऽप्यद्रिरुच्यते। मेघे वा उद-करूपेण जायते। तत् "ऋतम्"। ऋ गतौ। सर्वतो गतं परब्रह्म। "बृहत्"। परि-वृद्धम्। "अनन्त" मपर्य्यन्तम्। एवं परब्रह्मवादिनाऽस्य मन्त्रस्य तत्परब्रह्मप्रत्यय-

तरामीति वाक्यशेषः ॥ २४ ॥ उपस्पृशति शतमानौ "इयदसि"। इयदिति परिमाणवचनोयं शब्दः। शतमानमसि। "आयुरसि"। "आयुर्हि" "रुणमि" तिश्रुतिः। "आयुर्मयि धेहि"। यो हि यदात्मको भवति स तद्दातुमुत्सहते। यस्माच्छतमानं हिरण्यत्वमसि तस्मात् शताब्दपरिमाणमायुर्मयि धेहि। "युङ्ङसि" युनक्ति यज्ञं संभारनिवापेन दक्षि-

ण्यायुर्म्मयिं धेहि युङ्ङसि वर्च्चोसि वर्च्चो मयिं धेह्यूर्गस्यूर्ज्जं मयिं धेहि ॥ इन्द्रस्य वां वीर्य्यकृतो बाहूऽअभ्युपावहरामि ॥ २५ ॥ (५) स्योना

णादानेन वेति युङ्। "वर्चोसि"। वर्चस्तेजः। यस्मात्त्वं वर्चोसि अतोस्माभिः प्रार्थ्यसे। "वर्चो मयि धेहि"। औदुम्बरीं शाखामुपस्पृशति। "ऊर्गस्यूर्जं मयि धेहि"। ऊर्जमन्नमुच्यते। अवहरतिबाहू। "इन्द्रस्यवाम्"। यौ इन्द्रस्य यजमानस्य वां युवां वीर्यकृतो वीर्यकारिणः संबन्धिनौ बाहूतौ अभ्युपावहरामि मैत्रावारुणीं पस्या प्रति ॥ २५ ॥ आसंदीं

निदधाति। "स्योनासि"। स्योनमितिसुखनाम। स्योनासि सुखरूपासि। "सुषदासि"। सुखेन यस्यां सीदन्ति सा तथोक्ता। "क्षत्रस्य योनि" स्थानमसि। सुन्वन्तमस्यामु-पवेशयति। "स्योनामासीद"। सुखरूपामा सन्दीमासीदअधिरोह। "सुषदामअधिरोह" च। क्षत्रस्य स्थानमधिरोह ॥ २६ ॥ यजमानस्य उरोभिमृश्य जपति। "निषसा-

सिं सुषदासिक्षत्रस्ययोनिरसि। स्योनामासीदसुषदामासीदक्षत्र स्ययोनिमासीद ॥ २६ ॥ निषसाद। धृतव्रतोवरुणःपस्त्यास्वा। साम्राज्ज्यायसुक्रतुः ॥ २७ ॥ अभिभूरसि। अभिभूस्येतास्तेपञ्च

दधृतव्रतः"। वारुणी गायत्री। अधियज्ञं यजमानो वरुणः निषसाद निषण्णः धृतव्रतः। धृतं व्रतं कर्म येन स तथोक्तः। धृतव्रतो वै राजा न वा "एषसर्वस्मा इव वदनाय न" सर्वस्मा इव कर्मणे "यदेव साधु वदेद्यत्साधु कुर्यात् तस्मै वा एषश्रोत्रियश्चेति" श्रुतिः। "पस्त्यासु" प्रजासु। आधिपत्त्यनेत्युपसर्गादर्थपरिपूर्तिः। "साम्राज्याय"। "सम्राड्भावायेति" श्रुतिः। "सुक्रतुः"

सुकर्मा। शोभनप्रज्ञो वा ॥ २७ ॥ पञ्चाक्षान्याक्षावावपति । "अभिभूरसि"। इतक्षेता द्वापरकलयश्चत्वारोऽक्षाः पञ्चमो रमणः। तत्र कलिः सर्वानयान् अभिभवति स उच्यते। यजमानो वा तत्सम्बन्धेन। "अभिभूरसि"। अभिभवितासि। एतास्तवपञ्चदिशः कपटोपल-

दिशः॥ कल्पन्ताम्ब्रह्मँस्त्वम्ब्रह्मासिसवितासिसत्यप्रसवोवरुणोसिसत्यौजाऽइन्द्रोसिविशौजारुद्रोसिसुशेवः॥ बहुकारश्रेयस्करभूयस्करेन्द्रस्यवज्रोसितेनमेरध्य ॥ २८ ॥ अग्निः। पृथुः। अग्निःपृथुर्द्धर्म्मणस्पतिर्ज्जुषाणोऽअग्निःपृथुर्द्धर्म्मणस्पतिराज्यस्य

क्षिताः क्लृप्ताः भवन्तु। ब्रह्मन्निति प्रथममामन्त्रयते यजमानः ब्रह्माणम्। त्वं ब्रह्मासि सवितासि सत्यप्रसव इति। ब्रह्माह। त्वमेव ब्रह्मासि भवसि सविता चासि सत्याभ्यनुज्ञः। द्वितीयं मन्त्रमाह त्वं ब्रह्मासि वरुणोसि सत्यौजाः सत्यमोजो यस्य स सत्यौजाः। तृतीयं

प्रत्याह त्वं ब्रह्मासि इन्द्रस्य त्वमसि विशौजाः विश्व ओजो यस्य स विशोजा इन्द्रप्राप्ते। विशौजा इत्यन्याय्यसमासः अतएव पदकारो नावगृह्णाति। चतुर्थं प्रत्याह। त्वं ब्रह्मासि रुद्रस्य त्वमसि सुशेवः। शेव इति सुखनाम। शोभनं सुखयिता॥ सुमङ्गलनामानं द्रनयति। "बहु-कारः" बहु करोतीति बहुकारः। "श्रेयस्करः"। श्रेयः करोतीति श्रेयस्करः। भूयः करोतीति "भूयस्करः" तेषां सम्बोधनम् हेबहुकार श्रेयस्कर भूयस्कर। स्फ्यमस्मै प्रय-च्छति। "इन्द्रस्य वज्रोसि"। यतः "इन्द्रोह यत्र वृत्राय वज्रं प्रजहार" इत्युपक्रम्य

**व्वेतुस्वाहास्वाहांक्रताः सूर्य्यस्यरश्मिम्मभिंर्य्यतद्वंसजातानांम्मद्ध्य**

"स स्फ्यास्ततोयं चेत्यादिना" श्रुतिग्रन्थे उक्तः अतस्त्वां ब्रवीमि तेन हेतुना मे मम यजमानं रध्य। रध्यतिर्वशगमने। वशवर्तिनं कुरु। "यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवतीति" श्रुतिः ॥ २८ ॥ हिरण्यमस्मिन्निधायाभिजुहोति। "अग्निःपृथुः"। योयं देवानामग्निः पृथुः इतरस्मादग्नेः "धर्मणस्पतिः" धारणस्पतिः स "जुषाणः" सेवमानो

(१) अभ्र्या पिण्डं खनति देवस्य त्वेति। का०। १६। २। २३॥ २८॥

शु० वा प्रीयमाणो वा । "अग्निः पृथुः धर्मणस्पतिः आज्यस्य" घृतस्य "वेतु" पिबतु
य० "स्वाहा" सुहुतं चैतद्भवत्विति भावः । अत्रानिर्वपति । "स्वाहाकृताः" हे अग्नेः स्वाहाकारपू- १०अ०
सं० र्विकयाहुत्या तर्पिताः सन्तः सूर्य्यस्य रश्मिभिर्यतध्वम् स्पर्द्धां कुरुत । "सजातानां" समान-
२२१ मध्याय ॥२९॥ [४] सवितुस्त्वाप्प्रसवितु । सरस्वत्या वाचा त्वष्टुरूपैः
उ० पूष्णापशुभिरिन्द्रेणास्मे बृहस्पतिनाब्रह्मणावरुणेनौजसाग्नि
भा० जन्मनां व भ्रातृणां क्षत्रियाणां वा । मध्यमे । मध्यान्त्यः । मध्ये भवो मध्यमः ।
मध्यमे प्रदेशेऽवस्थानाय यजमानस्य । यतध्वमित्यनुवर्त्तते ॥ २९ ॥ सर्पति । (१) "सवितुस्त्वाप्र-

(१) कृष्णाजिनमास्तीर्योत्तरतस्तस्मिन् पुष्करपर्णं अपां पृष्ठमिति विमाद्ध्वे नद्दिवमिति। का० । १६ । २ । २४ ।२५॥ चित्यिष्ठोत्त-रभागे प्राग्ग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्यं तत्रापां पृष्ठमिति पादत्रयात्मकमन्त्रेण कर्मलिनीपत्रमास्तृणाति तच्चिपुलं करोति इति सूत्रार्थः पुष्करपर्णं संबोध्योक्तिरियम् । ओभांवो वरिमा ॥ २९ ॥

(१) आलभते उभे कृष्णाजिनपुष्करपर्णे सहैव स्पृशति शर्म च स्थ इति अग्नेः सुखकारिणी कवचवद्रक्षकौ च स्थः का० । १६ । २ । २६ ॥ ३० ॥

शिवम्

सवित्रा" । सवित्रा अभ्यनुज्ञातस्य कर्त्रा प्रसूतः प्रसर्पामि । एवं सरस्वत्यादिभिर्योजनी-
यम् । "इन्द्रेणास्मे" । अस्मे इति इह तृतीयान्तम् । इन्द्रेण मया । शेषं सुबोधम्
॥ ३० ॥ इत उत्तरं चरकसौत्रामणी । अश्विनोरार्षम् । सुरां संदधाति (१) "अश्विभ्यां
पच्यस्व" । पाको नामान्नविपरिणामज्येष्ठता । "सरस्वत्यै" । "इन्द्राय सुत्राम्णे" । शोभनत्रा-

नाजं सुत्रासोमेन्द्रात्सुत्राविष्णुनाव्देशम्याद्देवतांयाप्रसूंतः प्रसर्पामि
॥ ३० ॥ [ १ ] अश्विभ्यांम्पच्यस्व । अश्विभ्यांम्पच्यस्वसरस्व
त्यैपच्यस्वेन्द्रायसुत्राम्णेपच्यस्व ॥ वायुःपूतःपवित्रेणप्रत्य

णाय सुत्रातव्याय वा । भैषज्यं हीन्द्रस्य कर्त्तव्यं सौत्रामण्या । सुरां पुनाति ॥ "वायुःपूतः" ।
सौमी गायत्री । यः सोमः वायुना पूतः । सोमः प्रथमं पूतिगन्ध आसीत् ततो देवैर्वा-

(१) पिण्ड पुरीषोसीति (स्पृशति) पाणिभ्याम्परिगृह्यात्येनं दक्षिणोत्तराभ्यां दक्षिणः साम्निस्त्वामग्ने इति षड्भिः सर्वं सन्नवत्वा पुष्करपर्णे निदधातीति । दक्षिणेनाग्निं छत्वोभाभ्यां कराभ्यां सर्वं पिण्ड त्वामग्न इति षडृचेन सन्नगृहीत्वा पुष्करपर्णे स्थापयतीति सूत्रार्थः ॥ १६ । २ । २७ - २८ । ३ । १ । अथर्वा ऋषिः, प्राणो वा ।

युक्तः अपहृतविरूपगन्धं सोमं कुर्वंति ततो वायुनाऽपहृतः सोमस्य गन्धः। ऐन्द्रवायवब्राह्मणे एतत्प्रतिपादितम् तदेतदस्याभिर्व्याख्यातं विभक्तिव्यत्ययेन। यद्वा। यो वायुरूपः सोमः पूतः यस्य पवित्रेण प्रत्यङ् नीचैः अधोमुखम् अतिस्रुतः। स्रु गतौ। अतिक्रम्य गतः। स सोमः। इन्द्रस्य युज्यः समानयोगी च सखा च समानख्यानः। कथमिन्द्रं हिनस्तीति

ङ्क्सोमोऽअतिंस्रुतः॥ इन्द्रंस्ययुज्ज्यः सखा॥ ३१॥ कुविदङ्ग। यवंमन्तोयवंञ्चिद्यथादान्त्यनुपूर्व्वंव्वियूयं। इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमंऽउक्तिंय्यजन्ति। उपयामगृहीतोस्यश्विभ्यान्त्वा

ख्येषः॥ ३१॥ ग्रहं गृह्णाति। "कुविदङ्ग"। अनिरुक्ता सौमी त्रिष्टुप्। कुविदिति बहुनाम। अंगेति क्षिप्रनाम। हे सोम यथा केचिज्जनपदाः कुविद्बहुव्वेतम् अङ्ग क्षिप्रम् यवमन्तः बहुयवाः यतः सोमः यवं चित्। चिच्छब्दो वितर्के। यवं वितर्श्य दान्ति। दाप् लवने। लुनन्ति। "अनुपूर्वम्"। आनुपूर्वेण वियूय पृथक्कृत्य अभिमिश्रित्य एवम् "इहेहैषां

क्षणुहि भोजनानि" भोग्यानि वस्तूनि । "ये बर्हिषो नम उक्तिं यजन्ति" । ये यजमाना बर्हिषः उपरिस्थिताः नमउक्तिम् । नम इत्यन्ननाम । उक्तिर्वचनम् । हविर्लक्षणं नमोऽन्नमादाय उक्तिं यज्यामभिधाय यजन्ति यागं कुर्वन्ति । "उपयामगृहीतोसि" इत्यादि व्याख्यातम् ॥ ३२ ॥ "युवᳬं सुरामम्" । अनुवाक्या । पुत्रमिव याज्या । अनुष्टुप्त्रिष्टुभौ अश्विसरस्वतीन्द्रदेवाते । तवे-

न्त्वासरस्स्वत्यैत्त्वेन्द्रायत्त्वासुत्राम्म्णे ॥ ३२ ॥ युवᳬंसुरामम् । युवᳬं सुराममश्विनानमुंचावासुरेसचा ॥ विपिपानाशुंभस्पतीऽइन्द्रङ्कर्म्मस्वावतम् ॥ ३३ ॥ पुत्रमिंवपितरौं । पुत्रमिंवपितरांवश्विनोभेन्द्रा

तिहासमाचक्षते । नमुचिर्नामासुर इन्द्रस्य सखिभूत आस । स इन्द्रस्य विश्वस्तस्य सुरया वीर्यं पपौ । सोऽश्विनौ च सरस्वतीं चोपाधावत् पीतवीर्योऽहं नमुचिना ततोपां फेनं वज्रमसिञ्चत् तेनेन्द्रो नमुचेः शिरश्चिच्छेद । तत्र लोहितमिश्रः सुरासोमोतिष्ठत् तदेतदुच्यते । हे अश्विनौ युवां सुरामम् । सुरामयं सोमं सुरमणीयं वा । नमुचौ आसुरे अवस्थितम्

"सचा"। सहभूतया एकीभूय। "विपिपाना"। विविधं पिबन्तौ। हे शुभस्पती स्वामिनौ इन्द्रं कर्मसु निमित्तभूतेषु स्वकर्मकरणार्थम् "आवत" पालयतं स्वकर्मक्षमं कुरुतमित्यर्थः ॥ ३३ ॥ "पुत्रमिव पितरौ"। यथा मातापितरौ पुत्रं पालयतः एवमुभावप्यश्विनौ हे इन्द्र त्वाम् "अवथुः" पुरुषव्यत्ययः। त्वां पालितवन्तौ। काव्यैः कविकर्मभिः मन्त्रदर्शनैरित्यर्थः। "दंसनाभिः"। दंस इति कर्मनाम। कर्मभिश्च मन्त्रैश्चेत्यर्थः। कथमवगम्यते अश्विनौ

## वथुः काव्यैर्दंसनाभिः ॥ यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥ ३४ ॥ [४] ॥ ८ ॥ इति दशमोऽध्यायः १० ॥

त्वां पालितवन्तावित्याह। "यत्सुरामं व्यपिबः शचीभिः"। यस्मात्त्वं सुरामयं विविधं पीतवानसि। शचीभिः कर्मभिः। नमुचेः शिरश्छेदनं कर्म कृत्वा स्ववीर्येण। नह्यदृढ एतत्कर्म कर्तुं शक्त इत्यभिप्रायः। "सरस्वती त्वा मघवन्नभिष्णक्"। सरस्वती च त्वां हे मघवन् धनवन् अभिष्णक्। अभिष्णक्शब्दः कण्ड्वादिषु पठ्यते तस्यैतद्रूपम् अभिषज्येताभिषजितवती सरस्वती च त्वाम् ॥ ३४ ॥ इति उवटकृतौ मन्त्रभाष्ये दशमोऽध्यायः ॥ १० ॥

अष्टावध्याया अग्निसम्बन्धास्तान्प्रजापतिर्ददर्श । साध्यावा ऋषयः प्रजापतेः प्राणभूताः । अथ पञ्चधा दर्शितः प्रजापतिः प्रथमां चितिमपश्यत् प्रजापतिरेव तस्या आर्षेयम् । देवा द्वितीयां चितिमपश्यन् त एव तस्या आर्षेयम् । इन्द्राग्नी च विश्वकर्मा च तृतीयां चितिमपश्यन् त एव तस्या आर्षेयम् । ऋषयश्चतुर्थीं चितिमपश्यन् ऋषय एव तस्या आर्षेयम् । परमेष्ठी पञ्चमीं चितिमपश्यत् परमेष्ठ्येव तस्या आर्षेयमिति । अथवा प्रतिकर्मद-

युञ्जानऽप्प्रथमम् । युञ्जानऽप्प्रथमम्मनंस्तत्वाय सविताधियंः ॥ अग्ग्ने ज्ज्योतिंन्निचाय्यंपृथिव्याऽअध्याभंरत् ॥ १ ॥ युक्तेनमनंसा ।

र्शिनः । सवितैतानि सावित्राण्यपश्यदिति । "युञ्जानः प्रथमं मनः" । अष्टौ कण्डिकाः सवित्रा दृष्टाः सवितृदैवत्याः ताभिः सन्तताभिराहुतिर्हूयते । प्रथमानुष्टुप् । आरम्भे सविता युञ्जानः । युञ्जानः प्रथमं मनः ततोनन्तरम् "तत्वाय" । तनु विस्तारे । ल्यो यप् छान्दसः उपजनः । "तनित्वा" । विस्तार्य्य । "धियः" बुद्धीः । मनसा पर्य्यालोच्य बुद्ध्या

(१) युंजानएकादशप्रतूर्त्तं ठं॰षोडशदेवस्यत्वादशापोदेवीर्द्वादिशापोह्येकादशादितिश्चापंचाकूतिमष्टादशसप्तत्रशीतिः ॥

वावधाय्यै त्यर्थः । "अग्नेर्ज्योतिः" । अग्निसंबन्धि ज्योतिः । पञ्चसु पशुषु प्रविष्टम् निचाय्य । उपलभ्य । यथा वा अग्निः समिद्धोदीप्यत इत्यादिना । ततः पश्वन्वन्विताया: "पृथिव्याः अध्याभरत" अध्याहृतावानग्निम् इष्टकां कृत्वा चितवानग्निम् । अतौ प्रजापतिः कर्त्तोपदिष्टः तदनुज्ञया इदानीं तना यजमानाउपदिश्यन्ते । "प्रजापतिर्वै युञ्जान" इति ॥ १ ॥ युक्तेन मनसा । गायत्री । युक्तेन एकाग्रेण मनसा वयं देवस्य सवितुः सवे" । प्रसवे वर्त्तमानाः स्वर्ग्याय स्वर्गसाधनाय कर्मणे । शक्त्या । यथाशक्त्या प्रयत्नं कुर्म इतिशेषः ॥२॥

व॒यन्दे॒वस्य॑सवि॒तुः स॒वे । स्व॒र्ग्या॑य॒ शक्त्या॑ ॥ २ ॥ यु॒क्त्वाय॑ सवि॒ता । दे॒वान्त्स्व॑र्य॒तो धि॒या दिवं॑म् । बृ॒हज्ज्योति॑ः क

युक्त्वा" । अनुष्टुप् । सविताप्रसुवातितानिति तदो दर्शनादिह यधोगः कर्त्तव्यः नित्यसंबन्धौ हि यत्तदौ । "युक्ताय" । यकार उपजननोनर्थान्तरवचनः । युक्त्वाय सविता यत् देवान् अग्रकर्मणि अन्येन कर्मणा स्वर्यतः स्वर्लोकं गच्छतः "धिया" बुद्ध्या कर्मणा वा । "दिवं" द्योतनं स्वर्गम् । "बृहत्" महत् 'ज्योति" रादित्यलक्षणम् । आत्मत्वेन "करिष्यतः" संस्कुर्वतः ।

"सविता प्रसुवाति" प्रसौति अभ्यनुजानाति । "तान्" देवान् ॥ ३ ॥ "युञ्जतेमनः" इत्यादि व्याख्यातम् । इयांस्तु विशेषः । प्रजापतिर्विप्रः इहद्विपश्चिदित्युच्यते । देवाः विप्राः ॥ ४ ॥ "युजेवाम्" । त्रिष्टुप् । दम्पतीयजमानौ वामित्यनेन पदेनोच्यते । "युञ्जे" युनज्मि । "वां"

रिष्ष्यतः सवितापप्रसुवातितान् ॥ ३ ॥ युञ्जतेमनः । युञ्जतेमनऽउत युञ्जतेधियोव्विप्पाव्विप्प्रस्यबृहतोव्विपश्चितः ॥ व्विहोत्राँदधेव्वयुना विदेकऽइन्महीदेवस्यसवितुःपरिष्टुतिः ॥ ४ ॥ युजेवाम्ब्रह्मपूर्व्यं न्नमोभिर्व्विश्लोकऽएतुपथ्येवसूरेः । शृण्वन्तुव्विश्वेऽअमृतस्यपुत्त्रा

युवाभ्यामर्थाय । "ब्रह्मपूर्व्यन्नमोभिः" । प्राणाः सप्त ऋषयो ब्रह्मणाब्रह्मशब्देनोच्यन्ते । पूर्व्यशब्देन च नमोभिरन्नैः सहितम् । इयमेवाहुतिरन्नशब्देनोच्यते । किं प्रयोजनमिति चेत् । "विश्लोकएतुपथ्येवसूरेः" । विविधमेतु आगच्छतु श्लोकः कीर्तिः सूरेः परिष्ठ-

तस्य। यजमानस्य। कथमिव। "पथेग्व"। पथः अनपेता पथ्या। यज्ञमार्गं प्रवृत्ताहुतिरुभयलोकसंचारिणी भवति। एवं यजमानस्योभयलोकसंचारी श्लोको भवत्वित्यभिप्रायः। "शृण्वन्तु" च "विश्वे" सर्वे। "अमृतस्य" अमरणधर्मिणः प्रजापतेः "पुत्राः देवाः कीर्तिम्। "आये धामानि दिव्यानि तस्थुः। "आतस्थुः आश्रिताः ये देवाः धामानि स्थानानि दिव्या-

ऽआयेधामानिदिव्यानितस्थुः॥ ५॥ यस्यप्रयाणम्। यस्यप्रयाणमन्वन्यऽइद्ययुर्देवादेवस्यमहिमानमोजसा। यःपार्थिवानिव्वि

नि॥ ५॥ "यस्य प्रयाणम्"। जगती। सवितेव प्रजापतिरत्राभिप्रेयते। व्यवहितपदप्रायमिदं मन्त्रवाक्यम्। यस्य देवस्य प्रयाणम् "अनु" प्रगमनमनु। "अन्ये" "देवाययुः"। जग्मुः। इच्छब्दोनर्थकः। "महिमानमोजसा"। महिमानं महाभाग्यं विभूतिम् ओजसा बलेन ययुर्देवाः। "यः" स सविता देवः "पार्थिवानि रजांसि विममे महित्वना"। लोका रजांस्युच्यन्ते। पृथिवीप्रभृतीन् लोकान्विममीते स्वकीयेनमहाभाग्येन। "सएतशः" एतज्जग-

त्स्थावरजङ्गमं प्राणोभावेनशेत इति सविता एतस्य इत्युच्यते। यद्वा। एतश इत्यश्वना-मसु पठितम्। सोश्वरूपेण समस्तमेतज्जगदवष्टभ्य स्थितः। तदुक्तम्। "उषा वा अश्व-मेध्यस्य शिरः" इत्यादिना। सूरादश्वंवसवोनिरतष्टेति च ॥ ६ ॥ "देवसवित" रिति व्याख्या-

मुमेसऽएतंधोरजाᳬंसिदेवःसंवितामंहित्वना ॥ ६ ॥ देवंसवितः। देवंसवितःप्रसुंवयुज्ञम्प्रसुंवयुज्ञपंतिम्भगाय ॥ द्विव्योगंधुर्वःकेतपूः केतन्नःपुनातुव्वाचस्पतिर्व्वांचन्नःस्वदतु ॥ ७ ॥ इमन्नोदेवसवित र्य्युज्ञम्प्रणंयदेवाव्व्यंᳬसखिविदᳬंसत्राजितंन्धनजितᳬंस्वर्जितम्।

तम्। इयांस्तु विशेषः। वाचस्पतिर्वाचं नः स्वदतु इति वाचा वा इदं कर्म प्राणो वाच-स्पतिरिति ॥ ७ ॥ "इमं नो देव"। आश्ववसानाघयुः। इमं यज्ञं नोस्माकं हे देवसवितः प्रणय प्रापय। कथंभूतं यज्ञम्। "देवाव्यम्"। देवा यस्मिन्नव्यन्ते तर्प्यन्ते स देवाव्यः "सखिविदम्"। सखायो यस्य विद्यन्त ससखिवित् सखीन्वा यो विन्दते ससखिवित् तं सखि-

विदम्। "सत्राजितम्" सत्राशब्दः सत्यवचनः। सत्यं ब्रह्म यो जयति स सत्राजित् तं सत्राजितम्। "धनं" यो गवादिजयतीति धनजित् तं धनजितम् स्वर्गलोकं यो जयति स स्वर्जित। तंस्वर्जितं "ऋचास्तोमम्" गायत्र्यनवसाना। ऋचा ऋग्वेदेन सह स्तोमं त्रिवृदादिसमर्द्धय। गायत्रेण साम्ना सह रथंतरं समर्द्धय। "बृहत्" महत्। कथंभूतं महत्। "गायत्रवर्त्तनि"।

ऋचास्तोमꣳ समर्द्धय गायत्रेण रथन्तरम्बृहद्गायत्रवर्त्तनि स्वाहा ॥ ८ ॥
देवस्य त्वा। सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥
आददे गायत्रेण च्छन्दसाङ्गिरस्वत् पृथिव्याः सधस्थादग्निम्पुरीष्य

गायत्रं यस्य बृहतो वर्तनि वर्त्मभूतम् ॥ ८ ॥ अभ्रिमादत्ते "देवस्यत्वा"। व्याख्यातम्। "आददे"। गृह्णामि अहं गायत्रेण च्छन्दसा। "अङ्गिरस्वत्"। अङ्गिरसा तुल्यमङ्गिरोवदिति प्राप्ते 'अयस्मयादीनिच्छन्दसी तिभसंज्ञा। अतो तु अग्निवदिति व्याख्यातम्। अभ्रिरुच्यते। त्वं च गृहीता सती पृथिव्याः सधस्थानात्। समानस्थानात्। "अग्निं पुरीष्यं

प्रशव्यस्" । "अङ्गिरस्वदाभर" । अङ्गिरसा तुल्यम् अग्निवद्वा आभर । हृग्रहोर्भः छन्दसि हस्येति हकारस्य भकारः । आहर । त्रैष्टुभेन छन्दसा अङ्गिरस्वत् ॥ ९ ॥ "अश्विरसि" । नारी स्त्री त्वमसि । किञ्च "त्वया वयम् अग्निं शकेम" । खनितुं "सधस्थे" ।

मङ्गिरुस्वद्दाभंरु त्रैष्टुंभेनु छन्दंसाङ्गिरुस्वत् ॥ ९ ॥ अभ्रिंरसि । नारिंरसि त्वयां व्वयमुग्निᳬं शकेम खनिंतुᳬं सुधस्थऽआ । जागंतेनु छन्दं साङ्गिरुस्वत् ॥ १० ॥ हस्तंऽआधायं । सविता बिभ्रुदभ्रिᳬं हिरुण्ययीम् ॥ अग्नेर्ज्योतिर्निचाय्यं पृथिव्याऽअद्ध्याभंरुदानुंष्टुभेनु छन्दं

आ । समानस्थानेषु वर्त्तमानं पृथिव्याः । आकारोऽनर्थकः । जागतेन छन्दसा । अङ्गिरस्वत् ॥ १० ॥ अभ्रिमभिमन्त्रयते । हस्त आधाय । अनुष्टुप् यजुरन्ता । अनुष्टुभेनेत्यादि यजुः । हस्ते अभ्रिमादाय सविता ततस्तामेवाग्निं बिभ्रत् धारयन् । "हिरण्ययीं" मरुतमयीं छन्दोमयीं वा । "अग्नेर्ज्योतिर्निचाय्य" निभाल्य दृष्ट्वा ततः "पृथिव्या" अपि सकाशात् "आभ-

मु०
य०
सं०
२२७
उ०
भा०

रत्" आहूतवान् आनुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ११ ॥ अश्वगर्दभाजानभिसन्नयते । यथा-सेख्यम् । प्रतूर्त्तंवाजिन्निति तिसृभिर्ऋग्भिः तिस्र एत एवाश्वादयो देवताः । आद्या आ-स्तारपङ्क्तिः । हेवाजिन् प्रतूर्त्तम् त्वरतेरेवैतद्रूपम् प्रकर्षेण तूर्त्तं तूर्णम् "आद्रव" आ-गच्छ । "वरिष्ठामनुसंवतम्" । वरिष्ठामुत्तमां संवतमनु । संपूर्वस्य वनोतेः क्विए एतद्रू-

साङ्गिरस्वत् ॥११॥ [११] प्रतूर्त्तंवाजिन् । प्रतूर्त्तंवाजिन्नाद्रवंवरिष्ठा मनुसंवतम् ॥ दिवितेजन्मपरममन्तरिक्षेतवनाभिःपृथिव्यामधि योनिरित् ॥ १२ ॥ युञ्जाथाᳪरासभम् । युञ्जाथाᳪरासभंयुवम्

पम् । संभजनमुच्यते । क्षिप्रतमं वाजिन्नागच्छ उत्कृष्टं संभजनमन्वित्यभिप्रायः । तदु-त्कृष्टं संभजनमधुनादर्शयितुमाह । "दिवि द्युलोके" ते "तव आदित्यरूपेण" जन्मभवि-ष्यति । आगतस्य सतः "परम्" मुत्कृष्टम् किञ्च । "अन्तरिक्षे तव नाभिः" उदरम् "पृथिव्याम् अधि" उपरि "योनिः" स्थानं पादावित्यर्थः । (१) उदितिपादपूरणे । विरा-

११ अ०

शिवम्

२२७

इत्युपेणाश्वः स्तूयते । तदुक्तम् "उषावाश्वस्य" मेध्यस्य शिर इति ॥ १२ ॥ रासभम-भिमन्त्रयते । "युञ्जाथाम्" । गायत्री । अध्वर्युयजमानावुच्येते युञ्जाथां "रासभं" गर्दभम् युवम् । युवाम् "अस्मिन्यामे" अस्मिन्कर्मणि । "वृषा सेक्ता गर्दभः स ययोर्वसुधनं तौ वृषण्वसू तयोः संबोधनं हे वृषण्वसू । कथंभूतं रासभम् "अग्निं भरन्तम्" अग्निं संहरन्तम् ।

स्मिन्न्यामे॑ वृषण्वसू ॥ अग्निम्भरन्तमस्मयुम् ॥ १३ ॥ योगे॑यो गे तवस्तरम् । योगे॑योगे तवस्तरं॒ वाजे॑वाजे हवामहे ॥ सखाय॒ऽइन्द्र॑

अस्मयुम् अस्मान्कामयमानम् । "अस्मत्प्रेषितमि" तिश्रुतिः । युञ्जाथामिति संबन्धः ॥ १३ ॥ अजमभिमन्त्रयते । "योगेयोगे" । गायत्री । "योगे योगे तव स्तरम्" । तव इतिबलनाम कर्मणिकर्मणि बलिनमुत्साहवन्तमेतमजम् "वाजेवाजेहवामहे" । अन्ने अन्ने दातव्ये देवानां मनुष्याणां वाह्वयामः । हे "सखायः" ऋत्विग्यजमानाः । "इन्द्रम्" इन्द्रियवन्तं वीर्यवन्तम् । "ऊतये" । अवनाय । आह्वयाम इति संबन्धः ॥ १४ ॥

अश्वरासभवुक्कामयति । "प्रतूर्वन्नेहि" । विराड्रूपा यजुर्गर्भा । उर्वन्तरिक्षं वीहीति यजुः । अर्द्धर्चेनाश्वः स्तूयते । प्रतूर्वन् प्रत्वरमाण एहि आगच्छ । अवक्रामन् अशस्तीः । पादैरवष्टभ्य अशस्तीः । पाप्मनो दुष्टान् । अगमने को गुण इति चेत् । "रुद्रस्य भगवतो गाणपत्यम् गणपतित्वम् लप्स्यसे इति शेषः । अतो "मयोभूः" । सुखस्य भावयिता

भूतये ॥ १४ ॥ प्रतूर्व्वन्नेहि । प्रतूर्व्वन्नेह्यवक्क्रामन्नशस्तीरुद्रस्यगाणपत्यम्मयोभूरेहि ॥ उर्व्वन्तरिक्षंव्वीहिस्वस्तिगव्यूतिरभयानिकृण्वन्पूष्णासयुजासह ॥ १५ ॥ पृथिव्याः सधस्थात् । पृथिव्याः

भूत्वा एहि । रासभमुत्क्रामयति । उर्वन्तरिक्षं वीहि । उरुविस्तीर्णमन्तरिक्षं रक्षोभिरनाकुलितं विद्धि विविक्तमागच्छ । "स्वस्तिगव्यूतिः" स्वस्तीत्यविनाशनाम । गव्यूतिर्मार्गः भयवर्जितः । प्रभूतयवसोदकमार्गः सन् त्वम् "अभयानिकृण्वन्" कुर्वन्नृत्विग्यजमानानाम् । "पूष्णा" पृथिव्या "सयुजा" समानयोगिन्या सह । नैकः प्रपद्यताध्वानमित्यत्र तद्दर्शयति ॥ १५ ॥ अजमु-

त्क्रामयति। "पृथिव्याः सधस्थात्"। पृथिव्याः सहस्थानात् अग्निम् व्याख्यातम्। ब्रह्माध्वर्यु-र्यजमाना गच्छन्ति। "अग्निं पुरीष्यम्"। अच्छाभेराप्नुमिति शाकपूणिः। "अग्निं पशव्यम्" अङ्गिराइवअभिगच्छामः। यद्वा आप्तुं गच्छामः। अनड्वापुरुषमीच्यते। अग्निं पशव्यम् अङ्गिराइव संभरिष्यामः ॥ १६ ॥ वल्मीकवपामदाय छिद्रेण पिण्डमीच्यते (१)। "अन्व-

सधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभराग्निम्पुरीष्यमङ्गिरस्वद च्छेमोऽग्निम्पुरीष्यमङ्गिरस्वद्भरिष्यामः ॥ १६ ॥ अन्वग्निः। अ न्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः। अनुसूर्य

ग्निः"। आग्नेया त्रिष्टुप्। प्रजापतिरूपेणात्वाग्नि स्तूयते। "उषसामग्रम्" अनु योऽग्निः "अख्यत्"। ख्या प्रकथने। प्रकथितः। उषसामग्रमादित्यं योऽग्निर्दीप्यत इत्यर्थः। यश्च "अ-हान्यनुदीप्यते"। प्रथमः "आद्यः जातवेदाः"। जातप्रज्ञानः। अनुसूर्यस्य पुरुत्रा च रश्मीन्। यश्च सुर्यस्य रश्मीन् अनु पुरुत्रा बहुधा दीप्यते। "अनुद्यावापृथिवीआततन्थ"। यश्च द्या-

वाष्टथिव्यावनुस्वकीयं रश्मिजालम् आततन्य आतनोति। वभूथाततन्वे ति छन्दसि निपात्यते। तमग्निं पश्याम इतिशेषः॥ १७॥ अश्वमभिमन्त्रमते (१)। "आगत्यवाजी"। अनुष्टुप्। आगत्य आगम्य वाजी वेजनवानश्वः "अध्वानम्" पन्थानम् "सर्वामृधः" सर्वान्संग्रामान् पाप्मनः शमान् विधूनुते। अपनयति। "तस्मादुहैतदश्वस्य त्वा विधूनुते इति" श्रुतिः।

स्यपृकुत्वाचंरश्मीननुद्यावांपृथिवीऽआतंतंथ॥ १७॥ आगत्यं॑वा जी। आगत्वांव्वाज्यध्वांनर्ठ॒ सर्व्वा मृधोव्विधूंनुते॥ अग्निर्ठ॒सध स्त्थेमहृतिचक्षुंषानिचिंकीषते॥ १८॥ आक्र॒म्यं॑व्वाजिन्। आक्र

ततो गतश्रमः सन्। "अग्निंसधस्थे"। सहस्थाने पृथिव्यावर्त्तमानम्। "महति" उत्कृष्टप्रदेशे प्रवर्त्तमानम् चक्षुषानिचिकीषते" पश्यति। छान्दसोयं धातुः पश्यत्यर्थः॥ १८॥ अश्वेन पिण्डमधिष्ठापयति (१)। "आक्रम्यवाज्जिन्"। अनुष्टुप्। आक्रम्य। अवष्टभ्य। हे वाजिन्नश्व। "पृथिवीम् अग्नि मिच्छ" अग्नेरन्वेषणं "कुरु"। रुचिर् दीप्तौ। क्विप्।

दीप्त्या सह । यद्वा दीप्त्या निमित्तभूतया "त्वम्" । किञ्च "भूम्याह्रत्त्वाय" । इत्तु वर्त्तने । त्का । त्का यप्स्पर्शनार्थं इत्तिः भूमिः तत्प्रदेशं स्पर्शयित्वा "नः" अस्माकं "ब्रूहि" । कथय । "यतः" यस्मात् प्रदेशात् "खनेम" त मग्निं "वयम्" ॥ १९ ॥ अश्वं स्तौति पृष्ठस्योपरि पाणिं धारयन् । "द्यौस्तेपृष्ठम्" । बृहती । यस्य तव द्यौः पृष्ठं "पृथिवी च "सध-

म्स्यंत्वाजिन्नपृथिवीमुग्निमिच्छरुचात्वम् ॥ भूम्म्याऽवृत्त्वायनोब्रूहियतःखनेमतंव्वयम् ॥१९॥ द्यौस्ते । पृष्ठम्पृथिवीसधस्थमात्मान्तरिक्षऽसमुद्रोयोनिः ॥ व्विख्यायचक्षुषात्वमभितिष्ठपृतन्न्यतः ॥२०॥

उत्क्राम । महतेसौभगायास्म्मादास्थानाद्द्रविणोदाव्वाजिन् ॥ व्वय

स्थं" सस्थानं पादौ । "आत्मान्तरिक्षम्" । "समुद्र" उदकं योनि रुत्पत्तिस्थानम् । तं त्वामेवं प्रभावं ब्रूमः "विख्यायचक्षुषा" । निरीक्ष्य चक्षुषा । "त्वम् अभितिष्ठ" पादैः । "पृतन्यतः" । पृतनां संग्रामं ये कर्तुमिच्छन्ति ते पृतन्यतः तान् पृतन्यतः पुरुषान् ॥ २० ॥ अश्वमुत्क्र-

मयति । "उत्क्राम" । त्रिष्टुप् विराड् वा । उत्क्राम उद्गच्छ । "महतेसौभगाय" महते ऐश्वर्याय ।भगशब्द ऐश्वर्यवचनः । "अस्मादास्थानात् "अस्मादधिष्ठानात् यत्र त्वं तिष्ठसि । द्रविणं धनं ददतीति "द्रविणोदाः" यस्त्वं द्रविणोदाः हे वाजिन् । किञ्च । उत्क्रान्ते त्वयि "वयं स्याम" भवेम । "सुमतौ पृथिव्याः" शोभनायां मतौ पृथिव्याः । "अग्निं ख-

ᳪ स्यामसुमतौपृथिव्याऽअग्निङ्खनन्तऽउपस्थेऽअस्याः ॥ २१ ॥ उदक्रमीत । उदक्रमीद्द्रविणोदावाज्यर्वाकः सुलोकᳪ सुकृतम्पृथिव्याम ॥ ततः खनेमसुप्रतीकमग्निᳪ स्वोरुहाणाऽअधिनाकमुत्तमम् ॥ २२ ॥

नन्तः" अग्न्यर्थं पिण्डं खनन्तः । "उपस्थे" उत्सङ्गे "अस्याः" पृथिव्याः ॥ २१ ॥ अथैनमश्वमुत्क्रान्तमभिमन्त्रयते (१) । "उदक्रमीत्" त्रिष्टुप् । यतः प्रदेशादुदक्रमीत् उत्क्रान्तवान् । "द्रविणोदा" द्रविणस्य धनस्य दाता । "वाजी" वेजनवानश्वः । "अर्वा" अरणशीलः चञ्चल इत्यर्थः । "अकः" कृतवान् । "सलोकं शोभनं लोकं स्थानम् ।

"सुकृतं पृथिव्याम्। "ततः" तस्मात्प्रदेशा "खनेम"। "सुप्रतीकम्"। सुखं प्रतीकम्। सुमुख "मग्निम् स्वोरुहाणाः। स्वर्गं लोकमारोहन्तः। "अधि"। अधीत्य परिभावमैश्वर्यं वा। "नाकम्"। कमिति सुखनाम। न अकमसुखं यत्र गतानां भवति न नाके। लोकः। "उत्तम मुत्कृष्टम्। इत्थंभूतस्य लोकस्य प्राप्तये एतत्कर्म कुर्म इत्यभिप्रायः॥ २२॥ त्वदम-भिजुहोति (१)। "आत्त्वाजिघर्मि"। त्रिष्टुभावाग्नेय्यौ। द्व त्सरणादीस्योः। आजिघर्मि

आत्त्वां। जिघर्म्मिमनसाघृतेनप्प्रतिक्षियन्तम्भुवनानिव्विश्श्वां॥ पृथुन्तिरुश्चावयसाबृहन्तंव्व्यचिष्ठमन्नैरभसन्दृशानम्॥ २३॥ आ

आसिञ्चामि त्वां "घृतेन"। "मनसा" श्रद्धाप्रोत्कण्ठितेन। "प्रतिक्षियन्तं भुवनानिविश्वा"। प्रत्येकशो निवसन्तं भुतानि सर्वाणि। "पृथुं" तिरश्चा। महान्तं तिर्यगञ्चनेन ज्योतिषा। "वयसा" बृहन्तम् "वयसा धूमेन" बृहन्तम्। "इतो वा अयमूर्द्धं रेतः सिञ्चति धूमम् सामुत्र वृष्टिर्भवती" त्येतदभिप्रायम्। "व्यचिष्ठम्"। व्यञ्चनवन्तम् अवकाशवन्तम्। "अन्नैर-भसम्। रभ राभस्ये। अन्नैर्घृतादिभिः क्षिप्रैकृत्साहवन्तम्। वज्रभिरप्यन्नैः क्षिप्रैर्नास्य

शक्तिपरिहारणं भवतीत्येतदभिप्रायः। दृशानम्। दर्शनीयं दृश्यमानं वा। अदृष्टा अन्या देवता अयं तु दृश्यइति ॥ २३ ॥ "आविश्वतः"। "आजिघर्मि" आसिञ्चामि त्वां "विश्वतः" प्रत्यञ्चम्" सर्वतः पतिगतं महाभाग्येन। यतः (१)। "अरक्षसामनसातज्जुषेत"। अक्रुध्यमानेन प्रसन्नेन मनसा तद्धविर्जु षस्व भक्षयस्व। यस्त्वं "मर्य्यश्रीः"। मर्य्यै र्मनुष्यै

विश्वतः॑। प्र॒त्य॒ञ्च॑मा॒जि॒घ॒र्म्य॒र॒क्षसा॒मन॑सा॒तज्जु॑षेत ॥ मर्य्य॑श्री॒स्पृ॒हय॑द्व॑र्णो॒ऽअ॒ग्निर्ना॒भि॒मृ॒शे॑त॒न्वा॒जर्भु॑राणः ॥ २४ ॥ प॒रि॒वाजप॑तिः। प॒रि॒वाज॑प॒तिः॒क॒वि॒र॒ग्निर्ह॒व्यान्य॑क्रमीत् ॥ दध॒द्रत्ना॑नि॒दा॒शु

राश्रयणीयः। "स्पृहयद्वर्णः" स्पृहणीयवर्णश्च। "अग्नि" रिति साभिप्रायम्। "अग्निर्वै देवानां। रूढहृदयतम" इत्यादिगुणख्यापनार्थम्। "नाभिमृशेतन्वाजर्भुराणः"। नचाभिमर्शनाय भवति तन्वा शरीरेण ज्वालालक्षणेन। "जर्भुराणः"। जभजृभी गात्रविमाने। इतश्चेतश्च गच्छन् ॥ २४ ॥ परिलिखति। तिसृभिराग्नेयीभिर्गायत्र्यनुष्टुब्जगतीभिः। "परि-

शु० य० सं० २३१ य० भा०

११ अ० शिवम् २३१

वाजपतिः" । अग्निः नानादेवत्यान्यपि हव्यानि हवींषि परिअक्रमीत् । परिक्रमणं भक्षणार्थम् । "वाजपतिः" अन्नस्य पतिः । "कविः" क्रान्तदर्शनः । किंकुर्वन्हवींष्य "क्रमीत्" । दधत् ददत् रत्नानि रमणीयानि धनानि "दाशुषे" हवींषि दत्तवते यजमानाय ॥ २५ ॥ "परित्वाग्ने" । परीत्यस्योपसर्गस्य धीमहीत्यनेन संबन्धः । ध्यायतिरयम् संप्रसारणं तु छान्दसम् । परि सर्वतो ध्यायामः । "त्वा" त्वाम् हे "अग्ने पुरं" पुररूपेणावस्थितम् । अग्निः

खें ॥ २५ ॥ परिंत्वाग्ग्नेपुरंव्वयंव्विप्प्रंꣳसहस्यधीमहि ॥ धृषद्वंर्णन्दिवेदिंवेहुन्तारंम्भङ्गुरावंताम् ॥ २६ ॥ त्वमंग्ग्ने । द्युभिस्त्वमांशुशुक्ष

सहसो हि पुरोरक्षको भवति । "वयं विप्र" मेधाविनं ब्राह्मणजातिं वा । हे "सहस्य" । सहसिबले भवः सहस्योऽग्निः । स हि मथ्यमानो जायते । तस्यस्य संबोधनं हे सहस्य । "धृषद्वर्णं" प्रसहनरूपम् "दिवेदिवे" अहन्यहनि । "हन्तारं" बाधितारम् "भंगुरावताम्" । भङ्गुरमनवस्थितं मनोयेषां ते भङ्गुरावन्तः तेषां भङ्गुरावताम् । अनवस्थितचितवृत्तीनामित्यर्थः ॥ २६ ॥

"त्वमग्ने" हे भगवन्नग्ने त्वं "द्युभि" रहोभिर्निमित्तभूतैर्मथ्यमानो जायसे। त्वमेव "आशुशुक्षणिः"। आशु शीघ्रं शुचा दीप्त्या क्षिणोति हिनस्ति सनोति संभजते वा आशुशुक्षणि रुच्यते। त्व "मद्भ्य" स्व विद्युदात्मना जायसे। "त्वमश्मनः" दीषाणात्परिजायसे। "त्वंवनेभ्यः" अरणिकाष्ठेभ्यो जायसे। "त्वमोषधीभ्यो" वंशादिभ्यो जायसे। "त्वंनृणां" मनुष्याणामग्निहोत्रिणां जायसे। तदुक्तम्। "पुत्रो ह्येष सन् स पुनः। पिता

णिस्त्वमद्भ्यस्त्वमश्मनस्परि॥ त्वंव्वनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणा न्नृपतेजायसेशुचिः॥ २७॥ [ १६ ] देवस्यंत्त्वा। सवितुःप्प्रसवे

भवतीति"। हे "नृपते" नृणां पालयितः। "शुचि" निर्षिक्तपाप्मा। अथापरो व्याख्यामार्गः। आशुशुक्षणिशब्दस्य पञ्चम्यर्थे प्रथमा। तथाच वाक्यस्य संयोगः। आङुपसर्गपूर्वः शोचतिः सन्नन्तः। आशुशुक्षणेः आदिदीपयिषोर्जायसे। योपि गृहं खलं वा निर्मथ्य दीपयति तस्यापि त्वं जायसे। सर्वेषामनुग्रहे प्रवृत्तो हि त्वमित्यभिप्रायः। त्वमग्ने द्युभिर्जायसे त्वमादिदीपयिषोर्जायसे। एवं त्वमद्भ्यः अश्मनः वनेभ्यः ऊषधीभ्यः नृणां-

पुत्रत्वेन नृपते जायसे। शुचिर्दीप्त इति योजना ॥ २७॥ (१) खनति। देवस्यत्वा"। व्याख्यातम्। * "पृथिव्याः सहस्थानात् अग्निं" पशव्यम् अङ्गिरसा तुल्यं खनामि। "ज्योतिष्मन्तं" ज्योतिषा संयुक्तं त्वांहि अग्ने "सुप्रतीकं" सुसुखम् "अजस्रेण" अनुपक्षीणेन

प्रिश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामि ॥ ज्योतिष्मन्तन्त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम् ॥ शिवम्प्रजाभ्यो हिंसन्तम्पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामः ॥ २८॥ अपाम्पृष्ठम्। अ

"भानुना" दीप्त्या "दीद्यतं" दीप्यमानम् "शिवं" "प्रजाभ्यः" शान्तं प्रजाभ्यः "अहिंसन्तं" प्राणिनः † पृथिव्याः सहस्थानादपि। अग्निं पशव्यम् अङ्गिरसा तुल्यं खनामः ॥ २८॥

(१) अभ्र्यापिण्डं खनतिदेवस्यत्वेति। १६। २। २६। अस्यार्थः अभ्र्यादत्त्वापिण्डं परितः खनतिकण्डिकाया।

---

* पृथिव्याः सधस्थादित्यस्य अर्थः सत्यप्रिच्छदः। † पृथिव्यादतिपुनर्वर्त्तिराद्यार्थः।

ऋ० पुष्करपर्णं कृष्णाजिनोपरिष्टात्स्थापयति। (१) "अपाम्पृष्ठम्"। स्वराट् पंक्तिः। यतः अपा-

य० म्पृष्ठमसि उदकस्थानात्। योनिः स्थानं च अग्नेः अग्न्यर्थस्य पिण्डस्य। अतस्त्वां ब्रवीमि। ११अ०

सं० "समुद्रमभितः पिन्वमानम्"। उपपदविभक्ति द्वितीया। समुद्रस्योदकस्य इतश्चेतश्च सिञ्चतः।

२३२ त्वं "वर्द्धमानो महान्" भव। "आचपुष्करे"। आसीद च पुष्करे उदके। स हि तस्य

य० पाम्पृष्ठमसियोनिरग्ग्नेः समुद्रमभितः पिन्न्वमानम्॥ वर्द्धमानोमु

भा० हाँ२ ॥ऽआचपुष्करे दिवोमात्रयाव्वरिम्म्णाप्प्रथस्व ॥२९॥ शर्म्मच।

योनिः। आकारः आङर्थ व्याख्यातः। चकारो भिन्नक्रमः। विमार्ष्टि एनं चतुर्थेन पादेन। (२) "दिवो मात्रया" द्युलोकस्य परिमाणेन। "वरिम्णा" उरुत्वेन च "प्रथस्व" वर्द्धस्व॥ २९ ॥ (३) उभे कृष्णाजिनपुष्करपर्णे अभिमृशति अनुष्टु ब्व्याम्। "शर्मचस्थः"।

(१) का० कृष्णाजिनमास्तीर्योत्तरतस्तस्मिन् पुष्करपर्णं स्पर्शाम्पृष्ठमिति। २९। २। २४। अस्यार्थः कृत्यखण्डोत्तरभागेप्राग्ग्रीव मुत्तर लोमकृष्णा जिन मास्तीर्यत्तत्रापाम्पृष्ठमितिपादत्रयात्मकमंत्रेण कमलिनोपत्रमास्तृणोति।

(२) का० विमार्ष्टिनहिवद्दति। १९। ३। २५। एतत्पुष्कर पर्णं विपुलंकरोति।

(३) का० आलभतउभेशर्मचस्थइति। २९। २६। ऋग्द्वयेनकृष्णाजिनपुष्करपर्णे सहैवस्पृशेत्।

शिवम्

यो युवां शरणं च भवथ संहननं च। "अच्छिद्रे" सकले "बहुले" महाप्राणे च। उभे अपि ते युवां ब्रवीमि। "व्यचस्वती" अवकाशवती भूत्वा "संवसाथाम्" * आच्छादय तम्। आच्छाद्य च "भृतं" विभृतम् "अग्निंपुरीष्यं" पशव्यम् ॥ ३० ॥ "संवसाथाम्"। आच्छादयतमेनमग्निं पिण्डरूपम्। "स्वर्विदा"। यद्वा सूर्यदेवाहर्वचनः स्वशब्दः। स्वर्वेत्तीति स्वर्वित्

शर्म्मं च स्थो वर्म्मं च स्थोऽच्छिद्रे बहुलेऽउभे ॥ व्यचस्वती संवसाथा म्भृतमग्निम्पुरीष्यम् ॥ ३० ॥ संवसाथाम्। संवसाथाᳬं स्वर्विदा समीची ऽउरसा त्मना ॥ अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तम

स्वर्विदारूपेण। यद्वा। द्विवचनस्यस्थाने आकारः। स्वर्विदौ भूत्वा। यद्वा स्वर्गं विदौ भूत्वा। "समीची" समाने संगते एकचित्ते भूत्वा। "उरसा त्मना" च। किञ्च अग्निपिण्डं "मन्तः" मध्यतः "भरिष्यन्ती" धारयमाणे ज्योतिष्मन्तम् अजस्रम्" अनुपक्षीणाम्। कुरुतमिति शेषः।

---

* वस आच्छादने धातुः।

"इदि" ति पादपूरणः ॥ ३१ ॥ (१) पिण्डमभिमृशति । * "पुरीषयोसि" । पशव्यस्त्वमसि । "विश्वभराः" सर्वस्य धारकः पोषको वा "अथर्वात्वा" चप्राणः । त्वां "प्रथमोनिरमन्थत्" मथितवान् हे "अग्ने" । पिण्डं हरति षड्भिराग्नेयीभिः । तत्र तिस्रो गायत्र्यः । द्वे त्रिष्टुभौ एका बृहती । "त्वामग्ने" । त्वां हे अग्ने "पुष्करादु दकात् "अधि" सकाशात् "अथर्वा"

जंन्तुमित् ॥ ३१ ॥ पुरीष्ष्यो सि । विश्वभंराऽअथंर्वात्वाप्रथमोनि रंमन्थदग्ग्ने । त्वामंग्ग्नेपुष्क्करादध्यथंर्वानिरंमन्थत ॥ मूर्द्ध्नोविश्श्वं स्यव्वाघतंः ॥ ३२ ॥ तमुंत्त्वा । दध्यङ्ङृषिंःपुत्त्रऽईंधेऽअथंर्व्वणः ॥ वृ

अतनवान् प्राणो निरमन्थत । निर्जनितवान् । "आपो वै पुष्करं प्राणोथर्वा" इति । श्रुतिः । "मूर्द्धोविश्वस्यवाघतः" । वाघत इति ऋत्विङ्नामसु पठितम् । वाघतस्तु मूर्द्धः शिरसः अरण्योर्जनयति । सर्वस्य कर्मणोङ्गभूतम् ॥ ३२ ॥ "तमुत्त्वा" । अत्राप्युकार एतस्मिन्नर्थे ।

(१) का पिण्डपुरीष्योसीति । २५ । २ । २७ । * प्रतिष्ठागायत्री अष्टौसप्त षट्चेतिप्रयिष्ठेतिपिंगलोक्तिः ।

उत्तरेणो त्युकार: । तमेव त्वां "दध्यङ" नाम "ऋषि" मन्त्राणांद्रष्टा । "पुत्र ईधे अथर्वण:" । व्यवहितोत्रसंबन्ध: । अथर्वण: पुत्र ईधे । इन्धीदीप्तौ । आदीपयति । कथंभूतं त्वामा-दीपयति । "वृत्रहणम्" पाप्मनो हन्तारम् "पुरन्दरम्" असुरपुरां च दारयितारम् । वाग्ने दध्यङ् आथर्वणि इति श्रुति: ॥ ३३ ॥ "तमुत्त्वा" । तमेव त्वां "पाथ्यो वृषा" । "मनो

त्त्वृहणंम्पुरन्दुरम् ॥ ३३ ॥ तमुंत्त्वा । प्राथ्योवृषासमीधेदस्युहन्तंम म् ॥ धनञ्जयर्ठरणेरणे ॥ ३४ ॥ सीदंहोतः । सीदंहोतुःस्वऽउंलोके चिंकित्वान्त्सादयांयुज्ञर्ठसुंकृतस्ययोनौं ॥ देवावीर्देवान्हुविषांयजा

वै पाथ्यो वृषे" तिश्रुतिः । मनसा हि मुक्त: पन्था उपलभ्यते । तदुक्तम् मनसैवानु-द्रष्टव्यमिति । मनसा अभिलष्य स्त्रियां रेत: सिञ्चति इति । वृषा मनः "समीधे" संदी-पयति ।* "दस्युहन्तमम्" शत्रुहंतृतमम्, धनञ्जेतारम्, "रणेरणे" । संग्रामेसंग्रामे ॥ ३४ ॥

---

दस्यून्हंतीतिदस्युहा अतिशयेनदस्युहादस्युहन्तमम् नलोपेदस्युहतम इतिप्राप्ते नाद्धस्येतितमपीनुडागमेरूपम् ।

"सीदहोतः"। सीद उपविश हे होतः। अग्ने। "स्वउलोके"। उकारो विनिश्चयार्थीयः। स्वकीय एव लोके कृष्णाजिने। चिकित्वान् चेतनवान् परिदृष्टकारो स्वमधीकारं जानानः। किञ्च। "सादयायज्ञम्"। स्थापय च यज्ञं त्वं "सुकृतस्य" साधुकृतस्य कर्मणः। "योनौ" स्थाने कृष्णाजिने। "कृष्णाजिनं वै सुकृतयोनि" रितिश्रुतिः। यज्ञो हि तन्य-

स्यग्ग्नेबृहद्यजमानेव्वयोधाः ॥ ३५ ॥ निहोता। होतृषदनेव्विदा नस्त्वेषोदीदिवाꣳ॥ ऽअसदत्सुदक्षः॥ अदब्धव्व्रतप्रमतिर्व्वसिष्ठः

माने अवघातः पेषणं सोमनिधा च कृष्णाजिने एवं भवतीत्येतदभिप्रायमेवमुच्यते। यस्त्वं "देवावी" देवानामवनशीलः तर्पणशीलः "देवान्हविषा" यज्ञासि यजसि तं त्वां पुनः प्रार्थयामि। हे "अग्ने बृहत्" महत् "यजमाने वयः" आयुरन्नं वा। * "धाः" धेहि ॥ ३५ ॥
† "निहोता" नीत्ययमुपसर्गं असददित्यनेनाख्याते वसंबध्यते। न्यसदत् निषस्त उपविष्टः हो-

---

* दधातेर्लुङ्मध्यमैकवचने अधादिति प्राप्ते बहुलंछन्दस्यमाङ्योगेऽपीत्यडभावः।

† आग्नेयी:त्रिष्टुप्देवश्रा थोदेववाताभ्यांदृष्टा।

तामग्नि। "होटषदने"। होता यस्मिन्सीदति तत् होटषदनं तस्मिन्। "विदानः" जानानः स्वमधिकारम्। "त्वेषो" दीप्तियुक्तः "दीदिवान्" देदीप्यमानः। "असदत्। सुदक्षः" साधु क्षिप्रकारी:। "अदब्धव्रतप्रमतिः"। अदब्धमनुपहिंसितं कर्म यस्य प्रकृष्टा मतिः स एवमुच्यते। "वसिष्ठः" वस्तृतमः। यस्य सहस्रम्भरः। सहस्रं बिभर्तीति सहस्रंभरः सर्वंहितः। "शुचिजिह्वः"। शुचिर्जिह्वो यस्य स शुचिजिह्वः योयं नानादेवत्यानि हवींषि

सहस्रम्भरःशुचिजिह्वोऽअग्निः॥ ३६॥ सꣳसीदस्वमहाꣳ२ऽ॥ असिशोचस्वदेववीतमः॥ विधूममग्नेऽअरुषम्मियेध्यसृजप्रशस्तदर्शत

अभ्यवहरति, नवोच्छोषयति सशुचिर्जिह्व इति शक्यते वदितुम्। अग्निरितिविस्मित इवाचष्टे॥ ३६॥ संसीदस्व (१)। हे "अग्ने" संगत्य सीदस्व। यतः त्वं "महानसि"। "शोचस्व" दीप्यस्व यतस्त्वं "देववीतमः"। अतिशयेन देवानामाप्यायिता। "विसृज" च विसृज्य चवि "धूमम् अरुषम्" अरोचनम् "मियेध्य"। यमेध्य इति प्राप्ते छान्दसो प्रकर्षः।

हे "प्रशस्त" लक्षण। "दर्शतम्" दर्शनीयमाकृतिपरिणामभूतम्। "दूतो वा अयमूर्ध्व-रेतः। सिञ्चति धूमं सास्त्र वृष्टिर्भतो" ति श्रुतिः॥ ३७॥ अवाटे अपआसिञ्चति। "अपोदेवी:" (१) अब्देवत्या वृहतो। विधूममग्नेअरुषंमियेध्येत्यग्रनन्तर्यादग्निरुच्यते। द्यौर्वा "अपो देवीरुपसृज निक्षिप वृष्टिरूपाः" मधुमती रसवती: आरोग्यदात्रिकाः। "अयक्ष्माय"

म्॥ ३७॥ [ १० ] अपोदेवीः। अपोदेवीरुपसृजमधुमतीरयक्ष्माय प्रजाभ्यः॥ तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः॥३८॥ सन्ते। वायुर्मातरिश्वादधातूत्तानाया हृदयं यद्विकस्तम्॥ योदे

प्रजाभ्यः। यक्ष्मा व्याधिः भावप्रत्ययलोपः। अयक्ष्मत्वार्थम् प्रजानामिति विभक्तिव्यत्ययः। "तासां" भूलिंगतानाम् "आस्थानात्" अधिष्ठानात्। "उज्जिहताम्" उद्गच्छन्तु। "ओषधयः" सुपिप्पलाः साधुफलः पिप्पलं फलमुच्यते॥ ३८॥ वायुना संदधाति। "संतेवायु:"। त्रिष्टुप्। अर्द्धर्चः वा पार्थिवोर्द्धर्चो वायुदेवत्यः। "सन्दधातु" तव "मातरिश्वा" वायुः पृथिवी।

* उत्तानायाः "सत्या यदेतत् हृदय" मवटरूपेण । † "विकस्तम्" विकशितम् । वायुरुच्यते । "योदेवानाम्" यस्त्वं देवानां चरसि "प्राणथेन" प्राणत्वे न् थकारोभावप्रत्ययार्थकः । हे "देव" तस्मै "कस्मै" प्रजापतये "तुभ्यम्" इयं पृथिवी वषडस्तु वषट्कृता भवतु । "नोदे ताव-

वानाश्चरसिप्प्राणथेनकस्मैदेववषडस्तुतुभ्यम् ॥३९॥ सुजातोज्ज्यो

तिषा । सहशर्म्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपꣳ सं

व्ययस्वविभावसो ॥४०॥

व्यन्याइतिरतिरस्तियथैषे" तिश्रुतिः ॥ ३९ ॥ आस्तीर्णयोरन्तरानुद्गृह्णाति ( १ ) । ‡ "सुजातो-ज्योतिषा" । अनुष्टुबाग्नेयी । अयमग्निः सुजातः सुजन्मा ज्योतिषा सह संयुक्तः । "शर्म" शरण-म् "वरूथं" वरणीयम् गृहम् "आअसदत्" आसीदतु । "स्वः" स्वर्गाख्यम् । योऽकृणोपन-

( १ ) का० आस्तीर्णयोरन्तानुदगृह्णातिसुजात इति १६ । २ । ५ । अस्यार्थः । आस्तीर्णयोकृष्णाजिनपुष्करपर्णयोः प्रान्तानूर्ध्वमा-दत्तइति ।

* ऊर्ध्वाभिमुखेनावस्थितायाः ।

† इडभाव आर्षः ।

‡ अग्निदेवत्यानुष्टुब् द्वितीयोन वार्षः ।

ह्यति । (१) "वासोऽग्ने" । हे अग्ने विभावसो विभूतधन । वासो विभूतयः । "विश्वरूपं" त्रिचित्रम् "संव्ययस्व" । व्येञ् संवरणे परिधत्स्व ॥ ४० ॥ अथैनमादायोत्तिष्ठति (२) । * उदु-तिष्ठ । "आग्नेयी" बृहती । उत्तिष्ठ । उकारः पादपूरणः । हे स्वध्वर सुयज्ञिय । तत उत्थाय † अवपालय "नो" स्मान् । "देव्याधिया" दैव्या बुद्ध्या । किञ्च । "दृशेच" दर्शना-

स्व्व्ययस्वविभावसो ॥ ४० ॥ उदुंतिष्ठ । स्वध्वरावानोदेव्व्याधिया ॥ दृशेचंभासाबृंहतासुंशुक्वनिराग्नेयाहिसुशस्तिभिं: ॥ ४१ ॥ ऊर्ध्वँ

य अस्माकम् "भासा बृहता सुशुक्वनिः" साधु सुशुचा संदीप्तः । "आयाहि" आगच्छ

(१) का० त्रिवृतामुञ्जयोक्त्रेणोपनह्यति वासोऽग्नऽइति । १६ । ३ । ६ । उद्गृहीतान्कृष्णाजिनपुष्करपर्णयोरन्तान्मुञ्जयोक्त्रेणावबध्नात्युत्तरार्धेनेतिसूत्रार्थः ।

(२) का० उत्तिष्ठतिपिण्डमादायोदुतिष्ठेति । १६ । ३ । ७ । तंपिण्डं गृहीत्वोत्तिष्ठेदितिसूत्रार्थः ।

* अग्निर्देवत्यापथ्याबृहतीविश्वमनोदृष्टाबृहतीपीबादश्वार्थः अन्ये अष्टार्णाः ।

† अव । ऋचीतस्तिङ इतिसंहितायांदीर्घः ।

हे "अग्ने सुशस्तिभिः" । साधुशिष्टै रश्वैः ॥ ४१ ॥ (१) अथैनमितऊर्द्धं प्राञ्चं गृह्णाति । *"ऊर्द्ध्व-
ऊषुण बृहती आग्नेयी । ऊर्द्धं स्तिष्ठ । ऊसू पादपूरणो । "नः ऊतये" । अस्माकमव-
नाय । कथमूर्द्धं स्तिष्ठ । "देवो न सविता" । नकार उपमार्थीयः । देव इव सविता: ऊर्द्ध-

ऊषुणऽऊतयेतिष्ठादेवोनसंविता ॥ ऊर्द्धोव्वाजंस्यसनितायदञ्जि
भिंर्व्वाघद्भिंर्व्विह्वयांमहे ॥ ४२ ॥ सजातः । सजातोगर्भोऽअसिरो

स्थितः "वाजस्य" ऋस्य "सविता" संभक्ता । भविष्यसीतिशेषः । "यदंजिभिः" । यस्माद-
ञ्जिभिर्व्यञ्जकैर्द्रव्याणां रश्मिभिः । "वाघद्भिः" । हविषां वोढृभिः सहितम् "विह्वयामहे"
विविधमाह्वयामः तदूर्द्धं स्तिष्ठेति संबन्धः ॥ ४२ ॥ (२) अश्वमभिमन्त्रयते । "सजातोगर्भः" ।

(१) का० ऊर्द्धवाहुः प्राञ्चप्रगृह्णातपूर्द्धं ऊषुणइति । १६ । ३ । ८ । प्रसारितवाहुः प्राञ्चपिण्ड गृह्णाति ।

(२) अवहृत्योपरिनाभिधारयन्न स्वप्रभृतीनभिमंत्रयतेसजातस्थिरीभवशिवोभवेति । १६ । ३ । २ । पिण्ड नीचैरव तार्यन ाभ्यु-
परिहस्ताभ्याधारयन्न स्वगर्द्दभाजान्सजातइत्यादतृक्रमेण प्रतिमंत्रमंत्रयते एकैकंपश्चनं कैकंमंत्रं जपतीति सूत्रार्थः ।

* अग्निदेवत्यीपरिष्टाद्बृहतीकखद्वादशाचतुर्थः पादोद्वादशर्णोऽन्यं त्रयोऽष्टार्णाः सोपरिष्टाद्बृहती ।

त्रिष्टुप् अग्निकृत्याग्निं स्तौति । अध्याहारव्यवहितपदप्रायो मन्त्रः । यस्त्वं । "रोदस्यो" द्यावापृथिव्यो "गर्भो * जाता" सि । यस्त्वं हे "अग्ने चारुः" शोभनः "विभृतः" हृग्रहोर्भश्छन्दसि हस्येति हकारस्य भकारः । "ओषधीषु" पुरोडाशादिलक्षणासु दातव्यविषयासु भवसि ।

दंस्योरग्ने चारुर्विभृतऽओषधीषु ॥ चित्रः शिशुः परितमांᳬस्यक्तून्प्र मातृभ्योऽअधिकनिक्रदद्गाः ॥ ४३ ॥ स्थिरोभव । वीड्वङ्गऽआशुर्भ

यश्च त्वं "चित्रो" नानारूपः "शिशुः" शंसनीयः । "परितमांसिअक्तून्" रात्रीः अतिरोचसे । स त्वं "मातृभ्यः अधि" । ओषधिवनस्पतिभ्यः सकाशात् ‡ "कनिक्रदत्" अत्यर्थं शब्दं कुर्वन् "गाः" प्रयाहि ॥ ४३ ॥ रासभमभिमन्त्रयते । "स्थिरोभव" । उष्णिक्अनुष्टुब्वा । स्थिरो भव निश्चलोभव । "वीड्वङ्ग" स्वदृढाङ्गश्च भव । "आशुः" शीघ्रश्च भव "वाजी" वेजनवांश्च भव ।



---

* सन्नीदानीं ।

‡ दाधर्ति दर्धर्ति इतिसूत्रे णाक्रनिक्रददितियङ् लुगंतोनिपातितः ।

हे "अर्वन्"। पदार्थं प्रति इयर्त्तीति अर्वा। "पृथुः" पृथुस्त्व "भव"। "सुषदः"। स्वस्थेयश्च भव। यत "त्वमग्नेः पुरीषवाहणः"। पुरीषं पशव्यं यवसं वहतीति पुरीषवाहणो रासभः ॥ ४४ ॥ अजमभिमन्त्रयते। "शिवो भव"। अनुष्टुप् बृहती वा। हे अज शिवः शान्तो भव। "प्रजाभ्यो मानुषीभ्यो" र्थाय त्वम् हे "अङ्गिरः"। "अङ्गिरा वा अ-

वर्वाजुन्नर्वन् ॥ पृथुर्भवसुषदस्त्वमग्नेः पुरीषवाहणः ॥ ४४ ॥
शिवोभव। प्रजाभ्योमानुषीभ्यस्त्वमङ्गिरः ॥ माद्यावापृथिवीऽअभिशोचीर्मान्तरिक्षम्मावनस्पतीन् ॥ ४५ ॥ प्रैतु। वाजीकनिक्र

ग्निराग्नेयोज" इतिश्रुतिः। मा च त्वं "द्यावापृथिवी अभिशोचीः" अभिसंतापयेः। "मान्तरिक्षं मा च वनस्पतीन् ॥ ४५ ॥ (१) एतेषां पशूनामुपरिष्टात्प्रगृह्णाति। * "प्रैतुवाजी"।

(१) का० धारयत्येषामुपरिपिण्डमनुस्पृशन प्रैतुव्वाज इषाग्निमिताश्वखरयोरिति।१६।१०। अश्वादीनामुपरिपिण्डधारयतितानृष्टमनृप्रैतुव्वाजीत्यश्वोपरिवृषाग्निमिति स्वरोपरीतिसूत्रार्थः।

* महापङ्क्तिस्त्र्यवसानाअष्टार्धषट्पादामहापङ्क्ति आद्यावर्धर्चावश्वदेवत्यौतृतीयोर्धर्चोरासभदेवत्यः तृतीयतुर्यौपादौव्यूढौ।

व्यवसाना महापंक्तिः। अश्वं चाश्वदेववत्यग्नेः। प्रकर्षेण एतु आगच्छतु वाजी अश्वः। "कनिक्रदत्" अत्यर्थं हेषितशब्दं कुर्वन् अयं च रासभोऽश्वयवसवाहनार्थं प्रकर्षेण एवागच्छतु। "नानदत्" । सोपहासमुच्यते। गर्दभरटितेन सर्वादिशो नादयन्। "रासभः" पत्वा। पतनशीलः। "यदश्वस्य यजुषि रासभं निराहतद्रासभे शुचन्दधतीति" श्रुतिः। "भरन्नग्निं पु-

ट्टन्नानंदृहग्रासंभुऽपत्वा॥ भरन्नग्निम्पुरीष्यम्मापाद्यायुषःपुरा॥ वृषाग्निम्वृषणम्भरन्नपाङ्गर्भंसमुद्रियम्॥ अग्नऽआयाहिवीत

रीष्यम्"। अयं चाश्वो भरन्धारयन् अग्निम् पुरीष्यं पशव्यम् "मापदि" मा विनश्यतु। "आयुषः पुरा"। आयुश्शब्देन शुक्तगाच कर्माभिहितम्। यज्ञसंयोगे न हि अश्वादीनां स्तुतिः। "आयुषः पुरा"। आसमाप्तेः कर्मणः। रासभ उच्यते। "वृषा" सेक्ता। "अग्निं वृषणं" सेक्तारम्। आकृतिपरिणाममभिप्रेत्यैतदुक्तम्। भरन्धारयन्। "अपांगर्भम्" अपां मध्ये वस्थानाद्गर्भं उच्यते। "समुद्रियम्" त्रयो ह वै समुद्रा अग्निर्यजुषां महाव्रतम् साम्नां महदुक्थमृ-

चाभि त्येतदभिप्रायम् तव भवः समुद्रियः । खदाराहरति । (१) "अग्ने आयाहि" । एकपदाग्नेयो गायत्री । हे अग्ने आगच्छ "वीतये" हविरुपभोगाय ॥ ४६ ॥ छागस्योपरिधारन-जपति । ऋतं सत्यम् ऋतमग्निः सत्यमादित्यः । यदि वा आदित्य ऋतम् अग्निः सत्यम् ये ॥ ४६ ॥ ऋतꣳसत्यमृतꣳसत्यमग्निम्पुरीष्यमङ्गिरस्वद्भरामः ॥ ओषधयः प्रतिमोदध्वमग्निमेतꣳशिवमायन्तमभ्यत्र युष्माः ॥ व्यस्यन्विश्वा अनिरा अमीवा निषीदन्नो अप दुर्म्मतिञ्जहि ॥ ४७ ॥

उभय रूप मप्याहरामीतिशेषः । अनड्वापुरुषमीक्षते (२) अग्नि पुरीष्यम् व्याख्यातम् उपावह-

(१) का॰ अग्नआयाही त्याहृत्यरवराच्छाग स्यार्तम्स त्यभित्यानिधानात् । ५ । २ । १ । अग्नइतिमंत्रेणरासभात् पिष्माद्धृत्वऋतं सतश्मितिमंत्रे णाज्यस्योपरिनिधानपर्यन्तमिति मितिसूत्रार्थः ।

(२) का॰ अनड्वापुरुषमीक्षनेपूर्ववदग्निपुरीष्यमिति । १६ । २ । १२ । देवपितृकार्य्यविमुखोऽनड्वार्तमश्वपुरीषति अग्निषु ज्वलत्स्वाहवनीयान्ते स्थित इति पूर्वपदेनलभ्यतइति सूत्रार्थः ।

रति । (१) ओषधयः प्रति । द्वाभ्यां त्रिष्टुबनुष्टुब्भ्या मोषधिदेवताभ्यतम् । द्वितीयोर्द्ध्वं च आग्नेयः ।
हे ओषधयः प्रति मोदध्वम् प्रतिहर्षयत । प्रत्युत्थानादिभिः । अग्निम् एतं शिवं शान्तम् आ
यन्त मभ्यत्र युष्माः । युष्मान भ्यागच्छन्तम् अत्रैवस्थितानाम् एव मद्यं चैनोषधी रुत्का
अथेदानी मग्नि माह । त्वमपि व्यस्यन् विघ्नि पन् विश्वाः सर्वाः । * अनिराः । दूवरे-

**ओष॑धयःऽप्रति॑ । ओष॑धयःऽप्रति॑गृभ्णीतपुष्प॑वतीःऽसुपिप्पलाः ॥**

त्यन्ननामचभति । अन्नं याभिः सतीभि रत्तीतिनिदाघाशनिभि गृह्यते विघ्निपन् "अमीवा"
व्याधीन् निषीदन् निविशमानश्च । नो अपदुर्मतिं जहि । नोस्माकम् "अपजहि" अप-
नय दुर्मतिम् दुर्बुद्धिं नास्तिदत्तंनास्तिहुतमित्येवमादिकाम् ॥४७॥ ओषधयः । हे ओषधयः एत मग्नं
गृह्णती । आदरवत्यः सत्यः । "पुष्पवतीः सुपिप्पलाः" । पुष्पवत्यः शोभन फला स्वभूत्वा । अयं हि वो

(१) का० उत्तरत आह्वनीयस्योद्धतावोक्षितेसिकतोथकोणं परिश्रितेप्राक्द्वारे पिण्डं निदधात्यो ऽषधयइति । १२ । ३ । १४ ।
उखावासम्भरणार्थं सुद्धृतस्याह्वनीयस्योत्तरेपूर्वमेवक्षतेपरिश्रित आच्छादित प्रदेशे ओषधयइति मंत्राभ्यांपिण्डं स्थापयति ।
कोदशेपरिश्रिते क्षतो ल्लेखने अवोक्षिते सिक्तेप्राक्दिग्द्वारेपस्यताशेदृसिकताव्याप्तेएतादृशेइतिसूत्रार्थः ।

* नास्तिदराअन्नंयाभिस्ताअनिरा इरेतान्ननाम ।

युष्माकम् गर्भं ऋत्विय: ऋतव्य: प्राप्तकाल: प्रत्नं पुराणं शाश्वतिकम् सधस्थं सहस्थान मासीदति ॥ ४८ ॥ अथैनं विषजति (१)। विपाजसा। वीत्यय सुपर्णो बाधस्वे त्यनेन संबध्यते। विबाधस्त्व। पाजसा। पाजइतिबल नाम। बलेन। पृथुना विस्तीर्णेन। शोशुचानो दीप्यमान:। द्विष: द्वेषयात्। रक्षस:। अमीवा: व्याधीन्। एवं प्रत्यक्षं याचि त्वा अथे

अयंव्वोगर्भऽऋत्त्वियःप्प्रत्नꣳसधस्त्थमासदत् ॥ ४८ ॥ व्विपाजसा। पृथुनाशोशुंचानोबाधंस्वद्विषोरक्षसोऽअमीवाः ॥ सुशर्म्मणोबृहतःशर्म्मणिस्यामग्नेरहꣳसुहवंस्यप्प्रणीतौ ॥ ४९ ॥ [ १२ ] आपो

दानी परोक्षो कृत्वा शिष माशास्ते। "सुशर्मण:" साधुशरणस्य बृहतो महत:। शर्मणि शरणे। स्याम् भवेयम् अग्ने: अहं सुहवस्य। स्वाह्वानस्य। प्रणीतौ प्रणयने अभरनु-

(१) कां० विपाजसेतिप्रमुच्यैन मजलोमान्यादायप्रागुदीच: पशूनुत्सृजति। २६। २। १५। विपाजसेति मंत्रे यैनंपिबद्धकृष्णाजिन वद्धं विस्रंस्यच्छागरोमाणि गृहीत्वा खादीनैशानीं दिशं प्रत्युत्सृजतीतिसूत्रार्थ:।

शु०
य०
सं०
२४१
उ०
भा०



ष्ठायाम् ॥ ४८ ॥ अपउपस्तृजति (१)। आ पोहि। अब्देवत्यास्तिस्रो गायत्र्यः। * आपो हि ष्ठामयो भुवः। द्वितीये पादे तच्छब्दश्रवणा द्यदाध्याहारः कर्त्तव्यः। हे आपः या यूयं † मयो भुवः। मय इति सुख नाम सुखेन भावयित्र्यः स्थ भवथ सर्वप्राणिनाम्। छन्दः परि पूर्ति करो हि शब्दः। ता नः अस्मान् ऊर्जे अन्नाय ‡ दधात न स्थापयत। यथा वयं सर्व

हि। ष्ठामयोभुवस्तानऽऊर्ज्जेदधातन॥ महेरणायचक्षसे॥ ५०॥

स्य भोग्यस्य भोक्तारो भवेम तथा कुरु ते त्यभिप्रायः। § महते चरणाय रमणीयाय चक्षसे दर्शनाय। अस्मा न्दधातने त्यनुवर्तते। एतदुक्तं भवति। मह च्च य द्दर्शनं परब्रह्म लक्षणं रमणीयं तदस्माकं कुरुते ति। अथवा हि शब्दो यस्मा दर्थे दृत्वा व्याख्यायते नहि वेदे मात्र-

(१) का० आपोहिष्ठे तिपर्ण कषाय पक्वासुदकमासिञ्चति पिण्डे। २६। ३। १६। पलाशत्वक्क्वथितं जलं पिण्डे ऋकत्रयेण क्षिपेदितिसूत्रार्थः।

---

* अब्देवतास्तिस्रीगायत्र्यः सिन्धुद्वीपदृष्टा

† मयः सुखंभावयन्ति प्रापयन्तिताः मयोभुवः स्नानपानादिहे तुत्वेन सुखीत्यलायादकत्वमपां प्रसिद्धम्।

‡ तप्रनप्तनथनायेतितीरासध्यमदहुवचनस्तत नबादेशेदधातनेतिरूपम्।

§ मह्यतेपूज्यतेइति मट क्विप्प्रत्ययः।

शिवम्

मन्त्रस्थाप्यनर्थक्यमिष्यते संभवे सति । आपोहि । हे आपः हि यस्मान्मयो भुवः । ता न ऊर्जे । ताः शब्दस्य पञ्चम्यां सन्मतिः । तस्मा द्वोता रसान् अन्नाय स्थापयत । महे तेच । रमणीयाय * चक्षसे दर्शनीयाय ॥ ५० ॥ † योवः । यस्त्वः युष्माकं शिवतमः शान्ततमः रसः । तस्य भाजयत भागिनः कुरुत । इहैवस्थितान्नः अस्मान् । उशतीरिव ।

योवंः॥ शिवतमोरसस्तस्यंभाजयतेहनंः॥ उशतीरिंवमातरंः॥५१॥

तस्मा॑ऽअरंम्। तस्मा॑ऽअरंङ्गमामवो॒यस्य॒क्षया॑य॒जिन्वंथ। आपो॑

वथकान्तौ। ‡ कृतसंप्रसारणस्यै त द्रूपम्। कामयमाना इव मातरः मातृशब्दः संबन्धवचनः यथाकामयमाना मातरः पुत्रस्य कल्याणं तैस्तै रर्थैर्भोजयेयुः एवं भाजयत ॥ ५१ ॥ तस्माअरम्। अल मिति प्राप्ते लकारस्य रेफ श्छान्दसः। हे आपः तस्यच रसस्यअथ स्तन

---

* चष्टेपश्यतिसर्वेणेनइतिचक्षः चक्षतेरसुन्प्रत्ययः तस्मैचक्षसे।

† हेआपः इति शेषः।

‡ वाच्छन्दसीतिदीर्घः वशकान्तौ इयस्मा च्छ त्प्रत्ययान्तादुगितश्चेतिङीप्।

मन्त्रयाचितस्य। वो युष्म त्संबन्धिनः अलं पर्याप्तं "गमाम" गच्छाम वयम्। पर्याप्तं नाम रसविषये * वैतृष्ण्यं सदातृष्ण्यं वा यस्य क्षयाय जिन्वथ। क्षयो निवास इत्याद्युदात्तः। षष्ठ्यर्थे चतुर्थी यस्ये ति सामानाधिकरण्यात्। यस्य आकृति परिणामभूतस्य क्षयस्य निवासस्यै कदेशेन जिन्वथ। जिन्वतिः प्रीतिकर्मा। तर्प्पयथ। पञ्चा इति परिणामक्रमेण दं

जुनयंथाचनऽ ॥५२॥ मित्रऽसुर्ऽ सृज्ज्य ॥ पृथिवीम्भूमिंञ्चुज्ज्योतिं

ब्रह्मादि स्तंब पर्यंतं जगत। तत्र हे आपः † जनयथ। नः अस्मान् भोक्तृत्वेन। आजान देऽत्र साशास्यते ॥५२॥ अज लोमैः संसृजति (१) ‡ मित्रः संसृज्य। मैत्री उपरिष्टा बृहती। अध्वर्यु राह। मित्रः आदित्यः "संसृज्य" एकीकृत्य पृथिवीम् द्युलोका न्तरिक्षम्

(१) का० अजलोमभिः संसृजतिमित्रः संसृज्ये ति। १६। २। १८। अजाद्यानि पूर्वंलोमानिगृहीतानितैःपिण्डं मिश्रयती तिसूत्रार्थः।

---

* महीधरस्तुवैतृष्ण्यं सदातृप्तिर्वा।

† उत्पादयत आशिषिलिटतद्दसभीलनयाम्कुरुत।

‡ मित्रदेवत्यौपरिष्टाद्बृहतित्र्योऽष्टार्णाचतुर्थोद्वादशार्णः।

भूमि वचनः पृथिवी शब्दः। दूहत्तु द्युलोकवचनो गृह्यते। पृथिवीं द्युलोकम् भूमिञ्च मांज्योतिषा अजलोमैः सहसं सृज्यमह्यं प्रयच्छत्विति शेषः। अजस्या नयेत्वा तल्लोमानि ज्योतिः शब्देन भणितुं शक्यन्ते। अह मपि च गृहीत्वा सुजातं कल्याण जातं त्वां जात-

षासुह ॥ सुजातञ्ज्ञातवेदमयुक्ष्मायंत्वासꣳसृंजामिप्प्रजाब्भ्यः ॥५३॥

रुद्द्राःसꣳसृज्ज्यं। पृथिवीम्बृहज्ज्योतिꣳ समीधिरे ॥ तेषांभ्भानुर जंस्त्रऽइच्छुक्रोट्टेवेषुरोचते ॥ ५४ ॥ सꣳसृष्टांव्वसुभिꣳ ॥ सꣳसृष्टांव्व

वेद संजात प्रज्ञान मग्नि मजलोमाख्यं संसृजामि अयक्ष्माय अव्याधितायै। प्रजाभ्यः प्रजाना मिति संततिः ॥ ५३ ॥ शर्करायोरसाश्मचूर्णैः संसृजति ( १ )। रुद्राः संसृज्य। अनुष्टु ब्रौद्री। रुद्राः संसृज्य एकीकृत्यशर्करायो रसाश्म चूर्णैः पृथिवीं पार्थिवंपिण्डम्। बृहन्महत्।

( १ ) का० शर्करायोरसाश्म चूर्णैरुद्राः सꣳसृज्येति। १६। ३। १८। सूक्ष्मसिकतालोह किट्टपाषाण चूर्णैः पिण्डं मिश्र-यतीतिसूत्रार्थः।

ज्योतिरग्निलक्षणम् । उषायांसमीधिरे । संदीपितवन्तः उष स्थमग्निंसंवत्सरंधारितवन्तः ।
तेषामिदानींफलमाह । तेषांरुद्राणां भानुर्दीप्तिः । अजस्रइत् । जसउपक्षये इच्छब्दएवार्थे ।
अनुपक्षीण एव । शुक्रः । शुक्रः देवेषु निर्द्धारणेसप्तमी । रोचते देदीप्यते ॥ ५४ ॥ * तिसृभि
रनुष्टुब्भि सिनीवाल्य दितिदेवताभि र्ष्टदं संयौति (१) । संसृष्टाम् संसेविताम् । वसुभिः रुद्रै स्त्र

## संसृष्टांवसुभीरुद्रैर्द्धीरैःकर्म्मण्याम्मृदम् ॥ हस्ताभ्याम्मृद्वीङ्कृत्वासिनीवालीकृणोतुताम् ॥ ५५ ॥ सिनीवालीसुकपर्द्दा ॥ सुकुरीरास्वौपशा ॥

धीरैः बुद्धिमद्भिः । धीशब्दोबुद्धिवचनः रोमत्वर्थीयः । कर्मण्याम् कर्मणाया संपद्यतेसा।कर्मण्या-
तांकर्मण्याम् । मृदं मृत्तिकाम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु करोतु ॥ ५५ ॥
या सिनीवाली सुकपर्दा । कपर्दः केशसंयमनप्रकारः । साधु केशं संयमना । वेणीवीक-
पर्दः । सुकुरीरा । कुरीरो मुकुटः । शोभन मुकुटा । स्वौपशा । शोभन मुप शेते यासा-

(१) का० संसृष्टामितिसंयौति । ऋकचयेण मृत्पिण्डे सम्यकमिश्रयतीति ।

---

* द्वे सिनीवालीदेवत्ये तृतीयादितिदेवत्याति स्रोनुष्टुभः ।

खं यथा । विद ग्धोशयने करकण्ठ कूजितादिभि र्विलासैः । सा तुभ्यं हे * अदिते महि महति । उखां दधातु स्थापयतु हस्तयोः ॥ ५६ ॥ उखां कृणोतु । करोतु शक्त्या सामर्थ्येन । बाहुभ्याम् अदितिः धियाबुद्ध्या च कृता सती । माता पुत्रं यथा उपस्थेउत्सङ्गे । अग्निं बिभर्तु धारयतु ।

सातुभ्यंमदितेमह्योखान्दंधातुहस्तयोः ॥ ५६ ॥ उखाङ्कृणोतु । श-
क्त्याबाहुभ्यामदितिर्धिया ॥ मातापुत्रं यथोपस्थेसाग्निम्बिंभ-
र्तुगर्भआ ॥ मखस्य शिरोसि ॥ ५७ ॥ वसवस्त्वा ॥ कृण्वन्तु

गर्भे । आ । आकारआत्मनोयोग्यांक्रियामाक्षिपति । आधारय । गर्भशब्द उखाभ्यन्तर वचनः । स्थण्डिमादते ( १ ) । ‡ मखस्य यज्ञस्य शिरोसि । आहवनीयो यज्ञस्य शिरस्तदुद्धारणादि हापि

( १ ) का० यजमान उखांकरोति मृदमा दायमखस्यशिरइति । १६ । ३ । २१ । यजमानपत्न्यातत्पिण्डान्मृदमादाय . द्वादशा-ङ्गुलिविस्तान लिखिताषाढसञ्ज्ञकेष्टकायां कृतायां यजमानः पिण्डान्मृदमादा यस्व यमेवोखांकरोति एकपक्षपचे प्रादेशा-यामविस्तारोर्ध्वां चतुरस्रां पञ्चपक्षपचेत्रिभागोनत्रयोविंशत्यङ्गुलायामविस्ताराभूर्ध्वां प्रादेशेनैवेतिसूत्रार्थः ।

* अदीने अदितिरदिनेर्देवमातेतियास्कः निरुक्त । ४ । २२ । ‡ मृत्पिण्डदेवयर्ययजुः यजुर्गायत्रीछंदः ।

प्रवर्त्ततेखच्चणाया शिर: शब्द: ॥५७॥ तं प्रथयति (१)। * वसवस्त्वा। वसवस्त्वा कुर्वन्तु हे उखे गायत्रेण च्छन्दसाङ्गिरस्वत् यथाङ्गिरसाकृता। यत स्त्वं कृता सतीध्रुवा स्थिरासि पृथिवी



गायत्त्रेणुच्छन्दसाङ्गिरस्वद्ध्रुवासिपृथिव्व्यसिधारयामयिंप्प्रजाᳪं राय
स्प्पोषङ्गौपत्त्यᳪं सुवीर्य्यᳪं सजातान्व्यजमानायरुद्रास्त्वाकृण्वन्तुत्त्रै
ष्टुभेनुच्छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिंप्प्रजाᳪं रा
यस्प्पोषङ्गौपत्त्यᳪं सुवीर्य्यᳪं सजातान्व्यजमानायादित्त्यास्त्वाकृण्व
न्तुजागतेनुच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिंप्प्रजाᳪं रा

चासि अतस्त्वां ब्रवीमि धारय स्थापय मयि। यजमानायेतिचतुर्थ्यन्तं स्पद सुपरिष्टाच्छ्रूयते शिवम्

(१) का० वसवस्त्वेतिप्रथयति। १६। ३। २२। यजमान आत्तां मृदमुखातलाय प्रादेशमात्रविपुलां करोतिसूत्रार्थः।



* उखादेवताम् ब्राह्मीअनुष्टुप्।

तदिङ्गसमभ्यन्तं कृत्वायोज्यते। सामानाधिकरण्यात्। प्रजां धनस्य च पुष्टिं। गोपति त्वं च। शोभनं च वीर्यं वीरकर्म। * सजातान् समानजातान् भ्रातॄन्। धारयेति सर्वत्राभिसंबध्यते। उत्तरेषु

यस्पोषं॑ङ्गौपुत्त्यं॑ᳬसुवीर्य्य॑ᳬ सजातान्न्यजमानायुव्विश्वेत्त्वादिवाव्वै श्यानुबाऽन्दरावुन्त्वानुष्टुभेनुच्छन्दसाङ्गिरस्वद्ध्रुवासिदिशोसिधार यामयिंप्रजाᳬ रायस्पोष॑ङ्गौपत्यंᳬ सुवीर्य्यंᳬ सजातान्न्यजमाना

मन्त्रेषु विशेषः। (१) रुद्रा स्त्वा अन्तरिक्ष मसि। (२) अदित्यास्त्वा द्यौ रसि। (३) विश्वेत्वादे-

(१) का० अन्तानुनोय सर्वतः प्रथमं धातुमादधाति रुद्रास्त्वेति। १६। ३। २७। प्रथनानन्तरं प्रथित्ततलस्य प्रान्तान्स- र्वानूर्ध्वं नीत्वाप्रथमां पिण्डकामन्त्रैः संयोजयतीतिसूत्रार्थः।

(२) का० संलिप्यश्लक्ष्णं कृत्वोत्तरमादितयास्त्वेति। १६। ३। २८। तामुखां शिथिलस्यदालिप्त्वा वारिणामृदुं कृत्वोत्तरं धातुं द्वितीय पिण्डिकांपूर्वोपरियोजयतीतिसूत्रार्थः।

(३) का० विश्वेत्वेतिसमोकरोति। १६। ३। २९। पूर्वोक्तमानांकरोतिसूत्रार्थः।

---

* समानोदरोत्पन्नान्।

त्वावैश्वानरा: विश्वान्नारयन्तितारयन्ति * वैश्वानरा: दिशोसीति ॥५८॥ बितृतीय उत्तरे वर्तिंसर्वत: करोति ।(१)† अदित्यैरास्नासि । व्याख्यातम् । (२)बिलंगृह्णाति । अदितिर दौना देव माता ते तव



य ॥५८॥ अदित्यैरास्ना । अदित्यैरास्नास्यदितिष्टेबिलङ्गृभ्णातु ॥

कृत्वायसामहीमुखाम्मृन्मयींयोनिंमग्नयें ॥ पुत्रेभ्यःप्रायच्छदिदिं

बिलस्य मध्यं गृभ्णातु निदधातु । (३) ‡ कृत्वाय । उष्णिगनुष्टुव्वा आदित्याया उक्तगुणा अदिति: सा कृत्वाय । त्वायश्छान्दस उपन्नम् । कृत्वा । महीं महतीम् उखाम् । योनिं स्थानम् ।

(१) का० बिलतीय उत्तरे । वर्तिंसर्वत: करोत्रादित्यैरास्नेति । १६ । ३ । ३० । उखोर्ध्वमानत्रेधावि भजेत्रापरि तृतीय भागे सर्वत्र मृन्मयींमेखलां करोतितलान्मेखलान्तमपि प्रतिदिशंचतुर्त्तीरग्ने स्तनयुक्ता: कुर्यादितिसूत्रार्थ: ।

(२) का० बिलंगृह्णात्रादितिष्टइति । १६ । ४ । ३ ।

(३) का० कृत्वायेतिनिदधाति । १६ । ४ । ४ । एवमुखां निष्पाद्यभूमौस्थापयतीतिसूत्रार्थ: ।

---



* विश्वैर्नरैर्नीयन्तेविश्वान्नरान्नयन्तिवाविश्वे पांनराणांसंबंधिनोवाविश्वेभ्योनरेभ्योवाहितावावैश्वानरा: एवम्भूताऽखेत्त्वांकुर्वन्तु ।

† रास्ना दैवत्यं यजुर्गायत्री ।

‡ उ:ष्यगनुष्टुव्वाउष्णिक्पचेतृतीयपादश्चतुर्दशार्णस्तेनद्व्यधिकाऽनुष्टुप्पचे तृतीय: षडर्णोव्यूह्य: ।

अग्नये अग्न्यर्थम् पुत्रेभ्यः प्रायच्छत्प्रादात् अपयान् अपयन्तु। इति कारणः प्रयोजनस्याप

तिंऽअपयानितिं॥ ५९ ॥ वसंवस्त्वा। धूपयन्तुगायत्रेणच्छन्दसा

ङ्गिरस्वद्द्रुद्रास्त्वांधूपयन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वां

धूपयन्तुजागतेनच्छन्दसाङ्गिरस्वद्विश्वेत्वादेवावैश्वानराधूपयन्त्वा

नुष्टुभेनच्छन्दसाङ्गिरस्वदिन्द्रस्त्वाधूपयतुवरुणस्त्वाधूपयतुविष्णु

स्त्वाधूपयतु ॥६०॥ [ ११ ] अदितिष्ट्वा ॥ देवीविश्वदेव्यावतीपृथि

नार्थः ॥५९॥ सप्तभिरश्वशकृद्भिरुखांधूपयतिसप्तभिर्यजुभिः प्रतिमंत्रम् *। (१)वसवस्त्वा। ऋज्वर्थानि-

(१) का० सप्तभिरश्वशकृद्भिरुखान्धूपयति दक्षिणाग्न्यादीप्तैरेकैकेनवसवस्त्वेतिप्रतिमन्त्रम् १६ । ४ । ८ । दक्षिणाग्नौ प्रदीप्तैः सप्तभिरश्वलण्डरुखांप्रतिमन्त्रं धूपयत्यध्वर्युः धूमायमानमकैकमश्वलण्डमादायैकैकेन मन्त्रे णोखायांमध्येवह्नि-प्रचभ्रा मर्येदिति सूत्रार्थः।

---

* सप्तयजुष्षुखादेवत्त्यानिवीर्यिच्छगायत्रः तुर्यंसामजगतीपञ्चमसप्तमीयजुर्ष्यिष्टीषष्टंयजुरनुष्टुप्।

यजूंषि ॥६०॥ अभ्र्याश्वभ्रं खनति (१) अदितिष्ट्वा अदितिस्त्वां देवी * विश्वदेव्यावती। विश्वैर्देवैः सहितपृथिव्याः सहस्थाने अङ्गिरा इव खनतु।† हे अवट कूप। उखा मव दधातु। (२) देवानां त्वा।

व्याःसधस्थेऽअङ्गिरस्वत्खनत्ववटदेवानान्त्वापत्नीर्देवीर्विश्वदे
व्यावतीःपृथिव्याःसधस्थेऽ अङ्गिरस्वद्दधतूखेधिषणास्त्वादेवीर्वि
श्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वदभीन्धतामुखेव्वरूत्री
ष्ट्वादेवीर्विश्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वच्छ्रपयन्तूखे

इत उत्तरं पञ्चसु यजुःषु स्त्र्युत्तानान्यभिधेयानिव्याख्यायन्ते। ओषधयोवैदेवानांपत्न्यः दधतु स्थाप-

(१) का० अभ्राश्वभ्र ञ्चतुरस्रं खनत्यदितिष्ट्वेति। १६। ४। ८। अषाढोखाविश्वज्योतिषांपाकायचतुरस्रमभ्र्याखन तीतिसूत्रार्थः।

(२) का० देवानांत्वेत्युखान्युब्जाम्। १६।४।११। अधोमुखामषाढोतरतोगर्तेस्थापयतीतिसूत्रार्थः॥

---

* विश्वेषांदेवानांसमूहोविश्वदेव्यम् तद्दधतेयस्याः साविश्वदेव्यवती मंत्रेसोमाश्वेत्यादिनादीर्घः।

† अवटदेवत्यंप्राजापत्याविष्टुप्।

यतु उखे। अग्निनादीपयति। (१) धिषणा स्त्रास् धिषणावाचः। अभीन्धताम्। इन्धीदीप्तौ अपयति। (२) वरूत्रीष्ट्वा अहो रात्राणि वैवरूत्रयः। तानि हि हृणवन्ति। पचति द्वाभ्याम्।

ऽग्नास्त्वां देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पं चन्तूखे जनंयस्त्वाच्छिंन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सध स्थेऽअङ्गिरस्वत्पंचन्तूखे ॥ ६१ ॥ मित्रस्यं चर्षणीधृतः ॥ मित्रस्यंच

ग्नाना स्त्राग्नाहैतामग्रे देवः छन्दांसि वैग्नाः। छन्दोभिर्हि स्वर्गं लोकं गच्छति। जनयस्त्वा। नक्षत्राणि वैजनयः। अच्छिन्नपत्राः अनवच्छिन्नपत्राः ॥ ६१ ॥ आचरति। (३) मित्रस्य चष-

(१) का० अयणेनावच्छाद्यदक्षिणाग्न्यग्निनादीपयतिर्धिषणास्त्वेति । १६ । ४ । ४ । १४ । उखास्थापनानन्तरं विश्वज्योतिषस्तूष्णींश्वभ्रेऽवधायश्रपणैः सर्वमाच्छाद्यदक्षिणाग्नेरानीतेनवह्निनोखांदीपयतीतिसूत्रार्थः।

(२) का० वरूत्रीष्ट्वे तीक्षमाणोजपति । १५ । ४ । १३ । सामर्थ्यादुखोपरिस्थश्रपणे छिद्रंकृत्वातेनोखांपश्यन् त्रीणियजूंषि-जपतीतिसूत्रार्थः।

(३) का० आचरतिमित्रस्येति १६ । ४ । १६ । भस्मीभूतं श्रपणमुखायाः पराकरोतीतिसूत्रार्थः।

शु० य० सं० २४७ उ० भा०

णीधृतः । मैत्रीगायत्री । मित्रस्य दिव्यस्य चर्षणीधृतः । चर्षणयो मनुष्याः तेषां धारणो अभिज्ञतस्य श्रवः देवस्य । श्रवः रक्षणं । सनातनम् पुरातनं पुराणम् द्युम्नं च यशः अन्नं वा । चित्रश्रव स्तमम् । अतिशयेन चाकर्णनीयं श्रवणीयं च वयं स्तुम इतिवाक्यशेषः ।

र्षणीधृतोवोदेवस्यसानुसि ॥ द्युम्नञ्चित्रश्रवस्तमम् ॥ ६२ ॥ देवस्त्वा ॥ सविताेद्वपतुसुपाणिःस्वङ्गुरिःसुबाहुरुतशक्त्या ॥ अव्यथमानापृथिव्यामाशादिशऽआपृण ॥ ६३ ॥ उत्थायबृहती ॥ भुवोदु

यात्वे महीतिव्रा । यद्वा । यस्य मित्रस्य चर्षणीधृतः पालने पुराण मस्ति द्युम्नं चित्रश्रवस्तमम् तयजमानस्याभिप्रेत मर्थं साधयतु ॥ ६२ ॥ उद्वपति । देवस्त्वा । वृहती उख्या । देवः त्वा त्वां भवतीम् उद्वपतु । उद्वपनतु प्रकाशो करोतु । * सुहस्तः । † स्वङ्गुरिः शोभनाङ्गुलिः । लकारस्य रेफश्छान्दसः । सुबाहुः सुभुजः । उतशक्त्या अपिशक्त्या अपिबुद्ग्रति । उत शब्दः

* शोभनौपाणीचारुतीयस्य ।

† शोभनाअंगुयः करस्थायस्य ।

समुच्चयार्थः । उद्वपतीत्यनुवर्त्तते । त्वं च सवित्रा उद्वप्ता सति (१) अव्यथमाना अचलन्ती । पृथिव्याम् आश्रिता आशा दिशो दिश विदिशश्च आ पृण आपूरय आहुतिरसेन ॥ ६३ ॥ उद्यच्छति । उत्थाय बृहती । पूर्वोर्द्धं तस्य उत्तरोमैत्रः । एतस्मा द्यजनस्थाना दुत्थाय ।

तिष्ठद्ध्रुवात्वम्॥ मित्रैतान्तऽउखाम्परिददाम्यभित्त्याऽएषामाभे दि ॥६४॥ व्वसवस्त्वा। चक्षुन्दन्तुगायत्रेणच्छन्दसाङ्गिरुस्वद्रुद्रास्त्वा

बृहती महति भव । तत उदुतिष्ठ । प्रवर्त्तस्व । स्वकीये कर्मणि । यत स्त्वं ध्रुवास्थिरासि स्वभावतः । परिगृह्यपात्रे करोति । (२) मित्रैतान्तइति । हे मित्र एतां ते तव उखांपरिद- दामि प्रयच्छामि । किमर्थम् । अभित्त्यै अभेदनाय । एषा च उखा त्वया गृहीता

(१) का० उखासुतानां करीत्यव्यथमानेति । १६ । ४ । २१ । २२ । अयणमपाक्रत्याषाढांवहिर्निष्काश्योखासुतानामुतानांमू- र्ध्वं सुखीकरातीति सूत्रार्थः ।

(२) का० पात्रेकरोतिमित्रैतान्तइति । १६ । ४ । ११ । हस्तगृहीतामुखामुतरतः पूर्वंस्थापिते कस्मिंश्चित्पात्रेस्थापयतीति सूत्रार्थः

सती माभेदि । माभिद्यताम् ॥ ६४ ॥ आकृणत्ति । (१) वसव स्त्वा । * निगदव्या ख्यातम् ॥ ६५ ॥





छ्रुन्दन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वदादित्यास्त्वा कृन्दन्तु जागतेन च्छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आ कृन्दन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥ ६५ ॥ [ ५ ] आकूतिमग्निम् । आकूतिमग्निम्प्रयुजꣳ स्वाहा मनो मेधामग्निम्प्रयुजꣳ स्वाहा चित्तं विज्ञातमग्निम्प्र

औद्ग्रभणानि जुहोति । (२) आकूतिमग्निम् । आकवन माकूतिः । वलं वा आत्मनो धर्मो

(१) अजापयसावसिञ्चतिवसवस्त्वेतिप्रतिमन्त्रमिति । १६ । २३ । चतुर्भिर्मन्त्रैश्चतुर्वारमजादुग्धमुखावामवनयेतीति सूत्रार्थः ।

(२) का० प्राकृतान्यौद्ग्रभणानिहुत्वासप्ताग्निकान्याकूतिमितिप्रतिमन्त्रम् । १६ । ४ । ३ । एवमुखासम्भरणं समाप्या-न्याग्रपोष्टकाः कृत्वाफाल्गुनामावास्यायांदीक्षांकृत्वौद्ग्रभणहोमकाले प्राकृतानिसोमयागेकर्तव्यानिआकूत्यै प्रयुजेऽग्न-येस्वाहेत्यादीनि ४७ पश्चौद्ग्रभणानिहुत्वाग्निचयनसम्बन्धीनिसप्तौद्ग्रभणानि प्रतिमन्त्रं जुहोतीतिसूत्रार्थः ।

* उखादेवत्यानि । चत्वारिआद्याच्छगायत्रीहेउखेवसवः गायत्रेणछंदसाङ्गिरस्वत्त्वासकृन्दन्तुसमंतात्छिन्दन्तुउच्छादिरदीप्सिदेवनयोः रुद्राः । प्राजापत्यानु ष्टुप्रुद्रास्त्वाछंदसात्रैष्टुभेनआकृन्दन्तु आदित्याः आदितयाः जगतीछंदसात्वांकृन्दन्तु । वैश्वानरासर्वहितविश्वेदेवाअनुष्टुप्छंदसात्वांकृंदन्तु ।

मनसः प्रेरणाहेतुः । स एवाग्निः । प्रयुंक्ते कर्मणीति प्रयुक् । स्वाहा सुहुतं । करोमीतिव्याख्यातम् । नमः स्वस्ति स्वाहा स्वधे त्यादिना उपपद विभक्ति श्चतुर्थी । * आकूत्यै अग्नये प्रयुजे स्वाहा । एव मुपरि तना अपि मंत्रा व्याख्येयाः । † मनो ‡ मेधाम् । मनो

युजᳩस्वाहाव्वाचोव्विधृंतिमग्ग्निम्प्रयुजᳩस्वाहाम्प्रजापतयेमनवे स्वाहाग्ग्नयेव्वैश्वानरायस्वाहा ॥ ६६ ॥ व्विश्वोदेवस्य ॥ नेतुर्म्मर्त्तो

मनसः प्रवृत्ति मेधाया श्च । चित्तं विज्ञातम् । तत श्चित्तस्य चिन्तनस्य संस्कारस्य वा विज्ञातस्य प्रवृत्तिः । वाचो विधृतिः । ततो वाचो विधारयिता ग्निः प्रकाशको भवति । प्रजापतये मनवे मन्वन्तरकारिणेऽग्नये वैश्वानराय विश्वानर पुत्राय ॥ ६६ ॥ § विश्वो देवस्ये

---

* आकूतिरस्मदीयः सङ्कल्पोऽग्निचयनानुष्ठानविषयः तंसंकल्पप्रेरकमग्निमुद्दिश्यस्वाहासुहुतमस्तु ।

† अनुष्ठेयस्मरणसाधनंमनः ।   ‡ श्रुतयोमंत्रतन्त्रयोर्धारणशक्तिर्मेधातदुभयस्यपूर्तिप्रेरकमग्निमुद्दिश्यस्वाहासुहुतमस्तु ।

§ विश्वोमर्त्तोसर्वोमनुष्योनेतुः फलप्रापकस्यदेवस्यदानादिगुणयुक्तस्यसवितुः सखिभावंवृणीतवृणुते विश्वः सर्वोजनः रायेधनाय इषुध्यतिदेवंप्रार्थयते याचाकर्मसुपठितः क्रियपुष्यसेपी । पुष्टपोषणायद्युम्नंयशोवावृणीतसर्वोजनः प्रार्थयतेस्वाहा तस्मैप्रेरकायसुहुतमस्तु ।

तिव्याख्यातम् ॥६७॥ (१) उखा माहवनीये धिश्रयति। मासुभित्थाइतिगायत्रीत्रिष्टुप्भ्यामुखादेवत्या-
भ्याम्। अग्निश्चेद्दमितिपादश्चाग्नेयश्च। हे उखे मा त्वं भित्थाः। भिदिरविदारणे। भिद्यस्व।

व्वुरीतसुक्क्वास्म् ॥ व्विश्वधौराय॑ऽइषुद्धाति॑द्युम्म्नं व्वृणीतपुष्य॑सेस्वा
हा॑ ॥ ६७ ॥ मासु।भित्थामासुरिषोम्बं॑धृष्णुव्वी॑रय॑स्वसु॥ अग्नि
श्चेदङ्करिष्ष्पथः ॥ ६८ ॥ दृ॑हस्वदेवि। पृथिविस्वस्त्तय॑ऽआसुरीमा

सुकारोनर्थकः। मारिषः। रिषति हिंसा कर्मा। माविनश्यस्व। हे अम्बअम्बेतियोषायाश्चा-
मन्त्रणम् धृष्णु धृष्टं प्रगल्भं वीरयस्व वीरकर्म कुरुष्व। अग्निधारणे क्षमाम्। किञ्च। इत

(१) का० दण्डोच्छ्रयणान्तं कृत्वाध्वर्युर्यजमानयोरन्यतरउखामाहवनीयेऽधिश्रयतिमुञ्जकुलायमथ कुलायावस्तीर्णामन्तरे शणामासुभित्था इति तिष्ठन्नुदङ्प्राङ्। १६। ४। ३१। यो(?)ऽग्निमणहोमानन्तरं दीक्षणीयाशेषं समाप्यकृष्णाजिनदीक्षा दिदण्डोच्छ्रयणान्तं प्राकृतं कर्मकृत्वाध्वर्युर्यजमानो वेद्यानाभिमुखः प्राग्वातिष्ठन्नुदग्द्वयेनसमिद्धे आहवनीयेउखामा-रोपयतिकीदृशीमुखां मुञ्जतृणनिर्मितं पक्षिनीडं मुञ्जकुलायः शणनिर्मितं तच्छणकुलायस्ताभ्यांमध्येच्छादितामादौ शणकुलायेनततोन्येनेतिसूत्रार्थः।

उत्तरम् अग्नि श्च त्वं च इदं कर्म आसमाप्तेः करिष्यथः पचनम् ॥ ९८ ॥ इम् इस्वर्देवि । हे उखे इंहस्वदृढीकुरु आत्मानम् । हे देवि पृथिवि । कार्यं कारणो पचारो वर्णनार्थः । स्वस्तये अविनाशाय । कस्मा त्त्व मिद मुच्यसे । यत आसुरीमाया । असुः प्राणः । रेफश्चोप-जनः । प्राण संबन्धिनीमाया प्रज्ञा । स्वधया अन्नेन निमित्त भूतेन कृतासि । किञ्च । जुष्टं

यास्वधयाकृतासि ॥ जुष्टन्देवेभ्यऽइदमस्तुहव्यमरिष्टात्त्वमुदिहियज्ञेऽअस्मिन् ॥ ९९ ॥ द्रवन्नः सर्पिरासुतिः प्रत्नोहोतावरेण्यः ॥

प्रियं देवेभ्यो कृतम् इदं हव्यं हविः अस्तु । त्व त्प्रसादात् । या उख्याग्ना वाहुतयो हूयन्ते तापच्यन्ते । त्वमपि अरिष्टा अनवखण्डिता उदिहि उद्गच्छ । यज्ञे अस्मिन् वर्त्तमाने ॥ ९९ ॥ (१) उख्याग्नौत्रयोदशसमिधः प्रादेशमात्रीः आदधाति । त्रयो दशभिराग्नेयीभि र्ऋग्भिः ।

(१) का० अग्नावारूढत्रयोदशास्यां प्रादेशमात्रीः समिधआदधाति । १६ । ४ । २२ । घृतोन्नांकार्मुकीं द्रवन्नदृति अभितापादुखायांवञ्जीजातिप्रादेशमितास्त्रयोदशसंख्याकाः समिधोजुहोतिताः क्रमेणाह घृतक्लिन्नांक्रमुकसमिधमादौक्रमुकोधमनः इतिसूत्रार्थः ।

द्वेगायत्र्यौ । द्रुन्नः सर्पिरासुतिः । द्रु रुष्टच्यो न्नमदनीयं यस्य सद्रुन्नः । द्रु शब्दो द्रुमपर्यायः । सर्पिरासुतिः । सर्पि र्घृतं मासवनं स्थानीयं यस्य ससर्पिरासुतिः । प्रत्नः पुराणः । होता देवाना माह्वाता । वरेण्यो वरणीयः । सहसस्पुत्रः । बलस्य पुत्रः । यतो मथ्यमानो जायते तस्मा-

सहंसस्पुत्रोऽअद्भुतः ॥ ७० ॥ शतम् ५०० ॥ परंस्याऽअधिं ॥ संव्वतोवंरारँ ॥ ऽअभ्यातंर ॥ यत्राहमस्म्मितारँ ॥ ऽअंव ॥ ७१ ॥ पुरुम

देव मुच्यते । अद्भुतः अनन्यसमः । यद्दृत्थंभूतो ग्निः स कामुकिंसमिधं भक्षय तिष्ठति शेषः । नह्यनाख्यातं विद्यते नचाख्यातेन विनावाक्यपरिसमाप्तिः ॥ ७० ॥ शतम् ५०० । * वैकङ्कतीमादधाति । (१) परस्या अधि संवत् इति संग्रामनामसु पठितम् । संपूर्वस्य वनतेर्गत्यर्थस्य । संगच्छन्ते-

(१) का० वैकङ्कतींपरस्याइति । १६ । ४ । ३६ । विकङ्कततरुसमिधं जुहोतीतिसूत्रार्थः ।



* आग्नेयीगायत्रीविरूपदृष्टाद्दृतआध्यायान्तमाग्नेय्यः ।

च्चनयोधाः । परस्याः संत्रम्भिन्याः संवतः अधिसकाशात् । अवरान् अस्मदीयानभ्यातर अभ्यागच्छ । ततो यत्र जनपदे अह मस्थितान् अव पालय । तर्पय वा ॥ ७१ ॥ (१) औदुम्ब-रीमादधाति । परमस्याः । तिस्रोनुष्टुभः । परावत इति दूरनामसु पठितम् परमस्याः परावतः । परम दूरम् तस्मात् । हे रोहिदश्व । रोहितोग्नेः हरित आदित्यस्येतिनिघण्टुः । हे अ-

स्याः॑परा॒वतः॑ ॥ पु॒रम॒स्याः॑पर॒ावतो॒रोहि॑दश्व॒ऽइ॒हागहि ॥ पु॒री॒ष्यः॒ पु॒रुप्रि॒योग्ग्ने॒त्वन्त॑रा॒मृधः॑ ॥ ७२ ॥ यद॑ग्ग्ने । यद॑ग्ग्ने॒कानि॒कानि॑चि॒

ग्ने रश्व । इह आगहि आगच्छ । यतः त्वं पुरीष्यः पशव्योसि पुरुप्रियश्च * बहुजन प्रियश्च । औदुम्बरेवह्न्येवाशनानि तयोतदूर्जा सर्वा वनस्पती न प्रति पच्यत इतिश्रुतिः । आगत्य च हे अग्ने त्वं तर विनाशय । मृधः संग्रामान् ॥ ७२ ॥ (२) अपशुष्कामादधाति । यदग्ने ।

(१) का० औदुम्बरीं परमस्याइति । ११ । ४ । ३७ । ४७ । उदम्बरतरुसमिधं तृतीयामादधातीतिसूत्रार्थः ।

(२) का० अपर शुष्कक्रणांयदग्नइति । १६ । ४ । ४८ । कुठारंविनाछिन्नांवातादिनाभग्नांयज्ञियतरुसमिधं चतुर्थीमादधातीति-सूत्रार्थः ।

* बहुमनयेतिचिः ।

यच्छब्दो दध्मसी त्य नेन संवध्यते । यदा दध्मसि यदा दध्म: । हे अग्ने तव दारूणि कानि चित् चिच्छब्दो ऽनवक्लृप्तौ । यानि कानि चिदेत्यभि प्राय: । सर्वं तदस्तु ते त घृतं । तज्जुषस्व । सेवस्व । * हे यविष्ठयस्वार्थे यप्रत्यय: । युवतम ॥ ७३ ॥ (१)अध:शयामादधाति ।

दातेदारूणिदध्मसिं ॥ सर्व्वन्तदस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७३ ॥ यदत्तिं ॥ यदत्त्युपजिह्विकायद्वम्रोऽअतिसर्प्पति ॥ सर्व्वन्तदस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७४ ॥ अहरहरप्प्रयावम् ॥ अहरहरप्प्रयाव

यदत्ति । त ब्रुचयति काष्टम् उपजिह्विका उपदीपिका । य द्व वम्र: वल्मीक: अतो त्वनु वर्त्तते । सर्वं त दिति व्याख्यातम् ॥ ७४ ॥ (२) पालाश्या उपा भवन्ति

(१) का० अध: शयांयदत्तीति । १६ । ४ । ३९ । अधोनीचैदेशे शेतेत्तांभूलग्नांसमिधं पञ्चमीदन्धातीतिसूत्रार्थ: ।

(२) का० पालाशी: प्रत्यृचमहरहरितीति । १६ । ४ । ४० । अष्टभि: प्रत्यृचमष्टौपालाशी: प्रादेशमिता: समिधउर्ध्वे ऽग्नावादधातीति सूत्रार्थ: ।

* अतिशयेनयुवा यविष्ठ: यविष्ठएवयविष्ठ्य: ।

अहरहः। त्रिष्टुभौ। अस्मिन्मन्त्रे द्वितिय चतुर्थ पादयो र्विरोधः। अश्वायेवतिष्ठते घासमस्मै। अत्र तिष्ठते अस्मै द्वे पदे परोक्ष मग्निं ब्रूतः। तथा ग्ने माते प्रति वेशारिषामेति। अग्ने ते इति प्रत्यक्ष मग्निं ब्रूतः। नच वाक्य भेदेनार्थः सम्भवति। अतो द्वयोः पादयो र्लाक्षणिकया वृत्त्या व्याख्यायते। अहरहः सततम् अप्रयाव समप्रमत्तम् भरन्तः आहरन्तः अशनानि। कथ मिव। तदुपमेयो दर्शयति। अश्वायेति। अश्वस्ये वस्थापन्न

**भरन्तोऽश्वायेवतिष्ठतेघासमस्मै॥ रायस्पोषेणसमिषामदन्तोऽग्ने मातेप्रतिवेशारिषाम॥ ७५॥ नाभापृथिव्याः॥ समिधानेऽअग्नौ**

यन्तो वयं घासं यवसम् अस्मै तव। किञ्च। रायस्पोषेण। दक्षिणा लक्षणेन धनस्य पोषेण। समदन्तः उत्साहयन्तः इषा अन्नेन समदन्तः त्वां हे अग्ने। मारिषाम। मा विनश्येम। ते तव प्रतिवेशाः प्राति वेशिकाः। त्वदाश्रयादूत्यर्थः॥ अध्याहारेण वाव्याख्यायते। अह रहः अप्रमत्ता आहरन्तो शनानि। यच्च अश्वाये वदत्तं घासं भक्षितम् अदितं च अवतिष्ठते भस्म अस्मै अग्नये तदुद्वपन्तः। भस्मो द्वपन मपि पठितम् अत

शु०
य०
सं०
२५२
उ०
भा०

एव मपि व्याख्यायते। रायस्पोषेण समिषा मदन्तइत्यादि समानम्॥ ७५॥ नाभापृथि-
व्याइति। नाभौ पृथिव्याः। एषाह नाभिः पृथिव्यै यत्रै त त्समिध्यन्ते। समिधाने संदी-
प्यमाने आहवनी यारव्ये अग्नौ। रायस्पोषाय धनस्यस्पोपो षाय। बृहते महते। हवामहे
आह्वयामः। अग्नेयीअधिष्ठात्री देवता तदभिप्राय मेतत्। कथं भूत मग्नि मित्यत आह।

रायस्पोषायबृहुतेहवामहे॥ इरम्मदम्बृहदुक्थंय्यजंत्रञ्जेतारमग्नि
म्पृतंनासुसासहिम्॥ ७६॥ याःसेनाः॥ याःसेनाऽअभीत्त्वरीराव्या

इरम्मदम्। इरया न्नेन माद्यति दृप्यति। बृहदुक्थं महच्छस्त्रम्। यजत्रं यजनीयम्
जेतारं पृतनासु संग्रामेषु। सासहिम् सोढारम् अभि भवितारम्। स। धामिने अग्ना-
विति आहवनीय विषयो ग्नि शब्दः। जेतार मग्नि मधिष्ठात्र्यग्नि विषयः॥ ७६॥
या सेनाः अनुष्टुभः प्रागल्पतीयायाः। सा तू परिष्टा बृहती। याः सेनाः अभित्वरीः। इणग।
ता विल्यसा ड्वातोः इणनशजिसतिभ्यः इति क्वरप्प्रत्ययः। ह्रस्वस्य पिति कृतोति तुगागमे कृते

११अ०
शिवम
२५२

ष्टिष्ठाणश्चिति श्चीपिश्चते इत्वरी इतिसिद्धम् भवति इत्वाः। अभिद्याधिन्यः। आव्याधिनीः। आविध्य-
न्ति याः उगणा उत । उत शब्दोप्यर्थे । अपि च । उङ्गूर्णगणाः । पृषो दरादि पाठात् मध्यम पद
लोपः । येच स्तेना चौरा येच तस्कराः । तस्कर स्तत्करोति यत्पापक मिति निरुक्ताः। ता न्सर्वान्
ते तव हे अग्ने अपिदधामि प्रक्षिपामि आस्ये मुखे भक्षणाय ॥ ७७ ॥ दंष्ट्राभ्याम । दशनशी-

ध्विनीरुगंणाऽउत ॥ येस्तेनायेचतस्कंरास्ताँस्तेऽअग्नेपिंदधाम्म्या
स्ये ॥ ७७ ॥ दंष्ट्राभ्यांम्मलिम्म्लूञ्जम्भ्यैस्तस्कंराँ १ । ऽउत ॥ ह
नुंभ्याᳬंस्तेनान्भंगवस्ताँस्त्वङ्खांदसुखांदितान् ॥ ७८ ॥ येजनेषु । म

लाभ्यां इष्टाभ्याम् राक्षसिके इति ये उच्येते ताभ्याम् मलिम्लून् । मलिम्लुचः उक्ताः गूढा स्तेन
तया म्लोचयन्ति अदृश्याभवन्ति जनेश्चक्षेचथे जम्भैः स्तस्करान् जम्भाइति समाश्रिता जम्भाः
ताभिः तस्करान् उत अपि । हनुभ्यां च हननशीलाभ्यां स्तेनान् हे भगवः हेभगन् मह दे-
श्वर्य युक्त । तान् त्वं खादा यथा सुखादिता भवति ॥ ७८ ॥ जनेषुमलिम्लुचः जनेषुस्ते-

नाम: आरंजसेरसुक् तस्कराः। वनेवनाश्रिताः। येवकक्षेषु। नदीपर्वतकाक्षेषु अघायवः। छन्दसिपरेच्छायामितिवक्तव्यम् इत्यघशब्दात्क्यचक्याच्छन्दसीतिउप्रत्ययः अघं परस्मै इच्छन्तो त्यघायवः तान् तत्र दधामि स्थापयामि जंभयोः भक्षणाय ॥ ७९ ॥ यो अस्मभ्यम् यो मनुष्य अस्मभ्यम् अस्मदर्थम् अरातीयान्। अरातिरिवाचरेत्। अरातिः शत्रुः। यश्च



त्वि॒म्म्लुंवस्ते॒नासु॒स्तस्क॑रा॒ब्वनें॑ ॥ येकक्षे॑ष्ष्वघा॒यव॒स्ताँस्तें॑दधामि॒जम्भ्यो॑ः ॥ ७९ ॥ योऽअ॒स्म्मभ्य॑म् । योऽअ॒स्म्मभ्य॑मरातीया॒दश्च॑नो॒द्वेष॑ते॒ जन॑ः ॥ निन्दा॒द्योऽअ॒स्म्मान्धिप्प्सा॑च्च॒सर्वं॒न्तम्म॑स्म॒सा कु॑रु ॥ ८० ॥ सꣳशि॑तम्मे ॥ सꣳशि॑तम्मे॒ब्र॒ह्मसꣳशि॑तं॒वी॒र्य्यं॒ब्बल॑म् ॥ सꣳशि॑तक्षत्रं

न: अस्मान् द्वेषते द्वेष्टिजनः। निन्दात् च निन्दयति यो स्मान् दिप्सात् च दम्भोतेः सन्यभरा खलोपः। दम्भितुमिच्छति यः। तान् तव दधामि। सर्वमेतच्छत्रुजातं मस्मसा कुरु। म- स्मसेति शब्दो नुकरणे डाजन्तः। यथा भक्ष्यमाणा मस्मसा शब्दं कुर्वन्ति तथा कुर्वित्यर्थः ॥ ८० ॥

पुरोहितस्या दधाति। (१) संशितंमे ब्रह्म। शो तनूकरणे उपसर्ग व्यत्ययः। निशितं तीक्ष्णी-कृतं मे मम ब्रह्म। निशितं च वीर्यम् वीरकर्म बलम् निशितं च क्षत्रं जिष्णु जयन शीलम् यस्य अहम् अस्मि भवामि पुरोहितः ॥ ८१ ॥ (२) उदेषाम् क्षत्रियस्य उदति-

ज्ञिष्णुर्यस्याहमस्मिपुरोहितः ॥ ८१ ॥ उदेषाम् ॥ उदेषाम्बाहूऽअतिरमुद्वर्चोऽअथोबलम् ॥ क्षिणोमिब्रह्मणामित्रानुन्नयामिस्वाँ २ ।ऽअहम् ॥ ८२ ॥ अन्नपतेन्नस्य ॥ नोदेह्यनमीवस्यशुष्मिणः ॥

रम् उद्गरितवान् असि एषां योद्धृणां बाहू उद्वर्चः उद्गरितवान् वर्चः। अथो अपि च बलम्। क्षिणोमि च विनाशयामि ब्रह्मणा पुरोहि संज्ञेन अमित्रान्। उन्नयामि उद्गमयामि च स्वान्

(१) का० उपोत्तमांक्षत्रियस्यैच्छन्नुत्तमांपुरोहितस्य ।१६।४।४१। क्षत्रिययजमानस्यद्वादशीसंशितमित्येतामिच्छयाद-धातिएकादशनित्याः सर्वासाम्चामन्ते स्वाहाकारश्चेतिसूत्रार्थः।

(२) का०एषांस्वकीयानांराजब्राह्मणादीनांमध्येएकैकस्यबाहूभुजौउदतिरमुत्कर्षेणवर्धितवानस्मिततिरतिवृद्ध्यर्थः लौकिकोक्तिरियं लोकेहियोन्यस्मादुत्कृष्टोभवतिजनाएवंवदन्ति अयंस्वहस्तमुपरिक्षिप्तवानिति।

पुत्रपौत्रान् अहम् ॥ ८२ ॥ (१) समिध मादधाति । (२) अन्नपते । अग्ने अन्नस्य त्व मंत्रं नः अस्मभ्यं देहि अनमीवस्य । अमीवा व्याधिः तद्रहितस्य । शुष्मिणः । शुष्म मिति वल नाम । वलवतः । किञ्च । प्रप्रदातारन्तारिषः । अतिशयार्थं उपसर्गो भ्यासः । महता

प्रप्रदातारन्तारिषऽऊर्जन्नोधेहिद्विपदेचतुष्पदे ॥ ८३ ॥ [ १८ ]

इतिसंहितायांएकादशोऽध्यायः ११ ॥

प्रकर्षेणा न्नस्य दातारम् प्रदातारं प्र तारिषः प्रवर्द्धय । किञ्च । ऊर्ज्जं मन्नं नः अस्मभ्यं धेहि देहि । द्विपदे चतुष्पदे । द्विपाद्भ्य श्चतुष्पाद्भ्य श्च ॥ ८३ ॥

इति उव्वटकृतौमन्त्रभाष्यएकादशोध्यायः ॥११॥

(१) का० त्र्यञ्यसमिधंव्रतेप्रत्त्ये ऽन्नपतइत्याधानम् । १६ । ६ । ८ । अध्वर्युणाव्रतपयसिदत्ते तत्रसमिधमभ्यञ्ज्यदीक्षितउव्ये- ऋावादध्यात् । प्रत्तइतिवीप्साप्रतिव्रतंसमिदाधानप्राप्त्यर्थाइतिसूत्रार्थः ।

(२) का० आग्नेयीउपरिष्टाद्बृहती अष्टार्ण त्रिपादाचतुर्थीद्वादशार्णः

(१) यजमानः कण्ठे रुक्मम् प्रतिमुञ्चति। (२) दृशानो रुक्मः। त्रिष्टुप्। आदित्या ध्यासेन रुक्मस्तुतिः। यो दृशानः दृश्यमानः प्रत्यक्षेण उपलभ्यमानः। रुक्मः रोचनः। उर्व्या महत्या दीप्त्या व्यद्योत् विद्योतते यस्य च दुर्मर्षमायुः। दुर्मर्षं मनवखण्डितम् आयु र्जीवनम्। श्रियेरु-

दृशानो रुक्मः। दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः॥ अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः॥१॥

चानः। यस्त्वजनेभ्यः श्रियंदातुं रोचते। सोयमग्निः अमृतः अमरणधर्मास्वभवत्। बयोभिरन्नैः पशुपुरोदाशप्रभृतिभिः। यदेनन्द्यौरजनयत्। यच्चएनमग्निन्द्यौः अजनयत्जनिनवती। सुरेताः शोभन रेताः। रेतः पुत्रः। सुरेता ह्येषा यस्या यमग्नि रिति द्वितीय समृतत्वकारण

(१) एकादशाध्याये उखासम्भरणादिमन्त्रा उक्ताः द्वादशेध्याये उखाधारणादिमन्त्रा उच्यन्ते।

(२) का० यजमानः कण्ठे रुक्मं प्रतिमुञ्चते;परिमण्डल मेकविंशतिपिण्डं कृष्णाजिननिव्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रं त्रि-वृत्त्योत्तमुपरिनाभि बहिष्पिण्डं दृशानोरुक्म इति। १६। ५। १। समिदाधानान्ते; ऐशान्यां तिष्ठन्यजमानोग्रीवायां रुक्मं स्वर्णनिर्मितं फलकाकार माभरणविशेषं बध्नाति। कीदृशं वर्तुलं एकविंशत्तिः पिण्डायत्त। शणकदलतुल्याः स्वरूपाद्बहि-

मग्ने: ॥१॥ द्वाभ्याम् परि गृह्णाति। (१) नक्तोषासा। आग्नेयो त्रिष्टुप् नक्ता रात्रिः। उषा शब्देना ह रुच्यते। रात्र्यहनी। समनसा एकमनस्के विरूपे। नानारूपे कृष्णा रात्रिः शुक्ल मह:। धापयेते यापयेते। सायं प्रात रग्निहोत्रादिभिः कर्मभिः। शिशुं बाल मिव माता पितरौ एकम्

नक्तोषासासमनसा॥ विरूपेधापयेतेशिशुमेकंᳶसमीची॥ द्यावाक्षा मारुक्मोऽअन्तर्विभातिदेवाऽअग्निन्धारयन्द्रविणोदाः॥ २॥ वि

अग्निलक्षणम्। स मीची सम्यग ञ्चते संश्लिष्टे वा। ये इत्थं भूते ताभ्यां गृह्णामी ति शेषः हरन्॥ जपति। (२) द्यावाक्षामा। द्यावा पृथिव्यौ यो रुक्मः रोचनः अन्त र्विभा-

भूता उन्नतबिन्दवः पिण्डा उच्यन्ते। कृष्णाजिनखण्डे श्वेतकृष्णरोमस्थाने स्यूतम् त्रिगुणशणसूत्रे प्रोत नाभेरुर्ध्वं वर्तमानं पिण्डा वह्निर्भवन्तितया धार्य मिति सूत्रार्थः

(१) का० परिमण्डलाभ्या मिण्डूाभ्या मुखांपरिगृह्णाति नक्तोषासेति। १५। ५। ३। वर्तुलाभ्या मुखाधारणसाधरूपाभ्या मिण्डूाभ्या मुखांगृह्णाती ति सूत्रार्थः।

(२) का० हरति द्यावाक्षामेति। १६। ५। ४। आहवनीयोपरिस्था मुखा मेव सिण्डूाभ्या मादाय द्यावेति पादेनासन्दो मन्ति त हरतीति सूत्रार्थः।

ति अन्तरा दीप्यते तं हरामी ति शेषः। नि दधाति। (१) देवा अग्नि न्धारयन्द्रविणोदाः। य मग्नि देवा द्रविणोदाः धन दातारो धारितवन्तः त मह धारयामीति शेषः॥ २॥ शि-क्य पाशं प्रतिमुञ्चतो (२) विश्वा रूपाणि *जगती साविवी। यः विश्वानि सर्वाणि रूपाणि प्रति-

विश्वांरूपाणि॥ विश्वांरूपाणिप्रतिमुञ्चतेकविःप्रासावीद्भद्रंद्विप चतुष्पदे॥ विनाकमख्यत्सविताव्वरेण्योनुप्रयाणमुषसोविराज

मुञ्चते प्रतिबध्नाति द्रव्येषु पहत्य शार्वरन्तमः प्रकाशयतीत्यर्थः। कविः क्रान्तादर्शनः। य श्च प्रासावीत् प्रसौति। भद्रं भन्दनीयम् द्विपदे चतुष्पदे। द्विपाद्भ्य श्चतुष्पाद्भ्य श्च। विना-

(१) का० आहवनीयस्य पुरस्ता दुद्गात्त्वासन्दीवदासद्यां चतुरस्राङ्म्य शिक्यवत्या मादधातीति देवाऽग्नि मिति। १६। ५। ५। आहवनीयात्पूर्वदिशि भूमौस्थापिताया मासद्या मुखां निदधाति देवा इति पादेन उद्गात्रासन्दीवदिति प्रादेशमात्रपाद्या मौदुम्बर्यारत्निमात्त्राङ्ग्या मुञ्जरज्वा व्युताया मिति लभ्यते तथा चतुरस्राणि चतुष्कोणानि अङ्गानीषोपलपादरूपाणि यस्यास्तस्यांसशिक्या श्चेति सूत्त्रार्थः।

(२) का० शिक्यपाश मतिमुञ्चति षड्द्यामं विश्वारूपाणीति। १५। ५। ६। उत् ऊर्ध्वं यम्यतेनियम्यते थैस्ते उद्यामा रज्जवः षड्द्यामारज्जव ऊर्ध्वाकर्षणहेतवो यस्य दृश मासन्दीस्थं शिक्यपाशं यजमानः कण्ठे बध्नातीति सूत्त्रार्थः।

क मस्य त्सविता वरेण्यः। अभ्यव्यख्यत् विख्यापयति प्रकाशयति। नाकं द्युलोकम् सविता सर्वस्य प्रसविता। वरेण्यः वरणीयः। अनु प्रयाण मुषसो विराजति। स सविता उषसः प्रयाणं प्रगमनम् अनुपश्चात् विराजति दीप्यते। उषाः सवितुः पुरोगामिनीति सवितुः स्तुतिः। य त्थंभूतः सविता सम्यिक्यं प्रतिमुञ्चत्वि त्यर्थः॥ २॥ (१) विष्णुत्वा भिमन्त्रयते विष्णुतिस्वतु

ति॥ ३॥ सुपर्णोसि॥ गुरुत्माँस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथन्तरेप क्षौ॥ स्तोमऽआत्माछन्दाᳪस्यङ्गानियजूᳪषिनाम॥ सामतेतनू र्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याःशफाः॥ सुपर्णोसिगरुत्मा

स्त्वसाना। गारुत्मती त्रिष्टुप्। सुपर्णोसि। सु पतन स्त्व मसि। गरुत्मान् गमनवान् अशनवात्। त्रिवृत् स्तोमः ते तव शिरः गायत्रं चक्षुः। बृहद्रथन्तरे सामनी पक्षौ पञ्च विंशः स्तोमः। आत्माछन्दांस्येकविंशतिरङ्गानि। यजूंषिनाम। सामतेतनूःवामदेव्यम्। यज्ञायज्ञियंपुच्छम्।

(१) का० सम्यिक्यं प्राचं प्रमुञ्चत्वित्ति सुपर्णोसीत्ति पिण्डवत्। १६। ५। ७। शिक्यसहित मुख्याग्निमाच्या मूर्ध्वं धारयति। पिण्ड-वदित्यूर्ध्वबाहुः अनेनैत्याग्ने रभिमन्त्रण मुख्यत्वं कैश्चिदिति सूत्रार्थः।

धिष्ण्या:अग्नय:शफा:खुरा:। यतस्त्वंसुपर्णोसिगरुत्मान्‌ अतोब्रवीमि त्वाम् दिवं गच्छ स्व: स्वर्लोकं * पत ॥४॥ (१) विष्णु क्रमान् क्रमते। † विष्णो: क्रमोसि। ‡ विष्णो: यज्ञस्या ग्ने यत:

न्दिवंङ्गच्छस्व॒ःपत ॥ ४ ॥ व्विष्ण्णोःक्क्रम॑ः ॥ विष्ण्णोःक्क्रमोसिसपत्न्न॒हागा॑यत्रञ्छन्न्द॒ऽआरो॑हपृथिवीमनुविक्क्र॑मस्वव्विष्ण्णोःक्क्रमोस्यभिमातिहात्त्रैष्टु॑भञ्छन्न्दऽआरो॑हान्तरिक्षमनुविक्क्र॑मस्वव्विष्ण्णोःक्क्रमोस्यरा

क्रमोसि सपत्नहा च शत्रु घातक स्व अत: गायत्रं छन्द आरोह पृथिवी मनु विक्रमस्व। अभिमातिहा। अभिमाति रपि केन चि द्गुण विशेषेण शत्रु रेवो च्यते। ऋज्वन्यत्। अरातीयतोहन्ता। अराति रिवा चरति अरातीयति। अराति: शत्रु:। तस्य अरातीयत: शत्रूयतो-

(१) का० विष्णुक्रमान् क्रमते विष्णोरिति प्रतिमन्त्र मग्न्यु द्ग्रहणं च तस्मिं स्तस्मिन्। १६। ५। ११। विष्णुक्रमसञ्ज्ञान् पादन्यासान् करोति तस्मिं स्तस्मिन् क्रमतं उख्यस्याग्नेरूर्ध्वं ग्रहणं कार्यमिति सूत्रार्थ:।

---

* प्राप्नु हि। † चत्वारियजूंष्युख्याग्निदेवत्यानि ऋग् बृहतीछन्दस्कानि त्रीणि चतुर्थं प्राजापत्याबृहती।

‡ विष्णु शब्दे नाग्निरुच्यते सविष्णु र्यज्ञ: स: सय: सयज्ञोऽयमेव सयोऽयमग्निरुख्याया मितिश्रुते।

हन्ता। अत्रस्तनेन व्याख्यातम् ॥५॥ (१)ऊर्द्ध्वबाहुः प्रदक्षिणं गृह्णात्यग्निम् * अक्रन्ददग्निःत्रिष्टुप्। अस्या ऋच्य ग्नि पर्जन्यौ कथ्येते। अक्रन्दत् क्रन्दते विस्फूर्जति अग्निः। स्तनयन्निवद्यौः। द्यौः शब्देना त्र पर्जन्य उक्तः यथा स्तनयन् पर्जन्यः शब्दं करोति एव मग्निः पर्जन्यवत्

तीयुतोहुन्त्ताजागंतुञ्छन्दुऽआरोहुदिवमनुविक्रमस्वविष्णोःऽ क्रमो

सिशत्त्रूयुतोहुन्त्तानुंष्टुभुञ्छन्दुऽआरोहु(१) दिशोनुविक्रमस्व ॥५॥ अ

क्रन्ददुग्ग्निःऽ॥ अक्रन्ददुग्ग्निस्तुनयन्निवुद्यौःक्षामारेरिंहुद्वीरुधःस

शब्दंकरोति अथा न्यान्यपि पार्जन्यानि रूपाण्य ग्नेः प्रदर्श्यन्ते। क्षामारेरिह्व वीरुधः समञ्जन् क्षामा शब्देन पृथिव्यु च्यते। द्वितीयार्थे च प्रथमा। लिह आस्वादनेयथा पर्जन्य उदक भाव मुपगच्छन्न त्यर्थं पृथिवीं लेढि आस्वादयति वीरुधः समञ्जन् व्याप्नुवन् एव मय मग्निः

(१) का० पिण्डवत्प्रागुदक्स्वम्प्रगृह्णात्यक्रन्ददग्निरिति। १६। ५। १४। ऊर्ध्वबाहुः प्रागूर्ध्वमग्निं प्रगृह्णातीतिसूत्रार्थः

(१) का० दिशोवीक्षतेदिशोनुविक्रमस्वेति। १६। ५। १३। सर्वादिशः पश्यतीत्यर्थः।

* अग्निदेवत्यात्रिष्टुप् वत्सप्रीदृष्टा।

पृथिवी मत्यर्थं मास्वादयति स्वकीय ज्वाला समूहे नौषधीः समंजन्। व्याप्नुवन्। अन्य दप्युच्यते। सद्यो जज्ञानो विह्वी मिद्धो अख्यत्। यथा पर्जन्यः सद्य एवाभ्र रूपेण जाय- मानो व्यख्यत् वि रुपसर्गः ख्याति नार्थं वर्ध्यते तेन विख्यापयति हि ई इद्धो धारा शतसहस्रैः। हि ई इमौ निपातौ पादपूरणौ। एव मय मग्निः सद्य एव जायमानः इद्धः सन् मञ्जन्॥ सुद्योजंज्ञानोव्विहीमिद्धोऽअख्युदारोदसीभानुनाभात्यन्तः॥ ६॥ अग्नेऽभ्यावर्त्तिन्। अग्नेऽभ्यावर्त्तिन्नभिमानिवर्त्तस्वायुषाव्वर्च्चसा

इदं सर्वं विख्यापयति। अन्यच्च। आरोदसी भानुना भात्यन्तः। यथा पर्जन्य आभाति भानुना विद्यु द्रूपेण। रोदसी द्यावापृथिव्यो रन्त र्व्यवस्थितः। एव मय मग्नि राभाति भानुना दीप्त्या द्यावा पृथिव्यो रन्त र्व्यवस्थितः। एव मग्निः पर्ज्जन्यवत् स्तूयते ऋषिणा॥ ६॥

(१) अवहरति। * अग्ने अभ्यावर्तिं न्निति इतः प्रभृति पञ्चाग्नेय्यः। अग्ने अभ्यावर्तिं

---

(१) का० अवहरत्यग्नेऽभ्यावर्त्तिन्निति। १६। ५। १५। ऋक्चतुष्टयेनचतुर्वारमुख्याग्निमात्मसमीपमानयतीतिसूत्रार्थः।

* अग्निदेवतोर्ध्वबृहतीद्वादशार्णत्रिपादा।

उद्बृहती । हे अग्ने अभ्यावर्तनशील । अभिनिवर्तस्व मां प्रति । आयुषा वर्चसा । अन्नेन । प्रजया धनेन । सन्या । लाभेन । मेधया । रय्या । सुवर्णो तत्कर्षेण । पोषेण धन पुष्ट्या ॥ ७ ॥ (१) अग्ने अङ्गिरः । महाबृहती । हे अग्ने अङ्गिरः । अङ्गानां रसभूत । शतं तव सन्तु आवृत: आवर्तनानि । शत शब्दोऽ संख्यान विषय: । सहस्रं

साप्प्रजयाधनेन ॥ सुन्यामेधयारुय्यापोषेण ॥७॥ अग्नेऽअङ्गिरः ॥ शुतन्तेसन्त्वावृतः सुहस्रन्तऽउपावृतः ॥ अधापोषस्युपोषेणपुनर्न्नो नुष्टमाकृधिपुनर्न्नोरुयिमाकृधि ॥ ८ ॥ पुनरूर्ज्जा ॥ न्निवर्त्तस्वपुनर

वहूनि च उपावर्तनानि सन्तु । अथ अध समानार्थौ अथै वं भूयो भूय: करणे नावर्तमान: । पोषस्य पोषेण अनवच्छिन्न धनागमेन सह पुन: नो स्माकं नष्टम् न आकृधि आगमय । रयिं धन पुनरागमय । (२) करोति गतिकर्मा ॥ ८ ॥ पुन रूर्जा । गायत्री । पुन: पुन रभ्यासो ऽनवच्छे-

(१) का० आग्नेयीमहाबृहतीएक:पादोद्वादशार्णश्चत्वारोष्टार्णा: ।

(२) शृणुतृणुषृवृग्रस्छन्दसीतिहेर्धि: व्यत्ययेनपोलुक् ।

द्वार्थः। पुन रपि ऊर्ज्जां दध्या घृ्युपसेचनेन निवर्त्तस्व पुनश्च हे अग्ने इषा अन्नेन सह आयुषा च सह। किञ्च पुनरेव नोस्मान् पाहि अंहसः पापा त्सकाशात् यथा पूर्वं रक्षिताः॥ ९॥ सह-रय्या। सह धनेन निवर्त्तस्व। किञ्च। हे अग्ने पिन्वस्व पिन्वतिः सेचनार्थः। तां च रयिं सिञ्च। वसो धीरया अनवच्छिन्न धनदानेन निवर्त्तस्व। पुनः पुनराप्यायस्वे त्यभिप्रायः।

ग्ग्नऽइषायुषा॥ पुनर्न्नःपाह्यᳬंहसः॥ ९॥ सुहरय्या॥ निवर्त्तस्वा ग्ग्नेपिन्वस्वधारया॥ विश्वप्स्न्याविश्वतस्परि॥१०॥ आत्वा॥

कथं भूतया रय्या। विश्वप्स्न्या विश्वतस्परि। (१) प्सा भक्षणे सर्वजनोपभोग्यया। विश्वतस्परि। सर्वतो धिग तैरर्थैः पूर्यमाणया रय्या॥ १०॥ (२) उपरित तना निधारय न्नभिमंत्रयते। * आत्वाहार्षम्। अनुष्टु बग्राहार्षं त्वां यतः द्युलोकात्। हृञ् हरणे। † हृतवान्। त्वं

(१) विश्वैः प्सायतेपीयते भक्ष्यते इति विश्वप्स्नीतया।

(२) का० उपरिधारयन्नात्वाहार्षमित्यभिमन्त्रयते। १६।५।१६। नाभेरुपर्युख्याग्निन्धारयंस्तमभिमन्त्रयते इतिसूत्रार्थः।

---

* आर्थ्यनुष्टुब्ध्रुवदृष्टा। † आहृतवानग्निमाङ्पूर्वस्यहरतेर्लङ्उत्तमैकवचनम्।

च। अन्तरभूः। अन्तः नाभ्या उपरि शरीर मध्ये अभूः। अतो ब्रवीमि। ध्रुवः स्थिरः तिष्ठ। अविचाचलिः। अविचलन शीलः। किञ्च विशः त्वां सर्वाः वाञ्छन्तु। अन्नं तवो पतिष्ठतु सर्वस् अन्नं विविडि तिश्रुतिः। मात्वत् त्वतो राष्ट्रं जनपदसमूहः अधिभ्रशत् अधिभ्र

ह्यार्षमुन्तरंभूर्द्ध्रुवस्तिष्ठाविचाचलिः॥ विशंस्त्वासर्व्वावाञ्छन्तुमात्व द्राष्ट्रमधिभ्रशत्॥ ११॥ उदुत्तमम्॥ उदुत्तमं वरुणपाशमस्मद वाधमंविमध्यमथंश्रथाय॥ अथावयमादित्यव्रतेतवानागसोऽअदि तयेस्याम॥ १२॥ अग्रेबृहन्॥ अग्रेबृहन्नुषसामूर्ध्वोऽअस्थान्निर्ज्ज

श्यतु ॥११॥ (१) पाशा न्विमुञ्चति। उदुत्तमम्। वारुणी त्रिष्टुप्। उ दित्य य मुपसर्गः श्रथाये त्यनेन संवध्यते। हे वरुण उत्तमं पाशम् उच्छ्रथय। श्रथ शैथिल्ये। श्लथो ऽत्यो र्द्विनय अधमत् अधमः अवाधमम् अधमं च पाशम् अवाचीनं श्लथय। वि मध्यमम्

(१) का० पाशवन्मुचोदुत्तममिति। १६। ५। १७। रुक्मपाशशिक्यपाशौगलादूर्ध्वंमार्गेणनिष्कासयती तिसूत्रार्थः।

स्थान स्थित सेत्रविश्लथय मध्यमम् । अथैवं कृते सति वयं हे आदित्य अदितेः पुत्र व्रते त वकर्मणि वर्तमानाः अनागसः अनपराधाः अदितये आदीनतायै स्याम भवेम ॥ १२ ॥ प्रदक्षिणान् गृह्णाति । * अग्ने । वृहन् । त्रिष्टुप् । आदित्यात्मनोऽग्नेः स्तुतिः । यः अग्ने उषसां वृहन् महान् प्रभावतः उर्द्ध्वं अस्थात् स्थितः । य स्व निर्जगन्वान् तमसः निर्गतो रात्रि

गुन्न्वान्तमंसोज्ज्योतिषागांत् ॥ अग्निर्भानुनारुशंतास्वङ्गऽआजा तोविश्वासद्मान्न्यप्प्राः ॥ १३ ॥ हुंऽ सःपुंचिषत् ॥ हुंऽ सःपुंचिषद्व

लक्षणा तमसः अह लक्षणेन ज्योतिषा सह अगात् आगतः सोऽग्निः भानुना रुशता रोचिष्णुना । स्वङ्गः शोभनाङ्गः । आ जातो विश्वा सद्मा न्यप्राः । प्रापूरणे । आ अप्राः आपूरितवान् जातः संजात रश्मिः विश्वा सद्मानि । इमे वै लोका विश्वासद्मानी ति श्रु-

(१) का० पिण्डवत्प्राग्दक्षिणा प्रगृह्णात्यग्ने वृहन्निति । १६ । ५ । १८ । पूर्वमन्त्रेणाग्रग्रावुत्सुचोर्ध्वं वाहुराग्नेयीं दिशं प्रत्यस्यामिन्धारयतीतिसूत्रार्थः ।

श्रु० य० सं० २६० उ० भा०

ति: सर्वाणि सदनानी प्रत्यच्च द्दत्तिता ॥ १२ ॥ अवहरति । ह ठं० स: शुचिष दिति । ज-
गती यजु रन्ता । इहदिति यजु: । जगत्या गजगती हे माल्लोका निति श्रुति: । तथा
इह दिति निदधातीति राजसूये अतिच्छन्द स मित्युक्तम् । व्याख्यातो मन्त्रार्थ: ॥ १४ ॥
उपतिष्टते सीदत्त्व मिति तिसृभि राग्नेयीभि: । एका त्रिष्टुप् द्वे अनुष्टभौ । सीदत्त्वम् ।

सुंरन्तरिक्षसद्धोताव्वेदिषदतिंथिर्द्दुरोणसत् ॥ नृषद्वंरसदृत सद्व्योमु
सदुब्जागोजाऽऋृतजाऽअंद्रिजाऽऋृतंबृहत् ॥ १४ ॥ सीदुत्वम् । सीदु
त्वम् । सीदुत्त्वम्मातुरस्याऽउपस्थेविश्वांन्यग्ने व्वयुनांनिव्विद्वान् ।

अवस्थानं कुरु त्त्वम् अस्या उखाया मातु: उपस्थे उत्सङ्गे । विश्वानि सर्वाणि हे अग्ने
वयुनानि प्रज्ञानानि विद्वान् प्रजानन् पदार्थ सात त्व वेदीत्यर्थ: । किञ्च । उखाया मव-
स्थानं कुर्वन् । मैनां तपसा मार्चिषा भिशोची । मा अभिशोची: मा अभितापयेः
एना सुखां तपसा तापेन मा चा र्चिषा ज्वालया । किञ्च । अन्त: अस्यांमध्ये अस्यासु-

१२अ० शिवम् २६०

खाया भवस्थितं सु क्रज्योतिः शुक्ल कर्म साधनं ज्योतिः विभाहि विविधं दीप्यस्व ॥ १५ ॥
(१) अन्तरग्ने । व्यवहित पद सवन्ध भायो यं मन्त्रः । हे अग्ने यस्या उखाया स्त्वमन्त मं-
ध्यतः रुचा । दीप्त्या सहितः सदनेस्वे । स्वकीये स्थाने वर्तसे । तस्या एव उखायाः त्वं

सैनान्तपंसामार्च्चिषाभिशोचीरन्तरंस्याᳪंशुक्रज्ज्योतिर्व्विभाहि ॥१५॥
अन्तरंग्ग्ने॥ रुचा त्वमुखायाऽसदंनेस्वे॥तस्यास्त्वᳪंहरंसातपञ्जातवेद
ऽशिवोभव ॥१६॥ शिवोभूत्वा ॥ मह्यमग्नेऽअथोसीदशिवस्त्वम् ॥

हरसा जयोतिषा तपन् । तप तापे । हे अग्ने (२) ज्ञातवेदाः जातं जातं वेत्तीति जातवेदा
स्त त्वं वोधने हे जातवेदः जातप्रज्ञान । शिवो । भव शान्तो भव ॥ १६ ॥ शिवो भूत्वा ।
शान्तो भूत्वा मह्यं हे अग्ने । अथो अपि च । सीद उपविश उखायाम् । शिवस्त्वम्

(१) अग्नि देवत्ये द्वे अनुष्टुभौ ।
(२) जातंवेदोज्ञानं यस्येतिवा जातविज्ञान ।

शिवाः सत्वा दिशः सर्वा स्वं योनिं स्थानम् (१) इहासद. इह आसदः आसीद ॥ १७ ॥ वात्स प्रेणो पतिष्ठते ।(२) दिवस्परि ।* द्वादशा ग्नेय्यः त्रिष्टुभः। दिवः परिदिवः सकाशात् प्रथमं यज्ञो जातः। अग्निः। प्राणो वै दिवः प्राणा द्वा एष प्रथम मजायते ति श्रुतिः। तं जात मभि प्राणि

शिवाऽकृत्वा दिशुऽसर्व्वाऽस्वंय्योनिम्मिहासंदऽ॥१७॥[१७] दिवस्प्परि॥

प्प्रथुमञ्जंज्ञेऽअुग्निरुस्म्म द्विुतीयुम्परिंजातवेदाऽ॥ तृतीयंमुप्प्सुनृमणा

ति प्राणो वा अग्नि र्जात मेवैन मेत त्सन्तं जनयती त्येतदभि प्रायम्। अस्म द्वितीयं परिजात वेदाः। अस्मत् अस्मत्तः पुरुष विधात् द्वितीयं जातवेदः आतः यदेन मदो द्वितीयं पुरुष विधो जन यदि ति श्रुतिः। समुखाच्च योने र्हस्ताभ्यां चाग्नि मसृजते त्ययं। पुरुष विधिः। तृतीय

( १ ) आसीदआगत्यउपविशछन्दसिलुङ्लङ्लिट् इति पा० लोडर्थेलुङ्।

( २ ) का० वात्सप्रेणचदिवस्परीत्येकादशभिरनुवाकेनैकं। १६। ५। २१। दिवस्परीत्येकादशर्चेनवात्सप्रेणोख्यमग्निमुपत्ति-ष्ठते। एकेआचार्याअनुवाकेनद्वादशर्चेनवदन्तीतिसूत्रार्थः।

* का० अग्निदेवताद्वादशत्रिष्टुभोभलन्दनपुत्रवत्सप्रीदृष्टाः।

नप्सु । ततीयं तस् स्वप्सु व्यवस्थितं जनयति । य देन नदस्तृतीयमद्भ्यो धि जनय दिति श्रुतिः ।
तथयो गर्भो न्नरासी त्सोग्नि रद्धज्यते स्येत शुल्वसिप्रायम् । नृमणा अजस्रम् । नृषु मनोयस्ये
ति न ख्या: प्रजापतिः अजस्र मधुपप्तीणाम् । प्रजापति वैं नृमणा अग्नि रजस्र इति श्रुतिः ।

ऽअजंस्रुमिन्धानऽएनञ्जरतेस्वाधीः ॥१८॥ विद्मातें॥ अग्ग्नेत्रेधात्रेु

तृतीय मप्स्वन्त व्यंवस्थितं जनयति नृमणा अजस्र मग्नि मिति वाक्यार्थः । य एवं वड्ड जन्मा-
ग्निः तम् इन्धानः आदीपयन् यजमानः एन मग्निं जरते जनयतीति धातो रर्थान्तरे वृत्तिः ।
स्वाधीः शोभना आहिताधी बुद्धि र्यस्य स स्वाधीः (१) ॥ १८ ॥ (२) विद्माते । विद्मः जानीमः

(१) यद्वायमर्थः अग्निः प्रथमन्दिवः परि द्युलोकस्योपरिजज्ञे सूर्यरूपेणोत्पन्नः अस्मत्परि अस्मदीय मनुष्य लोकोपरि जातवेदः
द्विती यंजज्ञे प्रसिद्धवह्नि रूपेणद्वितीयजन्मप्राप्तवान् अप्सु समुद्रे तृतीयं जज्ञे वडवानल रूपेण तृतीयवारमुत्पन्नः अजस्रं
निष्पपिजन्मस्य नृमणाः नृषुमनोयस्य यजमानेष्वनुग्रहबुद्धियुक्तः एनमी दृशमग्निमिन्धानः पुरोडाशादिनादीपयन् स्वाधीः
स्वाय त्तचित्तोयजमानः जरतेजोर्यते जरापर्यन्तं चरतीत्यर्थः ।

(२) यानिपूर्वस्मिन्मन्त्रेत्रेधात्वरूपाण्युक्तानिसूर्यादित्याग्निवड़वानलरूपाणि तानित्रयाणित्रिसंख्याकानितेतवसम्बन्धीनिरूपाणि-
वयंविद्मजानीमः ।

शु०
य०
सं०
२९२
उ०
भा०

विद्वा द्यचोऽतस्तिङः इति दीर्घत्वम् । ते तव हे अग्ने । त्रेधा त्रयाणि । त्रिधा प्रविभक्तानि त्रीणि रूपाणि अग्नि वायु सूर्याख्यानि । विद्मा ते धाम । धामानि त्रयाणि भवन्ति स्थानानि नामा नि जन्मानीति च जन्मा न्यत्रा भि प्रेतानि । धामानि जन्मानि आहवनीय गार्हपत्य दक्षिणा ग्न्यति प्रणीत धिष्ण्यप्र भृतीनि । विभृता विहृता पुरुत्रा बहुरूपाणि । विजानीमस्म तव नाम परम

यत्ते॑ त्रि॒धा त्र॒याणि॑ । विद्मा ते॒ धाम॒ विभृ॑ता पुरु॒त्रा । वि॒द्मा ते॒ नाम॑ प॒रमं॒ गुहा॒ यद्वि॒द्मा त॒मुत्सं॒ यत॑ आज॒गन्थ॑ ॥ १९ ॥ स॒मु॒द्रे त्वा॑ ॥ नृ॒मणा॑ अ॒प्स्व॒न्तर्नृ॒चक्षा॑ ईधे दि॒वो अ॑ग्न॒ ऊध॑न् । तृ॒तीये॑ त्वा॒ रज॑सि तस्थि॒वा०ꣳस॑म॒पामु॒प

स्थे । त्रि॒धा

मुत्कृष्टम् गुहायां निहि य दवस्थितम् । य द्विष्ठ इति वा । यस्य त न्नाम विद्मात मुत्स म् । विज नीम श्च त मुत्स न्दग मद्रूपं प्रथम मवस्थानं य तस्त्वम् आजगन्थ आगतवा नसि हे अग्ने ॥१९॥ समुद्रे त्वा । हे अग्ने समुद्रे त्वा त्वां पूर्ववर्तमानं नृमणाः प्रजापतिः ईधे दीपयां चकार । सो पो ऽसृजते व्युपक्रम्य तस्मा दग्नि र्हवैत मग्नि रित्याचक्षते इत्ये तदभि प्रायम् ।

१२ अ०

शिवम्

अख्वन्त नृंचक्षा ईधे। आसन्वन्त वंर्तमानं नृचक्षा प्रजाति रेव ईधे आदीपितवान्।
तमग्न्य उपो दासृतं पुष्कर पर्णं वि वेदे त्यादि श्रुति रुद्घाटिता। दिवो अग्न। ऊधन्।
द्यु लोकस्य ऊधसि मह्यो दके प्रदेशे आदित्यात्मना नृचक्षा एव ईधे। तृतीये त्वा रजसि
च त्वां द्युलोके आदित्यात्मना स्थितवन्तम् अपाम् उपस्थे उत्संगे नाव्याना मपां मध्ये

स्त्थेमहिषाऽअवर्द्धन् ॥ २० ॥ अक्रन्ददग्निः ॥ अक्रन्ददग्निस्तनयं
न्निवद्यौःक्षामारेरिहद्वीरुधःसमञ्जन् ॥ सद्योजज्ञानोविहीमिद्धोऽअ
ख्यदारोदसीभानुनाभात्यन्तः ॥ २१ ॥ श्रीणामुदारः ॥ श्रीणामुदा
रोधरुणोरयीणाम्मनीषाणाम्प्रार्प्पणःसोमगोपाः ॥ व्वसुःसूनुःसह

व्यवस्थितम् महिषाः महान्तः प्राणाः अवर्द्धन् वर्द्धयां चक्रुः। प्राणो वै महिषा इत्यादि
श्रुतिः ॥ २० ॥ अक्रन्ददग्नि रिति व्याख्यातम् ॥ २१ ॥ श्रीणा मुदारः। श्रीणां लक्ष्मीणा
मुदारोत्यर्थं दाता धरुणो रयीणाम्। च धनानाम्। मनीषाणाम् प्रार्पणः कश्चिद्धनवान पि

भवति नतु दाता। अयंतु मनसा एषितानां कामानां प्रापयिता। सोम गोपाः। विश्वा अग्नयः सोमं गोपयन्ति लदभि प्राय मेतत्। सोम्मिनो वा गोपायति। वसुः वासयिता। यद्वा० वसुः धनं एवाग्निः। यथा न्यानि धना न्युपकारं कुर्वन्ति शयनासन गवादीनि एव मेव मप्युपकरोति भूतानां ताप पाक प्रकाशैः अतो वसुः। सूनुः सहसः। पुत्रो बलस्य। रुध्य मानो जायते तस्मा देव मुच्यते। आसु राजा। अप्स्व वस्थितो वडवा लना राजा। तथा

गोऽअुप्स्वुराजा॒विभाऽस्युम्ग्ऽऽउषसामिधानः ॥ २२ ॥ विश्वस्यके तुः ॥ विश्वस्यकेतुर्भुवनस्यगर्भुऽआरोदसीऽअपृणाज्जायमानः।

चोक्तम्। त्व मग्ने वडवो भ्यवसे यतिदि दिभात्यग्र उषसाम्। आदित्या लना। इन्धानः इन्धो दीप्तौ। दीप्यमानः। यद्वा। उषः कालेऽग्नीनां क्रतुः करणं क्रियते मदभिप्राय मेतत् ॥ २२ ॥ विश्वस्य केतुः। चतुर्थः पादोच प्रथम व्याख्याते यच्छब्द योगात्। जनाद-दग्निमयजन्तपञ्च। यदि व्यविभक्तिकोनि देशः। य मग्निं पञ्चजनाः। चत्वारो वर्णा निषाद पञ्चमाः पञ्चजना उच्यते। अयजन्त इष्टवन्तः सविश्वस्य केतुः सर्वस्य प्राणिजातस्य

केतुः प्रज्ञानम् अग्न्यात्मना। भुवनस्य गर्भः। भूत जातस्य वाय्वात्मना गर्भः वह्नि प्राणभा-
वेन भूतानां अन्तः सञ्चरति। आरोदसी अपृणात्, जायमानः। स एव आपूरयति द्यावापृ-
थिव्यौ जायमान आदित्यात्मना। स एव मध्यस्थान मारुह्य इन्द्रात्मना वीडुञ्चित्। दृढस्य
पद्रि मादारयितव्यं मेघं वा अभिनत् विदारयति। परायन् परापपरतो गच्छन् ॥ २३ ॥

**वीडुश्चिदद्रिमभिनत्परायञ्जनायदग्निमयजन्तपञ्च ॥ २३ ॥ उशि-
क्पावकः ॥ उशिक्पावकोऽअरतिःसुमेधामर्तेष्वग्निरमृतोनिधा-
यि ॥ इयर्त्तिधूममरुषम्भरिभ्रदुच्छुक्रेणशोचिषाद्यामिनक्षन् ॥ २४ ॥**

उशिक्पावकः। वश कान्तौ। अस्य क्त सम्प्रसारणस्य तद्रूपम् उशिक्। कान्तः मेधावी वा।
पावकः पावयिता। अरतिः। अलं मतिः। पर्याप्त मतिः। सुमेधाः कल्याण प्रज्ञः साधु
यज्ञो वा। मर्तेषु मरणधर्मेषु मनुष्येषु। अग्निः। कथं भूतः। अमृतः अमरण ध-
र्मा। निधायि निहितः देवैः त्वं नो अस्य लोकस्या ध्यक्ष एधीति। स इयर्ति उदियर्ति उद्ग-

मयति धूमम् अरुषम् अरोचनम् भरिभ्रत् धारय न्निदं जगत्। इतो वा अय मूर्द्ध रेतः सिञ्चति सास्तत्र दृष्टिर्भवती त्येत च्छ्रुत्यभि प्रायो यं मन्त्रः। शुक्रेण शोचिषा। शुक्रेन शोचिषा। द्यां द्युलोकम् इन न्नन् व्याप्नुवन्। नक्षत्र ग्रह चन्द्र तारक संबन्धिना धूम मियर्तीति संबध्यते। इतः प्रदानाद्धि देवा उपजीवन्ती त्येत च्छ्रुत्यभि प्रायो यं मन्त्रः।॥ २४॥

इ॒शा॒नो रु॒क्मः॥ इ॒शा॒नो रु॒क्म ऽउ॒र्व्या व्य॑द्यौद्दु॒र्म॑र्ष॒माय॑ुः श्रि॒ये रु॑चा॒नः॥ अ॒ग्निर॒मृतो॑ऽअभव॒द्वयो॑भि॒र्यदे॑नं॒ द्यौर॒ज॑नयत्सु॒रेताः॑ ॥ २५॥ य॒स्ते॑॥ अ॒द्य कृ॒णव॑द्भद्रशोचे॒ऽपू॒पं दे॑व घृ॒तव॑न्तमग्ने॥ प्र तन्न॑य प्रत॒रं व

इशानो रुक्म इति व्याख्यातम्॥ २५॥ यस्ते अद्य। य स्तव अद्य प्रति पदि। कृणवत् करोति हे भद्र शोचे। भन्दनीय दीप्ते। अपूपम् पुरोडाशम्। हे देव। घृतवन्तम्। हे अग्ने। स आज्य स्योपस्तीर्ण हि हविषो वदायाथो परिष्टादा ज्यास्या वधारयती त्येत च्छ्रुत्यभि प्रायम्। प्रतन्नय। नयसीति प्राप्ते च्छान्दसो लोट्। प्रणयसि तं यजमानम्। प्रतरम्

शु० य० सं० २६४ उ० भा०

१२अ० थिवम २६४

अतितराम् वस्यो अच्छ। अच्छाभे राप्तु मिति शाकपूणिः। वसीयं स्थान मभि। वस्तुतर स्थानमभि। वस निवासे। टन् तुश छन्दसीति इयसुन् तुरिष्टेमेयस्स्विति टचोलोपः वसीय इति सिध्यति। स लोक मागच्छत्य शोकं। अहिंसं तस्मिं न्वसति शाश्वतीः समाः इति स्मृत्युक्तं तं प्राप्नुयात् अयं वसीयान् लोकः। अभिनयसि च सुम्नन् देव भक्तं देवा सेवितम् हे यविष्ठ।

स्यो॑ऽअच्छा॒भि सु॒म्नन्दे॒वभ॑क्तं॒यविष्ठ ॥ २६ ॥ आतम् ॥ आतम्भ॑ज सौश्रव॒सेष्व॑ग्नऽउ॒क्थऽउ॑क्थ॒ऽआभ॑ज॒ शस्य॑मा॑ने ॥ प्रि॒यः सूर्ये॑ प्रि॒यो॑ऽअ॒ग्नाभ॑वा॒त्युज्जा॒तेन॑ भि॒नद॒दुज्ज॑नि॑त्वैः ॥२७॥ त्वाम॑ग्ने ॥ त्वा

युवतम। अथवा मिश्रयितृतम ॥ २६ ॥ आतंभज। यदः स्थाने तदो द्रष्टव्यः लटः स्थाने लोटः अर्थं संबन्धात्। हे अग्ने आभजसि यं यजमानम् * सौश्रवसेषु साधु श्रवणीयेषु यज्ञ-क्रतुषु। उक्थ उक्थ आभज। तत स्तंव्वे व यज्ञ क्रतुषु। उक्थे उक्थे शस्यमाने आभजसि

---

* शोभनं श्रवः कीर्तिः सुश्रवः सुश्रवसः सम्बन्धीनि कीर्ति हेतुभूतानिकर्माणि सौश्रव सानितेषु यज्ञकर्मसु।

आसेवसे। यजमानः प्रियः सूर्यस्य * भवति प्रियश्चाग्ने भवति। किञ्च। उज्जाते न भिनदत्। उद्भिनत्ति धर्मार्थ कामान् जातेनौ रस पुत्र संघातेन। उद्भिनत्ति च। जनित्वैः जनिष्यमाणैः पौत्र प्रपौत्र सर्वैः वेदार्थान्। प्रज्ञाप्यस्य स्वर्गयायिनी भवती त्यभिप्रायः॥ २७॥ त्वामग्ने। हे अग्ने त्वां यजमानाः। अनुद्युन् अन्वहम् अह न्यहनि। विश्वानि वसूनि

त्वाम॑ग्ने॒ यज॑माना॒ऽअनु॒ द्यून्विश्वा॒ वसु॑ दधिरे॒ वार्य्या॑णि॥ त्वया॑ स॒ह द्रवि॑णमि॒च्छमा॑ना व्र॒जं गोम॑न्तमु॒शिजो॒ विव॑व्रुः॥ २८॥ अस्ता॑व्यु

धनानि। दधिरे धारयन्ति भूमि गो हिरण्यादीनि। वार्याणि वरणीयानि। किञ्च। त्वया च सह द्रविणं यज्ञ फल मिच्छमानाः कामयमानाः। व्रजम्। व्रज त्यनेन सुष्ठातिन इति व्रजो देवयान मार्गः गो मन्तम्। गावो रश्मय आदित्य सम्बन्धिनः तैः संयुक्तम्। उशिजो मेधाविनः ज्ञानकर्म समुच्चय कारिणः। विवव्रुः विभिदुः। आदित्य मण्डलस्य मध्येन मार्गं

* भवती लङ र्थे लिटलेटोडाटौ आप्राप्रगे श्रियोलुङसीङादेशः

क्षतवन्त इत्यर्थः । तदुक्तम् । ते य एवं विदु रित्यु पक्रम्य देवलोका दादित्य मण्डलमिति ॥ २८ ॥

अस्ताव्यग्निः । स्तुतो ग्नि वैश्वानरः नरां सुशेवः मनुष्याणां शोभनं सुखयिता । ऋषिभिः । ऋत्विग् यजमानैः । सोमस्य गोपायिता । अद्वेषे । पादौ लिङ्गोक्ता देवताकौ । यतो ग्गिनः ।

अस्ताव्युग्निनर्न्नराᳬसुशेवोव्वैश्वानरऽऋषिंभिःसोमंगोपाः ॥ अद्वेषेद्यावांपृथिवीहुंवेमदेवांधुत्तरयिमुस्मेसुवीरंम् ॥ २९ ॥

[ १२ ] सुमिधाग्गिनम् ॥ सुमिधाग्गिनन्दुंवस्यतघृतैर्बोधयुतातिथि

ग्निः स्तुतः अतः अद्वेषे द्वेष रहिते द्यावा पृथिव्यौ हुवेम आह्वयामः त दास्य कर्म प्रार्थ्यम् । हे देवा यूय मपि धत । दत्त । रयिं धनम् अस्मे अस्मभ्यम् । सुवीरं शोभन-पुत्रम् ॥ २९ ॥ (१) वनीवाहनम् । आग्नेय्यः पञ्चकण्डिकाः । समिधाग्निम् व्याख्यातम् ॥ ३० ॥

अथवनीवाहनम् ।

(१) का० प्रागनः क्लोख्यस्योत्तरतः समिदा धानर्ठ० समिधाग्निम् । १६ । ६ । १५ । उख्याग्नेरुत्तरदिशिप्रागी 'षंशकट संस्थाप्य यजमान उख्ये ग्नौवनीवाहनेसमिधमाधत्त इति सूत्रार्थः ।

उद्यच्छति। (१) उदुत्वा अनुष्टुप् हे अग्ने उद्धरन्तु त्वांविश्वे देवाः। चितिभिः यै रग्नि रुद्ध्रियते। स त्वं विश्वै र्देवै रुद्ध्रियमाणः नः अस्माकंशिवोभव। शिवः शान्तः। सुप्रतीकः

म्॥ आस्मिन्हव्याजुहोतन ॥३०॥ उदुत्वा॥ उदुत्वाविश्वेदेवा ऽअग्नेभरन्तुचित्तिभिः॥ सनोभवशिवस्त्वᳪंसुप्रतीकोविभावसुः॥ २१॥ प्रेत्॥ प्रेदग्नेज्योतिष्मान्याहिशिवेभिरर्चिभिष्ट्वम्॥ बृहद्भिर्भानुभिर्भासन्माहिᳪंसीस्तन्वाप्रजाः ॥२२॥ अक्रन्ददग्निः॥

शोभन मुखः विभावसुः विभूत धनश्च॥ २१॥ (२) प्र याति। प्रेदग्ने अनुष्टुप्। प्रयाहि हे अग्ने च ज्योतिष्मान् भूत्वा। शिवेभि रर्चिभिः। शिवैः शान्तैः सुखकरैः अर्चिभिः गच्छ-

(१) का० सासन्दीकमुद्यस्योदुत्वेतिदक्षिणतोऽनसिकरोति। १७। २६ १६। समिदाधानान्तरमुदुत्वेतिमन्त्रेणासन्दीसहित मुख्याग्निमूर्द्ध्वं कृत्वादक्षिणस्थितोयजमानः शकटे तंस्थापयतीतिसूत्रार्थः।

(२) का० अनड्वाही युक्त्वाप्रेदग्न इति प्राङ्यात्वायथार्थम्। १६। ६। १८। शकटे तुष्णीं वृषौसंयोज्यप्रेदितिमन्त्रेण प्राचींगत्वा यथार्थं प्रयोजनवन्तं देशंगच्छेदितिसूत्रार्थः।

स्व। त्वम् बृहद्भिः भानुभिः रश्मिभिः भासन् दीप्यमानः। माहिंसीः तन्वा शरीरेण प्रजाः॥ ३२॥ अक्रन्ददग्नि रिति व्याख्यातम्॥ ३३॥ (१) समिध मादधाति। प्र प्रा-यम्। त्रिष्टुप् प्र प्रायम्। प्रकर्षेण महता अय मग्निः। भरतस्य प्रजापतेः। शृणवे।

अक्र॑न्ददग्निस्तनय॑न्निव॒द्यौः क्षामा॒रेरि॑हद्वी॒रुधः॑ सम॒ञ्जन्। स॒द्योज॑ज्ञा॒नो वि॒हीमि॒द्धो अख्य॒दारोद॑सी भा॒नुना॑ भात्य॒न्तः॥ ३३॥ प्रप्प्रा॑यम॒ग्निर्भ॑र॒तस्य॑ शृण्वे॒ वि॒यत्सूर्यो॒ न रोच॑ते बृ॒हद्भाः॥

शृणोति वचनम्। कथ मेत दध्यवसीयते यथा प्रजापतेः शृणोति वचन मिति। वियत्सूर्यो नरोचते बृहद्भाः। य त्समिधा दान समनन्तर मेव विरोचते। सूर्योन सूर्य इव बृहद्भाः महादीप्तिः। य स्व अभितस्थौपू रुम् असुर राक्षसम् प्रतनासु संग्रामेषु एतया

(१) का० वासेऽवहरत्यु द्धतावोच्चितउत्तरतः समिधानं प्रप्रेति। १६। ३। २१। वासेस्थितौक्रियमाणे उत्तरदिशि उद्धतावो च्चितिप्रदेशेऽग्निमवहरत्यु त्तारयत्ति ततोग्नौसमिदाधानम्।

समिधा आप्यायितः। यस्मा च। दीदाय दीप्यते। दैव्यः देवसम्बन्धी अतिथिः। अतिथि धर्मा जनानाम्। शिवः शान्तः नः अस्माकं भवति। तस्मा त्प्रजापते वचनं शृणोति ॥ ३४ ॥
(१)आपो देवीः। दश कण्डिका भस्म व्यवहरणम्। आपो देवी। अब्देवत्या त्रिष्टुप्। हे आपः देव्यः प्रतिगृभ्णीत प्रतिगृह्णीत। भस्मै तत् स्वागतादिभिः। तत्र अयं शिष्ट व्य-

**अभियःपूरुपृतंनासुतस्थौदीदायदैव्योऽअतिंथिःशिवोनः ॥ ३४ ॥**

**आपोदेवीः ॥ आपोदेवीःप्रतिंगृभ्णीतभस्मैतत्स्योनेकृंणुध्वꣳसुरभाउंलोके ॥ तस्मैनमन्ताञ्जनयःसुपत्नीर्मातेवंपुत्रम्बिंभृता**

वहारः। ततः स्वा तादिभिः परिगृह्य। स्योने कृणुध्वं सुरभा उ लोके स्योने सुखावहे कृणुध्वं स्थापयत। उकारः समुच्चयार्थः। सुरभौ शोभन गन्धे धूप पुष्पोपचारैः। लोके स्थाने शय्यायाम् तस्मै नमन्ताम्। तदः स्थाने एतदः प्रयोगः प्रकृतत्वात्। अस्मै भस्म

(१) का० पलाशपुटेनापोदेवीरित्येकया। १६। ६। २६। वनीवाहना ।नन्तरं तडागादिजलस्थानं गत्वावटादिपत्रपुटेनसायं-प्रातरुखाया सकाशाद्‌ हृतं यद्भस्मास्तितदेकया ऋचाजले क्षिपेदितिसूत्रार्थः।

रूपाया गनये नमन्तां जनयः उपतिष्ठन्तु जायाः। सुपत्नीः शोभनपत्न्यः। रूप लावण्य यौवनालाङ्कार वैदग्ध्य सपन्नाः। यूयं च। मातेव पुत्रं विभृत। धारयत। पानंभोजन वासोभिः गोपयत। किञ्च। अप्सु स्वात्मनि एनत् भस्म ॥ ३५ ॥ (१) अप्स्वग्ने। अधस्तनेन मन्त्रेण भस्मा तिथित्वेना प्स्व वस्थाप्य अथे दानीं गायत्र्या त्रिष्टुभ्या अग्नेः सर्वगतत्त्वं प्रका-

प्स्वेनत् ॥ ३५ ॥ अप्स्वग्ने ॥ अप्स्वग्नेसधिष्टवसौषधीरनुरु ध्यसे ॥ गर्भेसञ्जायसेपुनः ॥ ३६ ॥ गर्भोऽअसि ॥ गर्भोऽअस्योषं

शयन् भस्माव्यवहरण मेवा पन्हुते। अप्सु हे अग्ने सधिः समानस्थानम्। सधि स्तवा सौषधी रनु रुध्यसे सत्त्वं वीज मवस्थाय ओषधीः अनुरुध्यसे। ओषधि परिणाम मनु विपरिणमसे। ततो गर्भे सन् विद्यमानः जायसे पुनरपि ॥३६॥ (१) किञ्च। गर्भः असि भवसि ओषधीनां

(१) का० ततोद्वाभ्याम्। १६। ६। २७। ततोऽनन्तरं पठिताभ्यां द्वाभ्यामप्स्वग्नेगर्भोऽअसीत्येताभ्यामृग्भ्यामप्यञ्जपुटेन द्वितीय वारमुख्याग्निंभस्माप्सु प्रास्यति।

(१) का० अनामिकयाप्रास्तादादतेप्रसद्येति। १६। ६। २८। अप्सुक्षिप्तादुभस्मनः सकाशादनामिकयाभस्मग्रहणातिप्रास-द्येतिचतुर्ऋग्भिः।

गर्भश्च वनस्पतीनाम् गर्भश्च विश्वस्य भूतस्य भूतग्रामस्य। हे अग्ने गर्भः अपाम् असि ॥ ३७ ॥
अथ आदत्ते प्रसद्य चतसृभि राग्नेयीभिः। द्वे अनुष्टुभौ द्वे गायत्र्यौ। प्रसद्य अवस्थाप्य भस्मना
भस्म रूपेण योनिं स्थानम् अप स्व पृथिवीं च हे अग्ने संसृज्य संगत्य च मातृभिः अद्भिः

धीनाङ्गर्ब्भोव्वनस्पतीनाम् ॥ गर्ब्भोव्विश्वस्यभूतस्याग्नेगर्ब्भोऽअ
पामसि ॥ ३७ ॥ प्रसद्यभस्मनायोनिमपश्चपृथिवीमग्ने ॥ सᳫं
सृज्ज्यमातृभिष्ट्वञ्ज्योतिष्म्मान्न्पुनरासदः ॥ ३८ ॥ पुनरासद्य । पु
नरासद्य सदनमपश्चपृथिवीमग्ने ॥ शेषेमातुर्य्यथोपस्थेन्तरस्याᳫं
शिवतमः ॥ ३९ ॥ पुनरूर्ज्जा ॥ निवर्त्तस्वपुनरग्नऽइषायुषा ॥ पुन

त्वम् ज्योतिष्मान् भूत्वा पुन रस्या सुखाया मासदः आसीद ॥ ३८ ॥ पुन रासद्य। पुनरप्या-
स्थाय सदनं स्थानम् अप स्व पृथिवीं च हे अग्ने। ततो नन्तरं शेषे। शीङ् स्वप्ने इत्यस्यै
तद्रूपम् स्वपिषि। मातुः यथा उपस्थे उत्सङ्गे। अन्त मध्ये अस्या सुखायाम् शिवतमः शान्त-

तमः ॥ ३९ ॥ पुन रूर्जा । द्वे व्याख्याते ॥ ४० ॥ (१) प्रास्यो षाया मुपतिष्ठते बोधाम इति द्वाभ्यां त्रिष्टुप् गायत्रीभ्याम् । गायत्री यजु रन्ता । विश्व कर्मणे स्वाहेति यजुः । बोधाम बुध्यस्व मम । अस्य वचसः । किं मभि प्रायो हम् ब्रवीमि । हे यविष्ठ मिश्रयिट तम अथवा युव-

न्नंऽप्राहृस्यᳲह्वंसः ॥ ४० ॥ सुहत्या ॥ निर्वर्त्तस्वाग्ग्नेपिन्न्वंस्वधारं या ॥ विश्वस्पस्न्यांविश्वतस्परिं ॥ ४१ ॥ बोधांमे ॥ ऽअस्यव्व चंसोयविष्ठमᳲह्विंष्ठस्युप्रभृंतस्यस्वधावः ॥ पीयंतित्त्वोऽअनुंत्त्वो गृणातिश्वन्दारंष्टेतन्न्वं वन्देऽअग्ग्ने ॥ ४२ ॥ सबोधि ॥ सूरिर्म्मघ

तम । मंहिष्ठस्य भूयिष्ठस्य प्रभृतस्य श्रोत्रपथं प्रापितस्य । हे स्वधावः अन्नवन् । किञ्च पीयतित्त्वः । पीयति राक्रोश कर्मा । आक्रोशति त्वः । एकः पुरुषः त्वां हे अग्ने अनुत्वो

( १ ) का० प्रास्योखायामुपत्तिष्टते बोधामइति ।१६।६।३०। तडागादागतग्रानामिकया गृहीतं भस्मतूष्णीमुखाया मास्यबोधामइति द्व्यृचेनोख्याग्निमुपत्तिष्ठते ।

शु० य० ०सं २६९ उ० भा०

गृणाति। अनुगृणाति। स्तौति त्वः एकः पुरुषः। एष लोकस्य स्वभावः कश्चि दाक्रोशति कश्चित् स्तौतीति। एवं च सति वन्दारुः वन्दनशीलः सन् ते तव तन्वं शरीरं वन्दे ॥ ४२ ॥ सबोधि। य स्त्वं सूरिः पण्डितः मघवा धनसां श्च सः बोधि बुध्यस्व। हे वसुपते धनस्यदातः। बुध्वाच। युयोधि पृथक् कुरु अस्मत्तः द्वेषांसि दौर्भाग्यानि सुप्रीतः सन्। स-

वाव्वसुंपतेव्वसुंदावन् ॥ युयोद्ध्यस्म्मद्वेषांᳬसि विश्वकर्म्मणेस्वाहा ॥ ४३ ॥ पुनंस्त्वा ॥ दित्त्याकुद्द्राव्वसंवुःसमिंन्धताम्पुनंर्ब्ब्रह्मणोव्वसुनीथयुज्ञैः ॥ घृतेनुत्वन्तुन्न्वम्व्वर्द्धयस्वसुत्त्याःसंन्तुयजंमानस्य

मिधा उपहत्या ज्यं जुहोति। विश्वकर्मणे स्वाहा ॥ ४३ ॥ (१) आदधाति समिधम्। पुनस्त्वा। आग्नेयी त्रिष्टुप्। निर्वाणं त्वां पुनः समिन्धतां सन्दीपयन्तु। आदित्याः रुद्राः वसवः पुनश्च ब्रह्माणः ब्राह्मणाः ऋत्विग्। यजमानाः। वसुनीथ। नीथास्तुति रुच्यते।

१२अ० शिवम् २६९

(१) का० उत्थायादधातिसमिधंपुनस्त्वेति। १६। ७। २। घृतहोमानन्तरमुत्थायतामेवसमिधमुख्येऽग्नावादधाति।

वसु लाभ निमित्ता यस्य स्तुतिः स वसुनीथः। यज्ञैः यागैः घृतेन च तन्त्रं तन्त्रं शरीरं वर्द्ध-
यस्व। सत्या श्च सन्तु यजमानस्य कामाः। ये भक्षा व्यवहरणा व्यवच्छिन्नाः॥ ४४॥
(१) पलाश शाखया गार्हपत्यं व्यूहति। अपेत। त्रिष्टुप्। अर्द्धर्चं नोदर सर्प्पिण उच्यन्ते।

कामाँऽ॥ ४४॥ [ १५ ] अपेत॥ अपेतुव्वीतुव्विचंसर्प्पुतातोयेत्त्र स्त्थपुंराणायेचुनूतंनाः॥ अदाद्यमोवसानम्पृथिव्व्याऽअक्रन्निमम्पि

पादेनयमः पादेनपितरः। अप इत अपगच्छत। वि इत विगच्छत। विच सर्प्पतातः। वि सर्पत
च अतः स्थानात्। येत्रस्थ ये यूय मत्रस्थ भवथ। पुराणा श्चिरन्तनाः। ये च नूतनाः।
इदानी न्तनाः कस्मा इय मप सर्प्पाम इति चेन्मतिः। अदात् अदत्तवान् यमः अव-

(१) का० अथगार्हपत्यचयनमुच्यते का० पलाशशाखयागार्हपत्यं व्युदूहत्यपेतवीतेतिपुच्छः प्रतिदिशम्पुरस्तात्प्रथमम्। १७।
१।२। अत्रभाविन्याहृत्याशलाद्यार्योगार्हपत्यशब्देनोच्यते तदर्थाचितिश्चितश्चितिः स्थानमपिगार्हपत्यएवपलाश शाखया
गार्ह पत्यचितिः स्थानं व्यूदूहति ऊहिरत्रप्रेरणे तत्रपतित तृणादिकं स्थानाद्बहि क्षिपती त्यर्थः अपेतवीति ऋचः
पुच्छः पादैः प्रतिदिशमादौप्राच्यामपेतवीतियेऽत्रस्थे तिदक्षिणो अदादिति पश्चादक्रन्नितुत्तरे इति सूत्रार्थः।

सानं स्थानम्। अवस्य न्तरिक्ष न्निति अवसानम्। पृथिव्याः अस्मै यजमानाय। अक्र-
न्दन् अकृतवन्त श्च पितरः इमं लोकं स्थानम् अस्मै यजमानाय। अतो पगच्छतेति ॥ ४५ ॥
(१) उखां निव पति उख संस्तव पशु संस्तव श्च तेषा मत स्तथैव व्याख्यायते। संज्ञान मसि।

तरोलोकमंस्मै ॥ ४५ ॥ सँज्ञानंमसि ॥ कामधरंणम्मयिंतेकाम
धरंणम्भूयात् ॥ अग्नेर्भस्मांस्यग्नेःपुरीषमसिचितंस्थपरिचितं

त्रीणि यजूंषि। समिति एकीभाव माचष्टे। यत एकं ज्ञान मसि उख संस्तवात्। तस्मा
दुसमानोख्याः समेव जानीते इति श्रुतिः। काम धरणं च कामा न्धारयति संपादयति
कामधरणम् पशवो वा उखाः पशवः कामधरण मिति श्रुतिः। अतो मयि ते तव कामध-
रणं भूयात्। मयि ते पशवो भूयास्तु रिति श्रुतिः। उख्या भि प्राय मेक वचनम् (२) सिकता

(१) का० उदीचीरुखासुदस्योषान्निवपत्तिसंज्ञानमिति। १७। १। ४। य याव्यदूहनं कृत्तं तांशाखासुदकृच्छिन्नागार्हपत्य-
चिति स्थानि क्षारस्दोनिदधाति।
(२) का० सिकताश्चाग्नेर्भस्मेत्य, षवत्। १७। १। ६। ऊषत्रसिकतानिवप्रत्ति।

निवपति। अग्ने भस्मासि। भस भर्स्न दीप्त्योः। भसितं भस्म भस्म साहचर्य्यात् सिकता भस्मो
त्युक्ताः। न वा अग्निः स्वं भस्मातिदहतीति श्रुतिः। अग्ने इव पुरीषं पूरणम् असि भस्माभि
प्राय मेक वचनम्। अग्ने रेत द्विश्वानरस्य रेतो यत्सिकता इति श्रुतिः। (१) परिस्तृत उपद-

ऽऊर्ध्व चितंः श्रयध्वम्॥ ४६॥ अयंꣳसः॥ अयꣳसोऽअग्निर्य्यस्मि

न्त्सोममिन्द्रंः सुतन्दधेजठरेंवावशानः॥ सहस्रियम्वाजमत्त्युन्नस

धाति चितस्य। श्विञ्चयने अस्य क्विपि बहुवचनम्। या यूयं चितो भवथ। परि सर्वत इव चित-
स्य। ता उच्यन्ते। ऊर्ध्वंचितो भूत्वा एन मग्नि माश्रयध्वम्॥ ४६॥ (२) गार्हपत्य इष्टिकाभि

(१) का० परिश्रिद्भिः परि श्रयति पूर्ववदेकविंशं० मध्या चितः स्थेति। १७।१।७।

(२) का० एकविंशतिपरिश्रिद्भिर्गार्हपत्यस्थानं वेष्टयति पूर्ववदिति प्रदक्षिणमूर्ध्वास्ताः खननीय इति मध्येऽर्धं वृहतीय-
तस्मोदक्षिणोत्तरः प्राचीरुपदधाति दक्षिणतऽउदञ्ञ्च्यर्थं० सोऽअग्निरितिप्रतृचम्। १७।१।८। ततोऽध्वर्युर्मण्डलाद्दक्षि-
णेउदङ्मुखउपविश्य मध्येचतस्रोऽर्धं वृहत्यो संज्ञा इष्टकाः प्राचीः प्राग्दक्षिणादक्षिणोत्तरपङ्क्त्योत्तरमारभ्योपदधाति
अध्वालं चयनमित्युक्तेः। ऋक्चतुष्कं गौकैकाम्। ह्रस्वदीर्घास्तदर्धायामाः पद्यालोकद्वयव्यापिन्य इष्टका अर्धवृहत्यउ-
च्यन्ते इतिसूत्रार्थः।

श्चीयते। अयं सो अग्निः षडर्चं माग्नेयं त्रैष्टुभम्। चतुर्थी षष्ठ्यौतु अनुष्टुभौ। इष्टको
शु० प्रधानं कुर्वन्नभिनये न दर्शयति। अयंसः गार्हपत्यो ग्निश्चीयते यस्मिंश्चिते सति अभिषुतं १२अ०
य० सोमम् इन्दुः दधे धारयति। जठरे उदरे वावशानः कामयमानः। कथं भूतं सोमं दधे।
स० सहस्रियम् सहस्रार्हम्। वाजम् अन्नभूतं सर्वस्य जगतः। अत्यं न सप्तिम्। नकारः संप्र-
२७१ त्यर्थे। अनन्तरं भक्षणा देव सुदकरम्। सप्तिं शरणं तृप्तिकरम्। न केवलं यस्मिंश्चिते इन्द्रः

स्प्तिꣳससुवान्त्सꣳस्तूयसेजातवेदः॥ ४७॥ अग्नेयत्॥ अग्नेयत्तेदि

उ० सोमं जठरे धारयति। किन्तर्हि। त्वमपि स सवान्सन्स्तूयसे जातवेदः। ससवान्सन्
भा० हवींषि संभजमानः सन् स्तूयसे ऋत्विग्यजमानैः हे जातवेदः। अयं ताव दस्य मन्त्रस्य प्रगु-
णोर्थं श्रुति स्तु आहुति परिणामाभि प्रायेण व्याचष्टे। अयं वै लोको गार्हपत्य आपः
सोमः सुतो स्मिं ल्लोके य इन्द्रो धत्ते। जठरे वावशान इति। मध्यं वै जठर मित्यादि
अयं सलोको गार्हप त्याग्नि र्यस्मि ल्लोके अभिषुतः सोम परिणामभूता अपः इन्द्रस्य शिवम्
जठरे मध्ये दधे स्थापयति। सहस्रियं वाजमत्यन्नसप्ति मिति। आपो वै सहस्रियो वाजः २७१

अपां विशेषणानि । ससवा न्स न्स्तूयसे जातवेदः । इति व्याचष्टे । चितः संस्त्रीयसे जातवेद इति गार्हपत्य रूपेण चितः सन् चीयसे । आहवनीय रूपेणेतिवा अर्था न्तर निष्टति त्वम् ॥ ४७ ॥ अग्ने यते । हे अग्ने यत्ते तव दिवि द्युलोके आदि लक्षणं वर्चः । यच्च पृथिव्या मग्नि लक्षणं वर्चः यच्च ओषधीषु अन्त र्व्यवस्थितम् यच्च अ-प्स्व न्तर्व्यवस्थितम् आयजत्र । आयष्टव्यं मर्यादया यष्टव्यम् एता न्यधस्तादुक्तानि वर्चांसि

विव्वर्च्चः पृथिव्यां यदोषधीष्वप्स्वायजत्र ॥ येनान्तरिक्षमुर्व्वातत न्थत्वेषः सभानुरर्णवोनुचक्षाः ॥ ४८ ॥ अग्नेदिवः ॥ अग्नेदिवो

तव लघीयांसि । ये नतु वर्चसा अन्तरिक्षम् उरु विस्तीर्णम् आतत्तन्थ आतनोषि । त्वेषः सभानुः । सह तद्वर्चः । अर्णवः । अर्णस्वान् उदकवान् अथवा अरणवान् गमनवान् वायुः स इति श्रुतिः । नृचक्षाः नृणां शुभाशुभ कर्म द्रष्टा । त्रिस्थानो वाग्निः स्तुतः ॥ ४८ ॥ अग्ने दिवः । हे अग्ने दिवः द्युलोकस्य संबन्धि अर्ण मुदकम् अच्छाजिगासि । अ-

च्छाभे रामुत्र मिति शाकपूणिः अभि जिगासि। आपो वा अस्य दिवोर्णव स्ता एष व्रूमे-
नाक्षैतीति स्तुतिः। अच्छा देवान् अभि जिगासि च देवान्। कतमा न्देवा नित्यत
आह। ऊ चिषे धिष्णाया ये। प्राणावै देवा धिष्णाया स्ते हि सर्वाधिष दूधान्ति उच्यन्त
इति लिङ्गवचनयो र्व्यत्ययः। उच्यन्ते ये धिष्णाया अग्नयः। किञ्च। रोचने लोके स्थित-

ऽअर्स्मच्छांजिगास्यच्छांदेवा २ँ॥ ऽऊंचिषेधिष्ण्यायाये॥ यारोचने
पुरस्तात्सूर्यस्यसाधस्तावस्तांदुपतिष्ठन्तऽआपः॥ ४९॥ पुरीष्यासो
ऽअग्नयः॥ प्रावणेभिःसजोषसः॥ जुषन्तांयज्ञमद्रुहोनमीवा

स्य सूर्यस्य। परस्ता दाप उपतिष्ठन्ते या स्व अध स्ता दुप तिष्ठन्ते आपः ता स्व त्व मभि
जिगासि। त्व सेवैतैः रूपैः परिणमसी त्यभिप्रायः॥ ४९॥ पुरीष्यासः। बहुवचन मिष्ट
कापेक्षम्। ये पुरीष्याः पशव्याः पशुभ्यो हिताः अग्नय इष्टकाः। प्राव-
णेभिः। प्रुङ गतौ। प्रावणैः गमनैः। लोक व्याप्तिभिः। स जोषसः समानप्री

तय:समान सेविनो वा। समानं हि ते लोकं सेवन्ते। अद्वँ इहत्यो हिता स्वतस्व:। ते ज्जुषन्तां सेवन्तां यज्ञम् अद्रुह: अहिंसितार:। अनमीवा स्व अनशना या बुभुक्षा निवृत्ति करा इत्यर्थ:। इष: अन्नभक्ती: मह्री: महती: प्रभूता: ॥५०॥ (१) पश्चिमे उपदधाति। इडामग्ने। इडा मन्नं हे अग्ने पुरुदंसंवज्ञकर्म साधनभूतम्। यत्तु श्रुत्या उक्तम् पशवो वा इडेति तद्वली वदँ

ऽइषोमुह्रीः ॥ ५० ॥ इडाँमग्गने ॥ पुरुदꣳसꣳसुनिङ्गोःशंश्वत्तमꣳहवं मानायसाध ॥ स्यान्नःसूनुस्तनयोविजावाग्गनेसातेसुमतिर्भूत्त्व

रूपाद्यत इत्यनेनहे तुना। सनिं गो: गो: सम्बधिनीं चर्सानिं दानं पयोदधिघृतादिकम्। शश्वत्तमंशाश्वतिकतमम् शाश्वतिककर्म। अनपायिनीम् हवमानाय। यजमानाय। सहि देवानाह्वयति। साध प्रसाधय। एतदुक्तं भवति। अन्नं सोपसेचनं शाश्वति कतमं यजमानाय देहि।

(१) का० इडामग्नइति पश्चिमे प्रतिमन्त्रमुत्तरत्त: इडामग्नइति ऋग्द्वयेन प्रत्तिमन्त्रं पश्चिमेद्वे पादमात्र्यौ पद्ये तिरश्ची-उदग्लक्षणेउपदध्यात्। उत्तरतोऽवस्थितो दक्षिणामुख: इडामित्ति दक्षिणं अयन्तइतुत्तरामि। तिसृत्सार्थ:।

किञ्च। स्यान्नः सूनु स्तनयः भवे त्वा स्माकं पुत्र औरसः। विजावा। प्रज्ञातिमान् यद्वा विजयशीलः। पितरं वा योजयति वीर्येण। य या सुमत्या त्वमे लरोषिसा तेभूत् अस्मे अस्मासु ॥ ५१ ॥ द्वितीय मुपदधाति। अयन्ते। व्याख्यातम् ॥ ५२ ॥ (१) पुरस्ता

स्मे ॥ ५१ ॥ अयन्ते ॥ अयन्तेयोनिर्ऋत्वियोयतोजातोऽअरोचथाः ॥ तञ्जानन्नग्नऽआरोहाथानोवर्द्धयारयिम् ॥ ५२ ॥ चिदसि ॥ चिदसितयादेवतयाङ्गिरस्वद्ध्रुवासीदपरिचिदसितयाङ्गिरस्वद्ध्रुवासी

दुपदधाति। चिदसि। चिञ् चयने। चितासि। सादयति। तया देवत या सादिता सती अङ्गिरस्वत् प्राणवत्। यथा हि प्राणः सर्व मङ्गम् व्याप्यस्थितः एवं त्व मपि। ध्रुवा-सीद निविशस्व। तया देवतयेति वाग्ने तेवताः ङ्गिरस्व दिति प्राणो वा अङ्गिरा

(१) का० चिदसीत्तिपूर्वं दक्षिणतः प्रतिमन्त्रम्। १७। १। १२। तदुत्तरतोपरसार्गं णदक्षिणांगत्वाचिदसीतिप्रतिमन्त्रं पूर्वं-त्तिरश्ची उदग्लक्षणे दक्षिणेस्थितउदङ्मुखउपदधाति चिदसीतुरतराम्परिचिदसीतिदक्षिणाम्।

इति श्रुतिः। द्वितीया मुपधाति। परि चिदसि। परि सर्वत श्चितास्चितया देवतयेति व्याख्यातम्॥ ५२॥ (१) लोकं पृण। मुपदधाति। लोकं पृण। पद्यादि लोकं स्थानं पृण पूरय। छिद्रं पृण पूरय। अग्ने स्वयवभूता भव। अथो अपि च सीद नि विशस्व ध्रुवा

द॥ ५३॥ लोकम्पृण॥ छिद्रम्पृणाथोसीदद्ध्रुवात्त्वम्॥ इन्द्राग्नी त्वाबृहस्पतिरस्मिन्योनावसीषदन्॥ ५४॥ ताऽअस्य॥ सूद

निश्चला त्वम्। इन्द्राग्नी च। त्वां बृहस्पति श्च अस्मिन् योनौ स्थाने असीषदन् आसादयंतु। न हि मानुषो ध्वर्युः त्वां सादयितुं समर्थं इत्यभि प्रायः॥ ५४॥ (२) सूददोह साधि-

(१) का० तिसृषु लोक म्पृणासुमन्त्रोदशसुचद्वयो र्वादशस्वेकस्यां च। १७। १। १७। आदीतिसृषुलोकम्पृणेष्टकासुतूष्णीमुपहितासुलोक म्पृणेत्यभिमन्त्रणम् ततोदशसुमन्त्रः यद्वादोद्वयोर्लोकम्पृणयोर्मन्त्रस्ततोदशसुततएकस्याम् एवमेकविंशतीष्टकागार्हपतीयस्युरितिसूत्रार्थः।

(२) का० नितीयसादनसूददोहसाऽपधानादुत्तरेतयादेवतयाताऽअस्येति। १६। ७ १०। तयादेवतयेतिसादनम् ताअस्येतिसूददोहसाधिवदनम् एतेनितीयसर्वत्रेतिसूत्रार्थः।

यदति। ता अस्य। * अनुष्टुप्। यज्ञाहुति परिणाम भूता आप उच्यन्ते। व्यवहित पद प्रायो मन्त्रः। ता यज्ञपरिणाम भूता दिव इत्यन्तस्पद मिह संबध्यते। दिवः द्युलोकात् च्युताः। सूददो हसः। आपो वै सूदोन्नं दोह इति श्रुतिः। अन्न सहिता आपः। अस्ये त्यस्य पदस्य विश इत्यनेन संबन्धः। यज्ञो वै विश इति श्रुतिः। अस्य शिवः अस्य यज्ञस्य संबन्धिनं सोमं श्रीणन्ति मिश्रयन्ति। पृश्नयः अन्नं वै पृश्नीतिः। एत

दोहसुꣳसोमꣳश्रीणन्तिपृश्नयः॥ जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः॥ ५५॥ इन्द्रंविश्वाः॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्र

दृतं भवति। अस्मिन् लोके पतित्वा आप ओषधि वनस्पत्य न्न भूताः सोमस्यो पकुर्वन्ति। कस्मि न्काले श्रीणन्ति। जन्मन्देवानाम्। संवत्सरो वै देवानां जन्मेति श्रुतिः। संवत्सर भृतिनः संवत्सरे सोम याग: तदभि प्राय मेतत् त्रिष्वा रोचने सवनानि वै त्रीणि रोचनानी ति श्रुतिः। त्रि ष्वारोचने ष्विति वचन व्यत्ययः। त्रिषु सवनेषु। एवं

* इन्द्रपुत्रप्रियमेधदृष्टाद्देवतानुष्टुप्।

स्तुतितो यं मन्त्रो व्याख्यातः ॥ ५५ ॥ (१) पुरीषं नि वपति । * इन्द्रं विश्वा: । ऐन्द्र्य नुष्टुप् इन्द्रं विश्वाः सर्वाः गिरः स्तुतयः ऋग्यजुः साम लक्षणाः । अवीवृधन् वर्द्धयन्ति । समुद्र व्यचसम् । समुद्र मिव विविधायनं नानागतिम् अक्षोभ्य बलं वा । रथीतमं रथीनाम् ।

व्यंचसुङ्गिरंः ॥ रथीतंम ँरथीनांव्वाजांना ँसत्पंतिम्पतिंम् ॥ ५६ ॥

समितम् ॥ समितु ँसङ्कंल्पेथा ँसम्प्रियौरोचिष्णूसुंमनुस्यमानौ ॥

सर्वेषां रथिनां मध्ये रथ युद्ध लब्धातिसयम् वाजानां सत्पतिं पतिम् । वाजाना मन्नानां पतिं सताञ्च पतिम् । स्रुति स्मृति कर्मा नुष्ठातारः सन्त उक्ताः ॥ ५६ ॥ (२) चित्ये नो

(१) का० चात्वालदेशात् पुरीषं निवपतीन्द्रं विश्वाइति । १७ । १ । १८ । चात्त्वालस्थानात् मृदमानीयगार्हपत्यचितेरुपरि-
क्षिपति ।

(२) का० समंविलां कृत्वोखांनिवपति समितमिति समस्विलं यस्याः सासमंविलाविभक्त्यलुकंछान्दसः गार्हपत्यचिति
मृत्पूरणेनपरिश्रितसमाङ्कत्वातन्मध्ये नीचैरुख्याग्निं स्थापयतिचतुर्मन्त्रैः

* इन्द्रदेवतामधुच्छन्दः सुतजे दृष्टष्टानुष्टुप् ।

वुख्यं निवपति * समित मिति चतसृभि रुष्णिगु परिष्टा द्बृह त्युष्णिग् पंक्तिभि र्द्व्यग्नि देवत्याभिः। तृतीयो वाग्नि देवत्या। समितम्। द्वितीय पाद प्रभृति। व्याख्यायते। यो युवां संप्रियौ संगति प्रियौ रोचिष्णु चरोचन शीलौ च। तौ सुमनस्य मानौ परस्परं शोभनं चि-न्तयन्तौ। इष मन्न मूर्जं तदुप सेचनं सर्पिं रादि अभि संवसानौ अभ्यवहरन्तौ। वस्ते

इषमूर्ज्जमभिसंव्वसानौ ॥ ५७ ॥ संव्वाम् ॥ संव्वाम्मनाᳬंसिसंव्व्रतासमुंचित्तान्न्याकरम् ॥ अग्ग्नेपुरीष्ष्याधिपाभवत्त्वन्नऽइषमूर्ज्जं

र्थान्तरे वृत्तिः एत त्कुर्वाणौ समितम् इण गतौ। संगतिं कुरु तम् सङ्कल्प्येथां च। एक संकल्पौ। च भवत मित्ये त दाशास्महे ॥ ५७ ॥ † संवाम्। आसमस्करम्। आ-भिमुख्येन स्थित्वा संस्कृतवान्। वां युवयो र्मनांसि। बुद्ध्य हंकार मनांसी ति वहुव-चनम्। संव्रता। व्रत मिति कर्मनाम। संस्कृतवा स्व युवयोः कर्माणि। सम चित्ता-



---

* चतस्रोद्व्यग्निदेवत्याः समितम् उष्णिगिकाधिका अनियताक्षरपादत्वेप्यष्टाविंशत्यक्षरत्वात्।

† उपरिष्टाद्बृहती अष्टसप्तनवत्रयोदशाक्षरपादत्वादेकाधिका।

नि । चित्त शब्देन संस्कारा मनो गता उच्यन्ते । सम्हतवा आग्निमनो गता न्संस्का-
रान् । उकार: समुच्चयार्थीय: । एवं मन: कर्म संस्कारै रेकीभूतैरेकी भूतं त्वामेक देवता
भिमानिनं प्रार्थये । हे अग्ने पुरीष्य पशव्य अधिपाभव अधिपति र्भव । त्वन्न: अस्म-

भ्यंयजमानायधेहि ॥ ५८ ॥ अग्ग्नेत्त्वम् ॥ अग्ग्नेत्त्वम्पुरीष्ष्योरयिमा
न्नपुष्टिमाऽ२ँ ॥ असि ॥ शिवाऽकृत्त्वादिशऽसर्व्वाऽस्वंयोनिमिहास
दऽ ॥ ५९ ॥ भवंतन्नऽ ॥ भवंतन्नऽसमनसौसचेतसावरेपसौ ॥ मा

भ्यम् इषं चोर्जं च यजमानाय च धेहि देहि । इष मन्न मूर्ज्जं च तदुप सेचनं द-
घ्यादि ॥ ५८ ॥ * अग्ने त्वम् । हे अग्ने त्वं पुरीष्य: रयिवा न् धनवा न् पुष्टिवा श्च
असि यत: अन: शिवा: कृत्वा दिश: सर्वा: स्वं योनि मिहासद: । इति व्याख्यातम ॥ ५९ ॥

---

* उष्याग्निदेवतोष्णिक् आर्षकाधिका अनियताचरपादत्वात् ।

* भवतन्न इति व्याख्यातम् ॥ ६० ॥(१) उखां शिक्या द्विमुञ्चति मातेव पुत्रम्। अनुष्टुप्। उखा स्तुतिः। ये य मुखा माता इव पुत्रं पृथिवी रूप मवस्थाय पुरीष्य पशव्यम् अग्निम्

युञ्ज᳕ह्विं᳕सिष्ट्वम्मायुज्ञपतिञ्जातवेदसौशिवौभंवतमद्यनंः ॥ ६० ॥

मातेवंपुत्त्रम् ॥ मातेवंपुत्त्रम्पृथिवीपुरीष्यमग्निᳯस्वेयोनावभारु

षा ॥ तांविश्वैर्दैवैर्ऋतुभिंःसंविदानः प्रजापतिर्विश्वकंर्म्माविमुं

ञ्चे स्वकीये उत्सङ्गे कृत्वा अभाः। प्रथम पुरुषस्यै तद्रूपम् उखा शब्द सामानाधि करण्यात् अभारुखा अभार्षीत् धारितवती। ता मिदानी कृत सत्यां सतीं विश्वे देवैः

।१। का० सिकताभिः समंविलांकृत्त्रामातेवपुत्रमिति शिक्याद्विमुचरश्चिवन्निधःयासिञ्चतिपयोमध्ये तूष्णीम्। १७।१।१२। शून्यासुखांसिकताभिः सम्पूर्यमावेतितिमन्त्रेणशिक्यात् पृथक्कृत्वाश्चिवदितिस्थपितागनेरुत्तरे ऽर्चिमात्रे गार्हं पतरचितेरूपर्यवोखान्निधायतन्मध्ये तूष्णीन्दुग्धं सिञ्चेदितिसूत्रार्थः।

* आर्षीपङ्क्तिः अनियताक्षरपादत्वात् ह्यग्निदेवता।

Margin (left): शु० य० सं० २९६ उ० भा०

Margin (right): १२अ० शिवम् २९६

ऋतुभिः संविदानः। अहो महत्कर्मकृत मित्येवं संवादं कुर्वन् प्रजापति र्विश्वकर्मा च विमुञ्चतु शिक्यात् ॥ ६१ ॥ (१) नैर्ऋतीना मिष्टकाना मुपधानं तिसृभि रनुष्टुभिः। असुन्वन्तम् सोमाभिष व मकुर्वाणम् यजमानं चानैः यज्ञ ऋतुभिः इच्छ परिगृह्णीष्व। किञ्चतु ॥ ६१ ॥ [ ७ ]

असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य॥अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु।

स्तेनस्य त्यामन्विहि। स्तेनस्य चौरस्य इत्यां गतिम् अनु कुर्वन् इहि। अपलाप्य याहि। तस्करस्य। तदेश यच्चोर कर्म करोति नान्यत् सतस्करः सन् तस्कर-इत्युच्यते। पुन रप्याह। अन्य मस्मदिच्छ अन्यं पुरुष मस्मत्तः इच्छ गृहीतुम्

(१) का॰ नैर्ऋतीः कृष्णास्तुषपक्कास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यश्चनहोमवद्दक्षिणोत्तराः कृत्वादक्षिणामुखोऽनुपस्पृशन्नसुन्वन्तमितिप्रत्यृचम्पराचीः १७। १। २३। ततोऽध्वर्युः राजसूयेहविष्यश्चनहोमियादृशोदेशस्तादृशेस्वयस्प्रशीर्णेइरिणेवासुन्वन्तमितिप्रत्यृचं तिस्रोनैर्ऋतीसंज्ञाइष्टकादक्षिणोत्तराः कृत्वाततस्ताअपस्पृशन्नुपदधाति। कीदृशीः पाकेनकृष्णावर्णाः तुषैरेवपक्काः लक्षणहीना पद्याः पराचीः अनात्म मुखीः। स्वयंदक्षिणामुखः पूर्वमुत्तरान्निधायततोदक्षिणेद्दे-इतिसूत्रार्थः।

साते तव इत्या गतिः। एवं दण्डगर्भं मुक्त्वा अथे दानीं साम्नाह। नमो दे वि निर्ऋते तुभ्य मस्तु। हे देवि निर्ऋते तुभ्यम् नमः अस्तु॥ ६२॥ नमः सुते नमस्कारः शोभनः ते तव हे निर्ऋते अस्तु। निर्ऋतिः कृच्छ्रापत्तिः भूमि र्वा। तिग्म सुत्सा हत्ते जोयस्याः सा तिग्मते जाः तस्याः सम्बोधनं हे तिग्मतेजः। अयस्मयं विचृत। अयो

स्तु॥ ६२॥ नमःसुतेनिर्ऋतेतिग्मतेजोयस्मयंविचृंताबन्धमेतम्॥ यमेनत्वंयम्यासंविदानोत्तमेनाकेऽअधिरोहयैनम्॥ ६३॥ यस्यां

स्ते॥ घोरऽआसञ्जुहोम्येषाम्बन्धानांमवसर्ज्जनाय॥ यान्त्वाजनो

मयं विच्छिन्धिवन्ध मेतम् येनाहं वद्धः अजस्य जीवभाव लक्षणेन। जनित्वा म्रियते मृत्वा जायत इति। किञ्च। यमेनाग्निना त्वं यम्या च पृथिव्या संविदानां एकमती भूय। उत्तमेनाके उत्कृष्टे स्वर्गे अधिरोहय एनं यजमानम्॥ ६३॥ यस्याऽस्ते। यस्याः तव हे घो रेविष मशीले। आसन् आसेर मुखे जुहोमि हविः एषां बन्धानाम् अवसर्ज्जनाय विमोचना-

नाय। सात्त्व सेता स्बन्धान स्रतो विस्हज। किञ्च। यां चत्वां जनो लोकः भूमि रिति कृत्वा प्रमन्दते स्तौति तां त्वा सह मपि स्तौमि। तथैव प्रतिष्ठा भूतानां जनयित्री मा ते व विभर्त्री त्यादिभि गुणैः। किञ्च। निर्ऋतिं त्वाम् हं परिवेद जानामि विश्वतः सर्वतः।

भूमिरितिंप्प्रमदंतेनिर्ऋतिन्त्वाहम्परिवेदव्विश्वतः ॥ ६४ ॥ यन्ते देवीनिर्ऋतिराबबन्धपाशंङ्ग्रीवास्वविचृत्त्यम्। तन्तेव्विष्प्याम्म्यायुषोनमद्ध्यादथैतम्पितुमंद्धिप्प्रसूतः ॥ नमोभूत्त्यैयेदञ्चकार ॥ ६५ ॥

नितरां हि विदित आमन्त्रितो ह्निनस्ती त्यत एतान् वन्धान वरुज असत्तः ॥ ६४ ॥
(१) शिक्य रुक्म पाशेड्वा संदीः परेणा सराति। यन्ते देवी। त्रिष्टुप्। यजमान उच्यते यंते देवी निर्ऋतिः आबबन्ध आवद्धवती शिक्य पाशं रुक्म पाशं च। ग्रीवासु कण्ठे। अविचृत्यम्।

(१) का० शिक्यरुक्मपाशिण्ड्वासदोः परेणास्यतियंतद्दति १७।२।४। शिक्यं रुक्मपाश इण्वं आसन्दीं च नैर्ऋतीष्टकात पश्चात्क्षिपति।

मृतो च्छेदने। अविच्छेद्यम् अनत्र खण्डनीयस् अनेनैव यजुषा तं पाशं ते तव विष्यामि। स्यति रूप स्पृष्टो विमोचने। विमुञ्चामि। आयुषो न मध्यात्। अग्नि र्वा आयु स्तस्ये त न्मध्यं य स्थितो गार्हपत्त्योऽत्र त्वचित आहवनीयः नकारः संप्रत्ययें। अग्ने र्मध्यात् अथो न्मुक्तपाशः सन् अग्नि रूप मवस्थाय। यजमान एतं पितुमन्नम् अद्धि भक्षय। प्रसूतो

## निवेशनः सङ्गमनः ॥ निवेशनः सङ्गमनो वसूनां विश्वा रूपाभिचष्टे

भ्यनुज्ञातो निर्ऋत्त्या। (१) उदपात्रं निषिच्य अन्तरात्मे ष्टक सुपतिष्ठन्ति। नमो भूत्यै। विराडे कपदा भूति देवत्या। नमो भूत्यै श्रिये या इद मग्निलक्षण कर्म चकार कृतवती ॥ ६५ ॥ (२) शाला द्वार्यो पस्थानम्। निवेशनः। त्रिष्टुप्। पृथिवी लोक संस्तुतो य मग्नि र्यो य मग्नि र्निवेशनः। निविशन्ते स्मि न्निति निवेशनः। संगच्छन्ते स्मि न्निति संगमनः। केषाम्।

(१) का० उदपात्रंनिषिच्यान्तरात्मेकसुत्तिष्टन्तिनमोभूत्याइति १७।२।४। शिक्यादिनिरसनान्तरमात्मनोनैर्ऋतीष्टकानां च मध्ये जलपूर्णंचमसन्तूष्णीन्निनो य ब्रह्मयजमानाध्वर्यवो नमइतिमन्त्रेणोत्तिष्ठन्तिनैर्ऋतीसमीपादितिसूत्रार्थः।

(२) का० अनपेक्षमित्यशलाद्वार्योपस्थानंनिवेशनइति १७।२।६। ब्रह्मयजमानाध्वर्यवोनैर्ऋत्युपधानदेशात् पश्चादपश्यन्तः शालाङ्गच्छतिअध्वर्युरेतत्रशालाद्वारिभवंगार्हपत्याचितिरूपमग्निमुपतिष्ठते।

वसूनां धनानाम्। य स्मायं विश्वरूपा। सर्वाणि रूपाणि आहवनीय दक्षिणाग्न्य तिप्रणीता ग्नोध्र धिष्णप्र प्रभृतीनि। अभिचष्टे अभिपश्यते। सचीभिः स्वैः स्वै र्युक्तानि। कथं पश्यति। देव इव सविता। सत्य धर्मा अवितथ कर्मकारी। यस्य इन्द्रो न इन्द्र इवतस्थौ तस्थिवान्। समरे संग्रामे। पथीनां। परिपन्थिभिः सह। तं वयं स्तुम इति वाक्य शेषः॥ ६६॥

शचीभिः॥ देवऽइवसविता सत्यधर्मेन्द्रोनतस्थौसमरेपथीनाम्॥ ६६॥ सीरांयुञ्जन्ति॥ कवयोयुगावितन्वतेपृथक्॥ धीरादेवेषुसु

(१) सीरं युज्यमान मभि मन्त्रयते गायत्री त्रिष्टुभ्याम्। सीरा युञ्जन्ति। सीराणि लाङ्गलानि युञ्जति। कवयो मेधाविनः। युगा वितन्वते। युगानि च वितन्वन्ति। पृथक् नाना। कथं भूताः कवयः युञ्जन्ति। धीराः धीमन्तः अग्नि क्षेत्रविदः। किमर्थं युञ्जन्ति। देवेषु सुम्नया। सुम्न मिति सुख नाम। द्वितीयार्थे तृतीया। देवेषु सुम्नं सुखम् कर्तु मिति शेषः।

(१) का० दक्षिणामग्निश्रोणिमपरेणतिष्ठन्युज्यमानमभिमन्त्रयत्ते सीरायुञ्जन्तीति १७। २। ११। चितेर्दक्षिणश्रोणेः पश्चिमे-तिष्ठन्नध्वर्युः प्रतिप्रस्थात्रोत्तरांसपूर्वषड्भिर्वादशभिश्चतुर्विंशतयावावृषैर्युज्यमानमौदुम्बरहलं द्वाभ्यामभिमन्त्रयते।

सीर कवि शब्दयो र्बहुवचनं पूजार्थं युगानि तु बहून्यपि यज्ञे भवन्ति ॥ ६७ ॥ युनक्तसीरा। सीराणि युनक्त वियुगा तनुध्वम् वितनुध्वम् युगानि स्मरग् योक्त्र प्रभृतिभिः। ततः कृते योनौ वाहनादिभिः। वपत इह क्षेत्रे बीजं ब्रीह्यादि। गिराच वाचाच। या ओषधी रित्यादि कया। च शब्दा च्चमसेन च वपत। तथाच वपत यथा श्रुष्टिः अन्नजातिः ब्रीह्या-

म्नुया ॥ ६७ ॥ युनक्तसीरां ॥ युनक्तसीराव्वियुगातंनुद्ध्वङ्कृतेयोनौव्व पतेहबीजंम् ॥ गिराचंश्श्रुष्टिः सभंराऽअसंन्नोनेदीयऽइत्सृण्यः पक्क मेयात् ॥ ६८ ॥ शुनंसु ॥ फालाव्विकृषन्तुभूमिंशुनङ्कीनाशाऽअ

दिका सभराः सह भरसा फलव्रातेन वर्त्तंत इति सभराः। सान्तोयं स्त्रीलिङ्गः शब्दः। आना-मित फलेत्यर्थः। असत् भवेत्। नोस्माकम् यथानेदीयः अन्तिकतमम्। इत् शब्दोनर्थकः। सृण्यः दात्रान् पक्वम् ओषधम् आ इयात् आगच्छेत्। एतदुक्तं भवति। अतिघनत्वा दोषधीनां निकटतम न्दात्र भूमे श्च दात्रपूरं पक्क मोषध मागच्छेत् यथा तथा वपतेति ॥ ६८ ॥

(१) चतस्रः सीताः कर्षति चतसृभि ऋग्भिः। तत्र द्वे त्रिष्टुभौ तृतीया पंक्तिः चतुर्थ्य नुष्टुप्। शुनं सुफालाः। शुन मिति सुखनाम। सुखेन शोभन फालाः लाङ्गलाग्रस्थिताः। विकृषन्तु। विविधं कृषन्तु विलिखन्तु भूमिम् सुखेन च कीनाशाः हलिनः अभिगच्छन्तु वाहैः अनडुद्भिः सहिताः। अथैवं कृष्टे सति। शुना सीरा। शुनो वायुः। शु इत्यव्यक्तानुकरणम् शु एत्य

भियंन्तुवाहैः॥ शुनासीराहुविषातोशंमानासुपिप्पलाऽओषधीःकत्तंनास्मे॥ ६८॥ घृतेनसीता॥ घृतेनसीतामधुनासमंज्ज्यतांवि

न्तरिक्षे। सीर आदित्यः सरणात्। वायुरा दित्यौ हविषा उदकेन। तोशति वधकर्मा। निघ्नन्तौ भूमिम् सुपिप्पलाः पिप्पल मिह फल मुच्यते। ओषधी कर्तन कुरुतम। इयो द्वे वचनं छान्दसम् अस्मे अस्माकम्॥ ६८॥ घृतेन सीता। सीता समज्यताम् अनुमता इति परोक्षाभिधायी नि त्रीणिपदानि। सीते अभ्यावर्तस्वेति प्रत्यक्षाभिधायिनी द्वेपदे एकस्मि

। १। का० आत्मनिक्रषतानुपरिश्रिच्छुनं ठ० शुफालाइतिप्रत्यृचम् १७। २। १२। चितिस्थानेपरिश्रित्समोपेचतुर्ऋग्भिर्दक्षिणपश्चि-
मोत्तरपूर्वेषुचतस्रः सीताः कर्षति।

शु०
य०
सं०
२८०
७०
भा०

१२ अ०

न्मन्त्र वाक्ये। तत्र विरोधि समवायेतु भूयसां स्यात्सधर्मि त्व मिति न्यायात्। प्रथमं वा नियम्येत कारणा व्यतिक्रमः स्या दिति च न्यायात्। तस्मा दुपक्रम प्रभृति व्याख्यायते। घृतेनो दकेन मधुना मधूदकेन समज्यताम् संसिच्यताम्। विश्वैः सर्वे देवैः अनुमता अभ्यनुज्ञाता। मरुद्भिश्च। मरुतो ह वै वर्षस्ये शते। एव मन्त्रारोदकेन सिक्ता अभ्यनुज्ञाता च मरुदादिभिः।

विश्वैर्देवैरनुमता मरुद्भिः ॥ ऊर्ज्जस्वती पयसा पिन्वमानास्मान्त्सीते पयसाभ्यावर्त्तस्व ॥ ७० ॥ लाङ्गलम्पवीरवत् ॥ लाङ्गलम्पवीरव

ऊर्जस्वती अन्नवती। पयसा पयो दधि घृतादिभिः पिन्वमाना पूरयन्ती सर्वादिशः। अस्मा न्सीते। सीता इति विभक्ति व्यत्ययः परोक्षत्वात् अस्मा न्प्रति सीता अभ्यावर्त्तस्व। स्वय। सभ्यावर्त्तता। मिति पुरुष व्यत्ययः॥ ७०॥ लाङ्गलं पवीरवत्। पवि र्धीरोच्यते। सो स्यास्तीति पवीरं फालः रोमत्वर्थे। तदस्य लाङ्गलस्यास्ती ति पवीरव ल्लाङ्गलम् फाल संयुक्त मित्यर्थः। श्रुति स्तु लक्षणया व्याचष्टे। लाङ्गलं रयि मदिति। सुशेवम् शेव मिति सुख- नाम। शेवम सुखकरम्। सोमपि त्सरु। सोमं पिवतीति सोमपाः यजमानः तस्मिन्

शिवम्
२८०

सोमपि यजमानेत्सरण शीलः त्सरु रुच्यते। भूमेः खनन शीलम्। यद्वा त्सरु हंत्तम् सोमपि यजमाने पापं त्सरयति नाशयतीति सोमपि त्सरु। यद्वा। सोमः पीयते येन च मसेन ससोमपिः तस्य सोमपेः त्सरु हंत्तं लाङ्गलम्। नहि लाङ्गलस्य कर्मान्तरेण सोम चमसाः स्युः। यदित्थं भूतं लाङ्गलं तदुद्वपति उद्गमयति। गाम् अविं प्रफर्व्यं च पीवरीम्।

ऽत्त्सुशेवंꣳसोमुपित्सरु ॥ तदुद्वपतिगामविम्प्रफुर्व्यंञ्च पीवरीम्प्रस्थावंद्रथुवाहणाम् ॥ ७१ ॥ कामंङ्कामदुघे ॥ धुक्ष्व मित्रायुवरुणाय च ॥ इन्द्रायाग्निभ्याम्पूष्णेप्रजाभ्युऽओषधीभ्यः ॥ ७२ ॥ व्वि

फर्वतिर्गति कर्मा। प्रकर्षेण फर्व्या गम्या प्रफर्वी प्रथम युवतिः पीवरी उच्छून स्तनकपोला नामुद्वपति प्रस्थान द्रथवाहणाम्। प्रस्थान संयुक्त मुत्कृष्ट जवो पेतं च रथवाहन मश्वम् उद्वपती त्यनुषज्यते॥ ७१॥ कामं कामदुघे। सीतो च्यते। हे कामदुघे कामानां प्रपूरयित्रि कामं धुक्ष्व पूरय। केषा मित्यत आह। मित्राय वरुणाय च। इन्द्राय अश्विभ्याम्। पूष्णो

प्रजाभ्यः ओषधीभ्यः। चकारः समुच्चयार्थः सर्वत्रा नुषज्यते ॥ ७२ ॥ (१) अनडुहो विमुञ्चति। विमुचध्वम्। गायत्री। एवं जगतः स्थिति निमित्त भूतां कृषि मभि निर्वर्त्य कृतकृत्याः सन्तो विमुचध्वं युगात्। हे अघ्न्याः अहन्तव्याः। देवयानाः देव कर्म कारिणः। यद्वा देव-

मुंञ्चयद्ध्वम् ॥ व्विमुंचच्चयद्ध्वमग्घ्न्यादेवयानाऽअगंन्न्मतमंसस्प्पारमस्य। ज्ज्योतिंरापाम ॥ ७३ ॥ सुजूरब्ब्दंः। सुजूरब्ब्दोऽअयंवोभिःसजूः

यान मार्गनिमित भूता अगन्म गतवन्तः अशनायोद्भवा तमसः पारमस्य। तदुक्तम्। योशना या पि पासे शोकं मोहं जरां मृत्यु मत्येतीति। तदेवस्पष्टयति। ज्योतिः आपाम। प्राप्त-वन्तः। परमात्म लक्षणं यज्ञ लक्षणं वा देव लक्षणं वा ॥ ७३ ॥ (२) कुश स्तम्बे जुहोति।

(१) का० अनडुहोविमुच्यविमुध्वमितिपशुवदुत्सृज्यदक्षिणाकालेऽध्वर्यवेददाति १७। २। २। वृषान्हलाद्वियोज्यपशुवदित्यै-शानीं दिशम्प्रतिविसृजत्यध्वर्युः यजमानश्चसुत्कृत्यायांससीरांस्तानध्वर्यवेददातीतिसूत्रार्थः।

(२) का० पञ्चगृहीतेनोदगृह्णन्नभिजुहोतिसजूरब्दइति। तदानीं संस्कृतेनजुह्वापञ्चगृहीतेनाज्येनकृष्टात्क्षमध्यस्थापितकुशस्त-म्बे स्रुचमूर्ध्वां कुर्वन्जुहोति।

सजूरब्दः। यजुरेतत्। सजूः समान जोषणाः। अब्दः सम्बत्सरः। सहि अपो ददाति। अयज्ञोभिः। यवाश्च अयवाश्च अर्द्धं मासा मासाश्चो च्यन्ते। सजूः उषा अरुणीभिः। अरुण वर्णाभिर्गोभिर्किरणैः। सजोषसौ अश्विना अश्विनौ। दंसोभिः कर्मभिः। सजूः सूरः एतशेन

षाऽअरुणीभिः ॥ सजोषसावश्विनादᳪसोभिः सजूः सूरऽएतशेन सजूर्वैश्वानरऽइडयाघृतेन स्वाहा ॥ ७४ ॥ [ १३ ] याऽओषधीः ॥

अश्वेन। सजूर्वैश्वानर इडया। आग्नेयी पृथिवी इडा पृथिवी स्थानाया स्त्री तस्या अत्र ग्रहणं युतरम्। गौर्वा गन्नं च इडा शब्दे नोच्यते। घृतेन हविषा स्वाहा सुहुत मस्तु ॥ ७४ ॥ (१) क्षेत्रे सर्वौषधं वपति। * सप्त विंशति रनुष्टुभः। ओषधी स्तुतिः। पञ्च

(१) का० याऽओषधीरितिद्वचैर्वपत्यु दपाचवत् १७।६।८। पञ्चभिस्तृचैश्चमसेनसर्वौषधंवपत्ति। उदपात्रवदितिचतुस्त्रतुः सीतासुयथाक्रष्टम्।

---

* अथर्वपुत्रभिषग्दृष्टाओषधिदैवत्यायोअश्वानभिदासन्नीत्यन्ता १०१। सप्तविंशतिरनुष्टुभः सुचन्तुमित्याद्या ९०। द्वादशवत्सुदृष्टाः कुत्रापिकर्मण्यनियुक्ताः पादानां न्यूनाधिक्येन्यूह्याधिक्यं कार्यं।

दश तु वपने नियुक्ताः। या ओषधीः। या ओषधयः। पूर्वाः जाताः प्रथमजाताः। अन्याभ्य ओषधीभ्यः भविष्यत्काल सम्बन्धिनीभ्यः। देवेभ्यः ऋतुभ्यः। ऋतवो वै देवा इति श्रुतिः। ऋतुभ्योर्थाय। ऋतव ओषधि सम्बद्धाः कर्त्तव्या इति। त्रियुगं पुरा। त्रीणि युगानि समाहृतानि त्रियुगं त्रिकाल मित्यर्थः। वसन्ते प्रावृषि शरदि। पुरा पूर्वेषु वसन्तादिषु।

याऽओषधीः पूर्वाजाता देवेभ्यस्त्रियुगम्पुरा॥ मनै नु बभ्रूणामहꣳ शतन्धामानि सप्त च॥ ७५॥ शतं वः॥ शतं वोऽअम्ब धामानि सहस्रमुत

पूर्वस्मिन्हि सम्वत्सरे ओषधयः अग्नि त्वेवे उप्यन्ते। किं त्रिमित्तमि त्यत आह। मनै नु। मन्ये जानामि। तासां बभ्रूणां बभ्रू वर्णानाम् वभ्रू गसाम्ः। अहं शतं धामानि। धाम शब्दः स्थान पर्यायः। सम्बत्सरो पलक्षित मे कै कं स्थानम् यदिदं शतायुः शतार्थः शतवीर्यः पुरुषः एतानि शतन्धामानि सप्त च य एवे मेशीर्षाः प्राणाः तान्ते तदाह॥ ७५॥ शतं वः हे ओषधयः शतं वः युष्माकम् अम्ब मातरः धामानि जन्मानि। सहस्र मुतवो रुहः अपिच

सहस्रं युष्माकं विरोहणानि सन्ति। अधा शतक्रत्वः। अथेवं सति हे शतक्रत्वः बहुकर्माणः। यूयं प्रजापति मिमम् इमं वा यजमानं मे मम सम्बन्धिनम् अगदम् गदो व्याधिः अव्याधिं कृत कुरुत ॥ ७६ ॥ ओषधीः प्रति। हे ओषधयः प्रति मोदध्वं हृष्यत। पुष्पवतीः प्रसूवरीः। पुष्पवत्यः प्रसववत्य स्त सत्यः। ततो नन्तरम् अश्वा इव संग्रामस्थाः सजित्वरी स्वह जयन शीला

तद्धोरुहः॥ अधांशतक्रत्वोयूयमिममम्मेऽअगदङ्कृत ॥ ७६ ॥ ओषधीःप्रतिं ॥ मोदद्ध्वम्पुष्पंवतीःप्प्रसूवरीः ॥ अश्वाऽइवसजित्वरीर्वीरुधःपारयिष्ण्वः ॥ ७७ ॥ ओषधीरितिं ॥ मातरुस्तद्धोदेवीरुपं

भूत्वा वीरुधः विविधं व्याधिं रुधन्तीति वीरुधः। पारयिष्ण्वः। पारण शीला श्च भवत अस्माक मिति शेषः ॥७७॥ ओषधी रिति। हे ओषधयः या युयम् इति इत्थ मशन दानव्या व्यपगमादि कुर्वन्त्यो मातरः जग न्निर्मान्त्यः ततो देवीः वः युष्मान् हे देव्यः उपब्रुवे उपसङ्गम्य ब्रुवे ब्रवीमि। प्रार्थयामि। सनेयं सम्भजेयम् अश्वं गां वासः आत्मान ञ्च। सनेयं तव यज्ञ पुरुष। प्रजापति

ष्टपिशाम् ॥ ७८ ॥ अश्वत्थेव:। चतुर्थ: पादो त्र प्रथमं व्याख्यायते। यत्स नवथ पूरुषम्।
यदा यूयं सनवथ संसेवध्वम् पूरुषं यजमानम्। अथ अश्वत्थे व: युष्माकं निषदन मवस्थानम।
पर्णेव: पलाश पर्णे मय्यां जुह्वाम् व: युष्माकं वसति: स्थिति: होमार्थ मध्वर्युणा कृता। अश्वत्थ
पर्णयो स्तद्धित लोप श्छान्दस:। अथापि तद्धितेन कृत्स्नव न्निगमा भवन्तीति। गो भाज

वृभुवे ॥ सनेयमश्वबुद्धाम्श्वासऽआत्मानन्तवंपूरुष ॥७८॥ अश्वत्थे
वं÷ ॥ अश्वत्थेवोनिषदंनम्पर्णेवोव्वसतिष्कृता ॥ गोभाजऽइत्किला

इत्किला सथ। इच्छब्द: पादपूरण: किले ति विद्या प्रकर्षे। ततो ग्नौड्डता: सत्य:। गो
भाज:। गो शब्देना दित्यो भिधीयते। आदित्य भाज: यूयं किल भवथ। तदुक्तम्। अग्नौ
प्रस्ताहुति: सम्यगादित्य सुपतिष्ठते। आदित्या ज्जायते वृष्टि र्वृष्टे रन्नन्तत: प्रजा: इति।
यद्वा अश्वत्थे त्वो निषदनम् तथाहि अश्वत्थे फलिते सर्वा ओषधय: फववत्यो भवन्ति। पर्णे
फलिते कोद्रवा दय: फलितो भवन्ति गो भाज: पृथिवी भाजश्च उग्रा: सत्य: किल भवथ। तदु-

क्रम् । यद्वा पूरुषः संसेवध्वं भाजनादिभि रुपकारैः एवं दुरवधार्य्यं गतयो यूय मित्यभि प्राय: ॥७९॥ यत्रौषधीः । यत्र यस्मि न्पुरुषे भैषज्यकर्त्तरि हे ओषधयो यूयं सम्मत । समागच्छत व्याधिं जेतुम् । कथमिव । राजानः समिताविव । यथा राजानः समितौ संग्रामे शत्रुं जेतु समागच्छन्ति । किन्तत्र त्वत आह । विप्रः ब्राह्मणः स उच्यते भषक् वैद्यः । रक्षोहा च अमीव

सद्युयत्सुनवंद्युपूरुंषम् ॥ ७९ ॥ यत्रौषंधीः ॥ सुमग्मंतुराजानुःसमिं ताविव ॥ विप्रुःसऽउंच्यतेभिषग्रंक्षोहामींवुचातंनः ॥ ८० अश्वुा वतींᳫंसोंमावुतीम् ॥ अश्श्वावुतीᳫंसोंमावुतीमूर्ज्जयन्तीमुदोंज

चातनश्च । अमीवा व्याधि । चातयति र्नाशने । व्याधि नाशनः ॥ ८० ॥ अश्वावतीम् । सर्वाओषधी रिति वज्ञवचनोपदेशा दिहापि वहुवचनं भवति । या ओषधय स्व अश्ववत्य: अश्व संपादिन्यः सोमवत्यः सोम याग संपादिन्यः ऊर्जयन्त्यः । ऊर्ज वल प्राणनयोः । वलं संपादिन्यः उदोजसः उन्नत मोजो यासां उदोजसः । ताः सर्वा ओषधीः अहम् आ

अवि त्सि जानामि । विदित्वा च अस्मै अरिष्टतातये । रिषति विनाशार्थः । नरिष्ट मरिष्ट मविनाशः तस्य तनन मरिष्टतातिः । अस्मै अरिष्ट विनाश तननाय भेषजं करोमी ति शेषः ॥ ८१ ॥ उच्छुष्माः । उच्छुष्द ईरत इत्यनेन संवध्यते । उदीरते उद्गच्छन्ति प्रकाशी भवन्ति शुष्माः वीर्याणि । ओषधीनां संबन्धीनि । कथ मिव । गावः गोष्ठा दिव

सम् ॥ अविं॑त्सि॒सर्व्वा॑ऽओष॑धीर॒स्माऽअ॑रि॒ष्टता॑तये ॥ ८१ ॥ उच्छु

ष्मा॑ऽ ॥ उच्छुष्म्मा॒ऽओष॑धीना॒ङ्गावो॑गो॒ष्ठादि॑वेरते॥ धनं॑सनि॒ष्यन्ती॑

ना॒मा॒त्मान॒न्तव॑पूरुष ॥ ८२ ॥ इष्कृ॑ति॒र्नाम॑ ॥ वोमा॒ताथो॑यूय॑ᳪस्थ

निः क्रान्तः । किं कुर्वतीनाम् । धनं सनिष्यन्तीनाम् संभजमानानां यजमानार्थम् आत्मानं च संभजमानानाम् तव यज्ञ पूरुष ॥ ८२ ॥ इष्कृति नाम । उप सर्गैकदेश लोपः छान्दसः । निष्क्रमणं विनाशनं व्याध्यादेः करोतीति निष्कृतिः । निष्कृति स्तावदस्मदीयाया मातु र्नाम व्युत्पत्त्यभिप्रायम् । अथो अपि च यूयं स्थ भवथ निष्कृतीः व्याधि निष्क्रमणाः । किञ्च । सीराः

सह इरया अन्नेन वर्त्तन्त इति सीराः। पतत्रिणीः पतनशीलाः * स्यन भक्षय। कुरुत नेत्यन-र्थका उपजना भवन्तो ति नकार उपजनः। कस्मिन्काले यूय मित्थं भूता भवथे त्यत आह।
† यदा मयति निष्कृथ। अम रोगे। यदा आमया विनिस्थितं तस्य व्याधिं निष्कृथ नि नाशय॥

निष्कृतीः॥ सीराःपतत्रिणीःस्थनयदामयतिनिष्कृथ॥८३॥ अतिविश्वाः परिष्ठास्तेनइवव्रजमक्रमुः॥ ओषधीःप्राचुच्यवुर्यत्किञ्चतन्वोरपः॥८४॥ यदिमाः॥ यदिमावाजयन्नहमोष

८२॥ अति विश्वाः। यदा अत्यक्रमुः आक्रामन्ते तनूः विश्वाः सर्वाः परिष्ठाः परि सर्वतो व्याधी नधिष्ठाय तिष्ठन्तीति परिष्ठा ओषधयः। कथमिव स्तेनइव व्रजम्। यथा स्तेनं तस्करः व्रज-मत्यक्रामत् परिमुमोषिषया एव मत्यक्रमुः। अथानन्तर मेव ओषधयः ‡ प्राचुच्यवुः प्रच्यावयन्ति।

---

* तमनविल्वादिनाथस्यथनादेशः।

† यत् यस्मात् आमयति रुजति आमयाविनिनर्द्धितं रोगं निष्कृथ।

‡ च्युगतौ लुङिणिश्रिद्रुस्रुभ्यः कर्तरिचङ्इतिचङ्प्रत्ययेरुपम्।

यत्किञ्चि त्तन्वः शरीरस्य रपः। रपो रिप्र इति पापनामनी भवतः पाप जनितं व्याधि मित्यर्थः॥ ८४॥ यदिमाः। यदैव इमा वाजयन् पूजयन् अहम् ओषधीः हस्ते आदधे अस्थापयामि। अथानन्तर मेव। आत्मा यक्ष्मस्य व्याधेः नश्यति। कथमिव। पुराजीव गृभो यथा। जीव न्नेव हिंसार्थं यो गृह्यते पशु र्वान्यो वा मनुष्यादिः सजीव गृप् तस्य जीव-गृभः प्रागेव वधा इति विषादान्मृतोह मिति मन्यमा नस्य यथात्मा नश्येत् एवं व्याधे रात्मा

## धीर्हस्तऽआदुधे॥ आत्मायक्ष्मस्यनश्यतिपुराजीवगृभोयथा॥८५॥ यस्यौषधीः॥ प्रसर्प्पथाङ्गमङ्गम्पुरुष्परुः॥ ततोयक्ष्मंविबाध

नश्यति। यदाह मोषधी र्हस्त आदध इति सम्बन्धः॥ ८५॥ यस्यौषधीः। यस्य रोगिणः हे ओषधयः प्रसर्पथ। अङ्गमङ्गम् परुष्परुः। सर्वाण्यङ्गानि सर्वाणि च पर्वाणी त्युक्तं भवति। परु शब्दः पर्व वचनः। तस्य रोगिण ततो यक्ष्मं विबाधध्वे। तत स्तस्मा दङ्गपर्व समुदायात् व्याध्यपगमं कुरुध्वे। कथ मिव। उग्रो मध्य मशी रिव। उग्रः क्षत्रियो बद्ध गोधाङ्गुलि त्राणः

सएव विशिष्यते मध्यमशी मध्यमं भागं शृणातीति मध्यमशीः स यथा शत्रून् बाधते एवं यूय मपि रोगिणो रोगं बाधध्वे तूत्थुप मार्थः। यद्वा। उग्रो रुद्रः स एव त्रिशूल मध्यमेन शृणा-तीति मध्यमशीः स यथा युगान्ते सर्वं जगद्भस्मसा त्करोति एवं यूय मपि व्याधिं कुरुध्वे ॥ ८६ ॥ साकं यक्ष्म। साकं सहेत्यर्थः। हे यक्ष्म सह प्रपतः प्रणश्य। चाषेण पक्षिणा किकिदी-

दृद्ध ऽउग्रोमंध्यमशीरिव ॥ ८६ ॥ साकंयंक्ष्म ॥ साकंयंक्ष्मप्रपंतुचा षेणकिकिदीविना ॥ साकंवातंस्यध्राज्यासाकन्नंश्यनिहाकया ॥ ८७ ॥ अन्यावंः ॥ अन्न्यावोऽअन्न्यामंवत्वन्न्यान्न्यस्याऽउपावत ॥

विना शब्दानुकरण मेतत्। किकि एवं यो दीव्यति तेन सह प्रपत। सहि तव सार्थं उचितः। साकं वातस्य ध्राज्या। गत्वा प्रपत। साकं नश्य प्रपलाहि। निहाकया। निहन्ति काय मिति निहाकानिर्ऋतिः कृच्छ्रापत्तिः तया कृच्छ्रापत्या सहनश्य हे यक्ष्म। यद्वा शब्दा नुकरण मेतत्। हा कष्टं निर्गतो हं कया ओषध्या एवं कृपया शब्दा नुकरण भक्त्या। सह नश्य हे यक्ष्म अपुनरागमनाय ॥ ८७ ॥ शतम् ६०० ॥ अन्यावः। हे ओषधयः

अन्या ओषधि: व: युष्माकम् अन्या मोषधिम् अवतु पालयतु। अन्याच ओषधि: अन्यस्या: ओषध्या: प्रभावम् उपावते पुरुष वचन व्यत्यय:। उपावतु उपगम्य पालयतु। तायूयमेव सर्वा: संविदाना: संगच्छमाना:। इदंमे मम प्रावत प्रपालयतु। वच: वचनमार्षम् ॥ ८८ ॥

ताऽसर्व्वाः॒संविदा॒नाऽइ॒दम्मे॒प्रावं॑ता॒व्वचः॑ ॥ ८८ ॥ याऽफ॒लिनी॑ः ॥ याऽफ॒लिनी॒र्य्याऽअ॑फ॒लाऽअ॑पु॒ष्पायाश्च॑पु॒ष्पिणीः॑ ॥ बृह॒स्पति॑प्रसू॒तास्तानो॑मुञ्च॒न्त्वꣳह॑सः ॥ ८९ मुञ्च॒न्तु॑मा ॥ शप॒थ्या॒द्‌थो॑व्व॒रु॒ण्या॒

या: फलिनी:। या ओषधय: फलवत्य: याश्च अफला: फलरहिता:। या अपुष्पा: पुष्परहिता: याश्च पुष्पिणी पुष्पवत्य:। बृहस्पतिना अभ्यनुज्ञाता: ता: न: अस्मान् मुचन्तु अंहस: पापात् ॥ ८९ ॥ * इत उत्तर मनारभ्य वाद मन्त्रा:। तेषां लिङ्गतो विनियोग:। मुञ्चन्तु मा शपथ्यात् शपथ निमित्ता त्किल्विषात्। अथो अपि च वरुण्यात्। वरुण निबन्धनात्। उत-

* एवमोषधिवप्रार्थानिपञ्चदृचानिसमाप्तानि।

अथो अपिच। यमस्य सम्बन्धिनः पड्वीशात् बन्धनात्। पड्वीशशब्दो बन्धन वचनः। सन्दान मश्वस्य पड्वीशमिति दृश्यते। किञ्च। सर्वस्मात् च देव निमित्ता त्किल्बिषात् मुञ्चन्तु। यत्किञ्चिद्विनस्ति पापकर्त्तुः सम्बन्धि तत्किल्बिषमित्युच्यते ब्रह्महत्यादि ॥ ९० ॥ अवपतन्तीः। अवाचीनं पतन्त्यः अवदन् उक्तवत्यः। दिवः परि दिवोद्युलोकात् ओषधयः। किम वदन्ति

दुत ॥ अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥ ९० ॥ अवपतन्तीरवदन् ॥ अवपतन्तीरवदन्दिवऽओषधयस्परि ॥ यञ्जीवमश्नवामहैनसरिष्यातिपूरुषः ॥ ९१ ॥ याऽओषधीः याऽओषधीःसोम

इत्यत आह। यञ्जीव मनुत्क्रान्त प्राणम् अश्न वाम है व्याप्नुमः। नसरिष्याति विनश्यति पूरुषः। छान्दसं दीर्घत्वम् ॥ ९१ ॥ या ओषधीः। या ओषधयः सोमराज्ञ्यः सोमराजा आसा मिति। सोमराज्ञ्यः। बह्व्यः अनन्ताः। शतविचक्षणाः बहुवीर्याः। बहवोवा स्तोतारोविचक्षणा आसां बहुविचक्षणाः। तासामोषधीनां मध्येत्वंभवसि उत्तमायतः अतः अलङ्कामाय भव।

शञ्चसुखञ्च हृदयाय भव॥ ९२॥ या ओषधीः। यायूयं हे ओषधयः सोमराज्ञ्यः विष्ठिताः विविधं स्थिताः पृथिवीम् अनु। ताः बृहस्पति प्रसूताः अस्मै ओषधयै सन्दत्तवीर्य्यम्। येनेयं वज्रवीर्या भवतीत्यभिप्रायः॥९३॥ याश्च याश्च ओषधयः दूरंवच उपश्रृण्वन्ति समीपस्थिताः। याश्च

राज्ञीर्बृह्वीःशतविंचक्षणाः ॥ तासांमसित्वमुंत्तमारङ्कामायशङ्क हृदे॥ ९२॥ याऽओषधीः॥ याऽओषधीःसोमराज्ञीर्विष्ठिताःपृथिवीमनु॥ बृहस्पतिप्रसूताऽअस्यैसन्दंत्तवीर्य्यम्॥ ९३॥ याश्च॥ याश्चेदमुपशृण्वन्तियाश्चदूरम्परागताः॥ सर्वाःसुङ्गत्यवीरुधोस्यै सन्दंत्तवीर्य्यम्॥९४॥ मावः॥ मावोरिषत्खनितायस्मैचाहङ्खनामि

अतिदूरम्परागताः दूरदेशव्यवहिताः ताः सन्निधानी कृत्याहंब्रवीमि। सर्वाः सङ्गत्य सम्भूय। हे वीरुधः विरोहणाः अस्यै सन्दत्तवीर्य्यम् प्रभावम्॥९४॥ मावोरिषत्। मारिषतुमाविन-

शयतु। वोयुष्माकं खनिता। यस्मै च पुरुषाय अहं खनामि वःयुष्मान्। किञ्च। द्विपात् स्त्रीपुंसम् चतुष्पात् गवादि। संख्यासुपूर्वस्येतिपादशब्दान्तस्यलोपः। अस्माकं सर्वमस्तु अनातुरमनाकुलम्। युष्मत्प्रसादादिति शेषः ॥ ९५ ॥ ओषधयःसम्। ओषधयः समवदन्त सम्वादं कृतवत्यः। सोमेनसहराज्ञा। सोमहि ओषधिनां राजा। किंसमवदन्त। यस्मै

मिवः ॥ द्विपाच्चतुंष्पादस्माकं सर्वमस्त्वनातुरम् ॥ ९५ ॥ ओषंधयःसम् ॥ ओषधयःसमंवदन्तसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ॥ ९६ ॥ नाशयित्रीबलासस्यार्शसउप

पुरुषाय भेषज्यं कृणोतिकरोति ब्राह्मणः तमातुरं हे सोमराजन् पारयामसि पारयामः उत्तारयामोव्याधेः। सोमेनसह सम्वादोव्याध्यपगमहेतोकरणार्थः ॥ ९६ ॥ नाशयित्री। नाशयित्री बलासस्यबलमस्यति निक्षिपतीति बलासः क्षयः अर्शसः स्थूलव्याधेः। उपचिताम्। शरीरेये उपचीयन्ते। श्वयथुगदश्लीपदप्रभृतयः। तेषाञ्च त्वं नाशनीभवसि। अथोशतस्य यक्ष्माणा

मपि वहूनां व्याधीनां नाशयित्रीत्वमसि। पाकारो: अरु: क्षतमुच्यते। सुखपाकक्षतादेर्नाशि-नीत्वमसि। यद्वा रुच्दीप्तौ। अन्नपाकस्य अरु: अदीप्तिर्मन्दाग्नि त्वं तस्य च त्वन्नाशिनी भवसि॥ ९७॥ त्वाङ्गन्धर्वा: यतस्त्वं तत्र मित्थं भूता असि अत:। त्वां गन्धर्वा: अखनन्।

चितासि॥ अथोभूतस्ययक्ष्माणामस्याकारोरसिनाशनी॥ ९७॥

त्वाङ्गन्धर्वाः॥ त्वाङ्गन्धर्वा अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः॥

त्वामोषधे सोमोराजाविद्वान्यक्ष्मादमुच्यत॥ ९८॥ सहस्वमे॥

सहस्वमेऽअरातीःसहस्वपृतनायतः॥ सहस्वसर्वम्पाप्मानꣳसहमा



अभिलषित कामप्राप्त्यर्थम्। त्वां च इन्द्र: त्वां च बृहस्पति: त्वां च हे ओषधे सोम-राजा विद्वान् जानान: उपयोगम् यक्ष्मात्महाव्याधे: अमुच्यत मुक्त:॥ ९८॥ सहस्वमे। यतस्त्वमित्थं भूताच अतेहं ब्रवीमि। सहस्व अभिभव मेमम अराती: अदानशीला: सत्रु सेना:।

सहस्वच अभिभवश्च पृतनायतः। पृतनाः संग्रामः संग्रामकामान्शत्रून् सहस्वच अभिभवस्वच सर्वंपाप्मानं सर्वमशुभम्। कस्मादभिभवनकर्मणीत्वमस्माभिर्नियुज्यसे इतिचेत्। यतः सहमानासि अभिभवनशीलासि त्वं हे ओषधे ॥ ९९ ॥ दीर्घायुस्ते। पुनरपि त्वां प्रार्थयामः। हे ओषधे खनिता अहं भूयासम् यस्मै च आतुराय त्वांखनामि सच दीर्घायुर्भूयात्। अथो-

नास्योषधे ॥ ९९ ॥ दीर्घायुंस्ते ॥ दीर्घायुंस्तऽओषधेखनितायस्मै चत्वाखनाम्यहम् ॥ अथोत्वन्दीर्घायुंर्भूत्वाशतवंल्शाव्विरोहतात् ॥ १०० ॥ त्वमुंत्तमा ॥ स्योषधेतवंव्वृक्षाऽउपंस्तयः ॥ उपंस्ति

अपिच त्वं दीर्घायुर्भूत्वा अनवखण्डितायुर्भूत्वा शतवल्शा। वल्शशब्दोंकुरवचनः वल्लङ्कुराविरोहतात् विरोह। तुल्योत्पातङ्काशिपील्यादिनातातङ्ङ्देशः। अनवखण्डितमूलात्व अनेकैरङ्कुरैः संतिष्ठस्वे त्याशीः ॥ १०० ॥ त्वमुत्तमा असि हे ओषधे। तवचवृक्षाः शालतमालादयः उपस्तयः। उपकाराय ओषधीनांतिष्ठन्तीत्युपस्तयः तचहिताः प्रसर्पन्ति। नच

इच्छाणांभोग्याभवन्ति अयथातथेमेष्टव्याउपस्तय: यथात्वत्प्रसादात् उपस्ति: अस्तु सपुरुष: अस्मा-
कम् य:अस्मान्। अभिदासति। दसूउपक्षये। अभि हन्ति ॥ १०१ ॥ (१) चतस्रो लोकेष्टका
अतस्रभि ऋग्भिरुपदधाति। मामा। कायोत्रिष्टुप्। मामाहिंसीत् पूर्व: प्रतिषेधार्थोय:

रस्तुस्त्रोऽस्माकंयोऽअस्माँ२ ॥ ऽअभिदासति ॥ १०१ ॥ [ २७ ] मा
माहिंसीज्जनितायः पृथिव्यायोवादिवंसत्यधर्म्माव्यानट् ॥ य

उतरोऽस्मदादेश:। माहिंसीन्माञ्जनिताय: जनितामन्त्रद्वतिणिचोलोप: जनयिताय: पृथिव्या:
प्रजापति:। योवादिवंसत्यधर्माव्यानट्। वाशब्द: समुच्चयार्थोय:। व्यानडितिव्याप्तिकर्मा। असु-
त्यातुस्रजते रथंव्याख्यात: यश्चदिवं सत्यधर्मा सत्यधारण: व्यानट्असृजत्। यश्चआप अन्द्रा:

अनोरव्याधीता: समाप्ता:।

(१) का० लोगेष्टका: स्फोरनाद्धृत्यवहिर्वेदेरनूत्क्रान्तेषूपदधातितिष्ठन्मामाहिंठं०सीदितिप्रत्यृचंप्रतिदिशंपुरस्तात्प्रथमम्। ततो-
ऽध्वर्यु: स्फोरनवेदिवहि: प्रदेशाल्लोगेष्टकाश्चतुरोऽस्त्रत्खण्डान् पद्याप्रमाणानानीयात्मनोदक्षिणोत्तरपूर्वापरमध्यसूत्राप्रान्तेषुपू-
र्वादिष्ठन् मन्त्रचतुष्टयेनोपदध्यादितिसूत्रार्थ:।

प्रथमोजजान। मनुष्यावा आपश्चन्द्राइतिश्रुतिः। मनुष्याएवहि यज्ञेनाप्नुवन्ति चन्द्रलोकं पितृमार्गानुसारिणः। यद्वा। यश्चापः चायनीयाः प्रथमः शरीरेजनितवान्। अपांचायनीयानां कारणभूतानां जननेन योमनुष्यान् जनितवान् इतिकारणेकार्योपचारः। कस्मै देवाय हविषाविधेम। यइत्थम्भूतः कःप्रजापति तस्मैकस्मै कायइतिप्राप्ते स्मैआदेशश्छान्दसः। सर्व-

यश्चापश्चन्द्राःप्रथमोजजानकस्मैदेवायहविषाविधेम ॥१०२॥ अभ्यावर्त्तस्व ॥ पृथिवियज्ञेनपयसासह ॥ वपान्तेऽअग्निरिषितोऽअरो

नाम्नःस्मै इतिहिपाणिनिः नचैतत्सर्वनाम देवतात्वात् प्रजापतयेहविषा हविरितिविभक्तिव्ययः। विदधाति दीनकर्मा। तस्मै प्रजापतये हविर्दद्मइतिसंबन्धः ॥ १०२ ॥ * दक्षिणतउपदधाति। अभ्यावर्तस्व अभिमुखोभव। अग्निंप्रत्याहृताभवहेपृथिवि। यज्ञेनयज्ञसाधनभूतेनहविषा। पयसासह। कस्मात्कारणादित्यतआह। वपान्ते। वपांपृष्ठे तेतव अग्निः

---

* अग्निर्देवत्यात्वष्टिक्।

इषित: प्रजापतिप्रेषित: अरोहत् आरूढवान् ॥ १०३ ॥ * पश्चादुपदधाति। अग्ने यत्ते। आग्नेयीगायत्री। हे अग्ने यत्तेतव शुक्रं सारं शुक्लं वा। यच्चचन्द्रमाल्हादनीयम् यच्चपूतं पवित्रम् यच्च यज्ञियंयज्ञार्हम् तद्देवेभ्योर्थाय। देवेभ्योवा सकाशात् भरामसि संभराम: ॥ १०४ ॥

हत् ॥ १०३ ॥ अग्नेयत् ॥ अग्नेयत्तेशुक्रंयच्चन्द्रंयत्पूतंयच्चयज्ञियम् ॥ तद्देवेभ्योभरामसि ॥ १०४ ॥ इषमूर्जम् ॥ इषमूर्जमहमितआदमृतस्ययोनिंमहिषस्यधाराम् ॥ आमागोषुविशत्वा

* उत्तरत उपदधाति। इषमूर्जम्। त्रिष्टुप्। आशी: प्रायोमन्त्र:। अस्मिन्मन्त्रेविशेषणविशेष्यभावोत् यत्तद्भ्यांवाक्यपरिपूर्त्ति: क्रियते। यत् इषमन्नंयच्च ऊर्जंतदुपसेचनन्दधिपयोघृतादिकम् अहम् इत: उदीच्यांदिश:। आदम्आददेगृहीतवान्। यच्चऋतस्य सत्यस्ययोनिं स्थानं

---

* अग्निर्देवत्यागायत्रीपथा। चलीगेष्टकोपधानेनियुक्ता।

* आशीर्देवीत्रिष्टुप् पादत्रयसोत्तरतोलोगेष्टकोपधाने। विनियोग:।

तिस्रोविद्या अहमाददे। यच्चमहिषस्य महतः इच्छावतश्चाग्नेः धाराम् आहुतिमहमाददे। उदीच्यांदिशः। एतत्सर्वम् आमागोषुविशत्त्वातनूषु। आविशतुमां गोषुतनूषुच पुत्रपौत्रादिकासु। (१) सिकताः प्रध्वंसयति। जहामि परित्यजामि उदीच्यांदिशिस्थापयामि। सेदिम् अवसादम् अनिरामनन्ताम् अमीवांव्याधिम्॥ १०५॥ (२) आग्ने येन षडृचेन सिकतानिवपति।

तनूषुजहामिसेदिमनिरामममीवाम्॥ १०५॥ अग्नेतव॥ अग्नेतव श्रवोवयोमहिभ्राजन्तेऽअर्च्चयोविभावसो॥ बृहद्भानोशवसा

अग्नेतव। प्रथमेविंशत्यक्षरपंक्तौ। तिस्रः सतोबृहत्यः षष्ठी उपरिष्टाज्ज्योतिः। हे अग्नेतवसंबन्धीधूमः। श्रवोवयः। अमुष्मिन्लोके श्रावयतीतिश्रवः वयोऽन्नम् तस्याहुतिपरिणामद्वारेण निमित्तभूतत्वात् धूमोवयरित्युच्यते। धूमोवाअस्यश्रवोवयः सह्येन ममुष्मिन् लोके श्रावयतीति श्रुतिः। एवंप्रभावस्तवधूमः। अथमहि। महत्। भ्राजन्ते। अर्च्चयः अर्च्चींषीतिलिङ्गव्यत्ययः।

(१) का० उत्तरस्याः सिकताः प्रमार्ष्टि जहामिसेदिमिति। उत्तरलोगेष्टकातः सिकताः पातयन्ति।
(२) का० अग्नेतवेतिसिकतान्युप्यच्छादयत्यात्मानम् षडृचेनोत्तरवेदीसिकताः प्रक्षिप्यताभिः पुच्छपक्षंविनात्मानंछादयेत्।

ऋ० य० सं० २९१ उ० भा०

हेविभावसोविभूतधन। किञ्च। हेऽग्नेत्वन्नोमहादीप्ते शवसाबलेन सहितंवाजमन्नम् उक्थ्यम् उक्थ्याहंयज्ञार्हम्। दधासि ददासि दाशुषेहवींषि दत्तवतेयजमानाय। हे कवेक्रान्तदर्शन ॥१०६॥

१२ अ०

पावकवर्च्चाः। हेऽग्ने यस्त्वं पावकवर्च्चाः पावकशक्तिः शुक्रवर्च्चाश्चशुक्रशक्तिश्च अनूनवर्च्चाश्च अपरिहीणशक्तिः सन् अन्यूनशक्तिर्वासन्। उदियर्षिउद्गच्छसि। भानुनादीप्त्या। यश्चत्वंपु-

व्वाजमुक्थ्यन्दधासिदाशुषेकवे ॥१०६॥ पावकवर्च्चाःशुक्रवर्च्चाः ॥ पावकवर्च्चाःशुक्रवर्च्चाऽअनूनवर्च्चाऽउदियर्षिभानुना ॥ पुत्रोमातराविचरन्नुपावसिपृणक्षिरोदसीऽउभे ॥ १०७ ॥ ऊर्ज्जोनपात् ॥

त्रइव मातरा मातापितरौ। उक्तमेवयसिविचरन् उपचरन्। उपावसि। उपसङ्गम्यपालयसि। सदेवमनुष्यञ्जगत्। यश्चत्वंपृणक्षिपूरयसि रोदसीद्यावापृथिव्यो। उभेअपि इमेवे द्यावापृथिवीरोदसी तेएवउभेपृणक्षि धूमेनाभ्रं वृष्ट्यान्नमितिश्रुतिः तंत्वांस्तुम इतिवाक्यशेषः ॥ १०७ ॥ ऊर्ज्जोनपात्। ऊर्कशब्देनापउच्यन्ते। नपाच्छब्देनचपौत्रः। हेऽपांपौत्र। अद्भ्यओषधिवनस्प-

शिवम्

२९१

तयो जायन्ते ओषधिवनस्पतिभ्योग्निर्जायते । एवमपान्नपादग्निः । जातवेदः जातप्रज्ञानः । सुशस्तिभिः साधुशंसनैः स्तुतइतिशेषः । मन्दस्वदीप्यस्व । धीतिभिः कर्मभिर्निमित्तभूतैः र्हितः निहितः । स्थापितः । कस्मात्त्वांवयमेवम्ब्रूमइत्यवेच्याह । त्वेइषः सन्दधुर्भूरिवर्पसः । त्वयिइषः अन्नानिहवींषिलक्षणानिसंदधुः जुहुवुः भूरिवर्पसः । वर्पइतिरूपनाम । बहुरूपा यज-

ऊर्जोनपाज्जातवेदःसुशस्तिभिर्मन्दस्वधीतिभिर्हितः ॥ त्वेइषः सन्दधुर्भूरिवर्पसश्चित्रोतयोवामजाताः ॥ १०८ ॥ इरज्यन्नग्ने ॥ प्रथयस्वजन्तुभिरस्मेरायोअमर्त्य ॥ सदर्शतस्यवपुषोवि

मानाः जगदात्मत्वेनोपगताः । चित्रोतयः । चायनीयानि अवनानितर्पणानि येषांतेचित्रोतयः । वामजाताः । वननीयजन्मानः विशिष्टदेशजातिकुलोत्पन्नाः । अतस्त्वंमन्दस्वेतिसंबन्धः ॥ १०८ ॥ इरज्यन् । अत्रोपरितनोर्द्धर्चः प्रथमं व्याख्यायते । स इत्यस्य च पदस्य स्थाने यदोष्टत्तिः । सर्वं नामसामान्या द्वाक्यवशाच्च विभक्तिव्यत्ययोऽत्र कर्त्तव्यः । सदर्शतस्य वपुषो विराजसि ।

यस्त्वं दर्शनीयेन वपुषाशरीरेण ज्वालालक्षणेन विराजसिदेदीप्यसे पृणक्षिपूरयसि। सान- सिक्षिरन्तनम् क्रतुं सङ्कल्पम् तन्त्वांब्रवीमि। दूरज्यन्दीप्यमानः हे अग्ने प्रथयस्व पृथुर्भव। स्वार्थेणिच्। जन्तुभिः मनुष्यैरध्वर्युप्रभृतिभिः चीयमान इति शेषः। अस्मे अस्मासुचरायो धनानि धारयन् स्थापयन् प्रथयस्वेत्यनुषज्यते। हे अमर्त्य अमरणधर्मन्॥ १०९॥ दुष्क-

**राजसिपृणक्षिंसानुसिङ्क्रतुम्॥ १०९॥ दुष्कर्त्तारमदूदुरस्यं॥ दु ष्कर्त्तारमदूध्वरस्यप्रचेतसुङ्क्षयंन्तुॅ राधंसोमहः॥ रातिंवामस्यंसु**

कर्त्तारम् यन्तभिष्कर्त्तारम् (१) निरुप सर्गस्यादिलोपः। निश्चयेन कर्त्तारम् अरध्वरस्ययज्ञस्य। प्रचे- तसम्प्रकृष्टप्रज्ञानम्। क्षयन्तम् क्षिनिवासगत्योः। क्षयन्तन्नि वसन्तम् राधसोमहः। राध इति धननाम। सप्तम्यर्थेषष्ठ्यौ। राधसिमहतिस्तुमः। सत्त्वं रातिन्दानं दधासि। कस्यसस्व- स्विनीम् वामस्यवननीयस्य दातुः सम्बन्धिनीम् कथं भूताम् सुभगाम् भगशब्दोधनवचनः किञ्च।

(१) निश्चब्दोवहुलमितिप्रातिशाख्यसूत्रे णनिरुपसर्गस्यादिलोपः।

महीमिषम् महतीञ्च दृष्टं दृष्टिमन्नं वाद्धासि। सानसिम्पुराणञ्च रयिञ्चनम् स्मर्य्यमाणविषयं निधानलक्षणं दधासि॥ ११०॥ (१) ऋतावानम्* । यत्त्वा ऋतवानं सत्यवन्तम्महिम्महान्तम् । विश्वदर्शतम् सर्वस्यदर्शनीयम् अग्निम् अन्यदेवतानिवृत्त्यर्थोऽग्निशब्दः। सुम्नायवस्सुखायदधिरे स्थापितवन्तः। पुरोग्रतः। आहवनीयात्मनाजनाः यजमानाः। तन्त्वाम् श्रुत्कर्णम् श्रृणोत्याह्वानं

भर्गो॑मु॒हीमि॒षन्द॑धा॒सि॒सा॒नसि॒ꣳर॒यिम् ॥११०॥ ऋ॒ता॒वा॑नम्म॒हि॒षम्॥ वि॒श्वद॑र्शतम॒ग्निꣳसु॒म्नाय॑दधिरे पु॒रोज॑ना॑ꣳ ॥ श्रु॒त्क॑र्णꣳस॒प्रथ॑स्त मन्त्वा॒गि॒रादैव्य॒म्मानु॑षायु॒गा ॥ १११ ॥ आप्प्या॑यस्व ॥ समे॑तु॒ते॑ वि॒

श्रुत्वा चानुतिष्ठतियःसश्रुत्कर्णः। सप्रथस्तमम् सर्वतः पृथुतम् ऊर्द्ध्वमधोनवच्छिन्नगति विद्मानम् गिरावाचास्तुत्या। दैव्यं देवम् स्वार्थेयत्प्रत्ययः। मानुषामनुष्याः। युगा। युगशब्दः कालवचनः।

(१) अन्नवरश्मि मति सुमति प्रवेत्यादिना सूत्रेण दीर्घः। प्राति० अ० ३। सू० ९८।

---

* उपरिष्टा ज्योतिः। यस्यास्त्रयः पादाद्वादशाक्षरास्चतुर्थोऽष्टाक्षरः सोपरिष्टाज्योतिः।

शु० य० सं० २९२ उ० भा०

कालो निमित्तभूतैः पूर्णमासामावस्यादिभिराह्वयन्ति ॥ १११ ॥ (१) सिकताअभिमृशति । आप्या-
यस्व । तिस्रः सौम्याः गायत्रीत्रिष्टुप्उष्णिहः वा गायत्र्यः द्वाभ्यांविनियोगः । आप्यायस्वआ-
त्मानमभिवर्द्धय । कथंभूतत्वा । समेतुते । समा गच्छतु तवविश्वतः सर्वतः हेसोमवृष्ण्यं सर्व-
भूतबीजम् । ततस्त्वं सर्वभूतोत्पत्तिना वृष्ण्येनभव । वाजस्यान्नस्य सङ्गथेसङ्गमने । अन्नभावं

विश्वतः सोम वृष्ण्यम् ॥ भवा वाजस्य सङ्गथे ॥ ११२ ॥ सन्ते ॥ सन्ते पयांꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ॥ आप्यायमानो अमृताय सोम दिवि श्रवांꣳस्युत्तमानि धिष्व ॥ ११३ ॥ आ

प्राप्नुहि अन्नं वा प्राप्नुहि ॥ ११२ ॥ संतेपयांसि । संयन्तुतेतव पयांसिरसाः सारभूताः संयन्तु
च वाजाः अन्नानि । संयन्तु च वृष्ण्यानि रेतांसि । अभिमातिषाहः पाप्मनोभिभवतु सोमस्य ततः
तेः पयोन्नवृष्ण्यैः आप्यायमानः अमृतायभव । प्रजात्यै अमरणधर्मिण्यै भव । प्रजात्यान्तदमृतं

(१) का० आप्यायस्वेतिसिकतालम्भनमृग्भ्याम् १७ । ३ । १६ । आत्मनिर्विस्तारिताः सिकताः स्पृशतिऋग्द्वयेन ।

दधाति तस्मात्प्रजातिरस्तेतिस्मृतिः। हेसोम ततो दिविद्युलोके श्रवांसिचन्द्ररूपाणि उत्तमानि अङ्कतिपरिणामजनितानि। धिष्वधारयस्व ॥ ११३ ॥ आप्यायस्व। हेसोमत्त्वमात्मानमाप्या-यस्व। मदिन्तममदयितृतम। यद्वा मदोस्यास्तीति मदी अतिशयेन मदीमदिन्तमः। नाद्वस्येति-नुट्। विश्वेभिः सर्वैः रंशुभिः। ततः समर्थः सन् भव नः अस्माकम् सप्रथस्तमः सखा। सर्वतः

**प्प्यायस्व ॥ मदिन्तमसोमविश्वेभिरꣳशुभिः ॥ * भवानःसुप्रथस्त मःसखावृधे ॥ ११४ ॥ आते ॥ वत्सोमनोयमत्परमाच्चित्सधस्थात् ॥**

प्रथयितृतमः सखा। वृधे। वर्द्धनाय ॥ ११४ ॥ (१) छौत्रम्। आतेवत्सः। आग्नेय्यस्त्रिष्टोगा-यत्र्यः। हे अग्ने आयमत् गृहीतवान् तेतववत्सः पयोजीवनसामान्याद्यजमानोवत्सउक्तः। सहि-पयोव्रतोभवति। मनः अन्तः करणम् परमाच्चित्सधस्थात्। चिच्छब्दोप्यर्थे। परमादपि-सहस्थानात् आदित्यतिशेषः। सहस्थानदेवैः समानं स्थानं द्युलोकोग्नेः केनवत्सोमन आयम-

(१) का० श्वे तेऽश्वे पुरस्तातिष्ठन्त्विश्वे ताभावेऽश्वे तेऽनडुह्यग्निभ्यः। प्रक्रियमाणेभ्योऽनुवाचयति। श्वेतवर्णे श्वेऽन्यवर्णेतदभा-वेवृषेऽग्रातिष्ठतिसतिअग्निभ्यः प्रक्रियमाणेऽनुबृहोतिप्रेषितोहोताऽतेवत्सइतिदृचमनुवक्तीतिसूत्रार्थः।

---

* भवच। भवेत्ययं ऋस्वोदीर्घमापद्यते नकारे प्रत्यय इति सूत्रेण दीर्घः प्राति०। श्र० ३। सू० १०९।

दित्यतश्चाह । त्वङ्गामया । त्वां स्तोतुङ्गामयमानयागिरावाचा ॥ ११५ ॥ तुभ्यन्ताः । तुभ्यं हवींषि दत्त्वा यजमानैः ततोनन्तरम् तास्तुतयः हे अङ्गिरस्तम । अन्नं गिरतीत्यङ्गिरस्तमस्तस्य सम्बोधनं हे अङ्गिरस्तम । विश्वाः सर्वाः सुक्षितयः शोभनानि वसनाः । स्थानकरणानु प्रदानवत्यो- देवताः यथात्मसंतानचिन्तनगर्भा पृथक्नानाभूताः हे अग्ने कामय कामपरिपूरणार्थम् त्वय्ये-

अग्ग्ने त्वाङ्कामयागिरा ॥ ११५ ॥ तुभ्यन्ताऽ ॥ तुभ्यन्ताऽअङ्गिरस्त मव्विश्श्वाः सुक्षितयःपृथक् ॥ अग्ग्ने कामायेमिरे ॥ ॥११६॥ अग्ग्निः प्प्रियेषु ॥ अग्ग्निः प्प्रियेषु धामसु कामो भूतस्य भव्व्यस्य ॥ सम्म्राडेको व्विराजति ॥११७॥ [ १६ ] ॥ इति संहितापाठे द्वादशोऽध्यायः १२ ॥

वयेमिरे । कर्मणिलकारः । नियम्यन्ते । स्तुतयः ॥ ११६ ॥ अग्निः प्रियेषु । योग्निः प्रियेष्व- भिरुचितेषु धामसु स्थानेष्ववस्थितानाम् कामः कामपूरकः सः भूतस्योत्पन्नस्य प्राणिजातस्य भव्य- स्य भविष्यतश्च । सम्राट्सङ्गतराज्यभावः सन् एकएवासहायः विराजति । इष्टेश्वधिपतिः विविधन्दीप्यते ॥ ११७ ॥ इतिउवट्कृतौ मन्त्रभाष्ये द्वादशोध्यायः १२ ॥

(१) मयिगृह्णामीति यजमानो जपति । मयिगृह्णामि । आग्नेयीककुप् । मयिआत्मनि गृह्णा-मिअग्रे प्रथमम् । अग्निन्दर्शनेन । ततोग्निर्ज्विनोमीतिशेष: । किमर्थम् । रायस्पोषाय । धन-

* मयिंगृह्णामि ॥ मयिंगृह्णाम्म्यग्ग्रेऽअग्ग्निᳬरायस्प्पोषायसुप्प्रजा स्त्वायंसुवीर्य्याय ॥ मामुंदेवताऽंसचन्ताम् ॥ १ ॥ अपाम्पृष्ठम् ॥ अपाम्पृष्ठमसियोनिरग्ग्नेः समुद्रमभितःऽ पिन्न्वमानम् ॥ वर्द्धमानोमहाँ२ ॥ ऽआचपुष्क्करेदिवोमात्त्रयावरिम्म्णाप्प्रथस्व ॥ २ ॥ ब्रह्मंय

पोषाय । सुप्रजास्त्वायसुवीर्याय । वीर्यंशक्ति: । किञ्च । मान्दुदेवता: सचन्ताम् । मामेवदेवता: सेवन्ताम अग्निमित्र ॥ १ ॥ (२) पुष्करपर्णमुपदधाति । अपांपृष्ठमसि । व्याख्यातम ॥ २ ॥ सवक्ष-

द्वादशेऽध्याये उखाधारणगार्हपत्यचयनक्षेत्रकर्षणौषधवपनादिमन्त्राउक्तास्त्रयोदशेपुष्करपर्णाद्युपधानमन्त्राउच्यन्ते ।

(१) का० उत्तरवेदिमपरेणतिष्ठन्यजमानोमयिगृह्णामीतिजपति । उत्तरवेदे: पश्चातिष्ठन्यजमानोजुहोति ।

(२) का० पुष्करपर्णमुपदधातिस्तम्बे पूर्ववत् १७ । ४ । १ । ततोध्वर्यु: कुशस्तम्बे परिकमलिनोपद्मुपदधाति ।

---

* मयिगृह्णामिपंचदशध्रुवासिमधुव्वाताएकादशकौसम्यक्स्रवंतिनवेमंमाषडपांत्वैकाऽयंपुरः पंचसप्ताष्टापंचाशत् ।

शु० य० सं० २९५ उ० भा०

सुपदधाति (१)। ब्रह्मयज्ञानम् त्रिष्टुप् आदित्यदेवत्या। ब्रह्मलक्षणआदित्यः यज्ञानं यजमानः प्रथमंपुरस्तात् प्राच्यांदिशिजायते। ततोनन्तरम् विसीमतः सुरुचोवेनआवः। व्यावः। व्यावृणोत् विवृतानकरोत् स्वप्रकाशेन। सीमतः मध्यतो मर्यादातः। सुरुचः सुरोचनानिमान् लोकान्। वेनः कान्तोमेधाविवाआदित्यः। सएवच। बुध्न्याः। बुध्नमन्तरिक्षं तत्र भवा-

ज्ञानम्॥ ब्रह्मंयज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोव्वेनऽआवः॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः॥ २॥ हिरण्यगर्भःसमवर्त्ततागग्रेभूतस्यजातःपतिरेकऽआसीत्॥ .सदा

दिशोबुध्न्याः। उपमाः। उपमीयन्ते आसुस्थितानिभूतानी त्युपमादिशः। अस्यविष्ठाः। अस्यजगतः विविधंस्थानमितिविष्ठादिशः। सतश्चयोनिः। विद्यमानस्यचमूर्त्तस्यस्थानम् असतश्च अमूर्त्तस्यवाय्वादेः योनिम्। विवः विवृणोति आदित्यएवलोकान्दिशोभूतानि चाभिव्यनक्ति नान्यइति स्तूयते स्वकीयेनकर्मणा॥ ३॥ (२) पुरुषमुपदधाति। द्वाभ्यांत्रिष्टुब्भ्याम् सप्रजापतिः

(१) का० तस्मिन्रुक्ममधः पिण्डम्ब्रह्म ज्ञानमिति। तस्मिन्पुष्करपर्णेपूर्वंकण्ठधृतं रुक्ममधः पिण्डमुपदधाति।
(२) उत्तानंप्राञ्चं हिरण्यपुरुषतस्मिन् हिरण्यगर्भइति। तस्मिन् रुक्मेप्रांचमुत्तानंहिरण्यं पुरुषाकारमृग्द्वयेनोपदधाति।

१३अ० शिवम् २९५

सोऽग्निः अधियज्ञंसञ्जज्ञानः। हिरण्यगर्भः। योहिरण्यगर्भाख्यः पुरुषः समवर्ततताग्रे सम-
भावदनग्रे प्रथमम् शरीरी यस्यभूतस्योत्पन्नस्य प्राणिजातस्यजातः जातमात्रः सन् पतिरीश्वर
एकएवासीत् अभूत्। सदाधार। तदः स्थाने यदोऽर्थोक्ति रर्थसंभवात्। यस्सदाधारधारयति।
पृथिवीमन्तरिक्षमप्युच्यते। पृथिवीभूः वेयंभूरित्यादे रन्तरिक्ष नामसु पठितत्वात्। द्यांद्यु-
लोकंच। उतअपि इमांपृथिवीम्। तस्मैकस्मै कायइतिप्राप्ते स्मैआदेश् छान्दसः। प्रजा-

धारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायंहुविषाव्विधेम ॥ ४ ॥ द्रप्स्सश्चस्कन्द ॥ पृथिवीमनुद्यामिमञ्चयोनिमनुयश्चपूर्व्वः ॥ समानंय्योनि

पतयेदेवाय। हविषाविधेम हविर्दद्म इति विभक्तिव्यत्ययः॥ ४ ॥ द्रप्सस्कन्द। असरा-
मृच्या दित्योयथासर्वं विभर्तिपालयति चतथोच्यते। यआहुतिपरिणाम रसनिधान भूते द्रप्स
आदित्यः चस्कन्दपृथिवीम् उदकरूपेण पृथिवीस्कन्दतिमनुष्यादि धारणाय। यस्सद्युलोक मनु-
स्कन्दति आहुतिपरिणामभूतेन रसेनदिवादिधारणाय। इमंचयोनिमनुयस्सपूर्वः। यस्स इमं-
लोकं स्कन्दति आहुतिग्रहणाय। यस्सअनुस्कन्दति पूर्वयोनिम् सुलोकंसुकतिनान् तर्पणाय।

तमेवं समानं योनिं स्थानम् अनुसंचरन्तं द्रप्सम् आदित्यं जुहोमि स्थापयामि । अनुसप्त होत्राः ।
सप्तस्वपि दिक्षु । असौ वा आदित्यो द्रप्सो दिशः सप्त होत्रा अमुम् आदित्यं दिक्षु प्रतिष्ठापयन्तीति श्रुतिः ।
तिर्यक् चतस्रो दिशः अध एका उपर्येका मध्य एका एताः सप्त दिशः ॥ ५ ॥ (१)सर्पानामभि रुपतिष्ठते ।

मनुसञ्चरन्तन्द्रप्सञ्जुहोम्यनुसप्तहोत्राः ॥ ५ ॥ नमोस्तु ॥ सर्पे
भ्यो येकेचपृथिवीमनु ॥ येऽअन्तरिक्षे येदिवितेभ्यः सर्पेभ्योनमः ॥ ६ ॥
याऽइषवः ॥ याऽइषवोयातुधानानांयेवावनस्पतीँ२रनु ॥ येवा
वटेषुशेरतेतेभ्यः सर्पेभ्योनमः ॥ ७ ॥ येवा । येवामीरोचनेदिवो

नमोस्तु । तिस्रोनुष्टुभः सर्पदेवत्याः । लोका वा सर्पाः । नमस्कारोस्तु सर्पेभ्यः येकेच पृथिवी
मनु । व्यवस्थिताः येचान्तरिक्षे येचिदिवि व्यवस्थिताः तेभ्यः सर्पेभ्यो नमस्कारोस्तु ॥ ६ ॥
याइषवः । यानिकाण्डानि । यातुधानानाम् यातनां दुःखं येदधति तेयातुधानारक्षः प्रभृतयः ।
येच वनस्पतीन् अनु व्यवस्थिताः येच अवटेषु विलेषु शेरते आसते तेभ्यः सर्पेभ्यो नमः ॥ ७ ॥

(१) का० उपतिष्ठति यजमानो नमोस्त्विति । यजमानो हिरण्यपुरुषं पश्यन्नृक्त्रयं पठेत् ।

शु० य० सं० २९६ उ० भा०

१३अ० शिवम् २९६

येत्रा। येचअमी। प्रत्यक्षान्दूरतोनिर्दिशतिसर्प्पान्। रोचनेदिवः। रोचनोद्युनामैषलोकोद-
त्रैष एतत्तपति इतिश्रुतिः। येच सूर्य्यस्यरश्मिषुस्थिताः। येषांच अप्सुसदः कृतम् उदकेस्थानं
कृतम् तेभ्यः सर्पेभ्यः नमः॥ ८॥ (१) जुहोति। कृणुष्वपाजः। पञ्चत्रिष्टुभ आग्नेय्यो रक्षोघ्न्यः।
हेअग्नेकृणुष्वपाजः। पाजइति बलनामसु पठितम्। कुरुष्वबलम् प्रसितिन्नपृथ्वीम् प्रसितिः

येवामीरोचनेदिवोयेवासूर्य्यस्यरश्मिषु॥येषामप्सुसदस्कृतन्तेभ्यः सर्प्पेभ्योनमः॥८॥

कृणुष्वपाजः॥कृणुष्वपाजःप्रसितिन्नपृथ्वींयाहिराजेवामवाँर ॥

प्रसयनातन्तुर्वा जालंवा। नकारउपमार्थीयः। उपरिष्टादुपचारः अथकोर्थः। कुरुष्वबलंवा-
गुरामिव पृथिवी। यद्वा जलमिपृथु। ततोयाहि राजेव। अमवान् अमात्यवान्भूत्वा। अभ्यवन-
वान् वा अभ्यमनं शत्रूणां भयादप्रतिपत्तिकरणम्। गृहवान्वा भूत्वा। शत्रून्प्रतियाहि। इभेन
इभक्षयेन बलेन। यद्वा। इभेन हस्तिना। गत्वाच। तृष्वीमनुप्रसितिन्द्रूणानः। तृष्वया-

(१) का० उपविश्यपश्चग्रहीतंजुहोतिपुरुषेकृणुष्वपाजइतिप्रत्यृचंप्रत्यृचंप्रतिदिशंपरिसर्पम्। आज्यं संस्कृत्यपञ्चग्रहीतमा-
दायात्मानमारुह्यपुरुषान्तिकेउपविश्यप्रतिदिशंपरिसृप्यपरिसृप्य पुरुषोपरिपंचर्भिर्जुहोतीतिसूत्रार्थः।

प्रसित्येति विभक्तिव्यत्ययः। द्रूणानद्रुतिर्हिंसाकर्मा। यतस्त्वं तृष्व्या क्षिप्रयाप्रसित्यातन्तुना जालेनवा। द्रूणानोहिंसन् असाअसि क्षेप्ताअसि विकटः हन्ता त्वोसि अतोब्रवीमि। विध्य। ताडय। हिंद्धि। रक्षसः। तपिष्ठैः तप्ततमैः प्रहारैः। यद्वा। अतीवतप्ततमैः अतिशयेनक्लेशकरैः॥ ९॥ तवभ्रमासः। हेअग्ने यएते तवभ्रमासः भ्रमणा वा तोद्भूता-

ऽद्भुभैन॥ तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविध्यंरक्षसस्तपिष्ठैः॥९॥

तवभ्रमासः॥ तवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः॥

तपूंष्यग्नेजुह्वापतङ्गानसंदितोविसृजविष्वगुल्काः॥ १०॥

ज्वालासमूहाः आशुयाः आशवः स्थानेयाः। पतंतिद्रुतस्तेनसगच्छन्ति। तैः अनुस्पृशअभि-मृश। धृषताधृष्टेन ज्वालासमूहेनशोशुचानः देदीप्यमानः। कान्यनुस्पृशेदित्यत आह तपूंषि तापयित्रीणि रक्षांसि। जुह्वास्रुचा हूयमानद्रुतिशेषः। पतङ्गान् पतनगमनानि रक्षांसि। किञ्च असंदितः दोअवखण्डने। अनवखण्डितस्सन् विसृजविक्षिप। विष्वक् विषुनानावचनः

अन्च तिर्गत्यर्थः । नानागमनाः तिर्यगूर्द्ध्वमधश्चेत्यर्थः । उल्काः रक्षोविघाताय ॥ १० ॥ प्रतिस्पशः । अष्टतीयः पादः प्रथमंव्याख्यायते । यच्छब्दयोगात् । योनोदूरे अघशंसः योस्माकं दूरेवसति अघशंसः पापस्योत्कीर्तकोदुर्जनः । योअन्तिके यश्चअन्तिके वसत्यघशंसः । तंप्रतिस्पशः विसृज । स्पशवन्धनेस्पाशयतीतिस्पशः प्रणिधीन् अध्यचान् विसृजप्रेरय । तूर्णितमः अतिशयेनत्व-

प्रतिस्पशः ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोअस्या ऽअदब्धः ॥ योनोदूरेऽअघशंसोयोऽअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ ११ ॥ उदग्ने ॥ तिष्ठप्प्रत्यातनुष्वन्न्यमित्त्राँ२ ॥ ऽओष

रन् किञ्च भवापायुः पालयिता । विशः जनपदजातेः । अस्यामदीयाया अदब्धः अनुपहिंस्यः । एवंचतवास्मदनुग्रह प्रवृत्तस्यसतः हेअग्नेमाकिः माकश्चित् तेतवव्यथिः व्यथयिताशत्रुः आदधर्षीत् प्रत्यनीकोभूत् ॥११॥ उदग्ने । उत्तिष्ठ हे अग्ने किञ्च प्रत्यातनुष्वप्रत्यातनुहिविस्तारय ज्वालाप्राग्भारान् किञ्च । न्यमित्रान् ओषतात् न्योषतात् निर्दह अमित्रान्शत्रून्

हेतिग्महेते । हेतिरायुधम् तिग्मतेजतेरुत्साहकर्मणः । उत्साहवदायुधं यस्यसतथोक्तः । किञ्च ।
यस्मनः अस्मभ्रम् अरातिमदानं चक्रे नददातिश्रद्धालुः । हेसमिधान नीचानीचैस्तत्य
तंधक्षिदह । अतसंन । अतसोवृक्षः नकारउपमार्थीयः । वृक्षमिवशुष्कम् ॥ १२ । उर्द्धोभव ।
उर्द्धस्तिष्ठ । स्थित्वाच । प्रतिविध्यप्रतिताडय । अध्यस्मत् अस्मत्त उपरिव्यवस्थितान् किञ्च

तान्तिग्महेते ॥ योनोऽअरातिꣳसमिधानचक्रेनीचातन्धक्ष्यतस
न्नशुष्कम् ॥ १२ ॥ ऊर्द्ध्वोभव ॥ ऊर्द्ध्वोभवप्रतिविध्याध्यस्मदा
विष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनाञ्जामिमजामि

आविष्कृणुष्वप्रकाशीकुरुष्व दैव्यानिकर्माणि हेअग्ने । किञ्च अवस्थिरा तनुहि अवतनुहि
अवतारय स्थिराणिधनूंषि । यातुजूनाम् यातुधानानांजवनप्रधानानाम् किञ्च यद्वस्यजा-
मिमजामिम् जामिशब्दः पुनरुक्तवचनः । पुनरुक्तमपुनरुक्तं कृत्वा । प्रमृणीहि । मृणातिर्ह-

रणार्थः। प्रसारयशत्रून्। प्रथमांस्त्रुचमुपदधाति। (१) आग्नेयेनयजुषा ऋचावा अग्नेष्ट्वा। अग्नेः संबन्धिना तेजसात्त्वांसादयामि हे स्त्रुक्॥ १३॥ अग्निर्मूर्द्धा व्याख्यातम्। द्वितीयामुपदधाति ऐन्द्रेण यजुषा। आग्नेय्या च त्रिष्टुभा। (२) इन्द्रस्यत्वोम् ओजसा बलेन सादयामि॥१४॥

म्प्रमृणीहिशत्रून्॥ अग्नेष्ट्वातेजसासादयामि॥ १३॥ अग्निर्मूर्द्धा॥ दिवःककुत्पतिःपृथिव्याअयम्॥ अपांरेतांसिजिन्वति॥ इन्द्रस्यत्वौजसासादयामि॥ १४॥ भुवोयज्ञस्य॥ भुवोयज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचसेशिवाभिः॥ दिविमूर्द्धानन्दधिषेस्व

भुवोयज्ञस्य। चतुर्थः पादः प्रथमंव्याख्यायते अर्थसंबन्धात्। यदाजिह्वाज्वलालक्षणां हे अग्ने चकृषेकरोषि। हव्यवाहं हविषोवोढ्रीम् अथानन्तरमेव भुवः भवसि। यज्ञस्यद्रव्यदेवतात्या-

(१) घृतपूर्णामग्नेष्ट्वेति १७।४। १२। कात्यायनहीं पादमात्रदीर्घांषडङ्गुलविपुलांघृतपूर्णांप्रागग्रांस्त्रुचमग्नेष्टे ति। यजुषाग्निर्मूर्द्धेतिऋचाचोपदधाति।

(२) का० एवमौदुम्बरीमुत्तरत्तोर्दधिपूर्णामिन्द्रस्यत्वेति १७। ४। १३। एवंविधमेवौदुम्बरींदधिपूर्णां स्त्रुचमुत्तरेऽपदधाति।

शु० य० सं० २९९ उ० भा०

गात्मनोनेतादेवयान पितृयाण मार्गानुसारिणः। रजसश्चोदकस्य च यन्त्रपरिणामभूतस्य नेताभवति जगदुत्पत्त्यर्थम्। कुत्र नेताभवसीत्यतआह। यत्रयस्मिन् स्थाने नियुद्भिः नियुद्गुणविशिष्टाभि रश्वाभिः शिवाभिः सहितंवायुंसचसेसेवसे। नियुतोवायोरित्यादिष्टोपयोजनानीति नियुद्भिर्वायुर्लक्ष्यते वायुनान्तरिक्षम् यच्च दिविद्युलोके मूर्द्धानमादित्यं दधिषे। धारयसि।

षोञ्जिह्वत्वामग्ग्नेचक्षषोह्व्यवाहम्॥ १५ ॥ [ १५ ] ध्रुवासि॥ धुरुणास्तृंताविश्वकर्म्मणा॥ मात्वासमुद्रऽउद्वंधीन्मासुंपर्णोव्यंथमाना

स्वर्षाम् स्वः द्युलोकं सनोतीति स्वर्षांतां स्वर्षाम् तत्रभवसि। यन्तुरस्य रजसस्त्वनेतेति। यस्यतवेतत्कर्म तंत्वां सादयामि इति शेषः॥ १५॥ स्वयमातृणां पृथिवी संस्तुता मिष्टका मुपदधाति। (१)ध्रुवा सीतितिसृभि रुष्णिभ रूर्ध्व बृहत्यनुष्टु प्प्रस्तारपङ्क्तिभिः विश्वस्मै प्राणायेत्यादिना यजुषाच। ध्रुवासि स्थिरासि। अतएवधरुणाच अन्येषाञ्चधारयित्री। आस्तृताविश्वकर्मणा। उपहि-

(१) का० स्वयमातृणां पुरुषेशर्करांछिद्रां ध्रुवासीति। पुरुषोपरि ध्रुवेत्यादिकाष्ठिकाचतुष्टयेनस्वयमातृणामुपदधातिकीदृशीं शर्करांपाषाणमयींछिद्रां स्वाभाविकछिद्रयुतां सच्छिद्राश्ममयीष्टकैव स्वयमातृणेत्युच्यते।

१३अ०

शिवम्

२९९

ताञ्चासि विश्वकर्मणा प्रजापतिना सर्वस्यकर्त्ता। एवञ्चेदतो ब्रवीमि। मात्वासमुद्र उद्व-
धीत् उद्वध्यात्। रुक्मोवैसमुद्रः पुरुःसुपर्णं इतिस्मृतिः। त्वञ्च अव्यथमाना अचलन्तीं पृथिवीं
दृंह दृढीकुरु। आत्मसात्कुर्वित्यभिप्रायः॥ १६॥ प्रजापतिष्ट्वा प्रजापतिः त्वांसादयतु। सहि-
त्वामासादयितुं समर्थः। अपांपृष्ठे अपामुपरि। समुद्रस्यसमुन्दनस्य उदकसंघातस्य एमन् एमनि।

पृथिवीन्दृंꣳह ॥ १६ ॥ प्रजापतिष्ट्वा ॥ सायत्त्वपाम्पृष्ठेसमुद्रस्येमन् ॥
व्यचस्वतीम्प्रथस्वतीम्प्रथस्वपृथिव्व्यसि ॥ १७ ॥ भूरसि ॥ भूरसिभू
मिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवीय्यं

इणः मनिन् सप्तम्येकवचनम् अवस्थाने। कथंभूतामासादयतु। व्यचस्वतीं व्यंचनवतीम्
प्रथस्वतीं पृथुत्वयुक्ताम्। त्वंचासादितापजापतिना। प्रथस्वपृथ्वीभव। यतस्त्वपृथिव्यासि
अतोब्रवीमि॥ १७॥ भूरसिभूमिरसि। अदितिरसिविश्वधायाः विश्वस्यांनिहितमितिविश्व-
धायाः। विश्वस्यचभुवनस्य भूतग्रामस्यचधर्त्री। धारयित्री। यतश्चत्त्वमित्थंसैव अतइदमुक्तं
भवति। पृथिवींयच्छ आत्मानं निगृह्णीष्व। पृथिवींदृंह। आत्मानं दृढीकुरु। पृथिवीं

शु० य० सं० २०० उ० भा०

माहिंसीः आत्मानं माहिंसीः ॥ १८ ॥ विश्वस्मै प्राणाय । सर्वस्मै प्राणार्थं । अपानाय । व्यानाय । उदानाय । प्रतिष्ठायै । चरित्राय । चरणाय । त्वांसादयामीतिशेषः । अग्निः त्वाम् अभिपातुपालयतु मह्यामहत्या स्वस्त्या अविनाशेन । छर्दिषाशन्तमेन । गृहेणासुखतमेन

ऋपृथिवीन्दृंहपृथिवीम्माहिंसीः ॥ १८ ॥ विश्वंस्मैप्प्राणायं ॥ विश्वंस्मैप्प्राणायांपानायंव्यानायोदानायंप्प्रतिष्ठायैचरित्रांय ॥ अग्निष्ट्वाभिपातुमह्यास्वस्त्याछर्दिषाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १९ ॥ काण्डांत्काण्डात्प्ररोहन्ती ॥ परुंषःपरुषस्प्प

हेतुभूतेन । सादयति । तयादेवतया । व्याख्यातम् ॥ १९ ॥ अग्निनादृष्टांदूर्वेष्टकासुपदधाति द्वाभ्यामनुष्टुब्भ्याम् । (१) काण्डात्काण्डात् । भूमौसंवद्धं जटाभिः पर्वकाण्डमित्युच्यते । असंवद्धं

(१) का० १०।४।१८। मूलाग्रवतींदूर्वांतस्यांपुरस्तात्भूमिप्राप्तांकाण्डात् काण्डादिति । तस्यां स्वयमातृण्णायांकाण्डादिति ऋग्द्वयेनपुरस्तात्भूमिगताग्रं मूलाग्रयुतांदूर्वामुपदधाति ।

१३अ०

शिवम्

२००

परुः । काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि । पर्वणः पर्वणश्च परिप्ररोहन्ती यथाशतांकुराज-
स्मसि एवंनः अस्मान् हे दूर्वे प्रतनु । विस्तारय । पुत्रपौत्रनप्तृभिः शतसहस्र संख्यैः ॥ २० ॥
याशतेन । यात्वं शतेन काण्डानां प्रतनोषि पृथिवीं सहस्रेण चांकुराणां विरोहसि । तस्या-

रिं ॥ एवानोदूर्वेप्प्रतंनुसुहस्रेणशुतेनंच ॥ २० ॥ याशुतेनं ॥ प्प्रतु
नोषिंसुहस्रेणव्विरोहंसि ॥ तस्यांस्तेदेवीष्टकेव्विधेमंहुविषांव्वयम् ॥
२१ ॥ यास्तें ॥ ऽअग्गनेसूर्य्येरुचोदिवंमातुन्वन्तिंरुश्मिभिः ॥ ताभिं

स्तत्र हे इष्टके विधेमस्थान हविषासहवयम् ॥ २१ ॥ (१) द्वियजुष मुपदधाति इन्द्राग्निभ्यांदृष्टाभ्यां
द्वाभ्यामनुष्टुब्भ्यामग्निलिङ्गोक्तदेवताभ्याम् । यास्तेअग्ने । यास्तेतव हे अग्ने सूर्येऽवस्थितारुचो-
दीप्तयः दिवन्द्युलोकम् आतन्वन्तिप्रकाशयन्ति रश्मिभिः । ताभिरुग्भिः सर्वाभिः नोस्मान् अस्मि-

(१) का० यास्तइतिद्वियजु षं द्वितीये १७ । ४ । २० । दूर्वेष्टकापुरस्ताद् द्वितीये पद्यालोकेयास्तइतिऋग्द्वयेन द्वियजुः संज्ञां पद्येष्टकामुपदधातिइतिसूत्रार्थः ।

न्द्यवि रुचेरोचनाय ऋधिकुरु। जनायनस्कृधि। जनानांच भोक्तॄन् अस्मान् कृधि॥ २२॥
यावोदेवाः या वः युष्माकं हे देवाः सूर्येरुचः दीप्तयः गोषुअश्वेषु याश्चः। हे इन्द्राग्नी हे
वृहस्पते ताभिसर्वाभिः रुग्भिः रुचम् नः अस्मभ्यन्धत्त॥ २३॥ (१) रेतः सिचावुपदधाति। विराट्



न्नौऽअद्यसर्व्वाभीरुचेजनायनस्कृधि॥ २२॥ यावः॥ यावोदेवाऽसूर्य्ये
रुचोगोष्वश्वेषुयारुचः॥ इन्द्राग्नीताभिःसर्व्वाभीरुचन्नोधत्तबृह
स्पते॥ २३॥ विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत्॥ प्रजा
पतिष्ट्वासादयतुपृष्ठेपृथिव्याज्ज्योतिष्मतीम्॥ विश्वस्मैप्राणा

ज्योति रधारयत्। विराडयं लोकः सइममग्निम् ज्योतिर्धारयति। द्वितीयामुपदधाति।
स्वराट् ज्योतिः अधारयत्। असौवैलोकः स्वराट् सोमुमादित्यं ज्योतिर्द्धारयति। विश्व-

(१) का० विराट् स्वराडितिरेतः सिचोप्रतिमन्त्रम्। द्वियजुषः पूर्वे अध्वर्यवहिते रेतः सिचौद्वे पद्ये इष्टके प्राग्लक्षणे अनूकमभितोविराट्
स्वराडितिप्रतिमन्त्रमुपदधाति विराडित्यु त्तरांस्वराडितिदक्षिणामितिसूत्रार्थः

ज्योतिष मुपदधाति । प्रजापतिः प्रजापतिस्त्वांसादयतु । पृष्ठे पृथिव्याः उपरिपृथिव्याः । ज्योतिष्मती ज्योतिषासंयुक्ताम् । किमर्थम् । विश्वस्मैसर्वस्मै प्राणाय अपानायव्यानाय । किञ्च । विश्वञ्ज्योतिर्यच्छ निगृह्णीष्व । अग्निस्तवाधिपतिः । सादयति । तयादेवतयाङ्गिरस्वद्ध्रुवा-

यां प्राणायं व्यानायुव्विश्वञ्ज्योतिर्यच्छ ॥ अग्निष्टेऽधिपतिस्तया दे वतयाङ्गिरुस्वद्ध्रुवासीद ॥ २४ ॥ मधुश्च माधवश्च वासन्तिकावृतू अग्नेरन्तः श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ॥ येऽअग्नयः समनसः

सोद । व्याख्यातम् ॥ २४ ॥ (१) ऋतव्ये उपदधाति मधुश्च । वसन्तऋतुरुच्यते । यस्त्वंमधुश्च माधवश्च चैत्रश्चवैशाखश्च वसन्तऋतुः । स्वार्थेतद्धितः । ऋतूइतिद्विवचनमेकवचनस्य स्थानेअर्थ संबन्धात् । यस्त्वामग्नेः संवत्सराख्यस्य अन्तः श्लेषोसि । अन्तर्मध्ये व्यवस्थितः श्लेषकोसि

(१) का० ऋतव्ये मधुश्चमाधवश्चेति विश्वज्योतिषः पुरोऽहं पर्यं प्राग्लक्षणे । ऋतव्ये इष्टकेअनूकमभितउदङ्मुखउपदधाति ।

तस्यतव कल्पेतांद्यावापृथिव्यौ। ज्यैष्ठ्याय ज्येष्ठभावायेत्यनुषङ्गः। कल्पन्तांच आपः ओषधयः ज्यैष्ठ्याय। कल्पन्तांच अग्नयः पृथङ्मम ज्यैष्ठ्याय। अग्नयोहैतेपृथग्येदेवताइष्टकाइतिश्रुतिः। मम तवेतिप्राप्ते ममेतिव्यत्ययश्छान्दसः। अथकोर्थः। कल्पन्ताम् इष्टकायाः स्वयमातृण्णादयः नानाभूतास्तवज्यैष्ठ्याय सव्रताः। समानकर्माणः। समानंहिकर्म इष्टका नामग्निचयनंनाम।



सोऽन्तराद्यावापृथिवीऽइमे॥ व्वासन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम्॥ २५॥

किञ्च। येऽग्नयः अन्यैरपिचिताः समनसः समानमनस्काः। अन्तरामध्ये द्यावापृथिव्यौ इमेवर्त्तन्ते तेपिवसन्त ऋतुमभिकल्पमानाः वासन्तिकाविति स्वार्थे तद्धितः ऋतूइतिद्विवचन मेकवचनस्यार्थे। अभिकल्पमानाः। संविशन्त्विति सम्बन्धः। कथमिव। इन्द्रमिवदेवाः। यथाइन्द्रं देवानांराजानं परिचरणायदेवाअभिविशन्ति। एवंवसन्तऋतुमन्याइष्टकाः परिचर-

णायाभिविशन्तु । सादयति । तयादेवतयेतिव्याख्यातम् ॥ २५ ॥ (१) अषाढामुपदधाति । अषा-
ढासि । सविता अपश्यद्देवा वा अपश्यन् अनुष्टुप् । अषाढासिनाम्ना । यदसहन्ततस्मादः-
षाढेत्येतत् अत्युत्वभिप्रायं नामकथनम् सहमानाच अभिभवनशीलासि च स्वभावतो यतः

अषाढासि ॥ अषाढासि॒सह॑मानु॒सह॒स्वारा॑ती॒ऽसह॑स्वपृतनाय॒तः ॥
स॒हस्र॑वीर्य्यासि॒सामा॑जिन्व ॥ २६ ॥ [ ११ ] मधुव्वाता॑ः ॥ मधु॒व्वा
ता॑ऽऋ॒तायु॒तेमधु॑क्षरन्ति॒सिन्ध॑वः ॥ माध्वी॑र्न्नःस॒न्त्वोष॑धीः ॥२७॥

अतस्त्वांब्रवीमि । सहस्वारातीः । अभिभव अदान शीलान् । अभिभवच नः पृतनायतः पृत-
नांग्राममिच्छतः । किञ्च । याचत्वं सहस्रवीर्यासि । सामाजिन्व जिन्वतिः प्रीतिकर्मा ।
प्रीणीहि ॥ २६ ॥ (२) कूर्म्मं दधिमधुघृतै रभ्यनक्ति । मधुवाताः । गायत्र्यस्तृचोवैश्वदेव्यः । मधु-
मन्तोवारसवन्तोवातावान्त्वितिशेषः । कस्मै । ऋतायते यज्ञमिच्छते । मधुक्षरन्ति सिंधवः

(१) का० अषाढासीत्यषाढाम् । अषाढासंज्ञाकामिष्टकांपत्नीकृतांपद्यांप्राग्लक्षणाकृतव्याभ्यांपूर्वांसंलग्नामनूकेउपदधाति ।
(२) का० कूर्मन्दधिमधुघृत्तै रनक्तिमधुव्वाताइति २७ । ४ । २७ । मिश्रितै र्दधिमधुघृतै ऋर्क्त्रयेणकच्छपमनक्ति ।

मधुउदकंक्षरन्तु सिन्धवा स्यन्दमाना: नद्य:। माध्वीर्न:। मधुमत्त्वोस्माकं सन्तु भवन्तु ओष-
धय: ॥ २७ ॥ मधुनक्तम्। मधुमत्नक्तंरात्रिरस्तु। उतअपिच उषस: मधुमत्य: सन्तु। मधु-
मद्रसव त्पार्थिवंरजो लोक: अस्तु मातृभूत:। मधुमदित्ययं मतुप् सर्वेषांमधुशब्दानामनुषङ्गो-
द्रष्टव्य: साकांक्षत्वात्। मधुद्यौरस्तुन: पिता। मधुमतीद्यौरस्तु अस्माकम् पितृभूत ॥ २८ ॥

मधुनक्तम् ॥ * मधुनक्तमुतोषसोमधुमत्पार्थिवꣳ रजः ॥ मधुद्यौर
स्तुनःपिता ॥२८॥ मधुमान्नः ॥ मधुमान्नोव्वनस्पतिर्म्मधुमाꣳ ॥
ऽअस्तुसूर्यः ॥ माद्ध्वीर्गावोभवन्तुनः ॥ २९ ॥ अपाङ्ग्म्भन् ॥ अपा

मधुमान्। रसवान् न:अस्माकं वनस्पतिर्यज्ञसाधनभूतोस्तु। सोमोवावनस्पति:। मधुमान्
अस्तुमूर्य:। यज्ञसाधनभूत:। माध्वी: मधुमत्योरसवत्य: गाव: यज्ञसाधनभूता: पशवो रस-
योवाभवतु नोस्माकम्। रसोमधुइतिश्रुति:। वास्मादीनिरसवन्त्यस्माकं भोग्यानिसन्त्वितिसम-

---

* वेत्तुव्वित्त्वाऽस्मष्टक्पान्नमित्यादिसूक्तं एमधुनक्तमुतोष सद्व्यवद्वीककारीतकारस्वसंयो गोवोधित: प्राति० अ० ५। सू० २६।

श्रु०
य०
सं०
३.३
उ०
भा०

१३अ०
शिवस
३.३

स्तार्थः ॥ २९ ॥ (१) उपदधाति । अपाङ्गभन् । त्रिभिः पंक्ति त्रिष्टु ब्गायत्रीभिः । द्वेकूर्मदेवत्ये । कूर्मश्च प्रजापतिरादित्योवा । उत्तराद्यावा: पृथिवीया । अपाङ्गम्भन् अपाङ्गम्भीरे प्रदेशे सीदउपविश । एषवा अपाङ्गम्भन् यत्रैषएतत्तपतीतिश्रुतिः । तत्रचोपतिष्ठन्त्वं सन्त्वं मात्वां सूर्यः अभितासीत् । अभितापयेत् । माच अग्निर्वैश्वानरः । त्वं च अच्छिन्नपत्राः प्रजाः अनुवीक्षस्व । प्रजा इष्टका

ङ्गम्भंन्त्सीदमात्त्वासूर्य्योभितांप्प्सीन्माग्गिनर्वैश्वानरः ॥ अच्छिन्न पत्त्राःप्प्रजाऽअनुवीक्षस्वानुंत्त्वादिव्व्यावृष्टिःसचताम् ॥ ३० ॥ त्त्रीन्त्समुद्द्रान् ॥ चीन्त्समुद्द्रान्त्समसृपत्स्वर्ग्गानुपाम्पतिर्व्वृषभऽइष्टका

उच्यन्ते । अच्छिन्नपत्राइति व्याख्यातं श्रुत्या । अरिष्टा अनार्त्ता अस्माकमिति । अनव खण्डितायोगक्षेमा इष्टका दर्शनेन कुर्वित्यर्थः । अनुत्वादि व्यावृष्टिः सचताम् । अनुसेवतां त्वां दिव्यादिविभवावृष्टिः । दिव्यावृष्टिरिति प्रियवचनम् ॥ ३० ॥ (१) एजयति । त्रीन्समुद्रान् ।

(१) का० अरत्निमात्रेऽषाढादक्षिणेनावकासूपरिष्टाच्चपुरुषमभिमुखमपांगम्भन्निति तिसृभिः । अषाढादक्षिणदेशेहस्तमात्रे प-
द्यालोकद्वयमन्तरालेसुत्रात्ततीयेपद्यालोके पूर्वमेव स्थापितास्ववकासुशैवालेषुपुरुषसम्मुखस्त्वत्रयेणकूर्ममुपदधातिसूत्रार्थः ।
(२) का० घट्टयतिमध्यमयेति । तिसृणांमध्यमयात्रीन्समुद्रानितिऋचाहस्तस्थमेवकूर्मं कम्पयतीतिसूत्रार्थः ।

यस्त्रीन्समुद्रान् लोकान् समसृपत्। समसृप इति पुरुषव्यत्ययः। संसृप्तोसि। स्वर्गान्स्वर्गहेतून्। यश्चत्वम् अपांपतिः वृषभश्चवर्षिताभर्त्ता इष्टकानाम् तं त्वां ब्रवीमि। पुरीषं वसानः पशूनाच्छादयन्। सुकृतस्य शोभन कृतस्याग्नेर्लोकेस्थानेस्थित्वा तत्र गच्छ यत्रपूर्वे कूर्माअन्ये

नाम्॥ पुरीषंव्वसानꣳसुकृतस्यंलोके *तत्रंगच्छयत्रपूर्व्वेपरेताः ॥३१॥ मुहीद्यौः पृथिवीचंनऽइमंय्यज्ञम्मिमिक्षताम्॥ पिपृतान्नोभरीमभिः ॥ ३२ ॥ व्विष्णोःꣳकर्म्माणि॥ पश्यतयतोव्व्रतानिपस्पशे॥ इन्द्रस्ययुज्ज्यःꣳसखा॥ ३३ ॥ ध्रुवासिं॥ धरुणेतोजज्ञेप्रथममेभ्यो

व्यग्निषूपहिताः सन्तः परेताः परागताः ॥ ३१ ॥ मह्नीद्यौ रिति व्याख्यातम् ॥ ३२ ॥ उलूखलमुशले उपदधाति। विष्णोः कर्माणि। व्याख्यातम् ॥ ३३ ॥ (१) उखामु पदधाति।

(१) का० उलूखलउखांकृत्वोपशयांपिष्ट्वान्युप्यपुरस्तादुध्रुवासीत्युखाम् १७।५।४। पूर्वमुलूखलोपयुखातूष्णींकृत्वाततउपशयां दृदंपिष्ट्वोखांपुरस्ताद्गमीप्रक्षिप्यतचोखांमन्त्रद्वयेनोपदधादितिसूत्रार्थः।

* न त्वहचिच्छिसतयेभ्यस्त्वकम् प्राति० अ० ५। सू० २७। त्वहचिच्छिवसतयएतेभ्यः परस्त्वशब्दोनत्विरुच्यते।

ध्रुवासीतिद्वाभ्याम् । त्रिष्टुब्छन्दतीभ्याम् । ध्रुवासिस्थिरासि धरुणाधारणीच । इदानीमग्न्यपत्य द्वारेण उखास्तूयते । यद्गतउखातोजन्नेजातः प्रथमंततोनन्तरम् एभ्योलोकेभ्योऽधि । एभ्यो-लोकेभ्यः सकाशात् जातवेदाः जातप्रज्ञानः । सइदानीं गायत्र्या त्रिष्टुभानुष्टुभाच सहितः देवेभ्योर्थाय हव्यं हविः वहतुप्रापयतु । प्रजानन् स्वमधिकारञ्जानानः ॥ ३४ ॥ इषेराये ।

यो॒निं॑भ्यो॒ऽअधि॒ञ्जा॒तवे॑दाः ॥ सगा॑य॒त्र्या त्रि॒ष्टुभा॒नु॒ष्टुभा॑च दे॒वेभ्यो॑ ह॒व्यं व॑हतु॒प्प्र॒जा॒नन् ॥ ३४ ॥ इ॒षेरा॒ये ॥ रम॑स्व॒सह॑से॒द्युम्न॒ऽऊर्जे॒ऽअप॑त्याय ॥ स॒म्म्राड॑सिस्व॒राड॑सिसार॒स्व॒तौत्वो॒त्सौप्प्राव॑ताम् ॥ ३५ ॥

उखोच्यते । इषेअन्नाय रायेधनाय रमस्व रतिंबधीहि । सहसेबलाय । द्युम्ने । द्युम्नं द्योततेः यशोवाअन्नंवा । ऊर्जेउपसेचनाय पयोदधिघृतादये । अपत्याय पुत्रपौत्रादये । रम-स्वेतिसर्वत्रसंबध्यते । किञ्च । सम्म्राडसि संगतराजप्रभोवासि । स्वराडसि । स्वराजप्रयुक्तासि । सारस्वतौच । सरस्वतीसंबन्धिनौच त्वामुत्सौउत्सप्रन्दनौकूपौ । मनश्चवाक्च । मनस्तःवत्

सर्वशास्त्रपरिज्ञानं कूपद्भवोत्स्यन्दति । वागपितत्प्रतिपादनं कुर्वती । मनोवैसरस्वन्वाक्सरस्वत्ये- तौसारस्वतावुत्सावितिश्रुतिः । प्रावताम् अवतिः पालनार्थः ॥ ३५ ॥ द्वाभ्यामाग्नेयीभ्रयां गाय- त्रीभ्रयां जुहोति । (१) अग्ने युत्क्ष्व । हि शब्दः पादपूरणः । येतवस्वभूताः अश्वासः । अश्वाए-

* अग्नेयुक्ष्व ॥ अग्नेयुक्ष्वाहियेतवाश्वासोदेवसाधवः ॥ अरंवहन्तिमन्यवे ॥ ३६ ॥ युक्ष्वाहि ॥ देवहूतमाँर ॥ ऽअश्वाँर ॥ ऽअग्नेरथीरिव ॥ निहोतापूर्व्यःसदः ॥ ३७ ॥ [ ११ ] सुम्यक्स्व

वश्वश्वासः आज्जसेरसुक् । हेदेवदानादिगुणयुक्त । साधवः जातिगुणसमन्विताः प्रशस्ताः । अलं पर्य्याप्तिं वहन्ति । मन्यवे । दीप्तयेक्रोधायवा ॥ ३६ ॥ युक्ष्वाहिदेवहूतमान् । अतिशयेनदे- वानाह्वयन्तितान् । युक्ष्वअश्वान् हेअग्नेरथीइव । इवकारोमत्वर्थीयः । कस्मात्पुनस्त्वमेव-

( १ ) का० अग्ने युक्ष्वाहीत्तिप्रत्यृचं स्रुवाहुतीजुहोत्यु खायाम् ऋग्द्वयेनोखामध्ये द्वे आहुतीजुहोति ।

* पिबासोममित्यिबासुतस्ये त्यादिसूत्रेण अग्ने युक्ष्वाहीत्यत्रदीर्घः प्रा० अ० ३ । सू० १३० ।

सुच्यसे। यत:। निह्वोतापूर्व्यः सदः। निषदः। निषीदसि होटषदनेहोतः सन् पूर्व्यः मानुषाद्धोतुः प्रथमः अग्रः। तदुक्तम्। अव्याद्यक्षं जातवेदा अन्तरः पूर्वोऽस्मिन्निषद्योति ॥ ३७ ॥
(१) सुखप्रभृति सप्तसुप्राणायतनेषु सप्तहिरण्यशलाकान् प्रत्यस्यति। सम्यक्स्रवन्ति। त्रिष्टुप्। हिरण्मय पुरुषाध्यासेनायं मन्त्रोव्याख्यायते। सम्यक्सङ्गताः स्रवन्तिच्चरन्ति। कथमिव। सरि-

वन्ति ॥ सरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ॥ घृतस्यधाराऽअ भिचाकशीमिहिरण्ययोवेतसोमध्येऽअग्नेः ॥ ३८ ॥ सूचेत्त्वा ॥ कु

तोन यथासरितोनद्यः समुद्रमभिस्रवन्ति। काः स्रवन्ति। धेनाअन्नानि। अन्नं वै धेनाइति श्रुतेः। अन्तर्हृदामनसापूयमानाः यजमानसम्बन्धिना अन्तर्व्यवस्थितेन हृदामनसा। हृद-यप्रतिष्ठितेन मनसापूयमानाः पवित्रीक्रियमाणाः। अन्तर्वैहृदयेनमनसासतान्नं पूतं यद्गुः। यजमानोमनो वाक्काय कर्म्मभि रेकवृत्तिः। नकेवलं धेनाः स्रवन्ति। किन्तर्हि। घृत-

(१) का० मुखेकरोतिसम्यक्स्रवन्तीत्ति १७। ५। ७। सम्यगित्तिमन्त्रेणपञ्चपशूनां मुखेएकैकंहिरण्यशकलं क्षिपतीतिसूत्रार्थः। हिरण्मयपुरुषोद्देशेनायंमन्त्रः।

शु० य० सं० २०६ भा०

स्वधारा: स्रवत्य: अहम् अभिचाकसीमिपश्यामि । योयंहिरण्मय: । हिरण्मय: श्वेतस: पुरुष: मध्ये-अग्ने: निहित: । तत्रसूत्रत्योद्दतधारा: । अभिचाकसीमीतिसंबन्ध: ॥ ३८ ॥ ऋचेत्त्वा । इहति । (१) नासिकयो: प्रास्यति । ऋचेऋग्वेदायत्वांप्रास्यामीति शेष: । रुचेदीप्त्यै त्वांप्रास्यामीतिशेष: । (२) चक्षुषो: । भासे त्वाज्योतिषेत्वाम् तुल्य: शेष: । (३) श्रोत्रयो: । अभूत् इदं श्रोत्रं विश्व-

| १२अ० |
|---|

चेत्त्वांभासेत्त्वाज्ज्योतिंषेत्वा ॥ अभूंदिदंव्विश्वंस्यभुवंनस्यव्वाजिंनम ग्नेर्व्वैंश्वानुरस्यंच ॥ ३९ ॥ अग्निर्ज्ज्योतिंषा ॥ अग्गिनर्ज्ज्योतिं

स्यभुवनस्य भूतजातस्य वाजिनम् वागन्नं वाचोत्पातारम् श्रोत्रंवाहिशब्दात्ज्ञायन्ते । अग्नेर्वै-श्वानरस्यच । चशब्दात् वाजीनं वागन्नमभूत् । अयमग्निर्वैश्वानर इत्युपक्रम्यतस्यैषघोषोभ-वति । यमेतत्कर्णा वपिधायश्रृणोती त्येतदभिप्रायम् ॥ ३९ ॥ अग्निर्ज्योतिषा । उष्णिक् ।

शिवम् २०६

(१) का० नासिकयोर्ऋचेत्वेति । मन्त्राभ्यांपशूनांनसो: शकलप्रासनमित्यर्थ: ।

(२) का० अक्ष्योर्भासेत्वेति भासेत्वेतिमन्त्राभ्यांनेत्रयोस्तद्वद्धिरण्यशकलप्रासनं ।

(३) का० श्रोत्रयोर । भूदिदमिति ) कर्णयो: प्रास्यत्तिअभूदिदमग्निर्ज्योतिषेतिमन्त्राभ्याम् ।

द्वितीयमोखमुपासनमन्त्रः। अग्निरिव ज्योतिषा ज्योतिष्मान् अस्तु। रुक्मइव वर्च्चसा वर्चस्वानस्तु।
(१) ओखं पुरुषशिरउद्गृह्णाति। सहस्रदा असि। बहूनां दाता असि एवं चेत् अतः सहस्राय त्वा उद्गृ-
ह्णामि ॥४०॥ (२) पुरुषशिरउपदधाति। आदित्यं गर्भम् इतउत्तरं षट्त्रिष्टुभः। आदत्ते पशूनिति-

ष्ण्ज्ज्योतिंष्मान्त्रुक्क्मोव्वर्च्चँसाव्वर्च्चँस्वान् ॥ सुहस्रुदाऽअंसिसुहस्राँ

यत्त्वा ॥४०॥ आदित्यङ्गर्ब्भम्पयंसासमंङ्धिसुहस्रंस्यप्रतिमांव्विश्वरूं

पम् ॥ परिंवृङ्धिहरंसामाभिमंॅस्थाः शतायुंषङ्कणुहिचीयमानः ॥

आदित्यः। आदित्यइवाईष्टे सर्वेषां पशूनामिति आदित्यः। गृह्णाति पशूनिति गर्भः। चित्योऽ-
ग्निरुच्यते। आदित्यं गर्भं पयसा दुग्धेन समङ्धि। समञ्जयसि। पुरुषमपि दधातीत्येतदभिप्रा-
यम्। सहस्रस्य प्रतिमाम्। बहुनः प्रतिमाभूतम् विश्वरूपं सर्वरूपम्। सर्वाणि हि रूपाण्या-
दित्यस्य आदित्यावच्चायं स्तूयते। परिवृङ्धि हरसा। परित्यज एनं हरसा। वीर्यापहारकं-

(१) का० सहस्रदा इति पुरुषशिरउद्गृह्णमध्ये १७।५।११। पुरुषशिर आदाय ओखामध्ये वक्ष्यमाणमन्त्रेणोपदधातीति सूत्रार्थः।
(२) का० आदित्यं ग। र्भमिति प्रतिमन्त्रं क्रमेण १७।५।१७। पुरुषादीनां शिरसि पञ्चमन्त्रक्रमेणैकैकमुपदधातीति सूत्रार्थः।

ज्योतिरग्नेहर इत्युच्यते। माभिमंस्थाः अभिपूर्वोमनिर्हिंसार्थः माहिंसीः। सर्वथा शतायुषं-

शु० कृणुहि चीयमानः ॥ ४१ ॥ अश्वमुपदधाति। वातस्य जूतिम्। जूतिर्गतिः प्रीतिर्वा। १३अ०

य० वातस्यगतिभूतं प्रीतिजनकं वा। वरुणस्य नाभिम् वरुणस्य नाभिमिवान्तरम्। अश्वञ्जज्ञानं

सं० सरिरस्य मध्ये। अश्वञ्जज्ञानं यजमानं सरिरस्योदकस्य मध्ये। शिशुम् पुत्रम् नदीनां

२०७ ४१ ॥ व्वातस्यजूतिं ॥ व्वरुणस्यनाभिमश्वञ्जज्ञानᳪसरिरस्यमध्ये॥

उ० शिशुन्नदीनाᳪहरिमद्रिबुध्नमग्नेमाहिᳪसीःपरमेव्योमन् ॥४२॥

भा० अजस्रमिन्दुम् ॥ अजस्रमिन्दुमरुषम्भुरण्युमग्निमीडेपूर्व्वचित्तिन्न

हरितवर्णम्। अद्रिबुध्नम्। अद्रिःपर्वतः तस्यबुध्नमादिः तत्रभवा आपः अद्रिबुध्न्याः। इहतु शिवम्

अद्भ्योजातोऽश्वो मत्वर्थप्रत्यय लोपादद्रिबुध्न शब्देनोच्यते। प्रकरणात् हे अग्ने चित्य। माहिंसीः २०७

मावधीः। परमेव्योमन् निषीदन्तम्। इमेवैलोकाः परमं व्योमेत्यधिलोकं व्याख्यातम्॥४२॥

गामुपदधाति। अजस्रम्। यस्य तव संस्कारार्थम् अजस्र मनुपक्षीणम् इन्दुं सोमञ्चन्द्रमसम्

अरुषम् अरोचनम् भुरण्युम् भर्त्तारं वाहदोहादिभिः अग्निम् आग्नेयम् तद्धितलोपः। ईडे। याचामि उपधानाय। पूर्वचित्तिम् प्राक्चयनम्। प्राचंह्यग्निमुद्धरन्तीति। अग्न्यध्यासेनगो-स्तुतिः। नमोभिरन्नै रभ्युद्यतैः सत्वमेताभिः पर्वेष्टकाभिः पर्वभिः पश्चिष्टकाभिः ऋतावृतौ। कल्पमानः गाम्माहिंसीः। अदितिमदीनां विराजम् तस्यैरष्टतन्तस्यैव सरं इत्यादि दशवीर्याभि-

मोभिः ॥ सपर्वभिर्ऋतुशः कल्पमानो गाम्मा हिंसीरदितिं विराजाम् ॥ ४३ ॥ वरूत्रीन्त्वष्टुः ॥ वरूत्रीन्त्वष्टुर्वरुणस्य नाभिमविं जज्ञानां रजसः परस्मात् ॥ महीं साहस्रीमसुरस्य मायामग्ने माहिंसीः परमे व्योमन् ॥ ४४ ॥ योऽअग्निः ॥ योऽअग्निरग्नेरध्यजा

यत ॥ ४३ ॥ अविमुपदधाति। वरूत्रीम्। वरान्वृणोतीति वाकम्बलादिना आच्छादयति। त्वष्टुः वरुणस्य च नाभिम्। नहनम्। वारुणीच हित्वाष्टीचाविरितिश्रुतिः। अविंजज्ञानां यजमानानां रजसः परस्मात्। अोकं वैपरं रजोदिशोवैअोकं दिशः परं रजइतिश्रुतिः महीं

महतीम् साहस्रीं सहस्रोपकारक्षमाम्। असुरस्य असुवतः प्राणवतः प्रज्ञानवतो वावरुणा-स्यमायाम् प्रज्ञाम् हे अग्ने माहिंसीः। परमेव्योमन्निति व्याख्यातम् ॥ ४४ ॥ अजमुपदधाति। योऽग्निः। यः अजः अग्निः अग्नेः अधिसकाशात् अजायत उत्पन्नः। शोकात्पृथिव्या अधि अजायत। उतवादिवस्परि। अपिचदिवोधि अजायत। यद्वै प्रजापतिः शोकादजायतद्वै दि-

यत्शोकात्पृथिव्याऽउतवांदिवस्परिं ॥ येनंप्रजाविश्वकर्म्माजजा नतमंग्नेहेडुंपरितेवृणक्तु ॥४५॥ चित्रन्देवानाम् ॥ चित्रन्देवाना मुदंगादनीकञ्चक्षुर्म्मित्रस्यवरुंणस्याग्नेः ॥ आप्राद्यावांपृथिवीऽअ न्तरिंक्षु सूर्य्यंआत्माजगंतस्तस्थुषंश्च ॥ ४६ ॥ [ ९ ] इमम्मा ॥

वस्त्र पृथिव्येव शोकादजायतेतिश्रुतिः। येनाजेनप्रजाः विकर्मा प्रजापतिः जजानजनितवान्। वग्ग्रा अजोवाचोवैप्रजाविश्वकर्माजजानेतिश्रुतिः। तमज हे अग्ने हेडः क्रोधः परिवृणक्तुपरिवर्जयतु तेतवसंबन्धो ॥ ४५ ॥ (१) चित्रन्देवानाम् इतिमेव्याख्यातम् ॥ ४६ ॥ अथपञ्चपशूनांशुचोत्सर्गः

(१) का० चित्रं देवानामित्यर्धर्चेश्च स्रुवाहुतीमध्यमें। अर्द्धर्चद्वयेनपुरुषशिरस्याहुति द्वयं जुहोतीत्यर्थः।

(१) इमं माहिंसी: । पञ्चविंष्टभोद्वावसाना उत्तराणियजूंषि । पुरुषस्योत्सृजति । इमंपुरुषंमाहिंसी: शुचा । द्विपादम्पशुम् । द्विपोद्वाएषपशुर्यत्पुरुषः । सह स्राक्षः सन् हिरण्मयशकलैर्वाएषसहस्राक्षः मेधाययज्ञाययन्नायवा । चीयमानः चयनेन संस्क्रियमाणः । मयुंपशुंमेधम् हेअग्ने जुषस्व ।

हिंᳬसीर्द्वि पादम्पशुᳬसहस्राक्षोमेधायचीयमानः ॥ मयुम्पशुम्मेधंम ग्नेजुषस्वतेनंचिन्वानस्तन्वोनिषीद ॥ मयुन्तेशुगृच्छतुयन्द्विष्म स्तन्तेशुगृच्छतु ॥ ४७ ॥ इमम्मा ॥ हिंᳬसीरेकंशफम्पशुङ्कनिक्रदं व्वाजिनम्व्वाजिनेषु ॥ गौरमारण्यमनुतेदिशामितेनंचिन्वानस्तन्वो

किंपुरुषोवैमयु: । तेनकिंपुषेणचिन्वानः । तन्वोनिषीदआत्मानं संस्कुरुष्व । इतउत्तरंयजुः । मयुन्तेतवशुक्सन्तापः ऋच्छतु । किञ्च । यंपुरुषंवयंद्विष्मः तंचतवशुक्ऋच्छतुहिनस्तु ॥ ४७ ॥

(१) का० वह्निवेद्युदङ्तिष्ठन् पतिष्ठत उत्सर्गैरिमम्माहिᳬसीत्तिप्रतिमन्त्रम् । १७ । ५ । १८ । अग्नेरुत्तीर्यवेदेर्वहिर्दीक्षणे उदङ्मुखस्तिष्टन्निमम्मेतुरुत्सर्गं संज्ञैः पञ्चमन्त्रैः पुरुषादि शिरांस्युपति ष्ठतेऽध्वर्युः । एकपशुपचेतमेव पञ्चभिरितार्थः ।

अथाश्वस्य। इमंमाहिंसीः एकशफंपशुम् एकशफोवाएषपशुर्यदश्वः। कनिक्रदम अत्यर्थं क्रन्दितारम् वाजिनं वेगवन्तम् वेगवत्सुमध्येव्यवस्थितम्। गौरम् गौरमृगम् अनुदिशामितेतव। तेनचिन्वानइति व्याख्यातम् ॥ ४८ ॥ अथगोः। इमंसाहस्रम। इमङ्गांसाहस्रम् सहस्रार्हम् शत-धारमुत्सम् उत्सः कूपः। बहुस्रोतसमिवकूपम् उपकारकम् वाहदोहादिभिः व्यच्यमानं सरि-

निषीद ॥ गौरन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४८ ॥ इमꣳ साहस्रम् ॥ इमꣳसाहस्रꣳशतधारमुत्संव्यच्यमानꣳसरिरस्यमध्ये॥ घृतन्दुहानामदितिञ्जनायाग्नेमाहिꣳसीःपरमेव्योमन् ॥ गवयमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद ॥ गवयन्तेशुगृच्छतु

रस्यमध्ये। विविधमच्यमानमुपजीव्यमानम् सरिरस्यमध्ये। इमेवैलोकाःसरिर मित्यादिश्रुतिः। घृतं दुहानाम अदितिमदीनाम् जनायमनुष्येभ्योऽर्थाय। पुंलिङ्ग स्त्रीलिङ्गाभ्यां मन्त्रेगौः स्तूयते। अग्नेमाहिंसीरित्यादिव्याख्यातम् ॥ ४९ ॥ अथावेः। इममूर्णायुम्। इमम् ऊर्णा-

युम ऊर्णावन्तम्। वरुणास्यनाभिम् वरुणसन्तनम् अपत्यम् त्वचं पशूनां द्विपदाञ्चतुष्पदाञ्च। उभयरूपाणां पशूनां त्वग्रक्षणं करोति कम्बलादि नेत्याशयः। किञ्च। त्वष्टुः प्रजानां प्रथमं जनित्रम्। एतच्चत्वष्टा प्रथमं रूपं चकारेतिश्रुतिः। जनित्रञ्जनम्। व्याख्यातमन्यत्॥ ५०॥

यन्हिंषम्मस्तन्तेशुगृच्छतु॥ ४९॥ ऊर्णमूर्णायुं॥ वरुणस्यनाभिन्त्वचम्पशूनान्द्विपदाञ्चतुष्पदाम्॥ त्वष्टुःप्रजानाम्प्रथमञ्जनित्रमग्नेमाहिंसीःपरमेव्योमन्॥ उष्ट्रमारण्यमनुतेनिशामितेनचिन्वानस्तन्वोनिषीद॥ उष्ट्रन्तेशुगृच्छतुयन्हिंषम्मस्तन्तेशुगृच्छतु॥ ५०॥ अजोहि॥ अजोह्यग्नेरजनिष्टशोकात्सोऽअपश्यज्जनितारमग्रे॥

अथाजस्य। अजोहि। यः यजः अग्नेः अजनिष्टजातः। शोकात्सन्तापात्। यद्वै प्रजापतेः शोकादजायततदग्नेः शोकादजायत इतिश्रुतिः। हिशब्दः पादपूरणः। सः अपश्यत् जनिता

रञ्जनयितारं प्रजापतिम्। अग्रे प्रथमम् यथासौ द्रष्टव्यः। तेनचदेवा इन्द्रादयः। देवता-मग्रमायन् नायन्देवात्तलितिस्वार्थिकः। किन्तर्हि। तस्य भावस्त्वतलाविति भाव प्रत्ययः षष्ठ्यर्थे चेयं द्वितीया देवत्वस्याग्रमायन्निति शब्द प्रकरणात्। तेनैवाजेन रोहं स्वर्गम् अयन् उपा-गच्छन्तु। मेधग्रासः यज्ञे यादेवाः। लोकप्रसिद्धाः शरभादयोव्याख्येयाः॥ ५१॥ (१) चित्योपस्था-



तेनं देवा देवतामग्ग्रंमायँस्तेनुरोहंमायन्नुपमेद्ध्यासः ॥ शुरभमारु यमनुं तेदिशामितेनं चिन्न्वानस्तुन्न्वोनिषीद ॥ शुरभन्तेशुगृंच्छतु यन्द्विष्मस्तन्तेशुगृंच्छतु ॥ ५१ ॥ त्वंय्यंविष्ठ ॥ दाशुषोनॄँ ऽ पाहिशृ

नम्। त्वं यविष्ठ। गायत्र्याग्नेय्यनिरुक्ता। त्वंहे यविष्ठयुवतम। यद्वा युमिश्रणे। अतिशयेन मिश्रयितृतम। दाशुषः दत्तवतोहवींषियजमानस्य नॄन्मनुष्यान् पाहिपालय। शृणु-धिच गिरः स्तुतिलक्षणावाचः। किञ्चरक्षातोकम पत्यम्। उतत्मना। अपिच आत्मानं



(१) का० एतग्रचत्वं यविष्ठेतिचित्योपस्थानम्। १७। ६। १। बहिर्वेदेरागतग्राग्निसमीपेऽर्धचित्यमुपतिष्ठते।

रच्चेति । ऋत्वृत्त्रोव्यत्यय: ॥ ५२ ॥ (१) पञ्चदशच्छन्दस्याः पञ्चदशभि र्यजुर्भि रुपदधाति । अपां

गृधीगिरः ॥ * रच्चातोकमुतत्मना ॥ ५२ ॥ [ ६ ] अपान्त्वा ॥ अ

पान्त्वेमन्त्सादयाम्म्युपान्त्वोद्मन्त्सादयाम्म्युपान्त्वाभस्मन्त्सादयाम्यु

पान्त्वाज्ज्योतिषिसादयाम्म्युपान्त्वायनेसादयाम्म्यर्णवेत्त्वासदनेसा

दयामिसमुद्रेत्त्वासदनेसादयामिसरिरेत्त्वासदनेसादयाम्म्युपान्

त्वेमन्सादयामि । ऋत्वत्त्रान्यभिधेयानि । † अपांत्वाएमन् । ‡ सम्मथ्यालुक् । एमनि । दूणगतौ ।

(१) का० अपरेण स्वयमातृण्णामेतत्रापस्याः पञ्चपञ्चानूकान्ते ष्वपान्त्वे मन्निति प्रति मन्त्रम् । १७ । ६ । २ । तीर्थे नाग्निमारुह्य-
स्वयमातृण्णामपरेण पूर्वानूकान्तमेतत्र चतुर्ष्वप्यनूकान्ते ष्वपान्त्वं मन्नितिप्रतिमन्त्रं पंचपंचापस्यास्या इष्टका उपदधातीति ।
सूत्रार्थः ।

---

* पिबासोमं पिबासुतस्येत्यादि सूत्रेण ग्रणुधीगिरः इतात्र रच्चातोकमित्यत्रचदीर्घः । प्राति० अ० ३ । सू० १३० ।

† त्वा एमन् त्वा ओद्मनिताच संहितायां समुद्रस्येमँस्त्वेमँस्त्वोद्मन्नितिचेतिसूत्रेण एकादेशो निपात्यते । प्राति० अ० ४ । सू ५५ ।

‡ एमनीति प्राप्ते संहितायां निशब्दोबहुलमितिसूत्रेण क्वचिदिकारमात्रस्य लोपोभवति प्राति० अ० ३ । सू० १८ ।

अस्य मनिप्प्रत्ययान्तस्यै तद्रूपम्। वायुर्वा अपासेमन्। वायौतांसादयति। अपांत्वाञ्चोद्मन्। उन्दीक्लेदने। ओषधयो वा अपामोद्मन् तुल्यव्याख्यानमन्यत्। भस्मन्। भषभर्त्स्नदीप्त्योः। अभ्रं वा अपांभस्मन्। ज्योतिषि। विद्युद्वा अपाञ्ज्योतिः। अयने। इयं पृथिवी अपामयनम्।

त्वाक्षयेसादयाम्यपान्त्वासधिषिसादयाम्यपान्त्वासादनेसादयाम्यपान्त्वासधस्थेसादयाम्यपान्त्वायोनौसादयाम्यपान्त्वापुरीषेसादयाम्यपान्त्वापाथसिसादयामिगायत्रेणत्वाच्छन्दसासादयामित्रैष्टुभेनत्वाच्छन्दसासादयामिजागतेनत्वाच्छन्दसासादयाम्यानुष्टुभेनत्वाच्छन्दसासादयामिपाङ्क्तेनत्वा छन्दसासादया

अर्णवे। प्राणोवा अपामर्णवः। समुद्रे। मनोवैसमुद्रः। सरिरे। वाग्वैसरिरम्। क्षये। चक्षुर्वा अपांक्षयोनिवासः। सधिषि। श्रोत्रं वा अपांसधिः। सदने द्यौर्वा अपांसदनम्।

सधस्थे। अन्तरिक्षम् वा अपांसधस्थम्। योनौ। समुद्रो वा अपांयोनिः। पुरीषे। सिकता वा अपांपुरीषम्। पाथसि। अन्नं वा अपांपाथः। अन्नेतांसादयति। पञ्चच्छन्दस्याः पञ्चभिर्यजु-र्भिरुपदधाति गायत्रेणत्त्वाच्छन्दसासादयामीत्यादि ॥ ५२ ॥ प्राणभृताः पञ्चाशदिष्टका उप-दधाति। पञ्चाशद्भिर्यजुर्भिः। अयंपुरोभुवः। अग्निर्वै पुरः। तद्यत्तदाहपुर इत्यादिनिर्वचनम्।

मि ॥ ५२ ॥ अयम्पुरः ॥ अयम्पुरोभुवस्तस्यंप्प्राणोभौवायनोव्वंसन्तःप्प्राणायनोगायत्त्रीव्वासन्तीगायत्र्यैगायत्त्रङ्गायत्राद्दुपा०ं शुरुपा०ंशोस्त्रि वृत्त्रिवृतोरथन्तरंव्वसिष्ठऽऋषिःप्प्रजापतिगृहीतयात्त्वया

तस्यप्राणः अपत्यम् भौवायनः वसन्तः ऋतुः। प्राणायनः प्राणस्यापत्यम् नडादित्वात्फक्। गायत्री वासन्ती गायत्रीच वसन्तस्यापत्यम्। गायत्रीगायत्रम्। गायत्र्याः सकाशाद्गायत्रम् सामनिरमिमीत। गायत्राद् पांशुः। गायत्रात्साम्न उपांशुङ्ग्रहं निरमिमीत। उपांशोः त्रिवृत्। उपांशोर्ग्रहात् त्रिवृत् स्तोमं निरमिमीत। त्रिवृतोरथन्तरम्। त्रिवृतस्तोमात्रथन्तरं पृष्ठन्नि-

रश्मिमीन्न। वसिष्ठऋषिः। प्राणोवैवसिष्ठऋषिः। प्रजापतिगृहीतयात्वया। गृह्णाति सृज-तिवचनः। प्रजापति सृष्टयात्वया। प्राणं गृह्णामि प्रजाभ्यः। अथ पुरोभुव इत्यादिभिर्दशभि-र्मंत्रैः प्राणमेवैकमविशेषेणगृह्णामि। प्रजाभ्यो विशेषेणावस्थितम् ॥ ५४ ॥ अथदक्षिणतः।

प्प्राणङ्गृह्णामिप्प्रजाब्भ्यः ॥ ५४ ॥ अयन्दक्षिणा ॥ व्विश्वकर्म्मातस्यमनोव्वैश्वकर्म्मणङ्ग्रीष्ष्मोमानसस्त्रिष्टुब्ग्रैष्ष्मीत्त्रिष्टुभः स्वारथंस्वारादन्तर्य्यामोन्तर्य्यामात्पञ्चदशः पञ्चदशाद्बृहद्भरद्वाजऽऋषिःप्प्रजापतिगृहीतयात्वयामनोगृह्णामिप्प्रजाब्भ्यः ॥ ५५ ॥ अयम्पु

अयंदक्षिणाविश्वकर्मा। अयंवैवायुर्विश्वकर्मायोयम्पवते। एषहीदं सर्वं करोमि तद्यत्तमाह दक्षिणेति तस्मादेषदक्षिणैवभूयिष्टं वात्यायीवर्त्तात्। तस्य मनोवैश्वकर्मण इत्यादि तुल्यव्याख्या-न ञ्वतरत्त्र्यपिकण्डिकासु ॥ ५५ ॥ अथ पश्चात्। अयंपश्चाद्दिशव्यचा। असौवा आदित्यः-

विश्वव्यचा। यदाह्येवैषउदेति अथेदं सर्वंव्यचाभवति तद्युक्तमाह। पश्चादितिदिग्निर्देशः ॥ ५६ ॥

पश्चात्॥ *अयम्पश्चाद्विश्वव्यचास्तस्यचक्षुर्वैश्वव्यचसंवर्षाश्चा
क्षुष्योजगतीवार्षीजगत्याऽऋक्सममृक्समाच्छुक्रः शुक्रात्सप्तदशः
सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्रजापतिगृहीतयात्वयाचक्षुर्गृह्णा
मिप्रजाभ्यः ॥ ५६ ॥ इदमुत्तरात्॥ इदमुत्तरात्स्वस्तस्यश्रोत्रंसौ
वंशरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभऽऐडमैडान्मन्थीमन्थिनऽएकविंशऽ
एकविंशाद्वैराजंविश्वामित्रऽऋषिः प्रजापतिगृहीतयात्वया

अथोत्तरतः। इदमुत्तरात्स्वः। दिशोवाउत्तरातद्यत् तस्माद्धोत्तरादित्युत्तरात्तद्ध्येतद्धात्सर्वस्माद्दिशः।

---

* पश्चात्प्रतीचीं दिशमञ्चतिगच्छतीतिपश्चात् प्रतीचीगमनशीलो विश्वं उदितः सन्प्रकाशयतीतिविश्वव्यचाआदितो-यंप्रसिद्धस्तद्रूपांसा॰ विश्वव्यचसइदंवैश्वव्यचसम्।

अथयत्स्वरित्याह। स्वर्गोह्विलोकोदिशः॥५७॥ अथमध्ये। इयमुपरिमितिः। चन्द्रमावा-
उपरितद्यत्तमाहोपरीतिउपरिहिचन्द्रमा। अथयन्मतिरित्याह। वाग्वैमतिः। समानंव्याख्या-

स्रोचंङ्गृह्णामिप्प्रजाब्भ्यंः॥५७॥ इयमुपरिंमतिस्तस्यैवाङ्माच्च्या
हैमुन्तोवाच्च्य ऽपङ्क्तिर्हैमुन्तीपङ्क्त्यैनिधनंवन्निधनंवतऽआग्ग्रयणऽआं
ग्ग्रयणात्त्रिंणवत्रयस्त्रिंऽशौत्त्रिंणवचयस्त्रिंऽशाब्भ्यांऽशाक्करैवते
व्विश्वकंर्म्माऽऋषिंःप्प्रजार्पंतिगृहीतयात्त्वयाव्वाचंङ्गृह्णामिप्प्रजाब्भ्यो
लोकन्ताऽइन्द्रंम्॥५८॥ [५]

इतिश्रीवाजसनेयसंहितायान्त्रयोदशोऽध्यायः १३॥

नम्। लोकंतामिन्द्रमितितिस्रः प्रतीकगृहीताः। लोकंपृणाच्छिद्रंपृण। ताअस्यसूददोहसः।
इन्द्रंविश्वाअवीवृधत्॥५८॥ इतिउवटकृतौमन्त्रभाष्येत्रयोदशोध्यायः॥१३॥

द्वितीयां चितिं देवा अपश्यन् तस्यां चितौ पञ्चाश्विन्यो यजुरन्ताः। अश्विनाध्वर्यू दृष्टा आदियजुः। प्रथमा विराट्। द्वितीयाद्याश्चतस्रस्त्रिष्टुभः। (१) ध्रुवच्चितिः। या त्वं ध्रुवच्चितिः स्थिरनिवासा।

* ध्रुवक्षितिर्ध्रुवयोनिः ॥ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया ॥ उख्यस्य केतुम्प्रथमं जुषाणाऽश्विनाध्वर्यू सादयतामिह त्वा ॥

ध्रुवयोनिश्च अनश्वरस्थानाच। ध्रुवाचासि अतएव तां त्वां ब्रवीमि। ध्रुवं स्थिरं योनिं स्थानम्

त्रयोदशेऽध्याये प्रथमा चितिरुक्ता सा भूलोकरूपा। अयं वै लोकः प्रथमा चितिरिति श्रुतेः। चतुर्दशेऽध्याये द्वितीयादिचितित्रयं वक्ष्यते भूमेरूर्द्धमन्तरिक्षादर्वाग्भागो द्वितीया चितिः। एतां द्वितीयां चितिमपश्यन्यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तदेषामेष लोकः इति श्रुतेः। देवैरश्विनौ प्रार्थितौ युवां भिषजौ ततो द्वितीयां चितिमुपधत्तमिति ताभ्यामुक्तं चित्युपधाने किमावयोः फलमिति देवैरुक्तं युवां चित्युपधाने देवानामध्वर्यू भविष्यथ इति ततस्ताभ्यां द्वितीया चितिरुपहितेति श्रुत्या तेऽश्विनावन्ववन्नित्यादिकयोक्तम्। तत्रादौ पञ्चाश्विन्य इष्टकाः द्वितीयचितिमन्त्रा देवदेवत्याः।

(१) का० आश्विनीध्रुवच्चितिरिति प्रतिमन्त्रम्। पञ्चकण्डिकाभिराश्विनीसञ्ज्ञा इष्टका रेतःसिग्वेलायामुपदधाति प्रतीष्टकं नित्ये इति सूत्रार्थः।

---

* ध्रुवक्षितिः षट् सज ऋतुभिर्मूर्द्धावयोर्द्दं कावि द्राग्नोवायुर्मेषट् ध्रावाग्न्यस्त्रिवृदेकाग्नेर्भागोऽसि कयाचतुष्कावष्टावेकत्रिंशं शत।

आसीदन्नधितिष्ठ। साधुयासाधुम्। द्वितीयैकवचनस्यस्थानेया। उख्यस्याग्नेः केतुंप्रज्ञानं प्रथमसाद्यम् जुषाणासेवमाना। उख्यस्याग्नेः प्रथमंप्रज्ञानम् इयमेवप्रथमाश्चिति स्तस्याश्चोप- रिष्टान्निधीयते तस्मादेवमुच्यते। उत्तरंयजुः। किञ्च अश्विनौचाध्वर्यूसादयताम् इहरेतः सिग्वेलायाम् त्वात्वाम्। केचिच्चतुर्थमेतंपादंवर्णयन्ति त्रिष्टुभञ्च॥ १॥ कुलायिनी। कुलायं



र्य्यूसांदयतामिहत्वां॥ १॥ कुलायिनींघृतवंती॥ कुलायिनींघृतवं तीपुरंन्धिःस्योनेसीदसदंनेपृथिव्याः॥ अभित्वांरुद्रावसंवोगृणन्तु माब्रह्मंपीपिहिसौभंगायाश्विनांध्वर्यूसांदयतामिहत्वां॥ २॥



गृहं तदाकाराकुलायिनी। साहिरेतः सिग्वेलायामिष्टकाभिरुपहिताभिर्गृहाकाराभवति। घृतवतीभविष्यतायोगेन। इहहिवसोर्द्धारादयआहुतयः होष्यन्ते। पुरंधिः। बह्वीहि इष्टका- जातमियंधारयतिचितिसंबद्धम्। यात्वमित्थंभूतातांत्वांब्रूमः। स्योनेसीदसदनेपृथिव्याः। सुखरूपे उपविशस्थानेपृथिव्याः किञ्च। अभित्वा। अभिगृणन्तु त्वांरुद्रादयः। किञ्च। इमां। इमा-

निवर्त्ताणि पीपिहिआप्यायस्व। सौभगायमहते ऐश्वर्याय। अश्विनेतिव्याख्यातम् ॥ २ ॥
स्वैर्दक्षैः। स्वैर्वीर्यैः। दक्षपिता वीर्यस्यपालयित्रीसती इहद्वितीयायांचितौसीद अवस्थानं-
कुरु। दक्षशब्दइहवीर्यवचनः। प्रयोजनमाह। देवानांसुम्ने सुखाय। कथंननाम देवाः
सुखंप्राप्नुयुरिति। बृहतेरणाय। महतेचरमणीयाय। यज्ञक्रतवे। किञ्च। पितेवेधिसूनवे।

स्वैर्दक्षैः॥ स्वैर्दक्षैर्दक्षपितेहसीददेवानांꣳसुम्नेबृहतेरणाय॥ पिते
वैधिसूनवआसुशेवास्वावेशातन्वासंविशस्वाश्विनाध्वर्यूसादय
तामिहत्वा॥ ३॥ पृथिव्याःपुरीषम्॥ पृथिव्याःपुरीषमस्यप्सोना
मतान्त्वाविश्वेअभिगृणन्तुदेवाः॥ स्तोमपृष्ठाघृतवतीहसीदप्र

पिताइवभद्रपुत्राय। आसुशेवा। मर्यादयासाधु सुखयित्री। किञ्च स्वावेशा। स्वावेशेतिवि-
भक्तिव्यत्ययः। स्वावेशया। तन्वाआत्मनासंविशस्व। अवस्थानंकुरु। अश्विनाध्वर्यू। उक्तार्थः॥ ३॥
पृथिव्याः पुरीषम्। यात्वंपृथिव्याः प्रथमायाश्चितेः पुरीषमिवासि। पृथिवीवैप्रथमाचितिः तस्या-

शु० य० सं० २१५ उ० भा०

एतत्पुरोषमिव य द्वितीयेतिश्रुतिः। अप्सोनाम रसोनाम। अप्सइति रसपर्य्यायंदर्शयति। अप: स-नोतीत्यप्सः। अपांहिरसोगुणः। तस्यवा एतस्ययजुषोरसएवोपनिषदित्येतच्छ्रुतिर्दर्शयति। तां-त्वासुपधीयमानां विश्वेदेवाअभिगृणन्तु अभिष्टुवन्तु। त्वमपिचस्तोमपृष्ठाघृतवतीचइहसीद्देति-यस्यांचितौ। यांस्तोमस्यान्तर्हं समानोभवति तैरेषास्तोमपृष्ठाघृतवतीचवसोर्द्धारादिभिर्होमैः।

**जावंदुरस्मैविणायंजस्वाभिश्वनांदूवुस्यूंसांदयतामिहत्वा॥४॥ अदि-त्यास्त्वा॥ पृष्ठेसांदयाम्यन्तरिक्षस्यधुर्त्रीं विष्टम्भनींन्दिशामधि-पत्नीम्भुवंनानाम्॥ ऊर्म्मिर्द्रुप्सोऽअपामंसिविश्वकंर्म्मातुऽऋषिं**

ततः। प्रजावदस्मे द्रविणायजस्व। प्रजासंयुक्तानि अस्मभ्यंद्रविणानिदेहि। यजतिर्दानार्थः। शेषमुक्तम्॥४॥ आदित्यास्त्वा। यात्वम् ऊर्मिः कल्लोल राशिः द्रप्सः रसः अपामसि। यस्यास्तवतेतव विश्वकर्मा प्रजापति ऋषिर्द्रष्टा। तान्त्वाम् अदित्याः पृथिव्याः पृष्ठेप्रथमायाश्चिते-रुपरिसादयामि। कथंभूतामित्यतआह। अन्तरिक्षलोकस्य धारयित्रीम् विष्टंभनीं संस्तंभनीम्

१४अ० शिवम् २१५

अन्तरिक्षस्यैव । दिशामधिपत्नीम् । दिशामीशिनीम् भूतजातानांच । शेषंसमानोदर्कम् ॥ ५ ॥

दृभिश्चनान्दृह्य स्यूँसादयतामिहत्वा ॥ ५ ॥ शुक्रश्च ॥ शुक्रश्चशुचि

श्चग्रैष्म्मावृतूऽअग्नेरन्तःश्लेषोसिकल्प्पेतान्द्यावापृथिवीकल्पन्ता

मापऽओषधयःकल्प्पन्तामग्नयःपृथङ्ममज्ज्यैष्ठ्याय सव्व्रताः ॥ येऽ

अग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ ग्रैष्म्मावृतूऽअभिकल्पप

मानाऽइन्द्रमिवदेवाऽअभिसंव्विशन्तुतयादेवतयाङ्गिरस्वद्धुवेसीद

तम् ॥ ६ ॥ [ ६ ] सजूर्ऋतुभिः ॥ सजूर्व्विधाभिःसजूर्देवैःसजूर्देवैर्व्वै

ऋतव्यउपदधाति । (१) शुक्रश्चशुचिश्च व्याख्यातम् ॥ ६ ॥ वैश्वदेवीरुपदधाति । विश्वेषान्देवाना-

(१) का० शुक्रश्च शुचिश्चेतऋतव्ये पूर्वयोरुपरि । प्रथमचितुरपहितयोर्ऋतव्ययोरुपरि द्वे ऋतव्ये पद्ये प्राग्लक्षणे अनूकमभित उदङ्मुख उपदधाति शुक्रश्च शुचिश्चेति प्रतीकमुपधाय । ग्रैष्मावृतू इति मन्त्रशेषो हि अप्यालभ्य पठ्य इति सूत्रार्थः ।

मोर्षम्। (१)सजूर्ऋतुभिः। यथा समानजोषणाः ऋतुभिः प्रजापतिर्भूत्वाइष्टकाउपहितवान्। यथाच समानजोषणाः विधाभिः। आपोवैविधाः। अद्भिर्हीदंसर्वंविहितम्। यथाच समान-





योनाधैरग्नयेत्वावैश्वानरायाश्विनावध्वर्यूसादयतामिहत्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नयेत्वावैश्वानरायाश्विनावध्वर्यूसादयतामिहत्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूरुद्रैः सजूर्देवैर्वयोनाधैरग्नयेत्वावैश्वानरायाश्विनावध्वर्यूसादयतामिहत्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैरग्नयेत्वावैश्वानरायाश्विनावध्वर्यूसादयतामिहत्वा



जोषणोदेवैः। यथाच समानजोषणाः देवैर्वयोनाधैः। प्राणावैदेवावयोनाधाः। प्राणैर्हीदं-

(१) का० वस्वदेवीःसजूर्ऋतुभिरिति प्रतिमन्त्रम्। पञ्चमन्त्रैः पञ्च वैश्वदेवीसंज्ञा इष्टकाः पूर्वादिषूपदधातीत्यर्थः।

सर्वंयुनं नह्यम् अथोछन्दांसि वैदेवावयोनाधा: । छन्दोभिर्हीदंसर्वंप्रच्छानंनह्यम् । एवमहमपि एताभिर्देवताभि: समानप्रीतिर्भूत्वा उपदधामि । अग्नयेवैश्वानरायत्वाम् । संवत्सरोवा अग्नि-वैश्वानर: । अश्विनौच अध्वर्यू सादयतामिहत्वाम् । एवमुत्तरेष्वपिमन्त्रेषु वसुरुद्रादित्यविश्वेदेवा

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ ७ ॥ प्राणम्मे ॥ पाह्यपानम्मे पाहि व्यानम्मे पाहि चक्षुर्म्म उर्व्या विभाहि श्रोत्रम्मे श्लोकय ॥ अपः पिन्वौषधीर्ज्जिन्व द्विपादव चतुष्पात्पाहि दिवो वृ

योज्या:॥७॥प्राणभृत उपदधाति । (१)प्राणंमेपाहि । गोपाय । अपानंमेपाहि । व्यानंमेपाहि चक्षु-र्मेउर्व्याविभाहि । विभावय । श्रोत्रंमेममश्लोकय । श्लोकइतिवाग्नामसुपठितम् । श्लोकंपाहि

(१) का० प्राणभृत: प्राणं मइति । पञ्चयजुर्भि: प्राणभृत्सञ्ज्ञका: पूर्वादिषूपदधाति १७ । ८ । २० । पंच वायुदेवतानि यजूंषि । प्राणो वायुर्वायुमेवास्मिन्न तद्दधातीति श्रुतिः ।

श्रोत्रं कुरु। अपस्याउपदधाति। अपः पिन्व। पिन्वतिः सेचनार्थः। ओषधीर्जिन्व। जिन्वतिः प्रीतिकर्मा। द्विपादव। द्विपादमितिविभक्तिव्यत्ययः। अवगोपाय। चतुष्पात्पाहि। चतुष्पादं-गोपाय। दिवोवृष्टिमेरय। द्युलोकात्वृष्टिम् आईरय। आगमय॥ ८॥ वयस्या उपदधाति।

ष्टिमेरय॥ ८॥ [ २ ] मूर्द्धा व्वयः प्रजापतिश्छन्दः क्षत्रं व्वयो मयन्दं छन्दो विष्टम्भो व्वयोधिपतिश्छन्दो विश्वकर्म्मा व्वयः परमेष्ठी छन्दो बस्तो व्वयो विबलं छन्दो वृष्णिर्व्वयो विशालं छन्द ऽ पुरुषो व्वयस्तन्द्रं छन्दो व्याघ्रो व्वयो नाधृष्टं छन्दः सिᳪ हो व्वयश्छदिश्छ

अत्रश्रुत्युक्तं निदानम्। प्रजापतेर्विस्रस्ता त्पशवउदक्रामन् छन्दांसिभूत्वा तान्गायत्रीभूत्वा वयसाप्नोत्प्रजापतिः। (१) मूर्द्धावयः प्रजापतिश्छन्दः चतुर्भिर्मन्त्रैः गायत्रीरूपः प्रजापतिः कल्प्यते।

(१) का० वयस्याः पंच पंचानूक्रान्तेषु मूर्द्धा वय इति प्रतिमन्त्रं चतस्रः पुरस्तात्। दक्षिणोत्तरपश्चिमेष्वनूक्रान्तेषु पंच-पंच पूर्वं तुचतस्रो वयस्यासञ्ज्ञका उपदधातेत्येकोनविंशतिमन्त्रैरितत्यर्थः।

मूर्द्धाप्रजापतिः प्राधान्यात्। वयः शरीरावस्था। प्रजापतिः स्वयमेवछन्दः। क्षत्रं वयः। प्रजापतिर्वै क्षत्रम्वयोभवत्। मयन्दच्छन्दः अनिरुक्तत्वात्प्रजापतिः। मयंसुखं ददातीतिमयन्दः। विष्टंभोवयः। प्रजापतिर्विष्टंभः। सर्व्वोदंसर्वंविष्टभ्नोति। अधिपतिश्च्छन्दः। प्रजापतिर्वाअधिपतिः। विश्वकर्मावयः। प्रजापतिर्वै विश्वकर्मा। परमेष्ठीछन्दः। आपोवै प्रजापतिपरमेष्ठी।

न्दः पष्ठवाड्वयो बृहतीच्छन्दऽउक्षाव्वयः ककुप्छन्दऽऋषभोव्वयः स तोबृहतीच्छन्दोनड्वान्व्वयः ॥ ९ ॥ अनड्वान्व्वयः ॥ पङ्क्तिश्छन्दोधे र्न्वयोजगतीच्छन्दस्त्र्यविर्व्वयस्त्रिष्टुप्छन्दोदित्यव्वाड्वयोव्विराड्छ

अपमष्टावयवो गायत्रीरूपः प्रजापतिः पञ्चदशवच्यमाणान्पशून्गृह्णाति। वयसा वयोवस्थया-जरया। अस्माज्जीर्णपशुं वयसाप्त इतिश्रुतिः। वस्तोवयो विवलञ्छन्दः। वस्तः पशुः विवलंछन्दोरूपमाश्रित्यो दक्रामत् तंप्रजापतिर्गायत्रीरूपोवयसाप्नोत् एकपदावै विवलंछन्दः तन्निविधं वरमुत्कृष्टम्। पुरुषसंबन्धिहितच्छन्दः। एवमुत्तरेष्वपि मन्त्रेषुयोज्यम् दृष्टिर्वि-

योविशालं छन्दः। इष्टिंमेषं वयसाविवत्तं विशालंद्विपदाछन्दश्चाप्नोति। पुरुषोवयस्तन्द्रं-छन्दः। तन्द्रंछन्दः पंक्तिः। व्याघ्रोवयोनाधृष्टंछन्दः विराड्वा। अनाधृष्टंछन्दः। सिंहोवयः छदिश् छन्दः। अतिछन्दावैछदिः छन्दः अथातोनिरुक्तानिवपशून्निरुक्तानि छन्दांस्यभिदधाति। पष्ठवाड्वय इत्यादिदश निगदव्याख्याता: ॥ ९ ॥ १० ॥ तृतीयांचिति मिद्राग्नीविश्वकर्मा नाप-

न्द्रुः पञ्चाविर्व्वयोगायुत्रीच्छन्दंस्त्रिवुत्सोव्वयं ऽ उष्णिक्क्च्छन्दंस्तुर्य्यवा वाड्वयोनुष्टुप्छन्दोंल्लोकन्ताऽइन्द्रंम् ॥ १० ॥ (२] इन्द्रांग्नीऽअ व्व्यंथमानाम् ॥ इन्द्रांग्नीऽअव्व्यंथमानामिष्टकान्दृहतंय्युवम् ॥

श्यत्। तत्रस्वयमातृण्या प्रथमा। (१) इन्द्राग्नी अव्यथमानाम्। अनुष्टुप्। पूर्वार्द्ध र्च ऐन्द्राग्न-उत्तरः स्वयमातृण्यायाः। तत्रोत्तरोर्द्ध र्चः पूर्वंव्याख्यायते। तचविवाधत इतिपुरुषव्यत्ययः। येयंपृ ते नद्यावापृथिवी अन्तरिक्षञ्च विवाधते अभिभ ाति। ताभिन्द्राग्नीअव्यथमानाम् अचल-

(१) का० तृतीयायाएं स्वयमातृणामीन्द्राग्नी इति मध्ये। तृतीयायां चितावात्मनो मध्ये स्वयमातृणामुपदधाति।

न्तीमिष्टकां इदं तां दृढीकुरु तम् युवंयुवाम् ॥ ११ ॥ विश्वकर्मात्वा प्रजापतिः सादयतुइत्यादि

पृष्ठेनद्यावापृथिवीऽअन्तरिक्षञ्चविबाधसे ॥ ११ ॥ विश्वकर्म्मात्वा ॥

सादयत्वन्तरिक्षस्यपृष्ठेव्यचस्वतीम्प्रथस्वतीमन्तरिक्षंयच्छान्तरिक्ष

न्दृꣳहान्तरिक्षम्माहिꣳसीः ॥ विश्वस्मैप्प्राणायापानायव्यानायोदा

नायप्रतिष्ठायैचरित्राय ॥ वायुष्ट्वाभिपातुमह्यास्वस्त्याच्छर्दिषाश

न्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १२ ॥ शतम् ७०० ॥ राज्य

सि ॥ राज्ञ्यसिप्प्राचीदिग्विराडसिदक्षिणादिक्सम्राडसिप्प्रतीचीदि

क्स्वराडस्युदीचीदिगधिपत्न्यसिबृहतीदिक् ॥१३॥ विश्वकर्म्मात्वा ॥

पूर्ववद्व्याख्येयम् अन्तरिक्षस्य पृष्ठे वायुष्ट्वाइति विशेषः ॥ १२ ॥ शतम् ७०० पंचदिश्या उपदधाति ।

वायुरपश्यत् (१) राज्ञ्यसीति प्रतिमन्त्रम् ॥ १३ ॥ विश्वज्योतिष मुपदधाति । (२)विश्वकर्मात्त्वा ।

सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीम् ॥ विश्वस्मै प्राणायापा

नाय व्यानाय विश्वं ज्योतिर्यच्छ ॥ वायुष्टेऽधिपतिस्तया देवतयाङ्गि

रस्वद्ध्रुवा सीद ॥ १४ ॥ नभश्च ॥ नभस्यश्च वार्षिकावृतू ऽअग्नेर

न्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ऽओषधयः कल्प

न्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ॥ येऽअग्नयः समनसोऽन्तरा

द्यावापृथिवीऽइमे ॥ वार्षिकावृतूऽअभिकल्पमानाऽइन्द्रमिव देवाऽ

(१) का० अनूकेषु पंच दिश्या वैश्वदेवोवद्राज्ञ्यसीति प्रतिमन्त्रम्। वैश्वदेवीवदिति प्रतिदिशं रेतः सिग्वेलायामनूकेषु पंच दिश्य·सञ्ज्ञका इष्टका उपदधाति पंचमीं दक्षिणायोत्तरेणेति सूत्रार्थः।

(२) का० विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्याः। प्रथमोपहिताया विश्वज्योतिष उपरि विश्वज्योतिषमिष्टकामुपदधाति।

वायुर्देवत्या ॥ १४ ॥ (१) ऋतव्या । नभस्वर्देवत्या ॥ १५ ॥ १६ ॥ दशप्राणभृतः । आयुर्मेपाहि

अभिसंविंशन्तुतयांदेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ १५ ॥ इषश्चं ॥

इषश्चोर्ज्जश्चंशारदावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथि

वीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्मज्ज्यैष्ठ्यायस

व्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ शारदावृतूऽ

अभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविंशन्तुतयांदेवतयाङ्गिरस्व

द्ध्रुवेसीदतम् ॥ १६ ॥ [ ६ ] आयुर्म्मे ॥ पाहिप्प्राणम्मेपाह्यपानम्मेपा

हिव्यानम्मेपाहिचक्षुर्म्मेपाहिश्श्रोत्रम्मेपाहिव्वाचम्मेपिन्वमनोमे

( १ ) का० ऋतव्ये नभश्च नभस्यश्चेति । पूर्वं तंव्ययोरुपरि द्वे ऋतव्येउपदधाति । ऋतुदेवतामुक्तृतिच्छन्दस्कं यजुः । नभः श्रावणः नभस्य भाद्रपदः । शेषं व्याख्यातम् ।

शु० य० सं० २२० उ० भा०

गोपाय। वाचंमेपिन्व। त्वयोलक्षणांवाचं मेमम पिन्वसिंच। कामैः पूरय। मनोमेजिन्व। जिन्वतिः प्रीतिकर्मा। ज्योतिर्मेयच्छ देहि। सुखबोध्य मन्यत् ॥ १७ ॥ षट्त्रिंशच्छन्दस्य। उपदधाति। (१) माछन्दः। अयंलोकोमितइवमा छन्दः छादनात्। प्रमाछन्दः।

जिन्वात्मानंम्मेपाहिज्ज्योतिर्म्मेयच्छ ॥१७॥ माच्छन्दः ॥ प्प्रमाच्छन्दः प्प्रतिमाच्छन्दोऽअस्त्रीवयश्छन्दः पुङ्क्तिश्छन्दऽउष्णिक्छन्दोबृहतीच्छन्दोनुष्टुप्छन्दोव्विराटछन्दोगायत्रीच्छन्दस्त्रिष्टुप्छन्दोजगतीच्छन्दः पृथिवीच्छन्दः ॥ १८ ॥ पृथिवीच्छन्दोन्तरिक्षञ्छन्दोद्यौ

अन्तरिक्षलोकोवैप्रमा। अन्तरिक्षलोकः अस्माल्लोकात्प्रमित इवदृश्यते। प्रतिमाच्छन्दः। द्यौः प्रतिमा साहिअन्तरिक्षलोकेप्रतिमिता। अस्त्रीवयः छन्दः अन्नमस्त्रीवयः। यदेभ्योलोकेभ्य

१४ अ० शिवम् २२०

(१) का० छन्दस्या द्वादशद्वादशाप्ययेषु मा च्छन्द इति। अप्ययेषु पक्षपुच्छात्मसन्धिषु त्रिषु द्वादशद्वादश छन्दस्यासञ्ज्ञा इष्टका उपदधातीति सूत्रार्थः।

आकृतिपरिणामभूतमन्नं भवतितदभयः। परतोनिरुक्तानि छन्दांसिपंक्तिप्रभृतीनि ॥१८॥
(१) पृथिवीछन्द इति। यान्येतद्देवत्यानि छन्दांसितान्युपदधाति। छादयन्तीतिछन्दांस्युच्यन्ते

स्छन्दः समाश्छन्दोनक्षत्त्राणिच्छन्दोव्वाक्छन्दोमनश्छन्दःकृषिश्छ
न्दोहिरण्यञ्छन्दोगौश्छन्दोजाच्छन्दोश्वश्छन्दः ॥१९॥ अग्निर्दे व
ता॥ अग्निर्देवताव्वातोदेवतासूर्य्योदेवताचन्द्रमादेवताव्वसवोदेव
ताशुद्रादेवतादित्यादेवतामरुतोदेवताव्विश्वेदेवादेवताबृहस्पतिर्दे
वतेन्द्रोदेवताव्वरुणोदेवता ॥ २० ॥ मूर्द्धासि ॥ मूर्द्धासिराड्ध्रुवासि

॥ १९ ॥ (२) अग्निर्देवता वातोदेवता त्येतावैछन्दांसिता अपिछादयन्ति ॥ २० ॥ चतुर्दश

( १ ) का० पृथिव्यादिदेवतयानि। यानि छन्दांसि तद्रूपासि। समाः संवत्सराः। स्पष्टमन्यत्।
( २ ) का० इष्टके त्वमग्न्यादिदेवतारूपासि तासुपदधामीति सर्वत्र शेषः। अग्न्यादीनां देवतात्वं प्रसिद्धम्। अग्निर्देवता वातो
देवतेतेताः वै देवताश्छन्दांसि तान्येवैतदुपदधातीति श्रुतिः।

शु० य० सं० ३२१ उ० भा०

वालखिल्या उपदधाति द्वाभ्यामनुष्टुप्पुरोष्णिग्भ्याम् (१) मूर्द्धासिराट् । मूर्द्धासिशिरोभूतासि राट् । राजन्तीदीप्तादीप्ताचासि । ध्रुवास्थिरासि । धरुणाचधारयित्रीच धर्त्र्यसिधारयित्रीअसि । धरत्री । धरणीचत्रिधरणीच । मर्यादाभूताच । एवन्त्रिलोकसंस्तवः तिसृणामिष्टकानाम् । आयुषेत्त्वा वर्च-

ध्रुरुणांधुर्त्र्यसिधरुणी॥ आयुंषेत्त्वाव्वर्चसेत्त्वाकृष्ष्यैत्त्वाक्षेमायत्वा॥२१॥

यन्त्रीराड्यन्त्र्यसियमंनीध्रुवासिधरित्री॥ इषेत्त्वोर्ज्जेत्त्वारय्यैत्त्वापोषां

यत्वालोकन्ताऽइन्द्रम् ॥ २२ ॥ [ ६ ] आशुस्त्रिवृत् ॥ आशुस्त्रिवृद्भा

सेत्त्वा कृष्यै त्वाक्षेमायत्त्वा उपदधामीतिशेषः । एतासांचतसृणांवालखिल्या नां मन्त्रस्तवः ॥ २१ ॥ परतोपि तिसृणां द्युलोकप्रभृतिलोकसंस्तवः । यंत्रीराट् । यमनीदीप्ताचासि । यंत्रीअसि । यमनीध्रुवाअसि । धरित्री । पशुसंस्तवः पूर्ववत् । इषेत्त्वोर्जेत्त्वा रय्यैत्त्वापोषायत्त्वा (२) लोकन्ता-

१४अ०

शिवम्

३२१

(१) का० वालखिल्याः सप्त पुरस्तात्प्राणभृद्भ्यो वापरा द्वादशभ्याऽपरास्तु मूर्द्धासि राडिति प्रतिमन्त्रम् । प्रागुक्तदशप्राणभृद्भ्यः पूर्वा अपरा वा सप्त वालखिल्याख्यन्त्रा इष्टका उपदधाति मूर्द्धासीत्यादिसप्तमन्त्रैः ।

(२) का० उत्तरश्रोणेरधि लोकम्पृणाः पूर्ववत् । उत्तरश्रोणेरारभ्य प्रथमचितिवदेव लोकम्पृणा उपदधाति । ततः पुरीषनिवापोपस्थाने ।

इन्द्रमिति व्याख्यातम् ॥ २२ ॥ चतुर्थीञ्चितिमृषयो पश्यन् । (१) आशुस्त्रिवृ दित्यष्टादशे ष्टकाः प्रतिमन्त्र मुपदधाति । स्तोमसंख्योपलक्षितै र्मन्त्रैः स्तोमानुपदधातीति श्रुतिः । प्रकटार्थामन्त्राः श्रुत्याच व्याख्याताः तथापि किञ्चित्किंचिदुच्यते । आशुः त्रिवृत् यएवत्रिवृत् स्तोमः सोनेन-मन्त्रेणोक्तः इत्येकं व्याख्यानम् । अथो वायुर्वा आशुः शीघ्रः त्रिवृत् त्रिलोकसंचारी । एवमु-

न्तः॒ पञ्चद॒शो व्यो॑मासप्तद॒शो ध॒रुणऽएकवि॒ꣳश॒ः प्रतू॑र्त्तिरष्टाद॒शस्तपो॑

नवद॒शो॑भीवुर्तः॒ स॑वि॒ꣳ॒शो वर्चो॑ द्वावि॒ꣳ॒शः॒ सुम्भर॑णस्त्रयोवि॒ꣳ॒शो योनि॑

श्चतुर्वि॒ꣳ॒शो गर्भा॑ः पञ्चवि॒ꣳ॒शऽओजस्त्रिणुवः॒ क्रतु॑रेकत्रि॒ꣳ॒शः प्र॑

परितनान्यपि व्याख्येयानि । भान्तः पञ्चदशः । चन्द्रमाउच्यते । सहिभातिच पञ्चदशा-हान्या पूर्यतेच अपक्षीयतेच । व्योमासप्तदशः । संवत्सरउक्तः । सहिविविध मवतिप्राणिनः सप्तदशावयवश्च । धरुणएकविंशः । आदित्यः स्तोमो वोच्यते । प्रतिष्ठावैधरुणः प्रतिष्ठैक-

(१) इतितृतीयाचितिः का० उत्तरां पूर्वयोराशुस्त्रिवृदिति । पूर्वानूकान्तविहितयोर्दक्षिणोत्तरयोर्मध्यं उत्तरां जद्दामात्रीसुन्द-त्रमुख उपदधातीति सूत्रार्थः ।

मीणि परमोतसंहृक् । परमस्यसंद्रष्टा भूतानाम् तेषामिष्टानिहविषामदन्ति । येषांभूतानां विश्वकर्माद्रष्टा तेषांभूतानां मध्येयानिहृष्टानि अभिमतानिदमदानदयादिभिर्युक्तानि । तानिद्रूपाअन्नेनआकूतिरसभूतेनसंमोदन्ते । सर्वद्वन्द्वविमुक्तानि भूतानिसंमोदन्ते । यत्रयस्मिन्प्रदेशेसप्तऋषीन् विश्वकर्मणः प्राणभूतान् वसिष्ठप्रभृतीन् । परः परेणविश्वकर्मणा एकमाहुः एकं

प्तऽऋषीन्परऽएकमाहुः ॥ २६ ॥ योनः॥ पिताजनितायोविधाता धामानिवेदभुवनानिविश्वा॥ योदेवानांनामधाऽएकऽएवतᳪसंप्रश्नम्भुवनायन्त्यन्या ॥ २७॥ तऽआयजन्तद्रविणᳪसमस्माऽऋषयः

भवति सप्तर्षिलोकः तेपिविश्वकर्मंत्वांप्रार्थयन्ति ॥ २६ ॥ योनः । योस्माकम् पितापाता जनिताजनयिता । यश्चविधाताविधारणसेतुः । यश्चधामानिस्थानानि वेदजातानि भुवनानिभूतजातानि विश्वाविश्वानि यश्चदेवानां नामधा नामानिदधातिकरोति । नामचपितैवकरोति यश्च एकएवअद्वितीयः । तंविश्वकर्माणं संप्रश्नयितुम् भुवनाभूतजानि । आयन्तिआगच्छन्ति

अन्याअन्यानिच सएवस्वाधिकारेषु नियुंक्तेत्यभिप्राय: ॥ २७ ॥ तस्मायजन्त । अत्रद्वितीयोर्द्धर्च:
प्रथमंव्याख्यायते यच्छब्दयोगात् । असूर्तेअसुसमीरिते । असु:प्राण: सप्तदशकलिङ्गयुक्तावात्मान:
मूर्तेसुष्टुसमीरिते रजस्यन्तरिक्षलोके । निषते निर्गतसत्ताके निरालंबने । निषत्तानुत्तप्रतूर्तसूर्ते-
त्यादिना निपातनम् । यत्रस्थिता:सन्त: येभूतानिसमकृण्वन् कृतवन्त: इमानि । तेभ्यायजन्त
यजतिर्दानार्थ: । आभिमुख्येनादत्तवन्तो दृविर्णधन मुदकलक्षणं जीवनाय । सम्यग्स्मै । सं-

पूर्वेजरितारोनभूना ॥ असूर्त्ते सूर्त्ते रजंसिनिषत्तेयेभूतानिसमक्कंण्व
न्निमानि ॥ २८ ॥ पुरोदिवा ॥ पुरएनापृथिव्यापुरोदेवेभिरसुरैर्य्य

गत्यअरमेभूतग्रामाय । ऋषय:पूर्वेवसिष्ठप्रभृतय: जरितार: । स्तोतार: । नभूना नात्यन्तंव-
ह्रयुक्त्याकामवर्षित्वेनेत्यर्थ: । येवसिष्ठादयो भूतानिसृजन्ति तएवोदकदानेन जीवन्तीति स-
मस्तार्थ: ॥ २८ ॥ परोदिवा । प्रश्नप्रतिप्रश्न रूपामंत्रा: । परब्रह्मविषयो त्रप्रश्न: विभक्ति
व्यत्ययत्रऋलोमंत्र: । पर:सूक्ष्म: दिवादिव: परस्वएनाअस्याःपृथिव्या: । परस्वदेवेभ्य. परश्चअसुरेभ्य:
यदस्ति । यच्चसदाकालमस्ति तत्परंब्रह्मेतिशेष: । किंस्वित् स्विच्छब्दोवितर्के । कंपुनर्गर्भम्

दध्रे धारितवत्य आपः । यत्र गर्भे देवाः संगताः प्रजापतिना अपश्यन्त दृष्टवन्तो जगदिदम् पूर्वे-प्रथमजाः । तदुक्तम् आपोह्वा इदमग्ने सलिलमेवासेत्यादिना ॥ २९ ॥ तमित् । प्रतिप्रश्नः तमिद्गर्भम् इच्छब्दोनिपातश्चार्थवचनः । तमाश्चर्यभूतं प्रथमं गर्भं दध्रे आपः । यत्र देवाः ।

दृस्ति ॥ कᳬस्विद्गर्भं प्रथमं दध्र आपो * यत्र देवाः समपश्यन्त पूर्वे ॥२९॥ तमित् ॥ तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ॥ अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि त

समगच्छन्त संगताः विश्वेसर्वे । नन्वस्याण्डस्याद्भिसहितस्य क आधार इत्याशंक्याह । अजस्य नजायत इत्यजः । नाभौमध्ये अधिउपरि । एकमविभक्तं मनन्यभूतम् । अर्पितं समर्पितम् । यस्मिन्नजे ब्रह्मणि । विश्वानि भुवनानि । सर्वाणिभूतजातानि । तस्थुः स्थितवन्ति । ब्रह्मा-

* न चवह चि श्वि स त योश्च स्वकम् एतेभ्यः परस्वशब्दो न द्विरुच्यते प्रातिशाख्ये अ० ६ । सू० २७ । इति निषेधात् तकारस्य द्वित्वन ।

शु० य० सं० २७८ उ० भा०

अ० १७

शिवम्

स्तोनानि। नतुतस्याप्यन्यस्याधारइति स्वप्रतिष्ठं हि परब्रह्म ॥ ३० ॥ इदानीं विश्वकर्मा मनुष्या-
णामुपदेशं ददाति। नतं विदाथ। नविदाथनजानीथ तं परं पुरुषम्। यइमानि भूतजातानि
जजानजनयति। उपसंहरतिच्च अतः कारणात् युष्माकं च तस्यचपुरुषस्य। अन्यत् महत्
अन्तरं बभूव पुरुषोजनको यूयंजन्याः पुरुषोभ्रामको यूयंभ्राम्याः। यदितुज्ञात्वात्मत्वेनोपा-

सत्युः॥३०॥ नतम्॥ नतंविदाथयऽइमाजजानान्यद्युष्माकमन्तरम्ब
भूव॥*नीहारेणप्रावृताजल्प्याचासुतृपऽ*उक्थशासश्चरन्ति॥३१॥

पास्यध्वं नसंहृतिः स्यादित्यभिप्रायः। एवंप्रत्यक्षानुक्त्वा अथेदानीं परोक्षानभिनयेन दर्शयन्नाह।
येचैते। नीहारेणअविद्ययाप्रावृता अवगुण्ठितः। येजल्प्या प्रावृताः। पक्षहेतुदृष्टान्तैरा-
त्मज्ञानंजल्पिः। कृताकिंकाभिप्रायमेतत्। येचअसुतृपः। असून्प्राणान्तर्पयन्ति असुतृपः

---

* निवारहारयोरनवग्रहे नि इत्ययमुपसर्गौ वारहारयोः प्रत्ययोर्दीर्घमापद्यते अवग्रहवर्ज्जिते।

* उक्थशासश्चरंती त्यत्रउक्थाचशसेः। उक्थशब्दात्परस्य शसेर्धातोरुत्तरो दीर्घमापद्यते इत्यर्थकेनसूत्रेणदीर्घादेशो
विधियते। प्रा० अ०। ३ सू० १२४।

अलंकरिष्याव: । तैरपिसहमहद्देवान्तरंबभूव । येतु उक्थशास: उक्थानांशंसितार: । उक्थानिच यज्ञेशस्यन्ते अतोयज्वानोगृह्यन्ते । येयज्ञशीलास्तेपुरुषं प्रतिविचरन्ति । येतुपुरुषविद: तेपुरुषएवभवन्ति । नीहारप्रावृतास्तु नरकयायिन: ॥ २१ ॥ विश्वकर्माहि । विश्वकर्मा आदित्यान्तर: पुरुष: । अजनिष्टजात: । देव: दानादिगुणयुक्त: । आत् इत् निपातौ

विश्वकर्माहि ॥ विश्वकर्माह्यजनिष्टदेवऽआदिद्गन्धर्वोऽअभव द्वितीय: ॥ तृतीय:पिताजनितौषधीनामपाङ्गर्भं व्यदधात्पुरु

अथानन्तरम् । गन्धर्व: गोर्वाचोधारयिता पृथिव्यावाधारयिता गन्धर्वोग्नि: । गानाद्वागन्धर्वोग्नि: । अथोआहु: । गन्धर्वोअग्निरेवासैत्र पृष्ठेसर्वज्ञत्स्तोम न्यमानोऽ गायदित्यादिस्तुति: अभवत् द्वितीय: । सहायाथ । तृतीय: पिता । पालयिताजनयिताच ओषधीनाम् । पर्जन्य: अभवत् । सचोत्पन्न: सन् अपामाकृतिपरिणामभूतानाम् गर्भंविअदधात् धारयति पुरुनावह्वनां-

त्राता । यद्वा अपांगर्भंविदधाति पृथिव्यांवहुप्रकारम् (१) ॥ ३२ ॥ (२) आशुः शिशानः । अनुवाकः । अप्रतिरथऋषिः । ऐन्द्रोप्रतिरथोपश्यत् । मर्माणितद्दृश्यन्तः । आदितोद्वादशैन्द्रत्रिष्टुभो ब्रह्मादक्षिणतोजपति । आशुः शीघ्रः शिशानः । शोतनूकरणे । निश्यानोवज्रम् । वृषभो नभीमः । वृषभइवभीमः । भीमोविभ्यत्यस्मादिति । घनाघनः । हनन्हनेत्येत्रा ॥ ३२ ॥ [ ८ ] आशुःशिशानः ॥ आशुःशिशानोवृषभोनभीमो घनाघनःक्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषएकवीरःशतं ववज्रा । यद्वा घनशरीरः । क्षोभश्चर्षणीनाम् । संचालकः चर्षणीनामनुष्याणाम् । संक्रन्दनः । समाह्वाता संग्रामकारिणाम् । आह्वयच । अनिमिषः । अप्रमादी । यद्वा अनिमिषोदेवा । एकवीरः एकएवासहायो विक्रान्तः । यईदृग्गुणविशिष्टः सः सतंवज्रः सेनाः

(१) वैश्वकर्मण होमः समाप्तः ।

(२) आहवनोये प्रणीयमानेऽप्रतिरथस्य द्वादश त्रुचवन्नग्नौ सर्वत्रैके । अग्नौ चयने इध्ममादोप्याहवनीये चितग्नां प्रति नोयमाने ब्रह्माप्रतिरथसूक्तस्य द्वादश ऋचो जपन्दक्षिणतोऽनुगच्छतीति सूत्रार्थः ।

अन्वयत् जयति। साकंसच्चैव। इन्द्रः ॥ ३३ ॥ संक्रन्दनेन शब्दकारिणा अनिमिषेण एक-
चित्तेन। अप्रमादतावा। जिष्णुनाजयनशीलेन। युत्कारेण। युधसंप्रहारे। असत्राक्षि-
पियुत्। संप्रहारकारिणा। दुश्च्यवनेन अप्रच्याव्येन अप्रच्युतस्वभावेनवा। धृष्णुना। प्रस-
हनशीलेन। तदिन्द्रेणजयत। ईदृग्गुणविशिष्टेनेन्द्रेण तज्जयत। दुर्जयमितिशेषः तच्च-

सेनांऽअजयत्साकमिन्द्रं÷ ॥ ३३ ॥ सुङ्क्रन्दनेनानिमिषेणं ॥ जिष्णुनां
युत्कारेणंदुश्चच्यवनेनंधृष्णुनां ॥ तदिन्द्रेणजयततत्सहध्वँयुधो
नरऽइषुंहस्तेनवृष्णां ॥ ३४ ॥ सऽइषुंहस्तैः ॥ सऽषुंइहस्तैःसनिं
षङ्गिभिर्व्वशीसꣳस्रष्टासयुधऽइन्द्रोगणेनं ॥ सꣳसृष्टजित्सोमपाबां

सहध्वम् तच्चाभिभवत हे युधः युधसंप्रहारइत्यस्य तत्क्विपि बहुवचनम्। हे योद्धारः। पादादाव-
भिसन्धितस्य चेत्यादि उदात्तः। हे नरः मनुष्याः इषुहस्तेनेन्द्रेण। इष्वासेन वर्षणशीले-
नवा ॥ ३४ ॥ सइषुहस्तैः। सइन्द्रः इषुहस्तैः। योद्धृभिः संसृजति सइषुहस्तानेवयोद्धृन्। सनिष-

य० य० सं० ३८० उ० भा०

अ० १७ शिवम् ३८०

ङ्गिभिः । सएवेन्द्रोनिषङ्गिभिः खङ्गिभिः संसृजतिनिषङ्गिनएवयोद्धुन् स्वान् । किञ्च । वशी । कान्तः सर्वजनप्रियोवा स्वतंत्त्रोवानिगृहीतादि षड्वर्गोवा ईश्वरोवा । सएवेन्द्रोयुधः योद्धृन्स्वान् शत्रुगणेन संसृष्टा । किञ्च संसृष्टजित् संसृष्टाञ्जयतिशत्रून् । सोमपास्सवाङ्गशर्द्धीच वाङ्गवलः संयोगिवल निरपेक्षः । शर्द्ध इतिवलनाम उग्रधन्वा उद्यतधनुः । प्रतिहिताभिरस्ता । शत्रुशरीरेषु

हुषुद्द्वुंग्ग्रधंन्व्वाप्प्रतिंहिताभिरस्तां ॥ ३५ ॥ बृहंस्प्पतेपरिं ॥ दीया रथेंनरक्षोहामित्त्रां२ँ ॥ऽअपबाधंमानः ॥ प्प्रभञ्जन्त्सेनांःप्प्रमृणोयुधा जयंन्नुस्म्माकंमेड्ध्यविताारथांनाम् ॥३६॥ बलविज्ञायस्स्थविंरः ॥ बु

प्रतिनिहिताभिरिषुभिः इन्द्रः अस्ताक्षेप्त्रेत्यनुमीयते लघुसंप्रधानोलक्षपातीवा इत्यभिप्रायः ॥ ३५ ॥ बृहस्पते । हेबृहस्पते । परिदीया दीयतिर्गतिकर्मा । परियाहि रथेन । रक्षोहारक्षसांहन्ता । अमित्रान्शत्रून् । अपवाधमानः । किञ्च प्रभञ्जन्प्रमर्दयन् सेनाः । प्रमृणोयुधाजयन् मृणातिहिंसार्थः । तस्यक्विपिद्वितीया वहुवचनम् प्रमृणःहिंसकान् युधायुद्धेनजयन् अस्माकम् एधि

भव अविता गोमा । रथानाम् बृहस्पतिरपीन्द्रस्य पुरोहितइतीन्द्रसंबन्धेनैव स्तूयते ॥ ३६ ॥
बलविज्ञाय: । यस्त्वं बलमाविष्कुर्वन्विज्ञायसे अयमिन्द्रइति । स्थविरश्च सर्वानुशासक: सर्वस्मा-
न्योवाचिरन्तनोवा । प्रवीरश्चअभिवीर: वीरंवीरमभि अभिवीर: । अभिसत्त्वाच सत्वंसत्त्व-

लविज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानऽउग्रः॥ *अभि
वीरोऽअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ३७ ॥ गोत्र
भिदङ्गोविदम् ॥ गोत्रभिदङ्गोविदंवज्रबाहुञ्जयंन्तमज्मप्रमृण

मभि अभिसत्त्वा । सहोजाश्च सहइतिबलनाम । बलात् जात: । नह्यन्यस्माज्जात इत्थं-
बल: स्यात् । सत्रं जैत्रं जेतारं हेइन्द्र । रथम् आतिष्ठ । गोवित् सन् । स्तुतिवित्सन् । गोश-
ब्दोवाग्वचन: ॥ ३७ ॥ गोत्रभिदम् । असुरगोत्रम्भिनत्तीतिगोत्रभित् । यद्वागोत्रइतिमेघनाम-

* अभिवीरइतात्र अध्वरभिमतोतरादि नास्त्वचे एअभीतरस्यदीर्घ:प्राप्त: अभि विश्वेषं वीरविग्रह व्यत्सहचव्याज
यन्तेषु एतेषुपरेषु अभीतेरतत्पदं नदीर्घमापद्यति प्रा० अ० ३ । सू० १००

शु० य० सं० ३८१ उ० भा०

अ० १७

सुपठितम्। सहिंगा: अप: व्रायते। तस्यगोत्रस्यमेघस्यभेत्तारं दृष्टप्रर्थम्। गोविदम् उपलब्धा-
रम्। यद्वा। वाग्विदंस्तुतिविदम् पण्डितंवा। वज्र बाहुंवज्रपाणिम् जयन्तम् जयतेर्गत्यर्थस्य।
अज्म अज्मतिसंग्राममनाम। संग्रामंगच्छन्तम्। प्रमृणन्तम् ओजसा। मृणातिर्हिंसाकर्मा। प्रमर्दं-
यन्तंबलेन। इममिंद्रम् हेसजाता: समानजन्मानोदेवा:। अनुवीरयध्वम् वीरकर्मंकुर्वाण मनु-

न्तुमोजसा ॥ इमꣳसंजाताऽअनुवीरयद्‌ध्वमिन्द्रꣳसखायोऽअनुसꣳरं
भद्‌ध्वम् ॥ ३८ ॥ अभिगोत्राणि ॥ अभिगोत्राणिसहसागाहमा
नोदयोवीरःशतमन्युरिन्द्रः ॥ दुश्च्यवनःपृतनाषाडयुद्ध्योस्माकꣳ
ꣳसेनाअवतुप्रयुत्सु ॥ ३९ ॥ इन्द्रऽआसाम् ॥ इन्द्रऽआसान्नेताबृह

गम्यवीरकर्मणैवप्रोत्साहयत हेसखाय:समानख्याना: देवा: अनुसंरभध्वम् अनुसंगम्य रभसंकु-
रुत।३८॥ अभिगोत्राणि। अभिगाहमानोगोत्राणि असुरकुलानि। मेघवृन्दानिवा। सहसाबलेन।
(१) अदयोनिस्त्रिंश:। वीर: विक्रान्त:। शतमन्यु: बहुक्रोध: इन्द्र:। दुश्च्यवन: अप्रच्याव्य:।

(१) दयारहित: इति ख पुस्तके पाठ:।

पृतनाषाट्। पृतनांसंग्रामं सहतेऽभिभवति। अयुध्यः अविद्यमानप्रतियोधा। यद्वृत्थंभूतइन्द्रः सोऽस्माकंसेनाम् अवतुपालयतु। प्रयुत्सुयुद्धेषु ॥ ३९ ॥ इन्द्रआसाम्। देवसेनानां व्यूहरचनात् इन्द्रआसांनेताभवतु। बृहस्पतिश्च। मन्त्रीप्रधानानिहिकार्याणिकरोति। दक्षिणायज्ञः। दक्षिणतोयज्ञः एतु। पुरएतुसोमः। पुरस्तादागच्छतुसोमः। यद्वा। दक्षिणा-

स्पतिर्द्दक्षिणायुज्ञः पुरऽएतुसोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयुन्त्वग्ग्रम् ॥ ४० ॥ इन्द्रस्यवृष्णः ॥ इन्द्रस्यवृष्णोव्वरुणस्युराज्ञऽआदित्यानाम्मरुताᳫँशर्द्धऽउग्ग्रम्॥महामनसाम्भुवन

पुरस्तात् एतु यज्ञश्चसोमश्च। केषामित्यतआह। देवसेनानाम् अभिभञ्जतीनाम्। भञ्जोआमर्दने जयन्तीनाम्। मरुतः गणभूताः यन्तुअग्रम् निरुध्य ॥ ४० ॥ इन्द्रस्यवृष्णः। इन्द्रस्यवर्षितुः। वरुणस्यचराज्ञः। आदित्यानांमरुतांचशर्द्धः बलंहस्त्यश्वरथपदातिलक्षणम्। उग्रम् उद्गूर्णायुधम्। उदस्यादित्यनुषङ्गः। यदाचैतदुदस्थात् अथानन्तरमेव। महामनसाम् अक्लिष्ट-

मनसाम । भुवनच्यवानाम् भुवनच्यावनसमर्थानाम् घोषः शब्दः देवानांजयताम्उदस्थात् उत्थितः । जतंजितमिति ॥ ४१ । उद्धर्षय । उद्गतहर्षान् कुरु हे मघवन् आयुधानि । उत्सत्वनाम् । उद्धर्षयचस-त्वनाम् । सत्त्वानांमनुष्याणाम् मामकानामदीयानां । मनांसि उद्धर्षय हे वृत्रहन् वाजिनामश्वानाम् वाजिनानि वेजनवत्वानि । चञ्चलत्वं शुभ्रत्वगुणः । उद्रथानांच जयतांयन्तुघोषाः । उद्यन्तुच

च्यवानाङ्घोषोदेवानाञ्जयंतामुदस्थात् ॥ ४१ ॥ उद्धर्षय ॥ मघवन्ना युधान्युत्सत्वंनाम्मामकानाम्मनाᳪंसि ॥ उद्वृत्रहन्वाजिनांवाजि नान्युद्रथानाञ्जयंतांयन्तुघोषाः ॥ ४२ ॥ अस्माकमिन्द्रः ॥ समृ तेषुद्ध्वजेष्वस्माकंय्याऽइषवस्ताजयन्तु ॥ अस्माकंवीराऽउत्तरेभव

त्वत्प्रसादात् रथानांचजयतां मेघोषाः शब्दाः ॥ ४२ ॥ अस्माकमिन्द्रः । अस्माकंतावत् समृतेषु सं गतेषुध्वजेषु शत्रुबलध्वजलोलीभूतेषु । इन्द्रोरक्षितावत्तु इंद्रप्रसादादेव अस्माकंयाइषवः ताःजयन्तु । अस्माकंचवीरा उत्तरे विजयिनोभवन्तु । अस्मान् उविनिग्रहार्थोथउकारः । अस्मा-

नेव हेदेवाः अवतरक्षत । हवेषुआह्वानेषु ॥ ४३ ॥ अमीषाञ्चित्तम् अप्वादेवता साचपुनर्व्याधिर्वा भयंवा । यस्मादेतया विद्धोव्याप्तः अपचीयते नयाभक्ष्यमाणः तस्मादप्वा अपशब्दान्याकारलोस्त । सृत्तष्टाप् ऐन्द्र्यो भिरूपा द्वादशभवंतोतिस्मृतिः । इयमपीन्द्र सेनासंबन्धिनी ।

न्त्वुस्म्मार॑ँ ॥ ऽउदेवाऽ *अवताहवेषु ॥ ४३ ॥ अमीषांञ्चित्तम् ॥

अमीषांञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गान्यप्वेपरेहि ॥ अभिप्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तमंसासचन्ताम् ॥ ४४ ॥ अवंसृ

अमीषाम् संबन्धिनांमनुष्याणाम् चित्तम् चित्तानीतिवचनव्यत्ययः प्रतिलोभयन्ती । लुभविमोहने । विमोहयमाना । गृहाणामङ्गानि हेअप्वे ततःपरेहि । परागच्छ पुनरन्यान्शत्रून्गृहीतुम् अतोभूयो भूयोकरणेनैतानेवशत्रून भिप्रेहि । निर्दहचैषां हृदयानिशोकैः । हृत्स्वितिसप्तमीवऌवचनं द्वितीयाबहुवचनस्थाने । हृदयानिनिर्दहशोकैः । यथाअंधेन ध्यानलक्षणेन अमित्राः



* पिवासोममभि वाममुतस्त्वित्यादिसूत्रेण हवेषुपरेअवतेतत्र कारस्यदीर्घादेशे अवताहवेष्वितिसिद्धम्

तमसासचन्त.म् तमसासंसेव्यंताम् तमसासंश्लिष्यंताम् । द्वादशैन्द्र्यः समाप्ताः ॥ ४४ ॥ पृथ-ग्विनियोगमंत्राः । अवसृष्टा इषुदेवत्यानुष्टुप् । परावसृष्टानिक्षिप्ता परापतपरागच्छ । हे शरव्ये शरमयीइषुःशरव्या । हे ब्रह्मसंशितेब्रह्मणाभिमंत्रिते अभिमंत्र्यअतितरां तीक्ष्णी-कृते गच्छपरापत गच्छेत्यातिशयार्थं एकार्थयोराख्यातयोर्द्विवचनम् अमित्रान्प्रपद्यस्व । माच

ष्टुापरा ॥ पतुशरव्येब्रह्मसंशिते ॥ गच्छामित्रा न्प्रपद्यस्वमामी

षाङ्कञ्चनोच्छिषः ॥ ४५ ॥ प्रेतं ॥ प्रेता * जयंतानरा इन्द्रोवःशर्मयं

च्छतु ॥ उग्रावः सन्तुबाहवोनाधृष्यायथासथ ॥ ४६ ॥ असौया ॥

अमीषाममित्राणां कञ्चन उच्छिषः उच्छेषय । उद्धृतमूलान् कुर्वित्यभिप्रायः ॥ ४५ ॥ प्रेत । योद्धृस्तौति । अनुष्टुप् हेनराःमनुष्याः प्रेतगच्छत ॥ जयतच इन्द्रस्त्वःशर्म । शरणं परित्राणम् यच्छतुददातु । उग्राःउद्गूर्णायुधाः वःयुष्माकम् सन्तुबाहवः । अनाधृष्याः अप्र-

---

* धारयामयेोजात्रसचर्स्व तत्रादिसूत्रेण जयतानर इतात्रनकारे जयतेतत्रस्यदीर्घः प्रा० अ० ३ । सू० १०८ ॥

धृष्याः यथायूयम् असथभवथ । तथाउग्रात्रःसन्तु वाहवइत्यनुषङ्गः ॥ ४६ ॥ असौया । मारुतीत्रि-
ष्टुप् । असौयासेनाहेमरुतः परेषांशत्रूणाम् अभिऐति अभ्यागच्छति नःअस्मान्प्रति ओजसावले-
नस्पर्द्धमाना । तांसेनांगूहतव्याप्नुत । तमसाअपव्रतेन व्रतमितिकर्मनाम । अपगतकर्मणा । येनत-
मसाव्याप्तानां नश्यंकर्माणितदपव्रतंतमःतेनापव्रतेनतमसावागूहतयेथामीअन्योअन्यंनजानन् । यथा-

सेनांमरुतःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना ॥ तांगूहततमसा
पव्रतेनयथामीऽअन्योऽअन्यन्नजानन् । ४७ ॥ यत्रबाणाः ॥ सम्प
तन्तिकुमाराविशिखाऽइव ॥ तन्नऽइन्द्रो बृहस्पतिरदितिःशर्म्मय

अमीसैनिकाःअन्योन्यंपरस्परंनजानीयुः ॥ ४७ ॥ यत्रबाणाः । लिङ्गोक्तदेवतापंक्तिः । यत्रबाणा
इषवःसंपतन्ति अनिमर्यादम् । कथमिव कुमाराविशिखाइव । यथाकुमाराअदृष्टपरिकारिणः
विगतशिखाःसर्वमुण्डाः तन्तमर्थंसंनिपतेयु रेवंसंपतन्ति तत्रेत्यर्थः । नः अस्माकम् इन्द्रः
शर्मशरणम् यच्छतुददातु । बृहस्पतिःशर्मयच्छतु । अदितिः शर्मयच्छतु विश्वाहासदाकालंच

शर्मयच्छतु । इन्द्रः बृहस्पतिः अदितिः ॥ ४८ ॥ (१) मर्माणिते । लिङ्गोक्तदेवतात्रिष्टुप् । कवचंप्रयच्छति मर्माणितेतववर्मणाकवचेनच्छादयामि । सोमस्त्वाराजात्वाम् अमृतेनअनुवस्ताम् आच्छादयतु । किञ्च उरोर्वरीयोवरुणस्ते कृणोतु । पृथोरपिपृथीयः वरुणःतवकवचं करोतु ।

च्छतु * विश्वाहाशर्म्मयच्छतु ॥ ४८ ॥ मर्म्माणिते ॥ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥ ४९ ॥ [ १७ ] उदेनम् ॥

किञ्च जयन्तंत्वाम् अनुमदन्तु उत्साहयन्तुदेवाः ॥ ४९ ॥ (२) उदेनम् । समिधमादधाति ।

(१) का० मर्माणि तइति कवचं प्रयच्छति । महाव्रती यागेऽध्वर्युः क्षत्रियाय सन्नाहं परिधानाय प्रयच्छतीत्यर्थः ।

(२) का० आर्द्रांदुम्बरीष्टं तोषितास्विति उदेनमित्यादधाति प्रत्यृचम् अशुष्का उदुम्बरतरूत्था रात्रौ घृते स्थिताः प्रादेशमात्रीस्तिस्रः समिध ऋक्त्रयेण शालाद्वार्ये जुहोति ततोऽग्निप्रणयनमितार्थः ।

* विश्वाहेतत्र नरहामित्रेषुच । १०३ । नरहामित्रे षुचप्रतायेषु विश्वशब्दो दीर्घमापद्यते इतिसूत्रेण ह्यपरेविश्वशब्दस्य दीर्घः प्रा० अ० ३ ।

तिहभिरनुष्टुभिः तत्रप्रथमाग्नेयी द्वितीयेन्द्रीतृतीया लिङ्गोक्तदेवता । उदेनमुत्तरान्नय । एनं-
यजमानम् उन्नततराम् हेअग्ने । घृतेनआहुतिसंबन्धेन आहुतअभिहुत । जुहोतेरेतद्रूपं
नतुह्वयतेः रायस्पोषेणच धनस्यपुष्ट्यासंसृज । प्रजयाच बहुंपुत्रपौत्रसंकुलंकधिकुरु ॥ ५० ॥ इन्द्रेमम्
हेइंद्र एनंयजमानम् प्रतरान्नय । सजातानांचसमानजन्मनांच । असत् भवतुवशीकान्तः

उदेनमुत्तरान्नयाग्ग्नेघृतेनाहुत ॥ रायस्पोषेणसꣳसृजप्प्रजयाचब
हुङ्कधि ॥ ५० ॥ प्रतम् १०० इन्द्रेमम् ॥ इन्द्रेमम्प्रतरान्नयसजाता
नामसद्वशी ॥ समेनंव्वर्च्चसासृजदेवानाम्भागदाऽअसत् ॥ ५१ ॥ यस्यं
कुर्म्मोगृहेहविस्तमग्ग्नेव्वर्द्धयात्वम् ॥ तस्मैदेवाऽअधिब्ब्रवन्नयञ्चब्र

ईश्वरोवा । किञ्च समेनं वर्चसासृज संसृजचएनं यजमानं । वर्चसा स्वेनस्वेनकर्मणावशीना-
मुत्कर्षोवर्चः । देवानांचभागदाः असत्भवतु । यज्ञसमाप्तिंत्वत्प्रसादात्प्राप्नोत्वित्यर्थः ॥ ५१ ॥
यस्यकुर्मः । यस्ययजमानस्य कुर्मःगृहे हविः तंहिअग्नेवर्द्धय त्वंप्रजयापशुभिस्य । तस्मैदेवाअ-

धिवृत्रन् । उपरिभावेन यत्प्रशस्तंकल्याणन्तत्नुवन्तु । अयंब्रह्मणस्पतिरग्निः ॥ ५२ ॥ अग्नि-सद्यच्छति । (१) उदुत्वेतिव्याख्यातम् ॥ ५३ ॥ चित्यं गच्छन्ति । पञ्चभिर्ऋग्भिर्यज्ञांगसाधनवादिनीभिः । (२) पञ्चदिशः । देविष्टुभौ । पञ्चदिशःदैवीःदेवानांसंबन्धिन्यः यज्ञम्अवन्तुपालयन्तु ।

हमंणस्पतिः ॥५२॥ उदुत्वा ॥ उदुत्वाविश्वेदेवाऽअग्नेभरन्तुचित्तिभिः ॥ सनोभवशिवस्त्वᳪंसुप्रतीकोविभावसुः ॥५३॥ पञ्चदिशः॥पञ्चदिशोदैवीर्यज्ञमवन्तुदेवीरपामतिन्दुर्मतिम्बाधमानाः॥

स्वयंचदेव्यः । किंकुर्वाणायज्ञमवन्तु । अपामतिन्दुर्मतिंबाधमानाः । अमतिम्अमननम् अज्ञानम्अमतिः । दुर्मतिंच किञ्चरायस्पोषेधनस्यपुष्टौ । यज्ञपतिंयजमानम् आभजन्तीभागिनंकु-

(१) का० त्रिरुक्तायामुद्यम्योदु त्वेति होत्रा प्रथमायामृचि त्रिः पठितायां सत्यां प्रतिप्रस्थाता उदु त्वेति मन्त्रेण प्रदीप्तमिध्मं शालाद्वार्यादूर्ध्वं मुत्पाटयतीत्यर्थः ।

(२) का० चितां प्रतिगच्छन्ति पञ्च दिश इति ततो ब्रह्मा ऽध्वर्यु प्रतिप्रस्थातृयजमानाः पञ्च दिश इत्याद्यऋक्पञ्चकेन चितं प्रति गच्छन्ति । सर्वेषां मन्त्रपाठ इति कर्कः अध्वर्योरेवेति हरिस्वामिन इत्यर्थः

वंत्य: । रायस्पोषेच अधिउपरि । यज्ञ: अस्थात्त्तिष्ठतु । दिग्भिरेवस्थापित: अभिहुत: ॥ ५४ ॥ समिद्धे अग्नौ । असंबद्धानिवाक्यानि यद्योगातद्योगाच्च संबद्धानिभवन्ति । य: समिद्धेसम्यग्दीप्ते अग्नौप्रणीयमाने अधिमामहान: यजमानोवैमामहान इतिश्रुति: । महपूजायाम् । उपरि-भावेनदेवाना मत्यर्थंपूजक: । आत्मानम्बाहुतकृत्यं मन्यमानोग्नि मनुगच्छति । यस्यच उक्थ-

रायस्पोषेंयुज्ञपंतिमाभजंन्तीरायस्पोषेऽअधिंयुज्ञोऽअस्थात् ॥ ५४॥ समिंद्धेऽअग्नौ॥ समिंद्धेऽअग्नावधिंमामहानऽउक्थपंत्रऽईड्यो॑ गृभीतः॥तप्तंघुर्म्मम्पंरिगृह्यांयजन्तोर्ज्जायद्युज्ञमयंजन्तदेवाः॥५५॥

पत्रोग्नि: प्रणीयमान: अग्निष्टोमे उक्थानिभवन्ति तदंगभूतएवायमग्नि: । ईड्य: यज्ञिय: । गृभीत: गृहीतोधारितोध्वर्युणा यस्यचमामहानस्य तप्तंदचितंघर्मं परिगृह्यपरीशासाभ्याम् अय-जन्तऋत्विज: यस्यचऊर्जा अन्नेनहविर्लक्षणेन । यज्ञमयजन्त संगतंवाकृतन्त: देवाऋत्विज: । सोयंहुतकृत्यइतिशेष: ॥ ५५ ॥ दैव्यायधर्त्रे इहतीवापंक्तिर्वा । यस्मैअग्नये दैव्याय देवानां

संबन्धिने । धर्त्रे धारयित्रे जगतः । जोष्ट्रे योषयितृतमाय । पयोदानार्थंनीयत इतिवाक्यशेषः यस्य देवस्य श्रीः देवाय्रस्यशेषः । श्रीमनाः भक्तेभ्यः श्रियंदातुकामः। श्रीर्वायस्यमनसिवसतिः । शतपयाः । बहूनिपयांस्यन्नानि यस्यासौबहुपयाः । पद्मपरिगृह्यगृहीत्वा । देवाः ऋत्विग्यजमानाः यज्ञंकर्तुमागच्छंति । तंदेवाऋत्विग्यजमानाः देवेभ्यः यज्ञंकर्तुकामाः । देवेभ्योऽश्रद्दधन्तः अन्तरंकामयमानाः अस्युःपरिवार्यस्थिताः ॥ ५६ ॥ वीतंहविः । इहतौ । वीतम्

दैव्यायधर्त्रे ॥ जोष्ट्रेदेवश्रीश्रीमनाःशतपयाः ॥ परिगृह्यदेवा यज्ञमायन्देवादेवेभ्योऽअध्वर्यन्तोऽअस्थुः ॥५६॥ वीतंहविः ॥ शमितंशमितायजध्यै तुरीयोयज्ञोयत्रहव्यमेति ॥ ततोवाकाऽआ

कामितमिष्टमभिप्रेतम् । शमितम् सुसंस्कृतंमन्त्रैः । शमिता । शमित्रेतिव्यत्ययोवाक्यशेषात् । यजध्यै यागाय । तुरीयश्चावयज्ञोभवति । यत्रहूत्यभूतंहव्यंहविरेति । अध्वर्युः पुरस्ताद्यजूंषिजपति होतापश्चादृचोन्वाह ब्रह्मादक्षिणतोप्रतिरथं जपत्येषएवतुरीयस्तुर्यायज्ञः । ततः

तस्मात्त्वत्तादुत्थिताः वाक्याः वचनानिऋग्यजुः सामलक्षणानि। आशिषश्च नोस्मान् जुष-न्तांसेवन्ताम् यज्ञफलमस्मानालिङ्गयन्त्वित्यर्थः ॥ ५७ ॥ सूर्यरश्मिर्हरिकेशः। त्रिष्टुप्। असौ-वाआदित्यएषोग्निरितिश्रुतिः। यः सूर्यरश्मिः सूर्यसदृशरश्मिः हरिकेशः हरितवर्णकेशः। सः पुरस्तात् सवितृरूपेण ज्योतिः उदयान् उद्गच्छति। अजस्रमनुपक्षीणम्। तस्यचाग्नेः

शिषोंनोजुषन्ताम् ॥ ५७ ॥ सूर्य्यरश्मिर्हरिकेशःपुरस्तात्सविताज्ज्यो

तिरुदयाँ२ ॥ अजस्रम् ॥ तस्यपूषाप्रसवेयातिविद्वान्त्सम्पश्यन्विश्वा

भुवनानिगोपाः ॥५८॥ विमानऽएषदिवोमध्यऽआस्तऽआपप्रिवान्रो

दसीऽअन्तरिक्षम् ॥ सविश्वाचीरभिचष्टेघृताचीरन्तरापूर्वमपरञ्चके

पूषाप्रसवे याति विद्वान् । स्वमधिकारंजानानः । पशवोवैपूषेतिश्रुतिः । लक्षणया-सचाग्निर्याति। प्रणीयमानः। सम्पश्यत् विश्वाविश्वानिभुवनानि। भूतजातानि। गोपाः गोपायितासमस्तजगतः। ॥ ५८ ॥ आग्नीध्रे अश्मानंपृश्निमुपदधाति विमानएषइतिद्वाभ्यां

त्रिष्टुब्भ्यामादित्य देवत्याभ्याम्। यएषआदित्यो विमानोनिर्मीताभूतग्रामस्य। दिवोमध्येआस्ते। द्युलोकस्यमध्येआस्ते। अपप्रिवान्। प्रापूरणो। आपूरयन् रोदसीद्यावापृथिव्यौ अन्तरिक्षं च। स्वकीयेनप्रकाशेनापहृत्य शार्वरन्तमः। सविश्वाचीरभिचष्टे घृताचीरभिचष्टे घृताचीः। विश्वं हविरञ्चितमस्या मिति विश्वाचीवेदिः। घृतमस्यामञ्चनमिति घृताचीस्रुक्। वेदींश्चस्रुचश्चा-भिपश्यति। यत्तङ्कर्तुं नेतुं गृहीतुं पश्यतीत्यर्थः। अन्तरापूर्वमपरंचकेतुम्। अन्तराअन्तरेण।

तुम्॥५८॥ उक्षासंमुद्रऽ॥ उक्षासंमुद्रोऽअरुणऽसुंपर्णऽपूर्वस्ययोनिं पितुराविवेश॥ मध्ये दिवोनिहितःपृश्निरश्मा विचंक्रमेरजंसस्पा

पूर्वमिमंलोकम् अपरञ्चामुंलोकम्। किञ्च। केतुम् चितंजनानाम् तच्चसर्वमभिचष्टेभिप-श्यति। अथोयच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयते॥५८॥ उक्षासमुद्रः। यउदयकाले उक्षासेचनः समुद्रः समुन्दनोभवति तस्मिन्कालेअवश्याया अतितरांपतन्ति तदभिप्रायमेतत्। अरुणः। वर्णतोनिर्द्देशः। सुपर्णः सुपतनः।। यश्चपूर्वस्य द्युलोकस्य। योनिम् स्थानम् पितुः पितृभूतस्य। ततोहिजायमान उपलभ्यतआदित्य इतिपिताद्युलोकः आविवेशआविशति।

उदितमात्रः। यश्चमध्येद्युलोकस्य निहितः अवस्थितः। पृश्निः समस्तरश्मिसंकुलो विचित्रः। अश्माअशनो व्यापकः स्यात् सविचक्रमेंचंक्रममाणः। रजसः रंजनस्य लोकत्रयस्य। पाति। गोपायति। अन्तोअन्तान् योह्यन्तान्पातिसमध्यंपात्येव॥ ६० निधायैनमतिक्रामन्तिचतसृभिः। इन्द्रंविश्वा इतिव्याख्यातम्॥ ६१॥ देवह्वर्यज्ञः। तिस्रोनुष्टुभः। आद्येद्वेउष्णिहौवा। योदे-

च्यन्तौ॥ ६०॥ इन्द्रंविश्वाः॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्रव्यंच सङ्गिरः॥ रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पतिम्॥ ६१॥ देव ह्वर्यज्ञः॥ देवह्वर्यज्ञऽआचंवक्षत्सुम्नहूर्यज्ञऽआचंवक्षत्॥ यक्षदग्नि र्देवोदेवाꣳ॥ आचंवक्षत्॥ ६२॥ वाजस्यमा॥ प्प्रसवऽउद्ग्राभेणो

ह्वः देवान् आह्वयतियज्ञः। सअचवक्षत्। आवहतुचदेवान् यजतुचेतिचकारः समु- च्चयार्थीयः। यश्चसुम्नहूः। सुम्नमितिसुखनाम। सुखमाह्वयति यज्ञः सआवहतुचदेवान् यजतु। किञ्च यक्षत् यजतुचअग्निः देवः देवान् आचवक्षत् आवहतुच॥ ६२॥ वाज-

सामा। वाजसान्नस्य। मामाम् प्रसवः प्रसूतिरुत्पत्तिः अभ्यनुज्ञात्रा। उद्ग्राभेण उद्ग्रहणेन। ऊर्ध्वं हि गृह्यते इति उद्ग्रहणं दानं तेनेत्यर्थः। उदग्रभीत् उद्गृह्णीयात्। ह्रग्रहोर्भश्छन्दसि ह-स्येति हकारस्य भकारः। अथ अथ समनन्तरमेव सपत्नान् इन्द्रः मेमम निग्राभेण निचैर्ग्रहणेन नीचै-र्हि हस्तं कृत्वाभि त्वादिर्गृह्यते याचिष्णुतया। अनन्ततयाच। अधरान् अधोगमनान् अकः

दंग्रभीत्॥ अधांसुपत्नाँनिन्द्रोमेनिग्राभेणाधंरां२ ॥ऽअकः ॥ ६३॥

उद्ग्राभञ्च॥ निग्राभञ्चुब्रह्मंदेवाऽअंवीवृधन्॥ अधांसपत्नांनिन्द्रा

ग्नीमेंविषूचीनान्व्यस्यताम्॥ ६४॥ [ १५ ] क्रमंध्वमग्निनां॥ क्रमं

करोतु॥ ६३॥ उद्ग्राभंच। उद्ग्राभंच अस्मद्विषयंनिग्राभंच शत्रुविषयम्। ब्रह्मचवयोर्लक्षणं यत्नविषयम् देवाः अवीवृधन् वर्द्धयन्तु। अथसपत्नान् इन्द्राग्नी मेमम। विषूचीनान् विष्व-गञ्चनान् नानागतीःकृत्वा। व्यस्यतांविक्षिपन्ताम् अपुनरागमनाय॥ ६४॥ चित्यमारोहन्ति पञ्चभिः। (१) क्रमध्वम ग्निना। अनुष्टुप्। हे ऋत्विग्यजमानाः। क्रमध्वम् आक्रमध्वम्।

(१) का० क्रमध्वमग्निनेति चित्यमारोहन्ति। ते ऋत्विजः क्रमध्वमिति पञ्चभिर्मन्त्रैश्चित्याग्निमारोहन्तीत्यर्थः।

अग्निनाचित्तेन लोककालाग्न्यादिवपुषा । नाकन्दिवम् । उख्यम् । उखायांधृतम् अग्निम् उख्याम् । हस्तेषुबिभ्रतः धारयमाणाः । ततोदिवः पृष्ठमारुह्यस्वर्गलोकंगत्वा मिश्राः समानलोकस्थानायुषः देवेभिः देवैः सहस्राध्वम् आसनंकुरुतदेवीभूताः । आसेरेतद्रूपम् ध्वसमि-

दध्वमुग्निनुानाकुमुख्युꣳ हस्तेषुबिब्भ्रतः ॥ दिवस्पृष्ठꣳस्वर्ग्गत्वा मिश्राद्देवेभिराद्ध्वम् ॥ ६५ ॥ प्राचीमनु ॥ प्रदिशुम्प्रेहिंव्विद्वानुग्ने रग्नेपुरोऽअग्निर्ब्भवेह ॥ व्विश्वाऽआशादीद्यानोव्विभाह्यूर्ज्जंन्नोधेहि द्विपदेचतुष्पदे ॥ ६६ ॥ पृथिव्व्याऽअहम् ॥ पृथिव्व्याऽअहमुदन्तरिं

सकारलोपेन ॥ ६५ ॥ प्राचीमनु । त्रिष्टुप् । प्राचींदिशम् अनुप्रेहिप्रगच्छ । विद्वान् स्वमधिकारंजानानः । अग्नेः इष्टकास्थलरूपस्य । हेअग्ने: उख्यरूपप्रणीयमान । पुरोअग्निः । पुरोगामीअग्निर्भव इहयज्ञे । ततोविश्वाः सर्वाः आशाः दिशः दीद्यानः । आभासयन् विभाहि ।

विविधं दीप्यस्व । ऊर्ज्जं च नः धेहि । द्विपदे चतुष्पदे । द्विपाद्गत्रः । चतुष्पाद्गवाश्च ॥ ६६ ॥ पृथि-
व्या अहम् । पिपीलिकमध्यात्वहती । यजमानश्चाह । पृथिव्याः सकाशात् अहम् उदन्तरिक्षमा-
रुहम् ऊर्द्ध्वक्रमेण अन्तरिक्षमारूढः । अन्तरिक्षाच्चादिवमारुहम् । द्युलोकमारूढः । दिवः
नाकस्य पृष्ठमारूढः । नाकस्य पृष्ठाच्च स्वरादित्याख्यं ज्योतिः अगाम् आगतः प्राप्तोऽहं क्षिमीभूतः ।

पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ॥ दिवो नाकस्य पृष्ठात्स्वर्ज्योतिर गामहम् ॥ ६७ ॥ स्वर्यन्तः ॥ स्वर्यन्तो नापेक्षन्तऽआद्यां रोहन्ति रोदसी ॥ यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥ ६८ ॥ अ

गार्हपत्यादाग्नीध्रीयमागच्छ त्यादाग्नीध्रीया दाहवनीयमित्यादिस्मृतिः अग्नीनां लोकसंस्तवं द-
र्शयति ॥ ६७ ॥ स्वर्यन्तः । अनुष्टुप् । अत्र द्वितीयोर्द्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् ।
यज्ञं ये यजमानाः । विश्वतोधारं सर्वतोधारम् । आहुतिदक्षिणान्नानि यज्ञस्य धाराः । ताभि-
र्हि वर्षति । यद्वा विश्वस्य जगतो धारयितारम् । वैश्वानरमारुतवसोर्द्धारा वाजस्य प्रसवीयानि

धारावायज्ञस्य। सुविद्वांसः ज्ञानकर्मसमुच्चयकारिणः। थितेनिरेवितन्वन्ति। स्वर्यन्तः स्वर्लो-
कंगच्छन्तः नोपचन्ते पुनपश्चादिकृतकृत्यत्वात्। आरोहन्तिहिद्यांरोदसीदिव एतद्विशेषणम् नद्-
द्यावापृथिव्यो रभिधानम् दिवइति स्वःशब्दोपादान सामर्थ्यात् कथम्भूतां द्यामारोहंति। रोद-
सीरोधी जराम्टत्युशोकादीनाम्॥ ६८॥ अग्नेप्रेहिप्रयाहि। प्रथमः देवयताम् देवान्यष्टु-

ग्नेप्र॥ अग्नेप्रेहिंप्प्रथमोदेवयुताञ्चक्षुर्देवानांमुतमर्त्यानाम्॥ इयं
क्षणाभृगुंभिःसुजोषाःस्वर्यन्तुयजमानाःस्वस्ति॥ ६९॥ नक्तोषा
सां॥ नक्तोषासासमनसाविरूपेधापयेतेशिशुमेकं ६ समीची॥

मिच्छताम्। यस्त्वंचक्षुः देवनामपिचमर्त्यानां मनुष्याणाम्। ततस्त्वयिप्रथमंप्राप्तेसति।
इयक्षमाणाः भृगुभिः। यागंकुर्वाणाः। भृगुग्रहणमार्षेया नूचानब्राह्मणोपलक्षणार्थम्। सजोषाः
समानजोषणाश्च देवैः सन्तः। स्वर्लोकम् यन्तुयजमानाः स्वस्तिअविनाशेन॥ ६९॥ पयसा-

शु० य० सं० २९० उ० भा०

अ० १७

शिवम् २९०

भिजुहोति। (१) नक्तोषासा। व्याख्यातम्॥ ७०॥ अग्नेसहस्राक्ष। आग्नेयीविराट्। हेऽग्नेसहस्राक्ष। हिरण्यशकलैर्वा एषसहस्राक्षः। शतमूर्द्धन्। यदतः शतशीर्षोरुद्रो सृजत। यस्यचतव। शतंप्राणाः सहस्रंव्यानाः। यस्त्वं साहस्रस्य रायोधनस्य हविर्लक्षणस्य

द्यावाक्षामांकुक्कमोऽअन्तर्विभातिदेवाऽअग्निर्धारयन्द्रविणोदाः॥७०॥

अग्नेसहस्राक्ष॥ शतमूर्द्धञ्छतन्तेप्राणाःसहस्रंव्यानाः॥ त्वꣳसाहस्रस्यरायऽईशिषेतस्मैतेविधेमवाजायस्वाहा॥ ७१॥ सुपर्णोऽसि

ईशिषे। तस्मैतेतुभ्यम् विधेम। विभातिर्दान कर्मा। दत्तः। वाजाय वाजमितिविभक्तिव्यत्ययः। वाजमन्नं हविर्लक्षणाम्। स्वाहासुहुतमस्तु॥ ७१॥ स्वयमातृण्णाया मग्निंनिद

(१) का० स्वयमातृण्णामध्यग्निं धारयंश्छुक्लवत्सापयसाभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिञ्चन्नक्तोषासेति। अध्वर्युः स्वयमातृण्णेष्टकोपरि समीपे प्रतिप्रस्थाता तमग्निं धारय न्कृष्णवर्णायाः श्वेतवत्साया गोर्दुग्धेन मृन्मयदोहनपात्रे यजुर्दुस्थानोयेन स्वयमातृण्णां सिञ्चन्निध्मस्थेऽग्नौ जुहोति नक्तोषासेत्यृग्द्वयेनेत्यर्थः।

धाति। सुपर्णोसीति द्वाभ्यामाग्नेयीभ्यां पंक्तित्रिष्टुब्भ्याम् । यस्त्वं सुवर्णंवदसि । गरुत्मान् गरणवा अशनायाशरीरः। सपृष्टे पृथिव्याः सीद अस्थानं कुरु । भासाचदीप्त्या न्तरिक्षम् आपृ-

सिगुरुत्त्वमान्न्पृष्ठेपृथिव्याःसीद ॥ भासान्तरिक्षमापृणुज्ज्योतिषा दिवमुत्तंभानतेजसादिशऽउदृं*ह ॥७२॥ आजुह्वानःसुप्रतीकः ॥ पुरस्तादग्नेस्वंयोनिमासीदसाधुया ॥ अस्मिन्त्सधस्थेऽअध्युत्तर

णआपूरय । ज्योतिषाच दिवम् उत्तभान उत्स्तभान उत्तम्भय । तेजसादिशः उदृठं॰ह । तेजसाचदिशः दृढीकुरु । आदीपनार्थोवाहृंहतिः ॥ ७२ ॥ आजुह्वानः। अभिहूयमानः। सुप्रतीकः सुमुखः सन्। पुरस्तात्पूर्वस्यांदिशि। हेअग्ने । स्वंयोनिं स्थानम् आसीदअधितिष्ठ

---

* अनुस्वाररूपस्य ठं॰कारस्यार्द्धमात्रिकता भवति व्यञ्जनं चार्द्धमात्रिकमिति शास्त्रात्, तथापि प्रातिशाख्यसत्र "अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धा मात्रा पूर्वा चार्द्धमात्रेति"। "दीर्घादर्द्धमात्रा पूर्वा चाध्यर्द्धेति" द्वाभ्यां सूत्राभ्यां सार्द्धैकमात्रा प्रतिपादिता, अत एव याज्ञवल्क्यमहर्षिणा शिक्षायां गुरौ ठं॰कारे लघौ ॰ंकारे दीर्घेठं॰कारे च क्रमेणाङ्गुष्ठाङ्गुलिप्रक्षेप उक्तः। अनुस्वारेऽङ्गुष्ठत्वं पश्चाङ्गुष्ठाकुञ्चनं लघौ। दीर्घे रङ्गे च तर्जन्याः प्रसारः परिकीर्त्तित इति।

साधुया साधुक्रियाविशेषणत्वेन भुक्तव्याख्यातम् । यूयमपिच हेविश्वेदेवा: यजमानस्यसीद-
दत । अवस्थानंकुरुत । अस्मिन् सधस्थेसहस्थाने । अधियज्ञेस्वर्गाख्ये । स्वर्गोवैलोक: सधस्थ-
इतिश्रुति: । अध्युत्तरस्मिन् सर्वोत्कृष्टे । अत्रतृतीय: पाद: पश्चाद्व्याख्यायते अर्थसंबन्धात् ॥ ७३ ॥
तिस्र: समिधआदधातितिसृभि: ऋग्भि: । अत्रकएव: साविच्या त्रिष्टुभापुरस्ता ज्योतिषा धेनुं-

स्मिन्विश्वेदेवायजमानस्यसीदत ॥ ७३ ॥ ताꣳसवितु: ॥ ताꣳ
सवितुर्वरेण्यस्यचित्रामाहंवृणेसुमतिंविश्वजन्याम् ॥ यामस्यकण्वो
अदुहत्प्रपीनाꣳसहस्रधारांपयसामहीङ्गाम् ॥ ७४ ॥ त्रिधेमं

कामदोहनीं पयोययाचे । ताꣳसवितु: । तांसवितु: संबन्धिनीम् । वरेण्यस्यवरणीयस्य ।
चित्रांचायनीयाम् आवृणे आवृणोमि स्वीकरोमि । सुमतिम् कल्याणमतिम विश्वजन्याम
सर्वजनेभ्योहिताम् यांसुमतिंप्राप्य । अस्यसवितु: संबन्धिनीम् कण्व: अदुहत् । दुग्धवान्
प्रपीनांपूरितांपयसा । सहस्रधारांबहुधारां बहवोवाकुटुंबस्य धारयित्रीम् । महींमहतीं गाम्॥७४॥

त्रिधेमते। त्रिस्थानोऽग्निर्देवता त्रिष्टुप्। विधेम:। विदधातिर्दानकर्मा। दद्म:। तेतुभ्यम्। परमेजन्मन् हेअग्ने परमेजन्मनिजातायआदित्यात्मनास्थिताय। द्यौर्वाअस्यपरमञ्जन्म। विधेम-स्तोमैः स्तुतिभिः। अवरेसधस्थे स्थितायविद्युदात्मना। अन्तरिक्षंवा अवरंसधस्थम्। यस्मा-त्योनेः उत्आरिथा ऋगतौ। अस्यैतद्रूपम्। यस्माच्चस्थानादुद्गतोसि। यजे तत्स्थानमहम्

ते॥ परमेजन्मन्नग्नेविधेमस्तोमैरवरेसधस्थे॥ यस्माद्योनेरुदारिथायजेतम्प्रत्वेहवीꣳषिजुहुरे समिद्धे॥ ७५॥ प्रेद्धोऽअग्ने॥ प्रेद्धोऽअग्नेदीदिहिपुरोनोजस्रयासूर्म्यायविष्ठ॥ त्वाꣳशश्वन्तऽउपयं

एषवाअस्यस्वोयोनिः। एषद्युतिचिन्त्योऽग्निरुच्यते। किञ्च प्रत्वे हवीꣳषिजुहुरे समिद्धे। जुहोमि त्वयिहवींषि समिद्धेसम्यग्दीप्ते॥ ७५॥ प्रेद्धोअग्ने। आग्नेयोविराट्। प्रकर्षेणइद्धः दीप्तः सन् हेअग्नेभूयोपि दीदिहिदीप्यस्व। पुरः अग्रतः नोस्माकंव्यवस्थितः। एतयाअजस्रया अनुपक्षीणया। सूर्म्यासमित्काष्ठिकया। सूर्मीशब्दः काष्टवचनः। सूर्मींज्वलन्तीं वाश्लिष्यादि-

तिचश्रुतिः । ह्येयविष्ठ युवतम । यतस्त्वामेव शश्वन्तःशाश्वतिकाः उपयन्ति.उपगच्छन्ति वाजाःअन्नानि अतोदीदिहीतिसंबन्धः ॥ ७६ ॥ तिस्रआहुतीर्जुहोति । अग्नेतमद्येतिव्याख्यातम् ॥ ७७ ॥ चित्तिंजुहोमि । वैश्वकर्मणीजगत्यतिजगतीवा । चित्तिम चत्तमेषाश्चत्विग्यजन्तिस्वाजां ॥ ७६ ॥ अग्नेतम् ॥ अग्नेतमद्याश्वन्नस्तोमैःक्रतुन्नभद्रंहृदिस्पृशम् ॥ ऋध्यामात ओहैः ॥ ७७ ॥ चित्तिंजुहोमि ॥ चित्तिंजुहोमिमनसाघृतेनयथादेवा इहागमन्वीतिहोत्राऋतावृधः ॥ पत्येविश्वस्यभूमनोजुहोमिविश्वकर्म्मणेविश्वाहादाभ्यं मानानाम् जुहोमिअग्निसंबन्धंकरोमि । अग्नितत्वपरिज्ञानचिन्तनसन्तानंकरोमीत्यर्थः । मनसाच घृतेनचसह । तथाजुहोमि । यथादेवाइहागमन् इहआगच्छेयुः । कथंभूताः वीतिहोत्राः कामितयज्ञाः । होत्राइतियज्ञनामसु पठितम् । ऋताष्टधः सत्यवृधः किञ्च । पत्येविश्वस्यभूमनो जुहोमिविश्वकर्मणे । अधिपतिभूताय विश्वस्यभूतग्रामस्य । जुहोमिविश्वकर्मणे विश्वाहासर्वदा

शु० य० सं० ३९३ उ० भा०

अध्याय० १७

अष्टाख्यम् अनुपत्नीनाम् हविः ॥ ७८ ॥ सप्तवाग्नेयी । (१) सप्तते तव हे अग्ने समिधः समिन्धनाः प्राणाः यतः सन्ति । यतश्च सप्तजिह्वाः तव सन्ति । सप्तपुरुषान्संहृत्यैकीकृतोयमग्नि स्त्वदभिप्राय-मेतत् । यतश्च सप्तऋषयः तव यष्टारः सन्ति । यतश्च सप्तधामानि प्रियाणि । सप्तच्छन्दांसि प्रिया हविः ॥ ७८ ॥ सप्तते ॥ ऽअग्ने समिधः सप्तजिह्वाः सप्तऽऋषयः सप्त धामप्प्रियाणि ॥ सप्तहोत्राः सप्तधात्वायजन्ति सप्तयोनीरापृणस्व घृतेन स्वाहा ॥ ७९ ॥ [ १५ ] शुक्रज्योतिश्च ॥ चित्रज्योतिश्च स-णि तव सन्ति । यतश्च सप्तहोत्राः आग्नीध्रपर्यन्ताः । सप्तधात्वात्वांयजन्ति । अतोब्रवीमि सप्तयोनीः सप्तचितीः आपृणस्व आपूरयस्व घृतेन स्वाहा सुहुतं चैतद्धविर्भवतु ॥ ७९ ॥ मारुतान् जुहोति शुक्र-ज्योतिरिति षड्भिर्ऋग्भिः मारुतीभिः । तत्र चैकैकस्यां ऋचि सप्त मरुतः । प्रथमा उष्णिक् चतुर्थी च । द्वितीयातृतीये गायत्र्यौ । पञ्चमी जगती षष्ठी गायत्र्युष्णिग्वा । (२) शुक्रज्योतिः पुरोडाशं स्व-

(१) का० पूर्णाहुतिश्च सप्त तद्दति । स्रुचा पूर्णाहुतिश्च जुहोति घृतपूर्णया स्रुचा आहुतिः पूर्णाहुतिरित्यर्थः ।

(२) का० वैश्वानरेण प्रचर्यस्तत्रं हुतेन हस्तेन मारुतान् जुहोतीत्युपविश्य वैश्वानरे वा वैश्वानरं पृथुं कृत्वा शुक्रज्योतिरिति प्रतिमन्त्रम् विमुखे नारण्येनूच्यम् वैश्वानरपुरोडाशेन यागं कृत्वोपविश्याहवनीये हस्तेन मारुतान् पुरोडाशान् सर्वहुतान् जुहोति शुक्रज्यातिरित्यैकैकमन्त्रेणैकैकम् यद्वा वैश्वानरपुरोडाशस्योपर्येव मारुतान् जुहोति किं कृत्वा प्रथनकाले वैश्वानरं पुरोशं विस्तीर्णं कृत्वा अरण्येऽनूच्यं सप्तमं पुरोडाशं विमुखे नोग्रश्च भीमश्चेति वक्ष्यमाणमन्त्रेण जुहोतीत्यर्थः ।

शिवम्

३९३

मंशंभक्षयतु । चित्तज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च । शुक्रश्चऋतपाश्चात्यंहाश्च । अथैकपदनिरुक्तम् । शुक्लंज्योतिर्यस्य शुक्रस्येववाज्योतिर्यस्य सशुक्रज्योतिः । चित्रं ज्योतिः सत्यंज्योतिः । ज्योतिष्मान् ज्योतिषातद्वान् । शुक्रःशुक्लः ऋतपाःसत्यंयज्ञं वापाति । अत्यंहाः अतीत्यअंहःपापंयतंतद्भूत्यत्यंहाः ॥८०॥ ईदृङ्च । अनेनानेनच समानदर्शनः ईदृङ् । ईदृङ्च ।

त्यज्ज्योतिश्चज्योतिष्माँश्च ॥ शुक्रश्चऽऋतपाश्चात्यंहाः ॥८०॥

ईदृङ्चं ॥ ईदृङ्चान्यादृङ्चंसदृङ्चप्रतिसदृङ्च ॥ मितश्चसम्मितश्चसभराः ॥८१॥ ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्ता

पुरोडाशस्य स्वमंशंप्रतिगृह्णातु । अन्यादृङ्च । अन्येनान्येनच समानदर्शनः अन्यादृङ् । सदृङ्च प्रतिसदृङ्च । तेनतेनसमानदर्शनः सदृङ् । तंतंप्रतिसदृशः प्रतिसदृङ् । मितश्च-उत्तमाधममध्यमे स्तुत्यः मितः । संमितश्चएकीभावेन मितः संमितः । सभराश्चसहविभर्तिस-भराः ॥८१॥ (१) ऋतश्च । ऋतश्चस्वमंशं पुरोडाशस्य प्राश्नातु । (२) सत्यश्च (३) ध्रुवश्च

(१) ऋतः सत्यरूपः । (२) सति वस्तुनि भवः सत्यः । (३) ध्रुवः स्थिरः ।

(१) धरुणश्च । (२) धर्ता च (३) विधर्ता च विधारय: विविधं धारयतीति विधारय: । ऋजु: ॥८२॥
(४) ऋतजिच्च । (५) सत्यजिच्च । (६) सेनजिच्च । (७) सुषेणश्च शोभनसेनश्च । (८) अन्तिमित्र
आसन्नमित्र: । (९) दूरेअमित्रश्चगण: (१०) ऋजु: ॥ ८३ ॥ ईदृक्षास: । व्यवहि-

च॑ विधुर्त्ता च॑ विधारयः ॥८२॥ ऋतजिच्च॑ ॥ सत्यजिच्च॑ सेनजिच्च॑ सुषे
णश्च॑ ॥ अन्तिमित्रश्च दूरेऽअमित्रश्च गुणः ॥८३॥ ईदृक्षासऽए
तादृक्षासः ॥ ईदृक्षासऽएतादृक्षासऽऊषुणः सदृक्षासुः प्रतिसदृक्षा

तपदप्रायोयंमंत्र: साहश्येनावसवत: स्तूयन्ते । येयूयम् ईदृक्षास: । ईदृग्दर्शना: सर्वएव । येच
एतादृक्षास: एतद्दर्शना: सर्वएव । ऊषुण: तीर्णिपदानि । छन्द: परिपूर्त्तिंकुर्वंति । येचयू-

(१) धरुण: धारक: (२) धारयतीति धर्ता । (३) विशेषेण धारयतीति विधर्ता । (४) उष्णिक् ऋतं यज्ञं जयतीति ऋतजित् ।
(५) सत्यं यातातथ्यं जयतीति सत्यजित् । (६) सेनां शत्रुसैन्यं जयतीति सेनजित् ह्रस्व आर्ष: । (७) शोभना
सेना यस्य सुषेण: । (८) अन्ति समीपे मित्राणि यस्य स: अन्तिमित्र: । (९) दूरे अमित्रा: शत्रवो यस्य स दूरेअमित्र:
प्रकृतयान्त:पादमिति सन्ध्यभाव: हलदन्तात्सप्तम्या इति विभक्त्यलोप: । (१०) गणयति सर्वमिति गण: ।

शु० य० सं० ३९४ उ० भा०

अ० १७

शिवम्

यंसदृक्षास: समानदर्शना: सर्वएव। येचयूयंप्रतिसदृक्षास: प्रतिसमानदर्शना: सर्वएव। येच-
यूयंमितास: मित: प्रमाणत: सर्वएव। येचयूयंसम्मितास: सङ्ख्यमिता: सर्वएव। येचयूयंस-
भरस: समानमलङ्कारादिविभृत:। तान्ब्रवीमि। एतन्नोअद्यमरुतो यज्ञेअस्मिन्। एतन-
आगच्छन्तिन: अस्माकम् अद्यअस्मिन्द्यवि।। हेमरुत: यज्ञेअस्मिन्। एवंव्यवहितानिपदानि

सऽएतंन॥ मितासंश्चचसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअ
स्मिन्॥८४॥ स्वतंवाँश्चच॥ प्रघासीचसान्तपनश्चचगृहमेधीच॥
क्रीडीचशाकीचोज्जेषी॥८५॥ इन्द्रन्दैवी:॥ इन्द्रन्दैवीर्विशोमरुतो

पश्चात्सर्वै रेवसंबन्धनीयानि॥ ८४॥ स्वतवांश्च। स्वकीयंतवोवलंयस्य सस्वतवान् स्वतवाश्च
स्वमंशं पुरोडाशस्य भक्षयतु। प्रघासीच। घस्लृअदने। प्रकर्षेण अदनशील:। सान्तपनश्च
गृहमेधीचक्रीडीच। पञ्चचातुर्मास्यदेवता:। शाकीचशक्त: उज्जेषीच उज्जयनशील:॥ ८५॥
इन्द्रं दैवीरितिमारुतं यजुर्जपति। इन्द्रं राजानं दैवी: विश: मरुतो मरुल्लक्षणा:। अनुव-

र्त्मानः अनुपश्चात् वर्त्मवर्तनं यासांता अनुवर्त्मानः अनुगामिन्यइत्यर्थः। अभवन्। स्वरूपाख्यानमेतत्। यथाइन्द्रं दैवीः विशः अनुवर्त्मानः अभवन् उपमानम्। एवम् इमंयजमानम् दैवीश्चविशः मरुतः मानुषीश्चविशः मनुष्याः अनुवर्त्मानः अनुगामिन्यः भवन्त्विति प्रार्थना ॥ ८६॥ इमᳬस्तनम्। त्रयोदशाग्नेयीस्त्रिष्टुभो यजमानं वाचयति। घृतस्तुतिश्चदृश्यते-

नुंवर्त्मानोभवन्यथेन्द्रन्दैवीर्व्विशोमरुतोनुंवर्त्मानोभवंन् ॥ एवमिमंयजंमानन्दैवीश्चवुिशोमानुषीश्चचानुंवर्त्मानोभवन्तु ॥ ८६॥

[ ७ ] इमᳬस्तनंम् ॥ इम ᳬ स्तनमूर्ज्जंस्वन्तन्धयापाम्प्रपीनम

वसो धीरानन्तरस्थाविष्यति तदभिवादिन्योवा। वसोर्द्धाराखुचाह्वयते सात्वरूपकल्पनयास्तनउक्तः। इमंस्रुग्लक्षणंस्तनम् ऊर्जस्वन्तंबलवन्तम् धय। धेटपाने। पिब अपांप्रपीनम् अपशब्देनात्र-घृतमुक्तंसादृश्यात्। यद्वा अथापितद्वितेनक्षत्रवन्निगमाभवन्तीति क्षत्रवन्निगमः। घृतप्रपूरितम् हेअग्नेसरिरस्यमध्येवर्तमान। इमेवैलोकाःसरिरमितिश्रुतिः। एषुलोकेषु मध्येवर्तमानः। किञ्च

उत्संजुषस्वउत्स्यन्दनं सुग्लत्तणां कूपस्वास्य सेवस्व । मधुमन्तंमधुस्वादेनरसेन युक्तम् । हेअर्वन् । ऋतगतौ अस्यैतद्रूपम् हेअरणासर्वतोगत । किञ्च । समुद्रियम् समुद्रसम्बन्धिनम् सदनं गृहम् । आविशस्वसेवस्व । वयोहवैसमुद्राअग्निर्यजुषां महाव्रतंसाम्नां महदुक्थम्ऋचा मित्येतदभिप्रायम् । अन्तरिक्षंवासमुद्रः ॥ ८७ ॥ घृतम्मिमिक्षे । योयमग्निस्तंमिमिक्षे ।

ग्ग्नेसरिरस्यमद्ध्ये ॥ उत्संजुषस्वमधुमन्तमर्वन्त्समुद्रियु सदनमा विशस्व ॥ ८७ ॥ घृतम्मिमिक्षे ॥ घृतमस्ययोनिर्घृतेश्रितोघृत म्म्वस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्य

घृतमुदकमाज्ञति परिणामभूतम् । मिमिक्षे सिञ्चामि । अथवा । यस्यास्याग्ने संवेष्टतं मिमि-क्षेसिञ्चामि । घृतञ्चास्य योनिरुत्पत्तिस्थानम् । अग्निर्यस्मैयोनेरसृज्यततत्रघृतमुत्वमासीदित्ये-तदभिप्रायम् । यस्मायं घृतेश्रितः अवस्थितः । यस्त्रचास्यघृतमेवधाम तेजः । दीप्तिर्ना-मवा । तमग्निम् अनुष्वधमावह । हेअध्वर्यो अनुस्वधम् अन्वन्नम् पूर्वमन्नमुपकल्प्यपश्चादा-

ह्वय। आहूयचमादयस्व तर्प्पय। तर्पयित्वा चैवंब्रूहि। स्वाहाकृतम्। स्वाहाकारेणाभिहुतम्। हेऽष्टषभवर्षित:। वह्निहव्यम् हवि: देवानां वहन च हविषामावाहनं च देवतानामित्यग्ने: कर्मणी ॥ ८८ ॥ समुद्रादूर्मि: अन्नाध्यासेन घृतमन्नस्तूयते प्राणाध्यासेनवाग्नि:। तस्मात्समुद्रात् घृतमयात् अक्षीणत्वात् घृतस्यसमुद्रेनोपमानम् अन्नदेवताभिप्रायंवा माध्वनुपक्षीणेव। ऊर्मि: महाराशि: घृतकल्लोल:। मधुमान् रसवान् उदारत् उद्गच्छत्। उद्गत्यच-

म् ॥८८॥ समुद्रादूर्म्मिः॥ समुद्रादूर्म्मिर्म्मधुमाँ२॥ उदांरुदुपाᳬशुनास
मंमृतुत्वमांनट् ॥ घृतस्युनामुगुह्यंय्यदस्तिंजिह्वादेवानांमुमृतंस्यु

उपांशुना सममृतत्वमानट् उपसंव्याप्नोत्। अंशुना। प्राणेनजगत्प्राणभू तेनाग्निनाएकीभूय अमृतत्त्वममरणधर्मित्त्वम् प्राणस्यान्नं चैकीभूया मृतत्त्वं प्राप्नुतद्रूत्यर्थ:। तस्यघृतस्यनामगुह्य मविज्ञातमविद्वद्भि: स्तुतिमन्त्रपदैर्पठितं यदस्तितत् अहंवेद्मि। जिह्वादेवानाम् अत्यभिलाषाजिह्वास्थाननिमितं देवानाम्। अग्नेर्जिह्वासीति यदावाएतदग्नौ जुहृत्य थाग्ने र्जिह्वाद्रूवोत्तिष्ठन्तीति यच्चसर्वप्रकाशन्तदप्यहंवेद्मि। अमृतस्यनाभि: अमरणधर्मित्त्वस्य नहनम्बन्धनम्

योऽहि घृतमश्नाति स दीर्घायुर्भवति । यद्वा अद्भ्ये नसत्वं सूयते अद्भ्येन घृतं मन्त्रस्य समुद्रात् अग्निकात् यज्ञः समुद्रात् यः ऊर्मिः शब्दसंघातः । नामख्यातोपसर्गनिपातलक्षणः उपमोत्प्रेक्षारूपकाद्यलंकारोपेतः । मधुमान् रसवान् वाक्यगुणैर्युक्तः । उदारत् उद्गान्मुखतः । सएव उपांशुनासवनेन क्रियमाणः । तदेतत् यजुरुपांशु स्वनिरुक्त मितिवचनात् । संप्राप्नोदमृतत्वम् अतोग्निविद्भिः

नाभिः ॥८६॥ वयन्नाम ॥ वयं नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे

* धारयामानमोभिः ॥ उपब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोवमी

प्रकाशनीयः । घृतस्यनामगुह्यं यदस्तितदपिजिह्वास्थाननिमित्तं देवानां किंस्तुतस्माद्धोमः । अथास्यघृतकीर्त्तावेवाग्निर्वैश्वानरो जज्वालेत्येतदभिप्रायं वचनम् । अमृतत्वस्यचनाभिः नहन यजमानानाम् अतोग्निचिद्भि हूयते सूयतेच ॥ ८६ ॥ वयंनाम । यतोनामोच्चारण मपि-प्रियन्देवाना मतो वयंनामप्रब्रवाम घृतस्यअस्मिन्यज्ञे । धारयामचयज्ञंनमोभिः हविर्भिः । किञ्च

* धारयोम योजाव सचस्व नुद मोषुजयतोरुथ रक्षयज यच्छमत्सय गायता तुयेन नकारे एतेऋस्वा नकारप्रत्ययेदीर्घोम पद्यते इति सूत्रेण धारयामानमोभिरि तत्रदीर्घः प्रा० अ० ३ । सू० १०८ ।

उपस्तरणाच्चैतत् स्तोत्रं ब्रह्माऋत्विक् शस्यमानम् । यथाचतुःशृङ्गःयज्ञः । ऋत्विजोस्यशृङ्गाणि । अवमीत्उद्गिरति । यज्ञपरिणामाभिप्रायम् गौरः गौरवर्णः एतत्घृतम् ॥ ९० ॥ चत्वारिशृङ्गाः । चतुःशृङ्गोवमीदित्युक्त्वा अधुनाचतुःशृंगंयज्ञंवृषशब्दं वृषभंप्रतिपादयितुमाह । यस्यास्यचत्वा-रिशृङ्गाणि । ब्रह्मोद्गातृहोत्रध्वर्य्वाख्यानि यस्यचास्यत्रयः पादाः ऋग्यजुःसामलक्षणाः । यस्य-चास्यद्वे शीर्षे हविर्धानप्रवर्ग्याख्ये । यस्यचास्यसप्तहस्ता सप्तहोतारोहस्ताइवव्याप्रियन्ते । यद्वा सप्त-

**गौरऽएतत् ॥ ९० ॥ चत्वारिशृङ्गा ॥ चत्वारिशृङ्गास्त्रयोऽअस्यपादा द्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोम**

छन्दांसिहस्ताइव । यस्त्रिधात्रिः प्रकारं संबद्धः प्रातः सवनमाध्यन्दिनतृतीयसवनैः । वृषभोव-र्षिता । रोरवीति स्वशब्दे । अत्यर्थंशब्दंकरोति । सोयंमहोदेवः महोदेवोमहान्देवः हिरण्यग-र्भस्तंबपर्यन्तानां प्राणिनामुपजीव्यः । ज्ञानकर्मसमुच्चयकारिणांशरीरभूतः । मर्त्यान्मनुष्यान् आवि-शति । शब्दग्रामोवाभिधेयः । चत्वारिशृंगाणिनामाख्यातोपसर्गनिपाताः त्रयोस्यपादाः प्रथम-पुरुषमध्यमपुरुषोत्तमपुरुषाः । द्वेशीर्षेनामाख्याते । सप्तहस्ताः सप्तविभक्तयः । त्रिधाबद्धः एकव-

चनद्विवचनवङ्कवचनैः। दृषभद्वामर्षादन्यानिशास्त्रा स्वधः पदीङ्गत्वरोरवीति। यउक्तगुणः सोयमृचान्देवोमत्र्यान् आविशतिप्रतिपादयति ॥ ६१ ॥ त्रिधाहितम्। यज्ञपरिणामभूतं यथा-घृतं तथात्रिधानिहितं स्थापितमेषुलोकेषु। पणिभिः सुरैः। गुह्यमानं गुप्यमानम्। गवि-देवाः घृतम् अन्वविन्दन् आनुपूर्व्यालब्धवन्तः। यत् तस्यघृतस्य इन्द्रः एकं भागंजजान

त्यो२ँ ॥ आविवेश ॥ ६१ ॥ त्रिधाहितम् ॥ त्रिधाहितम्पणिभिर्गुह्य मानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएकुंसूर्य्यऽएकंजजानवे नादेकंस्वधयानिष्टतक्षुः ॥ ६२ ॥ एताऽअर्षन्ति ॥ एताअर्षन्तिहृ

जनयति। तेवाएते आहुतोहुते उत्क्रामतस्ते अन्तरिक्षमाविशत इत्यादिश्रुतिरिन्द्रस्य जन-कत्वं दर्शयति। सूर्यएकं भागंजनयति। तेततउत्क्रामतः तेदिवमाविशन्त इत्यादिश्रुतिः सूर्यस्य-जनकत्वं दर्शयति। वेनात् अग्नेर्यज्ञसाधनभूतात् एकंभागंस्वधयान्नेनाहुतिलक्षणेन निष्टतक्षुः निष्कर्षितवन्तः द्विजातयः। यस्ततः पुत्रोजायतेसलोकः प्रत्युत्थायीत्येतदुक्तंभवति ॥ ६२ ॥

एताअर्षन्ति । ऊर्मयः याएतावाचः अर्षन्तिउद्गच्छन्ति । हृद्यात् समुद्रात् अन्तोदकात्लुतादेव । तायाथात्म्यचिन्तन सन्तानगर्भान्निगमनिरुक्त निघंटुव्याकरण शिक्षाच्छन्दोभिः परिपूरिताः शब्दव्रजाः । बहुगतयोबह्वर्थाः । याश्चैताअर्षन्त्या रिपुणाः कुतार्किक वृन्दशत्रुसंघातेन । नावचक्षेनापवदितुं शक्याः । ताः घृतस्येवधारा देवानांतृप्तिकराः । अभिचाकशीमि । अह-मभिगच्छामि । हिरण्मयश्च वेतसोग्निः मध्येआसांवाग्व्यक्तीनांविद्यमानं चाकशीमि । अह-

द्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमि हिरण्ययोवेतसोमध्यऽआसाम् ॥ ९३ ॥ सम्यक्स्रवन्ति ॥ सरितो

मभिगच्छामि । हिरण्मयोवेतसोग्नि राहवनीयाख्यः । मध्येआसांवाग्व्यक्तीनां विद्यमानं चाक-शीमि । अग्निर्हिवाचामधिष्ठात्रीदेवता । यद्वा घृतस्यधारा एवोच्यन्ते । याएताअर्षन्तिगच्छन्ति हृद्यात्समुद्रात् । हृदयेनहि संकल्प्यपश्चात् यजंतेताएवमुच्यन्ते । शतव्रजाबहुगतयः । याश्चै-तारिपुणा शत्रुणायज्ञपरिपन्थिना नावचक्षे नावदृष्टुंशक्यन्ते ताः घृतस्यधारा अहमभिचा-कशीमिपश्यामि । यस्मायंहिरण्मय योवेतसोग्निराहवनीयाख्यो मध्येआसांव्यवतिष्ठति तम-

प्यहं पश्यामि । याथात्म्यतोहन्द्रव्यं देवतां च पश्यामीत्युक्तं भवति ॥ ९३ ॥ सम्यक् । याएताःसाधुस्र वन्ति सरितोनधेनाः नद्यइवानवच्छिन्नोदक सन्तानप्रवद्धाः । धेनावाचः धेनाइतिवाग्नामसुपठितम् । अन्तर्हृदामनसा पूयमानाः अन्तर्व्यवस्थितेन हृदयेन परिपयस्थानो येनमनसाचपूयमानाः विविच्यमानाः शब्ददोषेभ्यः । तास्त्रग्निमेवस्तुवन्तीतिशेषः । येचैतेअर्षन्ति गच्छन्ति ऊर्मयः संघाता

नधेनाऽअन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ॥ ९४ ॥ सिन्धोरिवप्राध्वने ॥ सिन्धोरिवप्राध्वनेशूघनासोवातप्रमियःपतयन्तियह्वाः ॥ घृतस्यधाराऽअरु

घृतस्य स्रुक्परिभ्रष्टा मृगाइवक्षिपणोः व्याधात् ईषमाणाः प्रपलायमानाः । तेप्यग्निम्प्रायन्तीतिशेषः । एतदुक्तम्भवति । श्रुतिश्चद्रव्यं चाग्न्यर्थमेव ॥ ९४ ॥ सिन्धोरिव । याएताः सिन्धोरिवनद्याः प्राध्वने प्रगतोध्वा प्राध्वःमहोदकप्रपातः तस्मिन्महोदकप्रपाते शूघनासः शूघइति क्षिप्रनाम । हन्तेर्गत्यर्थस्य घनः क्षिप्रगमनाः वातप्रमियः तरङ्गवीयः पतयन्ति । स्वार्थेणिच्च

प्रपतन्ति । यद्वा: महत्य: । शुक्रत्वात्परिभ्रष्टा: घृतस्य धारा: ताश्चपतन्तीरस्मात्यग्नि: । कद्-वेत्यतआह । अरुषोनवाजी । नकारउपमार्थीय: । यथा अरोचने जात्योदिभि रुत्कृष्टो वाजीवेजनवान् अश्व: । पुनरप्यश्वंविशिनष्टि । काष्ठाभिन्दन् । अजरं तान् विदारयन् ।

षोनवाजीकाष्ठाभिन्दन्नूर्मिभिःपिन्वमानः ॥ ९५ ॥ अभिप्रवन्त ॥
अभीप्रवन्तुसमनेवयोषाःकल्ल्याण्यु: * स्मयमानासोऽअग्निम् ॥

ऊर्मिभि: पिन्वमान: । आज्यन्तविभेदनअसयोगाचस्वेदोदकोर्मिभि: पिन्वमान: प्रसिञ्चनभू-मिम् । यथैतद्गुणविशिष्टोऽश्वोस्माति एवमग्निरप्यस्मातीतिवाक्यार्थ: । ननु हीनोपमानमग्ने रश्व: ज्यायांस्तत्र गुणोभिप्रेत: इतिपरिहृतं यास्केन ॥ ९५ ॥ अभिप्रवन्त । अभिनमन्त्यो-

---

* अयोगवाहा विज्ञेया आश्रयस्थानभागिन इति । पाणिनीय शिक्षायामुक्तत्वादेकमात्रिकस्याग्रे एकमात्रिको विसर्ग: प्राप्त: परन्तु स्थानत्वेन विभाग: कृत: पाणिनिनानतूच्चारणत्वेन उच्चारणं तु विसर्गस्य नान्तरीयकार्धमात्राकालापेक्षया किंचिदधिकमवसानं कृत्वाऽग्रिमवर्णोच्चारणं कार्यमितरदोष: अत्रापि कश्च न विशेष उक्तो महार्षिणा भगवता योगियाज्ञव-ल्क्येन । ऊर्ध्वं चेपाच यत्रोष्मा अधःचेपाच यो भवेत् एकैकामुत्सृजेद्वोर: स्वरिते तूभयं क्षिपेत् द्विमात्रिके भवेदेकां मात्रिके

यन्ति प्रह्वीभवन्ति। कापुनस्ताः। घृतस्यधाराः। कमभिप्रह्वीभवन्ति। अग्निम्। कथ-मिव। समानमनस्काइवयोषाः। एकभर्तारंप्रति संगतमनसः। कल्याण्यः रूपयौवनसंपन्नाः। स्मयमानाः। स्मिङ्ईषद्धसने। ईषद्धसमानाः। समिधः समिन्धनाः। इत्थंभूताधाराअग्नि-मभिप्रह्वीभूय। ततस्तमेवाग्निं नसन्त। नसतिराप्नोतिकर्मावा नमतिकर्मावा। व्याप्नुवन्ति।

घृतस्यधाराऽसुमिधोनसन्तताजुषाणोहर्यतिजातवेदाऽ॥ ९६॥ कन्याऽइववहतुमू॥ कन्न्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभि

ताश्चधाराः जुषाणः हर्यतिजातवेदाः। हर्यतिः प्रेप्साकर्मा। प्रेप्सतिप्रतिकामयते। नामग्र-ग्रहणं शक्तिपरिहाणमस्तीत्यभिप्रायः। जातप्रज्ञानोऽग्निः॥ ९६॥ कन्याइव। याएताः कन्या-इव नवपरिणीताइव। वहतुम् वोढारं भर्त्तारम्। एतवै। एतुगमनाय। अञ्जिप्रजननम्। अञ्जनाऽव्यक्तं कुर्वाणाः। अभिचाकशीमि अभिपश्यामि। ताः घृतस्यधाराः यत्रसोमाभिषूयते

---

तूभयं क्षिपेत् स्वरितं यज्ञवेल्किञ्चिद्विकारसह संयुतम् तत्रोऽपि विजानीयान्निक्षेप उभयोरपि कर्त्तव्यस्तूभयोः क्षेप वायव्यै-रिति दर्शनम्। जातेर च स्वरिते चैव यकारो यत्र दृश्यते। कर्त्तव्यस्तूभयोः क्षेपाःसदस्यैरितिनिदर्शनम्।

यत्रचसोमाभिषवस्थाने यत्रसोमःसूयते अभितपवन्ते । तत्र गच्छतेत्यर्थः । अभितःप्रवन्ते अभिगच्छन्ति यज्ञसहचरिताघृतस्यधारा इत्यभिप्रायः ॥ ९७ ॥ अभ्यर्षत । हेदेवा अभ्यर्षत अभ्यागच्छत । एतांसुष्टुतिम् शोभनांस्तुतिम् । एतं चगव्यमाजिम् गोविकारैर्घृतैर्जनितंगव्यम् आजिमान मनमभ्यागच्छत । अभ्यागत्यच अस्मासु भद्राभद्राणि द्रविणानिधनानि । छत्तस्थापयत दत्तवा

चांकयोमि ॥ यत्र सोमः सूयते यत्र युज्ञो घृतस्य धारा अभितः पवन्ते ॥ ९७ ॥ अभ्यर्षत ॥ सुष्टुतिं गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयुज्ञन्नयतदेवतानोघृतस्यधारामधुमत्पवन्ते॥ ९८ ॥ धामन्ते॥ धामन्तेविश्वम्भुवनमधिश्रितमन्तःसमुद्रे हृद्यन्तरायुषि ॥ अपा

क्षिन्त्र । इमंयज्ञं नयत तत्र देवादेवत्वं नः अस्माकम् अस्माभिर्योदेवलोकोजितइत्यर्थः । यास्नै-ताघृतस्य धारामधुमत्पवन्ते मधुसंयुक्तंपवन्ते तास्वास्मज्जितंलोकम् नयतेत्यनुवर्तते ॥ ९८ ॥ धामन्ते । तव आहुतिपरिणामभूत मिदंजगत् ब्रह्मादिस्तम्बपर्यन्तम् मन्यमानआह । धामं

धामानिविभूत्यांतेतव विश्वंभुवन भूतजातमधिश्रितम् अध्याश्रितम् यच्चान्तः समुद्रे समुद्रस्य-
मध्ये किञ्चित् यच्चआयुषि किञ्चिदपि धामानितव अधिश्रित मित्यनुवर्तते । यतएवम् । अतस्त्वा-
ब्रवीमि । अपामनीके सुखेवर्तमानो यजमिराहृतः । समिथेसंग्रामेच पणिभिः सहवर्तमा-

मनीकेसमिथेयऽआभृतस्तमश्यामुमधुमन्तन्तऽऊर्म्मिम् ॥९९॥ [१३]

इतिसंहितायांदीर्घपाठेसप्तदशोध्यायः १७ ॥

नोय ऊर्मिराहृतः । तदुक्तम् पणिभिर्गुह्यमानमिति । तम् अश्याम: भक्षयामः । व्याप्नुयामवा
मधुमन्तम् रसवन्तम् तेतवसंबन्धिनम् हेघृत हविः परिणामिनोरसस्य वयंभोक्तारोभवेम ।
देवत्वंप्राप्नुयामेति वक्रोक्त्याप्रार्थ्यते ॥ ९९ ॥

इतिउव्वटकृतौमन्त्रभाष्येसप्तदशोध्यायः १७ ॥

(१) इतउत्तरं वसोर्धारिकाणि यजूंषि सप्तविंशतिकण्डिकाः। (२) वाजश्चमे वाजःअन्नञ्चमे। प्रसवःअन्नदानविषयाभ्यनुज्ञादीयतां भुज्यतामिति। प्रयतिश्चमे प्रसितिश्चमे प्रयतनं प्रयतिःआत्मा

* व्वाजश्चमे॥ मेप्रसुवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमे

प्रसयनं प्रसितिः। तन्तुर्वीजालंवा तेनचाचबन्धनं स्नेहउपलच्यते। धीतिश्चमेक्रतुश्चमे। ध्यैचिन्तायाम्। तस्यधीतिःसंप्रसारणंछान्दसम्। क्रतुःसंकल्पः संस्कारोवा स्वरश्चमेश्लोकश्चमे।

(१) सप्तदशेऽध्याये चित्यारोहणादिमन्त्रा उक्ताः इदानीमष्टादशेऽध्याये वसोर्धारादिमन्त्रा उच्यन्ते।

(२) का० वसोर्धारां जुहोतौदुम्बर्या पञ्चगृहीतंठ० सन्ततं यजमानोऽरण्ये नूचांऽग्निप्राप्ते वाजश्च सद्गतपष्टानुवाकेन अस्यार्थः। ततो यजमान आज्यं संस्कृतपाथपरिमाणया महतौदुम्बर्या स्रुचा महता स्रुवेण पञ्चवारं गृहीतमाज्यमरण्ये नूचं पुरोडाशे तदुपरि सन्ततमविच्छिन्नधारं यथा तथा वसोर्धारासञ्ज्ञामाहुतिं जुहोति। इतेऽग्निप्राप्ते सति वाजश्चेतपादिहोमसन्धारभ्यः कार्योऽष्टाभिरनुवाकैर्वाजश्चेतपादिवित्स्वाहान्तैरेकोनत्रिंशत्कण्डिकात्मकैः।

* वाजःसत्यमूर्क्चतुष्काश्चश्चा ग्निस्त्रिकावठं०शुःपंचैकाचतस्रोवाजायह वाजस्यन्वष्टा इताषट्त्रयो दशाग्निंयुनज्मीसप्तयदाकूताद्दात्र इतपायदश्कोत्रयोदशसप्तसङ्गतिः।

साधुशब्दःस्वरः श्लोकःगद्यपद्यबन्धः । श्रवश्चमेश्रुतिश्चमे श्रवोवेदोमंत्राः । श्रुतिर्ब्राह्मणम् । ज्योतिश्चमेस्वश्चमे । ज्योतिरादित्यादिः स्वर्द्युलोकादि । द्यौद्यौकामौसंयुनक्ति अव्यवच्छेदाय यथा व्योकसौसंयुज्यादेवमितिश्रुतिः । द्यौद्यौकामावभिरूपौ संयुनक्ति । चकारेणसमुच्चिनोति अव्यवच्छेदाय अनुपक्षयाय । यथा कश्चिद्विजोतिर्व्योकसौसंयुज्यात् । ओकइतिनिवासनाम ।

मेक्रतुंश्चमेस्वरंश्चमेश्लोकंश्चमेश्रवश्चमेश्रुतिंश्चमेज्योति श्चमेस्वश्चमेयज्ञेनंकल्पन्ताम् ॥ १ ॥ प्राणश्चमे ॥ मेपानश्चमे

विगत ओकोगृहं ययोःकुमारीकुमारयोःतौव्योकसौ नानागृहनिवासिनौ संयुज्यात् तयो-र्विवाहंकुर्यात् । एवं चकारेण समुच्चिनोति । यज्ञेनकल्पन्ताम् वाजप्रभृतीनिचकार समुच्चि-तानि मम यज्ञेनकल्पन्तां समर्थाभवन्तु । यज्ञेग्निंतर्पयन्तु अभिषिञ्चन्तुवा । अनेनचत्वाप्रोक्षा-म्यनेनच अनेनचत्वाअभिषिञ्चाम्यनेनचेत्यस्याः श्रुतेरभिप्रायेणव्याख्यातम् । अथोइदञ्चमे देही-दंचम इत्यस्याःश्रुते रभिप्रायेण व्याख्यास्यामः । वाजप्रभृतीनि चशब्दसमुच्चितानि मम यज्ञे-

नानेन कृतानि भवन्तु यज्ञोऽस्मभ्यमेतेषां दाताभवत्वित्यर्थः । एवमस्माभि र्दिङ्मात्रप्रदर्शनं

व्यानश्च मेऽसुश्च मे चित्तं च मऽआधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च मे यज्ञेन कल्पन्ताम् ॥ २ ॥ ओजश्च मे सहश्च मऽआत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थीनि च मे परूंषि च मे शरीराणि च मऽआयुश्च मे जरा च मे यज्ञेन कल्पन्ताम् ॥ ३ ॥ ज्यैष्ठ्यं च मऽआधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्रा

कृतं मंत्रव्याख्यायाः ॥ १ । (१) २ । ३ ॥

(१) प्राणः ऊर्ध्वसञ्चारी शरीरवायुः । अपानः अधोवृत्तिर्वायुः । व्यानः सर्वशरीरचरः । असुः प्रवृत्तिमान्वायुः । चित्तं मानसः सङ्कल्पः । आधीतं बाह्यविषयज्ञानम् । वाक् वागिन्द्रियम् । मनः प्रसिद्धम् । चक्षुरिन्द्रियम् । श्रोत्रं श्रवणेन्द्रियम् । दक्षः ज्ञानेन्द्रियकौशलम् । बलं कर्मेन्द्रियकौशलम् । एतानि यज्ञेन मे कल्पन्ताम् ।

घृमाचमेश्रृद्वश्चमेश्रुद्विश्चमेसुण्ग्रेनकल्पन्ताम् ॥ ४ ॥ सुत्यञ्च ॥ मेश्रुद्धाचमेजगच्चमेधनञ्चमेश्विश्वञ्चमे महश्चमेक्रीडाचमेमोदश्चमेजातञ्च मेजनिष्यमाणञ्चमेसूक्तञ्च मेसुकृतञ्च मेसुज्ञेन कल्पन्ताम् ॥५॥ ऋतञ्च ॥ मेमृतञ्चमेयक्ष्मञ्च मेनामयच्चमेजीवा

सुगमव्याख्यानम् । (१) ४ । (२) ५ ।

(१) ज्यैष्ठस्य भावो ज्यैष्ठ्यं प्रशस्तत्वम् । अधिपतेर्भाव आधिपत्यम् स्वामित्वम् । मन्युः मानसः कोपः । भामोऽधिक्षेपादिलिङ्गको वाह्यः कोपः । न मीयत इत्यमः अपरिमेयत्वमन्यैरियत्तया परिच्छेत्तुमशक्यत्वम् । अम्भः शीतमधुरं जलम् । जेमा जयस्य भावो जयसामर्थ्यम् । महतो भावो महिमा महत्त्वं सम्पत्त्यादिना । उरोर्भावो वरिमा प्रजादिविशालता । पृथोर्भावः प्रथिमा गृहक्षेत्रादिविस्तारः । वृद्धस्य भावो वर्षिमा दीर्घजीवित्वम् । दीर्घस्य भावो द्राघिमा अविच्छिन्नवंशत्वम् । वृद्धं प्रभूतमन्नधनादि । वृद्धिः । विद्यादिगुणैरुत्कर्षः । एते मे कल्पन्ताम् ।

(२) सत्यं यथार्थभाषित्वम् । श्रद्धा परलोकविश्वासः । जगत् जङ्गमं गवादि । धनं कनकादि विश्वं स्थावरम् । महो दीप्तिः । क्रीडा अक्षद्यूतादिः । मोदः क्रीडादर्शनजो हर्षः । जातं पुत्रोत्पन्नमपत्यम् । जनिष्यमाणं भविष्यदपत्यम् । सूक्तानृक्समूहः । सुकृतमृक्पाठजन्यं शुभादृष्टम् । एते कल्पन्ताम् ।

तुंश्चचमेदीर्घायुत्त्वञ्चमेनमित्रञ्च मेभंयञ्चमेसुखञ्च मेशयंनञ्च
मेसूषाश्चचमेसुदिनञ्चमेयुज्ञेनंकल्पन्ताम् ॥ ६ ॥ युन्ताच ॥ मेधु
र्ताचंमे क्षेमंश्चचमे धृतिंश्चमे विश्वंञ्चमे महंश्चचमेसंविच्चमे ज्ञा
त्रंञ्च मे सूश्चचमे प्रसूश्चचमे सीरंञ्च मे लयंश्चचमेयुज्ञे नंकल्प
न्ताम् ॥ ७॥ शंचंमे मयंश्चचमे प्रियञ्चमेनुकामश्चचमे कामंश्चञ्च

सुगमव्याख्यानम् । (१) ६ । (२) ७ ।

(१) ऋतं यज्ञादिकर्म। अमृतं यत्फलभूतं स्वर्गादि। यक्ष्मणोऽभावोऽयक्ष्मं धातुक्षयादिरोगाभावः । आमयति पीड-
यतीत्यामयत् न आमयत् अनामयत् सामान्यव्याध्यादिराहित्यम् जीवयतीति जीवातुः व्याधिनाशकमौषधम्। दीर्घायुषो
भावो दीर्घायुत्वं बहुकालमायुः पृषोदरादित्वात्सलोपः आयुरुदन्तो वा । अमित्राणामभावोऽनमित्रं शत्रुराहित्यम्।
भयाभावोऽभयं भीतिराहित्यम्। सुखमानन्दः शयनं संस्कृता शय्या । सूषाः शोभन उषाः स्नानसन्ध्यादियुक्तः प्रातः
कालः । सुदिनं यज्ञदानाध्ययनादियुक्तं सर्वं दिनम्। एते मे यज्ञेन सिध्यन्तु ।
(२) यन्ताश्वादेर्नियन्ता। धर्ता पोषकः पित्रादिः। क्षेमः विद्यमानधनस्य रक्षणशक्तिः। धृतिः धैर्य्यमापत्स्वपि स्थिरचि-

मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे वसी-
यश्च मे यशश्च मे यज्ञेन कल्पन्ताम् ॥ ८ ॥ [७] ऊर्क् च मे सूनृता च मे
पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च
मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे यज्ञेन कल्पन्ताम् ॥ ९ ॥ रयि-
श्च मे ॥ मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णं च मे पूर्णत-

सुगमम्व्याख्यानम् । (१) ८ । ९ ॥

त्तत्वम् । विश्वं सर्वानुकूल्यम् । महः पूजा । संविद् देशास्त्रादिज्ञानम् । ज्ञातुर्भावो ज्ञात्रम् विज्ञानसामर्थ्यम् । सूः पुत्रादि-प्रेरणसामर्थ्यम् । प्रसूः पुत्रोत्पत्यादिसामर्थ्यम् । सीरं हलादि कृषिकृतधान्यनिष्पत्तिः । लयः कृषिप्रतिबन्धनिवृत्तिः ।

(१) शमैहिकं सुखम् । मयः आमुष्मिकं सुखम् । प्रियं प्रीयुत्पादकं वस्तु । आनुकाम्यत इत्यनुकामः अनुकूलयत्नसाध्यः पदार्थः । कामः विषयभोगजनितं सुखम् । सुमनसो भावः सौमनसः मनः स्वास्थ्यकरो बन्धुवर्गः । भगः सौभाग्यम् द्रविणं धनम् भद्रमैहिकं कल्याणम् । श्रेयः पारलौकिकम् । वसतीति वस्तृ अतिशयेन वस्तृ वसीयः तुरिष्ठेमेयः स्विति तृचो लोप निवासयोग्यो वसमान गृहादिः । यशः कीर्त्तिः । एते कल्पन्ताम् ।

शु० य० सं० ४०४ उ० भा०

रञ्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे यज्ञेन कल्पन्ताम् ॥१०॥ वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथ्यं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे यज्ञेन कल्पन्ताम्॥११॥ व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ॥ १२ ॥ [ ४ ] अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥ १३ ॥ अग्निश्च म आ

सुगमव्याख्यानम् । १० । ११ । १२ । १३ ॥

अ० १८

शिवम्

पंश्च मे वीरुधंश्च म ओषंधयश्च मे कृष्टपुच्याश्च मेऽकृष्टपुच्याश्च मे ग्राम्याश्च मे पुशवंऽआरुण्याश्च मे वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे यज्ञेनं कल्पन्ताम् ॥ १४ ॥ वसुं च मे वसतिश्च मे कर्म्मं च मे शक्तिश्च मेऽर्थश्च म एमश्च म इत्या च मे गतिश्च मे यज्ञेनं कल्पन्ताम् ॥ १५ ॥ [ ३ ] अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च

सुगमव्याख्यानम् । (१) १४ । (२) १५ ॥

(१) अग्निः पृथिवीस्थो वह्निः । आपोऽन्तरिक्षस्थानि जलानि । वीरुधः गुल्माः । ओषधयः फलपाकान्ताः कृष्टपच्याः कृष्टे पच्यन्त इति कृष्टपच्याः राजसूयसूर्येत्यादिना क्यबन्तो निपातः भूमिकर्षणबीजवापादिकर्मनिष्पाद्या ओषधयः । तद्विपरीता अकृष्टपच्याः स्वयमेवोत्पद्यमाना नीवारगवेधुकादयः । ग्राम्याः ग्रामे भवाः पशवः गोऽश्वमहिषाजाविगर्दभोष्ट्रादयः । आरण्याः अरण्ये भवाः पशवः हस्तिसिंहशरभमृगगवयमर्कटादयः । वित्तं पूर्वलब्धम् । वित्तिः भाविलाभः । भूतं जातपुत्रादिकम् । भूतिरैश्वर्यं स्वार्जितम् । एतानि यज्ञेन मम सम्पद्यन्ताम् ।

(२) वसु धनं गवादिकम् । वसतिर्वासस्थानं गृहम् । कर्माग्निहोत्रादि । शक्तिस्तदनुष्ठानसामर्थ्यम् । अर्थोऽभिलषितः पदार्थः एमः ईयत इत्येमः एतेर्मप्रत्ययः प्राप्तव्योऽर्थः । इत्या भावे क्यप् अयनमिष्टप्राप्त्युपायः गतिरिष्टप्राप्तिः । एते कल्पन्ताम् ।

मे॑ सवि॒ता च॑ म॒ऽइन्द्र॑श्च मे॒ सर॑स्वती च म॒ऽइन्द्र॑श्च मे पू॒षा च॑ म॒ऽइन्द्र॑श्च मे॒ बृह॒स्पति॑श्च म॒ऽइन्द्र॑श्च मे य॒ज्ञेन॑ कल्पन्ताम् ॥१६॥ मि॒त्रश्च॑ ॥
म॒ऽइन्द्र॑श्च मे॒ वरु॑णश्च म॒ऽइन्द्र॑श्च मे धा॒ता च॑ म॒ऽइन्द्र॑श्च मे॒ त्वष्टा॑ च म॒ऽइन्द्र॑श्च मे म॒रुत॑श्च म॒ऽइन्द्र॑श्च मे॒ विश्वे॑ च मे दे॒वाऽइन्द्र॑श्च मे य॒ज्ञेन॑ कल्पन्ताम् ॥ १७ ॥ पृ॒थि॒वी च॑ ॥ म॒ऽइन्द्र॑श्च मे॒ऽन्तरि॑क्षञ्च म॒ऽइन्द्र॑श्च मे॒ द्यौश्च॑ म॒ऽइन्द्र॑श्च मे॒ समा॑श्च म॒ऽइन्द्र॑श्च मे॒ नक्ष॑त्राणि च म॒ऽइन्द्र॑

अथार्धेन्द्राणि जुहोति । अर्द्ध इन्द्रः अर्द्धं अन्येदेवाः । अग्निश्चमइन्द्रश्चम इति ॥ (१) १६ । (२) १७ ।

(१) अथार्धेन्द्राणि जुहोति अर्धस्येन्द्रदेवतात्वादर्धस्य नानादेवतात्वात् । अग्निसोमसवितृसरस्वतीपूषबृहस्पतयःप्रसिद्धाःतैः समानभागत्वादिन्द्र एकैकया सह पठ्यते । यास्कोक्ता इन्द्रशब्दस्य नानार्थाः कार्याः एवमग्रेऽपि कण्डिकाद्वये एतेकल्पन्ताम् ।
(२) मित्रवरुणधातृत्वष्टृ मरुद्विश्वेदेवाः प्रसिद्धा प्रत्येकमिन्द्रः । एते कल्पन्ताम् ।

श्च मे दिशश्च मऽइन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १८ ॥ [२] अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च मऽउपाꣳशुश्च मेऽन्तर्यामश्च मऽऐन्द्रवायवश्च मे मैत्रावरुणश्च मऽआश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम् ॥ १९ ॥ आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मऽऐन्द्राग्न

अथ ग्रहान् जुहोति। अꣳशुश्च मइति। (१) १८। (२) १९ ॥

(१) पृथिव्यन्तरिक्षदिवस्त्रैलोक्यम् समावर्षाधिष्ठात्री देवताः। नक्षत्राणि अश्विन्यादीनि। दिशः प्रागाद्याः। एते कल्पन्ताम्।

(२) अथ ग्रहान् जुहोति कण्डिकाद्वये ग्रहहोममन्त्राः। अंश्वादयः सोमग्रहविशेषाः सोमप्रकरणे प्रसिद्धाः अदाभ्यस्यैव गृह्यमाणत्वदशायां पृथक्कृतस्य ग्रहणे रश्मिशब्दे निर्देशः रश्मीनां तद्ग्रहणे साधनत्वात् अग्नौ रूपे सूर्य्यस्य रश्मिषु इति मन्त्रलिङ्गात्। अधिपतिशब्देन निग्राह्यो विवक्षितः तस्य ज्येष्ठत्वादाधिपत्यम् ज्येष्ठो वा एष ग्रहाणामिति श्रुतेः। प्रतिप्रस्थानशब्देन निग्राह्यो विवक्षितः द्विदेवत्यैः सह पाठात्। अन्ये प्रसिद्धाः।

शूच्चं मे मुहाविंश्श्चदेवश्चच मे मरुत्वतीयांश्चच मे निष्क्रैवल्ल्यश्चच मे सा वित्त्रश्चच मे सारस्वतश्चच मे पात्नीवुतश्चच मे हारियोजुनश्च मे युज्ञेन कल्पन्ताम् ॥ २० ॥ स्रुचश्च ॥ मे चमुसाश्च मे व्वायुव्व्यानिच मे द्रोणकलु शश्च मे ग्ग्रावाणश्च मेधिषवणेच मे पूतभृच्च मऽआधवुनीयश्च मे व्वेदिश्च मे बुर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे युज्ञेन कल्पन्ताम् ॥ २१॥ अग्निश्च ॥

सुगमरूव्याख्यानम् । (१) २० । (२) १२ ॥

(१) आद्यो वैश्वदेवः प्रातःसवनगतः महावैश्वदेवस्तु तृतीयसवनगतः। ध्रुवाख्यस्यैव ग्रहस्य श्रवणदशायां वैश्वानरसूक्तप ठात्तद्दशापापन्नो ध्रुवो वैश्वानरशब्देनोच्यते। मरुत्वतीया इति बहुवचनं त्रित्वात् मरुत्वतीयो महामरुत्वतीयः क्षुत्‍मरु- त्वतीयश्चेति। अभिषेचनीये सारस्वतीनामपां ग्रहणमेव सारस्वती ग्रहः सारस्वतं ग्रहं गृह्णातीति तत्राम्नानात्।

(२) स्रुचो जुह्वादयः चमसानि गृहपात्राणि। वायव्यानि पात्रविशेषाः। अधिषवणे काष्टफलके। पूतभृदाधवनीयौ सोमपात्रवि- शेषौ। स्वगाकारः शंस्युवाकः तेन यथास्वं देवतानां हविरङ्गीकारात्। प्रसिद्धमन्यत्। एते मम यज्ञेन निमित्तेन क- ल्पन्ताम्।

मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च

मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेन कल्पन्ताम् ॥२२॥

व्रतं च॥ मऽऋतवश्च मे तपश्च मे संवत्सरश्च मेऽहोरात्रेऽऊर्वष्ठीवे बृह

द्रथन्तरे च मे यज्ञेन कल्पन्ताम् ॥ २३ ॥ [५] एका च ॥ मे तिस्रश्च

(१) २२। (२)।२३॥ अथैतान् यज्ञक्रतून् जुहोति। (३) एका च मे

(१) कण्डिकाद्वयेन यज्ञक्रतुहोमः। अथैतान् यज्ञक्रतून् जुहोत्यग्निश्च म इति श्रुतिः अग्निः चीयमानो वह्निरग्निष्टोमो वा घर्मः प्रवर्ग्यः। इन्द्रायार्कवते पुरोडाशमिति विहितो यागोऽर्कः। सौर्यं चरुमिति विहितः सूर्यः। प्राणो गवामयनम्। अश्वमेधः प्रसिद्धः। पृथिव्यदितिदितिदिवो देवताविशेषाः। अङ्गुलयः विराट्पुरुषावयवाः। शक्वरयः शक्तयः। दिशः प्राच्याद्याः यज्ञेन कल्पन्ताम्।

(२) व्रतं नियमः। ऋतवो वसन्तादयः। तपः कृच्छ्रं चान्द्रायणादि। संवत्सरः प्रभवादि। अहश्च रात्रिश्चाहोरात्रे दिननिशे। ऊरू चाष्ठीवन्तौ जानुनी च ऊर्वष्ठीवे अवयवविशेषौ अचतुरेति निपातः। बृहद्रथन्तरे एतन्नामके सामनी। एतानि कल्पन्ताम्।

(३) अयुग्मस्तोमसंज्ञिमार्था मन्त्राः। अथायुजस्तोमान् जुहोतीति श्रुतिः। एकामादाय द्वितीयां विहाय तृतीयामादा

तिस्रश्चम इति ॥ २४ ॥ अथयुग्मतोज् होति । (१) चतस्रश्चमेऽष्टौचमइति । पूर्वंपूर्वमुत्तरेण सं-

मेतिस्रश्चमेपञ्चचमेपञ्चचमेसप्तचमेसप्तचमेनवचमेनवचमऽएका

दशचमऽएकादशचमेत्रयोदशचमेत्रयोदशचमेपञ्चदशचमेपञ्चदशच

मेसप्तदशचमेसप्तदशचमेनवदशचमेनवदशचमऽएकविꣳशतिश्चम

ऽएकविꣳशतिश्चमेत्रयोविꣳशतिश्चमेत्रयोविꣳशतिश्चमेपञ्चविꣳ

शतिश्चमेपञ्चविꣳशतिश्चमेसप्तविꣳशतिश्चमेसप्तविꣳशतिश्च

मेनवविꣳशतिश्चमेनवविꣳशतिश्चमऽएकत्रिꣳशच्चमऽएकत्रिꣳशच्च

मेत्रयस्त्रिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥२४॥ चतस्रश्च ॥ मेऽष्टौचमेऽष्टौच

यचतुर्थं विहाय परित्यक्तसमसंख्याकेनात्तविषमसंख्याकेन मन्त्रेणायुग्मान् स्तोमान् जुहुयादित्यर्थः। आदरातिशयद्योतनार्था सर्वत्र पुनरुक्तिः। अयुग्स्तोमहोमैः सर्वकामावाप्तिः। तथाच श्रुतिः एतद्वै देवाः सर्वान् कामनाप्त्वायुग्भिः स्तोमैः स्वर्गं लोकमायंस्तथैवैतद्यजमानः सर्वान् कामानाप्त्वायुग्भिः स्तोमैः स्वर्गं लोकमेतीतत्यादि।

वध्नाति । यथाहृक्षंरोह न्नुत्तरामुत्तरांशाखां समालंभंरोहेत्ताहृक् । द्विरुक्तयः प्रयोजन मा-

मेद्वादशश्चमेद्वादशश्चमेषोडशश्चमेषोडशमेविꣳशतिश्चमेविꣳशतिश्चमे चतुर्विꣳशतिश्चमेचतुर्विꣳशतिश्चमेऽष्टाविꣳशतिश्चमेऽष्टाविꣳशति मेद्वात्रिꣳशच्चमेद्वात्रिꣳशच्चमेषट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेचत्वारिꣳ शच्चमेचत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमे ऽष्टाचत्वारिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥२५॥ त्र्यविꣳश्च ॥ मेत्र्यवीचमे दित्यवाट्चमेदित्यौहीचमेपञ्चाविश्चमेपञ्चावीचमेत्रिवत्सश्चमेत्रि

(१) एकाङ्कया युग्मस्तोमान् जुहोति । अथ युग्मतो जुहोति चतस्रश्च म इति प्रथमं चतस्र इत्येता संख्यामादाय चतुरुत्तरत्वेन स्थितान् युग्मान् स्तोमानष्टाचत्वारिंशत्पर्यन्तान् जुहुयादितर्थः । तत्फलं स्वर्गप्राप्तः एतद्वै छन्दाꣳ॰स्यवृत्रन्यातयामा वा अयुज स्तोमायुग्मभिर्वयꣳ॰स्तोमैः स्वर्गं लोकमायेति तथैतद्यजमानो युग्मभिः स्तोमैः स्वर्गं लोकमेतीति श्रुतेः । पूर्वं पूर्वमुत्तरेण सम्बध्नाति वृक्षारोहणवत् । तथाच श्रुतिः पूर्वं पूर्वमुत्तरेणोत्तरेण संयुनक्ति यथा वृक्षं रोहन्नुत्तरामुत्तराꣳ॰ शाखाꣳ॰ समालभ्भाꣳ॰रोहेत्तादृक्तदिति । अत्रोक्ता संख्या संख्येयनिष्ठा । एते यज्ञेन कल्पन्ताम् ।

य० सं० ४०८ उ० भा०

व॒त्सा च॑ मे तुर्य॒वाट् च॑ मे तुर्य्यौ॒ही च॑ मे य॒ज्ञेन॑ कल्पन्ताम् ॥ २६ ॥ प॒ष्ठ॒वाट् च॑ मे पष्ठौ॒ही च॑ म उ॒क्षा च॑ मे व॒शा च॑ म ऋष॒भश्च॑ मे वे॒हच्च॑ मेऽन॒ड्वाँश्च॑ मे धे॒नुश्च॑ मे य॒ज्ञेन॑ कल्पन्ताम् ॥ २७ ॥ [ ४ ] वाजा॑य॒ स्वाहा॑ प्रस॒वाय॒ स्वाहा॑पि॒जाय॒ स्वाहा॒ क्रत॑वे॒ स्वाहा॒ वस॑वे॒ स्वाहा॑ह॒र्पत॑ये॒ स्वाहाह्ने॑ मु॒ग्धाय॒ स्वाहा॑ मु॒ग्धाय॑ वैनँशि॒नाय॒ स्वाहा॑ वि॒नँशिन॑ आन्त्याय॒नाय॒ स्वाहान्त्या॑य भौव॒नाय॒ स्वाहा॒ भुव॑नस्य॒ पत॑ये॒ स्वाहाधि॑पतये॒ स्वाहा॑ प्र॒जाप॑तये॒ स्वाहा॑ ॥ इ॒यन्ते॒ राण्मि॒त्राय॑ य॒न्तासि॒ यम॑न ऊ॒र्ज्जे त्वा॑ वृ॒ष्ट्यै॑ त्वा प्र॒जाना॒न्त्वाधि॑पत्याय ॥ २८ ॥ आयु॑र्य॒ज्ञेन॑ कल्पता

अ० १८

हस्तुतिः ॥ २५ ॥ अथवपांसिजुहोति । (२) अविश्चमहूति ॥ २६ । (१) २७ ॥ अथनामग्रहं जु-

होति । वाजायस्वाहा इति ॥ २८ ॥ अथकल्पान् जुहोति । आयुर्यज्ञेन कल्पतामिति । आयुरादीनि ममयज्ञक्लृप्तानि भवन्तु । यज्ञश्च ममयज्ञेनैवक्लृप्तो भवतु नाहं यज्ञक्लृप्तौ

प्राणोयज्ञेनंकल्पताञ्चक्षुर्यज्ञेनंकल्पताꣳश्रोत्रंयज्ञेनंकल्प तांवाग्यज्ञेनंकल्पताम्मनोयज्ञेनंकल्पतामात्मायज्ञेनंकल्पता म्ब्रह्मायज्ञेनंकल्पताञ्ज्योतिर्यज्ञेनंकल्पताꣳस्वर्यज्ञेनंकल्प ताम्पृष्ठंयज्ञेनंकल्पतांयज्ञोयज्ञेनंकल्पताम्॥ स्तोमश्चयजुश्च ऋक्च सामचबृहच्चरथन्तरञ्च ॥ स्वर्देवाऽअगन्मामृताऽअभूमप्प्रजा पतेःप्प्रजाऽअभूमवेट्स्वाहा ॥ २९ ॥ [ २ ] व्वाजस्यनु ॥ प्प्रसवेमा

समर्थः । स्तोमश्चयजुश्च ऋक्चसामचबृहच्चरथन्तरञ्च यज्ञेन क्लृप्तानिभवन्त्वित्यनुषङ्गः । स्वर्देवाअगन्महेदेवाः स्वर्गलोकंवयमगन्म । अमृताश्चभूताः प्रजापतेश्च प्रजाअभूमेति फलवचनम् ।

बेट्स्वाहेति(१)होममन्त्रः ॥२९॥ वाजप्रसवीयं जुहोति सप्तभिर्ऋग्भिः । वाजस्यनु व्याख्यातम् ॥३०॥
विश्वेअद्य । वैश्वदेवी त्रिष्टुप् व्यवहितपदप्रायः । विश्वेअद्यमरुतः अद्यअग्निइन्द्रावि आगमन्त्वि
त्यनुषङ्गः । विश्वजती । विश्वइति सर्वनाम सामान्यदेवता गणप्रतिपत्तिजनक मतस्तन्निरा-
कांक्षी करणायविशिष्टो देवतागण इहाध्याक्रियते । विश्वेच देवगणावसवो रुद्राआदित्या अद्य-

तरं॑म्मुहीमदि॑तिन्नामुव्वच॑साकरामहे ॥ यस्या॑मिदंव्विश्वम्भुवनमा
विवेशुतस्या॑न्नोदेवःस॑वितांधर्म॑साविषत् ॥ ३० ॥ व्विश्वेअद्य ॥ मुरु
तोव्विश्व॑ऽऊतीव्विश्वे॑भवन्त्वुग्गनयुःसमिद्धाः ॥ व्विश्वे॑नोदेवा

ऊतोऊत्या अवनेनतर्पणेन निमित्तभूतेन आगमन्तु । तदागमनेनच विश्वेभवन्तु अग्नयः गार्ह-
पत्यप्रभृतयः समिद्धाः सम्यग्दीप्ताः । विश्वेदेवाश्च नोस्माकम् अवसान्नेन हविर्लक्षणेन निमित्त-
भूतेन आगमन्तु आगच्छन्तु तेषांच तुष्टाविश्वं सर्ववसुद्रविणम्भूमि हिरण्यादि धनं वाज-
श्चान्नञ्च अस्मे अस्माकमस्तु ॥ यद्वान्यथा सम्बन्धः । विश्वेमरुतः अद्यआगच्छन्तु । विश्वेच

( १ ) वतोर्धाराहोममन्त्रा समाप्ताः

देवगणाः ऊत्यांनिमित्तभूतया आगमन्तु। विश्वेचदेवा अवसानिमित्तभूतेन आगमन्तु तदा गमनेनच विश्वेभवन्तु अग्नयः समिद्धाः। होमार्थंहि अग्नयः प्रज्वाल्यन्ते। ततोयागोत्तर-कालम्। विश्वमस्तुद्रविणं वाजोअस्मे ॥ ३१ ॥ वाजोनः। अनुष्टुप् वाजोदेवती। वाजोन्नं नोस्माकं सप्तप्रदिशः चतस्रोदिशः प्रकृष्टाश्च त्रयोलोकाः सप्तप्रदिशः उक्ताः। चतस्रो वा

ऽअवुआगंमन्तुव्विश्वंमस्तुद्रविणंव्वाजोऽअस्मे ॥ ३१ ॥ व्वाजोनः ॥ सुप्तप्रदिशुश्चतंस्रोवापरावतंः ॥ व्वाजोनोव्विश्वैर्द्देवैर्द्धनंसाताविहावंतु ॥ ३२ ॥ व्वाजोनः ॥ व्वाजोनोऽअद्यप्प्रसुंवातिदानंव्वाजोदे

परावतः। वोशब्दः समुच्चयार्थीयः। चतस्रश्च परावतः। परावच्छब्दो दूरवचनः। महः जनः तपः सत्यमित्येतेलोका उच्यन्ते। तेहितान् लोकानतीत्यवर्तन्ते। आपूरयत्वितिशेषः। किञ्च। वाजः नः अस्मान् विस्वैर्देवैः सह धनसातौधनसम्भजनकाले प्राप्तेइहयज्ञे इहवालोके अव पालयतु ॥ ३२ ॥ वाजोनः। द्वे अनुष्टुभौवाजदेवत्ये। वाजः नः अस्माकम् अद्यप्रसुवाति

शु० य० सं० ११० उ० भा०

अभ्यनुजानातुदानम् वाजश्चदेवान् ऋतुभिः कालैः सह कल्पयतु यथास्थानम् । वाजोहिमा-सर्ववीरञ्जजान । हिशब्दः समुच्चयार्थोयः । वाजश्चमांसर्ववीरं जनयतु । ततोविश्वाः आशाः वाजपतिः सन् जयेयमित्याशीः ॥ ३२ ॥ वाजः पुरस्तात् । वाजः अन्नं पुरस्तात् अस्त्विति-

वाऽर्ँ ॥ ऽऋतुभिं÷कल्पयाति ॥ व्वाजोहिमासर्व्वंवीरञ्जजानुव्विश्श्वा ऽआशाव्वाजंपतिर्ज्जयेयम् ॥ ३३ ॥ व्वाजं÷पुरस्तांत् ॥ व्वाजं÷पुरस्तांदु तमंद्ध्यतोनोव्वाजोंदेवान्हविषांव्वर्द्धयाति ॥ व्वाजोहिमासर्व्वंवीरञ्च कारसर्व्वाऽआशाव्वाजंपतिर्ब्भवेयम् ॥ ३४ ॥ सम्मां ॥ सृजामिपर्यसा

वाक्यशेषः । उतमध्यतोनःअस्माक मस्तुवाजः । वाजश्च देवान्हविषावर्द्धयतु अस्माकम् वाज-श्चमांसर्ववीरञ्च करोतु । ततः सर्वा आशादिशः वाजपतिः सन् भवेयम् दिग्भूपतामार्थयते ॥ ३४ ॥ सम्मा । विराजौ आग्नेय्यौवासोहं वाजमिति तच्छब्दयोगात् यदोध्याश्वारः । संमास्रजामि । मामाम् आत्मानं पयसारसेनपृथिव्याः सम्बन्धिना संसृजामि । संसृजामिचमामाम् । आत्मा

अ० १८

शिवम् ११०

नम । अद्भिःओषधीभिश्च । सोऽहंसंसृष्टपयःप्रभृतिशरीरः । वाजंसनेयम् संभजेयम् । हेअग्ने त्वत्प्रसादात् । यद्वा अग्निरेवोच्यते । अस्मदादेशस्यमाशब्दस्यत्वाशब्दं कृत्वायुक्ततरमेतत्व्याख्या-नम् । योऽहं हेअग्नेसंसृजामित्वांपयसार्थयव्याः संसृजामिचत्वामद्भिरोषधीभिश्च । होमाभि-प्रायःसंसर्गः । सोऽहंवाजंसनेयमिति ॥ ३५ ॥ पयःपृथिव्याम् । विराट् अग्निरुच्यते ।

पृथिव्याः सम्मासृजाम्म्युद्भिरोषधीभिः ॥ सोऽहंवाजᳬं सनेयम ग्ग्ने ॥ ३५ ॥ पयः॑पृथिव्याम् ॥ पयः॑पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पय॑स्वतीःप्रदिशः॑सन्तुमह्यम् ॥ ३६ ॥ देव

हविर्वापयः पृथिव्यांधाःनिधेहि । पयश्चओषधीषुधा.पयोदिविधाः । अन्तरिक्षेपयोधाः आहुतिपरिणामाभिप्रायमेतत् । किंच पयस्वतीः पयःसंयुक्ताः प्रदिशःदिशोविदिशश्च सन्तुभ-वन्तु मह्यम् ॥ ३६ ॥ (१) अभिषिञ्चतियजमानम् । देवस्यत्वेतिव्याख्यातम् सरस्वत्यैवाचोयन्तु

(१) का० स्रुवं प्रास्य परिश्रितस्पृक् कृष्णाजिनमास्तीर्य पुच्छादुत्तरं शेषेऽपः कृत्वाभिषेकसामर्थ्यात् क्षीरोदके वा वाजपेयि-कानीति श्रुतेस्तत्राभिषिच्यते ब्रह्मवर्चसकामस्थितमन्वारब्धो देवस्य त्वेति ।

यंत्रेण यमनेन अग्नेश्चसाम्राज्येन अभिषिञ्चामि ॥ ३७ ॥ (१) राष्ट्रभृतोजुहोति । द्वादशयजूंषि सनोभुवनस्यपत इत्येतस्याःप्राक् ऋताषाडित्यादीनि । अग्निरुच्यते ऋताषाट् । ऋतंसत्यंसहतीतिऋताषाड् । ऋतंसत्यंधामस्थानंयस्यसतथोक्तः । अग्निर्गन्धर्वः तस्यचाग्नेर्गन्धर्वस्य ओषस्यंत्वा ॥

सवितुःप्प्रसवे॒ऽश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ सरस्वत्त्यैव्वाचोयुन्तुर्य्यन्त्रेणाग्नेःसाम्म्राज्ज्येनाभिषिञ्चामि ॥ ३७ ॥

[ ८ ] ऋताषाडृतधामा ॥ ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरसोमुदोनाम ॥ सनऽइदम्ब्रह्मक्षत्त्रम्पातुतस्मैस्वाहा व्वाट्ताब्भ्युःस्वाहा ॥ ३८ ॥ सꣳहितोव्विश्वसामा ॥ सूर्य्योगन्धर्व

योप्सरसः तासांचमुदःनाम । ओषधीभिर्हीदंसर्वंमोदत इतिमुदः । सोग्निर्गन्धर्वः नःअस्माकम् इदंब्रह्म इदंचक्षत्रंपातु । तस्मैस्वाहावाट् । ताभ्यश्चओषधीभ्यःस्वाहा ॥ ३८ ॥ सꣳहितो-

(१) का० द्वादशगृहीत विग्राहं जुहोतृताषाडिति प्रतिस्वाहाकारं राष्ट्रभृतो वाट्कारान्तः पूर्वं पूर्वो मन्त्रः ।

विश्वसामा। यः सूर्यः संहितः एषह्यहोरात्रे संदधातीति संहितः सूर्यः। विश्वसामाएषह्येवसर्वं-साम तस्यमरीचयोप्सरसः। मरीचयस्तु सरेणवः। आयुवोनाम आयुवन्तइवहिमरीचयः प्लव-न्तइत्यायुवः मिश्रयन्तइत्यर्थः। तुल्यव्याख्यानमन्यत् ॥ ३९ ॥ सुषुम्णः सूर्यरश्मिः। यः सुषुम्णः सु-

र्व्वस्तस्यमरीचयोप्सुरसंऽआयुवोनामं ॥ सनंऽइदम्ब्रह्मंक्षुत्त्वम्पांतु तस्म्मैस्वाहावाट्टताब्भ्युःस्वाहां ॥ ३९ ॥ सुषुम्म्णाऽसूर्य्यरश्मिमः ॥ सुषुम्म्णाऽसूर्य्यरश्मिश्चन्द्रमांगन्धुर्व्वस्तस्यनक्षत्त्राण्यप्सुरसोभेकुरं योनामं ॥ सनंऽइदम्ब्रह्मंक्षुत्त्वम्पांतुतस्म्मैस्वाहावाट्टताब्भ्युःस्वाहां ॥ ४० ॥ इषिरोविश्वव्यंचाः ॥ इषिरोविश्वव्यंचावातोंग

यच्चिय:। सूर्यस्येवहिचन्द्रमसोरश्मयः। चन्द्रमागन्धर्वः तस्यनक्षत्राणि अप्सरसः। भेकुरयोनाम भाःहिनक्षत्राणि कुर्वन्तीतिभेकुरयो नक्षत्राणि। तुल्यमन्यत् ॥ ४० ॥ इषिरोविश्वव्यचाः। यदृषिरः

शु० य० सं० ४१२ छ० भा०

त्विषः । इषुगतौतस्यहुषिरः विष्वव्यचाः सर्वतोगमनः । वातोगन्धर्वः तस्यापोऽप्सरस ऊर्जो-
नाम । आपोवाऊर्जः अद्भ्योह्यग्निर्जायते । तुल्यव्याख्यानमन्यत् ॥ ४१ ॥ भुज्युःसुपर्णः ।
यज्ञोवैभुज्युः यज्ञोहिसर्वाणिभूतानि भुनक्तिपालयति । सुपर्णःशोभनपतनः यज्ञोगन्धर्वस्तस्यद-

न्धुर्वस्तस्यापोऽअप्सुरसुऽऊर्ज्जोनाम ॥ सनंऽइदम्ब्रह्मंक्षुत्त्रम्पांतुतस्मैस्वाहावाट्ताब्भ्युःस्वाहां ॥ ४१ ॥ भज्युःसुपर्णः ॥ भुज्युःसुपर्णोयुज्ञोगन्धर्वस्तस्पुदक्षिणाऽअप्सुरसंस्तावानाम ॥ सनंऽइदम्ब्रह्मंक्षुत्त्रम्पांतुतस्मैस्वाहावाट्ताब्भ्युःस्वाहां ॥ ४२ ॥ प्रजापतिर्विश्वकर्म्मा ॥ मनोगन्धर्वस्तस्यऽऋक्सामान्यंप्सुरसुऽएष्टयो

क्षिणाप्सरसस्तावानाम दक्षिणावैतावा दक्षिणाभिर्हियज्ञःस्तूयते । यथायोवै कश्चनदक्षिणांददाति
स्तूयतएवसः । तुल्यमन्यत् ॥ ४२ ॥ प्रजापतिर्विश्वकर्मा । प्रजापतिर्विश्वकर्मा सहीदंसर्वमकरोत्
मनोगन्धर्वस्तस्य ऋक्सामानि अप्सरसःएष्टयोनाम । ऋक्सामानिवा एष्टयः । ऋक्सामैर्ह्याशासते-

अ० १८

शिवम् ४१२

इति नः अस्तु इत्थं नः अस्त्विति । तुल्यमन्यत् ॥४३॥ (१) रथशिरसि जुहोति । सनोभुवनस्य प्राजापत्या-प्रस्तारपंक्तिः । हेभुवनस्यपते प्रजापते यस्यतेतव उपरि अमुष्मिल्लोके गृहायस्यवा इह अस्मिन्लोके ।

नाम ॥ सनंऽइदम्ब्रह्मंक्षत्त्रम्पांतुतस्मैस्वाहाव्वाटताभ्यः ऽस्वाहा ॥ ४३ ॥ सनंः ॥ सनोभुवनस्यपतेप्रजापतेयस्यंतऽउपरिंगृहायस्यंवेह ॥ अस्मैब्रह्मणेस्म्मैक्षत्त्रायमहिशर्म्मयच्छस्वाहा ॥४४॥ समुद्रोसि ॥ समुद्रोसिनभंस्वानार्द्द्रदानुःशम्भूर्म्मयोभूरभिभांव्वाहि

सत्त्वं नः अस्माकम् व्यवहितार्थसंबन्धः । अस्मैब्रह्मणे अस्मैक्षत्राय महिमहत् शर्मशरणम् यच्छ देहि स्वाहा ॥४४॥ (२) वातहोमाञ्जुहोति । समुद्रोसीतित्रीणि यजूंषि त्रिलोकस्थानं वायुं लोकद्वारेणस्तुवन्ति ।

(१) का० पञ्चगृहीतं च रथशिरस्यध्याहवनीयं भ्रियमाणे पञ्च कृत्वः स नो भुवनस्येति राष्ट्रभृद्धोमानन्तरं पूर्वसंस्कृतादेवाज्यात्पञ्च गृहीत्वाहवनीयोपरि प्रतिप्रस्थात्रादिना धार्यमाणे रथशिरसि तदाज्यं पञ्चधाविभज्य पञ्च कृत्वो जुहोति पंचवारं मन्त्र इति सूत्रार्थः ।

(२) का० वातहोमान् जुहोत्यञ्जलिना कृत्वा बहिर्वेदेरधो दक्षिणतां धुर्युत्तरत उत्तरस्यां दक्षिणतो दक्षिणाग्रष्टे: समुद्रोऽसीति

शु० य० सं० ४१३ उ० भा०

यस्त्वं देवायो समुद्रोसि समुन्दनोसि । नभस्वांश्च नभस् इति नक्षत्राण्युच्यन्ते तानिभि नितरां भान्तितैः संयुक्तो नभस्वान् । आर्द्रं दानुश्च एषह्यार्द्रं ददातिदृष्ट्यवश्यायादि । तत्त्वां प्रार्थये शंभूः मयोभूश्च शंभाव-यतो शंभूः मयः सुखं भावयति मयोभूः । अभिमांवाहि अभिमावाहिस्वाहा । मारुतोसि यस्त्वं मारु-तोसि मरुतां पुरोवातप्रभृतीनां वातानां प्रकृतिभूतोसि । मरुतां शुक्रज्योतिः प्रभृतीनां गणोसि तं त्वां

स्वाहा ॥ मारुतोसिमुरुतांङ्गणः शुम्भूर्म्मयोभू रभिमांव्वाहिस्वाहा ॥ वुस्यूरसिदुवस्वाञ्छुम्भूर्म्मयोभू रभिमांव्वाहिस्वाहा ॥४५॥ यास्ते ॥

ब्रवीमि शंभूश्च मयोभूश्च भूत्वा अभिमांवाहिस्वाहा । अवस्यूरसि । यस्त्वमवस्यूरसि । अवनन्त-र्पणं रक्षणं वा तत्सीव्यतीत्यवस्यूः । षिवुतन्तुसंताने इत्यस्य । च्छ्वोः शूडनुनासिकेचेतिक्विपि कृते-संप्रसारणेच अवस्यूः । दुवस्वांश्च दुवश्चचरु विलक्षणमन्नमुच्यते हविर्लक्षणेनान्नेनयुक्तश्च आर्द्र-

प्रतिमन्त्रम् । रथहोमानन्तरं तं रथमग्ने रुत्तरत वेदी प्राङ्मुखमवस्थाप्य तस्य स्थानत्रये त्रीन् वायुहोमान् जुहोति प्रतिमन्त्रं मन्त्रत्रयेण । रथयुगदक्षिणधुरोऽधो प्रथमम् उत्तरधुरोऽधो द्वितीयम् युगमध्याधस्तृतीयम् । किं कृत्वा बर्हिर्वेदेरञ्जलिना वा तमानोयेति सूत्रार्थः ।

अ० १७

दानुश्च। तंत्त्वांयाचे। शंभूर्मयोभूरित्यादि॥ ४५॥ नवस्रुतीर्जुहोति। यास्ते। हे व्याख्याते॥ ४६॥ (१) ४७॥ रुचन्नः। अनुष्टुवाग्नेयी। रुचिर्दीप्तिम् नः अस्माकं देब्राह्मणाः तेषु-

ऽअग्ग्नेसूर्य्यरुचोदिवंमातुन्न्वन्तिरश्मिभिः॥ ताभिर्नोऽअद्यस र्व्वाभीरुचेजनायनस्कृधि॥ ४६॥ यावः॥ योदेवाःसूर्य्येरुचोगोष्व श्वेषुयारुचः॥ इन्द्राग्ग्नीताभिःसर्व्वाभीरुचंन्नोधत्तबृहस्पते॥४७॥ रुचंन्नः॥ रुचंन्नोधेहिब्राह्मणेषुरुचꣳराजसुनस्कृधि॥ रुचंवि

धेहि। रुचं चराजसु नः संबन्धेषुक्षत्रियेषुकुरु। रुचं विश्येषुवैश्येषु शूद्रेषुचनः संबन्धिषु कृधि-कुरु। मयिचधेहि रुचादीप्त्यासहदीप्तिम्। अनुत्सन्नधर्माणो यथावयंदीप्त्याभवेम तथाकुर्वित्याशयः। यद्वा। ब्रह्मप्रभृतिषु यारुक् तामस्माकंधेहि सर्वथा किंबहुनोक्तेन मय्येवधेहि-

(१) का० नव जुहोति यास्त इति प्रतिमन्त्रम्। असत्रार्थः। पूर्वसंस्कृताज्यात्सकृत्सकृदादाय नवाहुतीर्जुहोति यास्ते अग्ने या वो देवाः रुचं नः तत् त्वा यामि एतास्वतस्रः स्वर्येति कण्डिकायां पञ्चयजुर्भिः पंचेति नव।

शु० य० सं० ४१४ उ० भा०

रुचासन्नतं रुचम् ॥ ४८ ॥ वारुण्या त्रिष्टुभा जुहोति । तत्त्वा । तदाशास्ते इति तदः श्रवणादिह यद्‌प्रयोगः । यत्प्रयोजनं त्वां यामि याचामि ब्रह्मणा वयोलक्षणेन वन्दमानः स्तुवन् । तदेवायं यजमान आशास्ते हविर्भिरभ्युद्यतैः । अतः अहेडमानः अक्रुध्यन् हे वरुण इह कर्मणि वर्तमान । अस्माकं प्रयोजनं यज्ञसमाप्तिलक्षणम् बोधि बुध्यस्व । बुद्ध्वा च हे उरुशंस बहुभिः संस्तूयमान ।

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥ ४९ ॥ स्वर्ण ॥ स्वर्ण घर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्ण शुक्रः स्वाहा स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्यः स्वा

आयुः मा प्रमोषीः मा अस्माकमायुः खण्डय ॥ ४९ ॥ सथार्काश्वमेधयोः सन्ततीर्जुहोति । पञ्च-भिर्यजुर्भिः । स्वर्णमित्येषु यजुःषु सूर्य इति दैवतवचनः स्वः शब्दः । स्वरिवायाघर्म आदित्यस्त्वग्नौ जुहो-मि स्थापयामि स्वरिवा कारणस्वरिवयोरर्कस्तमादित्ये स्थापयामि । स्वर्णं स्वरिवयः शुक्रस्तमादित्य

अ० १८

शिवम्

४१४

एवञ्जुहोमि । स्वरिवज्योतिरग्निस्तमग्नावेवजुहोमि । स्वर्गं । स्वरिवयःसूर्यस्तमुतमंकरोमि ॥५०॥
(१)अग्निंयुनज्मि तिसृभिराग्नेयीभिः द्वाभ्यांत्रिष्टुब्भ्यां तृतीययोपंक्त्या । यमग्निंयुनज्मि शवसाव-
लेन घृतोनच । दिव्यंदिविभवम् सुपर्णं सुपतनम् वयसाबृहन्तम् वयसाधूमेन बृहन्तंमहान्तम् ।
धूमेनहिमहानग्निर्भवति अग्नेर्वैधूमोजायते धूमादभ्रमभ्राद्वृष्टिरितिस्मृतिः । तेनाग्निना युक्ता-

## हां ॥ ५० ॥ [ १३ ] अग्निंयुनज्मि ॥ अग्निंयुनज्मिशवसाघृ
## तेनंदिव्यꣳसुपर्णंव्वयसाबृहन्तम् ॥ तेनव्वयङ्गमेमब्रध्नस्यविष्टपꣳ
## स्वोरुहाणाऽअधिनाकमुत्तमम् ॥ ५१ ॥ शतम् १००० ॥ इमौते ॥ प

नवयङ्गमेमगच्छेम । ब्रध्नस्यादित्यस्यविष्टपं विगतसन्तापम् सर्वद्वन्द्वोपलक्षणस्तापः । ततोप्य-
धिस्वर्गलोकंरुहाणाः । आरोहन्तः नाकमुत्तमंच गमेमेत्यनुवर्तते । यत्रगता नअकमसुखंप्रा-
प्नुवन्ति सनाकोलोकः ॥ ५१ ॥ इमौते । याविमौतेतत्रपक्षौ अजरौजरारहितौ । पतत्रि-

( १ ) का० अग्नियोजनं प्रातरनुवाकमुपाकरिष्यन् परिधीनालभ्य यथापूर्वमग्निं युनज्मीति प्रत्यृचम् अस्यार्थः । प्रातर-
नुवाकोपाकरणात्प्राक् यथापूर्वमित्युपधानक्रमेण ऋक्त्रयेण प्रत्येकं परिधीन् स्पृष्ट्वाग्नियोजनं करोतीति ।

णावुत्पतनशीलौ । ताभ्यां चरक्षांसिअपहंसि हेअग्ने । ताभ्यांपक्षाभ्यांपतेम उत्पतेम । सु-
कृतांसोकेसुकृतिनासेंत्रस्थानम् यत्रान्येपि ऋषयःजग्मुः गताःप्रथमजाः पुराणाः ॥ ५२ ॥ इन्दु-
र्दक्षःयस्त्वमिन्दुः । इदिपरमैश्वर्यै । परमेश्वरः इन्दनोवा । दक्षःउत्साहवान् श्येनःशंसनीयगतिः

ताव॒जरौ॑पतत्त्रिणौ॒याभ्या॒ꣳरक्षा॒ꣳस्यप॒हꣳस्य॑ग्ने ॥ ताभ्यां॑म्पतेम

सु॒कृतामु॑लो॒कंय्यत्र॒ऽऋष॑योज॒ग्मुःप्र॑थम॒जाःपु॑रा॒णाः ॥ ५२ ॥ इन्दु

र्द॒क्षः ॥ श्ये॒नऽऋ॒तावा॒हिर॑ण्यपक्षःशकु॒नोभु॑र॒ण्युः ॥ म॒हान्त्स॒ध

स्थे॑ध्रु॒वऽआनिष॑त्तो॒नम॑स्ते॒ऽअस्तु॒मामा॑हिꣳसीः ॥ ५३ ॥ दि॒वोमू॒र्द्धा ॥

ऋतावायज्ञवान् । उदकवान्वाहिरण्यपक्षः शकुनः । आकृत्या भुरण्युःभर्ता महान्प्रभावतः ।
सधस्थेब्रह्मणासह अविभक्तस्थाने । ध्रुवआनिषत्तः स्थिरआनिषण्णः । तस्मैनमः तेतुभ्यमस्तु-
मामाहिंसीः ॥ ५३ ॥ (१) अश्वनामादियुक्तान् विमुञ्चतिद्वाभ्यामाग्नेयीभ्यां पुरोष्णिग्जगती-

(१) का० आग्निमारुतस्तोत्रस्य पुरस्ताद्विमोचनं परिधिसन्ध्योर्दिवो मूर्धेति प्रत्यृचम् । यज्ञायज्ञियस्तोत्रप्रकरणात् प्राक् दिवो मूर्धेति ऋग्द्वयेन दक्षिणोत्तरयोः परिधिसन्ध्योरुपस्पृश्याग्निविमोचनं करोतीति सूत्रार्थः ।

स्थान्। दिवोमूर्द्धासि। द्युलोकोत्तमाङ्गमसि। पृथिव्याः नाभिर्न्हनम् ऊर्क्‌रसः सारः अपाम्‌ओषधीनांच। विश्वायुश्सर्वप्राणिना मायुर्जीवनम् सप्रथाश्वसर्वतः पृथुः तिर्यगूर्द्ध मवस्थानञ्छिन्नविभवः। तस्मैतेनमः। पथेः अग्निप्रमुखोहि देवयानः पन्थाः ॥ ५४ ॥ विश्वस्यमूर्द्धन् यस्त्वंविश्वस्य सर्वप्राणिजातस्य मूर्द्धन्‌मूर्द्धं अधिउपरितिष्ठसि। श्रितः

सिंपृथिव्यानाभिरूर्ग्गपामोषधीनाम् ॥ विश्वायुःशर्म्मसप्रथानमं स्पथे ॥ ५४ ॥ विश्वस्यमूर्द्धन्नधितिष्ठसिश्रितःसंमुद्द्रेतेहृदयम प्स्वायुरपोदत्तोदधिम्भिन्त ॥ दिवस्पर्ज्जन्न्यादन्तरिक्षात्पृथिव्या स्ततोनोवृष्ट्याव ॥ ५५ ॥ इषोयज्ञः ॥ इषोयज्ज्ञोभृगुभिराशीर्द्दाव

आश्रितः वृक्षेन्द्रियाणिसुषुम्नांवानाडीम्। यस्यचसमुद्रे समुन्दने अन्तरिक्षेतेतव हृदयम् अप्सुचआयुर्जीवनम्। तंत्वांयाचे। अपोदत्तअपोदेहीतिवचनव्यत्ययः। एकोग्निरिहदेवताक थमितिचेत्। उदधिंभिन्त। उदकंधत्तइत्युदधि। उदकस्यउदादेशः। मेघउच्यते अत्रापिभिन्धी

तिप्राप्तेभिन्दते विंदरणार्थस्य वहुवचनञ्छान्दसम् । एवंदिवोस्पर्जन्यात् अन्तरिक्षात्पृथिव्याः अन्यत्रापियतोयतो वृष्टिरुपलभ्यते ततस्तत उपादायनोस्मान् वृष्ट्या अवपालयहेअग्ने ॥ ५५ ॥
(१) इष्टोयज्ञः । द्वेसमिष्टयजुषी यज्ञाग्निदेवत्ये उष्णिग्गायत्र्यौ । अध्वर्युर्यजमानविषयामाशिषंकरोति यस्यास्यसुवर्णदानस्ययजमानस्य इष्टःसम्पादितयज्ञः । भृगुभिःभृगुगोत्रैर्ब्राह्मणैः आशीर्दाआशिषांच-

सुभिः ॥ तस्यंनऽइष्टस्यंप्रीतस्यद्रविणेहागमेः ॥ ५६ ॥ इष्टोऽअ्

दाता । वसुप्रभृतिभिर्देवताविशेषैःकृतः । तस्यास्ययजमानस्य नःइष्टस्य अस्माकमभिप्रेतस्य । प्रीतस्यचअस्मान्प्रति । प्रीतःस्निग्धउच्यते याज्ययाजकयोः स्नेहख्यापनपरंवाक्यमिदमुक्त्वा अथेदानीं द्रविणमाह । त्वमपिहेद्रविण इहयजमाने आगमेःआगमनंकुर्याः । स्थानमिदंधनानामित्यभि- प्रायः । यद्वा । इष्टोयज्ञोभृगुभिः आर्षेयैर्ब्राह्मणैः । आशीर्दावसुभिश्च विभक्तिव्यत्ययप्रायः परोर्द्धर्चः । सोस्माकमिष्टः प्रीतश्चद्रविणमिहआगमयत्विति ॥ ५६ ॥ इष्टोअग्निः । इष्टःकृतयागःअग्निः आह-

(१) का० अध्वरसमिष्टयजुरन्त इष्टो यज्ञ इति प्रत्यृचमपरे । समिन्द्र ण इत्यादिनवानामध्वरसमिष्टयजुषा होमान्ते इष्टो अग्निरिति द्वाभ्या-मपरे आग्निके द्वे समिष्टयजुषो जुहोतीति सूत्रार्थः ।

तःअभिहुतः । पिपर्तुंपूरयतु नःअस्मान् । इष्टंहविः कृतयागञ्चहविः अस्मान्पूरयतु । स्वगेदं-देवेभ्योनमः । स्वयंगामिच । इदंसमिष्टयजुर्लक्षणं देवेभ्योनमः हविर्भवतु ॥ ५७ ॥ (१) यदाकूतात् । अष्टौवै-श्वकर्मणानिजुहोति । विश्वकर्माग्निर्देवता तृतीयादैवीवा । आद्याजगती तिस्त्रस्त्रिष्टुभ अत

ग्निः॥ इष्टोऽअग्निराहुतःपिपर्तुनऽइष्टꣳहविः॥ स्वगेदन्देवेब्भ्यो नमः॥ ५७॥ [७] यदाकूतात्॥ यदाकूतात्समसुस्त्रोहृदोवामनसोवासम्भृतञ्चक्षुषोवा॥ तदनुप्प्रेतसुकृतामुलोकंयत्त्रऽऋषयोजु

ष्टोनुष्टुभः । यदाकूतात् । यत्कर्मआकूतात् आकूतोनाम प्राङ्मनसः प्रवृत्तेरात्मनोधर्मो मनः प्रवृत्तिहेतुः । समसुस्त्रोत् समस्रवत् । हृदोवा बुद्धेश्वमनसोवा मनसश्च । समसुस्त्रोदित्यनुवर्तते संभृतंचक्षुषोवा संभारैःसंभृतंसत् यच्चक्षुरादिभ्य इन्द्रियेभ्यःसमसुस्त्रो त्प्रजायते । तदनुप्रेत ।

(१) का० हृदयशूलान्ते स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ । साग्निचित्ये मैत्रावरुण्यनूबन्ध्यावशमिक्षा भवति तेन तस्या हृदयशूलसम्बन्धिसमिधानान्ते कृते यदाकूतादिति प्रत्यृचमष्टौ स्रुवाहुतिर्जुहोतीति सूत्रार्थः ।

शु॰ य॰ सं॰ ४१७ उ॰ भा॰

तत्प्रजापतिनाकृतं कर्मअनुगच्छत । सुकृता सुलोकम् सुकृतामेवलोकंस्थानम् यत्रऋषयोजग्मुः यत्रान्येपि ऋषयोगताः प्रथमजाःपुराणाः ॥ ५८ ॥ एतठं॰ सधस्थ एतंयजमानंसधस्थं समान-स्थानं । देवानांस्वर्गंपरितेददामि परिददामितव । दानंचरक्षणार्थम् । यंचआवहात्आनयेत् शेव-धिंसुखनिधिमाहुतिपरिणामभूतम् । शेवद्धति सुखनाम । जातवेदाअग्निः तञ्चपरिददामि ।

गग्मुःप्प्रथमजाःपुराणाः ॥ ५८ ॥ एतꣳसधस्थपरितेददामियमावहा
च्छेवधिञ्जातवेदाः ॥ अन्वागन्तायज्ञपतिर्वोऽअत्रतꣳस्मजानी
तपरमेव्योमन् ॥ ५९ ॥ एतञ्जानाथ ॥ परमेव्योमन्देवाःसधस्था
विदरूपमस्य ॥ यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणवाथाविर

एवंच स्वर्गाख्यं स्थानमुक्त्वा अथेदानींस्थानिनोदेवानाह । अन्वागन्ता कर्मसमाप्त्यनुपदमेवआ-गन्ता । यज्ञपतिः वः युष्माकमत्रस्थितानाम् तंस्मजानीत । परमेव्योम्नि स्थानेअवस्थितंस-न्तम् ॥ ५९ ॥ एतंजानाथ । देवदेवत्या एतंयजमानं जानीथ । परमेव्योमन् परमेस्थानेवस्थितं

सन्तम् । हेदेवाः सधस्थाःसमानस्थानाः । किञ्च । विदरूपमस्य जानीतरूपमसस्य यजमानस्य । प्रत्यभिज्ञानाय ततोविदितरूपः । यदागच्छेत् आगच्छत्पथिभिः देवयानैः । पूजार्थंवहुवचन मुपभोगस्थानभेदाद्वा । अथदृष्टापूर्ते कृणवाथकुरुथ आविःप्रकाशफलेऽस्मै ॥ ५० ॥ उद्बुध्यस्वाग्ने

स्मै ॥ ६० ॥ उद्बुध्यस्वाग्नेप्रतिंजागृहित्वमिष्टापूर्तेसᳬसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ ६१ ॥ येनवहसि ॥ सहस्रंयेनाग्नेसर्व्ववेदसम् ॥ तेनेमंयज्ञन्नोनयस्वर्द्देवेषुगन्तवे ॥ ६२ ॥ प्रस्तरेणपरिधिना ॥ स्रुचावेद्याचबर्हिषा ॥ ऋचेमंयज्ञन्नोनयस्वर्द्देवेषुगन्तवे ॥ ६३ ॥ यद्दत्तम् ॥ य

येनवहसीतिव्याख्यातौ ॥ ६१ । ६२ ॥ प्रस्तरेणपरिधिना । चस्रुचाच वेद्याचवर्हिषाच ऋचाच ऋगादिभिर्मंत्रैश्च । इमंयज्ञं नःअस्माकं संवन्धिनंनय । हेअग्नेस्वर्गंलोकम्देवेषुगन्तवे । देवान्प्रतिगमनाययज्ञोहि गतेयजमानोगतएव । सहितस्य शरीरमित्यभिप्रायः ॥ ६४ ॥ यदत्तम् ।

भार्याजामातृपुत्रप्रभृतिभ्यः । यच्चपरादानम् दीनान्धकृपणेभ्योदयया । यच्चपूर्तम् स्मृतिविहि-
तंब्राह्मणभोजनादि । याश्चदक्षिणाः यज्ञान्तर्गताः तत्सर्वम् अग्निः वैश्वकर्मणः विश्वकर्मैववै-
श्वकर्मणः स्वार्थेतद्धितः । स्वर्गेलोके देवेषुमध्ये नःअस्मदर्थमस्माकंवा । दधत्दधात फलोप-
भोगार्थम् ॥ ६४ ॥ यच्चधाराः । यच्चयस्मिन्देशे धाराःअनपेता अनुपक्षीणाः उपभुज्यमानाअपि

हु॒त्तंयत्प॑रा॒दानं॒यत्पू॒र्त्तंयाश्च॒दक्षि॑णाः॥ तद॒ग्निर्वै॑श्वक॒र्म॒णः॒
स्व॑र्दे॒वेषु॑नोदधत् ॥ ६४ ॥ यत्त्र॒धाराः॑ ॥ यत्त्र॒धारा॒ऽअन॑पेता॒मधो॑
र्घृ॒तस्य॑च॒याः ॥ तद॒ग्निर्वै॑श्वक॒र्म॒णः॒स्व॑र्दे॒वेषु॑नोदधत् ॥ ६५ ॥
अ॒ग्निर॑स्मि ॥ अ॒ग्निर॑स्मि॒ जन्म॑नाजा॒तवे॑दाघृ॒तम्मे॒चक्षु॑र॒मृतं॑म्मऽ

क्षयंनयन्ति मधोः मधुनःघृतस्यच । याश्चान्याःसोमादीनाम् । तत्तत्रअग्निः वैश्वकर्मणः स्वःस्वर्गेलो-
केदेवेषु मध्ये नअस्मान्दधातु ॥ ६५ ॥ अविनियुक्तत्वा दग्निप्रकरणाच्च यजमानदर्शनमेतत् । अग्नि-
रस्मि त्रिष्टुवाग्नेयी अग्निरहमस्मि जन्मनाउत्पत्त्यैव जातवेदाः । अथहवैरेतः सिक्तंप्राणोन्ववरोहति ।

तद्विन्दते तद्यज्जातंजातं विन्दतेतस्माज्जातवेदाः इत्येतदभिप्रायम् यतश्चाहमग्निरस्मि अतो-घृतं मेममचक्षुः । घृतहोमिनमहंपश्यामी त्येतदभिप्रायम् । अमृतंचममआसन् आसीत्मुखे। योहिममममुखे हविर्ज्जुहोति तमहममृतं करोमीति । किञ्च अर्कःअर्चनीयःयज्ञःअस्मि नाम्नात्रि-धातुः ऋग्यजुस्सामभिः । रजसोविमानःउदकस्यनिर्माता किञ्च अजस्रःअनुपक्षीणः । घर्मःदीप्तः आसन् ॥

**अर्कस्त्रिधातूरजसोविमानोऽजस्रोघर्म्मोहविरस्मिनाम ॥ ६६ ॥ ऋचोनाम ॥ ऋचोनामास्मियजूंषिनामास्मिसामानिनामास्मि ॥ येऽअग्नयःपाञ्चजन्याऽअस्यांपृथिव्यामधि ॥ ते**

उदकरक्षणोवाआदित्यः । अहमस्मिनाम्ना किञ्चहविरप्यह मस्मिनाम्ना । नामशब्दस्यकृतविभक्ति-व्यत्ययस्य अस्मिशब्दस्यच सर्वत्रसंवन्धः एवमग्न्यद्वैतंमन्त्रार्थः ॥६६॥ ऋचोनामास्मि । अनेनात्मनिवे-दत्त्वयात्मकत्वंसम्पादयति । ऋग्वेदनामास्मि यजुर्वेदनामास्मि सामवेदनामास्मि । चित्यमग्निमुप-तिष्ठते येअग्नयः । आग्नेय्यनुष्टुप् । येअग्नयःपाञ्चजन्याः पञ्चचितिकाइतिश्रुतिः । अस्यांपृथिव्याम्

अधिउपरिस्था: । तेषामग्नीनामुद्गततमोसि यत:अत: प्रार्थ्यसेस्माभिस्त्वम् । प्रनोजीवातवेसुव । प्रसुव अस्माकंजीवतेचिरञ्जीवनाय ॥६७॥ चित्यमग्निमुपतिष्ठते । (१) वार्त्रहत्याय इन्द्रएतत्सप्तर्चमपश्यदिति-श्रुतिः । प्रथमेगायत्रीत्रिष्टुभौ । इन्द्रोवृत्रादेवतावार्त्रहत्याय वृत्रोयेनशवसावलेनहन्यते तत्वार्त्रहत्यं

षांमसिस्त्वसुत्तमःप्रनोजीवातवेसुव ॥ ६७ ॥ [ १० ] वार्त्रहत्याय शवसेपृतनाषाह्यायच ॥ इन्द्रत्वावर्त्तयामसि ॥ ६८ ॥ सहदानुम्पुरुहूत ॥ क्षियन्तमहस्तमिन्द्रसम्पिणक्कुणारुम् ॥ अभिवृत्रंवर्द्धमानं

शवस्तस्मै वार्त्रहत्यायशवसे । पृतनाषाह्यायच पृतना:संग्रामा: येनशवसा अभिभूयन्तेतत्पृतना सहं-वलं तस्मैपृतनासहाय । सहतिरभिभवार्थः । इन्द्रत्वाम् आवर्तयामसि आवर्तयामः ॥ ६८ ॥ सहदा-नुम् । सहेतिवलनाम । वलस्यदातारम् युधास्वानेन सहत्वंसंपूर्णवल: अयंचतुच्छवलइत्येवं य:शत्रु-

(१) का० चितिम् पुरोषवतीमुपतिष्ठते वार्त्रहत्यायेति सप्तभिरष्टभिरेके दशभिर्वा । स्वतृपूरणमेतां चितिमुपतिष्ठनन्तर सप्तभिरष्टभिरेकेषां सति दशभिर्वेति सूत्रार्थः ।

मुपस्ताभयते ससहद्दानुः तंसहद्दानुम् । यद्वासहएकीभूययोदुर्मन्त्वान्ददाति ससहद्दानुः तंस-हद्दानुं शत्रुम् । हेपुरुहूतवहुभिराहूत । चियन्तंनिवसन्तम् इहैवग्रहस्तंकृत्वा युद्धेननि र्जित्यसंपिणक् संपिण्डीकुरु । तंकुणारुम् क्वणन्तम् दुर्वचोभिधायिनम् । एवंताव देनंकुरु । अथपुनर्योयमपरोवृत्र-स्तम् अभिभूय वृत्र वर्द्धमानम् । पियारुम् पियतिर्हिंसाकर्मा । देवानांहिंसितारम् । अपादंकृत्वा

भ्पियारुमपादमिन्द्रतवसाजघन्थ ॥ ६९ ॥ विनः ॥ विनऽइन्द्रमृधो जहिनीचायच्छपृतन्यतः ॥ योऽअस्मा२ँ ॥ ऽअभिदासत्यधरङ्ग मयातमः ॥ ७० ॥ मृगोन ॥ भीमःकुचरोगिरिष्ठाःपरावतऽआजग न्थापरस्याः ॥ सृकंसंशायपविमिन्द्रतिग्मंविशत्रून्ताढिविमृधो

गमनासमर्थं कृत्वा तवसावालेनजघन्थ । जहि ॥ ६९ ॥ विनइन्द्र । मृगोनभीमइतिवैमृधौ द्वेनुअष्टुप्त्रिष्टुभौ पूर्वाव्याख्याता ॥ ७० ॥ मृगोनमृगइव । मृगोव्याघ्रोवासिंहोवा । भीमोभीषणः कुचरःकुत्सितचारी हिंस्रःप्राणिवधजीवनः । गिरिष्ठाःपर्वताश्रयः संयथाकांश्चिद्धैत्यप्राणिविशेषा

न्हन्ति तैरनभिभूयमानः एवंत्वंपरावतः दूरप्रदेशादाहूयमानान् आजगन्थआगच्छ । आगत्यच मृद्या । यत्प्रार्थ्यसेस्माभिः । स्रकंशरणंवज्रं शंशाय । शीतनूकरणे तीक्ष्णीकृत्य । पविम्शत्रून्कायेषुगन्तारम् हेइन्द्र । तिग्मम् तेजनम् उत्साहवन्तम् । ततोविशत्रून्ताढ़ि विताढ़ि । ताड़यतेर्हिंसाकर्मणएतद्रू-पम् । विमृधोनुदस्व प्रेरयस्व मृधःसंग्रामादपुनरागमनाय ॥ ७१ ॥ वैश्वानरोनः । वैश्वानरदेवत्ये

नुदस्व ॥ ७१ ॥ वैश्वानरोनः ॥ वैश्वानरोनऽऊतयऽआप्रयांतुप रावतः ॥ अग्निर्नःसुष्टुतीरुप ॥७२॥ पृष्टोदिवि ॥ पृष्टोऽअग्निः पृथिव्यांपृष्टोविश्वाऽओषधीराविवेश ॥ वैश्वानरःसहसापृष्टो

गायत्रीत्रिष्टुभौ । वैश्वानरोग्निः नःअस्माकम् । ऊतयेअवनायतर्पणाय आप्रयातुआगच्छतु परावतः । किञ्च । सुष्टुतीरुप । अस्माकंचशोभनाः स्तुतीः उपश्रोतुम् आप्रयातु ॥ ७२ ॥ पृष्टोदिवि । योग्निर्वैश्वानरः पृष्टः कोयमिति । दिविआदित्यात्मना व्यवस्थितेमुमुक्षुभिः । तच्चहैवंश्रूयते । यमेतमादित्ये पुरुषंवेदयन्ते । सइन्द्रः सप्रजापतिः सब्रह्मेति । यश्चवैश्वा-

नरोग्नि विंद्युदात्मना प्राद्दषिस्थित:। पृथिव्याम् अन्तरिक्षेलोके पृथिवीत्यन्तरिक्षनामसु पठि-
तम्। उदकार्थिभि: कोयंनामद्विपदचतुष्पद जीवनहेतु:। यस्मादग्निर्वैश्वानरोस्मिन् लोकेव्यव-
स्थित: पृष्टोग्निर्होटमिर्होटपर्यन्तै: कोयंतापपाकप्रकाशैरुपक्षत्य विश्वाओषधीभिराविवेश
आविष्ट:। यस्त्वैश्वानरोग्नि: सहसावलेनमथामनोध्वर्युणा कोयं निर्मन्थनदूतिपृष्टोदिदृक्षुभि:।

ऽअ॒ग्नि॒ऽस॒नो॒दिवा॒सरि॒ष॒स्पा॒तुन॒क्तम्॥ ७२॥ अ॒श्या॒मुत॒म्॥ अ॒
श्या॒मुत॒ङ्का॒मं॒म॒ग्ने॒त॒वो॒तीऽअ॒श्या॒मं॒र॒यिंर॒यि॒वः सु॒वीर॑म्॥ अ॒श्या॒म॒
वा॒जं॒म॒धि॒वा॒ज॒यं॒न्तो॒श्या॒मं॒द्यु॒म्न॒मं॒ज॒रा॒ज॒रं॑न्ते॥ ७४॥ वु॒य॒न्तें॥ ऽअ॒

सन: सोस्मान्दिवाअहनिपातुरक्षतु। सचनक्तंरात्रौपातु रिष: विनाशात्। रिषतिर्हिंसाकर्मा।
दिवानक्तमितिसन्तत्यर्थंवचनम्॥ ७२॥ अश्यामतम् द्वे आग्नेय्यौ त्रिष्टुभौकामवत्यौ। अश्याम
प्राप्नुवाम तंकामंयत्कामाएतत्कुर्म:। हेअग्ने तवऊती उत्या अवनेनतर्पणेनच। अश्याचरयिं धनम्
हेरयिव: धनवत् सुवीरंकल्याणपुत्रम्। अश्याच वाजमन्नम् अभिवाजयन्त:। वाजतिरर्चति-

कर्म्मा। अभिपूजयन्तोग्निम् अन्यानपिपूजयितव्यान्। अश्यामद्युम्नं यशः हेअजरजरारहिताग्ने। अजरं द्युम्नविशेषणमेतत् अनुच्छितिधर्म्मम् तेतवप्रसादात्॥ ७४॥ वयन्ते। हिशब्दो यस्मादर्थे। हिस्माद्वयंतेतुभ्यम् अद्यररिम। रादाने। ददिमकामंपुरस्कृत्य हविः कामप्राप्त्यर्थंवाहविः कामशब्देनोच्यते। उत्तानहस्ताः त्यक्तकृपणभावाः। अवद्धमुष्टिकाः असंहताङ्गु-

वयन्ते हि रिमा हि कामंमुत्तानहंस्तानमंसोपसद्यं॥ यजिंष्ठेनमनंसायक्षि देवानस्रेंधतामन्म॑नाविप्रोंऽअग्ग्ने॥ ७५॥ धामच्छदुग्निः॥ धामच्छदुग्निरिन्द्रोंब्रुह्मनादेवोबृहुस्पतिंः॥ सचेंतसोविश्श्वेंदेवाय

लयइतियावत् नमसानमस्कारेण प्रणिपातेन। उपनिषद्य उपसंगम्य निषदनं कृत्वा। अतः यजिष्ठेनयष्टृतमेन मनसायक्षियज देवान्। अस्रेधता अनन्यगतेनदेवतायाः याथात्म्यचिन्तनसंतानैकरसेन। मन्मनाः मननेन विप्रः सन् मेधावीसन्। हेअग्ने॥ ७५॥ धामच्छत्। वैश्वदेव्यनुष्टुप्। धामच्छत्। धामशब्दः स्थानवचनः स्थानानिन्यूनानिपूरयति अतिरि-

ङ्गानि समीकरोति यःसधामकृत् एवंधामच्छब्दः देवशब्दश्च सर्वत्रसंबध्यते । योग्निर्देवोधाम-कृत् यश्चेन्द्रः । यश्चब्रह्मा यश्चबृहस्पतिः । एतेसर्वे सचेतसः समानचेतसः चेतश्शब्दो प्रका-रवचनः यज्ञंप्रावन्तु अन्यूनातिरिक्तंकुर्वन्तु । नःअस्माकम् शुभेरक्षिष्टेच ॥ ७६ ॥ त्वंयविष्ट ।

यज्ञम्प्रावन्तुनःशुभे ॥ ७६ ॥ त्वंयविष्ठ ॥ दाशुषोनॄःपाहिशृणुधी गिरः ॥ रक्षातोकमुतत्मना ॥ ७७ ॥ [ १० ]

इतिसंहितापाठेअष्टादशोऽध्यायः १८ ॥

इतिव्याख्यातम् ॥ ७७ ॥ नह्येषुप्रत्यक्षमस्ति अनृषेरतपसोवेत्युपक्रम्य भूयोविद्यःप्रशस्यो भ-वतीति चाविधायाह तस्माद्यदेवकिञ्चानूचानोभवत्यार्षं तद्भवतीति अतोयमार्षेयोग्रन्थ इति विद्वद्भिरादरणीयः ॥ ७८ ॥

इति उव्वटकृतौ मन्त्रभाष्ये ऽष्टादशोध्यायः ॥ १८ ॥

(१) अथसौत्रामणीं त्रिभिरध्यायैः प्रक्रियते अग्न्यङ्गत्वात् सौत्रामण्या अनन्तरमुपक्रमः। तत्र-प्रजापति र्यज्ञमसृजतेत्युपक्रम्य सएतंयज्ञक्रतुमपश्य त्सौत्रामणी मितिसौत्रामण्याः प्रजापति-

शिवंःॐ॥ * स्वाद्वीन्त्वा ॥ स्वादुनांतीव्व्रान्तीव्व्रेणाामृताममृतेन मधुमतीम्मधुमतासृजामिस॑ᳪ सोमेन ॥ सोमोस्यश्विभ्भ्याम्पच्यस्व

ऋषिः। अथापरम् इन्द्रभैषज्यार्थमश्विनौ सरस्वतीच सौत्रामणीदद्दशुः। सुरासंधीयते। स्वाद्वीन्त्वा। सुरादेवत्यानुष्टुप्। (२) स्वाद्वीन्त्वा। स्वादुशब्दोमिष्टवचनः। स्वादुरसां त्वाम्।

(१) अथ सोत्रामणीमन्त्रास्त्रिभिरध्यायैः ऋद्धिकामस्याग्निचितो मुखेतरच्छिद्रसोमवामिनो मुखेन सोमवामिनो राज्यच्युत-नृपस्य पशुकामस्य च सौत्रामणीयागः।

(२) का० ओदनौ चूर्णमासरैः सठं०सृज्य स्वाद्वीं त्वाठं०शुनेति त्रिरात्रं निदधाति। एवमाचामयोश्चूर्णसंसर्गं मासरत्वनिष्पा-दनानन्तरमोदनौ व्रीहिश्यामचरू चतुर्भिश्चूर्णैः संसृज्य स्वाद्वीं त्वेति मन्त्रेण अंशुनेति विंशध्यायसप्तविंशयाऋचा चैकास्मिन् पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां संसृज्य त्रिरात्रं शलानैर्ऋतकोणे गर्तं कृत्वा तत्र स्थापयेत्।

* स्वाद्वीं त्वैकादशदेवाषन्नं वि शतिःसुरावंत ठं० सप्तदशोदोरतांत्रयोदशाच्याजानुर्दश सोमोराजाष्टोसी सेनतंतु ठं० षोड-शसप्तपं चनवतिः।

स्वादुनास्वादेनतीव्राम्। तीव्रशब्दः पटुवचनः। मदीमशीघ्रमदजनकाम्। तीव्रेणपटुरसेनऽम-
वताम्। अमृतेनमधुमतीम् मधुरस्वादोपेताम् मधुना। चतुर्णांवाक्यानां शेषउच्यते। सृजा-
मिसःसोमेन। तेप्रागधातोः छन्दसिपरेपीति उपसर्गसंगात् संसृजामिस्वाद्वीं त्वांसुरांस्वादु-

सरस्वत्यैपच्यस्वेन्द्रायसुत्राम्णेपच्यस्व ॥ १ ॥ परीतः ॥ परीतोषिञ्चतासुतःसोमोयऽउत्तमःहविः ॥ दधन्वायोनर्योऽअप्स्वन्तरासु

नासोमेनेति एवमुत्तरत्रापियोज्यम्। यजूंष्युत्तराणि। सोमोसि। यस्त्वं मन्त्रेणोक्त सोमसं-
सर्गात् तंत्वांब्रवीमि। अश्विभ्यामर्थायपचस्व। पाकोविपरिणामः। सरस्वत्यैपच्यस्वइन्द्राय-
सुत्राम्णेपच्यस्व ॥ १ ॥ एकस्याः पयसाकृतेनाश्विनेन परिषिंचति। परीतः। सौमीबृहती।

(१) का० एकस्याः पयस्यायाः कृतेनाश्विनेन परिषिञ्चति परीतो षिञ्चतेति शष्पचूर्णानि चावपति सारस्वतेन द्वयोः प्रतस्तोक्म-
चूर्णानि चैन्द्रेणोत्तमे तिसृणां लाजचूर्णानि च। सायंहोमान्तेऽश्विभ्यामपाकरोमीति करेण गां स्पृष्ट्वा एकां तां दुग्ध्वा
तत्पयसाध्वर्युः सुरांसिञ्चति परीत इति मन्त्रेण। रचितं शष्पचूर्णानां तृतीयांशं सुराभाण्डे क्षिपेत् द्वितीयेऽह्नि निशान्ते
सरस्वत्या अपाकरोमीति गावौ स्पृष्ट्वा दोहितेन तयोर्दुग्धेन तेनैव मन्त्रेण सुरां सिंचति तोक्मचूर्णतृतीयांशक्षेपश्च।
तृतीयेऽह्नि रात्रौ इन्द्राय सुत्राम्णेऽपाकरोमीतितिस्रो गाः स्पृष्ट्वा ता दुग्ध्वैकीकृततत्पयसा सुरां सिञ्चति तेनैव मन्त्रेण तत्र
लाजचूर्णतृतीयांशक्षेपश्चेति सूत्रार्थः।

द्वितीयपादप्रभृतिव्याख्यायते यच्छब्दयोगात्। यः सोमः उत्तमंहविः सर्वेषांहविषाम्। यश्च-दधन्वान् धारयितवान् यजमानम्। यश्चनर्य्योन्द्रब्योहितः। यश्च अध्वर्युः अप्सु अन्तर्व्य-वस्थितंसन्तम् आसुषाव अभिष्टुतवान् सोमम् अद्रिभिः ग्रावभिः तम्परिषिञ्चत अभिष्टुत-

षावसोमुमद्रिंभिः ॥ २ ॥ व्वायोःपूतः ॥ पुवित्त्रेंणप्प्रत्यङ्क्सोमोऽ अतिंद्रुतः ॥ इन्द्रंस्ययुज्ज्युःसखां ॥ व्वायोःपूतःपुवित्त्रेंणप्प्राङ्क्सोमो

सोमम् इतः गोरुधसउपादायपरिस्रुतम् ॥ २ ॥ (१) तिसृभिर्गायत्रीभिः परिस्रुतम्पुनाति। वायोः पूतः। योयंवायोःपवित्रेणउदरान्तर्वर्तिनापूतःसन् प्रत्यङ्ङधोमुखः सोमः अतिद्रुतः सःइ-न्द्रस्ययुज्यः। इन्द्रेणसहयोगमर्हति सखासहायः सुक्रीडनकःअगर्ह्यः। सोमवामिनः पुनाति

(१) का० सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतमिति वायोः पूत इति सोमातिपूतस्य प्राङिति तद्वामिनः। वयोः पूत इति कण्डिकायां द्वे ऋचौ पुनातित इति तृतीया तासां व्युत्क्रमेण विनियोगमाह पूतां सुरामादाय गोऽश्वके-शनिर्मितेन वालेन पवित्रेण सते पलाशपात्रे पुनाति पुनाति त इति मन्त्रेण सतं वारणमिति केचित् सुखैतरच्छिद्रसोम-वामिनो यजमानस्य सौत्रामण्यां वायोः पूतः पवित्रेण प्रत्यङ्ङिति मन्त्रेण सते सुरां पुनाति सुखेन सोमवामिनस्तु वायोः पूतः पवित्रेण प्राङिति मन्त्रेण सते सुरां पुनातीत्यर्थः।

वायो:पवित्रेण हृदयान्तर्वर्तिना पूत:प्राङ्प्रागञ्चन: सुस्रुत:सोम: अतिद्रुत: य:सइन्द्रस्ययुज्य: योगार्ह:सखा ॥ ३ ॥ सत्वङ्किकामस्यपुनाति । पुनातितेयजमानस्याचष्टेध्वर्यु: । पुनाति तव-परिस्रुतं सुरांसोमञ्च सूर्यस्यदुहिता । यद्वालुप्तोपमानमेतत् पुनातितेपरिस्रुतंसोममेवेति ।

ऽअतिंद्रुतः ॥ इन्द्रंस्ययुज्युःसखां ॥ ३ ॥ पुनातिंते ॥ परिस्रुतॅ सोमॅ सूर्य्यस्यदुहिता ॥ वारेंणशश्वंतातनां ॥ ४ ॥ ब्रह्मंक्षत्र म् ॥ ब्रह्मंक्षत्रम्पंवतेतेजंऽइन्द्रियॅसुरयासोमंःसुतऽआसंतोमदां

यद्वा पुनातितवपरिस्रुत सोमरूपापन्ना सूर्यस्यदुहिता । श्रद्धावैसूर्यस्यदुहिता वारेण गोश्ववा-लवालेन । शश्वता शाश्वतिकेन । तना । तनेतिधननाम धनोत्पत्तिनिमित्तभूतेन ॥ ४ ॥ अज-विलोमपवित्रेण । पय:पुनाति ब्रह्मक्षत्रम् । व्यवहितपदप्राय: प्रथमोर्द्धर्च: । यस्मात्कारणात्

( १ ) का० उत्तरस्यां पयो वैतसेऽजाविलोमपवित्रेण ब्रह्म क्षत्रमिति । अजमेषलोमकृतपतित्रेण वेतसपात्रे उत्तपदिग्भि पय: पुनाति ब्रह्म क्षत्रमिति मन्त्रेणेत्यर्थ: ।

शु० य० सं० ४२४ उ० भा०

सोमः सुतः सोभिषुतः ब्रह्म त्वं पवते । तेज इन्द्रियं च पवतिर्जननार्थः । ब्रह्मजनयति च त्वं तेजस्व इन्द्रियं च । यस्मात्त्वं सुरयासुतः सुरयातीव्रः क्षतः मदाय भवसि मदजनको भवसि अतः कारणात् शुक्रेण शोचिष्मता दीप्तिमता रूपेणमन्त जनितेन । हे देवदेवताः पिपृग्धि प्रीणीहि । रसेन चा-

य ॥ शुक्रेण देव देवताः पिपृग्धि रसेनान्नं यजमानाय धेहि ॥ ५ ॥

कुविदङ्ग ॥ यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ॥ इहेहैषाङ्कृणुहि भोजनानि ये बर्हिषो नम उक्तिं यजन्ति ॥ उपयामगृहीतोस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥ एष ते योनिस्तेजसे त्वा वीर्याय त्वा बलाय त्वा ॥ ६ ॥ नानाहि ॥ वां देवहितं सदस्कृ

न्नं यजमानाय धेहि देहि ॥ ५ ॥ पयोग्रहान् गृह्णाति । कुविदङ्गेति व्याख्यातम् । उपयामगृहीतोसि अश्विभ्यां त्वा सरस्वत्यै त्वा इन्द्राय त्वा सुत्राम्णे । शोभनं त्राणमस्याश्विभ्यां सरस्वत्यै च क्षतमिति सुत्रामा सादयति । एष ते योनिः तेजसे त्वां सादयामि वीर्याय त्वा बलाय त्वा ॥ ६ ॥

अ० १९

शिवम् ४२४

सुराग्रहान् गृह्णाति । नानाहि हिशब्दोयस्मादर्थे । यस्मा न्नानापृथक्पृथक् वायुवयोः सुरा-
सोमयोः । देवहितं देवनांपथ्यं देवैर्वाहितं धारितंस्थापितम् सदस्थानंकृतम् । देहिवेदीभवतः
सुरापयसोनानाभूते अतोब्रवीमि । मासंसृचाथाम् माससर्गंकुरुतम् । परमेव्योमन् स्थाने-
आह्वनीयाख्ये । दक्षिणेह्यग्गौसुराहूयते । किञ्च यतश्च सुरात्वमसि शुष्मिणीवलवती अशान्ता ।

तस्मासᳬंसृचाथाम्परमेव्योमन् ॥ सुराऽत्वमसिंशुष्मिणीसोमᳬएष मामाहिᳬसीःस्वांय्योनिंमाविशन्ती ॥७॥ उपयामगृहीतोसि ॥ उपयामगृहीतोस्याश्विनन्तेजःसारस्वतंवीर्य्यमैन्द्रम्बलम् ॥ एषते योनिर्म्मोदायत्वानन्दायत्वामहसेत्वा ॥ ८ ॥ तेजोसि ॥ तेजोसिते

तस्मात्सुरांपीत्वारौद्रमनाइति सोमश्चएषप्रख्यातगुणःशान्तः । अतोब्रवीमि । सर्वथामामाहिंसीः
सोमंस्वयोनिस्थानमाविशतीसती । माशब्दोनुदात्तोनर्थकः ॥ ७ ॥ उपयामगृहीतोसि । आश्वि-
नन्तेजः साक्षात्वमितिशेषः । एवं सर्वत्र । सारस्वतंवीर्यम् ऐन्द्रंवलम् । सादयति । एषतेयोनिः

मोदायत्वा त्वां सादयामि। आनन्दयत्वा। महसेत्वा महत्वाय महपूजायाम्॥ ८॥ (१) पयोग्रहान् श्रीणाति। तेजोसि। तेजोसियतः अतस्त्वां ब्रवीमि। तेजोमयिधेहि। योहिमदात्मकः सतत्रनियोगमर्हति। वीर्यमसि वीर्यंमयिधेहि बलमसि बलंमयिधेहि। तुल्यव्याख्यानानि।

जोमयिंधेहिव्वीर्य्यमसिव्वीर्य्यम्मयिंधेहिबलंमसिबलम्मयिंधेह्योजो स्योजोमयिंधेहिमन्न्युरंनिमन्न्युम्मयिंधेहिसहोंसिसहोमयिंधेहि॥९॥ याव्याघ्रंव्विषूंचिकोभौव्वृकंञ्चुरक्षंति ॥ श्येनम्पंतत्त्रिणंᳫसिᳫंहᳫ

सुराग्रहान् श्रीणाति। ओजोसि ओजोमयिधेहि मन्युरसि मन्युम्मयिधेहि सहोसि सहोमयिधेहि। तेजः प्राकोलनमात्मनः मन्युः कोपः सहोबलम्॥ ९॥ (१) श्येनपत्राभ्याम् पावयतीयजमानम्।

(१) का० गोधूमकुवलचूर्णानि चावपति तेजोऽसीति। आश्विनग्रहग्रहणानन्तरं सादनात्प्राक् द्वे दर्भतृणे प्रागग्रे पात्रोपरि कृत्वा गोधूमकुवलयोश्चूर्णानि सहैव पयसि क्षिपति कुवलं स्थूलं बदरीफलमित्यर्थः।

(१) का० दीक्षावत्पावयतोऽन्तःपातेन श्येनपत्राभ्यां या व्याघ्रमिति। अध्वर्युप्रस्थातारौ सहैवान्तः पातेऽवस्थितं प्राङ्मुखं

याव्याघ्रम्। अनुष्टुप्। विषूचिकास्तुतिः। विषुनिपातो नानावचनः अञ्चतिर्गत्यर्थः। अन्त-र्व्यापत्ति र्नानात्वना विषूचिकेत्युच्यते व्याधिविशेषः। याविषूचिकाव्याघ्रं वृकं चोभावपिरक्षति। नहितयो रपरिणामजनिता व्यापत्तिः। किमेतावेवयो रक्षतिनेत्याह। श्येनपतत्रिणम्। पतन-शीलम्। सहिवधजीवनः प्राणिनोगृहीतुमवश्यपतति। सिंहञ्च। सादूमं यजमानं पातु अंहसः

सेमम्पा॒त्वꣳह॑सः ॥१०॥ यदा॑पिपे॒ष ॥ मा॒तर॒म्पु॒त्रः प्र॒मु॑दितो॒धय॑न्॥ ए॒तत्तद॑ग्ने॒ अनृ॒णो भ॑वा॒म्यह॑तौ॒पि॒तरौ॒मया॑ ॥ स॒म्पृच॑स्थ॒ सम्मा॑

पापात् पापसमूहव्याप्तेः। व्याघ्रौनामधिष्ठाव्योदेवता सन्ति ताःप्रार्थ्यन्ते॥ १० ॥ अग्निप्रेक्षयति। यदापिपेष। आग्नेयीष्टहती। पिपेषेति लिटउत्तमपुरुषैकवचनम्। यदहम् आःपिपेषआपिष्टवान् पद्भ्याम। मातरंपुत्रः प्रमुदितःप्रहृष्टःसन्। धारयन्पिबन्स्तनम्। तदेतत् तवसमक्षम् हेअग्ने अनृणःऋणत्रयरहितः। कृतकृत्यःभवामि यतएवमतोब्रवीमि उत्क्षिप्यभुजम। अहतौअहिंसितौ

यजमानं श्येनपिच्छाभ्यां पावयतः दोक्षावर्द्दितेएकेन नाभेरूर्ध्वं प्रदक्षिणे द्वितीयेन सकृदवाङ् यद्वोभाभ्यां नाभेरूर्ध्वम-धश्च द्विरिति सूत्रार्थः।

पितरौ पितामातेत्येकशेषः । मया योहिप्रत्युपकर्तुमसमर्थः । तेनैव मातापितरौहिंसितौ-
भवत इत्यभिप्रायः । पयोग्रहान्संस्पृशति । संपृचस्थ पृचीसम्पर्के । संपृचन्तीति संपृचः स्थस्व-
याक्रियया व्यपदिश्यन्ते येदास्यन्ते संपृस्थतानहं ब्रवीमि । संमाभद्रेणपृंक्त संस्तृजत मांभद्रे-
णभन्दनीयेनकल्याणेन । सुराग्रहान् संस्पृशति । विपृचस्थ येयूयं विपृचः वियोगकारिणःस्थ-
तानहं ब्रवीमि । पाप्मनाविपृंक्त विगतसंसर्गं पाप्मनामांकुरुत ॥ ११ ॥ देवायज्ञम । विंशति-

भुद्रेणंपृङ्क्तविपृचंस्स्थविमांपाप्मनांपृङ्क्त ॥ ११ ॥ [ ११ ] देवायज्ञम ॥
देवायुज्ञमंतन्वतभेषुजम्भिषजाश्विना ॥ वाचासरस्वतीभिषगि

रनष्टुभः सौत्रामण्यांसोमसंप्रहर्षणार्थः । निदानवतां मंत्राणांपूर्वंनिदानं वक्तव्यमर्थस्यसुखबोधाय
इन्द्रस्यकिलानुपहितसोमपाना द्विस्तस्यनसुचिरसुरोपिव । समस्तंवीर्यं तत्रदेवेन्द्रस्य भेषजंकृतम् ।
तत्राश्विनौभिषजौसरस्वतीच ओषधंसौत्रामणी । यद्देवायज्ञमतन्वत विस्तारितवन्तः । भिष-
जम भेषजस्यकर्तारं सौत्रामण्याख्यम् अथतदाभेषजाभिषजोवैद्यौ अश्विना अश्विनौ । इहचतुर्थः
पादः संबध्यतेद्विवचनत्वात् । इन्द्रायइन्द्रियाणिवीर्याणिदधतः । वाचाच तयोलक्षणया सरस्वती-

तदाभिषक्स्यात् ॥ १२ ॥ दीक्षायैरूपम्। शष्पाणि नवप्ररूढानिव्रीहयः। प्रायणीयस्य तोक्मानि नवप्ररूढाय वाःतोक्मानि। क्रयस्यरूपंसोमस्य सोमक्रयस्येति समासप्राप्ते पदयोर्व्यत्ययो रूपश-ब्देनव्यवधानञ्च छान्दसम्। सोमक्रयरूपंलाजाः सोमांशवश्चलाजाएवमधुरस्वादाः ॥ १२ ॥

न्द्रायेन्द्रियाणिदधतः ॥ १२ ॥ दीक्षायैरूपम् ॥ दीक्षायैरूपꣳशष्पाणिप्रायणीयस्यतोक्मानि ॥ क्रयस्यरूपꣳसोमस्यलाजाःसोमाꣳशवोमधु ॥ १३ ॥ आतिथ्यरूपम्मासरम् ॥ आतिथ्यरूपम्मासरम्महावीरस्यनग्नहुः ॥ रूपमुपसदामेतत्तिस्रोरात्रीःसुरासुता ॥ १४ ॥

आतिथ्यरूपंमासरम। व्रीहिश्यामाकौदनाचामचूर्णसंसर्गोमासरम्। महावीरस्यनग्नहुःकिण्वो-नग्नहुः सौरिकाणांप्रसिद्धः। रूपमुपसदामेतत्क्रियते यस्मिंस्तिस्रोरात्रीः सुरा अभिषुताति-ष्ठति ॥ १४ ॥ सोमस्यरूपम्। सोमस्य क्रीतस्यैतद्रूपं यत्परिस्नुत् परिषिच्यते पयसा। केन-

शु० य० सं० ४२७ उ० भा०

पयसा यत् अश्विभ्यां दुग्धं भेषजं च इन्द्राय यच्च अश्विभ्यान्दुग्धं मिन्द्रायैव भेषजम् यच्च सरस्वत्या दुग्धं पयः इन्द्राय भेषजम् ॥ १५ ॥ आसन्दी रूपम् । यजमाना भिषेका संदी रूपम् । राजासन्द्यै सोमासन्द्याः वेद्यै कुम्भी सुराधानी । सोमिक्यां वेदेः रूपम् वेद्योः अन्तरः मध्यम् उत्तरवेद्या रूपम् कारोत्तरः

सोमस्य रूपम् ॥ सोमस्य रूपक्रीतस्य परिस्रुत्परिषिच्यते ॥ अश्विभ्यान्दुग्धम्भेषजमिन्द्रायैन्द्र सरस्वत्या ॥ १५ ॥ आसन्दी रूपम् ॥ आसन्दी रूप राजासन्द्यै वेद्यै कुम्भी सुराधानी ॥ अन्तर उत्तरवेद्या रूपङ्कारोतरो भिषक् ॥१६॥ वेद्या वेदिः ॥ वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् ॥ यूपेन यूप आप्यते प्रणीतो अग्निरग्निना ॥१७॥

सुराप्रवनम् भिषगिन्द्रस्य यजमानस्य च ॥ १६ ॥ वेद्या वेदिः । अनया वेद्या वेदिः सौमिकी समाप्यते बर्हिषा च बर्हिः समाप्यते इन्द्रियं वीर्यम् यूपेन हृष्येन च यूप आप्यते प्रणीतस्याग्निः अग्निना-

अ० १९

शिवम् ४२७

प्यते ॥ १७ ॥ हविर्द्धानंयदक्षिना । यदक्षिनदैवतं तेनहविर्द्धानमाप्यते यत्सरस्वतीदैवतं तेना- ग्नीध्रमाप्यते । यदिन्द्रायहविःतेन इन्द्रसदःक्षतमाप्यते पत्नीशालंच गार्हपत्यस्यआप्यते ॥ १८ ॥ प्रैषेभिः प्रैषान् । प्रैषैः प्रैषानाप्नोतिआप्रीभिः आप्रीः यज्ञस्यसोमयज्ञस्यप्रियाः प्रयाजयाज्याः ।

हविर्द्धानंय्यत् ॥ हविर्द्धानंय्यदश्विनवनाग्नीद्ध्रंय्यत्सरस्वती ॥ इन्द्रा यैन्द्रꣳसदंस्कृतम्पत्नीशालङ्गार्हपत्यः ॥ १८ ॥ प्रैषेभिःप्प्रैषान् ॥ प्रै षेभिःप्प्रैषानाप्नोत्याप्प्रीभिराप्प्रीर्य्यज्ञस्य ॥ प्रयाजेभिरनुयाजान्व षट्कारेभिराहुतीः ॥ १९ ॥ पशुभिःप्पशून् ॥ पशुभिप्पशूनाप्नोतिपु रोडाशैर्हवींꣳष्या ॥ छन्दोभिःसामिधेनीर्य्याज्याभिर्व्वषट्कारा

प्रयाजेभिरनुयाजान् प्रयाजैः प्रयाजानाप्नोतिअनुयाजैरनुयाजानाप्नोति । वषटकारेभिराहुतीः । वषट्कारैर्वषट्कारानाप्नोति । प्रयाजेभिरित्यादि चतुर्णांवाक्यानामर्द्धलोपः ॥ १९ ॥ पशुभिःपशून् पशुभिःपशूनाप्नोति । पुरोडाशैः हवींषिआप्नोति । छन्दोभिः छन्दांसि सामिधेनीभिः सामि-

धेनोः याज्याभिर्याज्यान्। वषट्कारैर्वषट्कारानाप्नोति ॥ २० ॥ धानाः करंभः। उदकमन्थः करम्भः। सक्तवः परीवापः हविष्मङ्क्तिदधिपयः। दधि। सोमस्यरूपम् हविषस्थानरूपम् आमिक्षापयस्या। वाजिनम्मधु। मधुशब्दोवाजिनस्यविशेषणम् आनन्तर्यात् सोमन् ॥ २० ॥

धानाःकरुम्भःसक्तवःपरीवापःपयोदधि ॥ सोमस्यरूपꣳहविषऽआमिक्षावाजिनम्मधु ॥२१॥ धानानाꣳरूपम् ॥ धानानाꣳरूपङ्कुवलम्परीवापस्यगोधूमाः ॥ सक्तूनाꣳरूपम्बदरमुपवाकाः करम्भस्य ॥ २२ ॥ पयसोरूपम् ॥ पयसोरूपंयद्यवादध्नोरूपङ्कर्कन्धू

संस्तवस्य ॥ २१ ॥ धानानांरूपम्। अधस्तनमन्त्रोक्तानां। सामहविषां सोमस्यचसंपत्तिं सौत्रामणीद्रव्येष्वाह। धानानांरूपंकुवलं कोमलबदरम्। परीवापस्यगोधूमाः। सक्तूनांरूपंबदरम् उपवाकाः करम्भस्य रूपम् उपवाकाः यवकाः ॥ २२ ॥ पयसोरूपम्। पयसो रूपंयत्यवाः। दध्नः रूपं कर्कन्धूनि। कर्कन्धुर्बदरविशेषः। सोमस्यरूपंवाजिनम् सौमस्यचरूपमामिक्षाप-

यस्या ॥ २३ ॥ आश्रावय । इदानीं शस्त्रसम्पत्तिः क्रियते । आश्राश्वय इतिशब्दप्रदर्शनार्थः । स्तोत्रियाः । प्रत्याश्रावः । अस्तुश्रौश्‍ट् । अनुरूपः । यजइति । धाय्यारूपम् निष्केवल्ये स्तोत्रियानुरूपयोरनन्तरम् धाय्याशस्यन्ते । प्रगाथायेयजामहाः । येश्यजामहे इतिप्रगाथाः ॥२४॥

नि ॥ सोमंस्यरूपंवाजिनꣳसौम्म्यस्यंरूपमामिक्षां ॥ २३ ॥ आश्रां वय ॥ आश्रांवयेतिंस्तोत्रियाःप्रत्याश्रावोऽअनुरूपः ॥ यजेतिंधाय्यारूपम्प्रगाथायेयजामहाः ॥२४॥ अर्द्धऽऋचैरुक्थानाम् ॥ अर्द्धऽऋचैरुक्थानांꣳरूपम्पदैराप्नोतिनिविदः ॥ प्रणवैः शस्त्राणांꣳरूपम्पयंसासोमंऽआप्यते ॥ २५ ॥ अश्विभ्याम्प्रातꣳसवनम् ॥ अश्विभ्

अर्द्धऋचैः उक्थानां रूपमाप्नोतिपदैः आप्नोतिनिविदः । न्यूङ्खाउच्यन्ते । प्रणवैः ओंकारैः शस्त्राणांरूपंपयसा सोमआप्यते ॥ २५ ॥ अश्विभ्यांप्रातः सवनमाप्तम् इन्द्रेणऐन्द्रं माध्यन्दि-

शु॰ य॰ सं॰ ४२९ उ॰ भा॰

नंसवनमाप्नम्। वैश्वदेवं तृतीयंसवनं सरस्वत्याआप्नम्॥ २६॥ वायव्यैः। सर्वेषांसोमपात्राणां वायव्यानीतिसंज्ञा। वायव्यैः पात्रैः वायव्यानिपात्राण्याप्नोति। सतेनद्रोणकलशम्। वैतसंपात्रं सतइत्युच्यते। कुंभीभ्यां सुराधानीभ्यां शतछिद्राभ्याम् अम्भृणौ। अम्भृणौपूतभृदाधवनीयाव्-

भ्यांम्प्रातःसवनमिन्द्रेणैन्द्रम्माध्यंन्दिनम्॥ वैश्वदेवꣳसरस्वत्यातृतीयंमाप्तꣳसवनम्॥ २६॥ वायव्यैर्वायव्यानि॥ वायव्यैर्वायव्यान्याप्नोतिसतेनद्रोणकलशम्॥ कुम्भीभ्यामम्भृणौसुतेस्थालीभिस्थालीराप्नोति॥ २७॥ यजुर्भिराप्यन्ते॥ यजुर्भिराप्यन्तेग्रहाग्रहैस्तोमांश्चविष्टुतीः॥ छन्दोभिरुक्थाशस्त्राणिसाम्ना

चेरते। सुतेअभिषुतेसोमेयौभवतः तौआप्नोति। स्थालीभिः स्थालीआप्नोति। उभयतश्छिद्रस्थाल्योभवन्तो॥ २७॥ यजुर्भिराप्यन्ते। यजुर्भिः यजूंषि आप्यन्ते ग्रहाग्रहैराप्यन्ते।

अ॰ १९

शिवम् ४२९

स्तोमास्त्रिविष्टुतीश्च छन्दोभिः उक्थशस्त्राणि साम्नावभृथमाप्यते। साम्नासाममाप्यते अवभृथेनावभृथः ॥ २८ ॥ इडाभिर्भक्षान्। इडाभिः इडामाप्नोति। भक्षैर्भक्षानाप्नोति। सूक्तवाकेनसूक्तवाकम् आशीभिराशिषः शंयुनाशंयुमाप्नोति। पत्नीसंयाजैः पत्नीसंयाजानाप्नोति।

वभृथऽआप्यते ॥ २८ ॥ इडाभिर्भक्षानाप्नोतिसूक्तवाकेनाशिषः ॥ शंयुनापत्नीसंयाजान्त्समिष्टयजुषासꣳस्थाम् ॥ २९ ॥ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोति श्रद्धयासत्यमाप्यते ॥ ३० ॥ एतावद्रूपम् ॥ एतावद्रूपंयज्ञ

समिष्टयजुषा समिष्टयजुराप्नोति। संस्थयासंस्थामाप्नोति ॥ २९ ॥ व्रतेन। कृताच्छिष्टभक्षस्वदूरात्रिमग्निहोत्रं जुहोति। अनेनव्रतेनदीक्षामाप्नोति दीक्षया। दक्षिणामाप्नोति। दक्षिणा। दक्षिणयेतिविभक्तिव्यत्ययः। श्रद्धामाप्नोति। श्रदितिसत्यनामसुपठितम्। तदस्यांधीयतेआस्तिक्येन एवमेतदितिसाश्रद्धापुण्यकृतां मनोविशेषः। श्रद्धयासत्यमाप्यते। सत्यम् सौत्रामण्या

ज्ञानमनन्तंब्रह्म । नयोलक्षणंवा ॥ ३० ॥ एतावत् । यत्परिमाणंरूपं सोमयज्ञस्य । यद्दे-
वैश्च ब्रह्मणाचप्रजापतिनाकृत म् दृष्टम् । दर्शनकरणयोः कोविशेष इतिचेत् । स्वप्नप्रतिबुद्धन्या-
येन दर्शनम् करणंतुबुद्धिपूर्वंव म् । तदेतत्स ।माप्नोतियज्ञेसौत्रामणी । पूर्वसवर्णदीर्घआदेशश्छान्दसः ।



स्सुयद्देवैर्ब्रह्मणाकृतम् ॥ तदेतत्सर्वमाप्नोतियज्ञेसौत्रामणीसु
ते ॥ ३१ ॥ [ २० ] सुरावन्तम्बर्हिषदम् ॥ सुरावन्तम्बर्हिषदꣳसुवीरँ
य्यज्ञꣳहिन्वन्तिमहिषानमोभिः ॥ दधानाःसोमन्दिविदेवतासुम
देमेन्द्रंय्यजमानाःस्वर्काः ॥ ३२ ॥ यस्ते ॥ यस्तेरसःसम्भृतऽओषधी

स्वे । सुते । सुरासोमाभिषुते ॥ ३१ ॥ (१) पयोग्रहाञ्जुहोति । सुरावन्तम् । त्रिष्टुबश्विसर-
स्वतीदेवत्या । यत् सुरावन्तं बर्हिषम् सुरावान्वाएष बर्हिषयज्ञो यःसौत्रामणी । सुवीरंकल्याण-
वीरम् । यज्ञं हिन्वन्तिवर्द्धयन्ति प्रापयन्तिवा । महिषाऋत्विजः । नमोभिः नमस्कारैः अन्नैर्वा ।



(१) का० सुरावन्तमिति जुहोति । अध्वर्युस्त्रीनपि पयोग्रहान् जुहोतीत्यर्थः ।

दधान धारयन्तः। सोमन्द्रिविदेवतासु। तत्रमदेमवयम इन्द्रं यजमानाः स्वर्काः शोभना-र्चनाः कल्याणमनावा ॥ ३२ ॥ (१) सुराग्रहाञ्जुहोति । यस्तेरसः उक्तादेवताछन्दश्चाधस्तनया। हेसुरेयस्तवरसः सम्भृतःएकीकृतः ओषधीषुवर्तमानः। सोमस्यचयःशुष्मः यद्बलम्। सुरयासह

षुसोमस्यशुष्मःसुरयासुतस्य ॥ तेनजिन्वयजमानम्मदेनसरस्वती मुश्विनाविन्द्रमुग्निनम् ॥ ३३ ॥ यमुश्विना ॥नमुचेरासुरादधिसरं स्वत्यसुनोदिन्द्रियाय ॥ इमन्तःशुक्रम्मधुमन्तमिन्दुः सोमः राजान

अभिषुतस्य। तेनोभयेन रसेनबलेनच जिन्वन्प्रीणीहि यजमानम्। मदेनसुरोत्थेन सरस्वतींच। अश्विनौच इन्द्रंचअग्निञ्च ॥ ३३ ॥ पयोग्रहान्भक्षयन्तिद्वाभ्यांत्रिष्टुभ्यांमृत्विग्यजमानाः। (२) यम-श्विना। नमुचिरसुरइन्द्रस्यइन्द्रियंवीर्यमपिबत् तस्यशिरसिच्छिन्ने लोहितमिश्रः। सोमोत्तिष्ठत्

(१) का० पालाशैः सौरान्‌ मृण्मयमाहुतिमानश्च इति श्रुतेर्यस्त इति। १९। ३। ९। प्रतिप्रस्थाता पालाशोलूखलैः सुराग्र-हान्दक्षिणेऽग्नौयजतिमृण्मयपात्रमाहुतिं नव्याप्नोतीतार्थः।

(२) का० अध्वर्युः प्रतिप्रस्थाताग्नीध्रमश्विनेतराश्विनं भक्षयन्ति द्विर्द्विरावर्त्त्यं, होतब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवदैन्द्रं

तदुत्पूयपिबन्तः तदभिवादिनीएषाऋक् । यत्अश्विनाअश्विनौ । नमुचेरासुरात् असुरपुत्रात् अधिसकाशादादृत्य । सरस्वतीचअसुनोत् अभ्यषुणोत् । इन्द्रियायवीर्याय इन्द्रभैषज्यायवा । इमंतंशुक्रम् शुक्लम् असंसृष्टलोहितम् मधुमन्तम् रसवन्तम् । इन्दुम् । इदिपरमैश्वर्ये परमेश्वरम् ।

मिह्रभंक्षयामि ॥ ३४ ॥ यदत्रं ॥ यदत्रंरिप्तर्ठ०रसिनंःसुतस्ययदिन्द्रोऽअपिबच्छचीभिः ॥ अहन्तदस्यमनंसाशिवेनसोमर्ठ० राजानमि

सोमंराजानम् इहभक्षयामि ॥ ३४ ॥ (१) यदत्र । यत्अत्रअस्यांसुरायाम् रिप्तंलिप्तंलग्नम् रसिनः रसवतः सुतस्यअभिषुतस्यसोमस्य । यच्चइन्द्रः अपिबत्पीतवान् इन्द्रदेवत्योहिसोमः । शची-भिःकर्मभिः । अहंतत् यत्तदितिसुविज्ञाते नपुंसकलिङ्गता । अस्यमनसाशिवेन सोमंराजान-



यजमानः । त्रय आहृतराश्विनं पयोग्रहं क्रमेण ह्विर्भिं भक्षयन्ति सक्तुमन्त्रः होत्रादयः सारस्वतं पयोग्रहमदन्ति यजमान ऐन्द्रं पयोग्रहमत्तीति सूत्रार्थः ।

(१) का० यदत्रेति सौरान् भक्षयन्ति यथाभक्षितं प्राचीवीतिनो दक्षिणतः । अध्वर्य्वादय आश्विनं होत्रादयः सारस्वतं यजमान ऐन्द्रं सुराग्रह यदत्रेति मन्त्रेण विहारदक्षिणे स्थिता प्राचीनावीतिनो भक्षयन्ति आघ्राणमन्येन मूल्येन भक्षणमितरार्थः ।

मितिषष्ठ्याविपरिणामः। सोमस्यराज्ञः इहभक्षयामि ॥ ३५ ॥ (१) अंगारेषुवर्हिष्परिधिषु सुरां-
जुहोति। पितृभ्यः पैत्ताणियजूंष्यस्यां कण्डिकायाम्। पितृभ्यःस्वधायिभ्यः स्वधांप्रतिगमनशी-
लाःस्वधायिनः। सुप्यजातौणिनिस्ताच्छील्ये। स्वधानमः अन्नमस्तु। बहुवचनंपितृव्यसव्यपेक्षम्

इहभंक्षयामि ॥ ३५ ॥ पितृभ्यंः स्वधायिभ्यंः ॥ स्वधानमंः पितामहे
भ्यंः स्वधायिभ्यंः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यंः स्वधानमंः ॥
अक्षंन्पितरोमीमदन्तपितरोतीतृपन्तपितरः पितंरः शुन्धंध्वम् ॥ ३६ ॥

पूजार्थंवा। पितामहेभ्यः। उक्तोदर्कम्। प्रक्षालननोपसिञ्चति अक्षन् अत्तवन्तः भक्षितवन्तःपितरः।
अमीमदन्तमादिताः पितरःतीतृपन्त तर्पिताःपितरः। जपति। पितरःपितरः शुंधध्वम् पाणि-

(१) का० अङ्गारेषु वा बर्हिष्परिधि] दक्षिणतो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य इति प्रतिमन्त्रं
सुराग्रहाणां भक्षणम् अन्येन मूल्येन भूपालपानमिति पक्षत्रयमुक्तम् चतुर्थं माह यद्वाहवनीयस्याङ्गारेषु परिधेर्बर्हिर्दक्षि-
णदिकस्थेषु होमशेषान् सुराग्रहान्पितृभ्य इति प्रतिमन्त्रं जुहोति तदेवाह उत्तरेऽङ्गारे आश्विनम् मध्यमे सारस्वतम्
दक्षिणे ऐन्द्रं सुराग्रहं जुहोतीति सूत्रार्थः।

प्रक्षालनंकुरुध्वम् ॥ ३६ ॥ (१) नवचैवंवाचयति पावमानम् । पुनन्तुमा । द्वेपिल्यावनुष्टुभौ पुनन्तुमां पितरः सोम्यासःसोमसम्पादिनः । पुनन्तुमांपितामहाः पुनन्तुप्रपितामहाः । पावनंचपापापनोदः:शुद्धिः फलग्रहणयोग्यता । केनपुनन्तु । पवित्रेण । कथंभूतेन शतायुषा । येनपूत.शता-

पुनन्तुंमापितरः सोम्यासः पुनन्तुंमापितामहाः पुनन्तुप्रपितामहाः पवित्रेणशतायुषा ॥ पुनन्तुंमापितामहाः पुनन्तुप्रपितामहाः ॥ पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ ३७ ॥ अग्नआ

तायुर्भवति तत्पपवित्रं तत्साधनत्वाच्छतायुरेव । पुनन्तुमांपितामहाः पुनन्तुप्रपितामहाः पवित्रेण शतायुषा । आदरार्थोभ्यासः विशेषार्थोवा । तथा मांपितृपितामहाः प्रपितामहाः पुनन्तु यथा विश्वं सर्वमायुः अहं व्यश्नवै व्याप्नुयं प्राप्नुयाम् ॥ ३७ ॥ अग्न आयूंषि ।

(१) का० कुम्भीमासज्य कुम्भवच्छतवितृणां वालपवित्रंहिरण्यानन्तर्धायनवर्च वाचयतिपुन न्तुमेति ११ । ३ २० । दक्षिणाहवनीयपार्श्वयोः स्तम्भद्वयोपरि दक्षिणाग्र वंशंनिधाय तत्रस्थं शिक्यं शतच्छिद्रां कुम्भीं निधाय कुम्भीतले वालादीनि निधाय

आग्नेयीगायत्री हेअग्ने यतस्त्वम् आयूंषिपवसे आयुःप्रापकाणिकर्माणि चेष्टयसिस्वभाव-तएवअतस्त्वांप्रार्थये । आसुवअभ्यनुजानीहि । ऊर्जंदधिउपसेचनम् इषञ्चव्रीह्यादि नःअ-स्माकम् एतद्विजीवनहेत्वित्यभिप्रायः । किञ्च । आरेदूरेएवा वस्थितंसन्तंवाधस्व तैस्तैरुपायैः दुच्छुनाम्दुष्टंश्वानम् शुनाचात्रदुर्जनप्रभृतयोलक्ष्यन्ते । तैःरहितोहि पुरुषःपरमायुःप्राप्नोति ॥ ३८॥

यूंषि ॥ पवसऽआसुवोर्ज्जमिषंञ्चनः ॥ आरेबांधस्वदुच्छुनाम् ॥ ३८॥ पुनन्तुंमा ॥ देवजनाःपुनन्तुमनंसाधियंः ॥ पुनन्तुविश्वांभूतानि जातंवेदःपुनीहिमा ॥ ३९ ॥ पुवित्रेणपुनीहि ॥ माशुक्रेणदेव दीद्यत् ॥ अग्नेक्रत्वाक्रतूँ१ऽरनुं ॥ ४० ॥ यत्तेपुवित्रमुर्चिष्यग्ने

पुनन्तुमा । लिङ्गोक्तदेवतानुष्टुप् पुनन्तुमादेवजनाः देवानुगामिनः । पुनन्तुमनसासंयुक्ताः । धियःबुद्धयःकर्माणिवा । पुनन्तुविश्वानिभूतानि त्वमपि हेजातवेदःपुनीहिमाम् ॥ ३९ ॥ पवि-त्रेण । आग्नेयीगायत्री पवित्रेणपुनीहिमाम् । शुक्रेणशोचिष्मता शुक्लेनअशबलेन । हेदेवदीद्यत्

दीप्यमानः । हेअग्ने क्रत्वाकर्माणिचक्रिययाचक्रतून् तान् तान्चक्रतून्अनु ॥ ४० ॥ यते । आग्नेयीब्राह्मस्तृतीयःपादःगायत्री । यत्तेतवपवित्रम् अर्चिषिहेअग्ने विततंप्रसारितम् । अन्तरामध्येन ब्रह्मसत्यंज्ञानमनन्तम् त्रयीलक्षणपरंवा । तेनपवित्रेण अग्न्यनुज्ञातेन पुनातुमामाम् ॥ ४१ ॥ पवमानः । सामदेवत्यागायत्रीतृतीयःपादोवायव्यः । सःपवमानःसोमः । अद्यअस्मिन्द्यवि नःअ-

## व्विततमन्तरा ॥ ब्रह्मतेनपुनातुमा ॥ ४१ ॥ पवमानःसः ॥ पवमानःसोऽअद्यनःपवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ ४२ ॥ उभाभ्यान्देव ॥ सवितःपवित्रेणसवेनच ॥ माम्पुनीहिविश्वतः ॥ ४३ ॥ वैश्वदेवीपुनती ॥ देव्यागाद्यस्यामिमाबह्व्यस्तन्वो

स्मान्पवित्रेण विचर्षणिः । द्रष्टाकृताकृत सर्वज्ञकःपुनातु । यश्चस्वभावतःपोतासपुनातुमां वायुः ॥ ४२ ॥ उभाभ्याम् । सावित्रीगायत्री । हेदेवसवितः उभाभ्याम् पवित्रेणच । सवेनाभ्यनुज्ञयाच । मांपुनीहिविश्वतः सर्वतः ॥ ४३ ॥ वैश्वदेवी । त्रिष्टुप् अनिर्ज्ञाताभिधेया प्रवल्हिकेव-

तत्रकाश्चिद्देवतामङ्गीकृत्य व्याचक्ष्महे । शतातृण्णाकुम्भीदक्षिणस्या ग्नेरुपरिष्टा त्सरति । साचा-
भिधेया सौत्रामणीवा वाग्वा उखावेत्यादि । विश्वेभ्योदेवेभ्यः आगताहितावा वैश्वदेवीसुरा-
कुम्भी । पुनतीपावनंकुर्वाणा अगात्आगता । यस्याम् इमाः वह्वः धाराःतन्वः पुरः वीतपृष्ठाः
कामितशरीराः । काम्यन्ते हिसुराधाराः । तयामदन्तः तयासहमोदमानाः । सधमादेषु सध-

वीतपृष्ठाः ॥ तयामदन्तःसधमादेषुवयंस्यामपतयोरयीणाम् ॥
४४ ॥ येसमानाःसमनसःपितरोयमराज्ये ॥ तेषांल्लोकःस्वधान
मोयज्ञोदेवेषुकल्पताम् ॥ ४५ ॥ येसमानाः ॥ येसमानाःसमन

मादयोःश्छन्दसीतिसहस्य सधादेशः । सहमदनेषु वयंस्यामपतयः रयीणांधनानाम् ॥ ४४ ॥
दक्षिणाग्नौजुहोति । येसमानाः अनुष्टुप्पैत्री । येसमानाः जात्यादिभिः । समनसः समा-
नमनस्काः पितरः य मराज्ये लोकेत्यस्यहि स्वेलोकेराज्यम् । तेषांपितॄणांलोकः आयतनम्
स्वधाशव्दोपलक्षितमन्नमस्तु । यद्वा तेषांपितॄणांलोकआयतनं स्वधाकारोपलक्षित मन्नमस्तु ।

नमस्कारोपलक्षिताच स्तुतिर्भवतु । यज्ञस्तु देवेषु कल्पतां समर्थीभवतु ॥ ४५ ॥ उत्तरेणना-
वाज्याहुतिंजुहोति । येसमानाः अनुष्टुप् यजमानाः । येसमानाः समनसःजीवाः जीवनवन्तः ।
जीवेषु जीवनवत्सु मध्येमामकाः मदीयाः । तेषांसंवन्धिनीश्रीः मयिकल्पतांक्लृप्ताभवतु ।
तान्परित्यज्यमामाश्रयत्वित्यर्थः । पापात्मानोहि गोचिणोभवन्ति । कुत्रकियन्तञ्चकालमित्यत-

सोजीवाजीवेषुमामकाः ॥ तेषाᳬं श्रीर्म्मयिंकल्प्पतामस्मिंल्लोकेशुत
ᳬंसमाः ॥४६॥ द्वेसृती ॥ ऽअश्शृणवम्पितृणामहन्देवानामुतर्त्यानाम् ॥
ताभ्यामिदंविश्वमेजत्समेतियदन्तरापितरम्मातरंच ॥४७॥ इदᳬं

आह । अस्मिन्लोकेशतंसमाः । समाशब्दः संवत्सरवचनः ॥ ४६ ॥ पयःसमन्वारब्धेजुहोति ।
द्वेसृती त्रिष्टुप् । पन्थानोब्रवीति । येएते शुक्लकृष्णेसृतीयावेतौदेवयानपितृयाणौ पन्थानौ ।
अहमशृणवं पितृणांश्रुतिवाक्येभ्यः । सएषदेवयानोवापितृयाणोवापन्थाइति । देवानांदेवयानगा-
मिनाम् उतअपिच मर्त्यानांमरणधर्मिणां पितृयानगामिनाम् । ताभ्यामिदंविश्वमेजत्समेति ।

तदः स्थानेयदोवृत्तिः । याभ्यांपथिभ्याम् इदंसर्वम् एजत्क्रियावत् समेतिसंगच्छति यत्अन्तरा-
पितरं मातरञ्च । द्यौःपितापृथिवीमाता सुहुतंताभ्यांस्रुतीभ्यामस्तु ॥ ४७ ॥ (१) शेषंयजमानो
भक्षयति । इदंहविः व्यवसानाअष्टि र्यजमानाशीः । इदंपयोलक्षणंहविः प्रजननमुत्पादकम् ।
मेमसअस्तु दशवीरम् । प्राणावैदशवीराः सर्वगणम् । अङ्गावैसर्वेगणाः स्वस्तयेअविनाशाय ।

हविः ॥ इदꣳहविः प्रजननंम्मेऽअस्तुदशवीरꣳ सर्व्वगणꣳस्वस्तये ॥
आत्मसनिंप्रजासनिंपशुसनिंलोकसन्न्यभयसनि ॥ अग्निःप्रजाम्बं
हुलाम्मेकरोत्त्वन्नम्पयोरेतोऽअस्मासुधत्त ॥४८॥ [१७] उदीरताम् ॥

पुनरपि हविर्विशेष्यते । आत्मसनि आत्मानंयद्धविः सनोतिसंभजतेतदात्मसनि । एवंप्रजासनि
पशुसनि लोकसनि अभयसनि । अभयमपुनरावृत्तिः । अग्निःप्रजांवहुलाम् अतिवृद्धांममक-
रोतु । यूयंच हेऋत्विजः । अन्नंचपयश्चरेतश्च । अस्मासुधत्त ॥ ४८ ॥ (२) उदीरताम् । त्रयोद-

(१) का० शेषं यजमानो भक्षयतोदꣳ हविरिति उखास्थितं शेषं पयो यजमानो भक्षयतीत्यर्थः ।

(२) का० सोमवतां वर्हिषदामग्निष्वात्तानाञ्च । उदीरतामित्यादित्रयोदशर्चोऽनुवाकः तत्रउदीरताम् अङ्गिरसः ये नः इति

अपैत्यस्विष्टुभःजगत्येकादशी । यजमानवाचनम् । उदीरताम् ईरगतौउदउपसर्गात्परः । ऊर्द्ध्वंक्रमताम् । ऊर्द्ध्वंगच्छन्तु । अवरे येस्मिन्लोकेवस्थिताः पितरः । उत्परासः । परएवपरासःयेचपरस्मिन्लोकेवस्थितास्तेपि उदीरताम् तस्मादपिस्थानाद्विशिष्टतरं स्थानंगच्छन्तु । उन्म-



उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ॥ असुं यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥४९॥ अङ्गिरसोनः ॥

ध्यमाः । मध्येभवामध्यमाः । येपिमध्यमास्तेपिततोविशिष्टतरं स्थानमुद्गच्छन्तु । पितरःसोम्यासः सोमसम्पादिनः । असुंयेईयुः येपिअसुं प्राणम् ईयुः समन्वियुः वातात्मानः अष्टकाअन्तर्मिताः मध्यस्थत्वमास्थिताः । ऋतज्ञाः सत्यज्ञावा यज्ञज्ञावा स्वाध्यायनिष्ठावा । तेपिततोविशिष्टतरं स्थानमुच्छन्तु । एवंच स्वकीयेनकर्मणा अस्मदीयेनचयेउन्नतिं प्राप्ताः । तेनःअस्मान् अवन्तु-

ऋत्वयस्याग्निष्वात्तानित्यन्तस्यायाश्च विनियोगः कल्पकृतोक्तः त्वं सोमेति तृचं सोमवताम् बर्हिषद इति तृचं बर्हिषदाम् आयन्तु न इति तृचमग्निष्वात्तानाम् पुनन्तु मेति नवर्चं वाचनान्तरं त्वं सोमेत्यादि तन्वं कल्पयातीतयन्तं नवर्चं प्रत्यृचमध्वर्युयजमानेन वाचयतीत्यर्थः ।

पालयन्तु पितरः हवेषुआह्वानेषु ॥ ४९ ॥ अङ्गिरसोनः । अङ्गिराऋषिस्तस्यापत्यानिवह्वनि अङ्गिरसः नः अस्माकं पितरः नवग्वाः नवगतयः पुनः पुनरपुनरुक्त्या गच्छन्ति । नवनी-यास्तोतव्या वा गतिर्येषांते त थोक्ताः । येचअथर्वाणः वह्वन्यपत्यानि । अथर्वापुनः थर्वति-श्चरतिकर्मातत्प्रतिषेधः । येचभृगवः भृगोर्वहून्यपत्यानि । सोम्यासः सोमसंपादिनः । तेषां-

पितरोनवंग्ग्वाऽअथर्व्वाणोभृगंवःसोम्म्यासंः ॥ तेषांव्वयँसुमतौय्यज्ञियानामपिंभुद्रेसौमनुसेस्याम ॥ ५० ॥ येनंः ॥ येनुःपूर्व्वेपितरंः सोम्म्यासोंनूहिरेसोमपीथंव्वसिंष्ठाः ॥ तेभिर्य्युमःसँरराणोहुवींष्युं

पितृणांवयंसुमतौस्याम । यज्ञियानां यज्ञसंपादिनाम् । अपिचभद्रे भन्दनीये सौमनसेक-ल्याणमनसे स्यामभवेम ॥ ५० ॥ येनः पूर्वे । येनःअस्माकंपूर्वेपितरः सोम्यासः सोमसंपा-दिनः तेषांपितृणाम् अनुऊहिरे । वहप्रापणे । देवाननुप्रापितवन्तः सोमपीथंसोमपानम् । वसिष्ठाः वसिष्ठस्य वहून्यपत्यानि । वसिष्ठः पुनर्वस्तृतमः छतास्सदोवसति । तेभिः तैवं-

सिष्ठैः यमः संस्तोणः संप्रीयमाणः। हवींषि। कथंभूतोयमः उशन्। वशकान्तौ। अस्य-
कृतसंप्रसारणस्यैतद्रूपम् कामयमानः। कथंभूतैर्वसिष्ठैः उशद्भिः। कथमत्तु। प्रतिकामम्
यथाकामं भक्षयतु॥ ५१॥ त्वंसोम। हेसोम प्रचिकितः चिकित्वान् चेतनावान् प्रकर्षेण-
चेतनावान् विशिष्टचैतन्ययुक्तः त्वम्मनीषा। मनसईषामनीषामनस इच्छाविशिष्टतराभवतिय-

## ष्युशन्नुशद्भिःप्रतिकाममंत्तु॥५१॥ त्वꣳसोम॥ त्वꣳसोमप्रचिंकि तोमनीषात्वꣳरजिंष्ठमनुंनेषिपन्थाम्॥ तवप्रणीतीपितरोनऽइन्दो देवेषुरत्नमभजन्तधीराः॥ ५२॥ त्वयाहि॥ त्वयाहिनःपितरःसो

ज्ञनाम्। यद्वा। हेसोम त्वंप्रचिकितः। कितज्ञाने प्रकर्षेणज्ञातासि। यावत् ज्ञात-
व्यम् मनीषांमनीषयास्त्वया प्रज्ञया। त्वंरजिष्ठम् ऋजुतरंदेवयानाख्यम् अनुनेषिअनुन-
यसि। पन्थांपन्थानम्। किंच। तवप्रणीतीप्रणयनेन तवाभ्यनुज्ञानेन। पितरः नः अस्मा-
कम् हेइन्दोदेवेषु मध्येरत्नं रमणीयं यद्रफलम् अभजन्तधीराः धीमन्तः॥ ५२॥ त्वया-

हिन: । यस्मात्त्वया आश्रयभूतेन न: अस्माकं पितर: हेसोमपूर्वेपूर्वजा: कर्माणिचक्रु: । कृतवन्त: हेपवमान । धीरा: धीमन्त: । अतअत: प्रार्थयेच त्वाम् वज्वान् संभजमान: तानि-तानिकर्माण्यस्मदीयानि । अवात: वाताद्युपद्रवरहित: एकचित्त: । परिधीन् सर्वतोनिहि-तान् यज्ञोपद्रवकारिण: अपोर्णु । ऊर्णुञ् आच्छादने । अपगमय । वीरेभि: वरैश्वाश्वैस्सम-

मुपूर्व्वे कर्म्माणिचक्रुःपवमानुधीराः ॥ वुन्वन्नवातःपरिधीः२ऽरपोर्णुं वीरेभिरश्वैर्म्मघवांभवानः ॥ ५३ ॥ त्वःसोम ॥ पितृभिःसंविद्दानोनुद्यावापृथिवीऽआततन्थ ॥ तस्मैतऽइन्दोहविषांविधेमव्वयःस्यामपतयोरयीणाम् ॥ ५४ ॥ बर्हिषदःपितरः ॥ बर्हिषदःपित

हित: । मघवाधनवान् भवान:अस्माकम् । योयस्यददाति सतस्यधनवानितिमति: ॥ ५२ ॥ त्वंसोम । यस्त्वंहेसोमपितृभि: संविदान: संवादं कुर्वाण: । अनुद्यावापृथिवीआततन्थ । तनु-विस्तारे अन्वातनोषि द्यावापृथिव्यौ दृढीकरोषिद्यावापृथिव्यौ । तस्मैतवहे इन्दोहविषावि-

षेम । हविर्दग्नइतिशाक्यार्थः । वयंच हविः प्रदानानन्तरमवेसपतयो धनानांसोमवताम् पितृणांषडुचम् ॥ ५४ ॥ बर्हिषदः । तिस्नऋचो बर्हिषदांहविर्यज्ञयाजिनो । बर्हिषदःबर्हिषि सीदन्तीति बर्हिषदः पितरः । जतोऊत्या अर्वाक्अर्वाञ्चआगच्छत । कोहेतुरागमनइति चेत् । इमाइमानि वः युष्माकं हव्याहवींषि । चक्रम । तानिजुषध्वम् सेवध्वम् । येस्युयु-ष्माभि रधस्तनानि हवींष्यासेवितानि । तेयूयं पुनरष्माह्वयमानाः आगताः अवसा अन्ने-

**रऽऊत्त्यर्वाग्गिमावोहुव्याचंक्रमाजुषध्वंम् ॥ तऽआगतावंसाशन्तंमेनाथांनुःशंय्योरंरुपोदंधात ॥५५॥ आहम् ॥ आहम्पितृन्त्सुंविदत्रांरं ॥**

नहविर्लक्षणेन । शन्तमेन । शमितिसुखनाम । सुखयितृतमेनहेतुभूतेन । अथपरितुष्टाः यच्चसनाय्युत्तरकालम् नोस्माकम शंयोः पदद्वयमेतत् । शमनञ्च रोगाणांदधात । यावनञ्च भयानांदधात । अन्यदपियत्किञ्चित् अपरः अपापंतदस्माकंदधात ॥ ५५ ॥ आहम् । आत्र-वित्सि आभिमुख्येनवेद्मिविदितत्वात् । अहंपितृन् सुविदत्रान् । सुविदत्रः । कल्याणदानः । कल्याणदानान् । नपातंचविक्रमणंचविष्णोः । व्याप्नुयज्ञस्य । नविद्यतेयत्नोपगतानांपातः सन-

पात: देवयान:पन्था: । विविधंक्रमणंयत्नगतानांसविक्रमणा: । पितृयाण:पन्था: । तत्रहि अरघट्टघटीवत् उत्तराधरम् प्राणिनोगच्छन्ति । देवयानपितृयाणौपंथानौ यद्धसंवन्धिनावहंवेद्मि । तद्गतांश्चपितॄन् । यत एवमतोब्रवीमि । वर्हिषदो येपितर: स्वधया अन्नेन सहसवनीयलक्ष- णेन । सुतस्य अभिषुतस्य सोमस्यभजन्ते सेवन्ते । पित्व:पानं सोमपानम् तेइह अस्मिन्कर्मणि

ऽअविस्मिनपांतञ्चविक्रमंणञ्चविष्णोंः ॥ बर्हिषदोयेस्वधयासुतस्य भजंन्तपित्वस्तऽइहागंमिष्ठाः ॥५६॥ उपंहूताःपितरंः ॥ सोम्यासों वर्हिष्येषु निधिषुप्प्रियेषुं ॥ तऽआगंमन्तुतऽइहश्रुंवन्त्वधिंब्रुवन्त्

आगमिष्ठा: आगच्छन्त्वित्याख्यातसन्नति: ॥ ५६ ॥ उपहूता: पितर: सोम्यास: सोमसंपादिन: । वर्हिष्येषुनिधिषुप्रियेषु । हविर्विशेषणान्येतानि । वर्हिषिभवेषु वर्हिष्येषु वर्हिषिसादितेषु हविष्वि- त्यर्थ: । निधिभूतेषु पितृणांप्रियेषु अभिरुचितेषु तेपितर एतत्ज्ञात्वा आगमन्तुआगच्छन्तु आगत्य- च । ते इहशृण्वन्तु श्रुत्वान्तु अस्मदीयानिवचांसि । श्रुत्वाच अधिब्रुवन्तु यद्वक्तव्यं पितृभि: पुत्रा-

णाम् तेच अवन्तु रक्षन्तु सर्वतः अस्मान् ॥५७॥ आयन्तुनः। चतस्रोऽग्निष्वात्तेभ्यः। आयन्तु आग-
च्छन्तु नः अस्माकंपितरः। सोम्यासः सोमसंपादिनः। अग्निष्वाताः पुनः यान् अग्निरेवस्व-
दयति। नहितेश्रौतस्मार्त्तकर्मकारिणः। पथिभिर्देवयानैः। देवसहगमनैः। देवसहयायि-
नस्तेपितरो येषामेतत्कर्मक्रियते पुत्रपौत्रप्रपौत्रैः। उक्तञ्च। पुत्रेणलोकंजयति पौत्रेणान-

तेऽवन्त्वस्मान् ॥ ५७ ॥ आयन्तु ॥ नःपितरःसोम्यासोऽग्निष्वात्ताः
पथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेऽवन्त्व
स्मान् ॥ ५८ ॥ अग्निष्वात्ताःपितरएहगच्छतसदःसदःसदतसु
प्रणीतयः ॥ अत्ताहवीꣳषिप्रयतानिबर्हिष्यथारयिꣳसर्ववीरन्द

न्त्यमश्नुते। अथपुत्रस्यपौत्रेण ब्रध्नस्याप्नोति विष्टपमिति। आगत्यच। अस्मिन्यज्ञे स्वधयाऽन्न-
न्नेन मदन्तः तृप्यन्तः। परिपुष्टाअधिब्रवन्तु। तेवन्त्वस्मानितिव्याख्यातम् ॥ ५८ ॥ अग्नि-
ष्वात्ताः पितरः आइहगच्छत। आगच्छतइह। एत्यच। सदः सदः गृहंगृहं प्रतिसदत

उपविशत । हेसुप्रणीतयः साधुप्रणयनः । ततः सुखोपविष्टाः अत्तभक्षयत । हवींषिप्रय-
तानि व्यपगतरागद्वेषमोहैरभिसंस्कृतानिशुचीनि । वर्हिंषिअन्नानि । अथटम्माः सन्तः रयिंधनं
सर्ववीरंदधात । न । नकारउपजनः ॥ ५८ ॥ येअग्निष्वात्ताः । येपितरः अग्निष्वात्ताः
अग्निनाआस्वादिताः । येच अनग्निष्वाताः श्मशानकर्माप्राप्ताः । मध्येदिवः द्युलोकस्यस्वध-

घातन ॥ ५८ ॥ येऽअग्निष्वात्तायेऽअनग्निष्वात्तामध्ये दिवः स्वध
यामादयन्ते ॥ तेभ्यः स्वराडसुनीतिमेतांयथावशन्तन्वङ्कल्पयया
ति ॥ ६० ॥ अग्निष्वात्तानृतुमतः ॥ अग्निष्वात्तानृतुमतोहवाम

यास्वकर्मफलोपभोगेन मादयन्तेसुखंसंसेवन्ते । तेभ्यः । तेषामितिविभक्तिव्यत्ययः । स्वराट्
स्वयमेवराजतइतिस्वराट् । अकृतकैश्वर्योयः सस्वराडुच्यते । असुनीतिम् एताम् आत्मनोद्वितीयं
सहायंकृत्वा । असून्प्राणान्नयतीत्यसुनीतिः । एताम् एतमितिलिङ्गव्यत्ययः । यथाकामंयथा-
रुचितन्वंशरीरं कल्पयातिकल्पयतु ॥ ६० ॥ अग्निष्वातान् । अग्निष्वातान् पितॄन् ऋतुमतः

ऋतुसंयुक्तान् ह्वयामहे आह्वयामः। नाराशंसेचमसे। सोमपीथंसोमपानम् येआशुः प्राप्नुयुः। नाराशंसेचमसे पितृणांभक्षः सूयते। अथयदिनाराशंसेषु सन्नइत्युपक्रम्य। पितृभ्योनाराशं॰सेभ्यइति। तेचाहूयमानाः विप्रासः मेधाविनः सुहवाः स्वाह्वाना भवन्तु। एवंकृतेव-यंस्याम पतयोरयीणाम् ॥ ६१ ॥ आच्याजानु। दशर्चोनुवाकः। तत्र नवपित्र्यादशम्यैन्द्री-

हेनाराशु॰सेसोमपीथंयऽआशुः॥ तेनोविप्रासःसुहवाभवन्तुवु यꣳस्यामपतयोरयीणाम् ॥ ६१ ॥ [ १३ ] आच्याजानु ॥ दक्षिणतो निषद्येमंयज्ञमभिगृणीतविश्वे॥ माहिꣳसिष्टपितरःकेनचिन्नो

गायत्री। द्वितीयातृतीयेनवमीचानुष्टुभः। त्रिष्टुभइतराः। पितरउच्यन्ते। आच्याजानु सव्यंजानुपातयित्वा। दक्षिणतोनिषद्य दक्षिणतोवस्थानंकृत्वा। रूपतोयं निर्देशः। एवं दक्षभावोच्यते। अथैनं पितरः प्राचीनावीतिनः सव्यंजान्वाच्योपासीदतिश्रुतिः। इममस्मदीयं यज्ञम् अभिगृणीत अभिष्टुवतदक्षिणामन्त्रकालकर्ता हविर्यजमानोत्कर्षे: साध्वयं यज्ञइति।

विश्वेसर्वेसोमवन्तः बर्हिषदः अग्निष्वात्ताश्च। माचर्हिंसिष्ट। माच्छिंसांकुरुत। हेपितरः। केनचिदपि नः अस्मान् यत्यद्यपि वः युष्माकम् आगः अपराधः आगः शब्दः सान्तोनपुंसकलिं-गोपराधवचनः। पुरुषता। विभक्तिलोपः। पुरुषत्त्वेनचलचित्ततया। कराामकुर्मः॥ ६२॥ आसीनासः। येयूयमासीनाः अरुणीनाम् अरुणवर्णानाम् अरुणवर्णाहिता ऊर्णाभवति याभिः

यद्वऽआगंःपुरुषताकराम॥ ६२॥ आसीनासोऽअरुणीनाम्॥ आसीनासोऽअरुणीनांमुपस्थेरयिन्धंत्तदाशुषेमर्त्याय॥ पुत्रेभ्यंःपितरस्तस्युव्वसुंःप्रयंच्छतुतऽइहोर्जन्दधात॥ ६३॥ यमंग्ने॥ कव्यवाहनु

कृतपाः क्रियन्ते। कुतपप्रियाश्चपितरः। कुतपञ्चासनेदद्यादितिस्मृतिः। यद्वा अरुणवर्णा-नाम् रश्मीनाम् उपस्थेउत्संगेआसीना आदित्यलोकार्जितः पितरउच्यन्ते। रयिन्धनम् धत्त-दत्त। दाशुषेहवींषि दत्तवतेयजमानाय मर्त्यायमनुष्याय। पुत्रेभ्यश्चहेपितरः। यजमाना-र्थंपुत्रवचनम्। सर्वेहिपितॄणां पुत्रायजमानाः। तस्यजमानस्य वसुः प्रयच्छतदत्त। यदभि-

प्रेतंवसुनोधनस्यच इहस्मस्मदीयेयज्ञे ऊर्जं दधातस्थापयत ॥ ६३ ॥ यमग्ने कव्यवाहन । स्विष्टकृदग्निरुच्यते । चतसृभिर्ऋग्भिः । हे अग्ने कव्यवाहन । कव्यं वोढव्यमेत्ययमधिकारोयस्य सएवंसंबोध्यते । यंरयिंहविर्लक्षणं धनम् त्वंचित् त्वमपिमन्यसे अवगच्छसि । साधुशक्यते तेनश्रेयः प्राप्तुमिति । तंहविर्लक्षणं रयिंधनम् नः अस्माकं स्वभूतम् गीर्भिः वाग्भिः पुरो-

त्वंचि॒न्मन्य॑से र॒यिम् ॥ तन्नो॑ गी॒र्भिः श्र॒वाय्यं॑ दे॒वत्रा प॑नया॒ युज॑म् ॥ ६४ ॥ योऽअ॒ग्निः ॥ क॒व्य॒वाह॑नः पि॒तॄन्यक्ष॑दृता॒वृधः॑ ॥ प्रेदु॑ ह॒व्या नि॑ वोचति दे॒वेभ्य॑श्च पि॒तृभ्य॒ऽआ ॥ ६५ ॥ त्वम॑ग्ने ॥ त्वम॑ग्नऽईडि-

नुवाक्यायाज्यावषट्कारलक्षणाभिः । श्रवाय्यम् हविर्विशेषणमेतत् श्रवणीयम् देवत्रादेवेभ्यः पनयदेहि । पनतिर्दानकर्मा । युजंयथायोगम् ॥ ६४ ॥ योअग्निः कव्यवाहनः कव्यं पितॄणांहविरुच्यते । यक्षद्यक्षत् पितॄन् यक्षत् इष्टवान् ऋतावृधः सत्यवृधोवा यज्ञवृधोवा । द्वितीयाबहुवचनमेतत् सइदानीम् प्रेदुहव्यानिवोचति । प्रवोचतिप्रब्रवीतु हव्यानिहवींषि । देवेभ्यश्चपितृभ्यश्च । समुच्चयार्थोयचकारः । देवेभ्यश्चपितृभ्यश्च । इमानिदेवेभ्य इमानिपितृ-

भग्रदूति ॥ ६५ ॥ त्वमग्ने । यस्त्वं हे अग्ने ईडितः अधेप्रषितः सन् कव्यवाहनश्चवाट् वह-
प्रापणे । अस्यैतद्रूपम् । ऊढवानसि । हव्यानिहवींषि । सुरभीनिसुगन्धीनि । कृत्वीकृत्वा ।
कृत्वाहवींषि । प्रादाः प्रदत्तवानसिपितृभ्यः स्वधयापितृमंत्रेण । तेचपितरः । अक्षन्
अत्तवन्तोभक्षितवन्तः । अद्धिभक्षय त्वं हे देव । प्रयताप्रयतानिशुचीनि । हवींषि ॥ ६६ ॥

डितःकव्यवाहनावाड्ढव्यानिसुरभीणिकृत्वी ॥ प्रादाःपितृभ्यः
स्वधयातेअक्षन्नद्धित्वन्देवप्रयताहवींषि ॥ ६६ ॥ येच ॥ येचेह
पितरोयेचनेहयाँश्चविद्मयाँ२उच ॥ नप्रविद्म ॥ त्वंवेत्थयतिते
जातवेदःस्वधाभिर्यज्ञंसुकृतञ्जुषस्व ॥ ६७ ॥ इदम्पितृभ्योनमोऽ

येचेह । येपितरइहास्मिन्समीपे इहवालोके आसते । येचनेह । यान् चपितॄन् विद्मः अव-
गच्छामः यान् उइतिनिपातः पादपूरणः । चनप्रविद्म नप्रजानीमः । त्वं वेत्थ यतितेजात-
वेदः । तेशब्दः आदौक्रियतेद्वितीयान्तोवाक्यस्यवलीयस्त्वात् । तान्त्वं वेत्थवेत्सिजानासि । यति ।

आविभक्तिकोनिर्देशः। यतीन् शुचीन् नित्यनैमित्तिककर्मकरणान्निर्दग्धकल्मषान्। हे जातवेदः। अतएवसुच्यसे। स्वधाभिः पितृसंबद्धैर्हविर्भिः यज्ञपितृयज्ञम् सुकृतंसाधुकृतम् जुषस्वसेवस्व ॥६७॥ इदंपितृभ्यः। इदमितिप्रत्यक्षतोनिर्देशः। पितृभ्योनमः अन्नंहविर्लक्षणम् अस्तु। अ द्यअद्यतनम् येपितरः पूर्वासःपूर्वमीयुःस्वर्गम् येच उपरासःउपरतव्यापाराः कृतकृत्याः परंब्रह्मईयुर्याताः।

अस्त्वद्ययेपूर्वासोयऽउपरासऽईयुः॥ येपार्थिवेरजस्यानिषत्तायेवानूनꣳसुवृजनासुविक्षु ॥६८॥ अधायथा ॥ नःपितरःपरासःप्रत्नासोऽअग्नऽऋतमाशुषाणाः॥ शुचीदयन्दीधितिमुक्थशासःक्षामाभिन्द

येच पार्थिवेरजसि। पृथिव्यांभवंपार्थिवं रजःज्योतिरग्निःतत्र आनिषत्ताः आभिमुख्येननिषण्णाः। अग्निलोकंप्राप्ता इत्यर्थः। येवायेच नूनंनिश्चयेन सुवृजनासु। साधुवृत्तासुविक्षु यजमानेषुनिषण्णाः। तेभ्यइदंपितृभ्योनमो अस्त्वद्येतिसंबन्धः ॥६८॥ अधायथा। अथैवंसतियथायेन प्रकारेण नःअस्माकंपितरः परासःपराएवपरासःउत्कृष्टाः प्रत्नासः। प्रत्नशब्दःपुराणवचनः।

पुराणाः हेअग्नेऋतंयज्ञम्आशुषाणाः अश्नुवानाःव्याप्नुवन्तः । शुचिअविभक्तिकोनिर्देशः । शुचिन्दीप्तंभास्वरम् । इच्छब्दएवार्थे । अयन्आगताःप्राप्ताः । दीधितिम् आदित्यरश्मिम् ततआदित्यमण्डलम् एषहिदेवयानःपन्थाः । उक्थशासःउक्थानियेशंसन्तियज्ञेषु तेउक्थशासः पितॄणांविशेषणमेतत् एवंवयमपि हेअग्नेत्वत्प्रसादात् क्षामाभिन्दन्तः । क्षामाअविभक्तिकोनिर्देशः । क्षामांपृथिवींभिन्दन्तः वेदिखात्वालयूपावटादिखननैः । यद्वा पृथिव्याश्रयाणियज्ञेत्रीहिपशुयूपादीनि-

न्तोऽअरुणीरपंव्रन् ॥ ६९ ॥ उशन्तंस्त्वा ॥ उशन्तंस्त्वानिधीमह्युश न्तःसमिंधीमहि ॥ उशन्नुंशत्ऽआवंहपितॄन्हविषेऽअत्तंवे ॥७०॥

भिन्दन्तः । यज्ञंसर्वोपकारणमनुतिष्ठन्तइत्यर्थः । अरुणीः आरोचनाः । रश्मिन्अपव्रन् अपवृणमः अप्रवृत्यच रश्मीन् देवपन्थानमनुतिष्ठामइत्यर्थः ॥ ६९ ॥ उशन्तस्त्वा । वशकान्तौ अस्यकृतसंप्रसारणस्यैतद्रूपम् । हेअग्ने यतोवयमुशन्तः कामयमानाः त्वांनिधीमहिस्थापयामहे । यतश्च उशन्तः कामयमाना एवसमिधीमहिसंदीपयामः । यतस्त्वमपि उशन्कामयमानएव । उशतः कामयमानानेवआवह पितॄन् । किमर्थमितिचेत् । हविषेअत्तवे हविषःअदनाय ॥ ७० ॥ अथैन्द्रोमन्त्रः

सोमोराजेतस्यनिदानभूतः पठ्यते । अपांफेनेन । तृतीयपादप्रभृतिव्याख्यानं यच्छन्दयोगात् । विश्वाःसर्वाः यत् । यदा अजयःस्पृधः । संग्रामान् । अथतदाअपांफेनेन फेनपुञ्जेननमुचेः असुरस्यशिरः हेइन्द्र त्वमुदवर्तयः । उद्वर्तितवानसि । उत्पूर्वोवृत्तिःछेदनेवर्तते ॥ ७१ ॥ इदानीमेतञ्च

# अपाम्फेनेन ॥ अपाम्फेनेननमुचेꣳशिरऽइन्द्रोदवर्तयꣳ ॥ विश्वायदजंयस्पृधः ॥ ७१ ॥ [ १० ] सोमोराजा ॥ सोमोराजामृतꣳसुतऽऋजीषेणाजहान्मृत्युम् ॥ ऋतेनसत्यमिन्द्रियम्विपानꣳशुक्रमन्धसऽइ

मन्त्रंवक्ष्यमाणंचानुवाकंश्रुतिसंवध्नाति । तस्यशीर्षेछिन्नेलोहितमिश्रः (१) सोमोतिष्ठत्तस्मा तदवीभत्सत एतदन्धसोविपानमपश्यत्सोमोराजामृतंसुतइति तेनैनंस्वदयित्वात्मन्नदधतेति । सोमोराजा । अष्टौग्रहोपस्थानमश्विसरस्वतीन्द्रा अपश्यन् । आद्यास्तिस्रो महाब्रह्त्यः पंक्ति-

(१) का० सोमो राजेत्यनुवाकेन ग्रहानुपतिष्ठते युगपत् । अष्टर्चेनानुवाकेन समानकालमेव पयोग्रहान् सुराग्रहांश्चाध्वर्युरुपतिष्ठतेयद्वा चतुर्भिः पयोग्रहांश्चतुर्भिः सुराग्रहान् ग्रहाणामनन्तरमेवोपस्थानम् मन्त्रपाठक्रमादत्रालेखोतार्थः ।

चतुर्थीअन्ते अतिजगत्यौ शेषेअतिशक्वर्यौ। यथाएककारणानि वसूनिविविच्यमानानिदृश्यन्ते। यथापृथग्भूतानि संसृज्यानि पुनर्विविच्यमानानिदृश्यन्ते। एवमयमपि लोहितमिश्रःसोमः सोमएवेत्यनुवाकार्थः। सोमोराजा। सोमःराजासुतःअभिषुतः अमृतंसंपद्यते रसीभावात् स्थूलहिसूक्ष्मताभृतीभावः। ऋजीषरूपेण चाजहात् त्यजति मृत्युम्मूर्तत्वादृजीषभावस्यसत्यमेतत् अनेनच

न्द्रस्येन्द्रियमिदम्पयोमृतम्मधु॥७२॥ अद्भ्यः क्षीरम्॥ अद्भ्यः क्षीरंव्यपिबत्क्रुङ्ङाङ्गिरसोधिया॥ ऋतेनंसत्यमिन्द्रियंविपानंशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु॥ ७३॥ सोमंमद्भ्यः॥ सोमंमद्भ्योव्यपिबच्छन्दसाहंसः शुचिषत्॥ ऋतेनसत्यमिन्द्रिय

ऋतेनसत्येनसत्यमेतत्सञ्जातम् इन्द्रियंवीर्यं विपानंविवित्तं लोहितात्सोमपानं पानयोग्यंवाविपानम् शुक्रंरजोहितम् अन्धसःअन्नात्संभूतम्भूयात्। अथ इन्द्रस्यइदमिन्द्रियं पयःअमृतंमधुभवतु॥ ७२॥ अद्भ्यःक्षीरम्। क्षीरोदकयोःसंसृष्टयोः अद्भ्यःसकाशात् क्षीरंवियुत्यअपिबत्पीतवान्। क्रुङ्हंसः

हंसजातिमास्थाय आङ्गिरसःप्राणः । सत्यज्ञानांरसः । धियाप्रज्ञया इत्थंभूताहितस्यप्रज्ञा तस्यां-
जात्यामेवस्थितस्यभवति । सत्यमेतत् । अनेनऋतेन सत्यमिन्द्रियंविपानं शुक्रम्अन्धसः संभूतंभूयात्
अथइन्द्रस्यइन्द्रियं विपानममृतं मधुभूयात् ॥ ७३ ॥ सोममश्नाः । सोमोदकयोःसंसृष्टयोः सोमंवि-
युत्यापिबत् अद्भ्यःसकाशात् । छन्दसाछन्दोनिबद्धेनवेदेन । हंसआदित्यः शुचिषत् । एतत्सत्यम्

म्विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७४ ॥११००

कण्डि ॥ ० ॥ अन्नात्परिस्रुतः ॥ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपि

बत्क्षत्रम्पयःसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियम्विपानꣳशुक्रम

न्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७५ ॥ रेतोमूत्रम् ॥ रेतो

ऋतेनेत्यादिसमानम् ॥७४॥ अन्नात्परिस्रुतः । अन्नाद्यविलक्षणात् संपरिस्रुतश्च रसंब्रह्मणात्रयीलक्षणेन
व्यपिबत् । क्षत्रञ्चव्यपिबत् क्षत्रस्यपानंवशीकरणम् पयःसोमम् प्रजापतिःप्रथमशरीरी । सत्य-
मेतत् ऋतेनसत्यमितिसमानम् ॥ ७५ ॥ रेतोमूत्रम् । व्यवहितपदप्रायः । रेतःविजहातित्यजति ।

योनिंस्त्रीप्रजननम् प्रविशत्इन्द्रियंशिश्नम् । योनिम्प्रवेशादन्यत्र मूत्रंविजहाति । तुल्यद्वारयोरपिमूत्ररेतसो मूत्रस्थानंहित्वान्यत्रावतिष्ठते रेतः। सत्यमेतत् ततः। गर्भोंजरायुणावृत:वेष्टितः। जरायुंचउल्बंचविजहातित्यजति । जन्मनाप्रसवेन सत्यमेतत् । नानास्थानानामेकद्वाराणां प्रथममुदाहरणम् एकस्थानानामनेकद्वाराणांद्वितीयम् । ऋतेनेतिव्याख्यातम् ॥ ७६ ॥ दृष्ट्वारूपे ।

मूत्रञ्जहातियोनिम्प्रविशदिन्द्रियम् ॥ गर्भोंजरायुणावृतऽउल्बञ्जहातिजन्मना ॥ ऋतेनसत्यमिन्द्रियम्विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७६ ॥ दृष्ट्वारूपे ॥ व्याकरोत्सत्यानृतेप्रजापतिः ॥ अश्रद्धामनृतेदधाच्छ्रद्धाꣳसत्येप्रजापतिः ॥ ऋतेन

दृष्ट्वाउपलभ्यरूपेसत्यानृतयोः । इदंसत्यमेवंरूपमिदमनृतमेवंरूपमितिव्याकरोत् । व्याकरणंपृथक्कार्यावस्थानम् । कथंव्याकरोत् । अश्रद्धाम् अनृतेअदधात् अनृतनिमित्तत्वात् अश्रद्धायाः । श्रद्धा मास्तिक्यम् सत्ये । कःअदधात् । प्रजापतिः । सत्यमेतत्ऋतेनेतिव्याख्यातम् ॥ ७७ ॥ वेदेनरूपे ।

वेदेनपरिज्ञानेनव्याप्यावाविद्यया। रूपेसुतासुतयोः व्यपिबत्। सुतःसोमउच्यते पयश्चासुतः। परिस्रु
त्प्रजापतिः। सत्यमेतत् अनेनऋतेनेतिव्याख्यातम्॥ ७८॥ दृष्ट्वापरिस्रुतः। रसंशुक्रं शाश्वमलेन-

नंसुत्यमिन्द्रियंविपानंशुक्रमन्धंसइन्द्रस्येन्द्रियमिदम्पयोमृतम्म
धु॥ ७७॥ वेदेनरूपे॥ व्यपिबत्सुतासुतौप्रजापतिः॥ ऋतेनंस
त्यमिन्द्रियंविपानंशुक्रमन्धंसइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु॥
७८॥ दृष्ट्वापरिस्रुतः॥ दृष्ट्वापरिस्रुतोरसंशुक्रेणशुक्रंव्यपिबत्प
यःसोमम्प्रजापतिः॥ ऋतेनंसत्यमिन्द्रियम्विपानंशुक्रमन्धंसइ
न्द्रस्येन्द्रियमिदम्पयोमृतम्मधु॥ ७९॥ [८] सीसेनतन्त्रम्॥ सी

शुक्रममलम्। वियुत्यअपिबत् पयश्चसोमंचतेप्रजापतिः। सत्यमेतत्। ऋतेनेतिव्याख्यातम्॥ ७९॥

(१) खुरैर्वसाग्रहान्द्वात्रिंशतं जुहोति । सीसेनेति प्रत्यृचम् । षोडशजगत्यः । यथेन्द्रस्य भैषज्यं क्रियते तथात्राभिरुच्यते । यज्ञः पटेनरूप्यते प्रथमायामृचि । सीसेन ऊर्णासूत्रेणच तन्त्र मिवपूर्वापरैः सूत्रैर्दक्षिणोत्तरैश्च वयन्तियज्ञम् कवयन्ति । मनीषिणः मेधाविनः । कवयः क्रान्तद-

सीसेनतन्त्रम्मनसामनीषिणऽऊर्णासूत्रेणकवयोव्वयन्ति ॥ अश्विना यज्ञꣳसविता सरस्वतीन्द्रस्यरूपम्वरुणोभिषज्यन् ॥८०॥ तदस्य ॥ रूपममृतꣳशचीभिस्तिस्रोदधुर्देवताः सꣳरराणाः ॥ लोमानिशष्पै

र्शनाः । मनसापर्य्यालोच्या । गुणतउक्ता अथेदानीं नामतआह । अश्विनौ सविता सरस्वतीवरुणश्च किमर्थं पुरस्कृत्ययज्ञं वयति इन्द्रस्य रूपंभिषज्यन् ॥ ८० ॥ तदस्य । तत् अस्येन्द्रस्यरूपम् अमृतममरणधर्मि । शचीभिः कर्मभिः । तिस्रोदेवताः सन्दधुः । संरराणाः ।

(१) का० खुरैर्वसाग्रहान्द्वात्रिंशतं जुहोति सोसेनेति प्रत्यृचम् । पञ्चपलो ग्रह इतिपरिशिष्टोक्तः ऋषभखुराणां महत्त्वाद्वर्षभैः खुरै पशूनां वसां गृहीत्वा सीसेनेति प्रतिमन्त्रं द्वात्रिंशत्संख्या सुराग्रहान् जुहोति एकेन मन्त्रेण द्वयर्होम इत्यर्थः ।

अश्विनौसरस्वतीच। कथं सन्दधुः। लोमानितावत् शष्पैः सन्दधुः। बहुधानतोक्मभिस्त्व-गस्य नकारः समुच्चये आअध्यायसमाप्तेः। त्वचमितिविभक्तिव्यत्ययः बहुधानतोक्मभिस्त्वचमसीयन्द्रस्य सन्दधुः। मांसम् अभवच्चलाजाः॥ ८१॥ तदश्विना तत् पेशः रूपम् इन्द्रस्य। अश्विनौभिषजौ। रुद्रवर्त्तनी। रुद्रस्येववर्त्तनिर्मार्गोययोस्तौ रुद्रवर्तनीरुग्णवर्त्तनीवा। रोहयमाणौ

**बँहुधानतोक्क्मंभिस्त्वगंस्यमा॒ᳪंसमंभवन्नलाजाः॥ ८१॥ तदश्विना॑॥ भिषजांरुद्रवंर्तनीसरंस्वतीव्वयतिपेशोऽअन्तंरम्॥ अस्तिथंमज्जानुम्मासंरैःकारोत्तरेणदधंतोगवांन्त्वचि॥ ८२॥ सरंस्वतीमनंसा॥ पेशलम्व्वसुनासंत्याब्भ्यांव्वयतिदर्शतंव्वपुंः॥ रसंम्परिस्रुतानरोहिं**

वर्तेतेइति वा। सरस्वतीच। वयतिवयन्ती। बहुवचनमेकवचनस्य। संबध्नन्ति अन्तरमभ्यन्त-रम्। किं वयन्ति। अस्थिचमज्जानंचतावत् मासरैश्च कारोतरेणच यथाक्रमंवयन्ति। किं कुर्वाणाः। दधतः स्थापयन्तः। गवांत्वचिचर्मणि सुराम्॥ ८२॥ सरस्वती मनसा। सरस्वतीमनसा

पर्य्यालोच्य । पेशलम् पेशइति हिरण्यनामरूपनामच । हिरण्यवद्वारूपवद्वा । वसुनासत्याभ्यांच सहितावयतिपटमिवसृजति । दर्शतंवपुः दर्शनीयंवपुःशरीरम् इन्द्रस्य । रसम्परिस्रु तानरोहितम् । सरंचपरिस्रु तासरस्वतीनासत्याभ्यामश्विभ्यां सहितावयति । वपुषोरञ्जनार्थम् । अतोरोहितम् रोहितइन्द्रोवेदेषुपठ्यते । अथतदानग्नहुः किञ्च धीरःधीमान् । तसरंनवेम तसरंचवेमचसम्पद्यते ।

तन्नुग्ग्नहुर्द्धीरस्तसरुन्नवेमं ॥ ८३ ॥ पयसाशुक्रम् ॥ पयसाशुक्रमु मृतञ्जनित्वं सुरयामूत्राज्जनयन्तुरेतः ॥ अपामतिन्दुर्मतिम्बाधमानाऽऊवध्यम्बातं सब्वन्तदारात् ॥ ८४ ॥ इन्द्रः सुत्रामाहृदयेन

नग्नहोःकर्तृत्वमात्रम्विवच्चितम् विवच्चातःकारकाणिभवन्ति । तसरंवेमचकुविन्दानांप्रसिद्धम् तसरस्वयनसाधनं ॥ ८३ ॥ पयंसाशुक्रम् । पयसादुग्धेन कारणभूतेन शुक्रञ्चअमृतंच । जनित्वम् आजन्मजनयन्तः अश्विनौसरस्वतीचप्रकृतत्वात् । इन्द्रस्तुभैषज्यः सुरयाच । मूत्रात्मूत्रमितिसाधु। मूत्रञ्चरेतश्चजनयन्त । किञ्च । अपातिन्दुर्मतिम् वाधमानाः । अपवाधमानाः अमतिममननंवधग्रभाव-

न्दुर्मतिश्च । जवद्वाम् । आमाशयगतमन्नंवातम् तत्सहचरितं सर्व्वम्पक्वाशयगतमशुचिः । तदारात् तदेतत् सुरयाजनयन्त । आरात् सुरासन्निकर्षात् । संनिकर्षोहिगन्धादिभिः ॥ ८४ ॥ इन्द्रःसुत्रामा । पुरोडाशदेवता इन्द्रंभिषज्यन्ति । इन्द्रःसुत्रामाहृदयेन । हृदयमितिविभक्तिव्यत्ययः इन्द्रस्यजजानजनयति । सत्यम् इन्द्रस्यपुरोडाशेनसविताजनयति । यकृच्चक्लोमानञ्चजनयति वरुणः

सत्यम्पुरोडाशेनसविताजंजान ॥ यकृत्क्लोमानंव्वरुणोभिषज्ज्यन्नम तंस्नेव्वायव्व्यैर्न्नमिनातिपित्तम् ॥ ८५ ॥ आन्त्राणिस्थालीः ॥ आन्त्राणिस्थालीर्म्मधुपिन्व्वमानागुदाःपात्राणिसुदुघानधेनुः ॥ श्ये

इन्द्रस्यभिषज्यमतस्नेच पित्तञ्चवायव्यैः ऊर्द्धपात्रैः ऊर्द्ध पात्राणांसौमिकानां वायव्यानीतिउक्तम् । नमिनातिनिर्मिमीतेसृजति ॥ ८५ ॥ आंत्राणिस्थालीः । स्थाल्यःआंत्राणिअभवन् । किंकुर्वाणाः मधुपिन्वमानाः । पिन्वतिःसेचनार्थः । गुदाःपात्राणिअभवन् । सुदुघाचधेनुः दक्षिणाचआदित्यस्येष्टेः गुदाएवअभवन् । श्येनस्यच पत्रं प्लीहाअभवत् । शचीभिः कर्मभिः । आस-

न्दीनाभिः इन्द्रस्य उदरस्त्रमाताच। आसन्दीस्थोभिषिच्यते अतस्ततोजायते॥ ८६॥ कुम्भो-वनिष्ठुः। सुरासन्धानकुम्भोवनिष्ठु,जनिताचजनकश्च। शचीभिः स्वकीयैरेवकर्मभि.।

नस्युपत्नुन्नष्ठीहाशचीभिरासन्दीनाभिरुदरुन्नमाता॥ ८६॥ कुम्भो वनिष्ठुः॥ कुम्भोवनिष्ठुर्जनिताशचीभिर्यस्मिन्नग्रेयोन्याङ्ग र्भोऽअन्तः॥ प्लाशिर्व्यक्तःशतधारऽउत्सोदुहेनकुम्भीस्वधाम्पितृ भ्यः॥ ८७॥ मुखᳪसत्॥ मुखᳪसदस्यशिरऽइत्सतेनजिह्वापवि त्रमश्विनासन्त्सरस्वती॥ चप्पन्नपायुर्भिषगस्यवालोवस्तिर्न्न

यस्मिन्कुम्भे अग्रेप्रथमंयोन्याङ्गर्भः। अन्तर्मध्येसुरालक्षणः उषितः। किञ्च। (१) प्लाशिर्व्यक्तः। स्पष्टः शतधार उत्सः कूपः बहुस्रोतत्वात्कूपउक्तः। दुहेनकुम्भीस्वधांपितृभ्यः॥ ८७॥ मुखं-सत्। असेरन्द्रसत्र मुखंसत्। एकदेशलोपः सन्तमितिप्राप्ते। तथाच श्रुतिः। मुखंसन्त-

(१) प्लाशिःशिश्नोभवत्।

मसग्रजिह्वापवित्रं चप्यंनपार्युवंस्तिर्वालङ्गति । शिरङ्गत्सतेनजिह्वापवित्रम् अश्विनौ आसन् आसेग्र-सरस्वतीच । चप्यंचपायुः भिषगस्रवालः वस्तिश्चशेपोहरसातरस्वी । वालसग्रत्रिधापरिणामः वैद्यग्रश्चशेपश्च । यदिनामशेपः हरसावीर्येणतरस्वीवेगवान् ॥ ८८ ॥ अश्विभ्यांचचुः । अश्विभ्यामिन्द्रसग्रचक्षुस्संस्क्रियते । तदेवामृतम् । ग्रहाभ्या मश्विदेवत्याभ्याम् छागेन तेजः

शेपोहरंसातरस्वी ॥ ८८ ॥ अश्विभ्यांचक्षुः ॥ अश्विभ्यांचक्षुरमृ तङ्ग्रहाभ्याञ्छागेनतेजोहविषाशृतेनं ॥ पक्ष्माणिगोधूमैःकुवलैरुता निपेशोनशुक्रमसितंवसाते ॥ ८९ ॥ अविर्न्न ॥ मेषोनसिवीर्य्याय

चक्षुषः क्रियते । कथंभूतेनछागेन हविषामृतेन । हविर्भूतेनपक्वेन । अपरम् पक्ष्माणि-चक्षुषः लोमानिगोधूमैः संस्क्रियते । कुवलैर्बदरविशेषैः उतानिनिविष्टानि पक्ष्मसुरोमाणिसं-स्क्रियते । पेशोनशुक्रमसितंवसाते । पेशोनरूपंचचक्षुषः शुक्रं शुक्लम् असितंकृष्णञ्चवसाते । आच्छा-दयेते प्रकृतत्वादश्विनौ ॥ ८९ ॥ अविर्न । अविश्चमेषः सारस्वतः । नसिनासिकायाम् वीर्याय-

अवस्थितः। प्राणस्यच पन्थामार्गः अमृतः ग्रहाभ्यां सारस्वताभ्यांक्रियते। सरस्वतीच उप-
वाकैः व्यानञ्जजानजनयति। नस्यानिनासिकाप्रभवानिच बर्हिः बदरैः जनयति॥ ९०॥
इन्द्रस्य रूपम्। इन्द्रस्यरूपं संस्करोति ऋषभः बलायावतिष्ठते। कर्णाभ्यांश्रोत्रम्
अतीतानागतवर्त्तमानशब्दग्राहि। अमृतम् ग्रहाभ्यामैन्द्राभ्यांस्थापितम्। यवाश्चबर्हिस्च। भ्रुविकेस-

प्प्राणस्यपन्थांऽअमृतोग्ग्रहाब्भ्याम्॥ सरस्वत्युपवाकैर्व्यानन्नस्यानि
बर्हिर्ब्वदरैर्ज्जजान॥ ९०॥ इन्द्रस्यरूपम्॥ इन्द्रस्यरूपमृषभोबला
युकर्णाब्भ्याᳪश्रोत्रममृतङ्ग्रहाब्भ्याम्॥ यवानबर्हिर्भ्भ्रुविकेसराणि
कर्कन्धुयज्ज्ञेमधुसारघम्मुखात्॥ ९१॥ आत्मन्नुपस्थे॥ आत्मन्

राणि। भ्रुवोः लोमानिअभवन्। कर्कन्धुचयज्ञे मधुसारघम् मुखात्। कर्कन्धुबदरम् यज्ञे-
स्वयमेवयज्ञे इन्द्रस्यमुखात्। मधु। लालाश्लेष्मादिमधुशब्देनोच्यते सादृश्यात्। सारघम्।
सरघाः भ्रमराः। यथासारघम् मधु इतश्चेतस्माद्धृतंभवति। एवं लालादिसर्वस्मादङ्गा-

वति ॥ ९१ ॥ आत्मन्नुपस्थे। आत्मनिउपस्थेच यानिलोमानि तानिवृकस्यलोमानि। लोमेतिजातावेकवचनम्। मुखेश्मश्रूणिचयानितानिव्याघ्रस्यलोमानि। केशानशीर्षन्। येच-केशाः शिरसियशसेनिहिताः याचश्रियैशिखानिहिता याचत्विषिः दीप्तिः यानिचेन्द्रियाणि

न्नुपस्थेनवृकस्यलोममुखेश्मश्रूणिव्याघ्रलोम ॥ केशानशीर्षन्यशसेश्रियैशिखांसिᳪहस्यलोमत्विषिरिन्द्रियाणि ॥ ९ ॥२ अङ्गान्यात्मन्भिषजातदश्विनात्मानमङ्गैःसमधात्सरस्वती ॥ इन्द्रस्यरूपᳪशतमानमायुश्चन्द्रेणज्योतिरमृतन्दधानाः ॥ ९३ ॥ सरस्वतीयोन्यांम् ॥ सरस्वतीयोन्याङ्गर्भमन्तरश्विभ्यांपत्नीसुकृतं

तदेतत्सिंहस्यलोम ॥ ९२ ॥ अङ्गान्यात्मन्। अङ्गानियस्मिन्नात्मनि भिषजौवैद्यौ अश्विनौ-समधाताम् तदात्मानम्। अङ्गैः समधात्सरस्वती। एवमिन्द्रस्यरूपं शतमानं बहुप्रतिमा-नम्। अश्विनौसरस्वतीच। चक्षुः चन्द्रेणहिरण्मयेनज्योतिः अमृतञ्चदधानाः ॥ ९३ ॥ सर-

स्वतीयोन्याम् । व्यवहितपदप्रायः । सरस्वतीयंयोन्याम् इन्द्रलक्षणम गर्भम् अन्तर्मध्येऽश्विभ्यापत्नीभूत्वा सुकृतंशोभनीकृतं विभर्तिधारयति । तमेवेन्द्रं जनयन् श्रियैविभूतैग्रवरुणश्च अप्सु राजा अपांरसेनसाम्नाचविशति ॥ ९४ ॥ तेजः पशूनाम । तेजःपशूनामुपादाय हविस्सइन्द्रिया-

म्बिभर्त्ति ॥ अपाꣳरसेनवरुणोनसाम्नेन्द्रꣳश्रियैजनयन्नप्सुराजा ॥ ९४ ॥ तेजः पशूनाम् ॥ तेजःपशूनाꣳहविरिन्द्रियावत्परिस्रुतापयंसासारघम्मधु ॥ अश्विभ्यान्दुग्धम्भिषजासरस्वत्यासुताब्भ्यामसृतꣳसोमऽइन्दुः ॥ ९५ ॥ [ १६ ]

इतिश्रीसंहितापाठेएकोनविंशतितमोऽध्यायः १९ ॥

वत् वीर्यवत् उपादाय । परिस्रुताहविर्भूतया । पयसाहविर्भूतेन सारघमिवमधु । अश्विभ्यांदुग्धम् । सारघाः भ्रमराः तेयथाऽन्नाऽोषधीभ्यश्च रसमादायदुहन्ति । एवमेतेभ्योद्रव्येभ्यः अश्विभ्यां-

दुग्धंसौत्रामणीलक्षणम् । कथं भूताभ्याम् भिषजाभिषग्भ्याम् सरस्वत्याच । किञ्च सुता-सुताभ्यां परिस्रुत्पयोभ्यांसकाशात् अमृतः सोमः इन्दुः दुग्धे । एवं यैः सौत्रामणीहृष्टातैभ्यः ऋषिभ्योनमोऽश्विभ्यांच सरस्वत्यैच । एवमियमृषिश्रुतिः ॥ ९५ ॥

इतिउव्वटकृतौ मन्त्रभाष्ये एकोनविंशतितमोऽध्यायः १९ ॥

## * क्षत्रस्ययोनिः ॥ क्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसि ॥ मा

(१) क्षत्रस्ययोनिरसि । गायत्री । आसन्दीवेद्योरुपदधाति अर्द्धर्चेन । क्षत्रस्यत्वं योनिरुत्पत्तिस्थानमसि । आसन्द्यामभिषिक्तोहिगुणधर्मानर्हतिराजेत्येतदभिप्रायंयोनित्वम् । क्षत्रस्यना-

(१) का० सोमासन्दीवदासन्दीं जानुमात्रपदीं वेद्योर्निदधाति क्षत्रस्य योनिरिति । जानुप्रमाणपादामासन्दीं वेद्योर्मध्ये निदधाति सोमासन्दीवदिति मुञ्जरज्जुव्युताम् आसन्द्या द्वौ पादौ दक्षिणवेदौ द्वावुत्तरवेदौ यथा तथेति सूत्रार्थः ।

* क्षत्रस्ययोनिस्त्रयोदशयद्देवादशाप्यादधास्यष्टौयोभूतानांचतस्रः समिद्धइद्दएकादशाया त्वष्टौसमिद्धो अग्निर्द्वादशाश्विनाहविस्त्रयोदशाश्विनातिजसैकादशनवनवतिः ।

भिश्वनहनन्त्वमसि । कृष्णाजिनमस्यामास्तृणाति । मात्त्वाहिंसीत् । कृष्णाजिनमुच्यते । मात्वामिय मासन्दीर्हिंसीत् । माचत्वं मांहिंसीः । यज्ञाधग्रासोत्कृष्णाजिनस्य । यज्ञोवै-कृष्णाजिनं यज्ञस्यचैवात्मनस्यहिंसाया इतिश्रुतिः ॥ ॥ (१) आसंद्यामुपविशति । निषसादेतिव्या-

त्त्वांहिंᳪसीन्माामांहिᳪसीः ॥ १ ॥ निषसाद ॥ धृतव्रतोव्वरुणः पुस्त्यास्वा ॥ साम्म्राज्यायसुक्रतुः ॥ मृत्योःपांहिव्विद्योत्पांहि ॥२॥ देवस्यंत्त्वा ॥ सवितुःप्प्रसुवे ऽश्विनोर्व्वाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ अ

ख्यातम् । पादयोरुक्ममुपन्यस्यति । (२) मृत्योः पाहि गोपाय । मृत्युशब्देनात्राशनिरुच्यते । विद्यो-त्पाहि विद्युतः पाहि ॥ २ ॥ (३) अभिषिञ्चति । देवस्यत्त्वेतिव्याख्यातम् । अश्विनोर्भैषज्येन ।

(१) का० तस्मिन्नास्ते यजमानो निषसादेति । यजमानः कृष्णाजिने उपविशेत् । व्याख्याता ।

(२) का० पादयो रुक्मा उपास्यति राजतᳪ सव्ये मृत्योरिति सौवर्णं शिरस्येके विद्योदिति । आसन्द्युपष्टयजमानस्य पादयोरधो रुक्मौ मण्डलाकारौ भूषणविशेषौ न्यस्यति राजतं सव्ये मृत्योरिति मन्त्रेण सौवर्णं दक्षे विद्योदिति सौवर्णं रुक्मं शिर-सीत्येके ऊचुरिति सूत्रार्थः ।

(३) का० सर्वमसुरभ्युन्मृदितं शीर्षैरभिषिञ्चत्या मुखादवस्रावयन् प्रतिदिशᳪ० सर्वत्र साविचमश्विनोः सरस्वत्या इन्द्रस्येति प्रतिमन्त्रम् ।

भिषजः कर्मभैषज्यम्। भिषग्वैद्यः। तेनभैषज्येनाभिषिंचामीतिसम्बन्धः। किमर्थमित्यत आह। तेजसेब्रह्मवर्चसायच। सरस्वत्यैभैषजेन वीर्यायअन्नाद्याय अभिषिञ्चामि। सरस्वत्याइति षष्ठ्यर्थेचतुर्थी। इन्द्रस्यइन्द्रियेणवीर्येण। बलायश्रियै यशसेचसर्वाथायाभिषिञ्चामि॥ ३॥ यजमानमालभते। कोसि। गायत्री। कः प्रजापतिरसि। कतमः प्रजा-

प्रिश्ष्वनो॑भैषंज्येनतेजंसेब्रह्मवर्च्चसायाभिषिंञ्चामिसर॑स्वत्यैभैषंज्ये नवीर्य्यायान्नाद्यायाभिषिंञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशंसेभिषिंञ्चामि॥ ३॥ कोसि॥ कतमोसिकस्मैत्वाकायत्वा॥ सुश्लोक मङ्गलसत्त्यंराजन्॥ ४॥ शिरोमे॥ शिरोमेश्रीर्य्यशोमुखन्त्विषिः

पतितमः असि। अतिशयार्थंतमउपादानम्। बहवोहिप्रजापतयः। कस्मैप्रजापतिपदप्राप्तयेत्वामभिषिक्तवा नहंयतः कायत्वा। प्रजापतिभवायत्वामहमभिषिक्तवानस्मियतः। सुश्लोके त्यलश्लोकयति। हेकल्याणमङ्गल हेसत्यराजन् सत्यः अनश्वरः राजाअस्य॥ ४॥ अङ्गानि-

चालते यथालिङ्गम् शिरोमेंपञ्चभिः । तृतीयागायत्री अन्त्यामहापंक्तिरव्यवसाना अनुष्टुभोन्याः । इन्द्रोभिषक्ता आत्मानंराष्ट्रे भूतम्पश्यन्नाह । शिरोमेश्रीर्वर्तते यशोमुखंवर्तते । त्विषिर्दीप्तिः केशाश्चश्मश्रूणिचवर्तन्ते । राजाप्राणः मेऽमृतंवर्तते । संगतंराज्यं ग्रवससम्राट् चक्षुर्वर्तते । विराट्श्रोत्रं वर्तते । विराट्प्रथमशरीरी ॥ ५ ॥ जिह्वामे । जिह्वामेभद्रं वर्तते । वाक्महः

केशाश्चश्मश्रूणि ॥ राजामेप्राणोऽअमृतंसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ ५ ॥ जिह्वामे ॥ भद्रंवाङ्महोमनोमन्युःस्वराड्भामः ॥ मोदाःप्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः ॥ ६ ॥ बाहूमे ॥ बाहू

वर्ततेपूजाकारिणीवर्तते । मनःमन्युवर्तते मनःक्रोधफलदायिवर्तते । भामःक्रोधः स्वराज्यच्चमोवर्तते । उक्तञ्च । शक्तिरहितोपिकुप्यति मानंचोद्वहति सेवकजनोपि । अर्थरहितोपि कामीजानाति त्रिधिविडम्बयितुम् मोदाःप्रमोदाअंगुलयः अङ्गानिचममवर्तते । मित्रं मेसहः मित्रवलंमेसहःशत्रूणामभिभवितृवर्तते ॥ ६ ॥ बाहूमे । बाहूमेवलमिन्द्रियञ्च वर्तते हस्तौमेकर्मंचवीर्यंवर्तते ।

आत्माअन्तरात्मा उरश्चवर्तते उरश्चमम ॥ ७ ॥ पृष्ठीर्मे । पृष्ठदेशोमेराष्ट्रंवर्तते । उदरंचअं-सौग्रीवाचश्रोणीच । ऊरूअरत्नीचजानुनीचविशोमेवर्तन्ते । अन्यान्यप्यङ्गानिमेयानिसर्वतः ॥ ८ ॥ नाभिर्मे । नाभिर्मेचित्तं विज्ञानञ्चवर्तते । चित्तविज्ञानयोः कोविशेषइतिचेत् । विज्ञानंविद्याभिः

मेबलमिन्द्रियꣳहस्तौमेकर्म्मवीर्य्यम् ॥ आत्माक्षत्रमुरोमम ॥७॥ पृष्ठीर्मे ॥ राष्ट्रमुदरमꣳसौग्रीवाश्चश्रोणी ॥ ऊरूअरत्नीजानुनी विशोमेङ्गानिसर्वतः ॥८॥ नाभिर्मे ॥ चित्तँविज्ञानम्पायुर्म्मेपचिति र्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्यम्पसः ॥ जङ्घाभ्या म्पद्भ्यान्धर्म्मोस्मिविशिराजाप्रतिष्ठितः ॥ ९ ॥ प्रतिंतुचे ॥ प्रति

तज्जःसंस्कारश्चित्तम् । पायुर्मेअपचितिर्भसच्चवर्तते । पायुर्गुदप्रदेशः अपचितिःपूजा । भसत्शब्दे-नस्त्रीप्रजननंगौडाश्चाहुः । नच यजमानस्यैतद्भवति । अतःपत्नीविषयमेतत् । आनन्दनन्दौआण्डौ-मेवर्तते । भगःसौभाग्यंपसोमेवर्तते । भगःसम्हद्दैश्वर्यम् । पसःपसतेः स्पृशतिकर्मणःशिश्नमु-

च्यते । जंघाभ्यामृपद्भ्याञ्चधर्मोस्मि । धर्मम्प्रतिह्विराजाभवतिविशिप्रतिष्ठितोस्मि ॥ ९ ॥ (१) कृष्णा-
जिने वरोहति प्रतिक्षत्त्रमितियजुषा । प्रतितिष्ठामि क्षत्त्रेप्रतितिष्ठामिराष्ट्रेप्रतितिष्ठामिच

## प्रतिक्षत्त्रे॑प्रति॑तिष्ठामिराष्ट्रेप्प्रत्यश्श्वे॑षुप्प्रति॑तिष्ठामिगोषु॑ ॥ प्रत्यङ्गे॑षुप्प्रति॑तिष्ठा
## म्म्यात्क्मन्न्प्रति॑प्प्राणेषुप्प्रति॑तिष्ठामिपुष्टेप्प्रतिद्यावांपृथिव्व्योः प्प्रति॑
## तिष्ठामियुज्ञे ॥ १० ॥ त्रुयाद्देवाः ॥ त्रुयाद्देवाऽएकांदशत्त्रयस्त्त्रिंᳬ
## शाःसुराधंसः ॥ बृहुस्प्पति॑पुरोहिताद्देवस्यंसवितुःसुवे ॥ देवाद्देवैरं

अश्वेषुप्रतितिष्ठामिगोषुप्रतितिष्ठामिच अङ्गेषुप्रतितिष्ठामिचआत्मनिप्रतितिष्ठामिच । प्राणेषु
प्रतितिष्ठामिचपुष्टेप्रतितिष्ठामिचद्यावापृथिव्योः प्रतितिष्ठामिचयज्ञे ॥ १० ॥ (२) त्रयोदेवाइतिअ-

(१) का० कृष्णाजिनेऽवरोहति प्रति क्षत्र इति आसन्दीतो यजमानः कृष्णाजिनेऽवतरति १४।४।२३। विश्वदेवदेवत्यं यजुः।
(२) का० त्रयां देवा इति ग्रहान्ते जुहोति १९।४।२५। ग्रहसमाप्तौ वषट्कृते त्रया इति कण्डिकाद्वयात्मकेन मन्त्रेण
त्रयस्त्रिंशं वपाग्रहं जुहोति।

स्वान्तेजुहोति । पंक्त्याच्यवसानयादैव्या । परेणयजुषा स्वाहाकारान्तेनच । व्यवहितपदप्रायः येएकदेशदेवाः त्रयःत्रिप्रकाराः येचएकीकृताः त्रयस्त्रिंशाःत्रयस्त्रिंशत्संपद्यन्ते । सुराधसः शोभनधनाःराधइतिधननाम । राध्नुवन्त्यनेन । येचबृहस्पतिपुरोहिताः । तेदेवस्यसवितुः सवेप्रसवेवर्तमानाः । देवादेवैर्वच्यमाणैःसह अवन्तुपालयन्तु माम ॥ ११ ॥ कथमवन्तु । प्रथमादेवाः द्वितीयैःसहिताःअ-

वन्तुमा ॥ ११ ॥ प्रथमाद्वितीयैः ॥ प्रथमाद्वितीयैर्द्वितीयांस्तृतीयैस्तृतीयांः सुत्त्येनंसुत्त्यंस्युज्ज्ञेनंयुज्ज्ञोयजुंर्भिर्य्यजूं षिसामंभिः सामान्न्यृग्भिर्ऋचंःपुरोनुवाक्याभिः पुरोनुवाक्यायाज्याभिर्य्याज्यावषट्कारैर्वषट्कारा ऽ आहुंतिभिराहुंतयोमेकामान्त्समंर्द्धयन्तुभूः स्वा

वन्तु । द्वितीयाःतृतीयैः । तृतीयाःसत्येन । सत्यंयज्ञेन यज्ञोयजुर्भिः यजूंषिसामभिः । सामानिऋग्भिःऋचःपुरोनुवाक्याभिःपुरोनुवाक्यायाज्याभिःयाज्यावषट्कारैःवषट्काराआहुतिभिः । एवमेकादशसंख्यैः त्रिप्रकारैर्देवैरुत्तरोत्तरपालिता आहुतयः मेकामान्समर्द्धयन्तु । संवर्द्धयन्तु ।

भूयःसुक्तमस्तु ॥ १२ ॥ (१) यजमानोग्रहान्भक्षयति । लोमानिप्रयतिः । अनुष्टुप् ममया-
निलोमानि तानिप्रयतिर्वर्तंते । प्रयतिःप्रयत्नः । त्वक्मेआनतिर्वर्तते आनयनमानतिः ।
त्वगेत्रसर्वाणिभूतानि ममआनतानीत्यभिप्रायः । आगतिश्चद्रव्यादि मांसंमे उपनतिर्वर्तते ।

ह्वां ॥१२॥ लोमानिप्रयतिः॥लोमानिप्रयतिर्म्ममुत्त्वङ्मऽआनतिराग

तिः ॥ माꣳसम्मऽउपनतिर्व्वस्वस्थिम्मज्जामऽआनतिः ॥ १३ ॥ [१३]

यद्देवाः ॥ यद्देवादेवहेडनन्देवासश्चकृमाव्वयम् ॥ अग्निर्म्मातस्मा

उपनमन्तेहि ममभूतानि । वसुधनानिअस्थिममवर्तते । मज्जामे आनतिः ॥ १३ ॥
इतउत्तरमत्रऋचः संमार्जनमेवकुर्मर्यामस्यति । यद्देवाः तिस्रोनुष्टुभोग्निदेवत्याः । देवाःदेवासः हेआ-
मंत्रिते लिङ्गादानानपिदेवान् बोधयति । यत्किञ्चित् हेदेवाःहेदेवासः । देवहेडनं चक्रम ।

(१) का० प्रतप्रचभवं यजमानो लोमानि प्रयतिरिति । यजमानो ग्रहशेषं प्रतप्रचमुपहवपूर्वकं भक्षयति १९ । ४ । २५ । लोम-
त्वगादिदेवतानुष्टुप ।

कृतवन्तोवयम् । अग्निर्माम् तस्मात् एनसःपापात् विश्वात्सर्वस्मात्मुञ्चतु । अंहसश्चपापात् ॥ १४ ॥ यदिदिवा । यदिदिवा अह्नियद्रात्रौएनांसि पापानिचकृम कृतवन्तोवयम् । वायुःमां तस्मात्-एनसः विश्वात्मुञ्चतु । अंहसः ॥ १५ ॥ यदिजाग्रत् । यदिजाग्रदवस्थायाम् यदिस्वप्नावस्था-

देनंसोव्विश्श्वान्न्मुञ्चुत्त्वꣳहंसः ॥ १४ ॥ यदिदिवा ॥ यदिदिवायदि नक्तमेनांꣳसिचकृमाव्वयम् ॥ व्वायुर्म्मातस्म्मादेनंसोव्विश्श्वान्न्मु ञ्चुत्त्वꣳहंसः ॥ १५ ॥ यदिजाग्ग्रत् ॥ यदिजाग्ग्रद्यदिस्वप्न्नऽएनांꣳ सिचकृमाव्वयम् ॥ सूर्य्योमातस्म्मादेनंसोव्विश्श्वान्न्मुञ्चुत्त्वꣳहंसः ॥ १६ ॥ यद्ग्ग्रामेयदरण्ण्येयत्सभायांय्यदिन्द्रिये ॥ यच्छूद्द्रेयदर्य्येयदे

याम् एनांसीतिसमानव्याख्यानम् सूर्यइतिविशेषः । श्रुतिस्तुलक्षणयाव्याचष्टे । मनुष्यावैजागरितं पितरःसुप्तं मनुष्यकिल्बिषाच्चैवैनं पितृकिल्बिषाच्चमुञ्चत्विति ॥ १६ ॥ यद्ग्रामे । यदरण्येऽ-त्सभायांयत्इन्द्रियेइन्द्रियविषये । देवविषयइतिश्रुतिः । यत्शूद्रे यत्अर्ये । अर्यस्वामिवैश्ययोः

यच्चएतद्द्व्यतिरिक्तमेनः चकृमनयम् । यच्च एकस्यआवयोः पत्नीयजमानयोः अधिधर्मणि एनः तस्यएनसः अवयजनमसि । अवपूर्वोयजतिर्नाशनेवर्तते । नाशनमसि ॥ १७ ॥ यदापः । व्याख्यातः

नं॒ऽश्च॑कृ॒मा व॒यंस्यदे॒क॑स्या॒धि॒धर्म॑णि॒तस्या॒व॒यज॑नमसि ॥ १७ ॥ यदा

पं॑ ॥ यदापो॑ऽअ॒घ्न्या॒ऽइति॒ व॑रु॒णेति॒ शपा॑म॒हे॒ तत॑ो व॑रु॒णनो मुञ्च ॥

अव॑भृथ निचुम्पु॒ण नि॒चे॒रु॑रसि नि॒चु॒म्पु॒णः॑ ॥ अव॒दे॒वैर्दे॒वकृ॑त॒मेनो॑ऽयक्ष्य

व॒मर्त्यै॒र्मर्त्य॑कृतम्पुरु॒राव्णो॑ देव रि॒षस्पा॑हि ॥ १८ ॥ सुमु॒द्रेते॑ ॥ सुमु

द्रेते॒ हृद॑यम॒प्स्व॒न्तः स॒न्त्वा॒ वि॒श॒न्त्वोष॑धीरु॒तापः॑ ॥ सु॒मि॒त्रि॒या न॒ऽआ

प॒ऽओष॑धयः सन्तु दु॒र्मि॒त्रि॒यास्तस्मै सन्तु॒ यो॒ऽस्मान्द्वेष्टि॒ यं च॑ व॒य

अवभृथनिचुम्पुणव्याख्यातः द्वयांस्तुविशेषः । अयक्ष्यीतियजतेरिहरूपम् पूर्ववच्चक्रतुयागे अयाजिषमिति ॥ १८ ॥ समुद्रेते । द्विपदाविराट् । सुमित्रियानइत्यपोञ्जलिनाआदाय दुर्मित्रिया-

इतिद्वेष्यं प्रतिसिञ्चति ॥ १९ ॥ द्रुपदादिव । अनुष्टुप् अब्देवत्यावा सोपप्लवनीया । द्रुमनयःपदः द्रुपदः पादुकाउच्यन्ते । तथाचयास्कः । कनीनके विद्रवेन वेद्रुपदइति । मुमुचानः यथाद्रुममया त्पादात् मुच्यमानः पुरुषःतज्जैर्दोषैः असंबध्यमानःपृथग्भवेत् । यथाच स्विन्नःप्रस्विन्नः पुरुषःस्नातःमत्वा त्पृथग्भवेत् । प्रस्विन्नस्यहिकृत्स्नो मलउपैति । यथाच पूतंपवित्रेण कम्ब-

न्विष्म्मः ॥ १९ ॥ द्रुपदादिवमुमुचानःस्विन्नःस्नातोमलादिव ॥ पूतम्पवित्रेणेवाज्यमापःशुन्धन्तुमैनसः ॥ २० ॥ उद्वयम् ॥ उद्वयन्तमसस्परिस्वः पश्यन्तउत्तरम् ॥ देवन्देवत्रासूर्यमगन्मज्योति

लमयेन आज्यंपूतंपृथग्भवेत् कीटिकातः । एवमापः शुन्धन्तुपृथक्कुर्वन्तु मामेनसः पापात्सकाशात् ॥२०॥ उत्तरति । उद्वयम् अनुष्टुप्सौरी । उदः अगन्मआख्यातेनसंबन्धः । उदगन्म उद्गताः स्मवयम् तमसस्परि । तमसोधि तमोवज्जलादस्माल्लोकात् । स्वः स्वर्गलोकम्पश्यन्तः । उत्तरम् उद्गततरमस्माल्लोकात् । ततोपि देवं नूयं देवत्रा देवेषु उदगन्मज्योतिः । उत्तमं सर्वेभ्योज्यो

तिर्थ्यः ॥२१॥ (१) आहवनीयमुपतिष्ठते । अपो अद्य पर्ज्जिराग्नेयी । योऽहम् अपः अद्याखिन्नहनि अनुचारिषम् । अनुचरितवानस्मि अनेनावभृथकर्मणा । यस्मादहम् अजेनरसेनसमसृज्महि । संसृ-

सृत्तमम् ॥ २१ ॥ अपोऽअद्य ॥ अपोऽअद्यान्न्वचारिषꣳ रसेनुसमंसृ

ज्महि ॥ पयंस्वानग्नऽआगंमुन्तम्मासꣳसृजुव्वर्च्चंसाप्प्रजयांचुधनेन

च ॥ २२ ॥ एधोंसि ॥ एधोंष्येधिषीमहिंसुमिदंसितेजोंसितेजोमयिं

धेहि ॥ सुमाववर्त्तिंपृथिवीसमुषाःसमुसूर्य्यः ॥ समुव्विश्वंमिदञ्जगं

ष्टवानस्मि । यश्चाहम् पयस्वान् उदकवान्सन् । हेऽअग्ने आअगमम् आगतवानस्मि । तंमामागत वन्तं सन्तम् संसृज वर्चसाप्रजयाचधनेनच ॥२२॥ (२) समिधमादत्ते। एधोसि एधःसमिन्धनमस्याग्नेः ।

(१) का० आहवनीयमुपतिष्ठतेपो अद्येति । यजमान आहवनीयमुपतिष्ठते ।

(२) का० एधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति यजमानः एधोऽसीति मन्त्रेण समिधं गृहीत्वा समिदसीति मन्त्रेणाग्नौ दधाति ।

एवंचेत् अतस्त्वां समिन्धनमुपादाय एधिषीमहि । आदधाति समिदसि । यतश्च समिन्धनमस्याग्नेः तेजश्चासिअग्नेः । दाह्यसंयोगेना ग्निर्ज्वलतीत्येतदभिप्रायम् । अतस्त्वांब्रवीमि । तेजोमयिधेहि जुहोति । समाववर्ति । गायत्री यस्मात्समावर्ततेनश्वरत्वादियंपृथिवी । यस्माच्च समावर्ततेऽषाः । यस्माच्च समावर्ततेएवंसूर्यः । यस्माच्चसमावर्तते एवंविश्वम् इदंजगत् जङ्गमादि । अतोवैश्वा-

त् ॥ वैश्वानरज्ज्योतिर्भूयासंविभून्कामान्व्यश्नवैभूःस्वाहा ॥ २३ ॥ [ १० ] अभ्याद॑धामि ॥ सुमिधुमग्नेव्रतपतेत्वयि ॥ व्रत

नरस्यज्योतिः भूयासम् । वैश्वानरः परंब्रह्मेत्याहुरौपनिषदिकाः । विभून् कामान्व्यश्नवैव्य-श्नुयाम । भूःभुवनमात्राभिसंबन्धेन सुहुतमस्तु ॥ २३ ॥ (१) सौत्रामण्यारंभे यजमानआहवनीये तिस्रःसमिधोऽभ्यादधाति । तिसृभिरनुष्टुब्भि राग्नेयीभिः । प्रथमाव्रतग्रहणीया । यामेताम् अभ्यादधामि समिधम् हेअग्ने व्रतपतेत्वयि । अनया व्रतञ्चश्रद्धाञ्च उपगच्छामि । ततःइ-

(१) का० अभ्यादधामीति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति । सौत्रामण्यादावादितोऽष्टिं समाप्य त्रिपक्षयं मा-हवनीयदक्षिणाग्नी विहृत्याग्न्यन्वाधानं ब्रह्मवरणं च हुत्वाहवनीये यजमानस्तिस्रः समिधः प्रत्यृचमादधाति ।

न्वेत्वाम् अहन्दीक्षितःसन् ॥ २४ ॥ यत्रब्रह्म । यत्रब्रह्मवर्मूर्तिमत् चत्वञ्च । सम्यंञ्चौ समीची इतिप्राप्तेलिङ्गव्यत्ययः । चरतःसहस्त्रवियोगेन तंलोकं पुण्यम्प्रज्ञेषं प्रज्ञानंवा प्राप्नामवतीत्यतः तँल्लोकगमनंप्रार्थ्यते । यत्रदेवाःसहाग्निनाचरन्ति ॥ २५ ॥ यत्रेन्द्रः । यत्रइन्द्रस्त्र वायुश्च सम्यं-

ञ्चंश्श्रद्धाश्रोपैमीन्धेत्त्वांदीक्षितोऽअहम् ॥ २४ ॥ यत्रुब्ब्रह्मं ॥ चत्त्रुच ञ्चंसुम्म्यञ्चौचरंतः सुह ॥ तँल्लोकम्पुण्यम्प्रज्ञेषंय्यत्रदेवाः सुहा ग्निना ॥ २५ ॥ यत्रेन्द्रः ॥ यत्रेन्द्रंश्चव्वायुश्चंसुम्म्यञ्चौचरंतःसु ह ॥ तँल्लोकम्पुण्यम्प्रज्ञेषंय्यत्रंसेदिर्न्नंव्विद्यतें ॥ २६ ॥ अंशुना ते ॥ ऽअंशुःपृच्यतांम्परंपापरंः ॥ गुन्धस्तेसोमंमवतुमदांयरसोऽअ

चौसंगतौचरतःसहस्त्रवियुक्तौ । तंलोकम्पुण्यं प्राप्नुयाम् । यत्रसेदिर्नविद्यते । अन्नलाभनिमित्तं सदनं । कातर्यात्सेदिः ॥ २६ ॥ अंशुनाते । द्वितीयासुरासन्धानेनुष्टुप । सोमस्यांशुनातेतवहे-

सुरे अंशुः पृच्यतांसंपृच्यतांसंमृज्यताम् परुषाचपरुः। पर्वणाचपर्वसंपृच्यताम्। एवं चकृत्वा गन्धस्तवसोममवतु संपृणक्तुसमालिङ्गताम्। मदायचरसः अच्युतः अनश्वरः आलिङ्गताम्॥ २७॥ पूतामादत्ते। सिञ्चन्तिपरि। अनुष्टुप्सौमीऐन्द्रीवा। सिचन्तियाम् आचामभावमुपगताम्। आचामोभक्तमण्डः। परिषिञ्चन्ति पयः प्रभृतिभिः। उत्सिञ्चन्तिचग्रहैः। पुनन्तिचयाङ्गोवाल

ञ्चयुंतᳫ॥२७॥ सिञ्चन्ति * परिं॥षिञ्चन्त्युत्सिंञ्चन्तिपुनन्तिंच॥ सुरायैबभ्र्वैमदेंकिन्त्वोवंदतिकिन्त्वः॥ २८॥ धानावंन्तङ्करुम्भिणंम्॥ धानावंन्तङ्करुम्भिणंमपूपवंन्तमुक्थिनंम्॥ इन्द्रंप्प्रातर्ज्जुंषस्वनᳫ॥२९॥

पवित्रहिरण्यादिभिः। तस्यैसुरायैबभ्रवेबभ्रुवर्णायै। षष्ठ्यर्थेचतुर्थ्यौ। मदेवस्थितः इन्द्रः। किन्त्वोवदतिकिन्त्वः। किन्त्वइतिवदति किन्त्वंकस्त्वंब्रूहीतिवदति॥ २८॥ धानावन्तंकरंभिणम्। ऐन्द्रीगायत्री। प्रातः सवनेपुरोडाशानांपुरोनुवाक्या। धानावन्तं धानाभिः संयुक्तं करंभिणंकरम्भेणसंयुक्तम्। अपूपवन्तम् अपूपेनसंयुक्तम्। उक्थिनंवचनदन्तं स्तुतिमन्तंभागम्

* परेश्चसिञ्चतेः परिरुपसर्गाच्चपरः सिञ्चतेः सकारःषकारमापद्यते। इतयनेनसूत्रेणपरिसिञ्चतौ तत्रचसकारस्यषकारादेशोवि· धीयते प्रा० अ० २ सू६४।

हेइन्द्र । प्रातः सवनेजुषस्वसेवस्वनःअस्माकम् ॥ २९ ॥ (१) बृहदिन्द्राय । ऐन्द्राबृहत्यागायत्रीति-
साम्नइयंयोनिः बृहत्सामइन्द्रायगायत । उपशब्दयतहेमरुतः । ऋत्विजोवामरुतः । वृत्रहन्तमम्
वृत्रंप्रति अतिशयेनहन्तिगच्छतीतिवृत्रहन्तमः । एवमेवव्याख्येयम् येनैव पदकारःपदंचक्रे ।
वृत्रहन्तममितिमकारान्तावग्रहणम् । अथकोर्थः पाप्मानंप्रतिअतिशयेनहन्तारं सामगायतीति ।

बृहदिन्द्राय ॥ गायतमरुतोवृत्रहन्तमम् ॥ येनज्योतिरजनयन्नृता
वृधोदेवन्देवायजागृवि ॥३०॥ अध्वर्योऽअद्रिभिः ॥ सुतंसोमं

येनसाम्नाज्योतिः अजनयन् । ऋतावृधः । सत्यवृधोवायज्ञवृधोवा । इन्द्रस्य । यद्वा । ऋता-
वृधोदेवाः । कथंभूतं ज्योतिरजनयन् । देवंदातृ । देवायइन्द्रायदातुः । जागृविजागरण-
शीलम् स्वाधिकारावहितचितम् ॥ ३० ॥ ब्रह्मानुमन्त्रणम् अध्वर्योअद्रिभिः । ऐन्द्रीगायत्री ।
हेअध्वर्यो अद्रिभिः ग्रावभिः सुतमभिषुतंसोमम् पवित्रेआनयआसिञ्च । ततः पुनाहिपुनीहि

(१) का० ऐन्द्रां बृहतीं गायति । अध्वर्युप्रेषितो ब्रह्मा इन्द्रदेवतायां बृहसतीं साम गायति इन्द्रदेवता बृहती नृमेधपु-
रुषमेधदृष्टा ।

इन्द्रायइन्द्रस्य । पातवेपानार्थम् ।। ३१ ॥ (१) त्रयस्त्रिंशंवसाग्रहंगृह्णाति । योभूतानाम् । पंक्तिः । सोमप्रवादः । योभूतानांचतुः प्रकाराणाम् अधिपतिः । यस्मिंश्चलोकाअधिउपरिश्रिताः । स्थिताः ।



मधुवित्त्वऽआनंय ॥ पुनाहीन्द्रायपातवे ॥३१॥ [ ८ ] योभूतानाम् ॥ योभूतानामधिपतिर्यस्मिँल्लोकाऽअधिश्रिताः ॥ यऽईशेमहतोम हाँस्तेनंगृह्णामित्वामहम्मयिगृह्णामित्वामहम् ॥ ३२ ॥ उपयामगृ हीतोस्यश्विभ्यांत्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णे ऽएषतेयोनिर श्विभ्यांत्वासरस्वत्यैत्वेन्द्रायत्वासुत्राम्णे ॥ ३३ ॥ प्राणपामे ॥

यश्च ईशेमहतः विकारजातस्य । स्वयंचमहान् । तेनगृह्णामित्वाम् अहम् ॥ ३२ ॥ उपयामगृहीतोसीतिव्याख्यातम् ॥ ३३ ॥ ऋत्विजः प्राणभक्षंभक्षयन्ति । प्राणपाइति द्वाभ्या-



( १ ) का० त्रयस्त्रिंशं वसाग्रहं गृह्णाति यो भूतानामिति। प्रागभिषेकात् सीसेन तन्त्रमित्ति षोडशगिर्भर्हाति शतसाग्रहाः

मनुष्टुवुपरिष्ठाद्बृहतीभ्याम् । पाणादिपरिचयाय । यस्त्वंप्राणपाः ममश्चसि अपानपाश्चचुष्पाश्च श्रोत्रपाश्चमे । वाचश्चमेविश्वभेषजः । सर्वभेषजकारी । मनसश्चासिविलायकः । लीङ्श्लेषणे सर्वकरणेषु संश्लेषकः ॥ ३४ ॥ किञ्च । अश्विनकृतस्यते । नकारउपजनः करोतिर्दर्शनार्थः ।

ऽअपानुपाश्चश्चचुष्पाःश्रोत्रपाश्चमे ॥ व्वाचोमेव्विश्वभेषजोमनसो सिव्विलायकः ॥ ३४ ॥ अश्विनंकृतस्यते ॥ अश्विनंकृतस्यतेसरं स्वतिकृतस्येन्द्रेणसुत्राम्णाकृतस्य ॥ उपहूतऽउपहूतस्यभक्षया मि ॥ ३५ ॥ [ ४ ] समिद्धऽइन्द्रः ॥ समिद्धऽइन्द्रऽउषसामनीकेपुरो

अश्विष्टस्यते । सरस्वतिइष्टस्यते इन्द्रेणसुत्राम्णा इष्टस्यते । उपहूतश्चाभ्यनुज्ञात एताभि र्देव-ताभिः उपहूतस्यचसोमस्य ऋत्विग्भिःभक्षयामि ॥३५॥ समिद्धइन्द्रः । इतउत्तरं होत्रमैत्रावरुणंच ।

तेषां संस्रवैर्यजमानाभिषेकः कृतः ततोऽध्वर्युर्यो भूतानामिति सार्धकण्डिकात्मकेन मन्त्रेण त्रयस्त्रिंशंवसाग्रहमार्षभखुरेण गृह्णाति आत्मवादिनी ग्रहदेवत्या कौण्डिन्यदृष्टा पङ्क्तिः ।

सौत्रामण्याः आश्वमेधात् । तत्रैन्द्रस्यपशोरेकादशप्रयाजाः तत्रैताआयोज्या ऐन्द्यस्त्रिष्टुभः । यास्तुआप्रीदेवताङ्गध्मः तनूनपात् नराशंसः । इडः । वर्हिः । द्वारः । उषासानक्ता दैव्याहोतारा तिस्रोदेवीः त्वष्टावनस्पतिः स्वाहाकृतयइति । तायथायोगं विशेषणत्वेनव्याख्यायन्ते । द्विस्थानइन्द्रोत्रस्तूयते । यःसमिद्धः संदीप्तः आदित्यानांत्वमिन्द्रः उषसामनीकेमुखेउषसांहियन्मुखं तत्रभगवानादित्योवतिष्ठते । पुरोरुचा अग्रतोगामिन्यादीप्त्या । वान्नधानइतिसंवन्धः । पूर्व-

रुचांपूर्व्वकृद्धावृधानः॥ त्रिभिर्द्देवैस्त्रिᳬंशतावज्रबाहुर्ज्जघानंवृत्त्रंविदुरोव्ववार ॥ ३६ ॥ नराशᳬंसᳬंप्रति ॥ नराशᳬंसᳬंप्रतिशूरोमि

कृच्च । पूर्वादिशंकरोति । तदुदयोपलक्षिताहि पूर्वादिक्संभवति । सएवमध्यस्थानःसन् त्रिभिर्देवैःसहितः वज्रवाहुः वज्रपाणिः जघानवृत्रं मेघम् विदुरोववार । हत्वाचवृत्रं विविधान्विवृतान्अकरोत् । विदुरः द्वाराणिश्रोतांसि तस्यैवमेघस्य । द्वारशब्दस्यदुरइतिछान्दसंसंप्रसारणम् ॥३६॥ नराशंसः । एकस्यामेव ऋचिनराशंसः तनूनपान्नाप्रीणामनुवाके । व्यवहितपदप्रायोयंमन्त्रः । यःशूरः इन्द्रःसन् नराशंसः । यश्चयज्ञोभवति नराअस्मिन्नासीनाशंसन्तीति । प्रति । प्रति-

सिमानोसिमीतेमिमानःप्रतिगणयन् यज्ञस्यधामस्थानम्गोप्रभृतिपशुसंवन्धिनीभिः वपाभिःवपावान् हिरण्यैर्वपापूर्णैः यस्वाधानभूतैःचन्द्री। चन्द्रमितिहिरण्यनाम यश्चशूरइन्द्रः तनूपात्भवतिभवति। मधुनामधुस्वादेन घृतेनसमञ्जन् हवींषि। गौरचतनूरुच्यते। ततोस्याम्भोगास्तसत्राः पयोजायते पयः-सम्राज्यज्ञायतइति। तंशूरमिन्द्रंयजमानोयजति प्रचेताःप्रकृष्टज्ञानः ॥३७॥ ईडितोदेवैः। ईडित

मांनुस्तनूनपात्प्रतिंयुज्ञस्युधामं ॥ गोभिर्वपावान्मधुंनासमुञ्जन्हिरंण्यैश्चन्द्रीयंजतिप्रचैताः ॥ ३७ ॥ ईडितोदेवैः ॥ ईडितोदेवैर्हरिंवाँ२ऽअभिष्टिराजुह्वांनोहविषाशर्द्धमानः ॥ पुरन्दरोगोत्रभिद्वज्रंबाहुरायांतुयुज्ञमुपंनोजुषाणः ॥ ३८ ॥ जुषाणोबर्हिः ॥ जुषा

पूजितोदेवैः हरिवान्। हरीइन्द्रस्याश्वौतदभिप्रायोमन्त्रः। वर्णाभिप्रायोवा। अभिष्टिः। अभिगमनवान् अभ्येषणवान्वा। आजुह्वानःआह्वयमानः हविषा निमित्तभूतेन। शर्द्धमानःअभिवलायमानः शर्द्धइतिवलनाम। पुरन्दरइतिपुरांदारयिता। गोत्रभित् मेघान्भिनत्तिवृष्ट्यर्थम्। वज्रवाहुःयःस

आयातु यज्ञमुपनोजुषाणा: । यज्ञंन:संबध्विनमुपसेवमान: ॥ ३८ ॥ जुषाणोवर्हि: । जुषाण:सेवमान: वर्हि: । हरिवान्हरीअश्वौताभ्यांसंयुक्त: न:अस्माकम् इंद्र:प्राचीनंप्रागञ्चनम् सीदत्सीदतु-आस्ताम् प्रदिशा:उपदेशेन । पृथिव्या:देवयजनत्वेन उरुप्रथा: । उरुविस्तीर्णंप्रथनमस्येत्युरुप्रथा: । इंद्रविशेषणमेतत् । वर्हिर्विशेषणान्युत्तराणि । प्रथमानं स्योनंसुखरूपम् आदित्यै:अक्तांवसुभिश्च ।

णोबर्हिर्हरिवान्नुऽइन्द्र्ः प्राचीनंᳬसीदत्प्रदिशांपृथिव्याः ॥ ऊरुप्प्रथाःऽप्प्रथमानᳬंस्योनमादित्यैरक्तांव्वसुभिःसजोषाः ॥ ३९ ॥ इन्द्रन्दुरः ॥ कवष्योधावमानाव्वृषाणंय्यन्तुजनयःसुपत्नीः ॥ द्वारो

वर्हिषांजनमन्त्रे आदित्यावसवश्चसन्ति तदभिप्रायमेतत् । संवर्हिरंक्तांहविषाघृतेनसमादित्यैर्वसु-भिरित्ययंमन्त्र: । सजोषा: सहप्रीयमाणा: । इंद्रविशेषणमेतत् ॥ ३९ ॥ इंद्रन्दुर: । संप्रसार-णंछान्दसम् । यज्ञगृहद्वार: कवष्य: । कुषनिष्कर्षे कुषिता:सम्मुषिरा: । धावमाना.आदरवत्य: वृषाणम्वर्षितारम्यन्तु । जनय:सुपत्नी: लुप्तोपमानमेतत् । जायाइवशोभनपत्न्य: । अथेन्द्रसंगतिं

प्राप्य यज्ञगृहद्वारः । देवीः । अभितःइतश्चेतश्च । विश्रयन्तांविश्रियन्ताम् सुवीराःऋत्विग्भिः वीरमिंद्रंप्रतिप्रथमानाः पृथ्व्योभवन्त्यः । महोत्सवैः ॥ ४० ॥ उषासानक्ता । उषाआदित्यप्रभा-नक्ताराचिः । उषाश्चरात्रिश्च बृहतीमहत्यो । बृहतंमहान्तम् पयस्वतीउदकवत्यौ अवश्यायवत्यौ । सुदुघेसाधुदोहनेशूरमिन्द्रम् । तन्तुन्ततम् लुप्तोपमानमेतत् । तन्तुमेवततंपटार्थंसूत्रं प्रसारितमिव

वीरुभितोव्विश्रयन्ताᳬंसुवीराव्वीरम्प्रथमानामहोभिः ॥४०॥ *उषासानक्ता ॥ बृहतीबृहन्तम्पयस्वतीसुदुघेशूरमिन्द्रम् ॥ तन्तुन्ततम्पेशंसासंव्वयन्तीदेवानान्देवंय्यजतःसुरुक्मे ॥ ४१ ॥ दैव्यामिमाना ॥

पेशसा विचित्ररूपेणसूत्रेण । संवयन्तीसंग्रथयन्त्यौ । देवानांदेवमिन्द्रम्यजतःसंगतंकुरुतः पुनघट्यतइत्यर्थः । सुरुक्मेसुरोचने ॥ ४१ ॥ दैव्यामिमाना । व्यवहितपदप्रायोमंत्रः । दैव्यौहोतारौ

---

* उषमहोभिर्नक्तोमीकारौ कार नकारेभ्यः ११९ । उषइत्ययंह्रस्वोदीर्घ मापद्यते महोभिरित्यादि षुपरेषु प्रा० अ० २ । सू० इत्यनेन उषासानक्तेत्यत्रदीर्घः ।

भु०
य०
सं०
४६०
उ०
भा०

अयंचाग्निः असौचवायुर्मध्यमः । दैव्यौहोतारौ मिमानौनिर्मिमाणौयज्ञे । मनुषद्रूतितद्धितलोपः वीप्सायाश्चमनुष्यस्ययजमानस्य । पुरुत्राबहुप्रकारम् । प्रथमौमानुषाद्धोतुः । सुवाचासाधुवाचौ । मूर्द्धनिप्रधानाङ्गेयज्ञस्य । इन्द्रंमधुना अन्नसहितं दधानास्थापयन्तौ । प्राचीनम् आहवनीयाख्यं ज्योतिः । हविषात्वधातः वर्द्धयतः ॥ ४२ ॥ तिस्रोदेवीः । यास्तिस्रोदेव्योहविषाआज्येन वर्द्धमानाः

मनुंषऽपुरुत्राहोतांरा॒विन्द्रं॑म्प्रथमासुवाचां ॥ मूर्द्धन्यज्ञस्यमधुंनाद धांनाप्प्राचीनुञ्ज्योतिर्हविषांवृधातऽ ॥ ४२ ॥ तिस्रोदेवीः ॥ तिस्रो देवीर्हविषावर्द्धमानाऽइन्द्रञ्जुषाणाजनंयोनपत्नीःऽ ॥ अच्छिंन्नुन्त न्तुम्पयंसासरंस्वतीडांदेवीभारंतीविश्वतूर्त्तिःऽ ॥४३॥ त्वष्टादधंत् ॥

इन्द्रं जुषाणाः सेवमानाः । जनयोनपत्नीः जायाइवपत्न्यः आसते । तामच्छिन्नन्तन्तुम् अविसस्तयज्ञम् पयसाहविषाकुर्वन्तु । कतमास्तास्तिस्रोदेव्य इत्यतआह । सरस्वतीचइडाच देवीदानादिगुणयुक्ता भारतीआदित्यप्रभा । विश्वतूर्तिः सर्वतः तूर्णंयायिनी । आख्यातमन्त्रना-

अ०
२०
शिवम्
४६०

स्यतोध्याहृतम् ॥ ४३ ॥ त्वष्टादधत् त्वष्टातत्ततिः करोत्वर्थस्य । यस्त्वष्टादधत् धारयतुशुष्मं बलम् इन्द्रायइन्द्रार्थम् । वृषोसेक्ता । कथंभूतस्त्वष्टाअपाकः । पाकइतिप्रशस्यनाम । नविद्यतेय-स्मात्त्वष्टुरन्यःपाकःप्रशस्यसःअपाकः । नञोस्त्यर्थानांबहुव्रीहिर्वाच्योत्तरपदलोपश्चेतिसमासः । अचिष्टुः अचितस्थानशरीरः अञ्चनशीलोवा । यशसेच इन्द्राय । पुरुणिवहूनिभैषजानिअ-

त्वष्टादधच्छुष्ममिन्द्रायवृष्णेपाकोचिष्टुर्यशसेपुरूणि ॥ वृषायज न्वृषणम्भूरिरेतामूर्द्धन्यज्ञस्यसमनक्तुदेवान् ॥ ४४ ॥ वनस्पति रवसृष्टः ॥ वनस्पतिरवसृष्टोनपाशैस्त्मन्यासमञ्जञ्छमितानदे

करोदितिशेषः । वृषासेक्ता यष्टायजन् वृषणंसेक्तारमिन्द्रम् भूरिरेताः सर्वजनकः त्वष्टा । समूर्द्धनियज्ञस्यआहवनीयेसम् अनक्तुभक्षयतु हविः सह्हितेनाजेनदेवान् अनक्तिर्भोजनार्थः । आहवनीयात्मनावस्थितान् भोजयतुदेवानित्यर्थः ॥ ४४ ॥ वनस्पतिरवसृष्टः वनस्पतिर्यूपः अव-सृष्टोनअभ्यनुज्ञातइव पाशैर्बद्धमध्वर्युणापशुम् आत्मन्याआत्मना समञ्जन् सङ्गमयतुसम्बध्नातु ।

कथमिव । शमितानदेवः । यथाशमितादेवः अपापः पशुवद्गमात्मनासंगमयेत् एवम् । किञ्च । इंद्रस्यजठरमुदरम् हव्यैःपृणानःपूरयन् । स्वदातियज्ञं समनक्तुयागम् मधुना-चरसेनघृतेनच ॥ ४५ ॥ स्तोकानामिन्दुम् । वपास्तोकानां संवन्धिनमिन्द्रम् प्रतिसोमम्प्रतिपशोः

वः ॥ इन्द्रस्यहव्यैर्जठरम्पृणानःस्वदातियज्ञम्मधुनाघृतेन ॥४५॥ स्तोकानामिन्दुम्॥ स्तोकानामिन्दुम्प्रतिशूरऽइन्द्रो*वृषायमाणोवृषभस्तुराषाट् ॥ घृतप्रुषामनसामोदमानाःस्वाहादेवाऽअमृतामादय

सोमसंस्तवस्तदभिप्रायमेतत् । गमनायशूरःविक्रान्तः । इन्द्रोवृषायमाणः वृषइवआचरन् । वृषभःसर्वलोकनासक्तत् । तुराषाट् तूर्णंसहतेअभिभवतीतितुराषाट् । सइंद्रःस्वाहा कृतिभिर्मन्त्रिताम् तृप्यन्तुइत्यनुषङ्गः । घृतप्रुषाच घृतावयवेनच । मनसामोदमानाः हृष्यन्तः । स्वाहा-



* अथोदारिथ प्रोच पनय सादयजुंवृष प्रतुषसब्धाघारातंग्तभवत यकारे । अथेतप्रादिकृस्वायकारे परेदीर्घमापद्यते वृषाय माणे तत्रदीर्घोभवति प्रा० अ० ३ । सू । ११३ ।

अविभक्तिकोनिर्देशः । स्वाहाकृतिर्देवाः अमृताः अमरणधर्माणः मादयन्तामृप्यन्तु ॥ ४६ ॥
आयातु । षट्त्रिष्टुभः । ऐन्द्रस्यपशोर्वपापुरोडाशपशूनांयाज्यानुवाक्याः । आयातुआगच्छतु इन्द्रः
अवसे अवनायतर्पणाय रक्षणायवा । उपनःसमीपेस्माकम् आगच्छतु । ततश्च इहास्माभिः
स्तुतः सधमात् सहमदनः सहभोजनः अस्तु । शूरोविक्रान्तः । वावृधानः वर्द्धमानः स्ववलैः ।

न्ताम् ॥ ४६ ॥ [ ११ ] आयातु ॥ आयात्विन्द्रोवसऽउपनऽइहस्तु
तःसधमादस्तुशूरः ॥ वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्न्नक्षत्रमभि
भूतिपुष्यात् ॥४७॥ आनः ॥ आनऽइन्द्रोदूरादानऽआसादभिष्टि

तविषीर्यस्यपूर्वीर्द्यौर्न । तविषीतिवलनाम । तवतेर्द्विकर्मणः । यस्येन्द्रस्यवलानिपूर्वाणि वृत्र-
वधादीनिवलानिद्यौरिवोच्चैः कथ्यन्ते । यश्चास्मदीयंक्षत्रम् । अभिभूति अभिभवितृअभिभवनशीलम
पिपुष्यात् । पुष्णातिसआयात्विति सम्बन्धः ॥ ४७ ॥ आनइन्द्रः । आउपसर्गोयासदित्ययंसंबध्यते ।
आयासत् आयातु नः अस्माकम् इन्द्रः दूरात् द्युलोकादेः । आनआसात् । आयासच्चअस्मा-

कम् आसादित्यन्तिकनाम । आगच्छतुचास्माकंसमीपात् । यद्यपिदूरेयद्यप्यन्तिकइत्यर्थः । अभिष्टिकृत् अभिलषितपदार्थकारी । अवसे अवनायअन्नायवा । उग्रः अतिविषमः । एत्यच । ओजष्ठेभिः । अजस्वितमैः बलैरुपेतः । नृपतिः वज्रवाहुः सङ्गेसंग्रामे । समत्सुएतदपिसं- ग्रामनाम । एकस्मिन्सङ्ग्रामे बहुषुच युगपदुपस्थितेषु । तुर्वणिः तूर्णवनिः तूर्णसम्भक्ता ।

क्षदवंसेयासदुग्ग्रः ॥ ओजिष्ठेभिर्नृपतिर्वज्रबाहुःसङ्गेसमत्सुतुर्वणिःपृतन्न्यून् ॥ ४८ ॥ आनः ॥ आनऽइन्द्रोहरिभिर्य्यात्वच्छार्वाचीनोवंसेराधंसेच ॥ तिष्ठातिवज्रीमघवाविरप्शीमंय्यज्ञमनुनोव्वाजंसातौ ॥ ४९ ॥ त्रातारमिन्द्रम् ॥ त्रातारमिन्द्रमवितारमिन्द्रं ह

पृतन्यून्संग्रामयतः शत्रून् ॥ ४८ ॥ आनइन्द्रः । आयातु नः अस्मान् अभिइन्द्रः । हरि- भिःहरितवर्णैः अच्छ । अच्छाभेरर्थेसचास्मानभ्येत्य । अर्वाचीनः । अर्वागञ्चनः अवसेअन्ना- यराधसेधनायच दानार्थम् । एत्यच । तिष्ठातितिष्ठतुः । वज्रीमघवान् धनवान् । विरप्शी

विरमणशीलः । इमंयज्ञम् अनुप्रति । नः अस्माकम् वाजसातौअन्नसंभजनेनिमित्तभूते ॥ ४९ ॥
त्रातारमिन्द्रम् । त्रातारम् रक्षितारम् इन्द्रं यतः कथयन्ति । अवितारं चयतः
इन्द्रं कथयन्ति । हवेहवेसुहवम् । आह्वानेआह्वाने शोभनाह्वानमिन्द्रं यतः कथयन्ति । शूरं-
विक्रान्तमिन्द्रं यतः कथयन्तिजनाः । अतः ह्वयामि शक्रं शक्तम् इन्द्रंतमहम् । पुरुहूतं-

वेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्ति
नोमघवाधात्विन्द्रः ॥ ५० ॥ इन्द्रः सुत्रामा ॥ इन्द्रःसुत्रामास्व
वाꣳ ॥ ऽअवोभिःसुमृडीकोभवतुविश्ववेदाः ॥ बाधतान्द्वेषोऽअ
भयङ्कृणोतुसुवीर्य्यस्यपतयःस्याम ॥ ५१ ॥ तस्यवयम् ॥ तस्यवय

वज्ञभिराहूतम् । सचाहूतः सन् । स्वस्तिनः अविनाशमस्माकम् मघवाधनवान् धातुदधा-
तुइन्द्रः ॥ ५० ॥ इन्द्रः सुत्रामा । इन्द्रः साधुत्राणः स्ववान् धनवान् । अवोभिः अन्नैः सुमृडीकः
शोभनसुखकारी भवतु । विश्ववेदाः सर्वधनः । किञ्च बाधताम् अपाकरोतु द्वेषः दौर्भा-

शु० य० सं० ४६३ उ० भा०

म्मम् अभयंङ्करोतु। त्वत्प्रसादाच्च सुवीर्य्यस्यघनस्यपतयः स्याम ॥ ५१ ॥ तस्यवयम्। तस्येन्द्रस्यसुत्रामणः वयंसुमतौकल्याणमतौस्याम। यज्ञियस्ययज्ञसंपादिनः। अपि किञ्च। भद्रेभन्दनीये सौमनसेकल्याणमनसिस्यामवयम्। ततोनुग्राह्यवुद्धौवर्त्तमानानामस्माकम्। ससुत्रामाशोभनत्राणः। स्ववान्धनवान् इन्द्रः अस्मेअस्मत्तः आराच्चित् दूरादपि द्वेषः दौर्भा

६ सुमतौयुज्ञियस्यापिभुद्रे सौमनुसेस्याम ॥ ससुत्त्रामास्ववार ॥ ऽइन्द्रोऽअस्मेऽआराच्चिद्द्वेषंः सनुतर्युयोतु ॥ ५२ ॥ आमुन्द्रैः ॥ आ मुन्द्रैरिन्द्रुहरिभिर्युाहिमयूररोमभिः ॥ मात्वाकेचिन्नियंमन्विन्नपा

ग्यम् तत्रवर्तमानम् सनुतरिति। निर्णीतान्तर्हितनाम अन्तर्हितंकृत्वायुयोतु। यद्वा दूरेवर्तमानं प्रकटंकृत्वा युयोतुपृथक्करोतु ॥ ५२ ॥ आमन्द्रैः। वृहत्यैन्द्री। आयाहि मंद्रैःमन्दनीयैः हेइंद्र हरिभिःहरिद्वर्णैःअश्वैः मयूररोमभिः। वभ्रवोह्यश्वाः। किञ्च मात्वाके-चिन्नियमन्न्विन्नपाशिनः। माच त्वामागच्छन्तंकेचिन्निवध्नन्तु। कथमिव। विरितिशकुनिनाम

अ० २०

शिवम् ४६३

शकुनिमिवपाशप्रतिवन्धकाआखेटकिनः । अथकेचित्परिपन्थिनोभवेयुः । अतिधन्वेवतान् इहि । अतिल्यतान् एहिआगच्छ । कथमिव धन्वइव । यथाधन्वनिरुदकदेशं परित्यज्य अन्यतममागच्छेयुः एवमागच्छेति ॥ ५२ ॥ एवेत् । ऐन्द्रीत्रिष्टुप् यमेवमनेनप्रकारेण । इत्-

थिनोतिधन्वेवताँ२ ॥ ऽइहि ॥ ५३ ॥ एवेत् ॥ एवेदिन्द्रँवृषणम्व ज्ज्रबाहुँ व्वसिष्ठासोऽअभ्यर्चन्त्यर्कैः ॥ सनस्तुतोव्वीरवद्धातुगोमद्यू यम्पातस्वस्तिभिःसदानः ॥ ५४ ॥ [ ८ ] समिद्धोऽअग्निः ॥ समि

पादपूरणः । इन्द्रं वृषणं वर्षितारंवज्रवाहुं वसिष्ठासः वसिष्ठस्यापत्यानिवहूनि । यद्वा वस्तृत माऋषयः । अभ्यर्चन्ति अभिष्टुवन्ति अर्कैः मन्त्रैः । सनःसोऽस्मभ्यम् स्तुतःवीरवत् साधुपुत्रसंयुक्तम् धातुददातुधनम् । गोमच्चगोसंयुक्तम् । एवंत्रिभिःपादैरिन्द्रमभिष्टुत्य । अथेदानींयेयाजयन्ति- तानाह यूयं पातपालयत स्वस्तिभिरविनाशैः सदाकालंनोस्मान् ॥ ५४ ॥ (१) इतउत्तरं त्रिपशुः

(१) का० आप्रियस्व समिद्धो अग्निरश्विनेति । समिद्ध इत्याद्या द्वादशानुष्टुभः चकारात्त्रिपशोः प्रजाजयाज्यः इति सूत्रार्थः ।

शु० य० सं० ४६४ उ० भा०

आश्वध्यात् तत्त्वद्वादशस्योनुष्टुभोश्विसरस्वतीन्द्रदेवत्याः । समिद्धःसन्दीप्तोग्निः हविःचपणासमर्थः । हेअश्विनौ । किञ्च तप्तोघर्मःप्रवर्ग्यः विराट्चसोमोभिषुतः । किञ्च दुहेप्रपूरयतिच धेनुःस-रस्वती । सोमं शुक्रंशुक्लम् इह इंद्रियंवीर्यम् ॥ ५५ ॥ अश्विनावध्वर्यूतयोर्होताकथयति यज्ञ-

अ० २०

द्धोऽअुग्निर्रश्विनातप्तोघुर्म्मोविराट्सुतः ॥ दुहेधेनुःसरस्वतीसोमꣳशुक्रमिहेन्द्रियम् ॥ ५५ ॥ तनूपाभिषजा ॥ सुतेश्विनोभासरस्वती ॥ मद्ध्वारजाꣳसीन्द्रियमिन्द्रायपथिभिर्व्वहान् ॥ ५६ ॥ इन्द्रायेन्दुम् ॥ इन्द्रायेन्दुꣳसरस्वतीनराशꣳसेनननग्नहुम् ॥ अधाता

सम्पत्तिम् तनूपाभिषजा । तनूनांपातारौभिषजौच सुतेसोमेअश्विनाबुभौसरस्वतीच मध्वारसेन रजांसिपूरयन्त्विंद्रोपभोगाय । लोकारजांस्युच्यन्ते इतीहलोकवचनोरजश्शब्दः । इंद्रियंवीर्यम् इंद्राप्यायनार्थम् पथिभिर्मार्गैर्वहान्वहन्तु ॥ ५६ ॥ इंद्रायेन्दुम् । इंद्रार्थमिन्दुं सोमंसरस्वतीअ-भिषुणोदितिवाक्यपरिपूर्तिः । नराशंसेनयज्ञेनसहिता नगनहुम् । किञ्चआदधातांसुरायामश्विनौ-

शिवम्

४६४

मधुः । रसरूपम्भेषजरूपञ्च । भिषजौवैद्यौसुतेसोमेन्द्रायेत्यनुषङ्गोविभक्तिव्यत्ययेन ॥५७॥ आजुह्वाना । आह्वयन्तीसरस्वती इंद्रायेन्द्रियाणि चक्षुःप्रभृतीनि वीर्यञ्चवीरकर्म । इडाभिभिर्यज्ञियाभिर्हेतुभूताभिः । अश्विनौचसहायभूतावुपादायसन्दधुः । इषञ्चान्नञ्चसन्दधुः ऊर्जञ्चतदुपसेचनञ्च दध्यादिसन्दधुः

अश्विना मधु भेषजम्भिषजा सुते ॥ ५७॥ आजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् ॥ इडाभिरश्विनाविषꣳ समूर्जꣳ सꣳरयिन्दधुः ॥५८॥ अश्विना नमुचेः ॥ सुतꣳसोमꣳशुक्रम्परिस्रुता ॥ सरस्वती तमाभरद्बर्हिषेन्द्राय पातवे ॥५९॥ कवष्योन ॥ व्यचस्वतीरश्वि

संदधुश्चरयिन्धनम् ॥ ५८ ॥ अश्विनानमुचेः । यमश्विनौनमुचेराहृत्य सुतमभिषुतं सोमं शुक्रममलिनम् परिस्रुतासहितंस्थापितवन्तौ । सरस्वतीतमेवाहरत् बर्हिषास्तरणार्थेनसहिता । इंद्रायपातवे इंद्रपानार्थम् ॥ ५९ ॥ कवष्योन । यज्ञगृहद्वारउच्यते । कवष्योन कुष्निष्कर्षे । समुच्चयार्थीयोनकारः । अस्यामृचि ससुषिराश्चव्यञ्चनवत्यश्च । अश्विभ्यान्न अश्विभ्यामाध्वर्युभ्यांसहिताः दुरःद्वार-

दिशः । त्वाभिर्दिशोलक्ष्यन्त्य इतिश्रुतएवमुक्तम् । इंद्रेण इंद्रश्चयासुचाभ्यु व्यवस्थितः । रोदसीद्यावा-
पृथिव्यौ उभेअपिदुहेदोग्धि । कामांश्चसरस्वतीदुहे । इन्द्रायायातायचक्षुगृहद्वार इन्द्रकुर्वन्तितिशेषः
॥ ६० ॥ उषासानक्तम् । उषाआदित्यप्रभा । नक्तंरात्रिः । हेअश्विनौ उषाश्चरात्रिश्च दिवाअहनिच

व्यचस्वन्तीरुर्विया विश्रयन्तां पतिभ्यो न जनयः शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ॥

ब्य्ास्वान्नदुरोदिशंः ॥ इन्द्रोनरो दसीऽउभेदुहेकामान्त्सरंस्वती ॥६०॥
उषासानक्तमश्विनादिवेन्द्रंᳯसायमिन्द्रियैः ॥ सञ्जानानेसुपेशंसा
समञ्जातेसरंस्वत्या ॥६१॥ प्रातन्नंः ॥ प्रातर्नोऽअश्विनादिवापाहि
नक्तंᳯसरस्वती ॥ दैव्याहोतारांभिषजापातमिन्द्रᳯ सचासुते ॥६२॥

इन्द्रम् इन्द्रियैर्वीर्यैः समंजाते संश्लक्षयतः सायंचइन्द्रियैः समंजाते । सातत्याभिप्रायम् ।
संजानानेएकमतीभूतेउषाश्चरात्रिश्च । सुपेशसाशुरूपे शुक्लेनउषाः कृष्णेनरात्रिः । किमिन्द्रमुषा-
श्चरात्रिश्च केवलेएवसमञ्जाते नेत्याह । सरस्वत्याच सहसमञ्जाते ॥ ६१ ॥ प्रातन्नः ।
पालयतं नोस्मान् हेअश्विनौ देवाअहनि । पाहिपालयचनक्तं हेसरस्वति । युवांच हेदैव्यौ

होतारौभिषजौपालयतम् इन्द्रम् सचास्वेत्यर्थः। सुतेसोमे ॥ ६२ ॥ तिस्रस्त्रेधा। तिस्रो-
देव्यः सरस्वतीचमध्यस्थाना। भारतीआदित्यप्रभाद्युस्थाना। इडापृथिवीस्थाना। एतास्त्रिषु-
स्थानेषुस्थिताः। अश्विनौच। तीव्रंपटुतमं परिस्रुतासहितंसोमम् इन्द्रयसुषुवुः अभिषुत-
वन्तः मदन्तप्पंयम् ॥ ६२ ॥ अश्विनाभेषजंमधु। एतदाख्यातन्तस्मादधुरितिपरिणामः। केम-

तिस्रस्त्रेधा ॥ सरस्वत्यश्विनाभारतीडा ॥ तीव्रम्परिस्रुतासोममि
न्द्रायसुषुवुर्म्मदम् ॥६३॥ अश्विनाभेषजम् ॥ अश्विनाभेषजम्मधुभे
षजन्नःसरस्वती ॥ इन्द्रेत्वष्टायशःश्रियंरूपंरूपमधुःसुते ॥६४॥
ऋतुथेन्द्रः ॥ ऋतुथेन्द्रोवनस्पतिःशशमानःपरिस्रुता ॥ कीलाल

दधुः। अश्विनौसरस्वतीत्वष्टाच प्रयाजदेवताः। किमदधुः। अश्विनौतावद्भेषजं मधुरूपम्।
भेषजं नः अस्मत्संबन्धिनौसरस्वती। त्वष्टाच यशः श्रियंरूपञ्च। कस्मिन्नदधुः। इन्द्रे। कस्मि-
न्नवसरे। सुतेभिषुतेसोमे ॥ ६४ ॥ ऋतुथेन्द्रः। ऋतावृतौ कालेकाले इन्द्रायेतिविभ-

क्तिव्यत्ययः । वनस्पतिःशशमानः शशमानः संशयमानः स्नुवन् परिस्रुतासाधनभूतया । कीलालमन्नरसम् दुहेइत्यनुषंगः । अश्विभ्यांचसहिता । दुहे दोग्धि धेनुर्भूत्वासरस्वती ॥ ६५ ॥ गोभिर्न्न । गोप्रभृतिभ्रपशुभिः सोमंसहितं मासरेणपरिस्रुताच । कथंभूतंसुतंमधु । अभि-

मुश्विभ्यांमधुंदुहेधेनुःसरंस्वती ॥ ६५ ॥ गोभिर्न्नं॥ सोमंमश्विना मासंरेणपरिस्रुतां ॥ समंधातꣳसरंस्वत्यास्वाहेन्द्रंसुतम्मधुं॥६६॥ [ १२ ] अश्विनांहुविः॥ अश्विनांहुविरिंन्द्रियन्नमुंचेर्धियासरंस्व

षुतंमधुस्वादंच । हेअश्विनौ युवांसमधातम् । कस्मिन्समधातम् । इन्द्रे । किंकेवलावेवा-श्विनौ समधातंनेत्याह । सरस्वत्यासह । स्वाहास्वाहाकृतिभिःप्रयाजेनसार्द्धम् ॥ ६६ ॥ (१) अश्वि-नाहविः । तिस्रोवपानां याज्यानुवाक्याअनुष्टुभः । एकैकाश्विसरस्वतीन्द्रदेवत्या । आजभ्रि-

(१) का० अश्विना हविरिति तिस्रो वपानां याज्यानुवाक्याः प्रथममनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या तृतीयामनूच्य प्रथमा याज्या । अश्विनेत्याद्यास्तिसृस्तिसृणां वपानां क्रमाद्याज्यापुरोऽनुवाक्याः तत्प्रकारमाह आश्विनवपा-

रेद्व्याख्यातपदेनसर्वाणिपदानिसम्बध्यन्ते । अश्विनौसरस्वतीच आजभ्रिरे । हविरिन्द्रियंवीर्यं शुक्रममलिनम् वसुधनं मघंमहनीयम् । कुतआजभ्रिरे । नमुचेःआसुरात् । कयाहेतुभूत-याआजभ्रिरे । धियाबुद्ध्या । कस्मैआजभ्रिरे इन्द्राय ॥ ६७ ॥ यमश्विना । यमिन्द्रमश्विनौ-

ती ॥ आशुक्रमासुराद्वसुंमघमिन्द्रायजभ्रिरे ॥ ६७ ॥ यमश्विना ॥

यमश्विनासरस्वतीहविषेन्द्रमवर्द्धयन् ॥ सबिभेदवलम्मघन्नमुचावा

सुरेसचा ॥ ६८ ॥ तमिन्द्रम् ॥ तमिन्द्रम्पशवःसचाश्विनोभासरं

सरस्वतीच हविषावर्द्धयन् । सविभेद । भिदिर्विदारणे विसरितवान् । वलम्मघम् । द्योतिर्वलः मघम्महनीयम् । नमुचौआसुरेसचा । सचासहशब्दवचनः तद्योगाच्चविभक्तिव्यत्ययः । नमुचिना असुरेणसह वलम्बिभेदेति ॥ ६८ ॥ तमिन्द्रम् । तमुक्तगुणमिन्द्रम् पशवः कर्माङ्गभूताः

याग अश्विनेति अनुवाक्या यमश्विनेति याज्या सारस्वतवपायागे यमश्विनेतिअनुवाक्या तमिन्द्रमिति याज्या ऐन्द्रवपायागे तमिन्द्रमिति अनुवाक्या अश्विनेति याज्येति सूत्रार्थः ।

गोमेधाज्ञाः सचासहभूताः। अश्विनौउभौ सरस्वतीचदधानाः धारयन्तः। अभ्यनूषत। नूषातेर्ष्वर्थः। अभिवर्धयन्ति। केन। हविषा। कस्मिन्। यज्ञे। इन्द्रियैर्वीर्यैः ॥ ६९ ॥

(१) यइन्द्रे तिस्रोनुष्टुभः पशुपुरोडाशानां याज्यानुवाक्या इन्द्रसवितृवरुणदेवताः सर्वाः येइन्द्रेइन्द्रियं

स्वती ॥ दधानाऽअभ्यनूषतहविषायज्ञऽइन्द्रियैः ॥६९॥ यऽइन्द्रे ॥ यऽइन्द्रेऽइन्द्रियन्दधुःसविताव्वरुणोभगः ॥ ससुत्रामाहविष्पतिर्यजमानायसश्चत ॥ ७० ॥ सविताव्वरुणः ॥ सविताव्वरुणोदधु

दधुः स्थापितवन्तः। सविताववरुणोभगः। भगशब्देनात्रेन्द्रोऽप्युच्यते। तेयजमानेपि वीर्यंदधन्तीति-वाक्यपरिपूर्तिः। सुत्रामा सुसुत्रामा इन्द्रः हविष्पतिः हविषः स्वामी। यजमानमितिविभक्ति-व्यत्ययः। सश्चत। सचतामिति पुरुषवचनव्यत्ययः। एवमेतेविषमामन्त्राल्लक्षणयाव्याख्येयाः ॥ ७० ॥



(१) का० य इन्द्र इति पुरोडाशानां पूर्वत् १९।६।१८। य इन्द्र इतितिसृस्त्रयाणां पशुपुरोडाशानां याज्यानुवाक्याः पूर्ववत् य इन्द्रे सविता इतीन्द्रस्यानुवाक्या याज्ये सविता वरुणः चत्रम् इति सावित्रस्य तेवरुणः चत्रम् य इन्द्रे इति वारुणस्येति सूत्रार्थः।

सविता वरुणः। द्वितीयोर्द्धर्चः प्रथमं व्याख्येयः। आदत्त जग्राह नमुचेः सकाशात् वसु धनं बलं चेन्द्रियं च। सुत्रामा इन्द्रः। तत् सवितृवरुणप्रभृतयः पशुपुरोडाशदेवताः दधत् दधातु यजमानाय दाशुषे हवींषि दत्तवते ॥ ७१ ॥ वरुणः क्षत्रम्। वरुणः सविता च सुत्रामा च दधाना इन्द्रे यजमाने वा यज्ञं सौत्रामणीम्।

द्यजमानाय दाशुषे ॥ आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ॥७१॥ वरुणः क्षत्रम् ॥ वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् ॥ सुत्रामा यशसा बलं दधाना यज्ञमाशत ॥ ७२ ॥ अश्विना गोभिरिन्द्रिय

आसत व्याप्तवन्तः। किं किं दधानाः। वरुणः क्षत्रमिन्द्रियं च। सविता भगेन धनेन सहितां श्रियम्। सुत्रामा यशसा बलम् ॥ ७२ (१) अश्विना गोभिः। तिस्रोऽनुष्टुभः। हविषां याज्यानुवाक्या अश्विसरस्वतीन्द्रदेवत्याः। अश्विनौ सरस्वती च गोभिः गोप्रभृतिभिः पशुभिः इन्द्रियम्। इन्द्रि-

(१) का० अश्विना गोभिरिति च हविषाम्। अश्विना गोभिरिति तिस्रो हविषां याज्यानुवाक्याः चात् पूर्ववत् अश्विना ता नासत्या इत्याश्विनप्रशुयागे पुरोऽनुवाक्या याज्या नासत्या ता भिषजा इति सारस्वते ता भिषजा अश्विना इत्यैन्द्रे सूत्रार्थः।

येणेतिविभक्तिव्यत्ययोवाक्यसम्बन्धात्। अश्वेभिः अश्ववद्भिर्गाभिः। वीर्यम्बलम् वीर्येणबलेन। हविषापुरोडाशेन। इन्द्रंयजमानञ्च अवर्द्धयन्॥७३॥ तानासत्या। तौनासत्यौनअसत्यौ-सत्यावेव। सुपेशसासुरूपौ। हरण्यवर्तनीहिरण्यदानोपलक्षितपन्थानौ। नरान्नगुणयुक्तौ। नराकारौवा। सरस्वतीचहविष्मतीहविषासंयुक्ता। एतेत्रयः पादाः परोक्षकृताः। चतुर्थ-

मश्श्वेभिर्व्वीर्य्यम्बलम्॥ हविषेन्द्रᳬ सरस्वतीयजमानमवर्द्धयन्॥७३॥ तानासत्त्या॥ सुपेशसाहिरण्यवर्त्तनीनरा॥ सरस्वतीहविष्मतीन्द्रकर्म्मसुनोवत॥ ७४॥ ताभिषजा॥ सुकर्म्मणासासुदुघासरस्व

स्तुपादः प्रत्यक्षकृतः अतोवाक्यभेदः। तौनासत्यावुक्तगुणौसरस्वतीचकर्मसुवर्त्तमान् नोस्मान्अव-तअत्रत्विति पुरुषव्यत्ययः। ततोद्वितीयंवाक्यम्। इन्द्रकर्मसुनोवत। हेइन्द्र त्वमपिकर्मसुवर्त-मानन्नः अस्मान् अवत। अवेतिवचनव्यत्ययः॥ ७४॥ तौभिषजौ। सुकर्मणाकल्याण-कर्माणौ। सासुदुघासुदोहना सरस्वतीच। सचद्दत्रहाशतक्रतुः वज्रकर्माइन्द्रायदधुः ददुः

इन्द्रियं वीर्यम् । ननु सहस्रशतक्रतुरिन्द्रायदधुरिन्द्रियमिति इन्द्र इन्द्रायददातीत्येतन्नोपपद्यते । कल्पान्तरीयइन्द्र एतत्कल्पप्रभवायददातीत्यदोषः । विभवो वा देवा अचिन्त्यशक्तयः । एकधा द्विधा बहुधा भवेयुः । एवमेवान्यत्रविरोधाः परिहर्तव्याः ॥ ७५ ॥ (१) ग्रहाणांयाज्यानुवाक्ये ।

ती ॥ सवृंतरहाशतक्रतुरिन्द्रायदधुरिन्द्रियम् ॥ ७५ ॥ युवꣳसुराम म् ॥ युवꣳसुराममश्विनानमुचावासुरेसचा ॥ विपिपानाऽसरस्व तीन्द्रङ्कर्म्मस्वावत ॥ ७६ ॥ पुत्रमिवपितरौ ॥ पुत्रमिवपितराव

युवंसुरामम् । पुत्रमित्रपितरौ । अनुष्टुप् त्रिष्टुभावश्विसरस्वतीन्द्रदेवत्ये । युवंयूयमितिविभक्तिव्यत्ययः । सरस्वतीहितीया । युवंयूयम् हे अश्विसरस्वत्यः । सुरामंसुरामयम् । नमुचौआसुरेवर्तमानम् सचासह विपिपानाः विविधंपिबन्तः कर्मसुवर्तमानाः इन्द्रम् अवतपालयत ॥ ७६ ॥

(१) का० ग्रहाणां युव ꣳसुरामम् पुत्रमिवेति १९ । ६ । १० । त्रयाणां पयोग्रहाणां सुराग्रहाणां च युवमिति पुरोऽनुवाक्या पुत्रमिवेति याज्येति सूत्रार्थः ।

पुत्रमिवपितरौ । व्याख्यातम् ॥७७॥ (१) पशुस्विष्टकृतौ । यस्मिन्नश्वासः । अहाव्यग्नेइति । जगतीत्रिष्टुभावाग्नेय्यौ । यस्मिन्नग्नौ अश्वासः ऋषभासः * उक्षणः वशः मेषाः अवसृष्टासः अवदायाव-

श्विनोभेन्द्रावथुःकाव्यैर्दंसनाभिः ॥ यत्सुरामंव्यपिबःशचीभिः सरस्वतीत्वामघवन्नभिष्णक् ॥७७॥ यस्मिन्नश्वासः ॥ यस्मिन्नश्वासऽऋषभासऽउक्षणोवशामेषाऽअवसृष्टासऽआहुताः ॥ कीलालपेसोमपृष्ठायवेधसेहृदामतिञ्जनयचारुमग्नये ॥७८॥ अ

दायचतुरात्तं निक्षिप्ताः । आदायादायाहुताः । तस्मा अग्नये । कीलालपे । कीलालमन्नरसंपिबतीतिकीलालपाः । सोमपृष्ठाय । सोमाहुतयो यस्यपृष्ठे हूयन्ते । वेधसेमेधाविने । हृदामतिञ्जनय ।

(१) का० पशुस्विष्टकृतो यस्मिन्नश्वासोऽहाव्यग्न इति । १९ । ६ । २१ । पशोः सम्बन्धिनि स्विष्टकृद्यागे यस्मिन्नश्वास इति पुरोनुवाक्या अहाव्यग्न इति याज्या द्वे अग्निदेवत्ये जगतीत्रिष्टुभौ ।

---

* वाषपूर्वस्यनिगमेऽउपधादीर्घाभावः ।

हृदयस्मातिपूर्वकस्तुनय । चारुम् अग्नये ।७८॥ अहाव्यग्ने । दस्रतेतव आस्येसुखे हे अग्ने अहाविहुत स्मयाहविः । कथमिव । स्रुचीवघृतम् । यथास्रुचिनित्यावस्थितंघृतम् । चम्वीवसोमः । चम्वा-मिव । यथाच अभिषवणचर्मणिनित्यावस्थितःसोमः । एवम् । तन्त्वांब्रवीमि । वाजसनिम् ।

हांव्यग्ग्ने ॥ हुविरास्येतेस्रुचीवघृतञ्चम्म्वीवसोमः ॥ व्वाजसनिर्ं

रयिमस्म्मेसुवीरम्प्रशुस्तन्धेहियुशसम्बृहन्तम् ॥ ७९ ॥ [ १३ ] शत

म् १२०० अश्श्विनातेजसा ॥ चक्षुःप्प्राणेनसरस्वतीव्वीर्य्यम् ॥ व्वा

वाजमन्नं सम्भवतेवाजसनिं रयधिनम् । अस्मेअस्मासु । सुवीरंशोभनवीरम् प्रशस्तंधेहिस्थापय । यशसञ्च । यशोवैसोमोराजा । बृहन्तंमहान्तम् ॥ ७९ ॥ शतम् १२० । (१) अश्विनातेजसा । एका-दर्शचंशस्त्रम् । आद्यानुष्टुप् अश्विसरस्वतीन्द्रदेवत्याच । द्वितीयाद्यास्त्रयस्त्यृचो । गायत्र्यश्वि-

(१) का० प्रतिगरिष्यतुरुपविष्टेऽध्वर्यो शोंऽसावेतराहूयाश्विना तेजसेतरनुवाकर्ठं० शर्ठं०सति । त्रयस्त्रिंशव शवसाग्रहसादना-नन्तरमध्वर्योः होतुः 'पुरस्तात् प्रतिगरार्थमुपवेशनमुक्तम् तदाह प्रतिगरिष्यताध्वर्यो पुर उपविष्टे सतरध्वर्यो शोसावो मितराहूयाश्विना तेजसा चक्षुरितिरकादशर्च मनुवाकं शस्त्रं शंसति प्रथमान्तेर ऋचौ त्रिः शंसनीये मध्यस्थानां त्रयाणां तृचानामादिष्वहावः कार्य्यं इति सूत्रार्थः ।

सरस्वतीन्द्रदेवत्यायथासंख्यम् अश्विनाअश्विनौ तेजसासह । चक्षु:प्राणेनप्राणेन सहवीर्यम् । सरस्वतीवाचासहबलेनचसह । एवमेतादेवता: प्रतिनियतचक्षुरादिद्वारेण इंद्रायदधु:ददु. इंद्रियम् ॥ ८० ॥ गोमदूषु । हेनासत्यौ गोमद्धनंसंगृह्य । उसुपादपूरणौ अश्ववच्चधनंसंगृह्य यातम् हेअश्विनौ वर्ति: वर्तिन्याप्रसिद्धेनमार्गेण । हेरुद्रा रुद्रौ शत्रूणांरोदयितारौ । नृपाय्यंप्रति सदेवानर: यस्मिन्य-

चेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥८०॥ गोमदूषुणासत्या ॥ * गोमदूषुणांसत्याश्ववांवद्यातमश्विना ॥ वर्तीरुद्रानृपाय्यम् ॥८१॥ नयत्परोनान्तरऽआदधर्षदृषण्वसू ॥ दु:शऽंसोमर्त्योरिपु: ॥८२॥

ज्ञेपिबन्ति सन्नृपाय्य: ॥ ८१ ॥ नयत्पर: । यमेनंनपर: अन्तरेणअसम्बद्ध: नचअन्तर: सम्बद्ध:आ-दधर्षत् आधृष्णुयात् अभिभूयगच्छीया [ । हेवृषण्वसू । वर्षणांवृष्टि वंसुधनं ययोस्तौयथोक्तौ । यद्वा वृष्टिद्वारेणावासयितारौ । दु:शंस: दुष्टमसद्वृत्तं शंसतिय:सतथोक्त: । मर्त्योमनुष्य: रिपु:शत्रु: ॥ ८२ ॥

* गोमदू षुणे तत्रनड सु नेतत्रवस्थायांअपृक्त:सौ ॥ १११ ॥ अपृक्तग्रहणे नेहउकारोगच्छति अपृक्तउकारो दीर्घमापद्यतेसुप्रत्यये प्रा० अ०३ । सू० १११ ।

तान: । यौयुवामुक्तगुणौतौ नःअस्माकम् आवोढम् आवहतम् हेअश्विनौ । रयिम्धनम् पिश-ङ्गसंदृशम् अनेकरूपसंदर्शनम् । हे धिष्ण्या धिष्ण्याग्निरूपौदातारौवा वरिवोविदम् । धनं-विन्दतिवरिवोविदः वरिवोधननाम । यन्नक्ष्वेस दन्यस्यधनलाभस्य हेतुभूतंभवति ॥ ८३ ॥ पावकान: । पावयित्रीसरस्वती वाजेभिःअन्नैः वाजिनीवतीअन्नवती । सा नःअस्माकम् यज्ञं-

तानः॥ तानुऽआवौंढमश्विनारयिम्पिशङ्गंसन्दृशम् ॥ धिष्ण्याव्व रिवोव्विदम्॥ ८३ ॥ पावकानः ॥ पावकानःसरस्वतीव्वाजेभिर्व्वाजि नीवति ॥ यज्ञंव्वष्टुधियावसुः ॥८४॥ चोदयित्रीसूनृतानाम् ॥ चो दयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम् ॥ यज्ञन्दधेसरस्वती ॥ ८५ ॥

वष्टुकामयताम् योहि यदिच्छति सतदागच्छतिधियावसुः धियावसुधनंयस्याःसाधियावसुः ॥ ८४ ॥ चोदयित्रीसूनृतानाम् । चोदयित्रीप्रेरयित्री । सूनृतानाम्शोभनानामृतांवचसाम् त्रयीलक्षण-स्यवाग्विभवस्यचोदयित्रीत्यर्थः । चेतन्तीचेतयमाना सुमतीनाम् शोभनमतीनाम् । यज्ञंदधेधा-रयतिसरस्वती ॥ ८५ ॥ महोअर्णः । यामहत्अर्णः महान्तमुदकमित्यर्थः । सरस्वतीप्रचेतयति

प्रज्ञापयति । केनहेतुना । केतुनाकर्मणा प्रज्ञयावा । मध्यस्थानानदीवा । धियोबुद्धीः विश्वाः-सर्वाः सर्वप्राणिष्ववस्थिताः । विराजति राजतिर्दीप्त्यर्थः । अन्तर्भावितण्यर्थश्चद्रष्टव्यः । विविधन्दीपयतिप्रकाशयति । तांवयंस्तुम इतिशेषः ॥ ८६ ॥ इन्द्रायाहि । हेइन्द्र आयाहिआगच्छ । हेचित्रभानोचित्रदीप्ते । किंकारणम् सुताअभिषुताः इमेसोमाः त्वायवः त्वांकायमानाः सुप-

**मुहोऽअर्णः ॥ मुहोऽअर्णःसरस्वतीप्रचेतयतिकेतुना ॥ धियोविश्वाविराजति ॥ ८६ ॥ इन्द्रायाहि ॥ चित्रभानोसुताऽइमेत्वायवः ॥ अण्वीभिस्तनापूतासः ॥ ८७ ॥ इन्द्रायाहि ॥ धियेषितोविप्रजूतः सुतावतः ॥ उपब्रह्माणिवाघतः ॥ ८८ ॥ इन्द्राया**

आत्नःक्यच् क्याच्छन्दसीतिदीर्घः त्वायवतिसिद्धम् । नचाभिषुताएवकेवलम् । किंतर्हि । अण्वीभिःस्तनापूतासः । अण्व्यइत्यङ्गुलिनाम । अङ्गुलीभिः तनाच धनदानेनचपूताःपवित्रीकृताः । यद्वा तनाशब्देन दशापवित्रमभिधायअङ्गुलीभि र्दशापवित्रेणचपूताइत्यर्थः ॥ ८७ ॥ इन्द्रायाहि । हेइन्द्र आगच्छ धियास्वकीयया वुद्ध्या ईषितःप्रेषितः अनन्यप्रेषित इत्यभिप्रायः । विप्रजूतः जूतिर्ग्रन्थिःप्रीतिर्वा । मेधाव्यनुगतः सुतावतः अभिषुतवतो यजमानस्ययज्ञम् किमित्यागन्तव्यमिति-

चेत् । उपसमीपे ब्रह्माणिहवींषिवर्तन्ते । उपपुरोडाशान्त्विजोवर्तन्तइत्यर्थः । वाघतइति ऋत्वि-
ङ्नामसुपठितम् ॥ ८८ ॥ इन्द्रायाहि । हेइन्द्र आगच्छतूतुजान तूतुजानइतिक्षिप्रनाम क्षिप्रं-
त्वरमाणः । कुत्रागच्छइति । उपब्रह्माणिहवींषि हेहरिवः । हरीअश्वौतद्वत् इन्द्र । मतुवसोरुः
संबुद्धाविविरुत्त्वम् । एत्यच सुतेअभिषुते सोमेदधिष्व उदारेणधारयस्व । नः अस्माकं स्वभू-

हि ॥ इन्द्रायाहितूतुंजानऽउपब्रह्माणिहरिवः ॥ सतेदधिष्वनुश्चन्न
नः ॥८९॥ अश्विनापिबताम् ॥ अश्विनापिबतांमधुसरस्वत्यास
जोषसा ॥ इन्द्रःसुत्रामावृत्रहाजुषन्तांसोम्यम्मधु ॥ ९० ॥ [१]

## इतिवाजसनेयसंहितापाठेविंशोऽध्यायः २०

तम्च नः अन्नलक्षणम् ॥ ८९ ॥ अश्विनापिबताम् । अश्विनौ पिवेताम् मधु मधुरस्वोदोप-
लक्षितं । सोमम्पिबती । सरस्वत्यत्याचसजोषसा समानसोमपानौ । इन्द्रश्वसुत्रामा वृत्रहापि-
बतुमधु । ततोभूयोभूयोश्विसरस्वतीन्द्राः जुषन्तांपिवन्ताम सोम्यम्मधुसोममयम्मधु ॥ २० ॥
इतिउव्वटकृतौ मन्त्रभाष्येविंशतेतमोध्य ॥ २० ॥
आनन्दपुरवास्तव्य जैय्यटाख्यस्यसूनुना उव्वटेनकृतम्भाष्यं पदवाक्यैः सुनिश्चितैः ॥ १ ॥

शिरसा खेडि वास्तव्य प्रभुदत्तेन धीमता
श्रीघनश्याम पुत्रेण कृत शोधन टिप्पणे ॥१॥
चिडीग्राम निवासेन काशीनाथेन मुद्रिते
ग्रन्थेऽस्मिन्संहिताभाष्येपूर्व्वार्द्धमगमच्छुभम् ॥ २ ॥

(१) इमम्मे। इमम्मेनानुवाकेनैष्टिकंहौत्रम्। प्रथमेवारुण्यौ गायत्रीत्रिष्टुभौ वारुणस्यहविषो याज्यानुवाक्ये। हेवरुण त्वंमेमम इमंहवमाह्वानं श्रुधिशृणुच अपरम् अद्यमृडयसुखय

॥ श्रीगणेशायनमः ॥ ॐ भूर्भुवस्स्वः तत्सवितुर्वरेण्यम्भर्गोदेवस्य धीमहि धियोयोनः प्रचोदयात् ॥ * इमम्मेवरुणश्रुधीहवमद्याच मृडय ॥ त्वामवस्युराचके ॥ १ ॥ तत्त्वा ॥ यामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳस

कालविलम्बनंमाकृथाः यतः अहम् अवस्युः आत्मनोवनंपालनमिच्छन् त्वाम् आचके। आचक-इतिकान्तिकर्मा। कामये ॥ १ ॥ तत्त्वायामि ॥ २ ॥ त्वन्नः। अग्निवारुण्यौत्रिष्टुभौ अग्नि-

(१) का० इमंमे तत्त्वेत्येककपालस्य। अवभृथेष्टौ वारुणस्यैककपाल पुरोडाशस्य द्वे पुरोऽनुवाक्यायाज्ये इत्यर्थः।

---

* इमम्मेसमिद्धो अग्निरेकादशकौढो वसंतेन ऋतुनाषड् तायत्रत्समिधाग्निं द्वादशाश्विनो छागस्यसप्तदेवंव हिंस्वतुद्दशषडे-कषष्टिः।

वरुणयोः स्विष्टकृतोर्याज्यानुवाक्ये। (१) हेअग्ने त्वंनोऽस्मान्प्रतिवरुणस्य देवस्यहेडःक्रोधम् अवया-
सिसीष्ठाः यमुउपचयये। अस्यावपूर्वस्यण्यन्तस्य लिङ्रूपम् अवगमय। यजिष्ठः यष्टृतमः।
वन्हितमः वोढृतमोहविषाम्। शोशुचानः देदीप्यमानः। किञ्च अस्मत् अस्मत्तः विश्वावि-

माऽनुऽआयुःऽप्रमोषीः ॥ २॥ त्वन्नः ॥ त्वन्नोऽअग्नेव्वरुणस्यव्विद्वान्देव
स्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्निन्तमःशोशुचानोव्विश्वा
द्वेषांऽसिप्रमुमुग्ध्यस्मत् ॥ ३ ॥ सत्वम् ॥ सत्वन्नोऽअग्नेवमोभ
वोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनोव्वरुणः ररांणो

श्वानिसर्वाणिद्वेषांसिदौर्भाग्यानिप्रमुमुग्धिमुञ्च ॥ ३ ॥ सत्वन्नः। हेअग्ने सत्वम् ऊतीऊत्या
अवनेन नः अस्माकम् अवमः अवितृतमःपालयितृतमः भव। अस्याउषसः व्युष्टौ व्युष्टिका-
लेअस्मिन्नेवाहनीतिभावः। नेदिष्ठः अन्तिकतमस्सभव। रराणः रममाणः रादाने। हविर्ददद्वा।

(१) का० अग्नोवरुणयोस्त्वं नः स त्वं न इति। अवभृथेष्टावेवाग्निवरुणयागे पुरोऽनुवाक्यायाज्ये।

नोऽस्माकं वरुणम् अवयक्ष्व अवगत्य यज । अवपूर्वो यजतिर्नाशनार्थः दूरतु धात्वन्तरयोगात्स्वार्थमेव वक्ति । ततः सुमृडीकं सुखकरं हविः वीहि भक्षय । नः अस्माकं सुहवः स्वाह्वानः एधि ॥ ४ ॥

(१) महीमूषु । आदित्यचरोर्याज्यानुवाक्ये त्रिष्टुभौ महीमहतीम् । उसू निपातोपसर्गौ छन्दः परिपूर्तिफलौ । मातरं निर्मात्रीं साधुव्रतानाम् । ऋतस्य यज्ञस्य पत्नीं जायां पालयित्रीं वा । अवसे-

वीहि मृडीकꣳ सुहवो नऽएधि ॥ ४ ॥ महीमूषु ॥ मातरꣳ सुव्रतानाम् तस्य पत्नीमवसे हुवेम ॥ तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्म्माणम दितिꣳ सुप्रणीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीम् ॥ सुत्रामाणम्पृथिवी

अवनाय तर्पणाय वा हुवेम आह्वयाम । तुविक्षत्राम् । बहुक्षत्रां वा बहुक्षतत्राणां वा । अजरन्तीं जरारहिताम् उरूचीं बहुव्यञ्चनां सुशर्माणं कल्याणाश्रयां साधुसखाम् अदितिमदीनाम् । सुप्रणीतिं सुप्रणेत्रीम् ॥ ५ ॥ सुत्रामाणम् । साधुपालयित्रीम् पृथिवीम् पृथिवीमिव लुप्तोपमान-

(१) का० आदित्यस्य सुत्रामाणम् महीमूषु मातरमिति । आदित्यं चरुं यक्ष्यमाणो निर्वपत्यादित्यमीजान इत्यादावन्ते चादितरस्यचरुरन्त्यस्तसुत्रामाणमिति पुरोऽनुवाक्या महीमू ष्विति याज्या ।

मेतत्। द्यामनेहसम् द्यामिववाहयित्रीं जीवनहेतुभूताम् सुशर्माणंसाधुशरणां शोभनाश्रयांवा। अदितिमदीनाम्। सुप्रणीतिंसुप्रणेत्रीम्। दैवींयज्ञमयांनावं। स्वरित्रांसाधुकेन्दुवालाम् अरित्रशब्दः केन्दुवालवचनः। अनागसमनपराधाम् अस्रवन्तीम्अपूर्यमाणामुदकेन। अनवच्छिन्नसा-

न्द्यामंनेहसंꣳसुशर्म्माणमदितिꣳसुप्रणीतिम्॥ दैवीन्नावꣳ स्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये॥६॥ सुनावमारुहेयम्॥ सुनावमारुहेयमस्रवन्तीमनागसम्॥ शतारित्राꣳस्वस्तये॥७॥ आनः॥ आनोमित्रावरुणाघृतैर्ग्गव्यूतिमुक्षतम्॥ मद्ध्वारजाꣳ

धुकर्मदायिनीमित्यर्थः। आरुहेम। स्वस्तयेअविनाशाय॥६॥ सुनावम्। गायत्री। तद्वै सर्वएवयज्ञोनौः स्वर्ग्येतिश्रुतेरूपकल्पना। कल्याणींनावम् आरुहेयम् अस्रवन्तीम् अच्छिद्राम् निर्दोषामित्यर्थः अनागसमपापाम् अभीष्टितार्थसाधनतत्परामित्यर्थः। शतारित्रांबहुकेन्दुवालाम् ऋग्यजुःसामाभिप्रायम् स्वस्तयेअविनाशाय। संसारसागरोत्तरणायवा॥७॥ (१) आनः। मैत्रावरुण्याः

(१) का० आ नः प्र बाहवेति परस्यायाः। १८।७।१६ अवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतीति या पयस्या तस्या आ नो मित्रावरुणेति पुरोऽनुवाक्या प्र बाहवेति याज्या। मित्रावरुणदेवतया गायत्री विश्वामित्रदृष्टा।

पयस्यायाज्यानुवाक्ये गायत्रीत्रिष्टुभौ। आउक्षतम् आसिञ्चतम् नः अस्माकम् हेमित्रावरुणौ।
घृतैः क्षारोदकैः गव्यूतिम् गविपृथिव्यामवनहेतुभूतंचेत्रंगोप्रचारंवा। किञ्च मध्वारजांसि।
मधुस्वादोदकेनरजांसि। लोकारजांस्युच्यन्ते। तान्आउक्षतम्। हेसुक्रतू। सुकर्माणौ॥८॥
प्रवाहवा। प्रसिसृतम् अन्तर्भावितण्यर्थः। प्रसारयतम्। वाहवा बाहू। किमर्थमितिचेत्।

सिसुक्रतू॥८॥ प्रबाहवा॥ सिसृतञ्जीवसेनऽआनोगव्यूतिमुक्षत
घृतेनं॥ आमाजनेश्रवयतंयुवानाश्रुतम्मेमित्रावरुणाहवेमा॥९॥
शन्नः॥ शन्नोभवन्तुवाजिनोहवेषुदेवतातामितद्रवः स्वर्काः॥ जम्भ

जीवसेनः। जीवनायास्माकम। वाहुप्रसारणंजीवनहेतुप्रतिपक्षनिराकरणायेत्यर्थः। ततआउक्ष-
तम् आभिमुख्येनसिञ्चतम् नः अस्माकम् गव्यूतिम्। गविपृथिव्यासूतिमवनम् जीवनहेतुभूतानि-
क्षेत्राण्यत्राभिप्रेतानि। तदर्थंहि वृष्टिः प्रार्थ्यमाना इष्टार्थाभवति। गोजातिविषयभूतांवा ऊतिम्
अवनमार्गम् भक्षणमार्गां भिप्रायतो गोप्रवाटमितियावत्। घृतेनाक्षारोदकेन। आमाजने-

श्रवयतं युवाना। एवमच्चारोदकेन सिक्तधान्यनिष्पत्तिहेतुना यच्चंकुर्वाणम् मामाम् जनेजन-
पदे आश्रवयतं प्रकथयतम् इत्थमदादित्थमदाचीदिति। हेयुवानौवच्छिन्नजरसौ। श्रुतमश्रा-
शृणुतं मम हेमित्रावरुणौ। हवेमा हवान्श्राह्वानानिइमानि। श्रुत्वाचातिष्ठतमित्यभि-

यन्तोहिँ॒वृकु॑र्च्चाँ॒ऽसि॒सनें॒म्यस्म॒ह्युंयव॒न्नमीँवाः॥१०॥ वाजें॑वाजे

वत॥ वाजिनोनोधनें॑षुविप्राऽअमृताऽऋतज्ञाः॥ अस्यम॒द्ध्वं॑ःपि

बतमादयं॑द्ध्वन्तृ॒प्ताया॑तप॒थिभिर्दे॑व॒यानैः॥११॥ समिं॑द्धोऽअ॒ग्निः॥

स॒मिधा॒सुसंमि॑द्धो॒व्वरेँण्यः॥ गा॒य॒त्रीच्छन्दंऽइ॒न्द्रियन्त्र्यविर्गौर्व्वयोंद

प्रायः॥ ९॥ शन्नः॥ १०॥ वाजेवाजेवत॥ ११॥ वाजिनस्ययाज्यानुवाक्येव्याख्याते॥१०॥ ११॥
समिद्धोअग्निः। एकादशआप्रियः। अनराशंसा ऐन्द्रायावयोधसेनुष्टुभः। समिद्धः सन्दीप्तः

(१) का॰ वायोधस आप्रियः समिद्धो अग्निः समिधेति। १९। ७। १९ वायोधसे पशौ समिद्धो अग्निरित्याद्या एकादश
ऋच आप्रियः प्रयाजानां याज्या इति सूत्रार्थः।

अग्निः समिधाप्रयाजदेवतया। सुसमिद्धः प्रयाजघृतेन। वरेण्यः वरणीयः संभजनीयः। गायत्रीछन्दः त्र्यविश्चगौः वयः अवयः अनुचरत्वेनयस्य सतथोक्तः। इन्द्रियंवीर्यंच। वयः सत्त्वमन्नंवा आयुर्वाइन्द्रेदधुः निदध्युः ॥ १२ ॥ तनूनपात्। तनूनामपान्नपान्नप्ताअग्निः। गौर्वातनूः तस्या-नप्ताघृतम्। शुचिव्रतः उज्वलकर्मा। तनूपाः सरस्वतीच। उष्णिहाविभक्तिव्यत्ययः उष्णिक्-

धुः ॥ १२ ॥ तनूनपाच्छुचिंव्व्रतः ॥ तनूनपाच्छुचिंव्व्रतस्तनूपाश्च सरस्वती ॥ उष्णिहाच्छन्दऽइन्द्रियन्दित्त्यवाड्गौर्व्वयोदधुः ॥ १३ ॥ इडाभिरग्ग्निः ॥ इडाभिरग्ग्निरीड्यःसोमोदेवोऽअमर्त्त्यः ॥ अनुष्टुप्छन्दऽइन्द्रियम्पञ्चाविर्ग्गौर्व्वयोदधुः ॥ १४ ॥ सुबर्हिरग्ग्निः ॥

छन्दः दित्यवाट् गौःएतेचत्वारः इन्द्रियंवयश्च इन्द्रेदधुः ॥ १३ ॥ इडाभिरग्निः। इडाभिः प्रयाजदेवतया सहअग्निः ईड्यःस्तोतव्यः। सोमश्चदेवः अमर्त्यः अमरणधर्मा अनुष्टुप्छन्दः पञ्चाविश्च गौःइन्द्रियं वयश्चइन्द्रेदधुः ॥ १४ ॥ सुवर्हिरग्निः। शोभनवर्हिः प्रयाजदेवतयाग्निः।

पूषण्वान्पूषासंयुक्तः । स्तीर्णंबर्हिस्तीर्णंबर्हिर्यस्यासतथोक्तः । अमर्त्यः अमरणधर्मा । बृहती-च्छन्द स्त्रिवत्सश्च गौःएतेइन्द्रियंवयश्चइन्द्रे दधुः ॥ १५ ॥ दुरोदेवीः । दुरः द्वारः प्रयाजदेवताः छान्दसंसंप्रसारणम् । देवीः देव्यः दिशश्च । मही: महत्यः । ब्रह्माचदेवः बृहस्पतिश्च । पंक्ति-श्छन्दः । इहेत्यभिनयनिर्देशः । इहयज्ञावयवे इहइन्द्रशरीरावयवे । तुर्यवाट्गौश्चइन्द्रियंवय-

पूषण्वान्त्स्तीर्णबर्हिरमर्त्त्यः॥बृहतीच्छन्दऽइन्द्रियन्त्रिवत्सोगौर्वयो दधुः ॥१५॥ दुरोदेवीर्दिशोमहीर्ब्रह्मादेवोबृहस्पतिः॥ पङ्क्तिश्छन्दऽइहेन्द्रियन्तुर्य्यवाड्गौर्वयोदधुः ॥ १६ ॥ उषेयह्वीसुपेशसाविश्वेदेवाऽअमर्त्याः ॥ त्रिष्टुप्छन्दऽइहेन्द्रियम्पष्ठवाड्गौर्वयो

चदधुः ॥ १६ ॥ उषेयह्वी । उषेइति द्विवचनसामर्थ्यात्सह चरितत्वाच्च द्वितीयारात्रिर्गृह्यते । उषाश्चरात्रिश्च । किंभूते यह्वीमहत्यौ । सुपेशसासाधुरूपे । विश्वचदेवाः अमर्त्याः अमरण-धर्माणः । त्रिष्टुप्छन्दः । इहइन्द्रियज्ञयोः । पष्ठवाट्च गौःपष्ठंभारंवहतीतिपष्ठवाट् । इन्द्रि-

यंवयस्वदधुः ॥ १७ ॥ दैव्याहोतारा अयंचाग्निः असौचमध्यमः। भिषजौ इन्द्रेणसयुजौसंयुक्तौ समानकार्यौं। युजापरस्परेणयुक्तौ। जगतीच्छन्दः अनड्वाश्वगौःएते इंद्रेइंद्रियंवयस्वदधुः ॥ १८ ॥ तिस्रइडा। तिस्रोदेव्यः इडासरस्वती। भारती। मरुतश्वविशः इंद्रस्यप्रजाः। विराट्छन्दः

दधुः ॥ १७ ॥ दैव्याहोतारा ॥ भिषजेन्द्रेणसयुजायुजा ॥ जगती च्छन्दऽइन्द्रियमनड्वान्गौर्व्वयोदधुः ॥ १८ ॥ तिस्रऽइडा ॥ तिस्रऽइडासरस्वतीभारतीमरुतोव्विशः ॥ व्विराट्च्छन्दऽइहेन्द्रियन्धेनुर्गौर्न्नव्वयोदधुः ॥ १९ ॥ त्वष्टातुरीपः ॥ त्वष्टातुरीपोऽअद्भुतऽइन्द्राग्नीपुष्टिवर्द्धना ॥ द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नव्वयोदधुः॥२०॥

धेनुर्दोग्ध्रीगौश्च। नकारश्चार्थे। एतेइंद्रियंवयश्चइंद्रे दधुः ॥ १९ ॥ त्वष्टातुरीपः तूर्णमापन्नः अद्भुतः अद्भुतइव महानित्यर्थः। इंद्राग्नीचपुष्टिवर्द्धनौ। द्विपदाचछन्दः। उक्षागौर्न्न। नकारश्चार्थे। उक्षासिक्ताचगौः। एतेइंद्रे इंद्रियंवयश्चदधुः ॥ २० ॥ शमितानः शमयिताइतिप्राप्ते

शमितामन्त्वइतिच्छान्दसः प्रयोगः शमितानःअस्माकंवनस्पतिः सविताचप्रसुवन् भगंधनम् ।
ककुप्चच्छन्दः इहेत्यभिनयः इहइन्द्रे वशावन्ध्यागौः वेहत्त्वविहंतिस्यजतिगर्भंयागौः सातयोक्ता ।
इन्द्रियंवयश्चदधुः ॥ २१ ॥ स्वाहायज्ञम् । स्वाहाकृतिभिः यज्ञंभेषजंकरत्करोतु । कःकरोतु ।

शमितानः॑ ॥ शमितानोव्वनस्पतिः॑सवितापप्रसुवन्भगम् ॥ ककु
प्पच्छन्दऽइहेन्द्रियंव्वशाव्वेहद्वयोदधुः ॥२१॥ स्वाहायज्ञम् ॥ व्वरुणः
सुक्षत्रोभेषजङ्करत् ॥ अतिच्छन्दाऽइन्द्रियम्बृहदृषभोगौर्व्वयोद
धुः ॥ २२ ॥ [११] व्वसन्तेनऽऋतुना ॥ देवाव्वसवस्त्रिवृतास्तुताः ॥
रथन्तरेणतेजसाहविरिन्द्रेव्वयोदधुः ॥ २३ ॥ ग्रीष्मेणऽऋतुना ॥

वरुणः सुक्षत्रः । अतिच्छन्दाश्चच्छन्दः बृहदृषभश्चगौः इन्द्रेइन्द्रियंवयश्चदधुः ॥ २२ ।
वसन्तेनऋतुना । वपापुरोडाशपशूनां याज्यानुवाक्याअनुष्टुभः । वयोधससप्तपशोः । इन्द्रश्च-
वयोधादेवता । वसन्तेनऋतुना सहायेनदेवाः वसवः त्रिवृतास्तोमेनस्तुताः सन्तः रथन्तरेणच

पृष्ठेनच सहायेनइन्द्रेतेजसासह हविर्वपाखंत्र वयश्चदधुः। यद्वावसन्तेनऋतुनास्तुताः त्रिवृतास्तो-
मेनच स्तुताः रथन्तरेणच पृष्ठेनस्तुताः सन्तोवसवोदेवाः स्वकीयेन तेजसाइन्द्रे हविर्वयश्च-
दधुः। एवमुत्तरेष्वपियोज्यम् ॥ २३ ॥ ग्रीष्मेणऋतुना। सहदेवाः रुद्राः पञ्चदशे पञ्चदशेनेति-
विभक्तिव्यत्ययः पञ्चदशेनस्तोमेनस्तुताः सन्तः बृहतापृष्ठेनचसह। यशसासहवलं हविः इन्द्रेव-

देवारुद्राःपंञ्चदशेस्तुताः॥ बृहतायशंसाबलंᳬहविरिन्द्रेव्वयोंदधुः॥
२४॥ व्वर्षाभिर्ऋतुनांदित्यास्तोमेंसप्तदशेस्तुताः॥ व्वैरूपेणंव्विशौ
जंसाहविरिन्द्रेव्वयोंदधुः॥२५॥ शारदेनंऽऋतुनां॥ देवाऽएंकविᳬ
शऽऋभवंस्तुताः॥ व्वैराजेनंश्रियाश्रियंᳬहविरिन्द्रेव्वयोंदधुः॥२६॥

यश्चदधुः ॥ २४ ॥ वर्षाभिर्ऋतुना। सहआदित्याः। स्तोमेसप्तदशेस्तोमेनसप्तदशेनेतिविभक्ति-
व्यत्ययो। स्तुताः सन्तः वैरूपेणपृष्ठेनसह विशाच। ओजसाच हविरिन्द्रेवयश्चदधुः ॥ २५ ॥
शारदेनऋतुना। सहऋभवोदेवाः एकविᳬशे। एकविंशेनेति विभक्तिव्यत्ययः। एकविंशेन-

स्तोमेनस्तुताः सन्तः विराजेनच पृष्ठेनसह श्रियाचश्रियंच हविरिन्द्रेवयस्वदधुः ॥ २६ ॥ हेमन्तेनऋतुना। सहदेवाः मरुतः त्रिणवे। त्रिणवेनेतिविभक्तिव्यत्ययः। त्रिणवेनस्तोमेन-स्तुताः सन्तः। बलेनशक्करीः सह। शक्करीरितियोनिनिर्देशः शाक्करस्य। शाक्करेणेतिवि-भक्तिव्यत्ययः। शाक्करेणच पृष्ठेनसह। बलेनचसह। सहः हविः इन्द्रे वयस्वदधुः ॥ २७ ॥

हेमन्तेनंऽऋतुनां ॥ देवास्त्रिणवेमरुतंस्तुताः ॥ बलेनशक्करीःसहो हविरिन्द्रेवयोंदधुः ॥२७॥ शैशिरेणंऽऋतुनां ॥ देवास्त्रयस्त्रिꣳशेमृ-तास्तुताः ॥ सत्येनंरेवतींःक्षुत्रꣳहविरिन्द्रेवयोंदधुः ॥ २८ ॥ [६] होतांयक्षत् ॥ होतांयक्षत्समिधाग्निमिडस्पदेऽश्विनेन्द्रꣳसरस्व

शैशिरेणऋतुना। सहदेवाः अमृताः। त्रयस्त्रिꣳशे। त्रयस्त्रिंशेनेतिविभक्तिव्यत्ययः। त्रयस्त्रिं-शेनस्तोमेनस्तुताः सन्तः। सत्येनरेवतीः रेवतीरितिरैवतस्ययोनिनिर्देशः। रैवतेनच पृष्ठेनसह सत्येनच। क्षत्रंहविश्च इन्द्रे वयस्वदधुः ॥ २८ ॥ (१) होतायक्षत्। द्वादशाप्रियस्तनूनपान्नराशंस-

(१) का० होता यक्षत्समिधाग्निर्मिति प्रयाजप्रैषास्त्रिपशोः होता यक्षत्समिधाग्निमिडस्पद इत्याद्यो द्वादश कण्डिकास्त्रि-पशोः प्रयाजप्रैषाः स्युः।

युक्ताः। प्रैषिकमश्विसरस्वतीन्द्रदेवत्यम्। दैव्योहोतायक्षत्यजतु। समिधाप्रयाज देवतयाग्निमवस्थितम्। इडस्पदे। इडागौरुच्यते तस्याः पदआहवनीयस्थाप्यते तदभिप्रायमेतत्। गोःपदे। अवस्थितमाहवनीयमग्निम्। एतान्देवताविशेषाः यजतु। अश्विनौइन्द्रं सरस्वतीम्। अजोधूम्रोन नकारः समुच्चयार्थाः प्रायः। अजोधूम्रोमेषश्च। गोधूमैः कुवलैश्च सहितः-

तोमजोधूम्म्रोनगोधूमैःकुवलैर्भेषजम्मधुशष्पैर्न्नतेजऽइन्द्रियम्पयः सोमंःपरिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥२६॥ होतायक्षत्तनूनपात्सरस्वतीम्॥ होतायक्षत्तनूनपात्सरस्वतीमविर्म्मेषोनभेष

भेषजमन्नसंपद्यते। मधुशष्पैःन। मधुचसंपद्यतेसशष्पैरंकुरित व्रीहिभिः सहितः। तेजः इन्द्रियञ्चइन्द्रस्य यजमानस्यवासंपद्यते। अश्विसरस्वतीन्द्राश्चदैव्येनहोत्रा इज्यमानाः सन्तः पयः सोमश्च सोममितिविभक्तिव्यत्ययः। परिस्रुतासहघृतंमधुच। व्यन्तुपिबन्तु। त्वमपिहेमनुष्यहोतः आजस्य यजआजंदेहि॥ २६॥ होतायक्षत्तनूनपात्सरस्वतीम्। तनूनपातमितिविभ-

त्तिव्यत्ययः। सरस्वतींच। अश्विनेन्द्रायेत्युपरिष्टा द्व्यवहितंयत्पठ्यते तदिहकृतविभक्तिव्यत्ययं-
योज्यतेर्थसंबन्धात्। अश्विनौ इन्द्रश्च। अविर्मेषोनभेषजम्। नकारः समुच्चयार्थीयोभिन्नक्रमः
अविश्चमेषश्चभेषजम् इन्द्राययजमानायवाकरोति। पथामधुमताभरन्। पथायज्ञमार्गेण मधु-
मतारसवता आत्मानम्भरन् हरन् हवींषिचदेवान्प्रति हग्रहोर्भश्छन्दसिहसौति हकारस्यभकारः।

जम्पुथामधुंमताभरंन्नुश्विनेन्द्रायव्वीर्य्यं म्बदंरैरुपवाकांभिर्ब्भेषजन्तो
क्कमंभिःपयःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्ज्यंस्य होतर्य्यंज ॥३०॥
होतायक्षन्नराशंसन्न॥ नग्नहुम्पतिं सुरयाभेषजम्मेषःसरस्वती

वीर्यंवदरैरुपवाकाभि र्भेषजन्तोक्मभिः। उपवाकाभिः इन्द्रयवैः तोक्मभिरंकुरितयवैः। वीर्यम्भेष-
जंकरोतिमेषएव। इन्द्राययजमानायवा। अश्विसरस्वतीन्द्राश्च दैव्येनहोत्रा इज्यमानाः पयः
प्रभृतीनिपिबन्तु। त्वमपिहेमनुष्यहोतः आज्यस्ययज ॥ ३० ॥ होतायक्षन्नराशंसंसन्न। दैव्योहो-
तायजतु। नराशंसंननग्नहुम्पतिम्। व्यवहितपदकल्पना। नराशंसञ्च। पतिमधिपतिंजगतः।

यज्ञोहि नराशंसः सन्नाहुतिपरिणामद्वारेण जगद्विभर्त्ति । नग्नहुम् सुरयासहितंनग्नहुं किण्वं च होतायजत्त्वित्यनुवर्तते । भेषजंमेषः । वपाइन्द्रस्येत्युपरिष्टा त्प्रैषस्यश्रूयते । सद्गृहानुषज्यते । भेषजस्मेषः इन्द्रस्यकरोत्वितिवाक्यशेषः । सरस्वतीभिषक् इन्द्रस्यभवतु । रथोनचन्द्र्य-श्विनोः । रथश्चभिषगिन्द्रस्यभवतु । कथं भूतोरथः । चन्द्री । चन्द्रमितिहिरण्यनाम । तद-

भिषग्रथोनचन्द्र्यश्विनोर्वपा ऽ इन्द्रस्यवीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तोक्मभिः पयः सोमः परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्यजं ॥ ३१ ॥ होतायक्षदिडेडितः ॥ होतायक्षदिडेडितऽआजुहानः

सयास्तीतिचन्द्री । सुवर्णखचितः । अश्विनोः सम्बन्धी । नन्वश्विनोः संबन्धिनोरथस्य कथम्भि-षित्त्वम् शृणु । आयुधम्वाहनम्वापि स्तुतौयस्येहदृश्यते । तमेवतुस्तुतंविन्द्यात्तस्यात्मावहुधाहिसः । वपाइन्द्रस्य वीर्यंकुर्वन्त्वितिशेषः । वपाइतिवहुवचनोपदेशः । त्रिपशुविषयः । वदरैः उप-वाकाभिः तोक्मभिः भेषजमिन्द्रस्यभवत्वितिशेषः । अश्विसरस्वतीन्द्राश्च दैव्येनहोत्रेजयमानाः

पयः प्रभृतीनिपिवतु त्वमपि हेमनुष्य होतराजस्ययज ॥ ३१ ॥ होतायक्षदिडेडितः । होता-
यजतु । इडाप्रयाजदेवतया ईडितः स्तुतः सन् । किंकुर्वन् । आजुह्वानः सरस्वतीम् ।
सरस्वतीमाह्वयन् । अश्विनेन्द्रायेत्युपरिष्टा त्प्रैषस्यपठेयते तदेतत्पदद्वयमिहव्यत्र विभक्तिव्य-
त्ययं संवध्यते । उक्तञ्च । यस्ययेनार्थसंबन्धो दूरस्थस्यापितस्यत । अर्थतोह्यसमानाना मानन्त-

नु॑ सर॑स्वतीमिन्द्र॑म्बले॑नव॒र्द्ध॒यं॑न्नृष॒भेण॒गवे॑न्द्रि॒यम॒श्विनेन्द्रा॑यभेष
जं॑यवै॑ ÷ कर्क॑न्धुभि॒र्म्म॑धु॑ला॒जैर्न्न॑मा॒सर॑म्मयु॒ꣳ सोम॑ ÷ परि॒स्त्रु॑ताघृ॒तम्म॑धु
व्यन्त्वाज्ज्य॑स्य॒होत॒र्य्य॑ज ॥३२॥ होता॑यक्ष॒द्ब॒र्हि॑रू॒र्णम्म्र॑दाꣳ ॥ होता॑

र्य्यंकारणमिति ( १ ) अश्विनौइन्द्रश्च । किञ्च । इन्द्रस्वलेनवर्द्धयन् । ऋषभेण गवाच इन्द्रियं-
मिन्द्रस्यवर्द्धयन् । मधुमा सरंचउपादायेतिशेषः । यवैः कर्कन्धुभिर्लाजैश्चभेषजमिन्द्रस्यवर्द्ध-
यन् । अश्विसरस्वतीन्द्राश्च दैव्येनहोत्वेजयमाना: पयः प्रभृतीनिवयन्तु त्वमपिहेमनुष्यहोतरा-
जयसयज ॥ ३२ ॥ होतायक्षद्वर्हिरूर्णम्रदाः होतायजतुप्रकृतादेवता: । वर्हिश्चप्रयाजदेवता ।

ऊर्णम्रदाः ऊर्णम्रदद्रुतिप्राप्ते ऊर्णम्रदाद्रुतिछान्दसोलिङ्गविपर्ययः। ऊर्णावम्रदुर्भिषग्भवतुइन्द्राय। भिषग्वैद्यउक्तः। नासत्याभिषजाश्विना। नासत्यानाश्विकाप्रभवावश्विनौ भिषजौभवतामिन्द्रस्य। अश्वावडवा शिशुमती धेनुश्च भिषगिन्द्रस्यभवतु। इत्थंभूताहि सादक्षिणापद्यते।

यक्षद्दुर्ह्रिरूर्णम्रदाभिषङ्नासत्याभिषजाश्विनाश्वाशिशुमतीभिषग्धेनुः सरस्वतीभिषग्दुहऽइन्द्रायभेषुजम्पयुः सोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्युहोतर्य्यज ॥ ३३ ॥ होतायक्षद्दुरोदिशःकवष्यो नव्यचस्वतीरश्विभ्यान्नदुरोदिशऽइन्द्रोनरोदसीदुघेदुहेधेनुःसर

कस्मात्पुनरेवमाशास्यत इत्यतआह। यतःसरस्वतीभिषक् स्वयमेवदुहे दोग्धिइन्द्रायभेषजम्। अतोयूयमपि भिषजौभवथेति। अश्विसरस्वतीन्द्राश्च दैवैरनहोन्ने जरमानाः पयःप्रभृतीनिव्यन्तु त्वमपि हेमनुष्यहोतराज्यस्य यज ॥ ३३ ॥ होतायक्षद्दुरोदिशः। होतायजतु। दुरःद्वार इतिप्राप्ते छान्दसंसंप्रसारणम्। द्वाराणीति लिङ्गव्यत्ययेनपर्यायः। कथंभूता यज्ञगृहद्वारः। दिशः

कवष्योन व्यचस्वतीः । लुप्तोपमानमेतत् । दिशइवयाःकवष्यः समुषिराः । व्यचस्वतीःव्यञ्च-
नवत्यः गमनवत्यश्चयाः । अश्विभ्यान्नदुरोदिशः । अश्विभ्याञ्च वाअधिष्ठिताः यज्ञगृहद्वारो-
दिश इवबभूवुः । इंद्रोनरोदसीदुघे । इंद्रश्चयाअधिष्ठाय रोदसीद्यावापृथिव्यौदुहे । हकारस्य-
घकारः । दुग्धवान् । याश्चाधिष्ठायदुहे धेनुर्भूत्वा सरस्वतीअश्विनौच । कस्मैदुहेकिञ्च दुह-

सरस्वत्युश्विभ्यवनेन्द्रायभेषुजꣳशुक्रञ्ज्ज्योतिरिन्द्रियम्पयुःसोमःपरिस्रु
ताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतुर्य्यज ॥३४॥ होतायक्षत्सुपेशसोषेन
नक्तन्दिवाश्विनासमञ्जातेसरस्वत्यात्त्विषिमिन्द्रेनभेषुजꣳश्येनोनर

इत्यतआह । इंद्रायभेषजं शुक्रंशुक्लंज्योतिश्च इंद्रियञ्चदुहे । अश्विसरस्वतींद्राश्च पयःप्रभृती-
निव्यन्तु त्वमपि हेमनुष्य होतराज्यस्ययज ॥ ३४ ॥ होतायक्षत्सुपेशसोषे । होतायजतु सुपे-
शसासुरूपे । उषेइतिद्विवचनोपदेशा द्रात्रिंश्च उषाश्चगृह्येते । नक्तन्दिवारात्रौच अहनिच ।
यौचाश्विनौ समञ्जातः संश्लेषयतः सरस्वत्यासहितौ । त्विषिन्दीप्तिम् इंद्रे । इंद्रभेषजञ्च

शु० य० सं० ४८२ उ० भा०

संश्लेषयतः तौचहोतायजतु । यश्चश्येनः रजसा । रजःशब्दोजगोतिर्वचनः । जगोतिषा हृदा-हृदयेन । श्रियान नकाराः सर्वेसमुच्चयार्थीयाः । इहानुवाकेप्रायसः । श्रियाचसह मासरमुपादाय इंद्रे समनक्ति । तञ्च होतायजतु ॥ अश्विसरस्वतींद्राश्च दैव्येनहोत्रा इज्यमानाः पयःप्रभृतीनिश्यन्तु त्वमपि हेमनुष्यहोतराज्यस्ययज ॥ ३५ ॥ होतायक्षद्दैव्याहोतारा । होतारौ

जंसाहृदाश्श्रियानमासंरम्भय॒ सोमं॑ परिस्रुतांघृतम्मधुव्व्यन्त्वाज्ज्यं स्यहोतर्य्यंज ॥३५॥ होतायक्षद्दैव्याहोतारा॥ भिषजाश्विनेन्द्रन्न जागृविदिवानक्तन्नभेषजैःशूषꣳ सरस्वतीभिषक्सीसेनदुहऽइन्द्रियम्मय ꣳ सोमं॑ परिस्रुतांघृतम्मधुव्व्यन्त्वाज्ज्यंस्यहोतर्य्यंज ॥ ३६ ॥

अयस्त्वाग्निरसौचमध्यमः । भिषजौअश्विनौ इंद्रन्न इंद्रञ्चहोतुयजतु । जागृविदिवानक्तम् नभेषजैः शूषꣳ सरस्वती भिषक्सीसेनदुहइंद्रियम् । याचैषासरस्वती भिषक्जागृवि । स्वकार्यसिद्धावप्रमत्ता जागरणशीलाविभक्तिलोपः । दिवानक्तञ्च भेषजैरौषधैः शूषम्बलम् सीसेनच

अ० २१

शिवम् ४८२

दुहेदोग्धि । इंद्रियस्त्वइंद्रार्थम् । तास्त्वदैव्याहोतायजतु । अश्विसरस्वतींद्राश्च दैव्येनहोत्रे जय-
माना: पय:प्रभृतीनि व्यन्तु त्वमपि हेमनुष्य होतराजयस्व यज ॥ ३६ ॥ होतायक्षत्तिस्रोदेवी: ।
होतायजतु तिस्रोदेवी: वक्ष्यमाणा: । नभेषजम् त्रयस्त्रिधातवोपस: । नकारस्समुच्चयार्थीयोभि-
न्नक्रम: । भेषजत्रयादिन्द्रेकुर्वन्तितास्त्वहोतायजतु । त्रय: । पशव:त्रिधातव: । आश्विनोधूम्र: ।

होतायक्षत्तिस्रोदेवीः ॥ होतायक्षत्तिस्रोदेवीर्न्नभेषजन्त्रयस्त्रिधातं
वोपसोरूपमिन्द्रेहिरण्ययमश्विनेडानभारतीवाचासरस्वतीमह ऽ
इन्द्रायदुहऽइन्द्रियम्पयः सोमः परिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहो

सारस्वतोमेष: ऐन्द्रऋषभ: । इतित्रय: पशव: । प्रधानांगोपाययोस्त्रिधातुपशु: । अपस:
अपस्विनइतिप्राप्ते छान्दसोमतुपलोप: । कर्मवन्त: । अग्नयोवात्रयस्त्रिधातव: । रूपमिन्द्रे हिरण्य-
यमश्विनेडानभारती । येच । इन्द्रेरूपंहिरण्मयं । कुर्वन्तितास्त्व होतायजतु । केतेइत्यतआह ।
अश्विनौइडाचभारतीच । वाचासरस्वतीमह इन्द्रायदुहइन्द्रियम् । याच वाचात्रयीलक्षणया

सरस्वतीमहः महत्वम्पूजामिन्द्राय दुहेदोग्धि इन्द्रियञ्च । ताञ्चहोतायजतु । अश्विसरस्वती-न्द्राश्च दैव्येनहोत्रेज्यमानाः पयःप्रभृतीनिव्यन्तु त्वमपि हेमनुष्य होतराज्यस्ययज ॥ ३७ ॥ होता-यक्षत्सुरेतसम् । होतायजतु । सुरेतसं शोभनंरेतः उदकलक्षणंयस्य शोभनंह्येतसग्रेतः यदुदकम् । यद्वा सुष्ठुरेतोयस्मात्तम् पुंसोरेतःकारणभूतम् । ऋषभम्बर्षितारम् । नर्यापसम् नरेभ्योहितन्नर्यम्

तुर्य्यजं ॥३७॥ होतायक्षत्सुरेतंसम्मृषभम् ॥ होतायक्षत्सुरेतंसम्मृषभन्नर्य्यापसन्त्वष्टांरमिन्द्रमश्विनांभिषज्न्नसरस्वतीमोजोनजूतिरिन्द्रियँव्वृकोनरंभसोभिषग्यशः सुरंयाभेषज ँ श्रियानमासंरम्पय ऽ

तद्यस्याअपःकर्मसनर्यापसः तन्नर्यापसन्त्वष्टारम् दैव्योहोतायजतु । किञ्च । इन्द्रमश्विना भिष-जन्नसरस्वतीम् । इन्द्रम् अश्विनौभिषजञ्च सरस्वतीं दैव्योहोतायजतु । केनयजतु । ओजो-नजूतिरिन्द्रियंवृकोनरभसोभिषक् । नकारःसमुच्चयार्थीयः । ओजश्चजूतिर्जवः इन्द्रियञ्च योवृकः सरभसःसोद्यमोदक्षः भिषक् तेनयजतु । सुरायांवृकलोमानि क्षिप्यन्ति इत्यतएवमुच्यते । यसः

सुरयाभेषजं श्रियानमासरम्। तथा मासरमुपादाय सुरयाचयजतु । यशोभेषजं श्रियासह इन्द्रेयजमानेवा । अश्विसरस्वतीन्द्राश्च दैव्येनहोत्रा ईज्यमानाः पयःप्रभृतीनि व्यन्तु त्वमपि हेमनुष्यहोतः आज्यस्ययज ॥ ३८ ॥ होतायक्षद्वनस्पतिम् । होतायजतु । वनस्पतिंशमितारं

सोमं॑÷परि॒स्रु॒तां॑घृ॒तम्म॒धु॒व्व्यन्त्वाज्ज्य॑स्य॒होत॒र्य्यज॑ ॥ ३८ ॥ होता॑य क्ष॒द्व॒न॒स्प॒तिं॑ꣳश॒मि॒तार॑म् ॥ होता॑यक्ष॒द्व॒न॒स्प॒तिं॑ꣳश॒मि॒तार॑ꣳश॒तक्र॑ तु॒म्भी॒मन्न॒मन्न्यु॒ꣳराजा॑नंव्व्या॒घ्रन्न॒म॑सा॒श्विना॒भाम॒ꣳसर॑स्वती॒भि॒ष गिन्द्रा॒यदु॒हऽइन्द्रि॒यम्म॒यु॒ꣳसोमं॑÷परि॒स्रु॒तां॑घृ॒तम्म॒धु॒व्व्य॒न्त्वाज्ज्य॑स्य॒हो

शतक्रतुम् बहुकर्माणम् । भीमंनमन्युं राजानंव्याघ्रम् । भीमंभयानकम् मन्युंक्रोधात्मानम् । राजानमरण्यानाम पशूनांव्याघ्रञ्च होतायजतु । नमसाश्विना नमसाहविषा। अश्विनौचहो- तायजतु। भामंसरस्वतीभिषगिंद्रायदुहइंद्रियम् । याच भामंक्रोधम् । सरस्वतीभिषक् इंद्राय दुहेदोग्धि इंद्रियञ्चताश्च दैव्योहोतायजतु । अश्विसरस्वतीन्द्राश्च दैव्येनहोत्रेज्यमानाः पयःप्रभृतीनि

वान्तु त्वमपि हेमनुष्यहोतराज्यस्ययज ॥ ३९ ॥ होतायचदग्निंस्वाहा । दैव्यो होतायजतु । अग्निंप्रयाज देवतां वा आहवनीयम्वा । स्वाहाज्यस्यस्तोकानाम् सुष्टुआह शोभनमाह यजमानः आजस्यस्तोकानाम् स्तोकाविप्रुषः । स्वाहामेदसाम्पृथक् । शोभनमाह यजमानः मेदसांव-

तुर्य्यज ॥ ३९ ॥ होतांयक्षदग्निꣳस्वाहां ॥ होतांयक्षदग्निꣳस्वाहाज्ज्यंस्यस्तोकानाꣳस्वाहामेदंसाम्पृथक्स्वाहाच्छागंमश्विभ्याꣳस्वाहांमेषꣳसरंस्वत्यैस्वाहंऽऋषुभमिन्द्रांयसिꣳहायसहंसऽइन्द्रियꣳस्वाहाग्निन्नभेषजꣳस्वाहासोमंमिन्द्रियꣳस्वाहेन्द्रꣳसुत्रामांणꣳस

पासम्बन्नानाम् पृथक्पृथक् । वपाःश्रप्यमाणा आजेनाभिघार्य्यन्तेतदभिप्रायमेतत् । स्वाहाछा-गमश्विभ्याम् । छागमेषर्षभशब्दाः पशुवचनाः । शोभनमाह यजमानः छागपशुमश्विभ्याम् । शोभनमाह मेषंसरस्वत्यैच । स्वाहाऋषभमिंद्राय । शोभनमाह यजमानः ऋषभम इंद्राय । कथंभूतायइंद्राय । सिंहायअभिभवित्रे । पुनःकथंभूताय । सहसेवलात्मकायच । किंभूतस्य-

षभम् इन्द्रियम् इंद्रियात्मकमितिसामानाधिकरण्यात्सम्बन्धः । स्वाहाग्निनन्नभेषजम् आजग्रभागौ सुस्राहयजमानः अग्निन्त्वभेषजम् । स्वाहासोममिंद्रियम । शोभनमाह यजमानः सोममिंद्रियात्मकम् । स्वाहेन्द्रंसुत्रामाणम् सवितारम्वरुणम् भिषजाम्पतिम् । पशुपुरोडाशदेवताः । सुस्राहयजमानः । इंद्रंसुत्रामाणम् सवितारञ्च । वरुणम्भैद्यानाम्पतिञ्च । स्वाहावनस्पतिम्

# वितारंव्वरुणम्भिषजाम्पतिᳫं स्वाहाव्वनस्पतिम्प्रियम्पाथोनभेषजᳫं स्वाहादेवाऽआज्यपाजुषाणोऽअग्निर्भेषजम्पयःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्यज ॥ ४० ॥ [१२] होतायक्षदश्विनौ

प्रियम्पाथोनभेषजम् । सुस्राह यजमानःवनस्पतिम् प्रियम्पाथस्थानम् भेषजञ्च । पशुदेवतानांवनस्पतिम् । स्वाहादेवाआजग्रपाः । प्रयाजानुयाजा वैदेवाआपाःशोभनमाह यजमानः देवाआजग्रपाः इजग्रमानावैदेवा उत्तमेप्रयाजेस्मयंन्त इत्यतोविभक्तिवग्रत्ययोवनक्कतः । श्रुतिस्तु । देवा हवा ऊचुर्हन्तविजितमेवानुसर्वंयन्नठं० सठं० स्थापयेत्युपक्रम्य तउत्तमे प्रयाजेस्वाहाकारेणैव

सर्वंयज्ञ्ठं॰सठं॰स्थापयन्नित्याह । अत.स्वाहाकारा: समाप्तिवचना: समाप्तिवचनत्वाच्च स्वाहा-कारांणान्देवतापदस्य चतुर्थ्याभवितव्यम् । स्वाहादेवेभ्य आज्यपेभ्यइत्ययम्प्रकार: । जुषाणोअ-ग्निर्भेषजम् । जुषाण:सेवमान: अग्नि:भेषजमोषधम् इंद्रस्ययजमानस्य वाकरोतु । अश्विसर-स्वतींद्राश्च दैवेनहोत्रेज्यमाना: पय:प्रभृतीनि वयन्तु त्वमपि हेमनुष्य होतराज्यस्ययज ॥४०॥

च्छागस्य॥ वपायामेदसोजुषेतांᳫंहुविर्होतुर्य्यंज॥ होतायक्षत्सरस्व तीम्मेषस्यंवपायामेदसोजुषतांᳫंहुविर्होतुर्य्यंज ॥ होतायक्षदिन्द्र मृषभस्यंवपायामेदसोजुषतांᳫंहुविर्होतुर्य्यंज ॥ ४१ ॥ होतायक्षदु

(१) होतायक्षदश्विनौछागस्य चयोवपानां प्रैषाययालिङ्गम् । दैव्योहोतायजतु । अश्विनौछागस्य वपायामेदस: । स्नेहप्रकृतिर्मेद: । तौचेज्यमानौ जुषेतांहवि: त्वंच हेमनुष्य होतर्यंज । होताय-

(१) का॰ होता यक्षदश्विनाविति त्रयो वपानां प्रैषा यथालिङ्गम् । होता यक्षदश्विनौ छागस्य होता यक्षत्सरस्वतीम् होता यक्षदिन्द्रमृषभमिति त्रयो वपान्नस्य क्रमात् प्रैषा एककण्डिकायामिति सूत्रार्थः ।

चत्सरस्वतींमेषस्य । जुषतामित्येकवचनविशेषः । होतायक्षदिन्द्रमृषभस्य । सममन्यत् ॥ ४१ ॥
(१) होतायक्षदश्विनौ सरस्वतीम् । ग्रहाणांप्रैषः । दैव्योहोतायजतु अश्विनौचसरस्वतीञ्च इन्द्रञ्च-सुत्रामाणम् एवं होतारमुक्त्वा अथेदानीमध्वर्यूनाह । हेअध्वर्यवः इमेसोमाः सुरामाणः सुर-

ऽश्विनौसरस्वतीमिन्द्रᳪं सुत्रामाणमिमेसोमाᳪंसुरामाणश्छागैर्न्नमेषै ऋषभैः सुताः शष्पैर्न्नतोक्मभिर्ल्लाजैर्म्महस्वन्तोमदामासरेणपरिष्कृताः शुक्राः पयस्वन्तोमृताः प्रस्थितावोमधुश्चुतस्तानश्विनासर

मणीयाः सुरावन्तोवासुरामयावा । छागैर्नमेषैः ऋषभैः सुताः । नकाराः सर्वेसमुच्चयार्थीयाः । छागैश्च मेषैश्च ऋषभैश्च सुताअभिषुताः समर्थीकृताः । शष्पैश्च तोक्मभिश्च लाजैश्च महस्वन्तः महाभाग्ययुक्ताः महातर्पणीयाः । मासरेणपरिष्कृताः । संपर्युपेभ्यः करोतौभूषणेसुट् । मास-

(१) का० ग्रहाणां चतुर्थः । होता यक्षदश्विनौ सरस्वतीमिन्द्रमिति चतुर्थो ग्रहाणां प्रैषः । होता यक्षदश्विनौ सरस्वतीं सुष्ठु रचितारमिन्द्रञ्च यक्षत् यजतु । होतारमुक्त्वाध्वर्यूनाह हे अध्वर्यवः ।

शु० य० सं० ४८६ उ० भा०

रेणालङ्कृताः। शुक्राः शोचिष्मन्तः पयस्वन्तः पयसासंयुक्ताः अमृताः अमृतकल्पाः प्रस्थिताः होमाभिमुखीभूताः वः युष्मत्संबन्धेन। इत्यध्वर्युविषयम्। मधुश्चुतः मधुस्रवाः मधुक्षरणाः तानेतान्सोमान् अश्विनौचसरस्वतीच इन्द्रश्चसुत्रामा। साधुत्राणः ब्रह्महाजुषताम् जुषित्वाच। सोम्यंसोममयम्मधु पिबन्तुच मदन्तुच व्यन्तुच। त्वमपि हेमनुष्यहोतर्यज ॥४२॥ (१) होतायक्षदश्वि-

स्वतीन्द्रं᳡सुत्रामाव्वृत्रहाजुषन्ताᳬसोम्यम्मधुपिबन्तुमदन्तुव्यन्तु होतर्य्यज ॥ ४२ ॥ होतायक्षदश्श्विनौच्छागस्य ॥ हविषऽआत्ताम् द्यमध्यतोमेदऽउद्भृतम्पुराद्वेषोभ्यः पुरापौरुषेय्यागृभोघस्तान्नूनङ्घासे

नौछागस्य। प्रैषः। होतायजतु। अश्विनौछागस्य छागाङ्गस्यतावश्विनौछागसम्बन्धिनः हविषः आत्ताम्। अदभक्षयो। अभक्षयताम् भक्षितवन्तौ। अद्यअस्मिन्द्यवि। मध्यतोमेदउद्भृतम उदरम-ध्यतोवपालक्षणम्मेदः उद्धृतम् हृग्रहोर्भः छन्दसिहस्यप्रतिभकारः। पुराद्वेषोभ्यः पूर्वमसुररक्षोभ्यः

(१) का० हविषामुत्तरे यथालिङ्गम् चतुर्थी प्रैषादये पठ्यमाना होता यक्षदश्वि नौ छागस्य हविष इत्याद्यास्तयो यथालिङ्गमाश्विनादिहविर्यागाना प्रैषा इत्यर्थः

अ० २१ शिवम् ४८६

यज्ञस्य द्वेषद्भागोवा । पुराचपौरुषेय्याग्रभः पुरुषार्थम् गृह्यतेइति पौरुषेयीगृभ् तस्याः पौरुषेय्यागृभः इडायाइत्यर्थः । नहिवपायागे इडाविद्यते । यावेवम् वपाहविष आत्तान्ताविदानीम् घस्ताक्षत्यय- ताम् अङ्गानांस्वमंशभूतमितिशेषः विशेषणैर्विशेषप्रसत्ताधग्राहारः । नूनन्निश्चयेन । किम्भूतानामङ्गा- नाम् घासिग्रासि अज्राणाम् अवदात्तानाम् घासियैरजितं स्वेच्छयाघासेवायान्यजराणिस्युः । यवसप्र-

ऽअंजज्राणांय्यवंसप्प्रथमानाᳫँ सुमत्क्षंराणाᳫँ शतरुद्द्रियाणामग्नि ष्ष्वात्तानाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामत ऽउत्सादु

थमानां यवसानामन्नानां यानिप्रथमानिमन्त्रैः संस्कृतत्वात् । एतद्वैपरममन्नाद्यं यन्मांसमितिश्रुतिः । सुमत्क्षराणाम् सुमत्स्वयमित्यर्थः । स्वयमेवयानिक्षरन्तिअर्दितानि । शतरुद्रियाणाम् वहुस्तु- तीनाम् रुद्रइतिहि स्तोत्रनामसुपठितम् रुद्रस्यस्तोतुरिमारुद्रियास्तुतयः । वहुशोवारुद्राणाम् अग्निष्वात्तानाम् अग्निनासाधुपाकार्थमासादितानाम् अग्निनासुस्वत्तानामित्यर्थः । पीवोपवसना नाम् पीवशब्दः स्थूलवचनः । पीवभिः स्थूलैरुपोषितंयैरवदानैः स्थूलानामुपवसनम् समीप-

स्थितिर्येषामितिवा । किञ्च । पार्श्वतःश्रोणितः शितामतउत्सादतः । अङ्गादङ्गादवत्तानाम् पार्श्व-तोवत्तानाम् पार्श्वपरशुमयमङ्गम्भवति । श्रोणितोवत्तानाम् शितामतोवत्तानाम् । शितामशब्देन यकृद्वाशितामू । योनिर्वाशितामू मेदोवाशितामित्यादिव्याख्याभेदाः । उत्सादनप्रदेशात् छेदनप्रदे-

तोऽङ्गादङ्गादवत्तानाङ्करतऽएवाश्विनाजुषेताॅ्ठहुविर्होतुर्यज॥४३॥
होतायक्षत्सरस्वतीम्मेषस्यहुविषऽआवयदुद्यमध्यतोमेदऽउद्भृतम्पु
राद्वेषोभ्यःपुरापौरुषेय्याग्गृभोघसन्नूनङ्घासेऽअज्राणांय्यवसप्रथमा
नाॅ्ठसुमत्क्षराणाॅ्ठशतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसना

शात् । अवत्तानाम् । एवमङ्गादङ्गादवत्तानाम् । करतएवाश्विनौहविरितिशेषः । जुषेताञ्च पुनर्वच-नमादरार्थम् त्वमपि हेमनुष्यहोतर्यज ॥ ४३ ॥ होतायक्षत्सरस्वतीम्मेषस्य । होतायजतु सरस्वती-म् । याहविषआवयत् । आङ्पूर्वस्यवनेः खादनार्थस्य लिटिभूतार्थाभिधायिन्येतद्रूपम् । घसत्लो॰

डर्थेलेट्। जुषतामेकवचनम् अन्यदुक्तम् ॥ ४४ ॥ होतायक्षदिन्द्रमृषभस्य। तुल्यव्याख्यानम् ॥ ४५ ॥

नाऽपाशूर्वृतःश्रोणितःघ्नितामुत ऽउंत्सादुतोऽङ्गादङ्गादवत्तानाङ्करदेवःसरस्वतीजुषतांहविर्होतुर्यजं ॥ ४४ ॥ होतायक्षदिन्द्रमृषभस्यहविषऽआवयदद्यमध्यतोमेदऽउद्भृतम्पुराद्वेषोभ्यःपुरापौरुषेय्यागृभोघसन्नूनङ्घासेऽअज्राणांयवसप्रथमानांसुमत्क्षराणांशतरुद्रियाणामग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतःश्रोणितःशितामतउत्सादतोऽङ्गादङ्गादवत्तानाङ्करदेवमिन्द्रोजुषतांहविर्होतुर्यजं ॥ ४५ ॥ होतायक्षद्वनस्पतिमभि ॥ हिपिष्टतमयारभिष्ठया

होतायक्षद्वनस्पतिम्। (१) वनस्पतिप्रैषः। होतायजतु वनस्पतिंयूपम्। अभिहिपिष्टतमयारभिष्ठ-

(१) का० उत्तमौ वनस्पतिस्विष्टकृतोः। अन्ते पठ्यमानौ होता यक्षद्वनस्पतिमभि होता यक्षदग्निं स्विष्टकृतमिति क्रमेण वनस्पतियागे स्विष्टकृद्यागे च प्रैषौ। १८। १६। २५।

यारशनयाधित । कस्माद्वनस्पतिम् यजतु । ह्विशब्दोयस्मात्अर्थेयस्मात्अभ्यधित स्याघ्वोरिच्चेतिद-धातेर्लुङ्इतिअभिधारितवान् । केनाभिधारितवान् । पिष्टशब्दोरूपवाची । पिष्टतमया । रभि-ष्टयाच । आलब्धतमया । अतिशयेननियमकारिण्या । रशनयाजालभूतया । प्रार्थयामि

रशुनयाधित ॥ यत्राग्निश्वनोश्छागंस्यहुविषंःप्प्रियाधामानियत्रुसरं स्वत्त्याम्रुषस्यंहुविषंःप्प्रियाधामानियत्रेन्द्रस्यऽऋषुभस्यंहुविषंःप्प्रि याधामानियत्राग्नेः ष्प्रियाधामानियत्रसोमंस्यप्प्रियाधामानियत्रे न्द्रस्यसुत्राम्णंःप्प्रियाधामानियत्रंसवितुः प्प्रियाधामानियत्रु व्वरुंणा स्यप्प्रियाधामानियत्रु व्वनुस्प्पतेंःप्प्रियापाथां ७ सियत्रंदेवानांमा

वनस्पतिम् । यत्रदेशेअश्विनोश्छागस्यच हविषश्चप्रियाप्रियाणिधामानि स्थानानि । यत्रसरस्वत्याः यत्रेन्द्रस्य । एताःपशुदेवताः । अथाज्यभागौ । यत्राग्नेः यत्रसोमस्य । अथपशुपुरोडाशदेवताः

यत्रेन्द्रस्यसुत्रामण: यत्रसवितु: यत्रवरुणस्य यत्रवनस्पते:। प्रियापाथांसि। पाथ:शब्दोन्नवचन:। वनस्पति:पशोरिवाङ्गम्। अथप्रयाजानुयाज:। यत्रदेवानामाज्यपानाम् अथस्विष्टकृत्। यत्राग्नेर्होतु: प्रियाणिस्थानानि। तत्रतेषुस्थानेषु एतान्पशून्। प्रस्तुत्येवप्रस्तुत्यच उपस्तुत्येव। अतिशयार्थंपुनर्वचनम्। उपावस्रक्षत्उपावसृजतु। रभीयसइवकृत्वी रभराभस्ये रभसाश्चपशून्कृत्वा

ज्ज्यपानाम्प्रियाधामानियत्राग्नेर्होतु: प्प्रियाधामानितत्रैतान्प्रस्तुत्येवोपस्तुत्त्येवोपावस्रक्षद्रभीयस ऽइवकृत्त्वीकरद्देवन्देवोवनस्प्पतिंर्जुषतां ॐ हविर्होतुर्य्यज॥४६॥ होतायक्षदग्गिनं ॐ स्विष्टकृतम्॥ होतायक्षदग्गिन ॐ स्विष्टकृतमयाडग्गिनरश्विनोश्छागस्यहविष: प्प्रिया

करत्करोतु। एवंदेवोवनस्पतिर्जुषताम् हवि:त्वमपि हेमनुष्यहोतर्यज॥ ४६॥ होतायक्षदग्निं स्विष्टकृतम्। स्विष्टकृत्त्वेष:। दैव्योहोतायजतु। अग्निंस्विष्टकृतम्। कस्माद्धेतोरित्यतआह। अयाट् अयासीत्इष्टवान्एवमग्रेपि। योग्नि: अश्विनो:छागस्यच हविषस्च प्रियाणिधामानि।

अयाट्सरस्वत्याःअयाट् इन्द्रस्य। प्रधानदेवताः। अयाट्अग्नेः अयाट्सोमस्य। आज्यभागौ अयाट् इन्द्रस्यसुत्राम्णः अयाट् सवितुः अयाट्वरुणस्य। पशुपुरोडाशदेवताः। अयाट्वनस्पतेः प्रियाणिपाथांस्यन्नानि। वनस्पतिः प्रधानाङ्गदेवता। अयाट्देवानाम् आज्यपानाम्

धामान्न्ययाट्सरस्वत्यामेषस्यंहविषंःप्प्रियाधामान्न्ययाडिन्द्रंस्य ऽऋषभस्यंहविषंः प्प्रियाधामान्न्ययांडग्नेःप्प्रियाधामान्न्ययाट्सोमंस्यप्प्रियाधामान्न्ययाडिन्द्रंस्यसुत्राम्णंःप्प्रियाधामान्न्ययाट्सवितुःप्प्रियाधामान्न्ययाड्वरुणस्यप्प्रियाधामान्न्ययाड्वनस्पतेःप्प्रियापाथा ᳪ स्ययांड्देवानांमाज्ज्यपानांम्प्रियाधामांनियक्षंदग्नेर्होतुंःप्प्रियाधामांनियक्षत्स्वम्महिमानमायंजतामेज्ज्या ऽइषंःकृणोतुसोऽ

प्रयाजानुयाजाआज्यपाः। यक्षदग्नेर्होतुः यक्षत्दृष्टवान् अग्नेर्होतुःस्विष्टकृतः स्वयमेवप्रियाणिधामानि। यक्षत्अयाक्षीत्। स्वम्महिमानम् स्वकीयांविभूतिम्। किञ्च। आयजतामेजत्रा-

इषः । यजतामितिवचनव्यत्ययः । आद्रजरा अभियष्टव्यायागार्हा इषःप्रजाः । इषान्नेनतासांस्थि-त्ति रुत्पत्तिश्चेति इषःप्रजाउक्ताः यागशीलायागार्हाः प्रजाभवन्तीत्यर्थः । कृणोतुकरोतुसः अध्वराअध्वरा-न्यज्ञान् जातवेदाःजुषताञ्च्हविः । हेमनुष्यहोतः त्वमपियज ॥ ४७ ॥ (१) देवम्बर्हिः । एकाद-शानुयाजप्रैषाः अश्विसरस्वतीन्द्रदेवत्याः व्यवहितपदप्रायाः यत् देवम्बर्हिः सुदेवम् शोभनादेवा

अंद्ध्वराजातवेदाजुषताᳪंहुविर्होतुर्य्यज ॥ ४७ ॥ [ ७ ] देवम्बर्हिः सरस्वतीसुदेवमिन्द्रेऽअश्विना ॥ तेजोनचक्षुरक्ष्योर्बर्हिषादधुरि न्द्रियँव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ४८ ॥ देवीर्द्वारः ॥ देवीर्द्वारो

अस्येतिसुदेवम् । तेनवर्हिषासरस्वती अश्विनौचइन्द्रे । तेजोन नकारःसमुच्चये । तेजश्चचक्षुश्च इन्द्रियश्च अक्ष्योःअक्ष्णोःदधुः । वसुवननायधनलाभाय । वसुधेयस्य धननिधानायच । व्यन्तु पिबन्तु अश्विसरस्वतीन्द्राः त्वमपियज । अथसमस्तार्थः । यद्देवंवर्हिः सुदेवंतेनवर्हिषासरस्वती

(१) का० अनुयाजप्रैषा देवं बर्हिरिति याज्याश्च । देवं बर्हिः सरस्वतीत्याद्या एकादश कण्डिकास्त्रिपशोरनुयाजानां प्रैषा याज्याश्च भवन्तीत्यर्थः । १९ । ७ । ९ ।

अश्विनौचतेजश्चचक्षुषी: इन्द्रियञ्चदधुः। एवमग्रेपि ॥ ४८ ॥ देवीर्द्वारः। यादेव्यःयज्ञगृहद्वारः ताभिःअश्विनौभिषजौच। सरस्वतीच प्राणञ्चनसिनासिकायाम् वीर्यञ्चइन्द्रियञ्च। द्वारः द्वार्भिरितिविभक्तिव्यत्ययः। इन्द्रे दधुः। वसुवनेइतिव्याख्यातम् ॥ ४९ ॥ देवीउषासौ। नक्तो-

ऽअश्विनाभिषजेन्द्रे सरस्वती ॥ प्राणन्नवीर्यन्नसिद्वारोदधुरिन्द्रियँव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ४९ ॥ देवीऽउषासौ ॥ देवीऽउषासावश्विनासुत्रामेन्द्रे सरस्वती ॥ बलन्नवाचमास्यऽउषाभ्यान्दधुरिन्द्रियँव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५० ॥ देवीजोष्ट्री ॥ देवीजोष्ट्री

षासावितिप्राप्ते छान्दसः प्रातिपदिकलोपः। यौदेव्यौनक्तोषासौ ताभ्याम् अश्विनौसुत्रामाशोभनत्राणौ सरस्वतीच। बलञ्चवाचञ्च आस्येमुखे। इन्द्रियञ्चइन्द्रे। उषाभ्यांनक्तोषाभ्यान्दधुः व्याख्यातमन्यत् ॥ ५० ॥ देवीजोष्ट्री। येदेव्यौजोषयित्र्यौ द्यावापृथिव्यौइतिवा। अहोरात्रे-

इतिवा । शसग्रञ्चसमाचेतिकात्यक्यः । ताभ्याञ्जोष्ट्रीभ्याम् सरस्वतीचाश्विनौच इन्द्रम्अवर्द्धयन् ।
कथमवर्द्धयन् । श्रोत्रञ्चकर्णयोः यशश्च इन्द्रियञ्च इन्द्रे दधुः । वसुवनइति समञ्जसम् ॥ ५१ ॥
देवीऊर्जाहुती । जोष्ट्र्यास्तुल्यदेवताविकल्पः । येदेव्यौ ऊर्जाहुती रसवती आहुतिरन्नानम् । दुघे-

सरस्वत्यश्विनावनेन्द्रमवर्द्धयन्॥ श्रोत्रन्नकर्णयोर्यशोजोष्ट्रीभ्यान्दधुरि
न्द्रियँव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५१ ॥ देवी ऽ ऊर्ज्जाहुती ॥
देवीऽऊर्ज्जाहुतीदुघेसुदुघेन्द्रेसरस्वत्यश्विनाभिषजावतः ॥ शुक्र
न्नज्योतिस्तनयोराहुतीधत्त ऽ इन्द्रियँव्वसुवनेव्वसुधेयस्यव्यन्तुय

दुग्धे सुदुघेसुदोहने । उपरितनैर्द्वंद्वैं आहुतीशब्दः श्रूयते सद्वृहक्रतविभक्तिव्यत्ययः समर्थीक्रियते ।
ताभ्यामाहुतीभ्याम् सरस्वतीच अश्विनौच भिषजौअवतःअवन्तीतिवचनव्यत्ययः । इन्द्रमितिशेषः ।
कथंकृत्वा । शुक्रञ्चजोतिश्च पयोलक्षणम् स्तनयोःइन्द्रियञ्च इन्द्रे धत्तइतिविभक्तिव्यत्ययः. दधुः ।

वसुवनेइति व्याख्यातम् ॥ ५२ ॥ देवादेवानाम्। यौदेवौहोतारौ देवानामभिषजौ ताभ्यां-
होतृभ्यांवषट्कारैश्च। अश्विनौचसरस्वतीच इंद्रम्इंद्रेइतिविभक्तिव्यत्ययः। इंद्रियञ्च त्विषि-
न्दीप्तिञ्च हृदयेमतिञ्चदधुः। वसुवनेइति समञ्जसम् ॥ ५३ ॥ देवीस्तिस्रः। यादेव्य स्तिस्रः

जं॥ ५२॥ देवादेवानांम्भिषजाहोतांराविन्द्रंमश्विना॥ वषट्कारैःसरंस्वतीत्त्विषिन्नहृदंयेमतिꣳहोतृंब्भ्यान्दधुरिन्द्रियंव्वंसुवनेंव्वसुधेयंस्यव्यन्तुयजं॥ ५३॥ देवीस्तिस्रः॥ देवीस्तिस्रस्तिस्रोदेवीरश्विनेडासरंस्वती॥ शूषन्नमध्योनाब्भ्यामिन्द्रांयदधुरिन्द्रियंव्वंसुवनेंव्वसुधेयंस्यव्यन्तुयजं॥ ५४॥ देवऽइन्द्रः॥ देव

सरस्वतीडाभारत्यः तिस्रोदेवीः अत्रविभक्तिव्यत्ययोध्याहारश्च वाक्यवशात्। तिसृभिर्देवीभिः-
सरस्वतीडाभारतीभिः। अश्विनौचइडाचसरस्वतीच। शूषंवलञ्च मध्येनाभ्याम् इन्द्रियञ्च। इन्द्रा-
यइन्द्रे इतिविभक्तिव्यत्ययः। दधुः। वसुवनेइति समानम् ॥ ५४ ॥ देवइन्द्रः। योदेवःइन्द्रः।

इन्द्रदिपरमैश्वर्ये । परमैश्वर्ययुक्तः । नराशंसः नराअस्मिन्नासीनाःशंसन्तीतिनराशंसः त्रिवरूथ.त्रि गृहः सदोहविर्द्धानाग्नीध्रैः । त्रिलोक्यावात्रिगृहः । यस्यच सरस्वत्याअश्विभ्याञ्चईयतेउह्यतेनी- यतेरथः । सयज्ञः । रेत.न रेतश्चअमृतञ्चरूपञ्च जनित्रञ्जन्मच । इन्द्रायइन्द्रे इन्द्रस्यवेति- विभक्तिव्यत्ययः । कथंभूतोयज्ञः । त्वष्टात्वक्षतिः करोत्यर्थः । जगतःकर्ता । दधत्दधातु इन्द्रि-

ऽइन्द्रोनराशंसस्त्रिवरूथःसरस्वत्याश्विभ्यामीयतेरथः ॥ रेतोनरू पममृतंजनित्रमिन्द्रायत्वष्टादधदिन्द्रियाणिवसुवनेवसुधेयस्यव्य न्तुयज ॥ ५५ ॥ देवोदेवैः ॥ देवोदेवैर्वनस्पतिर्हिरण्यपर्णोऽअ श्विभ्याᳬं सरस्वत्यासुपिप्पलऽइन्द्रायपच्यतेमधु ॥ ओजोनजूति

याणिच । वसुवनइति व्याख्यातम् ॥ ५५ ॥ देवोदेवैः । योदेवोवनस्पतिर्यूपः । देवैर्हिरण्यपर्णः यस्यदेवाहिरण्मयानिपर्णानि । रूपकोवालङ्कारः । यश्च अश्विभ्यांसरस्वत्याच सुपिप्पलः । अश्वि- नौसरस्वतीच यस्यवनस्पतेः फलानीत्यर्थः । इन्द्रायइन्द्रार्थञ्च यः पच्यतेफलतिमधुमधुराणिफलानि । सवनस्पतिः ऋषभःऋषभशब्दः पूजावचनः । पूज्यः । जूतिः । जूतिर्जवतेः । वेगवान् । ओज-

स्वभामञ्च भामशब्दः क्रोधवचनः इन्द्रियाणि च नः अस्माकम् अस्मदो द्वयोश्चेति बहुवचनम् दधत्-दधातु। वसुवन इति व्याख्यातम् ॥ ५६ ॥ देवम्बर्हिः। यस्माद्देवम्बर्हिः वारितीनाम् उदकवतीनां वा वारिप्रभवानां वा वरतराणां वा ओषधीनां सम्बन्धि। अध्वरेस्तीर्णम् अश्विभ्यामध्वर्युभ्याम् ऊर्णम्रदाः ऊर्णेव मृदु। सरस्वत्या च। स्तीर्णमित्यनुवर्तते। तस्मात् स्योनं सुखरूपम् हे इन्द्र

त्विषुभोनभामंव्वनस्पतिन्नोंदधदिन्द्रियाणिंव्वसुवनेंव्वसुधेयंस्यव्व्यन्तुयज ॥ ५६ ॥ देवम्बर्हिः ॥ देवम्बर्हिर्व्वारितीनामद्ध्वरेस्तीर्णम्श्विभ्यामूर्णम्रदाः सरस्वत्यास्योनमिन्द्रतेसदः ॥ ईशायैमन्युराजानम्बर्हिषादधुरिन्द्रियंव्वसुवनेंव्वसुधेयंस्यव्व्यन्तुयज ॥ ५७ ॥ देवो

तव सदः स्थानम्। किञ्च तस्मिन्सदसि। ईशायै ईशिताय ऐश्वर्यायमन्युं क्रोधम् त्वां राजानम् इन्द्रियञ्च अश्विनौ च सरस्वती च बर्हिषादधुः। यद्वा ईशानाय तव मन्युं राजानमिन्द्रियञ्च। अश्विनौ सरस्वती च हविषादधुः। वसुवन इति व्याख्यानम् ॥ ५७ ॥ देवो अग्निः। यो देवो अग्निः

स्विष्टकृत् शोभनमिष्टं कर्तव्यमित्यय मधिकारोयस्य सतथोक्तः। देवान् यक्षत् इष्टवान्। यथा-यथम्। यथा स्वंयथायथम् योयथायष्टव्यः सतथेत्यर्थ.। एवंसामान्यत उक्ताअथेदानीं विशे-षतआह। होतारौ अयञ्चाग्निरसौच मध्यमोवायुः। होतृमित्रावरुणौवा। इन्द्रञ्च अश्विनौ च वाचक्तत्वा वाचञ्चसरस्वतीञ्च अग्निञ्च सोमञ्च यक्षदितिसम्बन्धः। स्विष्टकृच्चस्विष्टः शोभनमिष्टः

ऽअग्निः स्विष्टकृद्देवान्यक्षद्यथायथꣳ होतारा विन्द्रमश्विना वाचा वाचꣳ सरस्वतीमग्निꣳ सोमꣳ स्विष्टकृत्स्विष्टऽइन्द्रः सुत्रामा सविता वरुणो भिषगिष्टो देवो वनस्पतिः स्विष्टा देवा ऽआज्यपाः स्विष्टो ऽअग्निरग्निना होता होत्रे स्विष्टकृद्यशो न दधदिन्द्रियमूर्जमपचिति

इन्द्रः सुत्रामाच इष्टःसविता इष्टःवरुणोभिषक् इष्टश्चदेवोवस्पतिः। स्विष्टादेवा आज्यपाः प्रया-जानुयाजाः इष्टश्चाग्निरग्निना। अथेदानीं होता स्वष्टकृत् होत्रेमानुषाय। यशोनदधत्। ददात्यर्थेदधातिः। ददातु। इन्द्रियञ्च ऊर्जंञ्च अपचितिम्पूजाञ्च स्वधामन्नञ्च। वसुवनेइति

व्याख्यातम् ॥ ५८ ॥ अग्निमद्य । सूक्तवाकप्रैषः । (१) अग्निम् अद्यअस्मिन्दिवि होतारम् अवृ-णीत वृतवानयं यजमानः । किंकुर्वन् पचन् पक्तीः पक्तव्यानि वसूनिइतिसा मान्यव-चनम् । अथविशेषः पचन् पुरोडाशान् पशुपुरोडाशान् । बध्नन् पशुंयूपेइतिशेषः । अश्वि-

ॐस्वुधाँव्वंसुवनेंव्वसुधेयंस्यव्व्यन्तुयजं ॥ ५८ ॥ अग्निमुद्यहोतांरमवृ णीतायंस्यजंमान् ऽ पचुन्पक्तीऽपचन्पुरोडाशान्बुध्नन्नुश्विभ्यां छागुँ सरंस्वत्यैमेषमिन्द्रांयऽऋषुभ ँ सुन्वन्नुश्विभ्याॅंसरंस्व त्याऽइन्द्रांयसुत्रामंणेंसुरासोमान्त्सूंपुस्थाऽअद्य ॥ ५९ ॥ सुपुस्था

भ्यांछागम् अश्विनोरर्थेछागम् सरस्वत्यैमेषम् । इन्द्रायचऋषभम् । अन्यच्चसुन्वन् अश्विभ्यांसरस्व-त्यैचइन्द्रायचसुत्राम्णेसुरासोमान् । तानिचवस्तूनिकुतोन्ययजमानः । अग्निहोतारमवृणीतेति-

(१) का० अग्निमद्येति सूक्तवाकप्रैषः । अग्निमद्य होतारमित्यादिः सूक्ता ब्रूहीत्यन्तः कण्डिकात्रयात्मकः सूक्तवाके प्रैषो भवति ।

सम्बन्धः ॥ ५९ ॥ सूपस्थाअद्य । साधुयज्ञमुपतिष्ठति इतिसूपस्थाः अद्यस्मिन्द्यविदेवःवनस्पतिः अभवत् । अश्विभ्यां छागेन सरस्वत्यैचमेषेण इन्द्रायचऋषभेण । कथमेवमगम्यत इत्यतआह । अद्यन्तान्भक्षितवन्तः अश्विप्रभृतयः तान्छागादीन् । कुतआरभ्येत्याह । मेदस्तः वपाया-

ऽअद्य द्देवोव्वनुस्प्पतिंरभवद्दृश्विब्भ्याञ्छागेनुसरस्वत्त्यैमेषेणेन्द्रायऽऋषभेणाक्षँस्तान्म्मेदुस्तऽ प्प्रतिंपचुताग्ग्रंभीषुतावीवृधन्तपुरोडाशैरपुंरश्विनासरस्वुतीन्द्रः सुत्रामासुरासोमाँस्त्वामुद्द्य ॥ ६० ॥ त्वामुद्द्य * ऽऋषऽआर्षेयऽऋषीणान्नपादवृणीतायंय्यजमानोबुहुब्भ्युऽआसङ्ग

आरभ्य । प्रतिपचताग्रभीषत । प्रत्यग्रभीषत प्रतिगृहीतवन्तः । पचतापक्वानि अग्निपक्वानि अवदानानि । अवीवृधन्तच पुरोडाशैः । किञ्च । अपुःपीतवन्तः अश्विनौचसरस्वतीच इन्द्रश्चसुत्रामा । सुरासोमान् सुराचसोमाश्च । यद्वा सुरामयान्सोमान् ॥ ६० ॥ त्वामद्य । देव्यो-

---

* ऋषऽआर्षेयऋ । षीणान्नपाद वृणीतेति समुदायस्यप्रचयन्तु अनेकमपीतिकात्यायनसूत्रेणभवति अस्यार्थः स्वरितादच

होताग्निरुच्यते। त्वाम् अद्य हेऋषे मन्त्राणांद्रष्टः हेआर्षेय यजमानआर्षेयैर्व्रियते इत्येवंसं-
वोध्यते। हेऋषीणामृत्त्विजान्नपात्पुत्र अवृणीतवृतवान् अयंयजमानः। वहुभ्योदेवेभ्यः आस-
ङ्गतेभ्यः त्वामेव अवृणीतेत्यभिप्रायः। किमर्थम् एषःमेमह्यम् देवेषुवसुधनम् वारिवरणीयम्

तेभ्य ऽएषमेदेवेषुवसुवार्य्यायक्ष्यत ऽ इतिताया देवा देवदानान्यदु
स्तान्यस्म्मा ऽआचु * शास्स्वाचंगुरस्वेषितश्चत्वंहोतरसिभद्रवाच्च्याय

आयक्ष्यतेआदास्यति अयन्दातुंसमर्थइति। एवञ्च। तायादेवदानान्यदुः। ता तानि। या यानि।
हेदेवयानि देवादानानि अदुःदत्तवन्तः। इमानि अस्मैयजमानाय दातव्यानीति। तानि-
अस्मैयजमानाय। आचशास्वाच गुरस्व। आकारौभिन्नक्रमौ। आशास्वच इच्छा। आगुरस्वच

---

रात्परव्यञ्जनव्यवहितंपदमनुदात्तमक्षरमेकमनेकंवातत्सर्वमुदात्तमयमवर्वति उदात्तमयः प्रचयापरपर्यायः कुतः इयंसञ्ज्ञास्वरिता-
त्परमनुदात्तमुदात्तमयम् इत्यत्रस्वरिता दितिपञ्चम्यन्तस्यश्रवणात्।

* शास्स्वरास्स्वेत्यत्रत्रद्विसकारो भवतिनान्यत्रकुतः द्विसकार्थ०शास्स्वरास्स्वेति अस्यार्थः द्वौसकारौ अस्मिन्पदद्वयइति
द्विसकारम्पदद्वयम् इतिकात्यायनेनोक्तत्वात् प्रा० अ० ४। सू० १९५।

गुरोरुद्गमने। उद्गच्छच। दानाय। प्रेषितस्त्वासि हेहोतः। भद्रवाच्याय। भन्दनीयवचनाय भद्रञ्चवचनम् त्वं ब्रूयादिति। अथेदानीं प्रेषितोमानुषो होतासूक्तवाकाय। कथंकृत्वासूक्ताब्रूहि। सूक्तानिसाधुवचनानि वदेति ॥ ६१ ॥ समाप्ता सौत्रामणी।

इति उव्वटकृतौ मन्त्रभाष्ये एकविंशतितमोध्यायः २१ ॥

प्रेषितोमानुषः सूक्तवाकाय सूक्ताब्रूहि ॥ ६१ ॥ इतिवाजसनेय संहितायांएकविंशोऽध्यायः २१ ॥

* तेजोऽसिशुक्रममृतमायुष्पाऽआयुर्म्मेपाहि ॥ देवस्यंत्वासवितुः

(१) अथाश्वमेधश्चतुर्भिरध्यायैः तंप्रजापतिरपश्यत्। तेजोसि। सौवर्णम् निष्कम् प्रतिमुञ्च

(१) सर्वकामस्य राज्ञोऽश्वमेधः तस्य फाल्गुनशुक्लाष्टम्यामारम्भः। का० निष्कं प्रतिमुञ्चन् वाचयति तेजोऽसीति। २०। १। ६। चतुःसुवर्णनिर्मित आभरणविशेषो निष्कः तंयजमानकण्ठे प्रतिबध्ननध्वर्युस्तेजोऽसीति मन्त्रं पाठीतयन्तं वाचयति च निष्कं प्रातर्होमान्ते पूर्णाहुतिं कृत्वाध्वर्यवेदद्यादिति सूत्रार्थः।

---

* तेजोसिपञ्चाग्नयएकाहिङ्कारायदेतत्सवितुर्द्द्यविभूर्मालैकाकायद्दे आब्रह्मँस्त्रयोदशशेषादेकैकोनविंठं०शतिश्चतुरित्रंठं०शत्।

न्वाचयति। यस्मात्तेजस्त्वमसि शुक्रस्त्वाग्नेः। अग्निर्हवा अपोभिदध्यावित्युपक्रम्यतासुरेतःप्रा-
सिञ्चत्तद्धिरण्यमभवदितिश्रुतिः। अमृतञ्च अग्निप्रभवत्वात्तदानेनामृतत्व प्रदानाच्च। हिरण्यदा
अमृतत्वं भजन्तेइतिश्रुतिः। आयुषश्चपातागोपायिता। अतः त्वां प्रार्थये। आयुः मेमम-
पाहि। यज्ञसमाप्त्यर्थमायुः प्रार्थ्यते। रशनामादत्ते। (१) देवस्यत्वेतिव्याख्यातम् ॥ १ ॥ इमाम-

**पृभ्णन्रशनामृतस्य पूर्व आयुषि विदथेषु कव्या। ॥ सा**

गृभ्णन्। त्रिष्टुब्रशनादेवत्या। यामिमामग्रग्णन् गृहीतवन्तःरशनान्दर्भमयीम्। ऋतस्य यज्ञस्य
पूर्वेप्रथमे आयुषि यज्ञारम्भेइत्यर्थः। केरशनामगृह्णन्नित्यतआह। विदथेषुकव्या यज्ञेषुकवयः।
विश्वस्रष्टारोवा आद्येसर्गेप्रजापति प्रभृतयः। एतेहिसृष्टिंयज्ञादसृजन्त। सारशनानःअस्माकम्

(१) का० देवस्य त्वेति रशनामादाय ब्रह्मन्नश्वं भन्त्स्यामीत्याह। २०। १। २७। देवस्यत्वेत्यादि·सरमारपन्तीत्यन्तेन
मन्त्रेण त्रयो दशारत्निं दर्भमयीं द्विगुणामश्वबन्धनार्थां रशनां रज्जुमादाय ब्रह्मन्नश्वमित्यादि-तेन-राध्यासमित्यन्तं
मन्त्रं ब्रह्माणंप्रत्याहेति सूत्रार्थः।

अस्मिन्सुतेयज्ञे आबभूव अभूताउत्पन्ना। ऋतस्यसामन्। संमननेयज्ञप्रारम्भे। सरंयज्ञप्रसरम् आरपन्तीशब्दायमाना ॥२॥ (१) वध्नात्यश्वम्। अभिधासि। यस्त्वम् अभिश्चासि अभिधातव्योसि। भुवनञ्चासि। भुवनमाश्रयः। यन्तानिमनकर्ताचासि। धर्ताधरयिताचासि। सत्वमेवं प्रभावःसन्।

नोऽअस्मिन्त्सुतऽआबंभूवऽऋतस्यसामंन्त्सुरम्ारपंन्ती ॥ २ ॥ अभिधाऽअंसि ॥ अभिधाऽअंसिभुवंनमसियुन्तासिंधुर्त्ता ॥ सत्वमुग्निंव्वैश्वानुरᳪसप्प्रंथसङ्गच्छुस्वाहांकृतः ॥३॥ स्वुगात्वा ॥ देवेब्भ्यंः प्प्रुजापंतयेब्ब्रह्मन्नश्वंम्भुन्त्स्यामिं देवेब्भ्यंः प्प्रजापंतयेतेनंराध्यासम् ॥ त

अग्निंवैश्वानरम्। कथंभूतम् सप्रथसम् सर्वतःपृथुम्। तिर्यगूर्ध्वमधश्चैवमहत्तैश्वर्येण पृथुम्। गच्छ। स्वाहाकृतः साधुहुतश्चसन् ॥ ३ ॥ स्वगात्वा। हेअश्वस्वगाकरोमित्वां देवेभ्यः प्रजापतयेच। स्वगाशब्दोऽव्ययजन्तः स्वयङ्गामिनमित्यर्थः। ब्रह्माणमामन्त्रयते। ब्रह्मन्नश्वम्भन्त्स्यामि। वध्नातेरे-

(१) का० तं बधानेति ब्रह्मानुज्ञातोऽभिधा असीति बध्नात्यश्वम्। तं बधान देवेभ्यः प्रजापतये तेन राध्नुहीति मन्त्रेण ब्रह्मणानुज्ञातोऽध्वर्युरभिधा असीत्यादि-स्वगात्वा-देवेभ्यः-प्रजापतय इत्यन्तेन मन्त्रेण रशनयाश्वं बध्नाति।

शु॰ य॰ सं॰ ४९६ उ॰ भा॰

अ॰ २२

तद्रूपम्श्वस्यबन्धनं करिष्यामि। देवेभ्यः प्रजापतयेच। तेनबन्धेनाहं राध्यासम्राधिंप्राप्नुयाम्। राधिःकर्मपरिसमाप्तिः। ब्रह्माप्रसौति। तम्बधान। यमिच्छसितमश्वम्बधान तस्यबन्धनङ्कुरु। किमर्थम् देवेभ्यः प्रजापतयेच। तेनबन्धेनराध्नुहि। यज्ञसमाप्तिंप्राप्नुहीत्यर्थः ॥ ४ ॥ (१) प्रोक्ष-

बधानदेवेब्भ्यः प्रजापतयेतेनराध्नुहि ॥४॥ प्रजापतयेत्वा ॥ प्रजापतयेत्वाजुष्टम्प्रोक्षामीन्द्राग्निब्भ्यान्त्वाजुष्टम्प्रोक्षामिव्वायवेत्त्वाजुष्टम्प्रोक्षामिव्विश्वेब्भ्यस्त्वादेवेब्भ्योजुष्टम्प्रोक्षामिसर्व्वेब्भ्यस्त्वादेवेब्भ्योजुष्टम्प्रोक्षामि ॥ योऽअर्व्वन्तञ्जिघांसतितमब्भ्यमीतिव्वरुणः ॥ प

क्ष्यश्वम्। प्रजापतयेत्वा जुष्टम्प्रोक्षामीति। ऋजवः प्रोक्षणमन्त्राः। यजमानंवाचयति। योऽअर्व्वन्तम्। गायत्री। अर्द्धेनाश्वस्तुतिः। यःपुरुषोर्व्वन्तम् अश्ववचनोर्व्वशब्दः। अश्वञ्जिघांसति हन्तु-

शिवम्

(१) का॰ स्थावरा अपो गत्वा प्रजापतये त्वेति प्रोक्षत्यश्वं प्रतिमन्त्रम्। ततोऽध्वर्युः स्थावरास्तडागादिस्था अपो गत्वा ताभिरद्भिः पञ्चमन्त्रैः प्रतिमन्त्रमश्वं प्रोक्षति।

मिच्छति। तमश्वम्यमीति। मीर्हिंसायाम् हिनस्तिवरुणः। श्वानञ्चतुरक्षम् हत्वाऽधस्पदमश्वस्यो पप्लावयति। "यस्यशुनश्चक्षुषोः समीपे पुण्ड्रेस्तः सचतुरक्ष उच्यते" मर्तोमर्तः। परःपराभूतः अध-

रोमर्त्तःपर॒ऽश्श्वा॥ ५॥ [५] अग्नये॒स्वाहा॥ अग्नये॒स्वाहा॒सोमा॑य॒ स्वाहा॒पाम्मोदा॑य॒स्वाहा॑सवि॒त्रे॒स्वाहा॑वा॒यवे॒स्वाहा॒विष्ण॑वे॒स्वाहेन्द्रा॑ य॒स्वाहा॒बृह॒स्पत॑ये॒स्वाहा॑मि॒त्राय॒स्वाहा॒वरु॑णाय॒स्वाहा॑॥ ६॥ [१] हिङ्का॒राय॒स्वाहा॑॥ हिङ्का॒राय॒स्वाहा॒हिङ्कृ॑ताय॒स्वाहा॒क्रन्द॑ते॒स्वाहा॑व क्र॒न्दाय॒स्वाहा॒प्प्रोथ॑ते॒स्वाहा॑प्प्र॒प्प्रोथाय॒स्वाहा॑ग॒न्धाय॒स्वाहा॑घ्रा॒ताय॒

स्पदन्नीतः मर्तोमनुष्यः योऽर्वन्तञ्जिघांसतीति। परःपराभूतश्श्वा॥ ५॥ दशाश्वस्तोमीयानि- जुहोति। अग्नयेस्वाहेति ऋजवोमन्त्राः॥ ६॥ अश्वस्यरूपाणि जुहोति। (१) हिङ्कारायस्वाहेति।

(१) हिङ्करणं हिङ्कारस्तस्मै। हिङ्कृताय कृतंयद्धिङ्कृतं तस्मै। क्रन्दतीति क्रन्दन्। अव नीचैः क्रन्दतीत्यवक्रन्दः। प्रोथतीति

एकोनपञ्चाशत् । अश्वसंप्रचेष्टितानि क्रियाश्चात्राभिधीयन्ते ॥ ७ ॥ यतेस्वाहा एतीतियन् तस्मै

स्वाहानिविष्टायस्वाहोपविष्टायस्वाहासन्दितायस्वाहावल्गतेस्वाहासीनायस्वाहाशयानायस्वाहास्वपतेस्वाहाजाग्रतेस्वाहाकूजतेस्वाहाप्रबुद्धायस्वाहाविजृम्भमाणायस्वाहाविचृत्तायस्वाहासꣳहानायस्वाहोपस्थितायस्वाहायनायस्वाहाप्रायणायस्वाहा॥७॥यतेस्वाहा॥ *यतेस्वाहाधावतेस्वाहोद्द्रावायस्वाहोद्द्रुतायस्वाहाशूका

प्रोथन् प्रोथृ पर्याप्तौ । प्रकृष्टःप्रोथो घोणायस्य घोणा तु प्रोथमस्त्रियाम् । गन्धोऽस्यास्ति गन्धः । घ्रातमाघ्राणमस्यास्ति घ्रातः । निविशते निविष्टः । उपविशतीत्युपविष्टः । सम्यक् दितं लूनं खण्डनं यस्य स संदितः । वल्गतीति वल्गन् । आस्तेऽसावासीनः । शेतेऽसौ शयानः । स्वपिति स्वपन् । जाग्रतीति जाग्रत् । कूजतीति कूजन् । प्रकर्षेण बुध्यते प्रबुद्धः । विजृम्भते विजृम्भमाणः । चृतोदोप्तौ विशेषेण चर्त्तति विचृतः । संहानाय सङ्गतशरीराय । उपतिष्ठते उपस्थितः । अयतेऽयनः । प्रकृष्टमयते प्रायणः तस्मै स्वाहा ।

* धावतीति धावन् । उत् अधिको द्रावो गतिर्यस्य स उद्द्रावः । उत् अधिकं द्रुतं यस्य स उद्द्रुतः । शू इति

यते स्पष्टमन्यत् ॥ ८ ॥ अथ सावित्रीणामिष्टीनाम् । तत्सवितुरित्यादिकाः षट्याज्यानुवाक्याः

रायुस्वाहाशूकृतायुस्वाहानिषण्णायुस्वाहोत्थितायुस्वाहाजवायुस्वाहाबलायुस्वाहाविवर्तमानायुस्वाहाविवृत्तायुस्वाहाविधून्वानायुस्वाहाविधूतायुस्वाहाशुश्रूषमाणायुस्वाहाशृण्वतेस्वाहेक्षमाणायुस्वाहेक्षितायुस्वाहावीक्षितायुस्वाहानिमेषायुस्वाहायदत्तितस्मैस्वाहायत्पिबतितस्मैस्वाहायन्मूत्रङ्करोतितस्मैस्वाहाकुर्वतेस्वाहाकृतायुस्वाहा ॥ ८ ॥ [ २ ] तत्सवितुः ॥ तत्सवितुर्वरेण्यायुस्म

करोतीति शूकारः । शूकृतमस्यास्ति शूकृतः । निषीदति निषीदन् । उत्तिष्ठते उत्थितः । जवते जवो वेगवान् । बलमस्यास्ति बलः । विवर्तते स विवर्तमानः । विवर्ततेस्मविवृत्तः । विधूनुते कम्पते स विधून्वानः । विधूयतेऽसौ विधूतः । श्रोतुमिच्छति शुश्रूषमाणः शुश्रुषमाणः ? सन इति शानन् । शृणोति शृण्वन् ईक्षते स ईक्षमाणः । ईक्ष्यते स्मेति ईक्षितः । विशेषेण ईक्षितो वीक्षितः । निमिषति निमेषः । यत् किञ्चित् अत्ति तस्मै । यत् जलादिकं पिबति तस्मैपानकर्त्रे । यन्मूत्रं करोति तस्मै मूत्रयते । करोति कुर्वन् । कृतमस्यास्ति कृतः । तस्मै स्वाहेति सर्वत्र ।

सावित्र्योगायत्र्य: । आद्याव्याख्याता ॥ ९ ॥ हिरण्यपाणिमूतये हिरण्मयौपाणीयस्य सहिरण्यपाणि:तम् ऊतये अवनायसवितारम् उपह्वयेआह्वायामि । किमिति । यत: स: सविता चेत्तासर्वार्थंद्दक् । महतीचदेवता पदंचस्थानं च ज्ञानकर्मसमुच्चयकारिणाम् ॥ १० ॥ देवस्यचेततः । देव-

र्गोदेवस्यधीमहि ॥ धियोयोनंःप्रचोदयात् ॥ ९ ॥ हिरंण्यपाणि मूतयें ॥ सवितारमुपंह्वये ॥ सचेत्तादेवतापदम् ॥ १० ॥ देवस्यचेतं तः ॥ देवस्यचेतंतोमहीम्प्रसंवितुर्हंवामहे ॥ सुमतिंसत्यराधसम् ॥ ११ ॥ सुष्टुतिंसुमतीवृधंः ॥ सुष्टुतिंसुमतीवृधोरातिंसवितुरी

स्वदानादिगुणयुक्तस्य च ततः विराजमानस्य महीम्महतीम् प्रहवामहे आह्वयामि सवितुः संवन्धिनीं सुमतिङ्कल्याणींमतिम् । किंभूतांमतिम् सत्यराधसम् अनश्वरधनाम् सत्यसाधयित्रींवा ॥ ११ ॥ सुष्टुतिंं सुमतीवृधः । सुष्टुतिंशोभनांस्तुतिम् सुमतीवृधः शोभनांमतिंवर्द्धयतीति सुमतीवृत्

तस्यसुमतीबुध: सम्बन्धिनीरातिंदानंच सवितु: ईमहेयाचेम। प्रदेवायमतीविदे देवस्यमतीविद इत्युभयो: पदयो: विभक्तिव्यत्यय: ॥ १२ ॥ रातिंसत्पतिम्। रादाने। रातिनिमित्तत्वाद्रातिशब्देन सवितैवोक्त:। रातिदानरूपम् यद्वाराति ददातीतिरातिम्। सत्पतिं सतांपालयितारम् महे- पूजयामि। सवितारम् उपह्वये। आह्वयामि च। आसवम्। आभिमुख्येप्रसौति कर्माणीत्यासव:

मह्े॥ प्रदेवायंमतीविदे॥१२॥ रातिꣳसत्त्पतिम्॥ रातिꣳसत्त्पतिम्म्हेसंवितारमुपंह्वये॥ आसुवन्देववीतये॥१३॥ देवस्यं सवितुर्म्मतिम्मासुवंव्विश्श्वदेव्व्यम्॥ धियाभगम्म्मनामहे॥ १४॥ अग्निꣳस्तोमेन

तमासबंसवितारम्। किमर्थं पूजयाम्याह्वयामिच। देववीतये देवतर्पणाय॥ १३॥ देवस्यसवितु:। मतिम् आसवम् प्रसवरूपाम्। विश्वदेव्यं सर्वेभ्योदेवेभ्योहितम्। धियास्वकीयया प्रज्ञया भर्गंभजनीयं धनम् मनामहे याचामि। द्विकर्माचायंधातु: तेनमतिशब्दे भगशब्देचद्वितीया॥ १४॥ अग्निंस्तोमेन। तिस्रआग्नेय्योगायत्र्य:। हेअध्वर्यो अग्निंस्तोमेन स्तुतिभि: बोधय अवगतार्थंकुरु

किंकुर्वन् समिधाज: संदीपयन्। कथंभूतमग्निम् अमर्त्यम् अमरणधर्माणाम् किमर्थंपुरस्कृत्येति-चेत्। हव्याहवींषिदेवेषु न: अस्मत्संबन्धीनि दधत् दधातु। सद्यास्याधिकारइति॥ १५॥ सह-व्यवाट्। यदोऽत्राध्याहार: तच्छब्दश्रवणात्। य: हव्यवाट् हविषांवोढा अमर्त्य: अमरण-धर्मा उशिक् मेधावी। दूत: देवानाम्। चनोहित:। चनइत्यन्ननाम। हविर्भूतस्यान्नस्य-

न॥ बोधयसमिधानोऽअमर्त्त्यम्॥ हुव्याद्देवेषुनोदधत्॥ १५॥ स हंव्युवाट्॥ सहंव्युवाडमर्त्त्यऽउशिग्दूतश्चनोहितः॥ अग्निर्द्धिया समृण्वति॥१६॥ अग्निन्दूतम्पुरोदधेहव्युवाहमुपंब्रुवे॥ देवाँ२॥ ऽआसादयादिह॥ १७॥ अजीजनोहिपवमानसूर्य्यँविधारेशक्मना

भक्षणार्थं निहित:। स: अग्नि: धियाप्रज्ञया समृण्वति संगच्छते देवै:सह हविष: तर्पणाय॥ १६॥ अग्निन्दूतम्। यम्अग्निमदूतं देवानांदूतम् अहंपुरोदधे अग्रत: स्थापयामि हव्य-वाहम् हविषोवोढारम् तम् उपगम्यब्रुवेब्रवीमि। किंब्रवीमितदाह। देवानासादयादिह। हेअग्नेदेवान् आसादत् आसादय इह अस्मिन्यज्ञे गृहेयागाय॥ १७॥ अजीजनोहि।

पावमानीसौमीविहृतिः अनुष्टुप् । यस्मात् अजीजनः जनितवानसि जनयसिवा हेपवमान सोमसूर्यम् । यस्माच्च शक्मनाचर्मणा पयः अपः विधारे उपरिष्टात्विधारयसि । केनहेतुना गोजीरया जीवेरेतद्रूपम् गोजीविकयाहेतुभूतया । कथंनुनामगावोजीवेयुरिति । गोभिर्हि-यज्ञस्तायते प्राणिनश्चजीवन्तीति ॥ किंकुर्वन् । रंहमाणः पुरंध्या ॥ रंहमाणः गच्छन्

पयंः ॥ गोजीरयारꣳहमाणऽपुरंन्ध्या ॥ १८ ॥ [ ९ ] विभूर्मात्रा ॥

प्रभूऽपित्राश्वोसिहयोस्यत्योसिमयोस्यर्वासिसप्तिरसिवाज्यसि

दशापवित्रा द्रोणकलशं प्रतिपुरन्ध्यावहुधारयित्राधारयातस्मात्त्वांस्तुमद्भुतिशेषः ॥ १८ ॥

(१) अध्वर्युर्यजमानौदक्षिणेश्वकर्णेजपतः । विभूर्मात्रा । अश्वउच्यते । यस्त्वंविभूरसिविभवसि मात्राप्रभवसिचपित्रा । इयंवैमातासौतेपितेतिश्रुतिः । अथाश्वंनामक्रियाभिस्तौति । अश्वो-महाशनस्त्वमसि । हयोसि हिगतौअस्यहयः । अत्योसि अतसातत्यगमने । मयोसिमय-

(१) का० अध्वर्युर्यजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति । तृतीयायां सावित्र्यामिष्टौ समाप्तायामध्वर्युर्यजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति सूत्रार्थः ।

इति सुखनाम। सुखरूपोसि अर्वासि। ऋगतावस्थार्वा। सप्तिरसिसरणोसि। वाज्यसिवेजनवानसि। वृषासेक्तास्यसि। नृमणास्यसि। नृणांमनुष्याणां यत्रमनः सन्नृमणाः। ययुर्नामासि-ययुः एवंनामात्वमसि। ययुर्यानशीलः। शिशुर्नामासि शिशुः एवं नामात्वमसि। शंशनीयोभवसि। अपारमार्थिकोवानामशब्दः। यस्त्वमेवं प्रभावः तन्त्वांब्रवीमि। आदित्यानांपत्वा-

व्वृषांसिनृमणाऽअसि॥ ययुर्न्नामासिशिशुर्न्नामास्यादित्यानाम्पत्वा न्न्विंहिदेवांऽआशापालाऽएतन्देवेभ्योश्वम्मेधायप्प्रोक्षितꣳरक्षतेह रन्तिरिहरमतामिहधृतिरिहस्वधृतिःस्वाहा॥ १९॥ [२] काय

न्विहि। पत्वापतनमार्गेण। येनयथा आदित्यापतन्तिगच्छन्ति तमनुगच्छेत्यर्थः। रक्षिणोस्यादिशति। देवाआशापालाः। एतन्देवेभ्यः प्रोक्षितम् अश्वम् मेधाययज्ञायरक्षत। शिवम् चतस्रोधृतीर्जुहोति। अश्वउच्यते इहरन्तिः रमणम् इहरमताम् इहधृतिः इहस्वधृतिः साधुधृतिः। इहयज्ञे हेअश्वत्वक्रीडादयइत्यर्थः॥ १९॥ औद्ग्रभणानिजुहोति।

(१) कायस्वाहा। कस्मैस्वाहा। कतमस्मैस्वाहा। स्वाहाधिमाधीताय। पूर्वंस्वाहाकारान्तास्ति-स्त्र्याहुतयः प्राजापत्याः। आधिमाध्यानम् चतुर्थीचात्रकर्तव्या। आधयेस्वाहेति। आधीता-यस्वाहा। मनः मनसेईतिविभक्तिव्यत्ययः। प्राजापत्यायस्वाहा। चित्तंविज्ञाताय। चित्ता-

स्वाहां ॥ कायस्वाहाकस्मैस्वाहांकतमस्मैस्वाहास्वाहाधिमाधीता यस्वाहामनः प्रजापतयेस्वाहांचित्तंविज्ञातायादित्यैस्वाहादित्यै मह्यैस्वाहादित्यैसुमृडीकायैस्वाहासरस्वत्यैस्वाहासरस्वत्यैपावका यैस्वाहासरस्वत्यैबृहत्यैस्वाहांपूष्णेस्वाहांपूष्णेप्रपथ्यायस्वाहांपू

येतिविक्तिव्यत्ययः। अदित्यैमह्यै। महपूजायाम्। पूजितायै। अदित्यैसुमृडीकायै मृड-सुखने। सुखयित्र्यै ॥ सरस्वत्यैस्वाहा। सरस्वत्यैपावकायैपावयित्र्यै। सरस्वत्यैबृ-हत्यैमहत्यै। पूष्णेस्वाहा। पूष्णेप्रपथ्याय। प्रगतः पन्थाः प्रपथः तत्रभवः प्रपथ्यः।

(१) का० काय स्वाहेति चाश्वमेधिकानि त्रीणि कृष्णाजिनदीक्षातोऽध्वरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमेधिकानि।

पूष्णेनरन्धिषाय । नरान्दधाति धारयतीतिनरन्धिषः त्वष्ट्रेस्वाहा । त्वष्ट्रेतुरीपाय । तूर्णं-पातिरक्षतीतितुरीपः । त्वष्ट्रे पुरुरूपायबहुरूपाय । विष्णवेस्वाहा । विष्णवेनिभूयपाय ।

पूष्णे नरन्धिषाय स्वाहा त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा विष्णवे स्वाहा विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहा ॥२०॥ विश्वो देवस्य ॥ नेतुर्मर्तो वुरीत सख्यम् ॥ विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥ २१ ॥ [ १ ] आब्रह्मन्

नीचैर्भूत्वायः पातिसनिभूयपः । विष्णवेशिविष्टाय । शिपिंपशुंयज्ञस्य वेष्टयतिसाधुंकरो-तीति शिपिविष्टः ॥ २० ॥ (१) विश्वोदेवस्येति व्याख्यातम् । २१ ॥ (२) जयति । आब्रह्मन् ।

(१) का० षडाग्निकानि चतुःस्थाने दशमं विश्वो देवस्येति । समस्यां दीक्षणीयायामयं विशेषः प्रतययानि चत्वार्यौद्ग्रभ-णान्याध्वरिकाणि ह्रूयन्ते तेषां चतुर्णां स्थाने षडाग्निकानि आकूतिं प्रयुजमग्निंगए स्वाहेति हुत्वाश्वमेधिकानि च चीणि विष्णवे स्वाहेत्यादीनि हुत्वा विश्वो देवस्येति दशममौद्ग्रभणं जुहोतीति सूत्रार्थः ।

(२) का० कृष्णाजिनाद्या समिदाधानात् कृत्वा ब्रह्मन्निति जपत्य सर्गकाल एके । कृष्णाजिनदीक्षात आरभ्योखायां त्रयो-

आजायतां हे ब्रह्मन् ब्राह्मणः ब्रह्मवर्चसी । यज्ञाध्ययनशीलो ब्राह्मण आजायतामित्यर्थः । राष्ट्रे । आजायतामस्य राष्ट्रे राजन्यः शूरः इषव्यः इषुभिः विध्यतीतिइषव्यः इषुषुवासाधुः इषव्यः । अतिव्याधीमहारथः । अतिविध्यतिद्विषन्तमित्यतिव्याधी । महारथश्च दोग्ध्री-

न् ॥ आब्ब्रह्म्मन्न्ब्राह्म्मणोब्ब्रह्म्मवर्च्चसीजायतामाराष्ट्रे राजन्न्यःशूर ऽइषव्व्योतिव्व्याधीमहारथोजायतान्दोग्ग्ध्रीधेनुर्व्वोढानड्वानाशुः स प्तिःपुरन्धिर्य्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यव्वीरोजाय

धेनुः । राष्ट्रे आजायतामितिसर्वत्रसम्बन्धः । वोढा अनड्वान् आशुः शीघ्रः सप्तिरश्वः । पुर-न्धिर्योषा । पुरंशरीरं रूपादिगुणसमन्वितं धारयतीति पुरन्धिः ॥ जिष्णूरथेष्ठाः । जय-नशीलः रथेतिष्ठतीतिरथेष्ठायुयुत्सुः । सभेयोयुवा । सभामर्हतिविद्यागुणचरित्रैः सभेयः युवा

दशममिदाधानान्तं कृत्वाध्वर्युरेवा ब्रह्मन्निति जपति उत्सर्गैरुपतिष्ठत इत्युत्सर्गोपस्थानकाले एके आब्रह्मन्निति जप-मिच्छन्ति यद्वाश्वस्योत्सर्गकाले विभूर्मात्रे ति जपानन्तरमित्यर्थः ।

आत्मस्ययजमानस्य आजायताञ्चास्त्र यजमानस्य धीरः पुत्रः । किंच निकामेनिकामेनः पर्जन्योवर्षतु । प्रार्थनायामवश्यम्भवतीति निकामः अभ्यासोवीप्सार्थः । अस्माकं राष्ट्रइत्यर्थः । फलवत्यः अतिशयेनफलयुक्ताः नोऽस्माकंराष्ट्रे ओषधयः पच्यन्ताम् । योगक्षेमोनः कल्पताम् ।

तान्निकामेनिंकामेनः पुर्जन्न्योंव्वर्षतुफलंवत्योनऽओषंधयःपच्यन्ताँ

य्योगक्षेमोनंःकल्पताम् ॥ २२ ॥ [१] प्राणायस्वाहां ॥ पानायस्वा

हांव्व्यानायस्वाहाचक्षुषेस्वाहाश्श्रोत्रांयस्वाहांव्वाचेस्वाहामनंसेस्वा

हां ॥२३॥ [१] प्राच्यैंदिशे ॥ स्वाहार्व्वाच्यैंदिशेस्वाहादक्षिणायैदिशे

योगोद्रव्यादीनांसंयोगः क्षेमस्तेषामेवपरिपालनम् । योगश्चक्षेमश्चास्माकं क्लृप्तोभवतु । योगश्च-क्षेमश्चेतिद्वन्द्वः तत्रनपुंसकलिङ्गतावाश्यात् द्विवंचनस्वाइति । तत्रच्छान्दसोविसर्जनीयोद्रष्टव्यः ॥२२॥

(१) आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणायस्वाहेति प्रति मन्त्रसर्वंरात्रमावर्तम् । २३ ॥

(१) अज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वाहेति प्रतिमन्त्रंठ० सर्वंरात्रमावर्तम् ।

स्वाहार्वाच्यैदिशेस्वाहाप्रतीच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहोदीच्यै
दिशेस्वाहार्वाच्यैदिशेस्वाहोर्ध्वायैदिशेस्वाहार्वाच्यैदिशेस्वाहा
वाच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २४ ॥ [१] अद्भ्यःस्वाहावा
र्भ्यःस्वाहोदकायस्वाहातिष्ठन्तीभ्यःस्वाहास्रवन्तीभ्यःस्वाहास्य
न्दमानाभ्यःस्वाहाकूप्याभ्यःस्वाहासूद्याभ्यःस्वाहाधार्याभ्यः
स्वाहार्णवायस्वाहासमुद्रायस्वाहासरिरायस्वाहा ॥ २५ ॥ [१]
वातायस्वाहा ॥ धूमायस्वाहाभ्रायस्वाहामेघायस्वाहाविद्योतमा
नायस्वाहास्तनयतेस्वाहावस्फूर्जतेस्वाहावर्षतेस्वाहाववर्षतेस्वा

प्राच्यै । दिग्देवताः ॥ २४ ॥ अद्भ्यः । जलदेवताः ॥ २५ ॥

होग्रंव्वर्षतेस्वाहाशीघ्रंव्वर्षतेस्वाहोद्गृह्णतेस्वाहोद्गृहीतायस्वा
हाप्रुष्णतेस्वाहाशीकायतेस्वाहाप्रुष्वाभ्यःस्वाहाह्रादुनीभ्यःस्वा
हानीहारायस्वाहा ॥ २६ ॥ [ १ ] अग्नयेस्वाहा ॥ अग्नयेस्वाहा
सोमायस्वाहेन्द्रायस्वाहापृथिव्यैस्वाहान्तरिक्षायस्वाहादिवेस्वाहा
दिग्भ्यः स्वाहाशाभ्यः स्वाहोर्व्यै दिशेस्वाहार्वाच्यैदिशेस्वा
हा ॥ २७ ॥ [ १ ] नक्षत्रेभ्यःस्वाहा ॥ नक्षत्रियेभ्यःस्वाहाहोरात्रे
भ्यःस्वाहार्धमासेभ्यःस्वाहामासेभ्यः स्वाहाऽऋतुभ्यःस्वाहार्त्त
वेभ्यः स्वाहासंवत्सरायस्वाहाद्यावापृथिवीभ्यां स्वाहाचन्द्राय

वाताय । मेघोपयोगिदेवताः ॥ २६ ॥ अग्नये । अग्न्यादयः प्रसिद्धाः ॥ २७ ॥

स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा वसुभ्यः स्वाहा रुद्रेभ्यः
स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा मू
लेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वाहा पुष्पेभ्यः
स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥ २८ ॥ [ १ ] शतम् १३००
पृथिव्यै स्वाहा ॥ पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय
स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहौषधीभ्यः स्वाहा
वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरी
सृपेभ्यः स्वाहा ॥ २९ ॥ [ १ ] असवे स्वाहा ॥ असवे स्वाहा वसवे

नक्षत्रेभ्यः । नक्षत्रादयः कालाधिष्ठात्र्यः ॥ २८ ॥ पृथिव्यै । पृथिव्यादयो लोकाधिष्ठात्र्यः ॥ २९ ॥

शु० य० सं० ५०४ उ० भा०

स्वाहा त्रिभुवे स्वाहा । भ्रिवं स्वाहा गणश्रियै स्वाहा गणपतये स्वाहाभि
भुवे स्वाहाधिपतये स्वाहा शूषाय स्वाहा सं सुर्प्याय स्वाहा चन्द्राय स्वाहा
ज्योतिषे स्वाहा मलिम्लुचाय स्वाहा दिवापतये स्वाहा ॥ ३० ॥ [ १ ]
मधवे स्वाहा ॥ मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा न
भसे स्वाहा नभस्याय स्वाहेषाय स्वाहोर्ज्जाय स्वाहा सहसे स्वाहा स
हस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहा हसस्पतये स्वाहा ॥ ३१ ॥
[ १ ] वाजाय स्वाहा ॥ प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा स्वः
स्वाहा मूर्ध्ने स्वाहा व्यश्नुविने स्वाहान्त्याय स्वाहान्त्याय भौवनाय स्वा

अंसवे । अश्वादयश्च ॥ ३० ॥ मधवे । मध्वादयो मासाधिष्ठातारः ॥ ३१ ॥

अ० २२ शिवम् ५०४

हा भुवंनस्य पतंये स्वाहाधिंपतये स्वाहां ॥ ३२ ॥ [ १] आयुंर्य्ज्ञेनं ॥

कल्पतां स्वाहां प्राणो य्ज्ञेनं कल्पतां स्वाहांपानो य्ज्ञेनं कल्प

तां स्वाहां व्यानो य्ज्ञेनं कल्पतां स्वाहोदानो य्ज्ञेनं कल्पतां

स्वाहां समानो य्ज्ञेनं कल्पतां स्वाहा चक्षुंर्य्ज्ञेनं कल्पतां स्वा

हा श्रोत्रंय्ज्ञेनं कल्पतां स्वाहा वाग्य्ज्ञेनं कल्पतां स्वा

हा मनों य्ज्ञेनं कल्पतां स्वाहात्मा य्ज्ञेनं कल्पतां स्वाहां ब्र

ह्मा य्ज्ञेनं कल्पतां स्वाहा ज्योतिंर्य्ज्ञेनं कल्पतां स्वाहा

स्वर्य्ज्ञेनं कल्पतां स्वाहां पृष्ठं य्ज्ञेनं कल्पतां स्वाहां य्ज्ञो

वाजाय । वाजादयोऽन्नाधीशाः ॥ ३२ ॥

शु० य० सं० ५०५ उ० भा०

आयुः । यज्ञेनाश्वमेधेनायुः कल्पताम् । एवमग्रेऽपि प्रार्थनामन्त्राः ॥ ३३ ॥ व्युष्टयाद्वतिव्युष्टयम् स्वर्गायेत्युदिति । प्राणायस्वाहेत्यारभ्य द्वादशभिः कण्डिकासंमिते रनुवाके देवताउक्ताः आज्यादिहविर्भिः । एतेसर्वेएवयागाः महतोयज्ञस्यलोककालाग्न्यादिवपुषो वयविनोवयवभूताः । यथा

युज्ञेनकल्पताᳪस्वाहा ॥ ३३ ॥ एकस्मैस्वाहाद्वाभ्याᳪस्वाहा शतायस्वाहैकशतायस्वाहाव्युष्ट्यैस्वाहास्वर्गायस्वाहा ॥ ३४ ॥ [१]

इतिश्रीवाजसनेयसंहितायांदीर्घपाठेद्वाविंशोऽध्यायः २२ ॥

देवदत्तस्यावयविनो वयवभूताः । शिरः पाण्यादयः । सोयमश्वमेधः प्रजापतेरवयविनोवयवभूतः प्रजापतेश्चात्मनः । सोयमात्मा । शाखाप्रशाखागतः स्तूयतेहूयतेच ज्ञानकर्मसमुच्चयकारिभिर्यजमानैः । एकस्मैस्वाहा द्वाभ्याᳪ स्वाहेति प्रकारदर्शनम त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहेति एकशतात् । ३४ ॥

इति उव्वटकृतौ मन्त्रभाष्ये द्वाविंशोध्यायः ॥ २२ ॥

अ० २२ शिव ५०५

(१) हिरण्यगर्भः सम्। महिम्नः (२) पुरोरुक्। व्याख्यातम्॥ १॥ उपयामगृहीतोसि। प्रजा-

* हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्॥ सदाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम॥ १॥ उपयामगृहीतोसि॥ प्रजापतये त्वा जुष्टङ्गृह्णाम्येष ते योनिः सूर्यस्ते महि

पतयेत्वा जुष्टमभिरुचितं गृह्णामि। सादयति। (३) एषतेतव योनिः स्थानं सूर्यस्तवमहिमा

(१) द्वाविंशे होममन्त्रास्त्रयोविंशेध्याये शिष्टं कर्मोच्यते।

(२) का० प्रातरुक्थ्यो महिमानौ गृह्णाति सौवर्णेन पूर्वं ० हिरण्यगर्भ इति। प्रातर्द्वितीयेऽहनि उक्थ्यसंस्थमहर्भवति तत्र महिमसंज्ञौ द्वौ ग्रहौ गृह्णाति आगन्तुत्वादाग्रयणोक्थ्ययोर्मध्ये तौ गृह्णाति अन्तराग्रयणोक्थ्यावागन्तुस्थानं ग्रहाणामिति वचनात् द्वयोर्मध्ये पूर्वं महिमानं सौवर्णेनोलूखलेन गृह्णाति।

(३) का० एष ते योनिरिति ग्रहसादनम्। एष ते योनिः स्थानं ते तव महिमा शक्तिः सूर्यः दीपस्येव प्रभा।

---

* हिरण्यगर्भो यःप्राणतोद्विकौ युञ्जन्त्यष्टौ वायुष्टा पञ्च प्राणाय तिस्र उक्षकथ्या द्वादशगायत्रीकस्त्वाषट्कौ कः स्विदष्टौ कास्विदश सुभूः स्वयम्भूस्तिस्र एकादश पञ्चषष्टिः।

महाभाग्यंशक्तिः दीपस्येवप्रभा । जुहोति । यस्तेहन् । यस्तव अहनिसंवत्सरेच महिमासंवभूव संभूतउत्पन्नः । अहर्निनिमित्तभूते सर्वाण्येव भूतानिसम्पद्यन्ते । निमित्तसप्तम्यश्चैताः । चर्मणिद्वीपिनंहन्ति दन्तयोर्हन्तिकुञ्जरमिति यथा । यः तेवायौ अन्तरिक्षेच महिमासंवभूव । यस्तेदिवि चसूर्ये महिमा संवभूव । तस्मैतेतव महिम्ने प्रजापतयेच स्वाहादेवेभ्यश्च ॥ २ ॥

मा ॥ यस्तेहन्त्संव्वत्सरेमहिमासम्बभूवयस्तेंव्वायावन्तरिक्षेमहिमा सम्बभूवयस्तेदिविसूर्य्येमहिमासम्बभूवतस्मैतेमहिम्नेप्रजापतये स्वाहांदेवेब्भ्यः ॥ २ ॥ [ २ ] यः प्राणतोनिमिषतोमहित्वैक ऽ इद्राजाजगतोबभूव ॥ यऽईशेऽअस्यद्विपदश्चतुष्पदः कस्मैदेवायह

द्वितीयंगृह्णाति तस्यपुरोरुक्यः प्राणतः कार्याप्राजापत्त्याय: कः प्रजापतिः प्राणतः प्राणनं कुर्वतः भूतग्रामस्यनिमिषतः निमेषणं कुर्वतः क्रियावतइत्यर्थान्तरम् महित्वास्वकीयेन महाभाग्येन । एकइत् । इच्छब्दएवार्थे । एकएव समस्तस्यजगतो राज.वभूवसंवृतः । यस्य

ईशेईष्टे अस्यद्विपदः प्राणिजातस्य यश्चचतुष्पदः ईष्टेप्राणिजातस्य । तस्मैकस्मै देवायप्रजापतये हविषाविधेम । विदधातिर्दानकर्मा हविरितिविभक्तिव्यत्ययोद्वितीयान्तः । हविर्दद्मः ॥ ३ ॥ उपयामगृहीतोसि प्रजापयेत्वां जुष्टंगृह्णामि । सादयति । एषते योनिः चन्द्रमास्ते महि-

विषांव्विधेम ॥ ३ ॥ उपयामगृंहीतोसि ॥ प्प्रजापंतयेत्त्वाजुष्टंङ्गृ ह्णाम्म्येषतेयोनिंश्चन्द्रमांस्तेमहिमा ॥ यस्तेरात्रौसम्बत्सरेमंहिमासं म्बभूवयस्ते पृथिव्व्यामग्ग्नौमंहिमासंम्बभूवयस्तेनक्षंत्रेषुचन्द्रमंसिम हिमासंम्बभूवतस्मैतेमहिम्म्नेप्प्रजापंतयेदेवेब्भ्यः स्वाहा ॥ ४ ॥ [२] युञ्जन्तिंब्ब्रध्ध्नमंरुषञ्चरंन्तम्परिंतस्त्थुषंः ॥ रोचंन्तेरोचनादिवि ॥ ५ ॥

मा । जुहोति यस्तेरात्रौसंवत्सरेपृथिव्यामग्नौचनक्षत्रेषुचन्द्रमसिच महिमासंवभूवतस्मैतेमहि- म्नेप्रजापतयेदेवेभ्यः स्वाहा ॥ ४ ॥ (१) अश्वंयुनक्ति । युञ्जन्तिब्रध्नम् । अश्वाचादित्यःतत्सूयते

(१) का० युनक्त्येनं युञ्जन्ति ब्रध्नमिति अश्वं रथे युनक्ति ।

उत्तरोर्द्धर्चः प्रथमं व्याख्यायते । यस्यभासा । रोचन्तेदेदीप्यन्तेरोचना: रोचनानिदीप्तानिच- न्द्रग्रहतारकादीनि । दिविद्युलोके । तंयुञ्जन्तिरथेवध्नन्ति । कथंभूतम् ब्रध्नम् परिदृढम् आदित्यम् अरुषमरोषणम् । चरन्तं गच्छन्तं वैदिककर्मसिध्यर्थम् । केयुञ्जन्ति परित- स्थुषः सर्वतस्थिता ऋग्यजमाना: ॥ ५ ॥ (१) इतराश्वं युनक्ति । युञ्जन्त्यस्य । गायत्री । युञ्ज-

युञ्जन्त्य॑स्य ॥ यु॒ञ्जन्त्य॑स्य॒ काम्या॒ हरी॒ विप॑क्षसा॒ रथे॑ ॥ शोणा॑ धृ॒ष्णू नृ॒

न्तिरथे अस्याश्वमेधि कस्याश्वस्य काम्याकाम्यौ कामसंपादिनौ नह्येकोरथं वोढुंशक्तः । हरीहरि- तवर्णावश्वौ हरिणौवावेगवन्तौ । विपक्षसा । विविधा: पक्षस: पक्षा: ययोस्तौविपक्षसौ । विविध पक्षावस्थितौ । यद्वाविरितिशकुनिनाम । वेतेर्गति कर्मण: । वे: शकुनेरिवपक्षौययोस्तौ शोणा । शोणौशोणशब्दोवर्ण वचन: । रक्तोवर्णोधूम्र भास: शोणइत्युच्यते । धृष्णुप्रसहनो

(१) का० इतरांश्च युञ्जन्त्यस्येति । इतरान् त्रीनश्वान्रथे युनक्ति ।

(२) का० अपो यात्वावगाढेषु व चयति यद्वात इति । चतुर्भिरश्वैर्युक्तं रथमध्वर्युयजमानावारुह्य तडागादिजलं गत्वा जलं प्रविष्टेष्वश्वेषु जयमानं वाचयति ।

न्रवाहसा । न्रणाम्मनुष्याणां वोढारौ ।। ६ ।। (२) अपीयात्वावगाढेषुवाचयति । यद्वातः । बृहती अश्वदेवत्या । यत् यस्मात् वातः वातः वेगोश्वः अपः प्रति अगनीगन् अत्यर्थंगतः । प्रियाश्च इन्द्रस्य तन्वं शरीरम् अगनीगन् अतो ब्रवीमि । एतम् अश्वम् हेस्तोतः अध्वर्यो । अनेनपथा येनगतः । पुनः अश्वम् आवर्तयासि आवर्तय आनय नोस्माकम् ।। ७ ।। (१) आगतमश्वम्महि-

वाहसा ॥ ६ ॥ यद्वातः ॥ यद्वातोऽअपोऽअगनीगन्प्रियामिन्द्रस्यतन्वम् ॥ एतꣳस्तोतरनेनपथापुनरश्वमावर्तयासिनः ॥ ७ ॥ वसवस्त्वा ॥ अञ्जन्तुगायत्रेणच्छन्दसारुद्रास्त्वाञ्जन्तुत्रैष्टुभेनच्छन्दसादि

षीवावातापरिवृत्ता आज्येनाभ्यञ्जयन्ति वसवस्त्वेतिप्रतिमन्त्रम् । वसवस्त्वाञ्जन्तु । निगद-व्याख्यातम् । सौवर्णा न्मणीनेक शतमश्व केसरपुच्छेषुप्रवयन्तिपत्न्यः । भूर्भुवः स्वः । व्याख्या-तम् । अश्वायराचिहुतशेषं प्रयच्छति । लाजीन् शाचीन् । योयंलाजानां समूहोलाजीनित्युक्तः

(१) का० आयाय विमुक्तमश्वं महिषो वावाता परिवृक्ताज्येनाभ्यञ्जन्ति पूर्वकायमध्यापरकायान्यथादेशं वसवस्त्वेति प्रतिम-न्त्रम् । आयाय· जलप्रदेशाद्देवयजनमागत्यरथाद्विमुक्तमश्वं महिष्याद्यास्तिस्रः पत्नी यथाक्रममश्वस्यपूर्वादिकानभ्य-

योयं सक्तुनां समूहः शाचीनित्युक्तः । सक्तवोहि अतितरां शच्याकर्मणा निस्प्रद्यन्तइति शाची-नित्युक्ताः । यश्चायं यश्येयवमयः समूहउक्तोधानाः यश्चायंगोर्विकारसमूह उक्तोगव्यइति । एतदन्नम् अत्तभक्षयतहेदेवाः । एतदन्नमद्धिभक्षय हेप्रजापते । येभ्योश्वः । प्रोक्षितः तद्देव-

त्यास्त्वांजन्तुजागंतेनुच्छन्दंसा ॥ भूर्भुवःस्वर्लाजीइँञ्छाचीइँन्न्य व्येगव्व्यंऽएतदन्नंमत्तदेवाऽएतदन्नंमद्धिप्प्रजापते ॥८॥ कःस्विंत् ॥ कःस्विंदेकाकीचंरतिकऽउंस्विज्जायतेपुनंः ॥ किंछंस्विद्धिमस्यंभेषुज

तत्वादेतद्देवत्योश्वइति ॥ ८ ॥ ब्रह्मापृच्छति होतारं यूयमभितः । कःस्वित् । चतस्रोनुष्टुभः प्रश्नप्रतिप्रश्नरूपाः । कः पुनरेकाकी असहायः चरतिगच्छति । कउ स्वित् । कोनुविनष्टः

ध्नन्ति घृतेन मह्निषो पूर्वकाय वसव इति वावाता देहमध्यं रुद्रा इनि परिवृक्ता पश्चाद्भागमादित्या इति मन्त्रे-णेति सूत्रार्थः ।

(१) का० ब्रह्मा पृच्छति होतारं यूपमभितः कः स्विदेकाकीति । यूपस्य दक्षिणत उदङ्मुखो ब्रह्मा यूपोत्तरयो दक्षिणामुखं होतारं पृच्छति ।

सन्जायते पुनः उकारः पादपूरणः । किम्पुनः हिमस्यशीतस्यभेषजम् । किञ्च आवपनं महत् उप्यते निक्षिप्यते स्मिन्नित्यावपनम् ॥ ९ ॥ होताप्रत्याह । (१) सूर्यं एकाकीचरति चन्द्रमाजायते-पुनः । अग्निस्त्वहिमस्यशीतस्य भेषजम् भूमिः अयंलोकः आवपनम्महत् ॥ १० ॥ (२) होताब्रह्माणं

ङ्क्मिम्यावपंनम्मुहत् ॥९॥ सूर्य्यऽएकाकी ॥ चंरतिचन्द्रमांजायतेपुनंः॥ अग्निर्हिमस्यंभेषजम्भूमिंरावपंनम्मुहत् ॥१०॥ कास्विंत् ॥ कास्विंदा सीत्पूर्व्वचिंत्तिःकिंस्विंदासीद्बृहद्वयंः ॥ कास्विंदासीत्पिलिप्पिला कास्विंदासीत्पिशङ्गिला ॥११॥ द्यौरांसीत् ॥ द्यौरांसीत्पूर्व्वचिंत्तिरश्वं

पृच्छति । कास्वित् । कापुनः आसीत् पूर्वचित्तिः । किम्पुनरासीत् बृहत् महत् वयः पक्षी । कापुनरासीत् पिलिप्पिलाकापुनरासीत् पिशङ्गिला ॥ ११ ॥ ब्रह्माप्रश्नान्व्याकरोति ।

(१) का० सूर्यइत्याचष्टे । होता ब्रह्माणं प्रतिवक्ति ।

(२) का० होता ब्रम्हाणं का स्विदासीदिति । होता ब्रम्हाणं पृच्छति ।

शु० य० सं० ५०९ उ० भा०

(१) द्यौरासीत् । द्युग्रहणेनात्र वृष्टेर्लक्ष्यते । साहि पूर्वं सर्वैः प्राणिभिश्चिन्त्यते । अश्व आसीद्बृहद्वयः । अश्वशब्देनाश्वमेधो लक्ष्यते । वयसा द्रुवच्चनेनाश्वमेधेन स्वर्गं लोक मारोहन्ति अविरासीत् अविः पृथिव्यभिधीयते सा आसीत् पिलप्पिला वृष्ट्या हि क्लिद्यमाना पृथिवी पिलिप्पिला भवति ।

ऽआसीद्बृहद्वयः॥ अविरासीत्पिलिप्पिला रात्रिरासीत्पिशङ्गिला॥ १२॥ [८] वायुष्ट्वा॥ पचतैरवत्वसितग्रीवश्छागैर्न्यग्रोधश्चमसैः शं

श्रीरितिश्रुत्या पृथिव्युक्ताच । रात्रिरासीत्पिशंगिला । पिशमितिरूपनाम रात्रिर्हिसर्वाणिरूपाणि गिलति अदृश्यानि करोति । १२ ॥ (२) प्रोक्षत्यश्वम् । वायुष्ट्वा वायुः त्वा पचतैः पाकैः अवतु । वाय्वग्नि सँयोगाद्विद्रव्याणि पच्यन्ते । असितग्रीवः छागैः असितग्रीवोऽग्निः धूम-

(१) का० द्यौरिति प्रत्याह : ब्रह्मा होतारं प्रति वक्ति । पूर्वचित्तिः पूर्वस्मरणविषया द्यौर्हं ष्टिरासीत् द्यौशब्देन वृष्टिर्लक्ष्यते सर्वप्राणिनामिष्टत्वात् ।

(२) का० अश्वप्रोक्षणमन्त्रास्त्वा वायुष्ट्वेति । अन्नास्त्वौषधीभ्य इति प्राकृतमन्त्रेण वायुष्ट्वेत्यारभ्य देवः सविता दधात्वित्यन्तेन कण्डिकाचतुष्टयेनाश्वमेधिकेन चाश्वप्रोक्षणं करोतीति सूत्रार्थः ।

अ० २३

शिवरा

५०९

सँयोगात् । छागैः अवतु कृष्णग्रीवादिभिः पर्यङ्गैः । अश्वाङ्गेष्वालभ्यमाना अश्वायोपकुर्वन्ति अदृष्टेनोपकारेण । न्यग्रोधश्चमसैः अवतुसोमसंवन्धेन । शल्मलिः स्वकीययाग्रञ्छ्याल्वा अवतु-पालयतु । एषस्यः एषसः राथ्यः रथेसाधुराथ्यः । वृषासेक्ता । पङ्क्षिश्चतुर्भिः । आइत् आगन् आगतः चतुर्ग्रहणाद्क्रिम् । तस्मादश्वस्त्रिभिस्तिष्ठति अथ युक्तः सर्वैः सममायुतइतिश्रुतिः । वह्नाक्त-

लम्भुलिर्वृद्ध्या ॥ एषस्यराथ्योवृषापड्भिश्चतुर्भिरेदंगन्ब्रह्माकृ-ष्णश्चनोवतुनमोऽग्नये ॥ १३ ॥ सꣳशितोरश्मिनारथꣳसꣳशितोरश्मिनाहयः ॥ सꣳशितोऽअप्स्वप्सुजाब्रह्मासोमपुरोगवः ॥ १४ ॥

णश्च । ब्रह्मापरिवृढः अकृष्णः नविद्यतेकृष्णमस्य अकृष्णश्चन्द्रमाः । सचनोस्माकम् अश्वम् अवतु । नमः अग्नये अग्निंनमस्करोत्यविघ्नाय ॥ १३ ॥ सꣳ० शितोरश्मिना । तिस्रो-नुष्टुव्विराट्त्रिष्टुभः । प्रोच्यते एवअश्वदेवत्याः । सम्पूर्वः श्यतिः शोभने वर्तते । संदर्शितः यथा दर्शनीयतमः रश्मिनारथोभवति । यथाच संसितः रश्मिनाहयोश्वः । एवमयंसंशितः ।

शु० अप्सु अग्निः । अप्सुजाः अप्सुजातो अश्वः । अप्सुजाना: अश्ववद्भूतिश्रुतिः । किम्भूतः ब्रह्मा- विभर्ता । परिवृढोवा । सोमपुरोगवः । सोमसंस्कारान्पुरस्कृत्य स्वर्गंलोकं गच्छतीति सोम पुरोगवः । सोमार्थाहि पशवः । सयत्पशुमालभते रसमेवास्मिन्दधातीति श्रुतिः ॥ १४ ॥ किञ्च । स्वयं वाजिन् । स्वयमेवहे वाजिन् तन्वं शरीरं कल्पयस्व । स्वराज्यं तवास्तीत्यर्थः ।

स्वयँव्वाजिन् ॥ स्वयँव्वाजिँस्तन्वङ्कल्पयस्वस्वयंय्यंजस्वस्वयञ्जुषस्व ॥ महिमातेन्न्येननसन्नशे ॥ १५ ॥ नवै ॥ नवाऽउँऽएतन्म्रियसेनरिष्यसिदेवाँ२ ॥ ऽइदेषिपथिभिंःसुगेभिंः ॥ यत्रासंतेसुकृतो

अतएवस्वयमेवयजस्व । नतेन्योयष्टास्तीतिभावः । स्वयञ्जुषस्व । स्वयमेवाभिरुचितंस्था- नंकुरुष्व । किमर्थमिदमुच्यतेस्माभिरितिचेत् । महिमातेतवसंबधीअन्येनमहिम्नानसंनशे । नशि- रदर्शनार्थः । वेदेतुव्याप्त्यर्थोपिभवति । नसंव्याप्यते ॥ १५ ॥ नवै । वैऊपादपूरणौ । नएतत् म्रियसेयत् संज्ञप्यसे । नचरिष्यसिविनश्यसि ॥ विशस्यमानः । किमिति । यत्देवान्

य० सं० ५१० उ० भा०

अ० २३

शिवः ५१०

इत्यतिएषिगच्छसि । पथिभिः सुगेभिः साधुगमनैर्देवयानैरित्यर्थः । किंच । यत्रआसतेसुकृतः साधुकारिणः । यत्रचतेययुः गताः तत्रत्वान्देवः सवितादधातु ॥ १६ ॥ (१) उपगृह्णात्यपः । अग्निः

यत्रयन्तियुयुस्तत्रत्वादेवः सविता दधातु ॥ १६ ॥ अग्निःपशुः ॥ अग्निःपशुरासीत्तेनायजन्तसऽएतंलोकमजयद्यस्मिन्नग्निःसतेलोकोभविष्यतितञ्जेष्यसिपिबैताऽअपः ॥ वायुःपशुरासीत्तेनायजन्तसऽएतंलोकमजयद्यस्मिन्वायुः सतेलोकोभविष्यतितञ्जेष्यसिपिबैताऽअपः ॥ सूर्य्यःपशुरासीत्तेनायजन्तसऽएतंलोकमजयद्य

पशुः । सृष्टियज्ञे देवानामासीत् । तेनाग्निनातेअयजन्त । सचाग्निस्तत्रसाधनभावमुपगतः सन् एतं पृथिवीलोकम अजयत् । यस्मिन्लोकेअग्निः । अतः सतेलोकोभविष्यति तञ्जेष्यसि ।

(१) का॰ उपगृह्णात्यपां पेरुरग्निः पशुरिति । अपां पेरुरिति प्राकृतेन मन्त्रेणाग्निः पशुरिति वैकृतेन च प्रोक्षणीरध्वास्ये उपगृह्णातीति सूत्रार्थ. ।

पिबएताः प्रोत्तणीःअपः । वायुः । सूर्यः पशुः व्याख्यातमन्यत् ॥ १७ ॥ (१) परिपशव्येहुत्वा प्राणायस्वाहेति । तिस्रोपराः वाचयतिपत्नीर्नयन् । अम्बे । अनुष्टुप् ॥ अश्वस्तुतिः । पत्न्यः परस्परमामंत्रयन्ते । हेअम्बे हेअम्बिके हेअम्बाले । नमांनयति अश्वं प्रतिप्रापयति कश्चन-

स्मिन्त्सूर्य्युऽसतेंलोभंविष्यतितञ्जेष्यसिपिबैताऽअपः ॥ १७ ॥ प्राणायस्वाहां ॥ प्रानायस्वाहांव्यानायस्वाहां ॥ अम्बेऽअम्बिकेम्बांलिकेनमांनयतिकश्चन ॥ ससंस्त्यश्वक ऽ सुभंद्रिकाङ्काम्पीलवासिनीं

कश्चिदपि । मद्गमनेनच । ससस्ति । सस्स्व । ये । अन्यांपरिगृह्यशेते । कुत्सितोश्वः । अश्वकः । अकुत्सितोपीर्ष्ययाकुत्स्यते । सुभद्रिकाम् । कुत्सितासुभद्रासुद्रिका । इयमपीर्ष्य-याकुत्स्यते । कांपीलवासिनीम् कांपील नगरेहि सुभगा सुरूपाविदग्धा विनीतास्त्रस्त्रि योभ-

(१) का० परिपशव्ये हुत्वा प्राणाय स्वाहेति तिस्रोऽपरः। परिपशव्ये स्वाहा देवेभ्यो देवेभ्यः स्वहेति द्वे आहुती हुत्वा प्राणायेत्याद्यास्तिस्र आहुतोर्जुहोति एकामश्वसंज्ञपनादौ चतस्रोऽन्ते इति सूत्रार्थः।

वन्ति ॥ १८ ॥ (१) पत्न्यः त्रिःपरियन्त्यश्वम् । गणानांत्वा । स्त्रीगणानाम् । मध्येत्वां युगपत् गणपतिं हवामहे आह्वयामः । एवमेव । प्रियाणां मनुष्याणां मध्येत्वा मेव प्रियपतिं प्रियं-भर्तारंहवामहे । एवमेव निधीनां सुखनिधीनाम्मध्ये त्वा मेव निधिपतिं हवामहे । कथं कृत्वा । हेवसो । अश्व ममत्वं पतिर्भूयाः इति । महिषी अश्वमुप संविशति । आहमजानि ।

म् ॥ १८ ॥ गणानांत्वा ॥ गणपतिꣳहवामहेप्रियाणांत्वाप्रियपतिꣳहवामहेनिधीनांत्वांनिधिपतिꣳहवामहेव्वसोमम ॥ आहमंजानि गर्ब्भंधमात्त्वमंजासिगर्ब्भंधम् ॥ १९ ॥ ताऽउभौचतुरंꣳपदꣳसम्प्रसार

आकृष्य अहम् अजानि अजगतिक्षेपणयोः । क्षिपामि । गर्भधम् । गर्भस्यधारयितृ रेतः । आत्वमजासि गर्भधम् । आकृष्यच त्वंहेअश्व अजासिक्षिपसिगर्भधं रेतः ॥ १९ ॥ ताउ-भौ । यौ आवांकृतसङ्केतौ तौउभौ त्वं चाहञ्च । चतुरः पदः पादान् । द्वौतवसम्बन्धिनौ

(१) का० अधीवासेन प्रच्छादयति स्वर्गे लोक इति । अधीवासेनाश्वमहिषी छादयति अध उपरिष्टाच्चाच्छादनचर्म वासो-ऽधीवातः ।

शु० य० सं० ५१२ उ० भा०

द्वौचममसम्बन्धिनौ । संप्रसारयाव । एवं हि सम्बन्धे संवेश प्रकार इत्यभिप्रायः । अधीवा-
सेन प्रच्छादयति । स्वर्गेलोके । एषवैस्वर्गोलोको यत्र पशुं संज्ञपयन्ति । प्रोर्णुवाथाम् ।
ऊर्णोतिराच्छादने । प्रोर्णुवनङ्कुरुतमित्यध्वर्युराह । अश्वशिश्नमुपस्थेकुरुते । वृषावाजीवृषासि-
क्ताऽवाजीअश्वःरेतोधारेतसः धारयितारेतोदधातुश्वासिञ्चतु ॥ २० ॥ (१) उत्सक्थ्या । गायत्र्याऽश्वं

यावस्वर्गेलोकेप्रोर्णुवाथांवृषांवाजीरेतोधारेतोदधातु ॥ २० ॥ [३]
उत्सक्थ्या ऽ अवंगुदन्धेहिसमञ्जिञ्चारयावृषन् ॥ यस्त्रीणाञ्जीवभोजं

यजमानोभिमन्त्रयते । ऊर्ध्वतेसक्थनीयस्याः साउत्सक्थी तस्याउत्सक्थ्याः महिष्याः । अवगु-
दन्धेहि । अवाचीनङ्गुदम् रेतोधेहि सिञ्च । कथमितिचेत् । समञ्जिञ्चारयावृषन् । सञ्चारय
अञ्जिम् अनक्तिव्यनक्ति पुंस्त्वमित्यञ्जिः पुंस्त्वजननमुक्तम् । हेवृषन् सेक्तः । कथंभूतोऽञ्जिः ।
यःस्त्रीणाञ्जीवभोजनः । यस्मिंस्सति स्त्रियोजीवन्तीत्युच्यन्ते । यस्मिंश्चसति । भोजनादीन् भोगा-

अ० २३ शिवम् ५१२

(१) का० उत्सक्थ्या इतग्रश्वं यजमानोऽभिमन्त्रयते ।

न्लभन्ते । सजीवभोजनः ॥ २१ ॥ इतउत्तरम् दशानुष्टुभोभिमेथिन्यः पुंस्त्वजननमुक्तम् । द्वितीयो-
परिष्टाद्बृहती अत्रचयोयत्रभण्यते सतत्तद्देवतात्वमुपगच्छति । अध्वर्युः कुमारीमभि मेथयति । यका-
सकौ । अकचप्रत्ययौत्र कुत्सायाम् । अङ्गुल्याप्रदर्शयन्नाह । यकाअसकौ । शकुंतिका । अल्पेकन्
प्रत्ययः । अल्पीयसी पक्षिणीव । आहलक् इति । प्रकारवचनम् । हलेहले इति ब्रुवन्ती । वञ्चति

नऽ ॥२१॥ यकासकौ ॥ शकुन्तिकाहलगितिवञ्चति ॥ आहन्तिगभे

पसोनिगल्गलीतिधारका ॥ २२ ॥ यकोसकौ ॥ शकुन्तकऽआहल

त्वरितं गच्छति । चपलेत्यर्थः । तस्याअपि । आहन्ति । हन्तिर्गत्यर्थः । आगच्छति । अन्तर्भावित
ण्यर्थोवा । आगमयति प्रवेशयति । अत्यर्थं वाहुति । गभेपसः । गभइतिआद्यन्तवर्णविपर्ययः ।
पसः पसतेः स्पृशतिकर्मणः । भगेशिश्नमाहन्तीत्यर्थः । अथ तदानिगल्गलीति अत्यर्थं शुक्रंमञ्चति
धारकायोनिः । यद्वा शब्दानुकरणम् निगल्गलीति गिरतेवा । निगिरतिशिश्नंयोनिः ॥ २२ ॥
अध्वर्युं प्रत्याहकुमारी । यकोसकौ । यकः असकौ यः असौ शकुंतकइव आहलगितिवञ्चति ।

शु॰ य॰ सं॰ ५१२ उ॰ भा॰

तस्यश्लीलंभाषिणः किमन्यत् ब्रवीमि। विवक्षतइव तेमुखम्। असाधुवक्तुमिच्छतः इव तेमुखंपश्यामि। अतो हेअध्वर्यो मानः अस्मान् त्वमभि भाषथाः॥ २३। ब्रह्मामहिषीमभि मेथति। माताचते। हेमहिषि यदामाताच तवपिताचतव। अग्रंवृक्षस्य। वार्च्यस्येति तद्धितलोपः। वार्क्ष्यस्यपर्यंकस्य उपरितनभागम् रोहतः। मैथुनार्थमेकं पर्यंकमारोहतइति अश्लीलाभिप्रायं

गिति॒श्वञ्च॑ति॥ विव॑क्षत ऽ इव॒ते॒मुख॒मध्व॑र्य्यो॒मान॒स्त्वमु॒भिभा॑ष
थाः॥ २३॥ मा॒ता॒च॑॥ ते॒पि॒ता॒च॒ते॒ग्रं॒वृ॒क्षस्य॑रोहतः॥ प्रति॑ला
मीति॒ंते॒पि॒ता॒ग॒भेमु॒ष्टि॒मंत॑ꣳसयत्॥ २४॥ मा॒ता॒च॑॥ ते॒पि॒ता॒च॒ते
ग्ग्रेंवृ॒क्षस्य॑क्री॒डतः॥ विव॑क्षत ऽ इव॒ते॒मुख॒म्ब्रह्म॒न्मात्वँ॑ वंदो॒ब

वचनम्। तदाप्रतिलामीति तिलस्नेहने। स्नेहाम्यहमनेनकर्मणा। इतिएवमिति प्रकारवचनम् वदन्। तवपितागभे भगेमुष्टिं मुष्टयाकारंशिश्नम् अतंसयत् अक्षिपत्। एवन्तवोत्पत्तिः॥ २४॥ महिषीप्रत्याह। माताचते। हेब्रह्मन्। यदामाताच तेपिताचते अग्रे वृक्षस्य पर्यंकस्यक्रीडतः।

तदात्वमुत्पन्नः । तुल्यैत्पत्तिरावयोः । यश्चोभयोर्दोषोन तमेकश्चोदयितुमर्हति । एवंसति । यदसा-
धुवदितु मिच्चतद्भव तेमुखंपश्यामितत् हेब्रह्मन् माल्वंवदोवहु ॥ २५ ॥ उद्गातावा वातामभिमे-
थयति ऊर्ध्वामेनाम् । कश्चित्पुरुषमाह । ऊर्ध्वामेनांवा वाताम् उच्छ्रितांकुरु । कथमिव । गिरौ-
भारं मध्येनिगृह्य हरेत् एवमेनां मध्येनिगृह्य । ऊर्ध्वामुच्छ्रापय । अथ यथेत्येतस्यस्थाने तथाच

हु ॥ २५ ॥ ऊर्द्ध्वामेनाम् ॥ ऊर्द्ध्वामेनामुच्छ्रापयगिरौभारᳪहरं
न्निव ॥ अथास्यैमद्ध्यमेधताᳪशीतेवातेपुनन्निव ॥ २६ ॥ ऊर्द्ध्व
मेनम् ॥ ऊर्द्ध्वमेनमुच्छ्रयताद्गिरौभारᳪहरन्निव ॥ अथास्यमद्ध्यमे

उच्छ्रापय यथा अस्यावाताय:मध्यं योनिप्रदेशः एधताम् । एधनवृद्धौ वृद्धिंयायात् । अथैनांगृह्णीयाः ।
शीतेवाते पुनन्निव । * पावाखलाव । पावाहि धान्यवाते शुद्धंकुर्वन । ग्रहणमोच्चौभटितिकरो-
ति ॥ २६ ॥ वावाता प्रत्याहोद्गातारम् । भवतोप्येतदेवम् । ऊर्द्ध्वमेनम् । उद्गातारमुच्छ्रयतात्
उच्छ्रापय । अत्रस्त्रीपुरुषायते । गिरौभारंहरन्निव । अथैवं क्रियमाणस्यास्य मध्यंप्रजननम् एजतु-

* यस्यस्पष्टार्थः । यथा शीतले वायौ वाति पुनर्धान्यपवनं कुर्वाणः कृषीवलो धान्यपात्रं यथा ऊर्ध्वं करोति तथैतदर्थः ।

चलतु । अथैनन्निगृह्णीष्व शीतेवतेपुनन्निव । यवान् ॥ २७ ॥ होतापरिवृक्तामभिमेथयति । यदस्याः । यत्यदा अस्याः परिवृक्तायाः । अंहुभेद्याः । अल्पयोनेः । अंहुः हन्तव्यः भेद्यप्रदेशः प्रजननमस्याइति अंहुभेदी तस्याः अंहुभेद्याः । कृधुइतिह्रस्वनाम । ह्रस्वं शिश्नम । स्थूलञ्च उपातसत् उपसङ्गच्छेत् । अथतदा अल्पत्वात् योनेः स्थूलत्वाच्च ह्रस्वत्वाच्च दुः प्रजननस्य ।

जतुशीतेव्वातेंपुनन्निंव ॥ २७ ॥ यदंस्याः ॥ यदंस्याऽअंहुभेद्याः कृधुस्थूलमुपातंसत् ॥ मुष्कावि॒दंस्याऽएजतोगोशुफेशंकुलाविंव ॥२८॥ यद्देवासंः ॥ यद्देवासोंललामंगुम्प्रविंष्टीमिनमाविषुः ॥ सुक्थनादेंदि

मुष्कौवृषणौ इत्एवम् अस्याः प्रजननस्योपरिएजतः । एजृकम्पने । कम्पनङ्कुरुतः । कथमिव गोशफेगोष्पदे उदकपूर्णे । शकुलाविव मत्स्याविव ॥ २८ ॥ परिवृक्ताप्रत्याह । यद्देवासः । होतृप्रमुखान् सर्वानेव ऋत्विजः परिवदति । यदा एतेदेवासः शिश्नदेवाः शिश्नक्रीडिनः । ललामगुम् ललामेतिसुखमभिधीयते सुखङ्गतुंङ्गच्छतीति ललामगुःशिश्नम् । यदा ललामेतिपौंड्र-

सभिधीयते। शिश्नंहि योनिम्प्रविशत् पौरुष्ट्रभवति। प्रविष्टीमिनम् प्रवेश्यविष्टम्भ्यच। आविषुःआलिङ्गनचुम्बनादिभि र्निगृह्णीयु र्नारीम्। अथतदा। सक्थ्नादेदिश्यतेनारी। सकथि-कृतेन कुटिलगमनेन अतिदिश्यतेलक्ष्यतेनारी। नहि तस्याःकिञ्चिदव्याप्तम् पुरुषेणभवति अन्यत्रसकथ्नइत्यभिप्रायः। कथमिवासत्यस्याक्षिभुवोयथा। द्विःप्रकारंसत्यम् अक्षिप्रभवमनक्षि-प्रभवञ्चेति। अक्षिग्राह्य मक्षिप्रभवम् तन्नहि सर्वंव्याप्तंभवति। अनक्षिप्रभवं श्रोत्रग्राह्यम् तत्तु-

श्यतेनारीसुत्यस्याक्षिभुवोयथा ॥ २९ ॥ यद्धरिणः ॥ २९ ॥ णोयवम

त्तिनपुष्टम्पशुमन्यते ॥ शूद्राय॑द्य॑जारानपोषायधनायति ॥३०॥

साकांक्षम् वक्तुराप्ततामपेक्षते। अतोविशिनष्टि अक्षिभुवइति। सत्यस्यअक्षिभुवः यथावि-तथत्त्वंतथेति ॥ २९ ॥ क्षत्तापालागलीमभि मेथयति। यद्धरिणः। यदाहरिणोमृगः यवंसस्यम् अतिभक्षयति। अथतदाक्षेत्री। नपुष्टम्पशु। पशुमितिप्राप्ते विभक्तिलोपः। पुष्टम्पशुम् मन्यते-अवगच्छति। ममक्षेत्रम् भक्षितमितियथा। एवम् शूद्रायत् यस्याःशूद्रस्याभर्तुः। अर्यजाराअर्यः वैश्यःजारोयस्याः साअर्यजारा भवेत्तदा सशूद्रःक्षेत्री। नपोषायममेतदितिमन्यते। नच-

शु० य० सं० ५१५ उ० भा०

अ० २२

तस्याश्वनायति। धनमिवचतांनमन्यतेपरस्योपभोग्यत्वात् ॥ ३० ॥ पालागलीप्रत्याह। यद्धरि-
णोयवमत्तिनपुष्टं बहुमन्यतेचेत्रीति। यदुक्तं भ तोप्येतदेवमितिसांख्युहमाह। कियांस्तुविशेषः।
शूद्र. यत्अर्य्यायै अर्य्याया: वैश्यायाः जारः जारयिता। तदाचेत्रीवैश्यः आत्मनः पोषंनानुम-
न्यते। नहिसातस्य पोषयानिकृष्टस्य शूद्रः उत्कृष्टावैश्यायाइति। समाप्तमश्लीलभाषणम् ॥ ३१ ॥

## यद्धरिणोयवमत्तिनपुष्टम्बहुमन्न्यते ॥ शूद्रोयदर्य्यायैजारोनपोषम नुमन्न्यते ॥३१॥ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥

(१)ऋत्विजोयजमानस्य सुरभिमतीमृचमन्तत आहुः वाचमेवंपुनन्ति। दधिक्राव्ण:। अनुष्टुवश्वदे-
वतया। यत् दधिक्राव्ण: अश्वस्यसंस्कारार्थं मश्लीलभाषणम् अकारिषम अकार्षम अकार्ष्मकृत-
वन्त: वचनव्यत्यय:। एकवचनस्यस्थानेवहुवचनंवोध्यम्। उपरिष्टाद्वहूनिपदानि वहुवचनान्तानि
दृश्यन्ते। किम्भूतस्यदधिक्राव्ण:। जिष्णु:जेतु: अश्वस्याशनेस्यव्यापिन: वाजिन:। ओविजी भय-

शिवम्

५१५

१ का० महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहु:। महिषीं यजमानस्य प्रथमपरिणीतां पत्नीमश्वसमीपसुप्तामुत्थाप्य
पुरुषा अध्वर्युब्रह्मोद्गातृहोतृचत्तारो मन्त्रं पठेयुरिति सूत्रार्थ:।

चलनयो: वेजनवत: तत्रसुरभीणिसुगन्धीनि । अश्लीलभागवोलहि दुर्गन्धीनिमुखानिभवन्तिपापहे-
तुत्वात् । न: अस्माकंमुखानि । निकारलोपश्छान्दस: करत्करोतु यन्नइत्यध्याहार: । किञ्च ।
प्रण: आयूंषितारिषत् । प्रतारिषत् प्रवर्द्धयतुच न: अस्माकम् । बहुवचनवालयौवन इत्त्ववयोपे
चम् ॥ ३२ ॥ पत्न्योसि पथङ्कल्पयन्ति । गायत्रीत्रिष्टुप् षड्भिऋग्भि: । तत्राद्या उष्णिक् चत-

सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ ३२ ॥ [ १२ ] गाय
त्रीत्रिष्टुप् ॥ गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यासह ॥ बृहत्यु
ष्णिहाककुप्सूचीभिःशम्यन्तुत्वा ॥ ३३ ॥ द्विपदायाऽ ॥ द्विपदा
याश्चचतुष्पदास्त्रिपदायाश्चषट्पदाऽ ॥ विच्छन्दायाश्चसच्छन्दाऽ

सोनुष्टुभ: परात्रिष्टुप् । गायत्रीचत्रिष्टुपचजगतीच अनुष्टुप्च । अनुष्टुप्च पङ्क्त्यासहबृहतीच ।
उष्णिहासहककुप्च । सूचीभि: शम्यन्तुत्वाम्हेअश्व मनमगानामभेदेनवर्त्मनिदर्शनं सूचीभि:
क्रियतेतेनपथाअसि: प्रवर्त्तते ॥ ३३ ॥ द्विपदाया: । या:द्विपादा: याश्चचतुष्पदा: याश्चत्रिपदा:

याश्चषटपदाः । याश्चविच्छन्दाः विगतच्छन्दा याभ्यस्ताः । विषमाक्षराः विषमपदाःछन्दोलक्षणो-नानभिसंबद्धाः । याश्चसच्छन्दाः अन्यूनातिरिक्ताक्षराश्छन्द । साजातयः ताः सर्वाः सूचीभिः शम्य-न्तुत्वाम् । ३४ ।' महानाम्न्योरेवत्यः । महानाम्न्यऋचः शाक्वर्यइतियाभण्यन्ते । रेवत्यएताअपिरे-वत्यः । रेवतन्तासुसामभवति । विश्वाः सर्वाः आशादिशः । प्रभूवरीः प्रभूततमाः । मैघीः

सूचीभिंःशम्म्यन्तुत्त्वा ॥३४॥ मुहानांम्न्न्यो रेवत्त्यंः ॥ मुहानांम्न्न्यो रेवत्त्योव्विश्श्वाऽआशांऽप्प्रभूवरीः ॥ मैघींर्व्विद्युतोव्वाचंःसूचीभिंःशम्म्यन्तुत्त्वा ॥ ३५ ॥ नार्य्यस्तेपत्त्न्योलोमुव्विचिंन्न्वन्तुमनीषयां ॥ देवानांम्पत्त्न्योदिशंःसूचीभिंःशम्म्यन्तुत्त्वा ॥ ३६ ॥ रजुताहरिंणीः ॥

मेघेभवाः विद्युतः तदुत्पन्नायाश्चवाचः ताः सर्वाः सूचीभिः शम्यन्तु । शमनेनहविः कुर्वन्तु-त्वाम् । ३५ । नार्यस्ते । नृणामपत्यानिबहूनिस्त्रीलक्षणानिनार्यः । तेतव । पत्न्यःयजमानस्य-पत्न्यः । लोमलोमानिविचिन्वन्तु पृथक्कुर्वन्तु । मनीषया मनसइच्छयामनसः पर्यालोचनेन । देवानाञ्चयाः पत्न्यः दिशः ताः सर्वाः सूचीभिः शम्यन्तु शमनेनहविष्कुर्वन्तुत्वाम् । ३६ । रज-

ताहरिणीः । रजतसुवर्णसीसमय्यः सूच्यः । युजः सहयोजनाः । युज्यन्तेकर्मभिः सीमालक्षणेः । याः ताः अश्वस्यवाजिनः वेजनवतः त्वचिरोमसु । सीमा. सिमाशब्दः सीमपर्यायोमर्यादावचनः सीमानङ्कुर्वाणाः शमयन्तुहविः कुर्वन्तु शमयन्तीः हविष्कुर्वाणाः अश्वम् ॥ ३७ ॥ कुविदङ्गेतिव्याख्या-

सीसायुजोयुज्यन्तुकर्म्मभिः ॥ अश्वस्यवाजिनस्त्वचिसिमाःशम्य न्तुशम्यन्तीः ॥ ३७ ॥ कुविदङ्ग ॥ यवमन्तोयवंचिद्यथादान्त्यनु पूर्वंवियूय ॥ इहेहैषाङ्कृणुहिभोजनानियेबर्हिषोनमऽउक्तिंयजं न्ति ॥ ३८ ॥ [ ८ ] कस्त्वा ॥ कस्त्वाछ्यतिकस्त्वाविशास्तिकस्तेगात्रा

तम् ॥ ३८ ॥ (१) अश्वस्विशास्ति अनुवाकेनषडृचेन । तत्राद्यागायत्री पराअनुष्टुभः । कस्त्वा । कः प्रजापतिः त्वाम् आच्छ्यति । छोछेदने । आछिनत्ति । त्वचः । कश्चप्रजापतिःत्वां विशा-

१ का० अश्वं विशास्त्यनुवाकेन कस्त्वाच्छ्यतीति । षडृचेनानुवाकेनाश्वं विशास्ति अश्वोदरं पाटयति मेदस उद्धरणाय वपाया अभावात् उदरमध्यस्थं स्त्यानं घृताभं घनं श्वेतं मांसं मेद इति सूत्रार्थः ।

स्तित्वचावियोजयति । कश्चप्रजातिः तेतवगात्राणि शरीराणि शमयति शमनेनह विर्भाव मापा-
दयति । कउते प्रजापति रेवते शमिताकविःमेधावीक्रान्तदर्शनः । यद्वाप्रश्नरूपोयं मन्त्रः । कोयं
मनुष्यः त्वाम् आच्छ्यतिकश्चत्वां विशास्ति कश्चतेगात्राणि शमयति । कश्चउतेशमिताकविः । न
कश्चिदपीत्यभिप्रायः । उःपादपूरणः ॥ ३९ ॥ यस्मिन्पक्षे कस्त्वाप्रजापति स्त्वेतिव्याख्यातं

गाशम्म्यति ॥ कउंतेशमिताकविः ॥३९॥ ऋतवंस्तऽऋतुथापर्व्वंश
मिताऽरोव्विशांसतु ॥ संव्वत्सरस्यतेजंसाशमीभिंःशम्म्यन्तुत्त्वा ॥४०॥
अर्द्धमासाः पर्रुं षिते मासाऽआच्छ्यन्तुशम्म्यंन्तः ॥ अहोरात्रा

तस्मिन्पक्षेप्रतार्यते । ऋतवस्ते । ऋतवश्चतवशमितारः ऋतुथा ऋतावृतौकालेकाले । पर्वं । पर्वणि
पर्वणि । संवत्सरस्यचतेजसा । शमीभिः कर्मभिः शमयन्तुशमनेह विर्भावमापादयन्तु त्वांहे
अश्व ॥ यदातुकः त्वांविशासितुं समार्थोमनुष्यएवं व्याख्यातम् तदा ऋतवोदेवाः तेशमितारः
इत्येवं व्याख्येयम् ॥ ४० ॥ अर्द्धमासाः । अर्द्धमासाः मासाश्च तेवपरूंषिपर्वणि आछ्यन्तु आछि-

न्दन्तु शमयन्तः शमनेन इव विर्भावमापादयन्तः । किञ्च । अहोरात्राणिमरुतश्च विलिष्टन्दुःश्लि-
ष्टं सूदयन्तु षूदक्षरणे पठ्यते । इह सन्धाने वर्तते वाक्ययोगात् सन्दधन्तु तेतव ॥ ४१ ॥
दैव्या अध्वर्यवः । येचदैव्यादिव्या अध्वर्यवः अश्विप्रभृतयः तेचत्वात्वाम् । आछ्यन्तु विचशासतु
चकारो भिन्नक्रमः । विशासतुच । किञ्च गात्राणि पर्वशः तेतवसिमाः मर्यादाः कृण्वन्तु कुर्वन्तु

णिंमरुतोविलिंष्टुꣳसूदयन्तुते ॥ ४१ ॥ दैव्याऽअध्वर्यवस्त्वा ॥ त्वा
छ्यन्तुविचंशासतु ॥ गात्राणिपर्वशस्तेसिमाःꣳकृण्वन्तुशम्यन्तीः
॥ ४२ ॥ द्यौस्ते ॥ पृथिव्यन्तरिक्षँवायुश्छिद्रंपृणातुते ॥ सूर्यस्तेन
क्षत्रैःसहलोकङ्कृणोतुसाधुया ॥४३॥ शन्ते ॥ शन्तेपरेभ्योगात्रेभ्यः

शमयन्तीः । मर्यादा दर्शतेन शमनं कुर्वाणाः ॥ ४२ ॥ द्यौस्ते द्यौश्चते तव पृथिवीचअन्तरिक्षञ्च
वायुश्चछिद्रं पृणातु पूरयतुते । किञ्च । सूर्यश्चतेतवनक्षत्रैः सहलोकं स्थानं कृणोतु साधुयासा-
धुम् । द्वितीयार्थेयाछान्दसः ॥ ४३ ॥ शान्ते । सुखं ते तव अस्तु हेअश्वपरेभ्यः गात्रेभ्यः ।

शु॰ शंसुखम् अवरेभ्य: । अस्तु । शम अस्थभ्य: अस्थिभ्य: मज्जभ्यश्च अस्तु । शश्चास्तुतन्वैशरीराय । अ॰
य॰ षष्ठ्यर्थेछन्दसिचतुर्थीवक्तव्येति षष्ठ्यर्थेचतुर्थींतन्वा: तव ॥४४॥ (१) इत उत्तरं ब्रह्मोद्यमष्टादशर्चम् २३
सं॰ ( उत्तरप्रत्युत्तरै: परस्परं सम्वाद: ब्रह्मोद्यम् ) तत्राद्याच स्रोनुष्टुभ: काखिदासीत्पूचि-

५१८ शमुस्त्ववरेभ्यऽ ॥ शमुस्थभ्योमुज्जभ्युऽशम्मंस्तुतन्न्वैतव ॥ ४४ ॥

उ॰ [६] कःस्विदेकाकीचरतिकऽउंस्विज्जायतेपुनः ॥ किंस्विद्धिमस्यभेषु

भा॰ जङ्किम्वावपनम्महत् ॥४५॥ सूर्यऽएकाकी ॥ चरतिचुन्द्रमाजायते

पुनः ॥ अग्निर्हिमस्यभेषुजम्भूमिरावपम्महत् ॥४६॥ किंस्वित् ॥

तिरित्याद्याश्च चतस्रोनुष्टुभ: त्रिष्टुभोन्या: । होताध्वर्युम्पृच्छति: क: स्विदेकाकी । ४५ ॥ शिवम

तम्प्रत्याह । सूर्यएकाकीचरति अग्रेव्याख्यातो ॥ ४६ । अध्वर्युर्होतारम्पृच्छति । किंस्वित्सूर्य- ५१८

(१) का॰ प्राग्वापाद्धोसाद्धोताध्वर्यू च सदसि संवदेते चतसृभि: क: स्विदेकाकीति पूर्ववत् ।

समं ज्योतिः । किञ्च समुद्रसमंसरः । किंस्वित्पृथिव्यै पृथिव्याः वर्षीयः महत्तरम् कस्यचमात्रापरिमाणम् नविद्यतेनास्ति ॥ ४७ ॥ तंप्रत्याह । ब्रह्मसूर्यसमम् । ब्रह्मत्रयी-लक्षणम्परवा । सूर्यसमंज्योतिः । द्यौःसमुद्रसमंसरः । इन्द्रःपृथिव्यै वर्षीयान्महत्तरः ।

किꣳस्वित्सूर्य्यसमञ्ज्योतिःकिꣳ समुद्रसमꣳसरः ॥ किꣳस्वित्पृथिव्यैवर्षीयःकस्यमात्रानविद्यते ॥ ४७ ॥ ब्रह्मसूर्य्यसमम् ॥ ब्रह्मसूर्य्यसमञ्ज्योतिर्द्यौःसमुद्रसमꣳसरः ॥ इन्द्रःपृथिव्यैवर्षीयान्गोस्तुमात्रानविद्यते ॥ ४८ ॥ पृच्छामित्वा ॥ चितयेदेवसखयदित्वम

गोस्तुमात्रानविद्यते गवाह्वियन्तेधार्यन्ते सजातःकारणम् भवतीत्यभिप्रायः । पृथिवीवा-गौः ॥ ४८ ॥ (१) ब्रह्मोद्गातारम् पृच्छति पृच्छामित्वा । पृच्छामित्वाभवन्तम् चितये । चितीसंज्ञाने

(१) का० ब्रह्मोद्गातारं पृच्छति पृच्छामीति । चकाराच्चतुर्भिः सदसि ब्रह्मोद्गातारौ संवदेते ।

परिज्ञानाय। हेदेः स्वत्व उद्गातः। यदित्वम् अचष्टःसन्मनसा प्रश्नविवेचनाय सूक्ष्मान-र्थान् जगन्थ अवगच्छसि। येषु त्रिष्णुः यज्ञःत्रिषु पदेषु गार्हपत्याहवनीयदक्षिणाग्निषु आदृष्टः यजेरेतद्रूपम्। तेषु विश्वंभुवनम् भूतजातम्। आविवेश उतनेति। प्रश्नेप्लुतः॥ ४९॥ प्रत्याह। अपितेषु तेषु अहमस्मि अपित्वञ्चेत्यपिशब्दः। तेषु गार्हपत्याहवनीयदक्षिणाग्निषु।

तच्चमनंसाजुगन्थं॥ येषुव्विष्णुंस्त्रिषुपुदेष्ष्वेष्टस्तेषुव्विश्वम्भुवंनमा विवेशा३॥ ४९॥ अपितेषुं॥ त्रिषुपुदेष्ष्वंस्म्मियेषुव्विश्वम्भुवंन माविवेशं॥ सुद्यः पर्य्येमिपृथिवीमुतद्यामेकेनाङ्गेनदिवो ऽ अस्यपृष्ठ म्॥ ५०॥ केष्वुन्तः॥ पुरुषु ऽ आविवेशुकान्न्युन्तः पुरुषे ऽ अर्पिता

त्रिषुपदेषु। अहमस्मित्वञ्च केषु। येषु विश्वम्भूतजातम् आविवेश। आविष्टम्। यत्पुनरेतदुक्त-मप्रता यदित्वमत्रमनसा जगन्थेति। अत्रब्रूमः। सद्यःएककालमेव। पर्येमिपरिगच्छामि पृथि-वीम् उत अपि च द्याम् एकेन अङ्गेन मनसा अस्याःदिवः पृष्ठञ्च किमुतभूतजाति तत्राविष्टानीति॥ ५०॥

उद्गाता ब्रह्माणम्पृच्छति। कोऽन्तः। केषु अन्तर्मध्ये पुरुषः आविवेश आविष्टः प्रविष्टः। कानि चान्तः मध्ये पुरुषे अर्पितानि। एतत् हे ब्रह्मन् उपवल्हामसि। वल्हप्राधान्ये। इह तु आह्वानपूर्वे संहर्षे वर्तते। उपसङ्गम्याह्वयोत् त्वामप्रवाहूय पृच्छामि भवन्तम्। किंस्विन्नः किं पुनरस्माकम्प्रतिवोचासि

नि ॥ एतद्ब्रह्मन्नुपवल्हामसि त्वा किँ स्विन्नः प्रतिवोचास्यत्र ॥ ५१ ॥ पुञ्चस्वन्तः ॥ पुरुष आविवेश तान्यन्तः पुरुषे अर्पितानि ॥ एतत्त्वात्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मत् ॥ ५२ ॥ [८]

कास्वित् ॥ कास्विदासीत्पूर्वचित्तिः किँ स्विदासीद्बृहद्वयः ॥ का

मध्ये पुरुष आविवेश। किंच तानि प्राणाधीनानि करणानि अन्तः पुरुषे अर्पितानि। एतत् त्वाभवन्तम्प्रतिमन्वानः प्रतिजानानः अस्मि अवस्थितः। नच मायया प्रज्ञया भवसि उत्तरः उद्गातृतरः मत् प्रतिब्रवीषि अत्र प्रश्ने ॥ ५१ ॥ प्रत्याह। पञ्चस्वन्तः पञ्चस्विति प्राणाः ख्यायन्ते। पञ्चसु प्राणेषु

शु० य० सं० ५२० उ० भा०

मन्त्र:मामपेच्य ॥ ५२ ॥ (१) होताध्वर्युं पृच्छति । कास्विदासीत् ॥ ५३ ॥ प्रत्याह । द्यौरासीत् । व्याख्यातौ ॥ ५४ ॥ अध्वयुर्होतारम्पृच्छति । काईमरे ईमितिचकारार्थे अरे इत्यामन्त्रितवि-

स्विंदासीत्पिलिप्पिलाकास्विंदासीतिपशङ्गिला ॥ ५३ ॥ द्यौरासी त् ॥ द्यौरासीत्पूर्वचित्तिरश्वऽआसीद्बृहद्वयः ॥ अविरासीत्पिलि प्पिलारात्त्रिरासीत्पिशङ्गिला ॥ ५४ ॥ काऽईम् ॥ काऽईमरेपिशङ्गि लाकाऽईङ्कुरुपिशङ्गिला ॥ कऽईमाऽस्कन्दमर्षतिकऽईम्पन्थाँव्विसर्प्प ति ॥५५॥ अजारे ॥ पिशङ्गिलाश्वाविटकुरुपिशङ्गिला ॥ शशऽ

षयः उताःपिनिपाततौ । काचअरे होतः पिशङ्गिला काचकुरुपिशङ्गिला । कश्चआस्कन्दम् अर्ष- तिकश्च पन्थांविसर्पति ॥ ५५ ॥ प्रत्याह । अजारे अजानित्यारोति: अरे अध्वर्यो पिशङ्गिला ।

(१) का० पुनः पूर्वावपरिणीत्तरवेदिं कास्विदिति । ततः सदसो निष्क्रम्य हविर्धानस्य पुर उत्तरवेदेः पश्चादुपविश्य पूर्वौ पूर्वोक्तौ होत्रध्वर्यू चतुर्ऋग्भिः संवदेते इति सूत्रार्थः ।

अ० २३ शिवम ५२०

साहि पिशंगरूपम् गिलति भक्षयति । अहितस्याः प्रभावः । श्वाविन्त् सेधा उच्यते तु रूपिशंगिला । कृत्स्न उपलभ्यो पलभ्य पिशंगरूपं गिलति भक्षयन्ति ता कुरूपिशंगिला । साहि शतमूलानाम् खोभद- णाय कुत्सीस्थापयति । शतं च भक्षयति । अहितस्याः प्रभावः । शशस्त्र आस्कन्दम् अस्कन्दमास्क- न्द्य अपर्षति गच्छति । अहितस्यास्त्र भावः । अहिस्त्र स्वकीयं पन्थानम् विसर्पति विकुर्वन् गच्छति ॥ ५६ ॥

आस्कन्दमर्षत्यहिः पन्थां विसर्पति ॥ ५६ ॥ कत्यस्य ॥ विष्ठाः कत्यक्षराणि कति होमासः कतिधा समिद्धः ॥ यज्ञस्य त्वा विदथा पृच्छमत्र कति होतारऽऋतुशो यजन्ति ॥ ५७ ॥ षडस्य ॥ विष्ठाः शतम्

(१) ब्रह्मोद्गातारं पृच्छति । कत्यस्य । अस्य यज्ञस्य कति कति विष्ठाः । विशेषेण तिष्ठति यज्ञीया स्तुता- विष्ठा अन्नानि । कति च अक्षराणि कति च होमाः कतिधा च समिद्धः समिधः । यज्ञस्य त्वाम- वन्तम् विदथा आवेदनेन हेतुना पृच्छं पृच्छामि । अत्र च यज्ञे कति होतारः ऋतुशः ऋतुयाज्यान् यजन्ति ॥ ५७ ॥ प्रत्याह । षडस्य । रससंख्योपलक्षितो होषुं राह । अस्य यज्ञस्य षट् विष्ठाः अन्ना-

(१) का० उत्तरौ च कत्यस्येति । उत्तरौ पश्चादुक्तौ ब्रह्मोद्गातारौ चतुर्ऋग्भिः संवदेते ।

शु० य० सं० ५२१ उ० भा०

निरुक्तीन्नानांषड्कात्मकत्वात्। शतमक्षराणि। छन्दांसामुद्धारेषाप सन्निहीर्षुराह। चतुर्दशछन्दांसि गायत्रीप्रभृतीनि चतुर्विंशत्यक्षरादीनि। चतुरुत्तराणिअतिधृतिपर्यन्तानि। अतिधृतिस्तु षट्सप्तत्याभवतिएतैःप्रायशोयज्ञस्तायते। तत्रगायत्री अतिधृतिश्चशतम्। एवमुष्णिक्धृतिश्चशतम्एवमन्येष्वपिच्छंदस्सु इत्येतदभिप्रायम्। अशीतिर्होमाः। एकविंशतिरश्वमेधे-

क्षराण्यशीतिर्होमांऽसमिधोहतिस्रः॥ यज्ञस्यंतेविदथाप्रब्रवीमिसुप्तहोतारऽऋतुशोयंजन्ति॥ ५८॥ कोऽअस्य॥ वेदभुवनस्यनाभिङ्कोद्यावांपृथिवीऽअन्तरिक्षम्॥ कःसूर्यस्यवेदबृहतोजनित्र

यूपाः। तत्राग्निष्टेअश्वस्तूपरोगोमृगान् नियुनक्ति। इतरेषुषोडशषोडश। तत्र विंशतियूपैःचतस्रोशीतयोभवन्तितदभिप्रायमेतत्। कतिधासमिद्धइतियदुक्तम् अत्रब्रूमः। समिधोहतिस्रः। याभिःसमिद्भिःसंदीप्तोयज्ञःतास्तिस्रः। अश्वस्तूपरोगोमृगाःप्राजापत्यापशवः यज्ञस्य तेतवविद्यावेदनेन। ब्रवीमि सप्तहोतारः वषट्कर्तारः ऋतुशःऋतुयागेषु यजन्ति॥ ५८॥

अ० २३ शिवम् ५२१

उद्गाताब्रह्माणंपृच्छति। कोअस्य। कःअस्यवेदजानाति। कश्चद्यावापृथिवी अन्तरिक्षंचवेद। कश्चसूर्यस्य वेदजानाति। बृहतः महतः जनित्रज्जन्म। कश्चवेद चन्द्रमसम् चन्द्रमसः इति विभक्तिव्यत्ययः। यतोजाःयतोजन्म ॥ ५९ ॥ प्रत्याह। वेदाहम्। वेदजानामि अहम् अस्य-

क्षो॒वे॑द॒चन्द्र॒मसं॑य॒तोजाः᳚ ॥ ५९ ॥ वेदा॒हम् ॥ वेदा॒हम॒स्यभुव॑नस्य॒ नाभिं॒वेद॒द्यावा॑पृथि॒वीऽअ॒न्तरि॑क्षम् ॥ वेद॒सूर्य॑स्यबृह॒तोज॒नित्र॒म थोवे॑द॒चन्द्र॒मसं॑य॒तोजाः᳚ ॥ ६० ॥ पृच्छामिंत्वा ॥ पृच्छामिंत्वापर॒म

भुवनस्य नाभिम् नहनम् बन्धनम् परंब्रह्म। वेदच द्यावापृथिवी अन्तरिक्षंच ब्रह्मणोविकारभूतम। वेदच सूर्यस्यबृहतः जनित्रम् परमात्म लक्षणम्। अथोअपिच वेदजानामि चन्द्रमसंयतोजाः चन्द्रमसः यतोजन्म परमात्मनः यस्मात्वा ॥ ६० ॥ (१) अध्वर्युंयजमानः पृच्छति पृच्छामित्वा। पृच्छामि त्वां भवन्तम् परम् अन्तम्पृथिव्याः। पृच्छामिचतत्र भुवनस्यनाभिः

(१ का० यचमानोऽध्वर्युं पृच्छामि त्वेति। यजमानोऽध्वर्युं पृच्छति।

नहनम्। पृच्छामिच भवन्तम् वृषा: सेक्ता: अश्वस्यरेत:। पृच्छामिच वाच: परमम् व्योम व्यवनं स्थानम् ॥ ६१ ॥ (१) प्रत्याह। इयंवेदि:। इयंवेदि: पर: अन्त: पृथिव्या:। वेदिर्हिसर्वम् पृथिवीरूपाभवति। अयव यज्ञ: भुवनस्यनाभि: नहनम् यज्ञा द्वैप्रजा: प्रजायन्त इतिश्रुति:।

त्वांम्पृथिव्या: पृच्छामियत्रभुवनस्यनाभि: ॥ पृच्छामित्वाव्वृष्णोऽ अश्वस्यरेत: पृच्छामिव्वाच: परमंव्व्योम ॥ ६१ ॥ इयँव्वेदि: ॥ इयँ व्वेदि: परोऽअन्त: पृथिव्याऽअयँयज्ञोभुवनस्यनाभि: ॥ अयँसो सोव्वृष्णोऽअश्वस्यरेतोब्ब्रह्मायँव्वाच: परमंव्व्योम ॥ ६२ ॥ [ १० ]

अयंचसोम: चन्द्रमा: लतासोमोवा वृषा: सेक्ता: अश्वस्यरेत:। अयंचब्रह्माऋत्विकवाच: परमं व्योमव्यवनं स्थानम्। विवेद योगात्। समाप्तम ब्रह्मोद्यम् ॥ ६२ ॥ महिम्न: पुरोनुवाक्या।

(१) का० इयं वेदिरित्यध्वर्यु:। अध्वर्यु: यजमानं प्रत्याह। इयं वेदि: उत्तरवेदि: पृथिव्या: पर: अन्तोऽवधि: वेदे: सर्वपृथ्वीरूपत्वादित्यर्थ:।

सुभूःस्वयम्भूः । अनुष्टुप् प्राजापत्या । साधुभवनः स्वयम्भूः स्वेच्छयागृहीत शरीरः । प्रथमः अनादि निधनः पुरुषः । किमकरोदित्याह । अन्तर्महत्यर्णवेदधेह । अन्तर्महतोर्णवस्य । हेति निपातः पुराकल्पद्योतनार्थः । किन्दधे । गर्भम् ऋत्वियम् प्राप्तकालम् । कथं भूतमृगर्भम् । यतोजातः प्रजा-

सुभूःस्वयम्भूः ॥ प्रथमोन्तर्महत्यर्णवे ॥ दधेहगर्भमृत्वियंयतो जातःप्रजापतिः ॥ ६३ ॥ होतायक्षत् ॥ होतायक्षत्प्रजापतिᳫं सोमस्यमहिम्नः ॥ जुषतांपिबंतुसोमᳫं होतर्यज ॥ ६४ ॥ प्रजापतेन ॥ त्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्त

पतिः । यस्माद्गर्भात् जातः प्रजापतिः अनन्योपमः ॥ ६२ ॥ प्रैषः । होतायक्षत् । दैव्योहोता यजतु । प्रजापतिम् सोमस्य महिम्नः संबन्धिनम् । सचेज्यमानः सन् जुषतां प्रीत्यापरिगृह्णातु

श्रु०
य०
सं०
५२३
उ०
भा०

ऽिवयुच । सोभम् त्वमपिच हेमनुष्यहोत: । यज्ञ ।। ६४ ।। प्रज.पतेन । व्या।ख्यातोमन्त्र: ।। ६५ ।।

इतिउव्वटकृतौमन्त्रभाष्येत्रयोविंशोधयाय: २३ ॥

(१) इतउत्तरं श्रुतिरूपा:मन्त्राआश्वमेधिकानाम् पशूनाम् देवतासंवन्धाभिधायिनोधयायेनोच्य-

न्तोऽअस्तुव्वयꣳस्यामपतंयोरयीणाम् ॥ ६५ ॥ [ ३ ]

इतिश्रीवाजसनेयीसंहितायांदीर्घपाठत्रयोविंशोऽध्याय: २३ ॥

* अश्वस्तूपरऽ ॥ अश्वस्तूपरोगोमृगस्तेप्राजापत्त्याऽकृष्णग्रीव

ऽ आग्नेयोररारटेंपुरस्तात्सारस्वतीमेष्युधस्ताद्धन्वोराश्विनावधोरा

न्ते। अश्वस्तूपरोगोमृगस्तेप्राजापत्याइति । शतपथोप्येतमधयायंश्रुतिकृत्वाह । अश्वस्तूपरोगोमृगइति तन्मधये यूपआलभतइत्यादिनाग्रन्थेन दिङ्मात्रमप्रदर्शयन् । सूत्रकृताचायमधयाय: सूचीकृत: येनैव

* अश्वस्तू परोधूम्रान्व सन्ताय समुद्राय शिशुमा राज्ञ: प्राजापत्यौ दम्यकाश्वलाविर्ठं०मत् ।

अ०
२४
शिवम्
५२३

माहश्वभिनिष्टे अश्वस्तूपरोगोमृगान्नियुनक्ति । यथोक्तमश्ववादौ देवताइति । तन्नवैषावोवामनइत्येव मन्त्राःपर्यंग्याः । अश्वःतूपरोनिःशृङ्गः गोमृगोगवयः एतेप्रजापतिदेवत्याः । कृष्णग्रीवश्छागआग्नेयः पुरस्ताल्ललाटे अश्वस्य बन्धनीयइति शेषः । एवंसारस्वतीमेषीअधस्ताद्धन्वोः आश्विनौ अधो-रामौ अधः शुक्लौच्छागौपूर्वपादयोः । सोमपूष देवत्योनाभ्याम् बन्ध॰ । सूर्यदेवत्यः श्वेतयमदेवताः

सौबाहुर्व्वोः॒सौमापौष्णाः॒ श्यामोनाभ्याᳪ॑सौर्य्ययामौश्वेतश्चकृष्ण पार्श्वयोस्त्वाष्ट्रौलोमशसक्थौसक्थ्योर्व्वायव्यः श्वेतःपुच्छइन्द्रा यस्वपस्यायवेहद्वैष्णवोवामनः ॥१॥ रोहितोधूम्ररोहितः॥ कर्कन्धु

कृष्णः श्वपार्श्वयोः लोम युतेसक्थनीय योस्तौत्वष्टृदेवत्यौ सक्थ्योः । वायव्यः श्वेतःपुच्छे स्वमस्याय शोभन कर्मणे इन्द्रायवेहत् विष्णुदेवत्योवामनश्च पशुः अश्वस्य पुच्छएव । एतेपर्यंग्याः । एव-मग्रेपिदेवता पशुवन्धोज्ञेयः । ललाटादिषु पशुवन्धनायाश्वशरीरम् रज्जुभिर्वेष्टनीयम् । एतेमधमम-यूपे ॥ १ ॥ रोहितोधूम्र रोहितइत्यादयः श्वेतावायव्याः श्वेता.सौर्याइत्येवमन्त्रः । इतरेषुयूपेषु

रोहितादिषु येगुणवचनाः शब्दास्तेगुणिनम् पशुंलक्षयन्ति ॥ २ ॥ महीधरोक्तमर्थंविलिखामि। शुद्धवालः शुभ्रवालः सर्वशुद्धवालः मणिशुद्धवालः मणिवर्णकेशः ते त्रयः अश्विदैवत्याः द्वितीये। श्येतः श्वेतवर्णः श्येताक्षः श्वेतनेत्रः अरुणः रक्तः ते त्रयो रुद्राय पशुपतये पशुपतिरुद्रदैवता

रोहितस्तेसौम्म्याबभ्रूररुणबभ्रुःशुकबभ्रुस्तेवारुणाःशितिरन्ध्रोन्न्यतःशितिरन्ध्रःसमन्तशितिरन्ध्रस्तेसावित्राःशितिबाहुरन्न्यतःशितिबाहुःसमन्तशितिबाहुस्तेबार्हस्पत्त्याःपृषतीक्षुद्रपृषतीस्थूलपृषतीतामैत्रावरुण्यः ॥ २ ॥ शुद्धवालःसर्व्वशुद्धवालोमणिवालस्तऽआश्विनाःश्येतःश्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्णायामाऽअव



द्वितीये। कर्णास्त्रयः पशुविशेषाः कर्णश्छन्दे च वृत्ते चेति विश्वोक्तेः कर्णाश्च न्द्रसदृशश्वेतकर्णा- स्त्रयः पशवः बहुवचनस्य त्रित्वे पर्यवसानात् यामाः यमदैवताः द्वितीये। अवलिप्ताः सगर्वास्त्रयो

रौद्राः । एते द्वितीये पञ्चदश ॥ अथ तृतीये यूपे । नभोरूपाः आकाशवन्नीलवर्णाः पार्जन्याः पर्जन्य दैवताः पशवस्तृतीये नियोज्याः ॥३॥ पृश्निः विचित्रवर्णा तिरश्चीनानि पृश्नीनि विन्दवो यस्य सः एवमूर्ध्वानि पृश्नीनि यस्य सः ते त्रयो मारुताः मरुद्देवत्यास्तृतीये । फल्गूः अपुष्टशरीरा लोहि-

लिप्मा रौहिना नभोरूपाः पार्जन्न्याः ॥ ३ ॥ पृश्निस्तिरश्चीनपृश्निः ॥ पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णी पलक्षी ताः सारस्वत्यः * प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्तऽऐन्द्राग्नाः कृष्णाञ्जिर

तोर्णी रक्तरोमवती पलक्षी श्वेता पलक्षशब्दो वलक्षार्थः श्वेतपर्यायः तास्तिस्रोऽजाः सारस्वत्यः सरस्वतीदैवतास्तृतीये । प्लीहाकर्णः प्लीहा रोगविशेषः तद्युक्तौ कर्णौ यस्य स प्लीहकर्णः अन्येषा-मपि दृश्यतइति संहितायां दीर्घः शुण्ठकर्णः ह्रस्वकर्णः अध्यालोहकर्णः रक्तवर्णकर्णः ते त्रयस्त्वाष्ट्राः

* प्लोहकर्णः इत्यवस्थायां पिवासोमम्पिवासुतस्येत्यादिसूत्रेणकर्णपरतः प्लीहितरकारस्यदीर्घन्निपात्यते ।

त्वष्टृदेवतास्तृतीये । कृष्णग्रीवः शितिकक्षः श्वेतकक्षः अञ्जिसक्थः अञ्जिपुरङ्गं सक्थ्नोरूर्वोर्यस्य सः
ते त्रय ऐन्द्राग्नाः इन्द्राग्निदैवताः तृतीये । पञ्चदश पूर्णाः ॥ कृष्णाञ्जिः कृष्णपुण्ड्रः अल्पाञ्जिः
महाञ्जिः अल्पमञ्जि यस्य महदञ्जि यस्य स तथा ते त्रय उषस्याः उषादेवतास्तुर्थे यूपे नियोज्याः
॥ ४ ॥ विचित्रवर्णास्तिस्रः स्त्रीपशवो वैश्वदेव्यः विश्वदेवदेवतास्तुर्थे । रोहिण्यः रक्तवर्णाः त्र्यवयः

## ल्पाञ्जिर्महाञ्जिस्तऽउषस्याः ॥४॥ शिल्पा वैश्वदेव्यः ॥ शिल्पा वैश्वदेव्यो रोहिण्यस्त्र्यवयो वाचेऽविज्ञाताऽअदित्यै सरूपा धात्रे वत्सतर्यो देवानाम्पत्नीभ्यः ॥ ५ ॥ कृष्णग्रीवाऽआग्नेयाः ॥

सार्धसंवत्सरास्तिस्रोऽजा वाचे वाग्देवतास्तुर्थे । अविज्ञाताः कृष्णग्रीवादिचिह्नविज्ञानशून्यास्त्रयः
पशवोऽदित्यै अदितिदेवतास्तुर्थे । सरूपाः समानरूपास्त्रयः पशवो धात्रे धातृदेवतास्तुर्थे । एवं
पञ्चदश ॥ अथ पञ्चमे यूपे तिस्रो वत्सतर्यः बालछाग्यो देवतानाम् पत्नीभ्यः तद्देवताः पञ्चमे ॥५॥
कृष्णग्रीवाः कालकण्ठास्त्रयः पशव आग्नेयाः अग्निदेवताः पञ्चमे । शितिभ्रवः श्वेतवर्णभ्रूयुक्तास्त्रयो

वसूनां वसुदेवताः पञ्चमे । रोहिताः रक्तवर्णास्त्रयः रुद्राणां रुद्रदेवताः पञ्चमे । श्वेताः अवरोकिणः अवलोकिनः यद्वा अवाधस्ताद्रोकः छिद्रम् येषां ते छिद्रम् निर्व्यथनम् एकक: ते त्रयः आदित्यानाम् तद्देवताः पञ्चमे । अथ षष्ठे यूपे । नभोरूपाः पार्जन्यास्त्रयः षष्ठे ॥ ६ ॥ उन्नतः उच्चः ऋषभः पुष्टः वामनः वह्वन्यपि वयसि गते हृद्धिरहितः ते त्रय ऐन्द्रावैष्णवाः इन्द्रविष्णुदेवताः षष्ठे । उन्नतः

श्वितिरन्ध्रवोव्वसूनाᳬंरोहिंतारुद्राणांᳬं श्वेताऽअवरोकिणऽआदित्या नान्नभोरूपाःपार्ज्जन्न्याः ॥६॥ उन्नतऽऋषभः ॥ उन्नतऽऋषभोव्वा मनस्तऽऐन्द्रावैष्णवाऽउन्नतः श्वितिबाहुः श्वितिपृष्ठस्तऽऐन्द्राबार्हस्पत्याः शुकरूपाव्वाजिनाः कल्माषाऽआग्निमारुताः श्यामाः पौ

श्वितिबाहुः श्वेतपूर्वपादः श्वितिपृष्ठः श्वेतपृष्ठः ते त्रयः ऐन्द्राबार्हस्पत्याः इन्द्रबृहस्पतिदेवताः षष्ठे । शुकरूपाः शुकपक्षिसमवर्णाः त्रयो वाजिनाः वाजिदेवताः षष्ठे । कल्माषाः कर्बुरास्त्रयः पशव आग्निमारुताः षष्ठे । एवं पञ्चदश । अथ सप्तमे यूपे । श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवताः

सप्तमे ॥ ७ ॥ एताः कर्बुरवर्णास्त्रयं इन्द्राग्निदेवताः सप्तमे । द्विरूपाः वर्णद्वयोपेतास्त्रयः अग्नीषो-
मीयाः अग्निसोमदेवत्याः सप्तमे । वामना अनड्वाहः त्रय आग्नावैष्णवाः अग्निविष्णुदेवत्याः सप्तमे ।
वशाः वन्ध्याः तिस्रोऽजाः मैत्रावरुण्यः तद्देवताः सप्तमे । अथाष्टमे यूपे । अन्यतएन्यः एकपार्श्वे कर्बु-
रवर्णास्तिस्रोऽजा मैत्र्याः मित्रदेवत्याः अष्टमे ॥ ८ ॥ कृष्णग्रीवा आग्नेयास्त्रयः अष्टमे । बभ्रवः कपि-

दस्राः ॥ ७ ॥ एताऽऐन्द्राग्नाः ॥ एताऽऐन्द्राग्नाद्विरूपाऽअग्नीषो मीयांवामनाऽअनड्वाहऽआग्नावैष्णवावशामैत्रावरुण्योन्यतऽएन्योमैत्र्यः ॥८॥ कृष्णग्रीवाऽआग्नेयाः ॥ कृष्णग्रीवाऽआग्नेयाबभ्रवःसौम्याः श्वेतावायव्याऽअविज्ञाताऽअदित्यैसरूपाधात्रेवत्सतर्यौदेवानाम्पत्नीभ्यः ॥९॥ कृष्णाभौमाः ॥ कृष्णाभौमाधूम्रा

लवर्णास्त्रयः सौम्याः सोमदेवत्याः अष्टमे । श्वेतास्त्रयः वायव्याः वायुदेवत्याः अष्टमे । अविज्ञाताः
चिह्नविशेषैरज्ञातास्त्रयः अदितिदेवत्याः अष्टमे । अथ नवमे । सरूपाः धातृदेवत्याः नवमे । वत्स-
तर्यः देवपत्नीदेवत्यास्तिस्रः नवमे ॥ ९ ॥ कृष्णाः भौम्याः भूमिदेवत्यास्त्रयः नवमे । धूम्रवर्णास्त्रयः

अन्तरिक्षदेवत्याः नवमे । बृहन्तो महान्तस्त्रयः दिव्याः द्युदेवत्याः नवमे । अथ दशमे शबलाः कर्बुरास्त्रयः वैद्युताः विद्युद्देवत्याः दशमे । सिध्मा सिध्माख्यरोगवन्तस्त्रयः तारकाः नक्षत्रदेवत्याः दशमे ॥ १० ॥ धूम्रवर्णान् त्रीनजान् वसन्ताय वसन्तदेवतानालभते नियुनक्ति दशमे । श्वेतान् त्रीन् ग्रीष्माय दशमें । कृष्णवर्णान् त्रीन् वर्षाभ्यः दशमे । अथैकादशे अरुणान् रक्तान् त्रीन् शरदे एकादशे । पृषतः नानावर्णबिन्दुयुक्तान् त्रीन् हेमन्ताय एकादशे । पिशङ्गान् लोहितमिश्रकपिलवर्णान् त्रीन् शिशिराय एकादशे ॥ ११ ॥ सार्धसंवत्सरास्त्रयः गायत्र्यै एकादशे । सार्धद्विसंवत्सरास्त्रयः त्रिष्टुभे- एकादशे । अथ द्वादशे यूपे । दित्यवाहः द्विसंवत्सरास्त्रयो जगत्यै द्वा० । त्रिवत्साः त्रिवर्षाः त्र्यवयोऽनुष्टुभे

आन्तरिक्षा बृहन्तो दिव्याः शबला वैद्युताः सिध्मास्तारकाः ॥ १० ॥

[ १० ] धूम्रान्वसन्ताय ॥ धूम्रान्वसन्तायालभते श्वेतान्ग्रीष्माय कृष्णान्वर्षाभ्योऽरुणाञ्छरदे पृषतो हेमन्ताय पिशङ्गाञ्छिशिराय ॥ ११ ॥ त्र्यवयो गायत्र्यै ॥ पञ्चावयस्त्रिष्टुभे दित्यवाहो जगत्यै त्रिव

द्वा० । तुर्यवाहः सार्धत्रिसंवत्सरास्त्रय उष्णिहे द्वा० ॥ १२ ॥ पष्ठवाहः चतुःसंवत्सरास्त्रयो विराजे द्वा० । उक्षाणः सेचनसमर्था युवानस्त्रयः बृहत्यै द्वा० । अथ त्रयोदशे यूपे । ऋषभाः उक्ष्णोऽप्यधिकवयस्का त्रयः ककुभे त्रयोदशे । अनड्वाहः शकटवहनसमर्था अजास्त्रयः पङ्क्त्यै त्रयो० । धेनवः नवप्रसूता अजास्तिस्रः अतिच्छन्दसे त्रयो० ॥ १३ ॥ अथ चातुर्मास्यदेवाः पशवः श्वेताः

त्साऽअ॑नु॒ष्टुभे॑तु॒र्य्य॒वाहं॑ऽउ॒ष्णिहे॑ ॥ १२ ॥ पृ॒ष्ठ॒वा॒हो॑वि॒राजे॑ ॥ पृ॒ष्ठ॒वा॒हो॑वि॒राजं॑ऽउ॒क्षाणो॑बृह॒त्याऽऋ॑ष॒भाः॑क॒कुभे॑न॒ड्वाहः॑ प॒ङ्क्त्यै॑धे॒नवो॑ति॑च्छन्दसे ॥ १३ ॥ कृ॒ष्णग्री॑वाऽआग्ने॒या॒ब॒भ्रवः॑ ॥ सौ॒म्याऽउ॑पध्व॒स्ताः सा॑वि॒त्रा॒व॑त्सत॒र्य्यः॑ सा॒र॒स्व॒त्यः॑ श्या॒माः॑पौ॒ष्णाः॒पृश्न॑यो मारु॒ताब॑

सौर्य्या इत्यन्तः । तत्र प्रथमं वैश्वदेवपर्वपशव उच्यन्ते । कृष्णग्रीवाः त्रयः आग्नेयाः त्रयो० बभ्रवः कपिलास्त्रयः सौम्याः । अथ चतुर्दशे यूपे । उपध्वस्ताः उपध्वंसनमधः पतनं तद्गुणविशिष्टा वर्णान्तरमिश्रिता वा त्रयः सवितृदेवताः चतु० । वत्सतर्यः तिस्रः सरस्वतीदे-

वता चतु॰। श्यामाः शुक्लकृष्णवर्णाः पौष्णाः पूषदेवत्याः चतु॰। पृश्नयः तनुकाया विचित्र-वर्णा वा त्रयो मरुद्देवताः चतु॰। बहुरूपास्त्रयो वैश्वदेवाः चतु॰। अथ पञ्चदशे। वशाः वन्ध्यास्तिस्रो द्यावापृथिवीयाः द्यावापृथिवीदेवत्याः पञ्च॰ ॥ १४ ॥ अथ वरुणप्रघासपर्वपशव उच्यन्ते। सञ्चरशब्देन कृष्णग्रीवा आग्नेया इत्यादयः पूर्वकण्डिकोक्ताः पञ्चदश पशव उच्यन्ते पञ्च सञ्चराणि हवींषि भवन्तीति वत् यथा चातुर्मास्येषु चतुर्ष्वपि पर्वसु आग्नेयादीनि

हुरूपा वैश्वदेवा वशा द्यावापृथिवीयाः ॥ १४ ॥ उक्ताः संञ्चराः ॥ उक्ताः संञ्चराऽएताऽऐन्द्राग्नाः कृष्णा वारुणाः पृश्नयो मारुताः का

पञ्च हवींषि समानानि एवमत्रापि चतुर्णां पर्वणां सम्बन्धिना माद्यानां पञ्चानां देवाना-माद्या एते पञ्चदश पशवः समाना एव भवन्ति। तेन सञ्चरा उक्ताः आग्नेयादयः पञ्चदश पशव उक्ता इत्यर्थः। आग्नेयाः कृष्णग्रीवास्त्रयः पञ्चदशे। सौम्याः बभ्रवस्त्रयः पञ्च॰। सावित्रा उपध्वस्ताः त्रयः पञ्च॰। सारस्वत्यः वत्सतर्यः तिस्रः पंच॰। अथ षोड़शे। पौष्णाः श्यामाः त्रयः षोड़शे। एते संचराः उक्ताः। एताः कर्बुरास्त्रय ऐन्द्राग्नाः इन्द्राग्निदेवताः

शु॰ य॰ सं॰ ५२८ उ॰ भा॰

षो॰। कृष्णाः कृष्णवर्णास्त्रयो वारुणाः वरुणदेवताः षो॰। पृश्नयः तनुशरीरास्त्रयः मारुताः षो॰। त्रयः तूपराः निःशृङ्गाः कायाः कदेवताः षो॰ ॥ १५ ॥ अथ सप्तदशे। अथ साकमेधपशवः। प्रथमगर्भे जातान् त्रीन् अजान् अनीकवते अनीकवद्गुणविशिष्टायाग्नये। आलभते नियुनक्ति सप्त॰। वातसमूहो वात्या तया सह वर्तन्तइति सवात्याः वातम-

यास्तूपराः ॥ १५ ॥ अग्नयेनीकवते ॥ प्रथमजानालभतेमरुद्भ्यः सान्तपनेभ्यः सवात्यान्मरुद्भ्योगृहमेधिभ्योबष्किहान्मरुद्भ्यः क्रीडिभ्यः संसृष्टान्मरुद्भ्यः स्वतवद्भ्योनुसृष्टान् ॥१६॥ उक्ताः संचराः॥

ण्डलीमध्यस्थान् त्रीनजान् सान्तपनेभ्यः मरुद्भ्यः सप्त॰। बष्किहान्चिरप्रसू तान्त्रीन्गृहमेधिभ्यो मरुद्भ्यः सप्त॰। संसृष्टान् सह सृष्टान् त्रीन् क्रीडिभ्यो मरुद्भ्यः सप्त॰। अनुसृष्टान् अनुक्रमेण जातान् त्रीन् स्वतवद्भ्यो मरुद्भ्यः सप्त॰ ॥ १६ ॥ अथाष्टादशे यूपे महाहविः पशवः कृष्णग्रीवादयः पंचदश पूर्ववत्। अथैकोनविंशतितमे एताः कब्रुरास्त्रय ऐन्द्राग्नाः

एकोन० । प्राशृङ्गाः संहितायां दीर्घः प्रकृष्टशृङ्गयुक्ता माहेन्द्राः महेन्द्रदेवता एकोन० । बहु-रूपास्त्रयो वैश्वकर्मणाः विश्वकर्मदेवताः एकोन० ॥ १७ ॥ अथ पितृदेवतापशवः । धूम्राः कृष्णवर्णमिश्रा लोहितवर्णाः बभ्रुनीकाशाः कपिलवर्णसदृशास्त्रयः पशवः सोमवतां पितॄणां नियोज्याः एकोन० । बभ्रवः कपिलाः धूम्रनीकाशाः धूम्रा इव नितरां काशन्ते इति

उक्ताः सँवत्सराय एताऽऐन्द्राग्नाः प्राशृङ्गा माहेन्द्रा बहुरूपा वैश्वकर्मणाः ॥ १७ ॥ धूम्रा बभ्रुनीकाशाः पितॄणाँ सोमवतां बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां कृष्णाः पृषन्तस्त्रैयम्बकाः ॥ १८ ॥ उक्ताः संवत्सराः ॥ उ

ताद्दशास्त्रयः बर्हिषदां पितॄणामेकोन० । अथ विंशे । यूपे । कृष्णाः बभ्रुनीकाशाः अग्निष्वात्तानां पितॄणां विंशे । कृष्णाः पृषन्तः विन्दुयुक्ताः त्र्यम्बकदेवताः विंशे ॥ १८ ॥ अथ शुनासीरीयपशवः । तत्र संचराः आग्नेयादयः पंचदशोक्ताः । तेन कृष्णग्रीवा आग्नेयाः विंशे । बभ्रवः सौम्याः

मेऽवकाशे द्वौ उलूकौ काकवैरिणौ । त्रीन् चाषानग्नीषोमाभ्याम् त्रीन्मयूरानश्विभ्यां त्रीन्कपो-
तान्मित्रावरुणाभ्याम् ॥ २३ ॥ त्रयाणाम् लवानाम् लावकानाम् मध्ये द्वौ सोमाय । अथ षष्ठे-
ऽवकाशे एकं लवं सोमाय । कौलीकान् पक्षिणः त्वष्ट्रे । तिस्रो गोषादीः गवां सादयित्रीः पक्षिणः
देवानां पत्नीभ्यः । तिस्रः कुलीकाः पक्षिणीः देवजामिभ्यः देववधूभ्यः जामिः स्वसृकुलस्त्रियो: ॥

न्मित्रावरुणाभ्यांकपोतान् ॥ २३ ॥ सोमायलवान् ॥ सोमायल
वानालभतेत्वष्ट्रेकौलीकान्गोषादीर्देवानाम्पत्नीभ्यःकुलीकादेवजा
मिभ्योऽग्नयेगृहपतयेपारुष्णान् ॥२४॥ अह्नेपारावतान् ॥ अह्ने
पारावतानालभतेरात्र्यैसीचापूरहोरात्रयोःसन्धिभ्योजतूर्मासेभ्यो

त्रीः पारुष्णसंज्ञान्गृहपतयेऽग्नये ॥ २४ ॥ अथ सप्तमेऽवकाशे त्रीन्पारावतान्कलरवानह्ने तिस्रः
सीचापूः पक्षिणीः रात्र्यै तिस्रो जतूः पातास्या: अहोरात्रयोः सन्धिभ्यः । त्रीन्दात्यूहान् काल-
कण्ठान्मासेभ्यः त्रयाणां महतां सुपर्णानां मध्ये एकं संवत्सराय । अथाष्टमेऽवकाशे द्वौ महान्तौ

सुपर्णौसं वत्सराय ॥ २५ ॥ भूम्यै आखून् मूषकान् त्रीन् पाङ्क्तान् मूषकजातिविशेषानन्तरिक्षाय काशान् तद्वदानेव दिवे त्रीन्नकुलान्दिग्भ्यः तत्र द्वौ अष्टमे । अथ नवमे एकम् । त्रीन्बभ्रुकानवान्तरदि-

दात्यौहान्त्सँव्वत्सरायमहतः सुपर्णान् ॥ २५ ॥ भूम्याऽआखून् ॥ भूम्याऽआखूनालभतेन्तरिक्षाय पाङ्क्तान्दिवे कशान्दिग्भ्यो नकुलान्बभ्रुकानवान्तरदिशाभ्यः ॥ २६ ॥ वसुभ्यऽऋश्यान् ॥ वसुभ्यऽऋश्यानालभते रुद्रेभ्यो रुरूनादित्येभ्यो न्यङ्कून्विश्वेभ्यो देवेभ्यः पृषतान्त्साध्येभ्यः कुलुङ्गान् ॥ २७ ॥ ईशानायपरस्वतः ॥ ईशा

शाभ्यः ॥ २६ ॥ त्रीन्ऋश्यान् वसुभ्यः ऋश्यादयो मृगविशेषाः । रुद्रेभ्यः रुरून् । त्रीन्न्यङ्कूनादित्ये-भ्यः । अथ दशमेऽवकाशे त्रीन् पृषतान्विश्वेभ्यो देवेभ्यः त्रीन् कुलुङ्गान् साध्येभ्यः ॥ २७ ॥ पर-स्वतः मृगविशेषानीशानाय । त्रीन्गौरान्मृगान्मित्राय त्रीन्महिषान्वरुणाय तत्रैकं दशमे । अथै-

काद्शेऽवकाशे त्रीन् गवयान्गोसदृशानारण्यपशून् बृहस्पतये त्रीनुष्ट्रान् त्वष्ट्रे ॥ २८ ॥ प्रजापतयेपुरुषान्हस्तिनः त्रीन् । त्रीन्प्लुषीन्वङ्गतुरङ्गान्वाचे तंमघेत्र द्वौप्लुषौ एकादशे । अथ द्वादशे-



नायुपरंस्वतऽआलंभतेमिचायंगौरान्वरुणायमहिषान्बृहस्पतंयेग वयाँस्त्वष्टऽउष्ट्रान् ॥२८॥ प्रजापंतयेपुरुंषान् ॥ प्रजापंतयेपुरुंषान्ह स्तिनऽआलंभतेव्वाचेप्लुषीँ श्चक्षुषेमशकाञ्छ्रोत्रायभृङ्गाः ॥ २९ ॥ शतम् १४०० प्रजापंतयेच ॥ व्वायवेचगोमृगोव्वरुणायारण्योमेषोय मायकृष्णोमनुष्यराजायमर्कटः शार्दूलायरोहिद्दृषभायंगवयीक्षिप्र

ऽवकाशे एकं प्लुषिम् । त्रीन्मशकान् चक्षुषे । त्रयो भृङ्गाः श्रोत्राय नियोज्याः ॥ २९ ॥ प्रजापतये च वायवे च एको गोमृगः गवयः । एक आरण्यो मेषो वरुणाय । एकः कृष्णो मेषो यमाय । एको मर्कटः मनुष्यराजाय । एको रोहिद्दृष्यः शार्दूलाय । एका गवयी ऋषभाय तदाख्य

देवाय ॥ अथ त्रयो दशेऽवकाशे एका वर्तिका क्षिप्रश्येनाय देवाय ॥ एकः कृमिः कीटः नीलङ्गोः नीलङ्गवे । शिशुमारः एको जलचरः समुद्राय । हस्ती हिमवते ॥३०॥ मयुः प्राजापत्यः तुरङ्गवदनः किन्नरः प्रजापतिदैवतः । उलोमृगविशेषः हलिक्ष्णः सिंहविशेषः वृषदंशो विडालः ते त्रयोधात्रे ।

श्येनाय वर्तिका नीलङ्गोः कृमिः समुद्राय शिशुमारो हिमवते हस्ती ॥ ३० ॥ [१०] मयुः प्राजापत्यः ॥ मयुः प्राजापत्य उलो हलिक्ष्णो वृषदंशस्ते धात्रे दिशां कङ्को धुङ्क्षाग्नेयी कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा वाचे क्रुञ्चः ॥ ३१ ॥ सोमाय कुलुङ्गः ॥ सोमा

एकः कङ्कः बकः दिशां दिग्भ्यः । एका धुङ्क्षा पक्षिणी आग्नेयी अग्निदेवत्या । कलविङ्कः चटकः लोहिताहिः रक्तवर्णसर्पः पुष्करसादो पुष्करे सीदतीति कमलभक्षो पक्षिविशेषः ते त्रयः त्वाष्ट्राः त्वष्टृदेवताः । अथ चतुर्दशेऽवकाशे एकः क्रुञ्चः वाचे॥ ३१ ॥ कुलुङ्गः कुरङ्गो

शु० य० सं० ५३२ उ० भा०

हरिण एकः सोमाय। आरण्यो वन्योऽजश्छागः नकुलः शका शकुन्तिः एते त्रयः पौष्णाः पूषदेवत्याः। क्रोष्टा शृगालो मायोर्देवस्य। एको गौरमृगः इन्द्रस्य। पिद्वो मृगविशेषः न्यङ्कुः अपि कक्कटः स एव ते त्रयोऽनुमत्यै। चक्रवाकः प्रतिश्रुत्कायै ॥ ३२ ॥ बलाका बकस्त्री सूर्यदे-

यकुलङ्ग ऽआरण्योऽजो नकुलः शका ते पौष्णाः क्रोष्टा मायोरिन्द्रस्य गौरमृगः पिद्वो न्यङ्कुः कक्कटस्तेऽनुमत्यै प्रतिश्रुत्कायै चक्रवाकः ॥३२॥

सौरी बलाका ॥ शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै शारिः पुरुषवाक् * श्वाविद्भौमी शार्दूलो वृकः पृदाकुस्ते मन्यवे सरस्वते शु

वत्या। शार्गः पक्षिविशेषः। अथ पञ्चदशोऽङ्काशी सृजयः पक्षिविशेषः शयाण्डकोऽपि ते मैत्राः मित्रदेवत्याः पुरुषवाक् मनुष्यवद्वादिनी शारिः शुकी सरस्वत्यै। श्वावित् सेधा भौमी भूदेवत्या

---

* श्वविद्भौमी इत्यत्रवस्थायं षत्वराभ्रसति सुमतोत्यादिसूत्रेण वकारे प्रत्यये ह्रस्व स्वरादीर्घनिपातनाते उष्ट्रोष्ट्रणी वाक्यपिद्योत्यम्।

अ० २४

शिवम्

५३२

शार्दूलो व्याघ्रः वृकः चित्रकः पृदाकुः सर्पः ते त्रयो मन्यवे । पुरुषवाक् शुकः सरस्वते समु-
द्राय ॥ २३॥ सुपर्णः गरुत्मान् पार्जन्यः पार्जन्याय आतिः आडी वाहसः दर्विदा काष्ठकुट्टः ते त्रयः
पक्षिविशेषाः वायवे । बृहस्पतये वाचस्पतये वाचो वाक्याः पतये इति बृहस्पतिविशेषणम्

कः पुरुषवाक् ॥ २३ ॥ सुपर्णः पार्जन्यः ॥ सुपर्णः पार्जन्यऽआति
र्वाहसो दर्विदा ते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलजऽआन्त
रिक्षः प्लवो मद्गुर्मत्स्यस्ते नदीपतये द्यावापृथिवीयः कूर्मः ॥ २४ ॥
पुरुषमृगश्चन्द्रमसः ॥ पुरुषमृगश्चन्द्रमसो गोधा कालका * दार्वाघा

ईदृशाय बृहस्पतये पैङ्गराजः पक्षिविशेषः । अथ षोडशेऽवकाशे अलजः पक्षिविशेषः आन्त-
रिक्षः अन्तरिक्षदेवतः । प्लवः जलपक्षी मद्गुः कारण्डवः मत्स्यः ते नदीपतये । कूर्मः कच्छपः
द्यावापृथिवीयः द्यावापृथिवीदेवतः ॥ २४ ॥ पुरुषमृगः पुंमृगः चन्द्रमसः । गोधा कालका

---

* दार्वाघाटस्ते इत्यत्र घातस्तद्रूत्यवस्थायां त आघाटनाडम्बरात् । आघाटशब्दात्परस्तकारः परस्वमूर्द्धन्य मित्यनेन मूर्द्धन्य मापद्यते आडम्बरशब्दो स्पर्शेनभवति इतार्थं केन तकारस्य टकारो भवति ।

| | | |
|---|---|---|
| शु० य० सं० ५२३ उ० भा० | पक्षिविशेषः दार्वाघाटः सारसः ते वनस्पतीनाम् कृकवाकुः ताम्रचूडः सावित्रः सवितृदेवतः हंसः वातस्य नाक्रः मकरः कुलीपयः ते त्रयो जलचरविशेषाः अकूपारस्य समुद्रस्य त्रयाणां मध्ये द्वौ षोडशे । अथ सप्तदशेऽवकाशे एकः कुलीपयः अकूपारस्य । शल्यकः श्वावित् ह्रियै देव्यै ॥ ३५ ॥ एणी मृगी अह्नः आलभ्या । मण्डूको मूषिका तित्तिरिः ते त्रयः सर्पा- | अ० २४ |

टस्ते वनस्पतीनाङ्कृकवाकुः सावित्रो हꣳसो वातस्य नाक्रो मकरः कुलीपयस्तेऽकूपारस्य ह्रियै शल्यकः ॥ ३५ ॥ एण्यह्नः ॥ एण्यह्नो मण्डूको मूषिका तित्तिरिस्ते सर्पाणां लोपाश आश्विनः कृष्णो रात्र्या ऋक्षो जतूः सुषिलीका त इतरजनानां जहका वैष्णवी ॥ ३६ ॥ अन्यु

णाम् । लोपाशो वनचरविशेषः आश्विनः अश्विदेवतः । कृष्णो मृगः रात्र्यै । ऋक्षः भल्लूकः जतूः सुषिलीका एतौ पक्षिविशेषौ ते त्रयः इतरजनानां देवानाम् । जहका गात्रसङ्कोचनी वैष्णवी विष्णुदेवत्या ॥ ३६ ॥ अन्यवापः कोकिलाख्यः पक्षिविशेषोऽर्धमासानां पशुः । अथा-

शिव ५२३

द्वादशेऽवकाशे । ऋष्यो मृगविशेषः मयूरः बर्ही सुपर्णो गरुत्मान् ते गन्धर्वाणां पशवः । उद्रः जलचरः कर्कटसंज्ञः अपां पशुः । कश्यपः कच्छपः मासां मासानाम् । रोहित् ऋष्यः कुण्डृणाची वनचरीविशेषः गोलत्तिकापि ते तयोऽप्सरसाम् । असितः कृष्णः पशुर्मृत्यवे ॥ ३७ ॥

वा॒पोर्ङ्मा॒सानां॑म् ॥ अ॒न्न्यवा॒प्रोर्द्भा॒सा॒ना॒मृश्यो॑म॒यूर॑ः सु॒प॒र्णास्ते॑ग॒न्ध॒र्वा॑णा॑म॒पामु॒द्रो मा॒साङ्क॑ श्यपो॑रो॒हित्कु॑ण्डृ॒णाची॑गो॒ल॒त्तिका॒ते॑प्स॒रसां॑ मृ॒त्यवे॑सि॒तः ॥ ३७ ॥ व॒र्षा॒हूर्ऋ॑तू॒नाम् ॥ व॒र्षा॒हूर्ऋ॑तू॒ना॒मा॒खुः क॒शो॑मान्था॒लस्ते॒पि॒तॄ॒णाम्ब॒ला॑याज॒ग॒रो॑व॒सू॑नाङ्क पि॒ञ्ज॑लः क॒पोत॒ऽउलू॑कः श॒शस्ते॒नि॑र्ऋ॒त्यै॑व॒रु॑णा॒या॒र॒ण्यो॑मे॒षः ॥ ३८ ॥ श्वि॒त्रऽआ॑दि॒त्याना॑ं

वर्षाहूः वर्षाभूः भेकी ऋतूनाम् । आखुः मूषकः कशः मान्थालश्च तद्विशेषौ ते त्रयः पितॄणाम् । अथैकोनविंशे । अजगरो महासर्पः बलाय । कपिञ्जलो वसूनाम् । कपोतः उलूकः शशः ते निर्ऋत्यै । आरण्यो मेषो वरुणाय ॥ ३८ ॥ श्वित्रः श्वेतः पशुरादित्यानाम् । उष्ट्रः दीर्घग्रीवः धृणिवान्

तेजस्वी पशुविशेषः संहितायां घृणिशब्दोदीर्घः वार्ध्रीनसो कण्ठे स्तनवानजः ते त्रयो मत्यै देव्यै। सृमरः गवयोऽरण्याय देवाय। रुरुः मृगः रौद्रः रुद्रदेवतः कयिः पक्षिविशेषः। अथ विंशेऽवकाशे। कुटरुः कुक्कुटः दात्यौहः कालकण्ठः ते त्रयो वाजिनां देवानाम्। पिकः कोकिलः कामाय ॥ ३९ ॥ खड्गो मृगविशेषो विश्वदेवदेवतः। एकः कृष्णः श्वासारमेयः द्वितीयः कर्णौ

म्॥ श्वित्रऽआदित्यानामुष्ट्रो घृणीवान्वार्ध्रीनसस्ते मत्याऽअरण्याय सृमरो रुरू रौद्रः क्वयिः कुटरुर्दात्यौहस्ते वाजिनां कामाय पिकः ॥३९॥ खड्गो वैश्वदेवः ॥ श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सू

लम्बकर्णौ गर्दभः तृतीयस्तरक्षुः मृगादनः ते त्रयो रक्षसां पशवः। सूकरः इन्द्राय। सिंहो मारुतः मरुद्देवतः। कृकलासः सरटः पिप्पका पक्षिणी शकुनिः पक्षी ते त्रयः शरव्यायै। एकः पृषतः मृगविशेषो विश्वेषां देवानां पशुर्भवति विश्वेभ्यो देवेभ्यो जुष्टं नियुनज्मीति योज्यः। एवं षष्ट्यधिकं शतद्वयमारण्याः पशव उक्ताः। अत्र द्वाविंशतिरेकादशिनः सप्तविं-

शत्यधिकानि त्रीणि शतानि अश्वादयः सौर्यान्ताः षष्ट्यधिकं शतद्वयं कपिञ्जलादयः पृषतान्ता आरण्याः पशवः सर्वे मिलित्वा षट् शतानि नवाधिकानि पशवो भवन्ति। श्लोकश्च। षट्

कुरङ्गसिंहहोमाऽस्तुतङ्कर्कलासङ्घिप्पंकाशुकुनिस्तेशरव्याश्वेष्विपश्चवेषा न्देवानाम्पृषुतः॥ ४० ॥ [ ४ ]

इतिश्रीवाजसनेयसंहितायांदीर्घपाठेचतुर्विंशोऽध्यायः २४ ॥

शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि। अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि चेति। तेष्वा- रण्याः सर्वे उत्स्रष्टव्या न तु हिंस्याः॥ ४० ॥

इतिउव्वटकृतौ मन्त्रभाष्ये चतुर्विंशोध्यायः २४ ॥

(१) शादंदद्भिः। इयमपि श्रुतिर्देवताश्वाङ्गयोश्चोदनांविदधाति। शादोदेवताविशेषः दन्ताअश्वाङ्गम्। शादंदद्भिः प्रीणाति । देवताभोक्त्री द्वितीययानिर्दिश्यते । अश्वाङ्गम्भोग्यं तृतीययाकरणविभक्त्या

* ॐ ॥ शादंदद्भिः ॥ शादंदद्भिरवकान्दन्तमूलैर्मृदम्बर्स्वैस्तेगान्दंष्ट्राभ्याꣳसरस्वत्याऽअग्रजिह्वञ्जिह्वायां ऽउत्सादमवक्रन्देनतालुवाजꣳ हनुभ्यामपऽआस्येन वृषणमाण्डाभ्यामादित्याँ श्मश्रुभिः पन्थानम्भ्रूभ्यान्द्यावापृथिवीवर्त्तोभ्यांविद्युतङ्कनीनका

निर्दिश्यते। एवंहिविभक्त्योः सामर्थ्यंभवति। युक्तञ्च होमकाले अङ्गाभिधानम् देवतायैहोमः। आहचश्रुतिः। आज्यमवदानीकृत्वा प्रत्याख्यायम् देवताभ्य आहुतिर्जुहोतीति। दद्भिःशादाय-

(१) का० स्विष्टकृद्वनस्पत्यन्तरे शूल्यꣳहुत्वादेवताश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतꣳ शादप्रभृतित्वागन्तेभ्यो विसुखाच्च परेभ्य इति १ स्विष्टकृद्वनस्पत्योरन्तरे वनस्पतियागानन्तरं स्विष्टकृद्यागात्पूर्वं शूले अर्पितं मांसं प्राजापत्योऽश्व इति वचनत्

* शादंदद्भिर्नवैकैकाहिरण्यगर्भश्चतस्रआनोदशमानोमित्रोयदश्वस्याष्टकौयत्ते षडिमानुकंद्वे पंचदशसप्तचत्वारः ठं० शत्।

स्वाहा। दन्तमूलैरवकायस्वाहा इत्येवम्प्रयोगाः। क्वचिच्चदेवता केवलाभवति। यथाशुक्लायस्वाहा कृष्णायस्वाहेति। क्वचिच्चान्ययाविभक्त्यानिर्देशो द्रव्यदेवतयोः। यथा अग्नेःपच्चति वायोर्निपच्च-तिक्षिति। एवंद्रव्यदेवतमप्रसिद्धम् यज्ञपार्श्वादिभ्यो वगन्तव्यमिति पृथिवींत्वचेति यावत् ॥ १ ॥ अश्वस्य प्राणवायुना वातं प्रीणामि। अपानवायुना नासिकासंज्ञे द्वे देवते प्रीणामि। अध-

भ्याᳪंशुक्लायस्वाहाकृष्णायस्वाहापार्श्याँ णिपक्ष्माँणयवार्य्याऽइक्षवो वार्य्याणिपक्ष्माणिपार्य्या ऽइक्षवः ॥ १ ॥ [१] वातम्प्राणेनं ॥ वातम्प्राणेनापानेननासिके ऽउपयाममधरेणौष्ठेनसद्

स्तनेन ओष्ठेन उपयामं देवं प्रीणामि। उपरितनेन ओष्ठेन सत्सञ्ज्ञं देवं प्रीणामि। प्रका-शेनोपरितनदेहकान्त्या अन्तरं देवं प्रीणामि। उपसर्गस्य घञ्यमनुष्ये बहुलमिति अनोर्दीर्घः अनूकाशेनाधस्तनदेहकान्त्या वाह्यं देवं प्रीणामि। मूर्ध्ना मस्तकेन निवेष्यन् देवं प्रीणामि। निश्चितं बध्यते निर्बाधः शिरोऽस्थिमध्यसंलग्नो मज्जाभागः तेन स्तनयित्नुं देवं प्रीणामि।

---

प्रजापतये हुत्वा अमुष्मै स्वाहेति प्रतिदेवतं शादादिलगन्तेभ्योदेवताभ्यवाङ्गेभ्यो देवताभ्योऽभ्यवाङ्गेभ्यश्च घृतं जुहुयात् अनादेशे घृतस्योक्तत्वात्। तत्र शादं दद्भिरित्यादिपृथिवीं त्वचेत्यन्तः संहिताभागो ब्राह्मणं नमन्त्राः।

मस्तके भवं मस्तिष्कं शिरोमध्यस्थो जर्जरो मांसभागः मस्तिष्कं गोर्दमित्यमरः मस्तकमि-
ष्यति गच्छति मस्तिष्कम् इष गतौ मस्तकमज्जेति चीरस्वामी तेन मस्तिष्केणाशनिं देवं
प्रीणामि। विद्युतं कनीनकाभ्यां प्रीणामीति पूर्ववत्। कर्णाभ्यां श्रोत्रम् अत्राश्वाङ्गात्मिका एव
देवता कर्णाभ्यां कर्णशष्कुलीभ्यां श्रोत्रं देवम् प्रीणामि। श्रोत्रेन्द्रियाभ्यां कर्णौ देवौ प्रीणामि।
कण्ठाधोभागेन तेदनीं देवतां प्रीणामि। शुष्कश्वासौ कण्ठश्च शुष्ककण्ठम् कण्ठस्य यः शुष्को निर्मांसो

तरेणप्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्यम्मूर्ध्नास्तनयित्नुन्निर्बा
धेनाशनिम्मस्तिष्केणविद्युतङ्कनीनकाभ्याङ्कर्णाभ्याᳫं श्रोत्रᳫं श्रो
त्राभ्याङ्कर्णौतेदनीमधरकण्ठेनापः शुष्ककण्ठेनचित्तम्मन्याभिरदि

देशः तेनापो देवताः प्रीणामि। पश्चाद्ग्रीवा शिरा मन्येति अमरः ग्रीवापश्चाद्भागे कृकाटिकायां
शिरा मन्या मन्यत इति मन्या संज्ञायांसमजनीतिक्यप् ग्रीवापश्चान्नाडीभिश्चित्तं प्रीणामि।
शीर्ष्णा शिरसादितिं देवतां प्रीणामि शीर्षस्य शीर्षन्नादेशः शसादौ। नितरां जर्जरीभूतेन शिरोभागेन
निर्ऋतिं देवं प्रीणामि। सम्यक् क्रोशन्ति शब्दायन्ते तानि सङ्क्रोशानिगच्छतोऽश्वस्य यान्यङ्गानि

शब्दं कुर्वन्ति तैरङ्गैः प्राणान् देवान् प्रीणामि । स्तुप उच्छ्राये स्तुपेन उच्छ्रितेन शिखाभुतेनाङ्गेन रेष्माणं देवं प्रीणाति ॥ २ ॥ केशैः स्कन्धस्थरोमभिः मशकान् देवान् प्रीणामि । वहः स्कन्धस्तेनेन्द्रं प्रीणामि । कीदृशेन वहेन स्वपसा अप इति कर्मनाम शोभनमपः कर्म पर्याणधारणरवहनादिकं यस्य सस्वपाः तेन । शकुनिः पक्षी तद्वत् सादो गमनम् षद्लृ विशरणगत्यादौ घञ् वेगवत् कूर्दनं

तिं शीर्ष्णा निर्ऋतिं निर्जर्जल्येन शीर्ष्णा संक्रोशैः प्राणान्रेष्माणं स्तुपेन ॥ २ ॥ [ १ ] मशकान्केशैः ॥ मशकान्केशैरिन्द्रं स्वपसा वहेन बृहस्पतिं शकुनिसादेन कूर्माञ्छफैराक्रमणं स्थूराभ्यामृक्षलाभिः कपिञ्जलाञ्जवं जङ्घाभ्यामध्वानं बाहुभ्यां जाम्बीलेनारण्य

तेन वृहस्पतिं देवं प्रीणामि । शफं क्लीबे खुरः पुमान् खुरैः कूर्मान् देवान् प्रीणामि । रलयोरैक्यम् स्थूलाभ्यां गुल्फाभ्यामाक्रमणं देवं प्रीणामि । गुल्फाधःस्था नाड्यः ऋक्षलास्ताभिः कपिञ्जलान् देवान् प्रीणामि । गुल्फजानुनोर्मध्यभागो जङ्घा ताभ्यां जवं देवं प्रीणामि । अग्रपादयोर्जानूर्ध्वं-

पञ्चतिः सरस्वत्याः । तृतीया पञ्चतिर्मित्रस्य देवस्य । चतुर्थी अपां देवतानाम् । पञ्चमी निर्ऋत्यै निर्ऋतेः । षष्ठी अग्नीषोमयोः । सप्तमी सर्पाणां देवानाम् । अष्टमी विष्णोर्देवस्य । नवमी पूष्णो देवस्य । दशमी त्वष्टुः । एकादशी इन्द्रस्य । द्वादशी वरुणस्य । यमस्येयं यमी त्रयोदशी पञ्चतिः यमसम्बधिनी चतुर्थी प्रथमायां ॥ अथ समस्तयोः पार्श्वयोर्देवानाह दक्षिणं पार्श्वं द्यावापृथिव्यो-

ष्टमी विष्णोरष्टमी पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यै त्रयोदशी द्यावापृथिव्योर्दक्षिणम्पार्श्वं विश्वेषान्देवानामुत्तरम् ॥ ५ ॥ [१] मरुताᳬं स्कन्धाः ॥ मरुताᳬं स्कन्धा विश्वेषान्देवानां प्रथमा कीकसा रुद्राणान्द्वितीया दित्यानान्तृतीया वा

रस्तु उत्तरं वामं पार्श्वं विश्वेषां देवानामस्तु ॥ ५ ॥ अथाङ्गान्तराणां देवता आह विभक्तिव्यत्ययः स्कन्धप्रदेशैर्मरुतो देवान् प्रीणामि । अश्वपुच्छोपरि तिस्रोऽस्थिपङ्क्तयः सन्ति तासां देवता आह । कीकसं कुल्यमस्थि चेत्यमरः कीकसति शब्दं करोति कीकसमस्थि प्रथमा कीकसा प्रथमानि

कीकसानि पुच्छोपरिस्थाद्यस्थिपङ्क्तिर्विश्वेषां देवानां प्रथमकीकसैर्विश्वान् देवान् प्रीणामि। द्वितीयास्थिपङ्क्तिः रुद्राणां द्वितीयै रुद्रान् प्रीणामि। तृतीयानि कीकसानि आदित्यानां तृतीयैः कीकसैरादित्यान् प्रीणामि। वायोः पुच्छं पुच्छेन वायुं प्रीणामि। भासदौ भासेते तौ भासदौ नितम्बौ तावग्नीषोमयोः भासद्भ्यामग्नीषोमौ प्रीणामि। क्रुञ्चौ श्रोणिभ्यां पुनः पूर्ववदङ्गात् तृतीया कटिः श्रोणिः कुकुद्मतीत्यमरः श्रोणिभ्यां दक्षवामाभ्यां कटिप्रदेशाभ्यां क्रुञ्चौ देवौ

यो ऽ पुच्छमग्नीषोमयोर्भासदौ क्रुञ्चौ श्रोणीभ्यामिन्द्राबृहस्पती ऽऊरुभ्यांम्मित्रावरुणावल्गाभ्यामाक्रमणं स्थूराभ्यामबलङ्कु

प्रीणामि। इन्द्राबृहस्पती ऊरुभ्याम् सक्थि क्लीबे पुमानूरुरित्यमरः ऊरुभ्यामिन्द्रावृहस्पती देवौ प्रीणामि। मित्रावरुणौ अल्गाभ्याम् अलमत्यर्थं गच्छतः ऊरुभ्यां संयोगं प्राप्नुतस्तौ अल्गौ बङ्क्षणौ ऊरुसन्धौ ताभ्यां मित्रावरुणौ प्रीणामि। स्थूरौ स्थूलौ स्फिचौ नितम्बाधोभागौ ताभ्यामाक्रमणं देवं प्रीणामि। कुष निष्कर्षे कुष्येते तौ कुष्टौ नितम्बस्थौ कूपकौ आवर्त्तौ

ककुन्दरशब्दवाचौ ताभ्यां बलं देवं प्रीणामि ॥ ६ ॥ वनति सम्भजति वनिष्ठुः स्थूलान्त्रं तेन पूषणं देवं प्रीणामि । गुदं त्वपानं पायुर्नेत्यमरः स्त्रीत्वं छान्दसम् स्थूला चासौ गुदा च स्थूलगुदा तया गुदस्य स्थूलभागेन अन्धाहीन् प्रीणामि । अन्धाश्च ते अहयश्च सर्पास्तान् । सर्पान् गुदाभिः स्थूलगुदातिरिक्तैर्गुदभागैः सर्पान् प्रीणामि । विह्रुत आन्त्रैः अन्त्रं पुरीतदित्यमरः अमगतौ भजने शब्दे अमति भजत्यनेनान्नमित्यन्त्रम् अन्त्रे भवा आन्त्राः अन्त्रसम्बन्धिनो मांसभागाः तैर्विह्रु-

ष्टांभ्याम् ॥ ६ ॥ [१] पूषणंव्वनिष्ठुनान्धाहीन्त्स्थूलगुदयासर्प्पान्गुदाभिर्विह्रुतऽआन्त्रैरपोव्वस्तिनाव्वृषणमाण्डाभ्यांव्वाजिनꣳ शेपेनप्र

तो देवान् प्रीणामि । अपो वस्तिना वस्तिर्नाभेरधो द्वयोरित्यमरः वसतिमूत्रं यस्मिन् स वस्तिः नाभेरधो वर्तमानं मूत्रपुटं तेनापो देवताः प्रीणामि । मुष्कोऽण्डोवृषणः कोशः अण्ड एवाण्डः ताभ्यां लिङ्गोभयपार्श्वस्थाभ्यां मांसपिण्डाभ्यां वृषणं देवं प्रीणामि । शेपो लिङ्गं तेन वाजिनं देवं प्रीणामि शिश्नं मेढ्रो मेहनशेपसी इति अमरः शि निशाने शिनोति भगमिति शेपः सान्तोऽदन्तश्च । प्रजा रेतसा शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि चेति अमरः रीङ् स्रवणे रियते

स्रवति रेतो वीर्यं तेन प्रजादेवतां प्रीणामि । मायुः पित्तं पततिस्रंसते पित्तंधातुविशेषस्तेन चाषान् देवान् प्रीणामि । पाति मलोत्सर्गमिति पायुर्गुदमुक्तातिरिक्तं तेन गुदतृतीयभागेन प्रदरान् देवान् प्रीणामि। कूश्मान् शकपिण्डैः । शको देशे नृपे विशि। विशि विष्ठायां शकस्य विष्ठायाः पिण्डैः कूश्मान् देवान् प्रीणामि ॥ ७ ॥ पुनर्द्वे षष्ठी अंगे प्रथमा । क्रुड घनत्वे क्रुडतीति क्रोडः घनो वक्षोमध्यभागः स इन्द्रस्यास्तु क्रोडेन वा इन्द्रं प्रीणामि एवमग्रेऽपि पाजसि

जाᳮरेतंमाचाषान्नित्तेनंप्रदरान्न्पायुनाकूश्माञ्छकपिण्डैः॥ ७॥

[ १ ] इन्द्रस्यक्रोडः ॥ इन्द्रस्यक्रोडोदितिंयैपाजस्यन्दिशाञ्जत्रवोदिं

बलाय हितं पाजस्यं बलकरमङ्गं तददित्याः देवतायाः। अंसकक्षयोः सन्धिर्जत्रु। जायत इति । पुंस्त्वमार्षम् तानि दिशां देवतानाम् । भसभर्त्सनदीप्त्योः बभस्ति दीप्यते भसत् लिंगाग्रं तददित्याः अस्तु ॥ पुनर्द्वे द्वितीया अंगे तृतीया। हृदये उपशेते हृदयौपशं हृदयस्थं मांसं तेन जीमूतान् प्रीणामि पूर्यते पुरीतत् हृदयाच्छादकमन्त्रं तेनान्तरिक्षं देवम्प्रीणामि। उदरे भवमुदर्यमुदरस्थं मांसं तेन नभो देवं प्रीणामि शरीरावयवादग्रत् । ग्रीवाधस्ताद्भागास्थित-

हृदयोभयपार्श्वस्थे अस्थिनी मतस्ने ताभ्यां चक्रवाकौ देवौ प्रीणामि । वृक आदाने वृक्यते स्वादुतया गृह्यते वृक्का नान्तः पुंस्त्वयं स्त्रीत्वेके इति क्षीरस्वामी वृक्का मुख्यं मांसं तेन दिवं देवतां प्रीणामि वृक्कौ कुक्षिस्थौ मांसगोलकावाम्रफलाकृती इति याज्ञिकाः । प्रकर्षेणाश्नन्ति भुञ्जते-ऽन्नानीति प्लाशयः शिश्नमूलनाड्यः तन्नाडीद्वारैवान्नस्य देहे सञ्चारात् रलयोरभेदः ताभिर्गिरीन् देवान् प्रीणामि हृदयवामभागे शिथिलो मांसभागः पुप्पुससंज्ञः प्लिह गतौ प्लेहते प्लीहा

त्यै भसज्जीमूताँन्हृदयौपशेनान्तरिक्षम्पुरीततानभः उदर्य्येण चक्रवाकौ मतस्नाभ्यान्दिवँवृक्काभ्याङ्गिरीन्प्लाशिभिरुपलान्प्लीह्ना वल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिः स्रवन्तीर्ह्रदान्कुक्षि

नान्तः तेनउपलान्देवान् प्रीणामि क्लोमति क्लोमा उदर्यो जलाधारः । हृदयस्य दक्षिणे यकृत् क्लोमा वामे प्लीहा पुप्पुसश्चेति वैद्य इति क्षीरस्वामी क्लोमा गलनाडीति कर्कः तैर्वल्मीकान् देवान प्रीणामि ग्लायन्ति श्राम्यन्ति ग्लावो हृदयनाड्यः ताभिर्गुल्मान् देवान् प्रीणामि । हरन्त्यन्नरसमिति हिरा अन्नग्राहिन्यो नाड्यः ताभिः स्रवन्तीः देवताः प्रीणामि । जठरस्य दक्षवामभागौ कुक्षी

ताभ्यां क्रदान् देवान् प्रीणामि। उदरेण जठरेण समुद्रं प्रीणामि। भङ्गनाङ्गोत्थेन वैश्वानरं देवं प्रीणामि॥ ८॥ नाभ्या उदराधःस्थयास्थिना विधृतिं देवतां प्रीणामि। रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः शृङ्गारादिरसे वीर्ये देहधात्वम्बुपारदे इति विश्वः रसेन वीर्येण धातुविशेषेण वाघृतं देवं प्रीणामि। यूषः क्वथितो रसः पद्दन्नित्यादिना यूषन्नादेशः यूष्णा पक्वान्नरसेनापो देवताः प्रीणामि। विप्रुड्भिर्वसाविन्दुभिर्मरीचीर्देवाः प्रीणामि। ऊष्मणस्तु निदाघोष्णग्रीष्म्यां॥ समुद्रमुदरेण वैश्वानरम्भस्मना ॥ ८॥ [१] विधृतिन्नाभ्यां॥ घृतꣳरसेनापो यूष्णा मरीचीर्विप्रुड्भिर्नीहारमूष्मणा शीनं

ष्माः शष्पसहा अपीति विश्वः ऊष्मणा शरीरगतेनौष्ण्येन नीहारं देवं प्रीणामि। वस्ते मांसमिति वसा शुद्धमांसस्य यः स्नेहः सा वसेति वैद्या इति स्वामी वसया मांसस्नेहेन शीनं देवं प्रीणामि। दूषीकाभिर्नेत्रमलैर्ह्रादुनीर्देवताः प्रीणामि। असयते सृज्यते इति वा असृक् रुधिरं पद्दन्न इत्यसन्नादेशः अस्ना रक्षांसि प्रीणामि। अङ्गैः पूर्वानुक्तावयवैः चित्राणि दैवतानि प्रीणामि। रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोरिति विश्वः रूपेण सौन्दर्येण नक्षत्राणि दैवतानि प्रीणामि।

त्वचा चर्मणा पृथिवीं देवीं प्रीणासि । स्वाहेति मन्त्रैराज्यं जुहोतीत्यर्थः । अत्र अग्निं हृदयेनाशनिं हृदयाग्रेणेत्यादि द्यावापृथिवीभ्यां स्वाहेत्यन्ता अपि आहुतिर्जुहुयात् अश्वमेधिकत्वात् । अवभृथे अप्सु मग्नस्य पिङ्गलखलति विक्लिधशुक्लस्य मूर्द्धनिजुहोति । (१) जुम्बकायस्वाहाहुति । वारु-

वस॑स्याप्प्रुष्ष्वाऽअस्त्रुभिर्ह्रादुनीर्ह्रू षीका॑भिर॒स्न्नाऽरक्षा॑ᳪ᳭सिचि॒त्तैर्ज्ञा॒न्नैर्न॒न्नं॒ चा॒ग्निक॑पेणा॒न्पृथि॒वीन्त्वचा॒जुम्ब॒काय॒स्वाहा॑ ॥ ९ ॥ [ १ ] हिर॒ण्यग॒र्ब्भः सम् ॥ हि॒र॒ण्यग॒र्ब्भः सम॑वर्त्त॒ताग्ग्रे॑भू॒तस्य॑जा॒तः पति॒रेक॑ऽआसीत् ॥ सदा॑धार पृथि॒वीन्द्यामु॒तेमाङ्कस्मै॑दे॒वाय॑ह॒विषा॑विधेम ॥ १० ॥

वीहिपदा शुण्डिभऔदन्यदृष्टा । वरुणोवै जुम्बकहूतिश्रुतिः एषा चान्तर्जले जप्या पापनाशनी तदुक्तं हारीतेन जुम्बका नामगायत्री वेदे वाजसनेयके अन्तर्जले सकृज्जप्त्वा ब्रह्महत्यां व्यपोहतीति ॥ ९ ॥ चतस्रः कदेवत्याः त्रिष्टुभः प्रजापतिसुतहिरण्यगर्भदृष्टाः प्राजापत्यपशूनामश्वा-



(१) का० अवभृथेष्ट्यन्तेऽप्सु मग्नस्य पिङ्गलस्य खलतिविक्लिधशुक्लस्य मूर्धनि जुहोति जुम्बकाय स्वाहेति । अवभृतथया गान्ते एवंविधस्य पुंसो मूर्धनि जुम्बकायेति मन्त्रेणाज्यं सकृद्गृहीतं जुहुयात् कीदृशस्य पुंसः जले मग्नस्य पिङ्गलाक्षस्य खलतेः खल्वाटस्य विक्लधस्य दन्तुरस्य शुक्लस्यातिगौरस्येति सूत्रार्थः ॥

दीनां याज्यानुवाक्याः। द्वे व्याख्याते ॥ १० । ११ ॥ वयं कस्मै प्रजापतये देवाय हविषा विधेम हविर्दद्मः विभक्तिव्यत्ययः कशब्दस्य सर्वनामत्वमार्षम्। इमे हिमवन्तः बहुवचनादन्येऽपि हिमाचलप्रभृतयः पर्वताः प्रथमा द्वितीयार्थे सुपां सुपो भवन्तीति वचनात् इमान्हिमवत्प्रभृत्यद्रीन्यस्य प्रजापतेर्महित्वं महिमानमाहुर्बुधाः महित्वेति विभक्तेराकारः। रसा नदी रसतेः

यः॒प्रा॑ण॒तोनि॑मि॒ष॒तोम॑हि॒त्वैक॒इद्रा॒जा॒जग॑तोब॒भूव॑ ॥ यईशे॑ऽअ॒स्य द्वि॒पद॒श्चतु॑ष्पद॒ःकस्मै॑दे॒वाय॑ह॒विषा॑विधेम ॥ ११ ॥ यस्ये॒मे ॥ हि॒मव॑न्तोमहि॒त्वाय॒स्य॑स॒मु॒द्रꣳ र॒सया॑स॒हाहुः॑ ॥ यस्ये॒माः॒प्र॒दिशो॒यस्य॑बा॒हूकस्मै॑दे॒वाय॑ह॒विषा॑विधेम ॥ १२ ॥ यऽआ॑त्म॒दाः॒ ॥ यऽआ॑त्म॒

शब्दकर्मेण इतिनिरु० यास्कः। रसया नद्या सह समुद्रं यस्य महित्वमाहुः। इमाः प्रदिशः पूर्वाद्याः प्रकृष्टा आशा यस्य महित्वमाहुः यस्य बाहू भुजौ जगद्रक्षणाविति शेषः। सर्वं जगद्यस्य प्रजापतेर्विभूतिरित्यर्थः ॥ १२ ॥ कस्मै देवाय हविषा विधेमेति व्याख्यातम्। आत्मानं ददाति आत्मदाः

शु० य० सं० ५४२ उ० भा०

उपासकानां सायुज्यप्रदः बलं सामर्थ्यं ददाति बलदाः भुक्तिमुक्तिप्रद इत्यर्थः । विश्वे सर्वे मनुष्याः यस्य प्रशिषं शासनमुपासते देवाश्च यस्य प्रशिषमुपासते तदुक्तम् यस्य ज्ञेयावधि ज्ञानं शिक्षावधि च शासनम् कार्यावधि च कर्तृत्वं स स्वयम्भूः पुनातु व इति । किञ्च यस्य छाया आश्रयो ज्ञानपूर्वमुपासनम् अमृतं मुक्तिहेतुः यस्य अज्ञानमिति शेषः मृत्युः

दाबंलुदायस्युविश्वंऽउपासंतेप्प्रशिषुंयस्यदेवाः॥ * यस्यंछायामृतंयस्यंमृत्युःकस्मैदेवायंहुविषांविधेम ॥ १३ ॥ [४] आनंः॥ आनोभुद्राःक्रतंवोयन्तुविश्वतोदंब्धासोऽअपंरीतासऽउद्भिदंः ॥ देवानोय

संसारहेतुः तदुक्तम् ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्तीति श्वेताश्वतरोपनिषः ॥ १३ ॥ आनोभद्राः । वैश्वदेवानांपशूनां याज्यानुवाक्यादश । पञ्चाद्याः सप्त-मीचजगत्यः त्रिष्टुभोन्याः । आयन्तुआगच्छन्तु नःअस्माकम् भद्राःभन्दनीयाः स्तुत्याः ।

* अतुतुक नभवति यस्यातिछायसहेतिन । एतेभ्यः परस्य छस्य तुकनभवति इति निषेधात् प्रा० अ० ४० सू० तदुक्तं याज्ञवल्क्य शिक्षायां यस्येति शब्दात्परतः सहशब्दात्तथैवच । छेपरेत्त्वति छायाचनतुग्वाजसनेयिके ॥

अ० २५ शिव० ५४२

क्रतवः यज्ञाः संकल्पाश्च । विश्वतः सर्वतः अदब्धासः अनुपहिंसिताः । अपरीतासः अपरीतासः अपरिज्ञाताः केनचित् । उद्भिदः उद्भेतारोन्येषां यज्ञक्रतूनाम् कल्पानांवा । किञ्च देवाः नः अस्माकम् सदंसदा इद्वृधे एवार्थे सदाकालएव । वृधे वर्द्धनाय असन् स्युः भूयासुः । कथंभूताः । अप्रायुवः अप्रमाद्यन्तः रक्षितारश्च दिवेदिवे अहन्यहनि तथाभूयादिति वाक्यशेषः ॥ १४ ॥ देवानाम्भद्रा ।

थासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥१४॥ देवानाम्भद्रा ॥
सुमतिर्ऋजूयतान्देवाना ᳪ रातिरभिनोनिवर्त्तताम् ॥ देवाना ᳪ स
ख्यमुपसेदिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ १५ ॥ तान्पू

देवानां भद्राभन्दनीया सुमतिः कल्याणीमतिः । अभिनोनिवर्त्ततामित्यनुषङ्गः । अस्मान्प्रत्यभिमुखीभवतु कथंभूतानां देवानाम् । ऋजूयताम ऋजुगामिनाम् । यद्वा ऋजुकामिनाम् । ऋजुंप्रगुणम् यजमानंकर्तुम् येकामयन्ते तेतथोक्ताः । किञ्च । देवानां रातिः दानम् अभि नः अस्मान्प्रतिनिवर्तताम् । ततोलब्धदानाः सन्तः । देवानांसख्यंसखिभावम् । यजमानाः सन्तः

उपसेदिम प्राप्नुयाम वयम्। तताः देवाः नः अस्माकं भक्तानामायुः प्रतिरन्तुप्रवर्द्धयन्तु। किम-र्थम् जीवसेचिरञ्जीवनाय ॥ १५ ॥ तान्पूर्वया। तान्देवान् पूर्वयाअक्तृत्विमया स्वयंभुवा। निवि-दानि विच्छ्वदोवाग्वचनः। हूमहे आह्वयामोवयम्। तान्कानित्यतआह। भगंमित्रम् अदितिम् दक्षम् अस्त्रिधम् अच्युतसज्जवाम् दक्षस्यैतद्विशेषणम्। अर्य्यमणम् वरुणम्सोमम् अश्विनौच।

व्वंया निविदांहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्त्रिधम् ॥ अर्य्यमणँ व्वरुणꣳ सोममश्विनासरस्वतीनःसुभगामयस्करत् ॥ १६ ॥ तन्नः ॥

तन्नोव्वातोमयोभुव्वातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रा

यैःसहितासरस्वतीसुभगा नःअस्माकम् मयःसुखङ्करत् करोत्विति॥ १६ ॥ तन्नः। तत्भेषजं मयोभु-सुखस्य भावयितृ नःअस्माकम् वातःवातु। अनुगृह्णातु। तच्चभेषजं मातापृथिवी अनुगृह्णातु। तच्चपिताद्यौः अनुगृह्णातु। तच्चग्रावाणः सोमसुतः सोमाभिषवकारिणः मयोभुवः सुखस्यभा-वयितारः अनुगृह्णन्तु। तच्च हेअश्विनौ धिष्ण्याधारयितारौयुवं युवामपिशृणुतम् श्रुत्वाच

अनुगृह्णीतम् ॥ १७ ॥ तमीशानम् । तम् ईशानंरुद्रम् । कथंभूतम् जगतः जङ्गमस्य तस्थुषः स्थावरस्यपतिमिवपतिम् धियञ्जिन्वम् । धियाबुद्ध्या संकल्पमात्रेणजिन्वतिप्रीणाति इतिधियञ्जिन्वम् यद्वा धियाकर्मणा जिन्वतिप्रीणातीति धियञ्जिम् अवसेअवनायतर्पणाय । हूमहे आह्वयामः वयम् । किञ्च पूषा नःअस्माकम् वेदसाम्धनानाम् असत्भूयात् वृधेवर्द्धनाय । रक्षिताच

वाणःसोमसुतोंमयोभुवस्तदंश्विभ्रवनाभृणुतन्धिषण्ययासुवम् ॥ १७ ॥
तमीशानम् ॥ तमीशानुञ्जगंतस्तुस्त्थुषस्प्पतिंन्धियञ्जिन्वमवं सेहू मह्हेव्वयम् ॥ पूषानोयथाव्वेदंसामसंद्वृधेरंक्षितापायुरदंब्धःस्वु स्तयें ॥ १८ ॥ स्वुस्तिनंः ॥ स्वुस्तिनुऽइन्द्रोंव्वृद्धश्श्रंवाःस्वुस्तिनंःपूषा

वायुःपाताच । अदब्धः अनुपहिंसितश्चान्येन केनचित् । स्वस्तयेअविनाशाय । तथाहूमहेवय-मित्यनुषंगः ॥१८॥ स्वस्तिनः । स्वस्ति स्वस्त्ययनम् नःअस्माकम् इन्द्रःदधातु स्थापयतु । कथंभूतः । वृद्धश्रवाः प्रभूतधनः महाशब्दोमहाकीर्तिर्वा । स्वस्तिनोस्माकं पूषादधातु । कथंभूतः । विश्व

वेदाःसर्वज्ञोवा। स्वस्तिनः तार्क्ष्योंदधातु। कथंभूतः अरिष्टनेमिः अनुपहिंसितासुः। स्वस्ति नःअस्माकं बृहस्पतिश्वदधातु ॥१९॥ पृषदश्वामरुतः। पृषन्तःशबला अश्वायेषां तेपृषदश्वाः। पृश्निमातरः। पृश्निर्द्यौमातायेषान्त एवमुच्यन्ते। शुभंयावानः शुभङ्कतुंञ्जना न्प्रतिद्येयान्ति तेशुभंयावानः। आतोमनिपक्कनिप् वनिपश्चेतिवनिप्। विदथेषु यज्ञेषु जग्मयःगमनशीलाः।

विश्वर्वेदाः॥ स्वस्तिनुस्तार्क्ष्योऽअरिंष्टनेमिःस्वस्तिनोबृहस्प तिर्दधातु॥ १९॥ पृषंदश्वामुरुतंः॥ पृषंदश्वामरुतःपृश्निंमात रःशुभंय्यावांनोविदथेषुजग्मंयः॥ अग्निर्जिह्वामनंवःसूरंचक्षसो विश्वेनोदेवाऽअवसागंमन्निह॥ २०॥ भद्रङ्कर्णेभिःशृणुयामदेवाभु

आदृगसहनेतिनिः। यद्वत्थंभूतामरुतस्ते अवसाअन्नेन हविर्लक्षणेन आहूताः सन्तः आगमन्-आगच्छन्तु इहेत्यनुषंगः। येच अग्निजिह्वा अग्निजिह्वा अग्निमुखाहुतादादूत्यर्थः। मनवः चतु-र्दशतेच अवसागमन्निह। येच सूरचक्षसः आदित्यदर्शनाः विश्वदेवाः तेच नःअस्माकम् अव-सागमन्निहयज्ञे ॥२०॥ भद्रकर्णेभिः। भद्रमनुकूलं कर्णेभिः कर्णाभ्यांशृणुयाम हेदेवाः।

शु० य० सं० ५४४ उ० भा०

अ० २५

शिवम् ५४४

भद्रम्पश्येम अक्षभिः अक्षिभ्यां हेयजत्राः यजनीयाः। किञ्च । स्थिरैरङ्गैः अशिथिलैः अङ्गैः। तुष्टुवांसः देवान्स्तुतवन्तः। तनूभिः भार्यापुत्रपौत्रादिकाभिस्तनूभिः सहिताः व्यसेमहिव्यश्नुवामहि। देवेहितं देवैर्यत् स्थापितं मनुष्याणामायुः तत्व्यश्नुवामहि ॥ २१ ॥ शतमित्। शतमपिशरदःअन्ति अन्तिकेसमीपेभवथ हेदेवाः। आकल्पकालमित्यभिप्रायः। ऋषिभिरुदितमेतत्

भद्रम्पश्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहिदेवहितंय्यदायुः ॥ २१ ॥ शतमिन् ॥ शतमिन्नुशरदोअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमा

यत्रयस्मिन्शरदांशते नःअस्माकं यूयञ्चक्रकृतवन्तः जरसंजरान्तनूनाम जरानिमित्ताम् शक्तिमित्यभिप्रायः। किञ्च। पुत्रासोयत्रपितरोभवन्ति पुत्राअग्नयः यत्रशरदांशते। यजमानस्यपितरो जनितारोभवन्ति। तदुक्तम् तत्रवैप्रजापतिः प्रजाः सृजदित्युपक्रम्य। तस्माज्जनयित्वाविसृहीति। यत्रपितरोभवन्ति एतदप्युक्तमेव। सयत्रस्त्रयते पत्नैनमग्ना वभ्यादधाति तदेषोअग्नेर-

धिजायते सएषपुत्रवः सम्पिताभवति। अथवापुत्रा एवपितॄणामौर्ध्वदेहिकं कुर्वाणाः पितरोयत्रसं पद्यन्ते तदपिशरदांशतमन्तिक एवेति। यतएवमतोब्रूमः मानोमध्यारीरिषता युर्गन्तोः। मारीरि-षत् माहिंसीष्ट नोस्माकं मध्यामध्ये अकालएवआयुः। गन्तोः गन्तृगमनशीलम्। उक्तञ्च सञ्चित्य सञ्चि-त्यतमुग्रदण्डं मृत्युमनुष्यस्य विचक्षणास्य। वर्षासुसिक्ताश्चर्मवन्धाः सर्वेप्रयता: शिलीभवन्तीति ॥२२॥

नोमुध्यारीरिषुतायुर्गन्तोः ॥ २२ ॥ अदितिर्द्यौरदितिरुन्तरिक्षुमदि तिर्माता सपिता सपुत्त्रः ॥ विश्वेदेवाऽअदितिःपञ्चुजनाऽअदि तिर्ज्जातमदितिर्ज्जनित्वम् ॥ २३ ॥ [ १० ] मानः ॥ मानोमित्रोव

सर्वात्मक त्वेनादितिं मंत्रदृकस्तौति अदितिश्च अन्तरिक्षम् अदितिश्चमाता साचपिता साचपुत्रः सद्भतिच्छान्दसोलिङ्गव्यत्ययः विश्वेचदेवाः पंचजनाः मनुष्याश्चअदितिः किम्बहुनोक्तेन अदितिरेव-जातंभूतम् अदितिरेवजनित्वजनिष्यमाणम् अथवानैवादितिरन्नेनोच्यते किम्पुनः एतान्येवद्यौः प्रभृतीनिअदानानिमहाभाष्ययुक्तानीति २३ मानः। अश्वस्तोमीयंजुहोति । द्वाविंशत्यऋग्भिस्त्रिष्टु-

भिः। तृतीयाषष्ठ्यौजगत्यौ। दीर्घतमाऋषिः। अश्वस्यस्तूयमानत्वात्या तेनोच्यते सादेवतेतिन्यायेन अश्वोदेवता। तृतीयःपादःप्रथमंव्याख्यायते यच्छब्दयोगात्। यत्वाजेनअश्वस्य। देवजातस्यदेवैर्ज-नितस्य। सूरादश्वं वसवोनिरतष्टइत्यत्र तदभिप्रायम्। सप्तेःसरणस्य। प्रवक्ष्यामः उच्चारयामः। विदथे यज्ञे वीर्याणि चरित्राणि तत्मापरिख्यन मागर्हं तु नः अस्माकंदेवाःस्तुत्याः नत्वश्वप्रभृतयस्तिर्यञ्च-

मा नो॑ मि॒त्रो वरु॑णो अ॒र्य॒मा॒युरिन्द्र॑ ऋभु॒क्षा म॒रुतः॒ परि॑ ख्यन्। यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि ॥ २४ ॥ यन्नि॒र्णिजा॑ ॥ यन्नि॒र्णिजा॒ रेक्ण॑सा॒ प्रावृ॑तस्य रा॒तिं गृ॑भी॒तां मु॑ख॒तो नय॑न्ति ॥ सुप्रा॑ङ्

इतिश्याद्गर्हा। अतोब्रवीमिमापरिख्यन्निति। यद्यपिगर्होचिताः तथापिअश्वादिरूपेणदेवानामेवस्तुत-त्वादित्याशयः। केते देवाः मित्रःवरुणः अर्यमाआयुर्वायुः वकारलोपेन। इन्द्रश्च ऋभुक्षाम-रुतश्च ॥ २४ ॥ यन्निर्णिजा। यदानिर्णिजा निर्णेजनेनोदकस्नानेन संस्कृतस्य आलम्भनकाले-ऽयत्स्नापनमश्वस्यतदेतदुक्तम्। तथारेक्णसा रेक्णइतिधननामधनेनमणिकाख्येन प्रावृतस्यके-

सरपुच्छेषु(?)षचितस्य अश्वस्य। सुवर्णान्मणीन्केसरपुच्छेषु पत्न्यआवपन्ति तदभिप्रायमेतत् । रातिन्दानम् आजासक्तुधानालाजालक्षणम् गृहीतांमुखतो नयन्ति । अश्वायराचिहुतशेषं प्रयच्छन्तीत्येतदभिप्रायम्। तत् तदा अश्वस्य सुप्राङ्सुष्ठुप्रगच्छन: अजःमेम्यत् मेम्यदिति-शब्दानुकरणम् । मेमेइतिशब्दंकुर्वाणः । विश्वरूप: नानावर्णः कृष्णग्रीवआग्नेयोररराटेपुरस्तादि-त्येतदभिप्रायमेतत् । किञ्च इन्द्रापूष्णोः इन्द्रस्यपूष्णश्चप्रियंपाथः अन्नंपशुलक्षणम् अप्येति अश्वा-

**जोमेम्य्यंद्विश्वरूपऽइन्द्रापूष्णोः प्प्रियमप्प्येतिपाथः ॥ २५॥ एष च्छागः ॥ पुरोऽअश्वेनव्वाजिनापूष्णोभागोनीयतेव्विश्वदेव्यः ॥**

गच्छति । यदिहपठ्यते सौमापौष्णः श्यामोनाभ्याम् तदेवान्यस्यांश्रुतौपठ्यते इन्द्रापौष्णः श्या-मोनाभ्यामिति । तदयंमन्त्रोभिवदति । इन्द्रापूष्णोः प्रियमप्येतिपाथइति ॥ २५ ॥ एष-च्छागः । एषआग्नेयश्छागः पुरः अग्रतोस्थितः नीयते अश्वेनवाजिनाव्यापकेनसहितः । पू-ष्णश्च पोषकस्याग्नेश्चभागोभजनीयः नीयतेअश्वैःसह । सोपिपर्य्यंग्यएव । विश्वेदेव्यः विश्वभ्यः सर्वेभ्योदेवेभ्यः हितः अग्नेःसर्वदेवात्मकत्वात्सर्वदेवप्रियत्वम् । कस्मात् अभि प्रियम् अभि-

प्रेतंयत् । यच्चपुरोडाशम् । पुरोडाशङ्कर्तुम् अवंत । अश्वेनसहितम् । अश्वस्तस्मिन्कालेसंज्ञप्यते पशुपुरोडाशः क्रियते तदेतदुक्तम् । त्वष्टाच एनमजम् । तदासौश्रवसाय शोभनान्तकरणाय जिन्वतिप्रीणाति । सहितस्याधिकारइति । २६ ॥ यद्धविष्यम् । यदाहविष्यम् ऋतुशःऋ- तावृतौ स्वचारिणंदेवयानम् देवानाम् प्रापणीयम् देवयानमार्गगामिनस्त्वा आदित्यवदनिवारि-

अभिप्रियंयत्पुरोडाशमर्वतात्वष्टेदेनंसौश्रवसायंजिन्वति।२६।

यद्धविष्यम् ॥ यद्धविष्यमृतुशोदेवयानन्त्रिर्मानुषाः पर्यश्वन्नयन्ति ॥ अत्रापूष्णः प्रथमोभागएतियज्ञन्देवेभ्यः प्रतिवेदयं

तगतिंवा । त्रिःसंस्कृतम् । स्नापनंव्यंजनसुवर्णमणिकप्रवारैः मानुषःऋत्विग्यजमानाः परि- णयन्त्यश्वम् । अत्रत्वर्थः । तस्मिन्कालेपूष्णः पोषकस्याग्नेः प्रथमोभागोजाख्यःएतियज्ञम् देवेभ्यःप्रतिवेदयन् अजः स्वकीयेनशब्देन । चरकश्रुतौपूष्णो ललाटइतिपठ्यते तदभिप्राय

सेतत् ॥ २७ ॥ होताध्वर्युः। होतातच्छंसिता सुविप्रइति संबन्धः। यस्मिन्यज्ञे होताविशंसिता। शस्त्राणामपिसाधु मेधावी साधुब्राह्मणोवा अध्वर्युश्च यस्मिन्यज्ञे आवयाः आभिमुख्येन वयतिकर्मणीत्यावयाः अग्निमिन्धः अग्निदीपकः ग्रावग्राभः। ग्रावग्राहः सोमाभिषवायग्रावग्रहणशीलः उतअपिशंस्ता। तेनयज्ञेन साध्वलङ्कृतेन स्विष्टेन साधुदृष्टेनच। वक्षणाः

न्नुजः ॥ २७ ॥ होताऽध्वर्युः ॥ होताऽध्वर्युरावयाऽअग्निमिन्धो ग्रावग्राभऽउतशंस्तासुविप्रः ॥ तेनयज्ञेनस्वरङ्कृतेनस्विष्टेनव क्षणाऽआपृणध्वम् ॥ २८ ॥ यूपव्रस्काऽउत ॥ येयूपवाहाश्चषालँ

नदीः देवानांतुष्टिकराः। पयोदधिपयसया पुरोडाशमांसैः। आपृणध्वम् आपूरयध्वम् अन्न-पशून्दातव्यमित्यभिप्रायः ॥ २८ ॥ यूपव्रस्काउतयूपं येव्रश्चन्ति तएवमुच्यते। उतअपिच येयूपवाहाः यूपंयेवहन्ति। चषालंयेअश्वयूपायतक्षति येजनाः अश्ववन्धनयूपायचषालं यूपाग्रभागन्तक्षति। तक्षन्तीति प्राप्तेछान्दसमेकवचनम् साधुसम्पादयन्ते। येचअर्वतेअश्वायपचनम्प-

च्यतेनेनेतिपचनकाष्टादिसम्भरन्ति । उतोऽपिच तेषाञ्जनानां संवन्धिनी अभिगूर्तिः गुरीउ-
द्यमने । आगूरणमभिगूर्त्तिः स्वकालेसर्वं करणीयमितिबुद्धिः इन्वतुव्याप्नोतु ॥ २९ ॥ उपप्र ।
उपप्रागात् उपैतुसुमत् स्वयमित्यर्थइतियास्कः । मेममअधायिनिहितम् यत् मत् मननम्
किंतदितिचेत् । देवानाम्आशाः शंसनानि साधुसाध्वयं पश्वुरागच्छेदित्येवमादीने । उप-

स्येऽअंश्वयूपायुत्तक्ष्णंति ॥ येचार्वंतेपचंनंऽसुम्भरंन्त्युतोतेषामुभिगूंर्त्ति
र्न्नंऽइन्न्वतु ॥ २९ ॥ उपप्र ॥ उपप्रागात्सुमन्न्मेंधायिमन्न्मंदेवा
नामाशाऽउपंवीतपृष्ठः ॥ अन्न्वैनंविप्राऽऋषयोमदन्तिदेवानाम्पु
ष्टेचंकृमासुबन्धुम् ॥ ३० ॥ यद्वाजिनंः ॥ यद्वाजिनोदामंसन्दानम

आगतः वीतपृष्ठः साधुपोषणेन प्राप्तपस्वाङ्गागः । कामितपृष्ठोवा । अश्वपृष्ठंहिसर्वएवारोढुंका-
मयन्ति । यतएवमतोब्रवीमि । अन्वेनंविप्राऋषयोमदन्ति । अनुमदन्तिअनुमोदन्ति एनमश्वं
विप्राऋषयश्च । वयञ्च देवानां पुष्टेपोषणाय । चक्रमकृतवन्तः । सुवन्धुंशोभनवन्धनम् शोभनार्थं-
वाढंवा ॥ ३० ॥ यद्वाजिनः । वेजनवतः । दामग्रीवावन्धनरज्जुः सन्दानंसम्यगवच्छेदकं पादव-

न्धनम् अर्वत: अश्वस्य। पङ्वशीर्षण्या शिरसिवद्धानियोजनीया रज्जु: अस्याश्वस्य। यद्वाघ: पादपूरणे।अस्याश्वस्य प्रभृतमप्रहृतं निक्षिप्तम् आस्येमुखे तृणम् सर्वाणितानि तेतव हेय-जमान। अपिदेवेषु अपिप्रजापतये अस्तु। सन्त्वितिप्राप्तेवचनव्यत्यय:॥ ३१॥ यदश्वस्य। यत्-अश्वस्य क्रविष: अश्वाङ्गभूतस्यक्रव्यस्यमांसस्य क्रव्यंविकृत्ताज्जायतइतिनैरुक्ता:। अङ्गम्।

र्व्वतोयाशीर्षुण्यार्शनारज्जुरस्य॥ यद्वांघास्यप्रभृतमास्ये तृणंᳬ सर्वा तातेऽअपिंदेवेष्वंस्तु॥ ३१॥[८] यदश्वंस्य॥ क्रविषोमक्षिकाश यद्वास्वरौस्वधितौरिप्तमस्ति॥ यद्धस्तयोःशमितुर्यन्नखेषुसर्वाता तेऽअपिंदेवेष्वंस्तु॥ ३२॥ यदूवंध्यम्॥ यदूवध्यमुदरस्यापवाति य

मक्षिकाआश अशितवती। यद्वा। स्वरौस्वधितौरिप्तमस्ति। यच्च स्वरौपश्वञ्जनकाले स्वधि तौशासिच्छेदनकालं लिप्तं लग्नमस्ति। यच्च हस्तयोशमितु: रिप्तम् यच्चनखेषुरिप्तम्। सर्वाताते अपिदेवेष्वस्तुइतिव्याख्यातम्॥ ३२॥ यदूवध्यम् यत् ऊवध्यम् भक्षितमपरिणत मामाशयस्थम्

वध्यमुच्यते। उदरस्य अयुतंपृथग्भूतम् अपवातिगन्धायते। यश्च आमस्यपक्वस्यक्रविषः मांस-
स्यगन्धः अस्तिविद्यते। सुकृतातच्छमितारःकृण्वन्तु। तत्सर्वंशमितारः विशसनकर्तारः सुकृ-
तानिसुसंस्कृतानिदोषरहितानि कुर्वन्तु। उतअपिच मेधंमेध्यं यज्ञार्हम्। शृतपाकं देवयोग्य-
पाकंपचतु अतिपक्वमीषत्पक्वञ्चमाकुर्वन्त्वित्यर्थः॥ ३२॥ यत्ते। शूलेसश्लेषअपयाम् तदभिवदत्ययं

ऽआमस्यंक्रुविषोगुन्धोऽअस्तिं॥ सुकृतातच्छमितारंः कृण्णवन्तूतमे
धंᳬशृतुपाकम्पचन्तु॥ ३३॥ यत्ते॥ यत्तेगात्राद्ग्निनापुच्यमांना
दुभिशूलन्निहृतस्यावुधावंति॥ मातद्भूम्यामाश्रिंषुन्मातृणेषुदेवे

मन्त्रः। यत्तेतवगात्रादवयवात् अग्निनापच्यमानात् ऊष्मरूपं रसोवा अवधावति गच्छ-
तितथानिहतस्य निश्चेष्टहतस्य यदङ्गरसरूपम् अभिशूलंशूलमभिलक्ष्यमांसादुत्कृष्टं धावति-
गच्छति। माश्रिषत्माश्लिषत् तदङ्गभूम्याम् माचतृणेषु। किंतु देवेभ्यः तत् उशद्भ्यः वशकान्तौ

शु० य० सं० ५९९ उ० भा०

कामयमानेभ्यः रातन्दानम् अस्तु ॥ ३४॥ येवाजिनम् । येजनाः वाजिनमश्वंपरिपश्यन्तिपक्वंसन्तम्। येच एनमश्वम् आहुः । किमाहुः सुरभिरयमश्वः अतोनिर्हर किंचिदस्मभ्यंदेहीति । इतिशब्दःप्रकारवचनः येच अर्वतोश्व स्यसंबधिनीं मांसभिक्षाम्उपासते हुतशिष्टमांसयाच्ञांकांक्षते।उतोतेषाम् अपिच तेषांसंबन्धि नीया अभिगूर्त्तिः सा नः अस्मान् इन्वतु व्याप्नोतु । यद्वादेवपरोयं मन्त्रो-

भ्यस्तदुश्वद्धोरातमस्तु ॥ ३४ ॥ येवाजिनम् ॥ येवाजिनंपरिपश्यन्तिपक्वंयऽईमाहुःसुरभिर्निर्हरेति ॥ येचार्वतोमाꣳसभिक्षामुपासतऽउतोतेषामभिगूर्तिर्नऽइन्वतु ॥ ३५ ॥ यन्नीक्षणम् ॥ यन्नीक्षणा

व्याख्येयः । येदेवाः वाजिनंपरिपश्यन्ति पक्वम् कदाहोष्यतीति विलंबंदृष्ट्वा । येचसुरभि रयमश्वोतनिर्हरनिःशेषेणास्मभ्यंदेहीत्याहुः । येचार्वतो मांसभिक्षामुपासतेलिप्सते उतोतेषामभिगूर्त्तिंन्नइन्वतु । वयन्तुदेवानामन्यभूताइत्यभिप्रायः ॥ ३५ ॥ यन्नीक्षणम् । यत्नीक्षणम् नितरामीक्ष्यते श्रृतास्वतव संबन्धिनोर्था इतियेनदध्यादिना तत् नीक्षणम् । मांसपचन्याः मांसस्यपचियुट्घञोरित्य

अ० २५ शिव० ५४७

कारलोपः। उखायाः यानिचपात्राणि यूष्णः वसायाः यूषशब्दस्ययूषन्नादेशः षष्ठ्येकवचने उपधालोपश्च। आसेचनानिआसिच्यतेयेष्वित्यासेचनानि। ऊष्मण्याऊष्मशब्दस्यधारणार्थेयत्-प्रत्ययः। यानिचऊष्मण्यानि। पिधाना। पिधानानिच चरूणांस्थालीनाम्। येच अंकाः अंकोपलक्षकाः। शरीरवचनोङ्कशब्दः। याश्चसूनाः अश्वविशसनाधिकरणभूताः वेतसमय्यः

# मांँस्पचंन्न्याऽउखायायापात्राणियूष्णाऽआसेचंनानि ॥ ऊष्म्

# ण्यापिधानांचरूणामुङ्काःसुनाःपरिभूषुन्त्यश्वम् ॥ ३६ ॥ मात्वा ॥

# मात्वाग्निर्ध्वनयीद्धूमगंन्धिर्म्मोखाभ्राजंन्त्यभिविक्तुजग्घिः ॥ ध्रुष्टं

तानिसर्वाणि। परिभूषन्ति। भूषअलङ्कारे। अलंकुर्वन्ति। परिरचन्तिवा। अश्वम् ॥ ३६ ॥

मात्वाग्निः। मात्वा हेअश्व अग्निःध्वनयीत्। ध्वनिःशब्दकर्मा शब्दंकारयेत् कथंभूतः धूमगंधिः अल्पधूमावरणः मांसंहिपचन्नग्निर्दहन्नप्यल्पधूमावरणोभवति। तच्चदह्यमानंसमसिमाशब्दङ्करोत्यतएवमुच्यते। माच उखाभ्राजन्ती संदीपिता अत्यन्ताग्निसंयोगेन। अभिविक्त औविजी-

भयचलनयोः अभिविनक्तु । अभिनष्टाविदीर्येतवा । उन्नावाब्द्धा मांसरसंतदिहोच्यते । जघ्रिः गन्ध-ग्रहणशीलाउखा । नन्वचेतनोखा कथंगन्धञ्जिघ्रति । उच्यते । अधिष्ठातारोत्र देवताः सन्तीति पुर-स्तात्प्रतिपादितम् तच्चात्रपुनः स्मार्य्यते इष्टंयोगेनसङ्गतीकृतम् वीतंकामितम् अभिगूर्तम् अभ्यु-द्यतम् वषट्कृतं चादानकाले । यद्वा इष्टंप्रयाजैः वीतमाप्रीभिः पर्यग्निकृतम् अभिगूर्त्तं येय-जामहे इत्यागूर्य्योक्तम्वषट्कृतं वषट्कारेणसंस्कृतम् । तत्तादृशम् देवाएवदेवासः प्रतिगृ-

वीतमुभिगूर्त्तं व्वषट्कृतन्तन्देवासुः प्रतिगृब्भ्णन्त्यश्श्वम् ॥ ३७ ॥

निक्क्रमणन्निषदनम् ॥ निक्क्रमणन्निषदनंव्विवर्त्तनंयच्चपड्वीशमर्वतः ॥

भ्णन्तिप्रतिगृह्णन्ति अश्वम् ॥ ३७ ॥ निक्रमणंनिषदनम् । निक्रमणंगमनम् वसतिस्थानात् । निषदनं तत्रैवस्थितिः । विवर्तनंभ्रमणम् । यान्येतानि चेष्टितानि । यच्चपड्वीशम् । पादे-प्रविशतीति पड्विशम्पादबन्धनमुच्यते । अर्वतःअश्वस्य यच्च पपौ पीतवानुदकम् । यच्चघासिं यवसंजघास । घस्तृअदने भक्षितवान् । सर्वाणितानि निक्रमणादीनि तेतव हेअश्व अपि-

देवेषु अपिप्रजापतये अस्तुसन्तु तान्यपि निरर्थकानिमाभूवन्नित्याशयः ॥ ३८ ॥ यदश्वाय । यत् अश्वाय संन्नह्यमानाय वासःउपस्तृणान्ति । सर्वतआच्छादयन्ति । यच्च अधीवासम् उपर्याच्छादनयोग्यं वासउपस्तृणान्ति । यानिच हिरण्यानिउपस्तृणान्ति अस्मैअश्वाय । यच्च संदा-

यच्चंपपौयच्चंघासिञ्जघासुसर्व्वातातेऽअपिंदेवेष्वंस्तु ॥ ३८ ॥ यद्श्वांय॥यदश्वांयवासंऽउपस्तृणान्त्यंधीवासंयाहिरंण्यान्न्यस्मै ॥ सन्दानमर्वैन्तम्पड्वींशम्प्रियादेवेष्वायांमयन्ति ॥ ३९ ॥ [८] यत्तें ॥ सादेमहंसाशूक्तंतस्य *पार्ष्ण्यांवाकशंयावातुतोद ॥ स्रुचेवताहुविषों

नंसन्दीयतेनेनेतिसंदानं शिरोबंधनम् अर्वन्तम् अर्वतेइतिविभक्तिव्यत्ययः अश्वायेतिसमानाधिकरण्यात् । यच्च पड्वीशम्पादवासः एतानिप्रियाणिदेवेषु आमयन्तिगमयन्ति ॥ ३९ ॥ यते सादे । हेअश्व यत् तेतव सादे । सीदन्त्यश्ववारायस्मिन्निति सादोऽश्वपृष्ठम् तस्मिन्सादे

---

* पार्ष्ण्यो त्यत्र परन्तुरेफहकाराभ्यामिति सूत्रेण षकारस्य द्वित्वन्नभवति कुतः झय्यान्तस्थाभ्यसवसर्ग ॥ एतेभ्यः परः स्पर्शो द्विरुच्यत्वत् । तेनरेफषकारौद्वौणकाराविति सिद्धम् प्रा० अ० ४ । सू० १०२ ।

अवस्थितोश्ववर: । महसामहत्वेनान्वित:सन् कथंभूतस्यघूक्कतस्य शब्दानुकरणमेतत् घूत्कारंकुर्वत: अनन्तरम् पाष्णर्यावाकशयावातुतोद । तुदव्यथने । तुदतिव्यथयति स्रुचाइव तातानि यथास्रुचाहविष: हविरितिविभक्तिव्यत्यय: अध्वरेषु यज्ञेषु जुह्वति एवंसर्वाणि तेतव ब्रह्मणात्वयीलक्षणेनसूदयामिक्षारयामि आहुतित्वेनकल्पयामीत्यर्थ: ॥ ४० ॥ चतुस्त्रिंशत् । चतुस्त्रिंशत् वङ्क्रय: । वाजिन: वेजनवतोश्वस्यदेवबन्धो: देवानांप्रियस्य । देवाबन्धवोस्यइतिवा भावीदेवव-

ऽअध्व॒रेषु॒ सर्वा॑ ता॒ ते॒ ब्रह्म॑णा सूदयामि ॥ ४० ॥ चतु॑स्त्रि॒ᳪ शद्वा॒जिनः॑ ॥ चतु॑स्त्रि॒ᳪ शद्वा॒जिनो॑ दे॒वब॑न्धो॒र्वङ्क्री॒रश्व॑स्य॒ स्वधि॑तिः॒ समे॑ति ॥ अ च्छि॑द्रा॒ गात्रा॑ व॒युना॑ कृणोत॒ परु॑ष्परुरनु॒घुष्या॒ विश॑स्त ॥ ४१ ॥ एक

न्धु: । देवोह्यसौभविष्यति एवंभूतस्याश्वस्य वंक्री:वंक्रय: उभयपार्श्वस्थास्थीनिस्वधिति: छेदनसाधनोसि: समेतिएकसह्नत्वासङ्गच्छति यत: अतोब्रवीमि । अच्छिद्रागाचा अछिद्राणि अनवखण्डितानि गात्राणि गाचाणि वयुनाप्रज्ञानेन कृणोताकुरुत हेशमितार: । किञ्च परु:परु: पर्वपर्व हृदयाद्यंगम् अनुघुष्यइदमिदमितिसंशब्द्यविशस्त विसनङ्कुरुत उत्तरार्द्धस्यैवमन्त्ररूपसंबन्ध: ॥ ४१ ॥

एकस्त्वष्टुः । एकः । अश्वस्यविशस्ताविशसितासंवत्सरः । तदुक्तम् संवत्सरस्यतेजसेति त्वष्टुः आदित्यादुत्पन्नस्याश्वस्य तदुक्तम् सूरादश्वंवसवोनिरतष्टदिति । द्वायन्तारा । द्वौनियन्तारौ अहोरात्रौद्यावापृथिव्यौवाभवतः । तथऋतुः द्वितीयोमासानांनियन्तेतिशेषः । एवमश्वस्यविशसितृन् उक्त्वा अथेदानींस्वकीयंकर्माध्वर्युराह । यातेयानि तव हेअश्व गात्राणामङ्गानाम् ऋतुथा

एकस्त्वष्टुरश्वस्याविशस्ताद्वायन्तारांभवतस्तथऽऋतुः ॥ यातेगात्राणामृतुथाकृणोमितातापिण्डानाम्प्रजुहोम्यग्नौ ॥ ४२ ॥ मात्वांतपत्प्रियऽआत्मापियन्तम्मास्वधितिस्तन्वऽआतिष्ठिपत्ते ॥

ऋताव्रती कालेकालेवंधनानि कृणोमि करोमि । तातातानितानि पिण्डानांमांसपिण्डानां मध्येप्रजुहोमि प्रज्ञानानुरोधेनजुहोमि । अग्नौ ॥ ४२ ॥ मात्वातपत् । मात्वान्तपत् । त्वाश्वेनानविज्ञानात्मोच्यते सुखदुःखयोर्भोक्ता प्रियआत्माप्राणउक्तः । सहिश्रुतौ प्रिमित्येतदुपासीतेत्युक्तः । देवानाम् पियन्तम् देवलोकगमनप्रवृत्तं सन्तम् । माचस्वधितिः शस्त्रन्तन्वःशरीरस्य

अतिष्ठिपत् अस्थापयत् एकादशमन्नदानभूतम् तेतव। माच तेतव गृध्नुः मांसग्रहणेगर्द्धालु लुब्धः। अविशस्ताविशसने अकुशलः। अतिहायअतिक्रम्य। छिद्राछिद्राणिगात्राणि असिना-मिथूकः मिथ्याअकार्षीत् ॥ ४३॥ नवै। नवाउएतदिति व्याख्यातम्। अन्यच्च हरीन्द्राश्वौ तेतव। युंजायोजनार्हौ वोडारौ प्रतिधुरौअभूताम् पृषतीच मरुतांसंवन्धिनावश्वौ प्रतिधुराव-

मातेगृध्नुरंविशुस्ता * ऽतिहायंछिद्रागात्राण्यसिनामिथूंकः॥४३॥ न वै॥ नवाऽउंऽएतन्म्रियसेनरिष्यसिदेवा २ँ॥ इदेषिपथिभिंः सुगेभिंः॥ हरीतेयुञ्जापृषंतीऽअभूतामुपांस्थाद्वाजीधुरिरासंभस्य॥४४॥

भूताम्। तदुक्तम् अश्वरथयाने युंजन्त्यश्वकाम्याहरीइति। एभिर्दिव्यैस्त्वंसमानं लोकंसंज्ञात-इत्यभिप्रायः। एनमुपश्रुत्य स्वयमेव उपास्थात् उपस्थितः वाजीधुरिरासभस्य अश्विसंवन्धिनः। रासभावश्विनंरित्यादिष्टं प्रयोजनम् ॥ ४४॥ इदानींयाच्ञा। सुगव्यन्नः। शोभनगव्यं नोस्माकं

* अतिहायेत्यत्रापितुक् न भवति यस्यातिहाये त्याद्युक्तत्वात्।

वाजीकृणोतुकरोतु। स्वश्व्यंशोभनाश्वञ्चकरोतु। पुंसःपुत्रान्करोतु। दुहितरः पुत्राश्चपुत्रशब्दे-
नोच्यन्ते इत्यतोविशेषणंपुंसइति। उतअपिच विश्वापुषम् सर्वस्यपोषकंरयिन्धनङ्करोतु। किञ्च
अनागाः अनपराधम् त्वञ्च। नोस्माकम् अदितिर्देवमाताच करोतु। नैघंटुकोवाअदितिशब्दः।
अनागास्त्वंनः अदितिःअदीनोश्वःकरोतु। किञ्च। नःनोस्माकं वनताम्। करोत्वर्थेवनतिः।

सुगव्यंन्नः॥ सुगव्यंन्नोव्वाजीस्वश्व्यम्पुᳬं सःपुत्राᳬँ॥ उतव्विं
श्वापुषᳬं रयिम्॥ अनागास्त्वन्नोऽअदितिः कृणोतुक्षत्रन्नोऽअश्वो
व्वनताᳬं हविष्मान्॥ ४५॥ [६] इमानु॥ कम्भुवनासीषधामेन्द्र
श्चुव्विश्वेचदेवाः॥ आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यम्भेषजा

करोतु। हविष्मान्। अश्वः। सर्वेअश्वावयवाः हवींषि॥ ४५॥ इमानु। षड्द्विपदाः विराजः
तिस्रोवैश्वदेव्यः। तिस्रआग्नेय्यः। द्विपदाउत्तमा जुहोतीतिश्रुतिः। नुकमइतिनिपाता वनर्थ-
कौ इमानिभुवनानि भूतजातानि। सीषधाम साधयाम वयम्। ततोनन्तरम् इन्द्रःऐश्वर्य-

वान् विश्वेच देवाः आदित्यैः सहितः इन्द्रःसगणः मरुद्भिश्च सहितः अस्मभ्यमस्माकं भेष-

करत् ॥ यन्न्नस्तन्न्वम्प्रजाआदित्यैरिन्द्रःसहसीषधाति ॥४६॥
अग्नेत्व ॥ न्नोऽअन्तमऽउतत्त्राताशिवोभवावरूथ्यः ॥ वसुरग्नि
र्व्वसुश्रवाऽअच्छानक्षिद्युमत्तमᳬरयिन्दाः ॥ तन्त्वाशोचिष्ठदीदिवः
सुम्नायनूनमीमहेसखिभ्यः ॥ ४७ ॥ [ २ ]

इतिसंहितायामपञ्चविंशोऽध्यायः ॥ २५ ॥ [ १५ ]

जाभेषजानि करत्करोतु । किञ्च यन्नश्च नोस्माकं तन्वञ्च शरीरञ्च आदित्यैः सह इन्द्रः सीषधातिसाधयतु वश्यंकरोतु ॥ ४६ ॥ अग्नेत्वन्नइति व्याख्यातम् ॥ ४७ ॥

इति उव्वटकृतौ मन्त्रभाष्ये पञ्चविंशतितमोध्यायः ॥ २५ ॥

इषेत्वेतिप्रारभ्य दर्शपौर्णमासाग्निहोत्र पशु चातुर्मास्या ऽग्निष्टोम वाजपेय राजसूया ग्निसौत्रामण्य श्वमेध मंवद्वामन्त्रा व्याख्याता: । नामाख्यातोपसर्ग निपातजनिता वाक्यार्थाश्च । अथेदानीं खिलान्यनुक्रमिष्याम: । अग्निष्टोमा ग्निसौत्रामण्य श्वमेध पुरुषमेध सर्वं मेध पितृमेध प्रवर्ग्योपनिषत् संवद्वामन्त्राव्याख्येया: तद्वहोच्यन्ते । अत्रच येऽत्र संवद्वाम-

* अग्निश्च॑ ॥ पृथिवीचुसन्न॑तेतेमेसन्न॑मतामुदोव्वायुश्चान्त रिंक्षञ्चुसन्न॑तेतेमेसन्न॑मतामुदऽआदित्यश्चुद्यौश्चुसन्न॑तेतेमेसन्न॑

न्त्रा स्तेषां तदेवार्षम् । असंवद्वानान्तु आदित्यएव । आदित्यानीमानि यजूꣳषीतिवाआहुरितिश्रुते: । याज्ञवल्क्योवा यज्ञवल्क्येनाख्यायन्त इतिश्रुते: । अविनियुक्तानां मन्त्राणां लैङ्गिको विनियोग: तद्यथा अग्निश्च पृथिवीचेति सप्तसन्नतिमन्त्रा: । लिङ्गंनाम प्रकाशन सामर्थ्यमुच्यते । योहि यमर्थंवदितुं समर्थ: सतत्र श्रुत्याविनियुज्यते । अग्निश्च पृथिवीचसन्नते । सन्न-

(१) इषे त्वेत्यारभ्य दर्शपौर्णमासपितृयज्ञाग्निहोत्रोपस्थान पशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधसम्बद्धा मन्त्रा व्याख्याता: । इदानींखिलान्युच्यन्ते

---

* अग्निश्चपंचदशोत्पात एकादशद्वौषाड्वृठं०शति ॥

मनंसन्नतिः प्रह्वीभावः। आनुकूल्येनप्रवृत्तिः। अग्निश्च पृथिवीच संभोगार्थंसंनते यस्मादतो-ब्रवीमि तेअग्निपृथ्व्यौ मेमम सन्नमताम। अत्र णिचोलोपश्छान्दसः। सन्नमयितां वशवर्त्ति-नङ्कुरुतामित्यर्थः। अद इति पुरुषादेर्विशेषनामोपलक्षणम् द्वितीयान्तं चोपलक्षयतिकर्मभावात्। एवमुत्तरेष्वपियोजनम्। वायुश्चान्तरिक्षञ्च आदित्यश्च द्यौश्च आपश्चवरुणश्च। सप्तस ठं० सदः। परमात्मोच्यते। यस्यतव सप्तसंसदः सप्तसंसदानि प्रकृतानीत्येतम् अग्निपृथिवीवायवन्तरि-

मताम्अदऽआपंश्च्चुश्चवरुणश्च्चुसन्नंतेमेसन्नंमताम्अदः॥ सप्तसु ठं स दोऽअष्टमीभूतसाधनी॥ सकामाँ२॥ ऽअद्ध्वनस्कुरुसञ्ज्ञानमस्तु

क्षादित्यद्युलोकाम्बुवरुणा न्तानि। यस्यच तव अष्टमीवभूव भूतानांसाधनीपृथ्वी। नहि पृथि-वीमन्तरेण भूतानामु त्पत्तिरस्ति। तत्त्वं प्रार्थ्यसे। सकामान् अध्वनः कुरु सकामान्मा-र्गान् अस्माकंकुरु। यदाहि तैर्लभ्यते तदा सकामामार्गाः स्युः। संज्ञानञ्च सङ्गतञ्ज्ञानम् अस्तु मेमम अमुना। विशेषनामाभिप्रायमेतत्। विज्ञानात्मावोच्यते। यस्य तव सप्तसं-सदः। मनश्च वुद्धिश्च पञ्चबुद्धीन्द्रियाणिच। अष्टमीच वाक्भूतसाधनी भूतप्रज्ञप्तिकरी।

तन्त्वांब्रवीमि । सङ्कामान् अध्वन:कुरु अस्माकम् सज्ञानंच। अस्तु। मेमम असुना ॥ १ ॥
यथेमाम् । यथा इमांवाचं कल्याणीम् अनुद्वेजिनीम् दीयतांभुज्यतामित्येव मादिकाम् ।
आवदानि । जनेभ्योर्थाय । केतेजना इत्यतआह । ब्रह्मराजन्याभ्याम् ब्राह्मणाय राजन्यायच
शूद्रायच अर्य्यायच अर्योवैश्य: । स्वायचात्मीयायच । अरण: अपगतोदक:परइत्यर्थ: । आवदानीति

मेमुना ॥ १ ॥ यथेमाम्॥यथेमाँवाचंकल्याणीमावदानिजनेभ्यः ॥
ब्रह्मराजन्याभ्याᳪंशूद्रायचार्य्यायचस्वायचारणायच ॥ प्रियोदे
वानान्दक्षिणायैदातुरिहभूयासमयम्मेकामः समृद्ध्यतामुपमादोन

सर्वत्रसंवधग्रते ॥ प्रियोदेवानाम् । अवसानरहितानुष्टुप् । यथेमांवाचमिति यथाशब्दयोगात्तथा-
शब्दोवाधग्राहर्त्तव्य: । तथातेनप्रकारेणप्रियोदेवानां भूयासम् । दक्षिणायै दक्षिणायादातुश्च
इहास्मिन्नेवकाले प्रियोभूयासम् अयमितिकामनामग्रहणम् । तद्यथाअयंग्रासलाभकाम: अस्मै
मेसमृधग्रताम् । किंचउपमाअद: नमतु । अदइतियःकामइष्यतेसउच्यते । तद्यथाउपनमतु

मांप्रतिदेवदत्तः ॥ २ ॥ बृहस्पतेअति बृहस्पतिसर्वेऽनया त्रिष्टुभाबृहस्पतिदेवतया ग्रहोगृह्यते गृत्समदस्यार्षम् बृहस्पतेर्वा । हे बृहस्पते । अतिशयेन यत्द्रविणंधनम् । अर्यः ईश्वरः अर्यश्च द्ःस्वामिन्यन्तोदात्त वैश्येआद्युदात्तः । अर्हात्पूजयेत् । यच्चद्यु मद्विभाति । द्यु मत्द्यु तिमत् विभातिभासते । क्रतुमज्जने षु । यच्च क्रतुमत्यज्ञवत् जनेषु विभातीत्यनुवर्त्तते यत्दीदयत्

मतु ॥ २ ॥ बृहंस्पतेऽअतिं ॥ बृहंस्पतेऽअतियदुर्य्योऽअर्हांद्युमद्वि भातिक्रतुंमज्जनेंषु ॥ यद्दीदयुच्छवंसऽऋतप्रजाततदुस्मासुद्रविंण न्धेहिचित्रम् ॥ उपयामगृंहीतोसिबृहस्पतंयेत्त्वैषतेयोनिर्बृहस्प

शवसा यच्चदीप्यते शवसाबलेन । रच्चितारोपि यस्यसन्तीत्यभिप्रायः । हेऋतप्रजात ऋतात्स त्यादविनाशिनः प्रजायतइतिऋतप्रजातः तत्संवुद्धौहेऋतप्रजात तत्द्रविणम् अस्मासु धेहिस्था- पयंचित्र नानारूपम् । उपयामगृहीतोसिबृहस्पतयेत्वा । एषतेयोनिर्बृ हस्पतयेत्वा । स्थापन-

मंत्रः ॥ ३ ॥ इन्द्रगोमन् । द्वाभ्यांगायत्रीभ्यामिन्द्राय गोमते ग्रहोगृह्यतेगोसवे । आदित्यस्यार्षं याज्ञवल्क्यस्यवा । हे इन्द्रगोमन् । गोभिःसंयुक्त । स्तुतिभिर्वा । इहयज्ञे आयाहिआगच्छ एत्य चपिबसोमम् हे शतक्रतो बहुकर्मन् कथंभूतं सोमम् विद्यद्भिर्ग्रावभिः सुतम् दोअवखण्डने । अस्यशतरिविद्यन्तः तैः विद्यद्भिः विशेषेणावखण्डयद्भिः ग्रावभिः सुतमभिषुतं सोमम् ॥ उप-

तंयेत्वा ॥ ३ ॥ इन्द्रगोमन् ॥ इन्द्रगोमन्निहायाहि * पिबासोमंशत क्रतो ॥ विद्यद्भिर्ग्रावभिःसुतम् ॥ उपयामगृहीतोसीन्द्रायत्वागो मतऽएषतेयोनिरिन्द्रायत्वागोमते ॥ ४ ॥ इन्द्रायाहि ॥ इन्द्रायाहि

यामगृहीतोसीन्द्रायत्वागोमतेगृह्णामि । एषतेयोनिरिन्द्रायत्वा गोमतेसादयामि ॥ ४ ॥ इन्द्रा- याहि । हेइन्द्रआगच्छ हेवृत्रहन् । वृत्रस्यहंतः एत्यचसोमम्पिब हेशतक्रतो बहुकर्मन् । कथंभूतंसोमम् । गोमद्भिः स्तुतिमद्भिः । ग्राव्णासंयुतैर्वा अंशुवचनोवा गोशब्दः ॥ ग्रावभिः

* पिबासोमिम्य वासुतस्यस्यामयोभुवोनू रणेशमोण्वेतिदण्डकसूत्रेषपिबासोममित्तत्रदीर्घन्निपात्यते प्रा० अ० ३ । सू० १२९ ।

सुतमभिषुतम् उपयामेतिव्याख्यातम् ॥ ५ ॥ ऋतावानम् । तिस्रोवैश्वानरीया पुरोरुचः गायत्रीत्रिष्टुप्गायत्र्यः । अधस्तनएवऋषिः । ऋतावानं सत्यंव्रतं यज्ञवन्तमुदकवन्तंवा वैश्वानरम् ऋतस्यत्वा । उदकस्ययज्ञस्यसत्यस्यवा ज्योतिषश्चपतिम् । अथवा ऋतस्यसर्वंगतस्य-

वृत्रहन्निन्पबासोमंᳬशतक्रतो ॥ गोमंद्भिर्ग्रावंभिःसुतम् ॥ उपयामगृंहीतोसीन्द्रांयत्त्वागोमंतऽएषतेयोनिरिन्द्रांयत्त्वागोमंते ॥ ५ ॥ ऋतावांनंव्वैश्वानरम् ॥ * ऋतावांनंव्वैश्वानरमृतस्यज्ज्योतिंषस्पतिंम् ॥ अजंस्रङ्घर्म्ममींमहे ॥ उपयामगृंहीतोसिव्वैश्वानरायंत्त्वैषतेयोनिंर्व्वैश्वानरायंत्त्वा ॥ ६ ॥ व्वैश्वानरस्यंसुमतौ ॥ स्यामंराजाहि

ज्योतिषः पति अधिपतिम् । अजस्रमनुपक्षीणंधर्मंम् अत्तरणंदीप्तंवाईमहेयाचामहे । आयज्ञसमाप्तिमितिशेषः सामर्थ्यात् । उपयामेतिव्याख्यातम् ॥ ६ ॥ वैश्वानरस्यसुमतौ ।

* ऋतावान मित्यत्रऋशब्दर भिन्न मतिसुमत्तोत्तरादि सूत्रेण वकारेपरे ऋतेतरकार स्यदीर्घोवि धीयते प्रा० अ० सू० ९८ ॥

द्वितीयः पादः पूर्वं व्याख्यायते । यः वैश्वानरः राजादीप्तः द्विकमिति निपातसमाहारोनर्थः । यश्चवैश्वानरः भुवनानांभूतजातानामभिश्रीः अभ्याश्रयणीयः सर्वोपकारसामर्थ्यात् । यश्च इतो जातः इतोऽरणितः कुतश्चिद्वा उत्पन्नः सन् विश्वमिदंसर्वमिदं विचष्टे अभिविपश्यति । यथाद्रष्टव्यं कर्मानुरूपेण । यश्चवैश्वानरः यततेस्पर्द्धते सूर्येणसहस्वकीयदीप्त्या तस्यवैश्वा-

कम्भुवंनानामभिश्श्रीः । इतोजातोविश्श्वमिदंविचष्टेवैश्श्वान रोयंततेसूर्येण ॥ उपयामगृहीतोसिवैश्श्वानरायत्त्वैषतेयोनिर्वै श्श्वानरायत्त्वा ॥ ७ ॥ वैश्श्वानरोनः ॥ वैश्श्वानरोनऽऊतयऽआ

नरस्यसुमतौ कल्याणमतौ वयंस्यामेतिप्रार्थना । उपयामेतिसमंजसम् ॥ ७ ॥ वैश्वान-रोनः वैश्वानरोग्निः नोस्मान्ऊतये अवनायपालनाय आप्रयातु आगच्छतु, परावतःदूरात् । योहिदूरादागच्छेत् आगच्छेदप्यसौसमीपादित्यभिप्रायः । केनआप्रयातु । उक्थेनस्तोमेन । वाह-सावाहनभूतेन । अन्यत्रापिस्तोमोवाहनद्वत्युच्यते । वाहिष्ठोवाहनास्तोमइति । उपयामेतिसमान

म् ॥ ८॥ आग्निर्ऋषिः । आग्नेयीगायत्रीपुरोरुक् । ऋषिरुक्तः । यःअग्निः ऋषिः द्रष्टामन्त्राणाम् पवमानः । द्रूतस्तेतस्वगच्छन् । पाञ्चजन्यः पञ्चजनेभ्योहितः । चत्वारोवर्णानिषादपञ्चमाः पञ्चजनाः । तेषांहियज्ञेधिकारोस्ति । पुरोहितः । पुरएनन्दधाति यज्ञं कुर्वाणाः । तमृईमहेयाचामहे । महागयम्

प्प्रयांतुपरावतः ॥ अग्निनुक्थेनवाहसा ॥ उपयामगृहीतोसिवै श्वानरायत्वैषतेयोनिर्वैश्वानरायत्वा ॥ ८ ॥ अग्निर्ऋषिः ॥ अग्निर्ऋषिः पवमानःपाञ्चजन्यःपुरोहितः ॥ तमीमहेमहाग यम् ॥ उपयामगृहीतोस्यग्नयेत्वावर्चसऽएषतेयोनिरग्नयेत्वाव र्चसे ॥ ९ ॥ महा २ ॥ इन्द्रः ॥ महाँ २ ॥ इन्द्रोवज्रहस्तःषोड

महान्तंगृहम् । महत्त्वंच गृहस्यद्रव्यनिबन्धनम् उपयामगृहीतोस्यग्नयेत्वावर्चस इतिव्याख्यातम् ॥ ९ ॥ महांइन्द्रः । माहेन्द्रीपुरोरुक् गायत्री । उक्तमार्षम् । महान्इन्द्रः वज्रहस्तः । षोड़शी ।

पञ्चप्राणाः पञ्चबुद्धीन्द्रियाणिपञ्चकर्मेन्द्रियाणि मनःषोड़शम् एतल्लिङ्गंयस्य सषोड़शीन्द्रः।
पञ्चदशोवावज्रस्येन्द्रस्सषोडशीवज्रस्य । शर्मंशरणंयच्छतु ददातु । हन्तुच पाप्मानं ब्रह्महत्या-
दिकम् । यश्चास्मान् द्वेष्टि तञ्चहन्तु । यञ्चवयंद्विष्मः तञ्चहन्तु । उपयामेतिसमानम् ॥ १० ॥
तम्वः ऐन्द्रीबृहती । जपस्वाध्यायादिषुविनियोगः । आदित्यस्यार्षम् याज्ञवल्क्यस्यवा आम्न-

# शीशर्म्मयच्छतु ॥ हन्तुंपाप्मानंय्योस्म्मान्द्वेष्टिं ॥ उपयामगंहीतो सिमहेन्द्रायंत्त्वैषतेयोनिर्म्महेन्द्रायंत्त्वा ॥ १० ॥ तंव्वः ॥ तँव्वोंदस्म्मम्टृ तीषहंव्वसोर्म्मन्दानमन्धसः ॥ अभिवत्सन्नस्वसंरेषुधेनवऽइन्द्रङ्गी

ध्यायपरिसमाप्तेः । हेऋत्विग्यजमानाः तमिन्द्रं गीर्भिर्वाग्भिः स्तुतिलक्षणाभिः । नवामहे ।
णुस्तुतो अभिष्टुमः किमर्थम् । वःयुष्मभ्यं दास्यतीति । कथंभूतमिन्द्रम् दस्मम् । दर्शनीयम्
प्रियवादिनंकार्यसाधनञ्च । ऋतीषहम् ऋतीगतिः गतिमात्रेण शत्रुं सहतद्भूतष्टतीषाट् तमृती-
षहम् । वसोर्मन्दानमन्धसः । वसोर्वासयितुः सोमस्यस्वकीयेनैकदेशेन मन्दानंमाद्यन्तम् अ-

न्यस: अधग्रायनीयस्यचान्नस्य स्वकीयेनैवांशेनमाद्यन्तम् कथमिवनवामहे । वत्संनस्वसरेषुधेनव: । नकारउपमार्थीय: । वत्समिव । स्वसरेषु स्वयमेवसरन्ति येषुतानिस्वसराण्यहानितेषुस्वसरेषु अहस्सु । धेनव: । यथानवप्रसूताधेनव: दिनेषुअतिहार्दात् वत्संशब्दैराश्वासयेयु: एवंवयमप्यतिसौहार्द्रेणेन्द्रङ्गीभिर्नवामहे इतिसमस्तार्थ: ॥ ११ ॥ यद्वाहिष्ठम् । आग्नेय्यनुष्टुप् हेउद्गात: यत् वाहिष्ठं वोढृतमं बृहत्साम तत् अग्नयेअर्थाय अर्चगाय । ततोद्रष्टाग्निंब्रूहि ।

बिर्भर्न्नवामहे ॥ ११ ॥ यद्वाहिंष्ठम् ॥ यद्वाहिंष्ठन्तदग्नयेबृहदर्च्चविभावसो ॥ महिंषीवत्वद्रयिस्त्वद्वाजाऽउदीरते ॥ १२ ॥ एह्हिं ॥ एह्यू

हेविभावसो विभूतधनअग्ने । महिषीवत्वद्रयि: मेहिषीप्रथमवित्ता । यथाप्रथमपत्नीधर्मार्थकामात्मिकाउदीरते उत्तिष्ठतिमुखात्मिकाभवति एवंत्वद्रयि: सुखात्मिकाभुदीरते उतिष्ठति ॥ अथवा । महिषीयथा सर्वान्भोगान् उदीरतेउत्क्षिपति परोपकाराय । एवंत्वत्तोरयि: उदीरतेत्वत्तश्च वाजाअन्नानि उदीरतेउद्गच्छन्ति परोपकाराय ॥ १२ ॥ एहि । आग्नेयीगायत्री । अधस्त-

नमंत्रस्तुतोग्नि रिहसंबोध्यते । एहिआगच्छ हेअग्ने । ऊकारोनर्थकः । कोहेतुरितिचेत् । सुब्रशाणि साधुब्रवाणि तेतव हेभगवन्नग्ने । इत्थेतराः इत्थंत्वदीयै नामवंधकर्मरूपै ग्रं-थिताः इतराः स्तुतिलक्षणाः गिरोवाचः । यद्वा इत्थमुद्गात्रस्तोत्रजनिताः इतराअन्यागि-रोयागीयन्ते । हे तुंन्यस्यति । एभिश्च इन्दुभिः अध्वर्युणाभिषुतैः सोमैःत्वंवर्द्धसेवर्द्धस्व ।

सुब्रवाणितेग्नऽइत्थेतराःगिरः ॥ एभिर्वर्द्धासऽइन्दुभिः ॥ १३ ॥ ऋतवस्ते॥ ऋतवस्तेयज्ञंवितन्वन्तुमासारक्षन्तुतेहविः ॥ संव्वत्सरस्तेयज्ञन्दधातुनःप्रजाञ्चपरिपातुनः ॥ १४ ॥ उपह्वरेगिरी

॥ १३ ॥ ऋतवस्ते । यजमानेनाग्निरुच्यते अनयाष्टहत्या । ऋतवः तेतव यज्ञंवितन्वन्तु । मासाश्चतेहविः रक्षन्तु । संवत्सरश्च तवयज्ञंदधातुधारयतु नःइतिनिपातोनर्थकः । प्रजांच परिपातुनः इतियजमानआत्मानमाह । नोस्माकं प्रजांचपरिपातुसंवत्सरएव ॥ १४ ॥ उपह्वरे-गिरीणाम् । चतस्रोगायत्र्यः सौम्यः । उपह्वरेगह्वरेगिरीणांपर्वतानाम् प्रसिद्धमेतत् । एका

हाहीनसत्वाशिक्रियन्तामित्यनया । धियाबुद्ध्याविप्रःमेधावी सोमःअजायत। जगत्धारयितु-मिच्छन् ॥ १५ ॥ उच्चाते। व्यवहितपदप्रायोमन्त्रः हे सोम तेतव अन्धसःअधग्रानीयात् र-सीभूतात् । जातमुत्पन्नम् यज्ञपरिणामभूतम् उच्चाउच्चैः । दिविसत् । द्युलोकेविद्यमानम् पश्चात्भूमिः आददे गृहीतवती। किंतत् द्युलोकप्राप्तंभूमिराददे। उग्रम्उद्गूर्णं महाचौरादिणाम् ॥

उपह्वरेगिरीणांसङ्गमेचनदीनाम् ॥ धियाविप्रोऽअजायत ॥ १५ ॥ [ १५ ] उच्चातेजातमन्धसोदिविसद्भूम्याददे ॥ उग्रᳪशर्ममहिश्रवः ॥ १६ ॥ सनः ॥ सनऽइन्द्रायय

भिरनाधृष्यम् शर्मशरणंगृहम् महिश्रवः महच्छ्रवणीयंधनम् । यज्ञाहुतिपरिणामोद्घाटनमात्र मेतत्कृतम् यथा हुतिः प्रथमंदिविगच्छति ततोन्तरिक्षे जलरूपेण ततोभूमावन्नरूपेण ततोनरेरेतोरूपेण ततोयोनौ पुरुषरूपेणेति पञ्चधाहुतिपरिणामः ॥ १६ ॥ सनः । यस्त्वंवरि-वोवित्। वरिवोधनम् । तद्विंदतिवेत्तिवायोसौवरिवोवित् यस्त्वंधनस्यलब्धावेदितावा। सः

नः सोऽस्माकं यज्ञम् इन्द्राय यज्यवेयष्टव्याय वरुणायच मरुद्भ्यश्चार्थाय । परिस्रवस्व अथवा । सत्वंनःयज्ञम् इन्द्राय यज्यवेवरुणाय मरुद्भ्यश्चवरिवोविदिति एतेषांविशेषणं कृतविभक्तिव्यत्ययं गृह्यतेसामानाधिकरण्यात् वरिवोविद्भ्यः धनविद्भ्यः परिस्रव । क्रियाविशेषणंवा । एतेभ्योदेवेभ्यः परिस्रव तथाचपरिस्रव यथावरिवोविद्भवति ॥ १७ ॥ एनाविश्वानि । एनाएनानिविश्वानिसर्वाणिद्यु म्नानिधनानि । अयं ईश्वरः सोमः आआदाय अस्मभ्यंददात्वितिशेषः । तानिच सोमदत्तानि ।

उज्ज्यवेवरुणायमरुद्भ्यः ॥ वरिवोवित्परिस्रव ॥ १७ ॥ एनाविश्वान्यर्य आद्युम्नानिमानुषाणाम् ॥ सिषासन्तोवनामहे ॥ १८ ॥ अनुवीरैः ॥ अनुवीरैरनुपुष्यास्मगोभिर

सिषासन्तः । षणुदाने । अस्यसन्यनुनासिकस्याकारः । दातुमिच्छन्तः दानाभिमुखीभूताः सन्तो-वयम्धनानिवनामहे सम्भुज्महे ॥ १८ ॥ किमर्थंधनमतो दातुमिच्छन्तो धनवन्तइत्याह । अनुवीरैः । आशीर्देवताविष्टुप् । अनुपुष्यास्मवीरैः वयम् अनुपुष्यास्मच गोभिः वयम् । अन्वश्वैः अनुपुष्यास्मच वयमश्वैः । अनुसर्वेणपुष्टैः । अनुपुष्यास्मच वयंसर्वेणपुष्टेनेति वचनव्यत्ययः । अनुद्विपदा अनुपु-

ष्यास्मच वयंद्विपदाद्विपादेन अनुपुष्यास्मचचतुष्पादेन । किञ्च । देवा:नोस्माकं यज्ञम् ऋतुथाऋतौ
ऋतौकालेकाले नयन्तु ॥ १९ ॥ अग्ने पत्नी: द्वतउत्तर पञ्चनेष्टुर्याज्या: । आद्यागायत्री । देवा-
नांपत्न्य: त्वष्टाचदेवता । हेअग्ने देवानांपत्नी: इहास्मिन्यज्ञे उपावहआगमय कथंभूता:
उशती:कामयमाना: अस्मान् । त्वष्टारञ्चउपावह । किमर्थम् । सोमपीतये सोमपानाय ॥ २० ॥

न्न्वश्श्वैरनुसर्व्वैणापुष्टटैः ॥ अनुद्विपदानुचतुंष्प्पदाव्वयन्देवानोयु
ज्ञमृंतुथानंयन्तु ॥१९॥ अग्ग्नेपत्नीः ॥ अग्ग्नेपत्नीरिहावंहदेवा
नांमुशतीरुपं ॥ त्वष्टांरर्ठ सोमंपीतये ॥ २० ॥ अभियज्ञम् ॥ अभि
यज्ञङ्गृणीहिनोग्ग्नावोनेष्टः पिबऽऋतुनां ॥ त्वर्ठहिरंत्नधाऽअ

अभियज्ञम् । द्वेगायत्र्यौ ऋतुग्रहाणां याज्ये । नेष्टास्वकीयामधिष्ठात्रीं देवताब्रवीति । अभि-
गृणीहिस्तुहि यज्ञंनोस्मत्संबन्धिनम् । हेग्नाव: । ग्ना:पत्न्य: ताविद्यन्तेसत्रसग्नावान् तत्संबोधनं
हेग्नाव: । मतुवसो:रु:संबुद्धौछन्दसीतिरुत्वम् । हेनेष्ट: पिबच ऋतुनाकालेनसह । कस्मात्व-

मेवमुच्यसे इतिचेत् । तत्राह । त्वंहिरत्नधाअसि । यस्मात्वमेवरमणीयानान्धनानां दातासि ॥२१॥ द्रविणोदाः । ऋत्विजउच्यन्ते । अयमग्निः । द्रविणोदाः । धनस्यबलस्य वादाता । पिपीष-तिपातुमिच्छति पिबतेःसनीकारः । सोममितिशेषः । एवञ्चेदतोब्रवीमि । हेऋत्विजः । जुहोत-प्रचतिष्ठत जुहुतच प्रतिष्ठतच कर्मसु । किञ्च । नेष्ट्रात् नेष्ट्रियात् धिष्ण्यात् ऋतुभिःकालैःसह

सिं २१ द्रविणोदाःपिपीषति । जुहोतप्रचतिष्ठत ॥ नेष्ट्रादृतुभिरि ष्यत ॥ २२ ॥ तवायम् ॥ तवायꣳसोमस्त्वमेह्यर्वाङ्शश्वत्तमꣳ सुमनाअस्यपाहि ॥ अस्मिन्यज्ञेबर्हिष्यानिषद्याधिषेमञ्ज

सोममद्भ्यत पुनःपुनःपिबत ॥ २२ ॥ तवायम् । ऐन्द्रीत्रिष्टुप् माध्यन्दिनीया । हेइन्द्र यतः तवायंमाध्यन्दिनीयः सोमः अतःअस्माभिः प्रार्थ्यमानः त्वम् आइहि आगच्छ । कथंभूतः । अर्वाङ् अर्वागञ्चनः अवरेणाञ्चितः । एत्यच शश्वत्तमं शाश्वतिकतमम् सोमं सोमभागंगृहाण संगृह्यचसुमनाभूत्वा अस्यसोमस्यपाहिपिब । पीत्वाच । अस्मिन्यज्ञेबर्हिषि निषद्य अवस्थानं-

क्तत्वादधिष्वधारयस्व इमंजठरे इन्दुंसोमम् हेइन्द्र ॥ २३ ॥ अमेवन: । देवपत्न्य: त्वष्टाचा-त्वष्टश्चन्ते । जगती तार्तीयसवनीया याज्या । अमाशब्दोगृहवचन: । यथागृहाणिस्वानिएवं न:अस्माकं यज्ञगृहाणि । सुहवा: साध्वाह्वाना: आहिगन्तन आगच्छत । हि:पादपूरण: । आगत्यच निवर्हिषिसदतन निषीदत उपविशत वर्हिषि । निषद्यच रणिष्टन रतिंकुरुत ।

ठरऽइन्दुमिन्द्र ॥ २३ ॥ अमेवंन: ॥ अमेवंन:सुहवाऽआहिगन्तंननिबर्हिषिंसदतनारणिष्टन ॥ * अथामन्दस्वजुजुषाणोऽअन्धंसस्त्वष्टर्देवेभिर्जनिभि:सुमद्गण: ॥ २४ ॥ स्वादिष्ठयामदिष्ठया ॥ स्वादिष्ठयाम

आदित्यासुपष्टासुदेवपत्नीषु । अथमन्दस्व तृप्यस्व जुजुषाण: सेवमान: । अन्धस: सोमस्यस्व-संशम् हेत्वष्ट: देवेभिर्देवै: जनिभि: जननहेतुभूताभि: देवपत्नीभि: सुमद्गण: सन्शोभनमदादेवास्तेषां स्त्रीणाञ्चगण: यस्यससुमद्गण: ॥ २४ ॥ स्वादिष्ठया । सौम्यौपावमान्यौगायत्र्यौ । जपादिषुविनियोग:उक्तश्च । रसीभूतो यदासोम: पवित्रात्त्वरतिग्रहम् ऋग्भि:स्वादिष्ठयाद्याभि: 'पवमान:सउ-



* एवाच्छचन्नसाथ ॥ एव अच्छ चक्षम अथ एतेऋस्वाव्यञ्जनसात्वे परेदीर्घमाद्यतेइतग्नेनअथेताकारस्यदीर्घोभवतिप्रा अ० ३ । सू० १२५ ॥

च्यते। स्वादिष्ठयास्वादुतमया मदिष्ठयामदयित्ततमया पिवस्वदशापविवात् द्रोणकलशंप्रतिगच्छ हेसोमधारया। यस्त्वम् इन्द्रायपातवे इन्द्रःपिवतु इत्यनेनाभिप्रायेण सुतःअभिषुतोस्माभिः ॥२५॥ रक्षोहाविश्वचर्षणिः। अयमेवसोमः रक्षोहा रक्षसामपहन्ता विश्वचर्षणिः सर्वस्यजगतोद्रष्टा। यथार्हम्प्रति। अभिआसदत आभिमुख्येनसन्तः सीर्दतिवा। किमभ्यासदत् योनिंस्थानम्।

दिष्ठयापवस्वसोमधारया॥ इन्द्रायपातवेसुतः॥ १५॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहते॥ द्रोणेसधस्थमासदत्॥२६॥ [११]॥२॥

इतिसंहितायांषड्विंशतितमोऽध्यायः॥ २६॥

कथंभूताम्। अयोहते। अयसाकृष्णलोहेन हतमुत्कीर्णम् सोमभाजनीकृतम्। हतमितिविभक्तिव्यत्ययः योनिसामानाधिकरण्यात्। किंनामानंयोनिम् द्रोणे। अत्रापिविभक्तिव्यत्ययः द्रोणंद्रोणकलशलक्षणम्। सधस्थंसहस्थानलक्षणम् सोमानाम् ॥ २६॥

इतिउव्वटकृतौमन्त्रभाष्येषड्विंशतितमोध्यायः॥ २६॥

शु० य० सं० ५६२ उ० भा०

(१) समास्त्वा। अग्निक्रोधग्राय:। सामिधेन्योनव त्रिष्टुभ: आग्नेय्योग्निनादृष्टा:। प्राक्पीवोन्नाया ऋषिरग्नि: कर्माङ्गभूतमग्निंस्तौति समाशब्दोमासवचन: संवत्सर इतिशब्दोपादानसामर्थ्यात्। समा: मासाश्च त्वां हेअग्ने ऋतवश्चवर्द्धयन्तु। संवत्सराश्च ऋषयश्च सप्त-

*समास्त्वा ॥ समास्त्वाग्नऽऋतवोवर्द्धयन्तुसंवत्सराऽऋषयोयानिसत्या ॥ सन्दिव्येनदीदिहिरोचनेनविश्वाऽआभाहिप्रदिशश्चतस्रः ॥१॥ सञ्चेद्धास्वाग्नेप्रचबोधयैनमुच्चतिष्ठमहतेसौभगाय ॥ माचरिषद्

ऋषयासन्त्यद्रष्टारोवा प्राणावा। यानिचसत्या सत्यानिआर्षा: मन्त्रा:त्वांवर्द्धयन्त्वित्यनुवर्तते। त्वसम्प्येतैर्वर्द्धमान:। सन्दिव्येनदीदिहि रोचनेन। सन्दीदिहि संदीप्यस्व दिव्येन दिविभवेन रोचनेनदीप्त्या। किञ्च विश्वा:सर्वा आभाहिदीपयदिश:प्रदिशश्च चतस्र:आभाहि ॥ १ ॥ सञ्च। समिद्धयस्वच हेअग्ने। प्रबोधयच अवगतार्थञ्च यनंयजमानङ्कुरु। यथाग्निश्चेतव्यइतिं। उते-

१) अयमध्याय: पञ्चचितिकस्याग्ने: सम्बन्धो प्रजापतिदृष्ट:। नव ऋचोऽग्निदेवत्यास्त्रिष्टुभोऽग्निना दृष्टा: इष्टकापशौ समिध्यमानसमिद्धयोरन्तराले आसां विनियोग:।

---

* समास्त्वादशोदृर्ध्वासस्यपीवोअन्नाद्वादशकावसिर्त्वे काद्शचत्वार: पंचचत्वारिंश०शत्।

अ० २७

शिवम्

५६२

ष्टच महतेसौभगायऐश्वर्याय । किञ्चमाचरिषत् माचविनश्यतु उपसत्ता उपसदनस्यकर्ता यजमानःसन्त्वग्निमुपसीदति । तेतव । हेअग्ने । किञ्च । ब्रह्माणस्ते ब्राह्मणाश्च ऋत्विग्यजमानाः तवसंवन्धिनः । यशसःसन्तु । मत्वर्थीयलोपः यशश्विनःसन्तु । माअन्येयशस्विनःसन्तुअयजमानाअलङ्करिष्णवः ॥ २ ॥ त्वामग्ने । हेअग्ने त्वाम् इमेब्राह्मणाः ऋत्विजःवृणतेवृणवन्ति

पसुत्तातेऽअग्ग्नेब्ब्रुह्मणांस्त्तेयुशसंः सन्त्तमान्न्ये ॥ २ ॥ त्वामग्ग्ने ॥ त्वामंग्ग्नेव्वृणतेब्ब्राह्म्मणाऽइमेश्शिवोऽअंग्ग्नेसँव्वरंणे*भवानः ॥ सपत्नहा

यागाय । यतएवमतःप्रार्थयामः । शिवःशान्तः हेअग्ने संवरणेब्राह्मणैःसह एकस्मिन्वरणे । भव नःअस्माकम् । त्वन्देवोवयञ्चमर्त्या इत्यभिप्रायः । सपत्नहानोअभिमातिजिच्च । सपत्नानांहन्ताचभवास्माकम् अभिमातिशब्दोपिशत्रुवचनः । अतएवंव्याख्यायते । सपत्नानांहन्ताभव हतावशिष्टानांजेताचभवेति । किञ्च । स्वेगयेस्वकीयेगृहे जागृहिअप्रयुच्छन् । युच्छीप्रमादे । अप्र-

---

* भवच ॥ भवंतःअयं इत्स्योदीर्घमापद्यतेन कारेपरेइति सूत्रेणभवेतःकारस्य नकारेपरेदीर्घोभवति तेनभवानइति सिद्धम् प्रा० घ० ३। सू० १०८ ॥

मायन् उन्नतमनाइत्यर्थः ॥ ३ ॥ इहैव । इहएवकर्मणि वर्तमानानामस्माकम् हेअग्ने अधिधारयर-यिमउपरिनिक्षिप्तधनम् । किञ्च । मात्वां निक्रन्नीचैःकुर्वन्तु अवज्ञयापश्यन्तु । पूर्वचितः पूर्वं येऽग्निश्चितवन्तः । निकारिणः । ज्ञानकर्मसमुच्चयातिशयेन येन्योन्यजन्मानि । नीचैःकुर्वन्ति । किञ्च । क्षत्रम् । हेअग्ने सुयमंसाधुयन्तृअस्तु तुभ्यन्तव । किञ्च उपसत्ता यजमानःसत्त्युपसदनं

नोऽअभिमातिजित्स्वेगयेजागृह्यप्रयुच्छन् ॥ ३ ॥ इहैव ॥ इहैवा ग्नेऽअधिधारयारयिम्माच्वानिक्रन्पूर्वचितोनिकारिणः ॥ क्षत्रम ग्नेसुयममस्तुतुभ्यमुपसत्ताव्वर्द्धतान्तेऽअनिष्टृतः ॥ ४ ॥ क्षत्रेणाग्ने ॥ क्षत्रेणाग्नेस्वायुः सᳪरभस्वमित्त्रेणाग्नेमित्त्रधेयेयतस्व ॥ सजातानां

करोत्यग्नेः । वर्द्धतान्तेतव । अनिष्टृतः । स्तृहिंसायाम् अनुपहिंसितःसन् ॥ ४ ॥ क्षत्रेणाग्ने । क्षत्रेणसम्पाद्यात्मानम् हेअग्ने । स्वायुःसाध्वायुः सन्सम्भरस्वयज्ञं वोढुम् । मित्रेणचसम्पाद्या-त्मानंमित्रधेयेयतस्व । यथामित्राणिधार्यन्ते तथायतङ्कुरु । किञ्च । सजातानांसमानजन्मनां

मधग्रमस्थाएधि मध्यमस्थानोभव । यथासजाताअपि यज्वानोभवन्ति तथास्वादित्यभिप्रायः ।
किञ्च । राज्ञां हेअग्ने विहव्यःविविधमाह्वातव्यः दीदिहिदीप्यस्व इहयज्ञगृहे । यथाराजानोपि
यज्वानोभवेयुः तथास्त्वित्यभिप्रायः ॥ ५ ॥ अतिनिहः । अतिक्रम्यनिहन्तॄन् निपूर्वस्यहन्तेः उःप्र-
त्ययः । प्रथमैकवचनस्यस्थाने द्वितीयाबहुवचनंवाक्यसंबन्धात् । अतिस्निधः । स्नेधतिःकुत्सित-

मध्यमस्थाऽएधिराज्ञामग्नेविहव्योदीदिहीह ॥ ५ ॥ अतिनिहः॥
अतिनिहोऽअतिस्निधोत्यचित्तिमत्यरातिमग्ने ॥ विश्वाह्यग्ने
दुरितासहस्वाथास्मभ्यंसहवीराꣳरयिन्दाः ॥ ६ ॥ अनाधृष्योजात

कर्मा । अतिक्रम्यच कुत्सिताचरणान् । अत्यचित्तिम् अचित्तिरन्यमनस्कता । अतिक्रम्यचान्य-
मनस्कताम् अत्यरातिम् । अरातिरनुपजीव्योजनः तञ्चातिक्रम्य हेअग्ने । विश्वाह्यग्ने दुरिता-
निसहस्व । विश्वानिदुरितानि सहस्वअभिभव हिरनर्थकः अथानन्तरम् अस्मभ्यंसहवीरां सपु-
त्रांरयिन्धनं दाःदद्याः ॥ ६ ॥ अनाधृष्यः । यस्त्वमनाधृष्यः । अशक्यः खलीकर्तुम् । जातवेदाः

जातप्रज्ञानस्य अनिष्टृत: अनुपहिंसितस्य। स्तृणाति रेतद्रूपम्। विराट्च राजृदीप्तौ। विराजनशील: विराट्चेतत्त्वञ्च। तन्त्वांब्रवीमि हेअग्ने दीदिहिदीप्यस्व वृहत्कर्मणिवर्तमान: विश्वा: सर्वा आशादिश:। किञ्च प्रमुचन्मानुषीर्भिय:। विक्षिपन्मानुषानि भयानि जन्मजरामृत्युशोकदैन्यादीनि। शिवेभि: शिवै:शान्तै: अर्चिभि अद्यास्मिन्द्यवि। परिपाहि न:सर्वतोगो-

वेंदाः॥ अनाधृष्ष्योजातवेदाऽअनिष्टृतोव्विराडग्नेक्षत्रभृद्दीदिहीह॥ व्विश्वाऽआशाः प्रमुञ्चन्मानुषीर्भियःशिवेभिरद्यपरिपाहिनो व्वृधे॥ ७॥ बृहस्पतेसवितः॥ बृहस्पतेसवितर्बोधयैनꣳ सꣳशितञ्चित्सन्तरांꣳसꣳशिशाधि॥ व्वर्द्धयैनम्महतेसौभगायव्विश्वऽएनु

पायास्मान्। किमर्थम् वृधे वर्द्धनाय॥ ७॥ बृहस्पतेसवित:। हेबृहस्पते हेसवित:। बोधयकामेष्ववगतार्थंकुरु। एनंयजमानम् किञ्च। संशितञ्चित्। चिच्छब्दोप्यर्थे संशितव्रतमपियजमानम् सन्तरामतितराम् संशिशाधिशिक्षय। बर्द्धयच एनं यजमानम्महते सौभगायऐश्वर्याय।

विश्वेचदेवा एनंयजमानम् अनुमदन्तु । उत्साहयन्तु । बृहस्पतिशब्देनसवितृ शब्देनचात्राग्निरेवो-
च्यते । अथवा वाक्यद्वयम् एकेनबृहस्पतिरुक्तः अपरेणसविता ॥ ८ ॥ अमुत्रभूयात् । अमु-
त्रामुष्मिंल्लोकेयत् शरीरम्भूयात् । अध अथ यत्यमस्यसदनेच शरीरंभूयात् । तस्मात्च हेबृ-
हस्पते । अभिशस्तेः अभिशंसनाच्च अमुञ्चः । किञ्च प्रत्यौहतां प्रतिप्रेरयताम् अन्यत्रनयताम्
अश्विनौमृत्युम् अस्माद्यजमानात् कथंभूतावश्विनौ । देवानांभिषजौ हेअग्ने शचीभिः ।

मनुंमदन्तुदेवाः ॥ ८ ॥ अमुत्रभूयादधं ॥ अमुत्रभूयादधयद्यमस्यबृ
हंस्पतेऽअभिशंस्तेरमुंञ्चः ॥ प्रत्यौहतामश्विनामृत्युमंस्माद्देवानांम
ग्नेभिषजाशचीभिः ॥ ९ ॥ उद्वयम् ॥ उद्वयन्तमंसुस्परिस्वः पश्यं

अत्रापिबृहस्पतिशब्दआमन्त्रितोग्निशब्दस्य द्रष्टव्यः सामिधेनी प्रकरणस्याग्नेयत्वात् । ननु
बृहस्पतिशब्दो नैघण्टुको नचाग्निशब्देइति ताआग्नेय्यः प्राजापत्या यदग्निरपश्यत्
तेनाग्नेय्योयत्प्रजापतिर्ठं समैधत तेनप्रजापत्याइतिश्रुतेः प्रजापतेः सर्वदेवात्मकत्वात् । तस्मादेनं
प्रजापति ठं सन्तमग्निरित्याचक्षते इतिश्रुतेरदोषः ॥ ९ ॥ उद्वयमितिव्याख्यातम् ।

॥ १० ॥ उदूर्ध्वाअस्य । द्वादशआप्रियः प्रयाजदेवताः । उष्णिहः अष्टम्याद्येद्वेगायत्र्यौ । ताविषमा विषमाक्षरपादाङ्क त्यादिश्रुतेः । ताआग्नेय्यः प्राजापत्याः । यदग्निरपश्यत्तेनाग्नेय्यः यत्प्रजापति- माप्रीणात्तेनप्राजापत्या इतिचश्रुतिः । अग्निर्ऋषिः । प्रजापतिश्चाग्निरूपेण संस्तूयते ॥ अस्याग्नेः प्रजापतिरूपेण संस्तूयमानस्य ऊर्द्ध्वाःप्रगुणाः देवमार्गेण यायिन्यः समिधोभवन्ति । ऊर्द्ध्वाशुक्रा ऊर्द्ध्वा-

न्तु॒ऽउत्त॑रम् ॥ दे॒वन्दे॑व॒त्रासू॒र्य्य॒मग॑न्म॒ज्ज्योति॑रुत्त॒मम् ॥ १० ॥ [१०]

ऊ॒र्ध्वाऽअ॑स्य स॒मिधो॑ भवन्त्यू॒र्ध्वा शु॒क्रा शो॒चीᳪंष्य॒ग्नेः ॥ द्यु॒मत्त॑मा सु॒प्रती॑कस्य सू॒नोः ॥ ११ ॥ तनू॒नपा॒दसु॑रः ॥ तनू॒नपा॒दसु॑रो वि॒श्ववे॑

निच शुक्राशुक्रानि शुक्रानिशोचींष्यर्च्चींषिभवन्ति । द्युमत्तमा दीप्तमत्तमाच वीर्यवत्तमानिचे- त्यर्थः । सुप्रतिकस्य सुमुखस्ययजमानस्य । सूनोः । सत्त्वेनस्नुनयति । यद्वात्थंभूतोग्निस्त्वंव यंस्तुम इतिवाक्यशेषः ॥ ११ ॥ तनूनपात् । आज्यस्यअग्नेर्वा । यःतनूनाङ्गवांनपात् आजग्रा- भिप्रायमेतदुच्यते । अथवा योग्निःतनूनामपांनपात् पौत्रः । असुरःअसुमान् प्राणवान्

रोमत्वर्थीयः । यद्वा असुरःवसुरः धनवान् अस्मिन्पक्षेआदिलोपः । विश्ववेदाः । सर्वधनः सर्वज्ञोवा । देवोदानादिगुणयुक्तः । देवेष्वपिदेवः दीप्तिमान् । यद्वेद्दशःसःपथःयज्ञमार्गान्-अनक्तु । मध्वामधुस्वादुना घृतेन । इत्यन्नामप्रभूतं यच्चघृतमस्तु येनमार्गा अभ्यक्ताः स्युरित्य-भिप्रायः । ॥ १२ । मध्वायज्ञम् । हेअग्नेयस्त्वंमध्वामधुस्वादुना घृतेनयज्ञं नक्षसिव्याप्नोषि ।

वेदाद्देवोदेवेषुदेवः ॥ पथोऽअनक्तुमध्वांघृतेनं ॥ १२ ॥ मध्वायज्ञम्॥ मध्वायज्ञन्नक्षसेप्रीणानोनराशंसोऽअग्ने॥ सुकृद्देवःसविताविश्ववारः ॥ १३ ॥ * अच्छायम्॥ अच्छायमेति । शवसाघृतेनेडा

नक्षतिर्व्याप्तिकर्मा । कथंभूतः । प्रीणानःदेवान् । नराशंसश्च । नरैऋत्विग्भिय शंस्यतेस्तूयतेयः सतथोक्तः । सुकृच्चसाधुकृच्च । देवः सविता । विश्ववारः सर्वस्यवरणीय अभवसि । तंत्वांस्तु-मइतिशेषः ॥ १३ ॥ अच्छायम् । अच्छाभेराप्तुमितिशाकपूणिः अच्छएति अभ्येति । अग्निमध्वय-मध्वर्युः । शवसास्वकीयेन प्रस्थानबलेनयुक्तः । घृतेनच गृहीतेनइडानःस्तुवन् । वह्निर्वोढा ।

शु० य० सं० ५६६ उ० भा०

नमसाचानेन हविर्लक्षणेनाभ्युद्यतेन स्रुचःवाहुभ्यांगृहीत्वा । अध्वरेषु प्रयत्सुयज्ञेषुवर्त्तमानेषु ॥ १४ ॥ सयक्षत् । सएवाध्वर्युः यक्षत् । यजतु । अस्याग्नेः सम्बन्धिमहिमानं महाभाग्यम् । सद्मम् सएव-चमन्द्रामन्दीनीयान्यन्नानि यजतु । कथंभूतस्याग्नेः सुप्रयसः । प्रयइत्यन्ननाम शोभनानिप्रयां-स्यन्नानि हविर्लक्षणानि यस्यससुप्रयाः तस्यसुप्रयसः । अथकस्मादन्यदेवताः परित्यज्याग्नेर्महि-

नोध्वहुन्निर्न्नमसा ॥ अग्निॅंस्रुचोऽअध्वरेषुंप्प्रयत्सु ॥ १४ ॥ सयं क्षदस्यमहिमानमुग्नेःसऽईंम्मन्द्रासुंप्प्रयसः ॥ व्वसुश्चेतिंष्ठोव्वसुधातंमश्च ॥ १५ ॥ द्वारोंदेवीः ॥ द्वारोंदेवीरन्न्वंस्यव्विश्श्वेंव्व्रताददन्तेऽ

मानं यक्षदित्युच्यत इतिचेत् अतआह वसुश्चेतिष्ठो वसुधातमश्च । यतोसौ वसुवासयिता चेति-ष्ठोतिशयेनचेतयिता । कृताकृतगुणविशेषः वसुनांधानानां दातृतमश्च अतःअग्निस्तूयते ॥ १५ ॥ द्वारोदेवीः । अस्याग्नेः प्रथमस्य द्वारः देव्यः व्रताव्रतानिकर्माणि ददन्तेधारयंति । ताभ्यः अनु-पश्चात् । विश्वेविश्वेदेवाः देवशब्दलोपः । व्यवहितपदप्रायोवृंर्चः । कथंभूताद्वारः । उरुव्य-

अ० २७

शिवम् ५६६

चसः वहुव्यञ्चनाः । धाम्नास्थानेन ऋत्विक्संवन्धिनापत्यमानाः । पतऐश्वर्ये ऐश्वर्यंकुर्वाणाः । याद्रू-
त्यंभूता यज्ञगृहद्वारस्तावयंस्तुम इतिशेषः ॥ १६ ॥ तेअस्य । तेउषासानक्ता उषाश्च नक्ताचरात्रिः ।
अस्याग्नेः योनायोनौ आहवनीयाख्ये स्थितस्य योषणेभार्ये । दिव्येदिविभवे नकारोनर्थकः । तेइमं-
यज्ञम् अवतांसुगुप्तंकुरुताम् । अध्वरंसोमस्य नोस्माकम् सम्पादयतामितिशेषः ॥ १७ ॥ दैव्याहो-

अग्नेऽ॥ उरुव्व्यचंसोधाम्नापत्त्यंमानाऽ॥ १६॥ तेऽअंस्य॥ तेऽअस्ययो
षणेदिव्व्येनयोनांऽउषासानक्ता॥इमंय्यज्ञमंवतामद्ध्वरन्नंः॥१७॥
दैव्व्यांहोतारा ॥ ऽऊद्र्ध्वमंद्ध्वरन्नोऽग्नेर्जिह्वामभिगृंणीतम् ॥
कृणुतन्नंःस्विष्टिम् ॥ १८ ॥ तिस्रोदेवीऽ॥ तिस्रोदेवीर्बर्हिरेदंꣳस

तारा । अयञ्चाग्नि रसौचमधमः हेदैव्यौहोतारौ । ऊर्ध्वमध्वरंनः कुरुतम्देवयानयायिनं कुरुत-
मित्यभिप्रायः । अग्नेर्जिह्वामभिगृणीतम् अग्निमुखं साधुवर्णयतमित्यर्थः । कृणुत कुरुतञ्च नःअस्माकं
स्विष्टिम् । साधुयजनम् ॥१८॥ तिस्रोदेवीः । तिस्रः देव्यः । बर्हिः आइदंसदन्तु । आसदन्तु आसीदन्तु

इदंवर्हिः । कतमास्ताः । इडापृथिवीस्थाना सरस्वतीचमध्यस्थाना । मही स्तुअन्तीति । प्रत्येकन्तिसृ-भिरपियोज्यम् यद्वा एकमेववाक्यम् । तिस्रोदेव्यो वर्हिरिदमासदन्तु इडासरस्वती भारत्योमहत्यो गृणानाइन्ति ॥ १९ ॥ तन्नः । तत्रायस्पोषम् नःअस्मभ्यमस्मदर्थम् । तुरीपम् तूर्णमश्नुते । तूर्णं-व्याप्नोति । अद्भुतंमहत् अभूतपूर्वम् । पुरुक्षु पुरुषुवह्नुषु यत्क्षियति निवसति तत्पुरुक्षुत्वष्टादेवः

इन्द्रिडासरस्वतीभारती ॥ महीगृणाना ॥ १९ ॥ तन्नः ॥ तन्नस्तुरीपम द्भुतम्पुरुक्षुत्वष्टासुवीर्यम् ॥ रायस्पोषंविष्यतुनाभिमस्मे ॥ २० ॥ वनस्पतेवसृजाररागस्त्मनादेवेषु ॥ अग्निर्हव्यꣳशमितासूदया

सुवीर्यंसाधुवीर्यम् । रायस्पोषविशेषणान्येतानि चत्वारिपदानि । विष्यतु । सम्प्रतिरुपसृष्टोविमोचने विमुंचतु । नाभिमस्मे राष्ट्रमध्यम् प्रत्यस्मासु ॥ २० ॥ वनस्पतेव । हेवनस्पते अवसृज । स्रुङ्मुखतोर-वाचीनं निक्षिप हविंषिरराणः । यद्वा रादाने ददानः । त्मना मन्त्रेष्वाङ्ग्यादेरात्मनइत्याकारलोपः देवेषु विषयभूतेषु । कस्मात्वमेवमुच्यसेस्माभिरित्यतआह । यतःअग्निःशमिता शामित्रमिति

तद्धितलोपः। हव्यंहविर्जातम् सूदयाति। षूदक्षरणे संस्करोति। अतोहेवनस्पतेअवसृजेति- संबन्धः ॥ २१ ॥ अग्नेस्वाहा। हेजातवेदः स्वाहाकृणुहि स्वाहाकृतिंयज इन्द्राय। हव्यं- हविः प्रयच्छेतिशेषः। विश्वेदेवाश्च इदंहविः जुषन्तांसेवन्ताम् ॥ २२ ॥ अथैनंवायवे नियुत्वते शुक्लन्तूपरमालभत इत्यस्यपशोः पीवोअन्नारयिवृधः इत्याद्याः षट्याज्यानुवाक्यास्त्रिष्टुभो

ति ॥ २१ ॥ अग्निस्वाहा ॥ कृणुहिजातवेदऽइन्द्रायहव्यम् ॥ वि श्वेदेवाहविरिदञ्जुषन्ताम् ॥ २२ ॥ [१२] पीवोऽअन्नारयिवृधः ॥ सुमेधाऽश्वेतऽसिषक्तिनियुतामभिश्रीः ॥ तेवायवेसमनसोवित

वायव्याः। तत्रचप्राजापत्यः पशुपुरोडाश इतिपठ्यते। तस्यचापोहयत् द्वेप्राजापत्ये। यान् नियुतःअश्वान्। पीवोअन्नान् पीवःपुष्टमन्नं येषामितिपीवोअन्नान् रयिन्धनं येवर्द्धयन्ति तेर- यिवृधः सुमेधाः कल्याणप्रज्ञानोवायुः। श्वेतःवायोर्वर्णवचनम् शुक्लोहिवायुरितिश्रुतिः। सिष- क्तिसिचति। नियुतामभिश्रीः नियुतामभ्याश्रयणीयः अथयान्वायुः सिषक्ति तेनियुतोश्वा वाय-

वेर्थाय। समनसस्समनस्कास्सन्तः वितस्थुः तान्विश्वानि इत्पादपूरणे नरःमनुष्याऋत्विग्य- जमानाः स्वपत्यानि शोभनानामपत्यानां यानिकर्माणितानि चक्रुःकुर्वन्ति। एतदुक्तंभवति। वास्वश्वसंयोगे सतिसर्वमिदं यज्ञादिप्रवर्ततेइति॥ २३॥ रायेनु। रायेधनाय उदकलक्षणाय नुक्षिप्रम् यंवायु जज्ञतुःजनयितुः रोदसीद्यावापृथिव्यौ इमे। जनयोर्द्यावापृथिव्योः संयोगेपि- सतिवायुमन्तरेण जगद्धारणं नोपपद्यते इतिजनितवत्यौ द्यावापृथिव्यौ। यंवायुञ्च रायेधनायोदक-

स्त्थुर्व्विश्श्वेन्नरः स्वपत्त्यानिचक्क्रुः॥ २३॥ रायेनु॥ यञ्जज्ञतूरो दसीमेरायेदेवीधिषणाधातिदेवम्॥ अधंव्वायुन्नियुतः सश्चतस्वा उतश्श्वेतंव्वसुधितिन्निरेके॥ २४॥ आपोह॥ आपोहयद्बृहतीर्व्वि

लक्षणाय। देवीधिषणा धियंबुद्धिंकर्मवा सनोतिसम्भजते इतिधिषणावाक् मध्यस्थाना धाति- धारयति। देवंदानादिगुणयुक्तम्। अधअथेत्यर्थः समनन्तरमेव। तस्वायुंनियुतः अश्वाःसश्चतस- रन्तःसेवन्तः स्वाःस्वकीयाः। उतअपिच श्वेतंवायुं वसुधितिंवसुनोधनस्योदकलक्षणस्य धार- यितारम्। निरेके। जनैराकीर्णप्रदेशेवस्थितम् वायुम् नियुतः सश्चतस्वाइत्यनुवर्तते॥ २४॥

आपोह । आपोहवा इदमग्रेसलिलमेवासीदित्येतद्ब्राह्मणं निदानभूत मनयोःकण्डिकयोः । आपः । पुराकल्पद्योतको हइतिनिपातः । अत् । यदाप्बृहती बृहत्यःमहत्यः । विश्वंसर्वम् आत्मत्वेन । आयन्प्रापुः । गर्भंहिरण्यगर्भलक्षणन्दधानाः । जनयन्तीःजनयिष्यन्त्यः अग्निमग्निरूपंहिरण्यगर्भम् हिरण्यगर्भवचनोवा अग्निशब्दः । ततःगर्भात्संवत्सरोषितात् देवानांमध्येसमवर्तत समभवत्

आपोहयद्बृहतीर्विश्वमायुगर्भन्दधानाजनयन्तीरग्निम् ॥ ततोदेवानाᳬसमवर्त्ततासुरेकुःकस्मैदेवायहविषाविधेम ॥ २५ ॥ यश्चिदापो महिनापर्य्यपश्यद्दक्षन्दधानाजनयंतीर्य्यज्ञम् ॥ योदेवेष्वधिदेवऽए

असुःप्राणात्मकः । एकःदेवानां सहिलिङ्गशरीरःयद्रूत्य भूतोहिरण्यगर्भः । तस्मैकस्मै प्रजापतये-हविषाविधेम हविर्दद्मइतिविभक्तिव्यत्ययः ॥ २५ ॥ यश्चित् । योपिदेवः अन्तर्यामी । आपः अपइतिविभक्तिव्यत्ययः । महिनामहाभाग्येन । पर्यपश्यन् परितोदृष्टवान् । दक्षम्प्रजापतिं दधा-नाःजनयन्तीः यज्ञंसृष्टियज्ञम् । यश्चदेवेष्वपि अधिदेवः एकआसीत् तस्मैकस्मै प्रजापतयेहवि-

षाविधेम हविर्दद्मइतिविभक्तिव्यत्ययः ॥ २६ ॥ प्रयाहि प्रयासि याभिर्नियुद्भिः । नियुच्छब्द उभयलिङ्गः स्त्रियांपुंसिच । दाश्वांसंयजमानम् अच्छअच्छामेरामुमिति शाकपूणिः । हवींषि दत्तवन्तंयजमानमभि । हेवायो इष्टयेयागाय एषणायवा । दुरोणे यज्ञगृहेवर्तमानंयजमानम् । ताभिर्नियुद्भिरागत्य । नोरयिंसुभोजसं युवस्व । निपूर्वोयौतिर्दानार्थः । नियुवस्व देहि नोस्मभ्यं-

कु॒ऽआ॑सी॒त्कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ २६ ॥ *प्र॒या॒भिं॑ः ॥ प्र॒याभि॒र्यासि॑ दा॒श्वाᳬं स॒मच्छा॑ नि॒यु॒द्भि॑र्वायवि॒ष्टये॑ दु॒रो॒णे ॥ नि नो॑ र॒यिᳬं सु॒भोज॑सं युवस्व॒ नि वी॒रं॒ग॒व्य॒मश्व्यं॑ च॒ राध॑ः ॥ २७ ॥ आ॒न॑ः ॥ आनो॑ नि॒

रयिन्धनम् किम्भूतम् सुभोजसम् साधुभुज्यतइतिसुभोजातम् सुभोजसम् । किञ्च । वीरंपुत्रम् गव्यञ्च राधः अश्व्यंचराधोधनम् नियुवस्वइति ॥ २७ ॥ आनः । आउपयाहि नःअस्माकम् अध्वरंयज्ञम् । नियुद्भिःअश्वैः शतिनीभिः । शतानिविद्यन्तेयासु ताःशतिन्यः ताभिःशतिनीभिः सहस्रिणीभिश्च । एतदुक्तम्भवति । बहूनामपि वाहनानांवयन्तर्प्पयितुंक्षमाः एत्यच । हेवायो



* यद्यपिपदादौविद्यमानस्यअसंयुक्तस्ययकारस्यजकारोच्चारणं विहितमस्ति तथापिउपसर्गात्परस्यनभवतितदुक्तं याज्ञवल्क्यशिक्षायांउपसर्गपरोयस्तुपदादिरपिहृश्यते। ईषत्स्पृष्टोयथाविद्यात्पदच्छेदात्परम्भवेत् ।

अस्मिन्सवने तृतीयसवने मादयध्व । तृप्यस्व इदानीमृत्विजः पादेनाह । यूयंपात पालयत स्वस्तिभिः अविनाशैः सदानःअस्मान् ॥२८॥ नियुत्वान्वायो । षट्वायव्यायाज्यानुवाक्याः । तत्रवायोशुक्रोऽयंत्यनुष्टुप् । एकयाचेतित्रिष्टुप् । गायत्र्योन्यास्ततस्तः । तृतीयःपादः प्रथमंव्याख्यायते । यतोगन्तागमनशीलः त्वनन्तोयम् गन्ताउदात्तः तद्धर्मावातत्साधुकारीवा एतेहित्वनोर्थाः । असि ।

युञ्जिँ÷ शुतिनीभिरदुध्वरꣳसहुस्रिणीभिरुपंयाहियुज्ञम् ॥ वायो ऽअुस्मिन्त्सवंनेमादयस्वयूयम्पातस्वस्तिभिःꣳ सदानःꣳ ॥ २८ ॥ नियुत्वान्न्वायो ॥ नियुत्वान्न्वायुवागंह्यस्युयꣳशुक्रोऽअयामिते ॥ गन्तासि सुन्वतोगृहम् ॥ २९ ॥ वायोशुक्रः ॥ वायोशुक्रोऽअयामितेमदुध्वो

सुन्वतःअभिषवंकुर्वतः यजमानस्यगृहान्प्रति । अतोब्रवीमि । नियुत्वान् नियुत्गुणकोभूत्वा हेवायो आगहिआगच्छ । अयञ्चशुक्रो ग्रहःअयामि आगच्छत्वितिलकारपुरुषव्यत्ययः तेत्वांप्रति । त्वमेवहि शुक्रादीनांग्रहाणां स्थानमित्यभिप्रायः ॥ २९ ॥ वायोशुक्रः हेवायो शुक्रोग्रहःअयामिस्वयमेवागच्छतु

तेत्वांप्रतिकथंभूतः। मह्रोऽग्रम् रसस्यसारभूतःदिविएषणेषुयज्ञेष्वित्यर्थः। त्वंचआयाहिसोमपी-तयेसोमपानाय। यतःस्पार्हःस्पृहणीयःहेदेव। नियुत्वतानियुच्छब्दवतामन्त्रेणस्तूयसे ॥ ३० ॥ वायुरग्रेगाः। वायुःअग्रेगमनशीलः यज्ञप्रीः यज्ञेनप्रीयतइतियज्ञप्रीः। साकङ्गच्छगच्छति मनसा-यज्ञम्। योह्यादरेण विस्मितआगच्छति समनसासहागतोभवति। कथंभूतः। शिवःशान्तः

ऽअग्ग्रुन्द्दिविंष्टिष्टषु॥ आयांहिसोमंपीतयेस्प्पार्हौदेवनियुत्त्वंता।३०। व्वायुरंग्रेगाः॥ व्वायुरंग्रेगायंज्ञप्प्रीः साकङ्गन्मनंसायज्ञम्॥ शिवोनियुद्भिः शिवाभिः॥ ३१॥ व्वायोये॥ तेसहुस्त्रिणोरथांसुस्तेभिरागंहि॥ नियुत्वान्त्सोमंपीतये॥ ३२॥ एकंयाच॥ दुशभिंश्च

नियुद्भिःअश्वैः शिवाभिरेव ॥ ३१ ॥ वायोये हेवायो येतेतव। सहस्रिणः सहस्रसंख्याभिर्युक्ताः रथासः रथाएवरथासः तेभिः तैः आगहिआगच्छ नियुत्त्वान्भूत्त्वा सोमपीतयेसोमपानाय ॥ ३२ ॥ एकयाच। एकस्यावायव्याया सूचिपात्राणि विमुच्यन्ते। हेवायो स्वभूते। स्वकीयाविभूति-

यस्य जगत्सर्वंसस्वभूतिः । यानिपात्राणि वहसिइष्टये देवयज्यायै । एकयाच नियुतादशभिश्च नियुद्भिः द्वाभ्याञ्चनियुद्भ्याम् विंशतीच । विंशतिशब्दस्यपूर्वसवर्णदीर्घआदेशः । विंशत्याच नि- युद्भिः । तिसृभिश्च त्रिंशताच नियुद्भिरेव । तातानि पात्राणि इहविमुञ्च ॥ ३३ ॥ तव- वायो । हेवायो ऋतस्पते । सत्योदक यज्ञवचनऋतशब्दः । सत्यपते । त्वष्टुरादित्यस्य जामातः ।

स्वभूतेद्वाभ्यामिष्टयेविंशतीच ॥ तिसृभिश्चवहसेत्रिंशता चनियुद्भिर्वायविहताविमुञ्च ॥ ३३ ॥ तववायो ॥ तववायवृत स्पतेत्वष्टुर्जामातरद्भुत ॥ अवांस्यावृणीमहे ॥ ३४ ॥ [ १२ ] अभित्वा ॥ शूरनोनुमोदुग्धाइवधेनवः ॥ ईशानमस्यजगतःस्वर्दृश

सद्यादिवादप आदायगर्भयति ततोविप्रुषोजायन्ते अतोवायुर्जामातात्वष्टुः अद्भुत । अभूतपूर्व । तवसंवंधीनि अवांसिअन्नानि आवृणीमहे आयाचामः ॥ ३४ ॥ अभित्वा रथन्तरं दक्षिणे पक्ष इतिश्रुतिः । नान्योध्वर्युर्गायेदितियतोऽत एषांसाद्यांयोनयः पठ्यन्ते । तवेन्द्र प्रगा-

योरथन्तरस्ययोनिः । तत्रप्रथमाबृहती द्वितीयासतोबृहती । आभित्वाशूरनोनुमः । आभिमुख्येन त्वांहेशूर नोनुमः नमामः । कथमिव अदुग्धाइवधेनवः । यथावत्सान्प्रति अदुग्धाधेनवःनमन्ति एवंत्वांप्रतिऋत्विग्भिः स्तोत्रैः शस्त्रैश्चाभिमुख्येननमामः । यद्वा णुस्तुतौ । अयमत्रधातुःशब्दसारूप्यात् अभिनोनुमः अभिष्टुमः त्वांकृतकृत्याःसन्तः स्तुतस्तोत्राः कृतशास्त्राउद्यत हविष्काः । कथमिव । अदुग्धाइवधेनवः । यथाअदुग्ध अकृतकृत्याधेनवः वत्समभिष्टुवुः एवम् । कथंभूतं त्वामभिनोनुमः

ईशानमिन्द्रतस्थुषः ॥ ३५ ॥ नत्वावान् ॥ नत्वावाँ२ ॥ ऽअन्योदिव्योनपार्थिवोनजातोनजनिष्यते ॥ अश्वायन्तोमघवन्निन्द्रवाजि

ईशानमस्यजगतः । जङ्गमस्य स्वर्दृशम् स्वःपश्यतीति स्वर्दृक् तंस्वर्दृशम् । यद्वास्वरादित्यः तद्वत् योदृश्यतेसस्वर्दृक्तंस्वर्दृशम् । ईशानंच हेइन्द्रतस्थुषः स्थितवतः स्थावरस्येत्यर्थः ॥ ३५ ॥ नत्वावान् । येनत्वावान् त्वत्सदृशः अन्यः दिव्यःदिविभवः नचपार्थिवःअस्तीतिशेषः । नचजातः नचजनिष्यतेउत्पत्स्यति अतःअश्वायन्तः अश्वान्कामयमानः हेमघवन् धनवन्निन्द्र । वाजिनः ।

केतवे पेशः सुवर्णं रूपं वा मर्याः मर्यायेति विभक्तिव्यत्ययः । मर्याय मनुष्याय अपेशसे न विद्यते पेशः यस्य तस्मै अविद्यमानसुवर्णाय अविद्यमानरूपाय वा पेशः कुर्वन् । समुषद्भिरजायथाः हे अग्ने उषद्भिः । उषदाहैः अग्निहोत्रादीनि कर्माणि कुर्वद्भिः । जायमानः सन् जन्मना जातेर्वा । वसतेर्वाकृतसंप्रसारणस्यैतद्रूपम् उषद्भिः अग्निं प्रति निवसद्भिः जायमानः सन् समजायथाः उत्पद्यसे ॥ ३७ ॥ जीमूतस्येव । वर्म स्तूयते जीमूतो मेघः तस्येव भवति प्रतीकम् अनीकम्

केतुङ्कृण्वन्नकेतवे पेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥ ३७ ॥

जीमूतस्येवभवति ॥ जीमूतस्येवभवतिप्रतीकंयद्वर्म्मीयातिसम-
दामुपस्थे ॥ अनाविद्धयातन्वाजयत्वँसत्वावर्म्मणोमहिमापि-

मुखमितिपर्यायः । यथा मेघस्य मुखं विद्युत्स्फुरितस्तनयित्नुधारानिकरैरसह्यं भवन्तः सरणैः एवं हस्त्यश्वपदातिमुखं निशितास्त्रगम्भीरतूर्यनिनादशरधाराभिरसह्यं भवति एवं कस्मिन्काले कस्य-
वेत्यत आह । यद्वर्मी यदा वर्मास्य विद्यत इति वर्मी । याति गच्छति समदाम । संमादयन्ति सहवा मादयन्ते अस्मिन्योद्धार इति समदः समदशब्दः संग्रामवचनः । समदां संग्रामाणाम् उपस्थे उत्सङ्गे यत एवमतो ब्रवीमि ।

दिव्येदिविभवे योषणेप्रीतिमत्यौ स्त्रीरूपिण्यौवा । बृहतीबृहत्यौ महत्यौ । सुरुक्मेसुरोचने । अधिश्रि-
यंशुक्रपिशंदधाने । शुक्रपिशंशुक्लरूपंश्रियन् अधिदधानेस्थापयन्त्यौ ॥ ३१ ॥ दैव्याहोतारा ।
यौदैव्यौहोतारौ अयंचाग्निरसौचमध्यमः प्रथमाआद्यौसुवाचा । सुवाचौनहि तौपाठंविनाश-
यतः । मिमाना । निर्मिमाणौ यज्ञम्मनुषोमनुष्यस्य यजध्यैयजनाय प्रचोदयन्तौच विदथे-

धाने ॥ ३१ ॥ दैव्याहोतारा ॥ प्प्रथमासुवाचामिमानायुज्ञम्मनुं
षोयजध्यै ॥ प्रचोदयंन्ताविदथेषुकारूप्राचीनञ्ज्योतिः प्प्रदिशादि
शन्ता ॥ ३२ ॥ आनः ॥ आनोयुज्ञम्भारतीतूयमेत्विडामनुष्ष्वदि
हचेतयंन्ती ॥ तुस्रोदेवीर्बुर्हिरेदंस्स्योनंसरस्वतीस्वपसः सद

षुयज्ञेषु अन्यानृत्विजः स्वयंचकारूकर्तारौ । प्राचीनंपूर्वस्यान्दिशिभवंआहवनीयाख्यंज्योतिः यष्ट-
व्यमितिप्रदिशाअभिनयेनश्रुतिवाक्येनवा । दिशन्ता । कथयन्तौ । आशास्तावस्मदीयंप्रसाधयेता-
मितिशेषः ॥ ३२ ॥ आनोयज्ञम् । आङुपसर्गः सदन्त्वित्याख्यातेनसम्बध्यते । आएतुआगच्छ-
तुनः अस्माकंयज्ञम् भारतीभरतआदित्यस्तस्यभारती । तूयक्षिप्रम् इडाचआगच्छतु । मनुष्वत्

मनुष्यवत् इहचेतयन्तीपरिदृष्टकारिणी । सरस्वतीच । यइत्थंभूतास्तिस्रोदेव्यः ताःवर्हिः आङ्-
उपसर्गः सदन्त्वित्याख्याते नसंवध्यते आसदन्तुआसीदन्तु इदंस्योनंसुखरूपम् स्वपसः अपइतिकर्म-
नाम । साधुकर्माणः ॥ ६६ ॥ यइमे । यस्त्वष्टाइमेद्यावापृथिव्योजनित्री जनयित्रीसर्वभूता
नाम् । रूपैः अपिंशत्सुचित्रितेअकरोत् । भुवनानिविश्वा । भूतजातानिचसर्वाणिरूपैरपिं-

न्तु ॥ ३३ ॥ यऽइमे ॥ द्यावापृथिवीजनित्रीरूपैरपिंꣳशद्भुवनानि

विश्वा ॥ तमद्यहोतरिषितोयजीयान्देवन्त्वष्टारमिहयक्षिवि

द्वान् ॥ ३४ ॥ उपावसृजत्मन्या ॥ समञ्जन्देवानाम्पाथऽऋतु

थाहवीꣳषि ॥ वनस्पतिः शमितादेवोऽअग्निः स्वदन्तुह

व्यत् । आवृतान्यकरोत् तम् अद्यास्मिन्नहनि । हेहोतः इषितः प्रेषितइतिवाअधीष्टइतिवा ।
यजीयान्यष्टृतरः । देवंदानादिगुणयुक्तम् त्वष्टारम् इहयज्ञेयक्षियज । विद्वान्स्वमधिकारंजा-
नानः ॥ ३४ ॥ उपावसृज । द्वितीयोऽर्द्धर्चः प्रथमंव्याख्यायते सामर्थ्यात् । यजमानआह । वन-
स्पतिः यूपःशमितादेवः अग्निःशामित्रः स्वदन्तु मृष्टीकुर्वन्तु । हव्यंहविः मधुनामधुरसेनघृतेन त्व-

अनाविद्धयातन्वाजयत्वम् हेवर्मिन् अनाविद्धयाअक्षतया अरिष्टयातन्वात्वंजयेम। किञ्च सत्वावर्म्मणोमहिमा पिपर्त्तु पालयतु ॥ ३८ ॥ धन्वनागाः। धनुःस्तूयतेत्रिष्टुभा धन्वनाधनुषागाःजयेम। धनुषाचआजिंमार्गंजयेम। धनुषाचतीव्राःपटवः उद्गूर्णायुधाःसमदः संग्रामाञ्जयेम। धनुश्शत्रोः अपकामंकृणोति अपनयतिकामम्। कर्तृत्वविवक्षाधनुषः। धनुषाचसर्वाः प्रदिशःजयेम ॥ ३९॥

पर्त्तु ॥ ३८ ॥ धन्वनागाः ॥ धन्वनागाधन्वनाजिञ्जयेमध न्वनातीव्राः समदोजयेम ॥ धनुः शत्रोरपकामङ्कृणोतिध न्वनासर्वाः प्रदिशोजयेम ॥ ३९ ॥ वक्ष्यन्तीवेदागनीगन्तिक र्णम्प्रियं सखायम्परिषस्वजाना ॥ योषेवशिङ्क्तेवितताधिध

वक्ष्यन्तीवेत्। ज्याअभिधेया। त्रिष्टुप्। याज्यावक्ष्यन्तीव वक्तुमुत्सुकेव। योषित् इच्छब्दः पादपूरणार्थः। आगनीगन्ति आगच्छन्ति अत्यर्थमागच्छतिवा कर्णंधानुष्कस्य मूलम् याचप्रियंसखायमिषुम् परिषस्वजानाआलिङ्गयन्ती। योषेवशिङ्क्ते। शिजिअव्यक्ते शब्दे। यथामुग्धायोषित्कामुकरञ्जनार्थमव्यक्तं कूजितङ्करोति एवमियमव्यक्तंशब्दंकरोति। प्रसारिताच अधिधन्व-

रिधनुषिनिबद्धा । सेयञ्ज्यासमनेसंग्रामे पारयन्ती विजयंकुर्वती संग्रामान् तारयन्ती स्तूयतेऽस्मा-
भिरितिशेषः ॥ ४० ॥ तेआचरन्ती । धनुषः कोटीस्तूयेते । त्रिष्टुप् । येइमे आर्त्नी आर्त्न्यौ
धनुषः कोटी । समनाइवसमनेइतिवचनव्यत्ययः । समानभर्तृगतमनस्के योषेइव यथासमान-
भर्तृगतमनस्केयोषेपतिमागच्छन्त्यौ तेआचरन्ती आगच्छन्त्यौधानुष्कम् । मातेवपुत्रं विभृतामुपस्थे ।
यथामाता उपस्थेउत्सङ्गे पुत्रं धारयति एवंविभृतांधारयतांशरम् । अपशत्रून् विध्यताम व्यध-

न्न्वज्याऽइयᳫंसमनेपारयन्ती ॥ ४० ॥ तेऽआचरन्ती ॥ तेऽआ
चरन्तीसमनेवयोषामातेवपुत्रम्बिभृतामुपस्थे ॥ अपशत्रून्न्वि
ध्यताᳫंसंविदानेऽआर्त्नीऽइमेविष्फुरन्तीऽअमित्रान् ॥ ४१ ॥
बह्वीनाम्पिता ॥ बहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य ॥ इषु

ताडने । अपविध्यताच्छत्रून् संविदाने । सुखमनुभवन्त्यौ । विष्फुरन्तीअमित्रान् । अमि-
त्रान्शत्रून्विष्फुरन्त्यौ ॥ ४१ ॥ बह्वीनां पिताम् इषुधिरभिधेयः । त्रिष्टुप् । यः बह्वीनामि-
षूणां पितापालयिता । तेनसहिताः पालयन्तेसहिताः सन्निदधाति । यस्यचास्यबह्वः इषुकला-
पः सुतः पुत्रस्थानीयः । सहितेनइषुकलापेनवाद्यते । बह्वातदर्थं हितंकुर्वन्ति । चिश्चाकृणोति ।

शब्दानुकरणमेतत् इषोनिष्कृण्वमाणाः चिश्चेत्येवंशब्दंकरोति । समनावगत्य । समनासंग्रामान् अवगत्यज्ञात्वा । सङ्गाइषुधिः संकाः संकासंघन्ते अस्मिन्योधा इतिसंकाः संकीर्यंतेअस्मिन्नरय-इतिसंकाः यद्वा संकटंवा । पृतनाश्चसर्वाः पृतनाः स्पर्द्धनीयतमाः संग्रामभूमीः सर्वाः । पृष्ठे निनद्धः धानु-ष्करपृष्ठे बद्धः प्रसूतः धानुष्केणाभ्यनुज्ञातः सन्जयति अत्रइषुधेः कर्तृत्वम् । विग्रहात्का-रकाणिभवन्तीतिवैयाकरणाः ॥ ४२ ॥ रथेतिष्ठन् । जगत्याअर्द्धेनसारथिः स्तूयतेअर्द्धेनरश्मयः ।

धिः सङ्काः पृतनाश्चसर्वाः पृष्ठेनिनद्धोजयतिप्रसूतः ॥ ४२ ॥ रथेतिष्ठन् ॥ रथेतिष्ठन्नयतिवाजिनः पुरोयत्रयत्रकामयतेसुषारथिः ॥ अभीशूनाम्महिमानम्पनायतमनः पश्चादनुयच्छन्तिरश्मयः ॥ ४३ ॥ तीव्रान्घोषान् ॥ तीव्रान्घोषान्कृण्वतेवृ

सुसारथिः रथेतिष्ठन्नयतिवाजिनः । प्रापयत्यश्वान् पुरः पुरतोवस्थितान् । यत्रयत्रकाम-यते । तंवयंस्तुमइतिशेषः । अभीशूनाम्महाप्रग्रहाणां मानंमहत्त्वंपनायतपूजयत हेजनाः । येमनः अश्वसंवर्धिचित्तम् पश्चात्सन्तः अनुयच्छन्तअनुगम्यगृह्णन्ति रश्मयः यन्तारः ॥ ४३ ॥ तीव्रा-न्घोषान् । अश्वास्तुयन्तेत्रिष्टुभा । तीव्रान् जयजयेत्युग्रान्घोषान्शब्दान्कृण्वतेकुर्वन्ति ।

वृषपाणयः । हस्ताअश्वाः पाणीयैर्गांसं गृहीतप्रभृतीनां योक्तृणांतितथोक्ताः । युक्ताः श्वसन्तः अश्वाः रथेभिः रथैः । सहवाजयन्तः पूजतन्तः रथिनः ॥ तीव्रानेवघोषान् क्रेषितादीन्कृण्वन्ते । अवक्रामन्तः प्रपदैः खुरैः अमित्रान् शत्रून् क्षिणान् तिक्षिण्वन्तिहिंसन्ति । अनपव्ययन्तः । व्ययत्त्ये । अपपूर्वाद्व्या च्छृतप्रत्ययः । अपव्ययन्तः नश्यन्तः नअपव्ययान्तोनपव्ययन्तः ननश्यन्तः । अपरित्यजन्तोवास्वामिनम् ॥ ४४ ॥ रथवाहणम् । रथस्तुतिः त्रिष्टुप् । यस्यास्त्रनसः रथवाहणंरथ-

वृषपाणयोश्वारथेभिः सहवाजयन्तः ॥ अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूँ ॥ रनपव्ययन्तः ॥ ४४ ॥ रथवाहणं हविः ॥ रथवाहणं हविरस्यनामयत्रायुधन्निहितमस्यवर्म्म ॥ तत्रारथमुपशग्मं सदेमविश्वाहावयं सुमनस्यमानाः ॥ ४५ ॥

वोढव्यतिनाम । हविरितिनाम्नोर्द्धलोपः । हविर्द्धानमितिचद्वितीयंनाम । विमुच्यसयंटकांरथवाहणं करोतिअनस्तत्क्षमैतिकात्या यनः । तस्मादनसएवपौरोडाशेषु यजुर्ष्विस्मृतिः । यत्रयस्मिन् आयुधंनिहितंस्थापितम् : अस्ययोद्धुः वर्मचसंनहनम् । तत्रानसिरथम् शग्मंसुखम् उपसदेम उपसादयाम विश्वाहासर्वदावयम् सुमनस्यमानाः अनुकूलचित्ताः ॥ ४५ ॥ स्वादुसंसदः ।

रथगोप्तान् स्तौतित्रिष्टुप । स्वादुसुखकरं संसदःसंसदनंयेषान्ते स्वादुसंसदः रथगोप्तारःपितरः पातारः ॥ वयोधाः अन्नस्यायुषोवाधारयितारः । कृच्छ्रेश्रितः क्लेशाश्रयिणः शक्तीवन्तः बलवन्तआयुधवन्तोवा । गभीराः गंभीरप्रज्ञानावागंभीरबलावा । चित्रसेनाः विचित्रसेनाः इषुबलाः इषुषुत्रिक्षिपतोबलंयेषान्तेतथोक्ताः । अस्मद्धाः अमृदवः उग्रशासनःसतोवीराः । मतः विद्य

स्वादुषꣳसदः पितरः ॥ स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः श
क्तीवन्तो गभीराः ॥ चित्रसेनाऽइषुबलाऽअमृध्राः सतोवीराऽउरवो
व्रातसाहाः ॥ ४६ ॥ ब्राह्मणासः पितरः ॥ सोम्यासः शिवेनो द्यावा

सानस्यबलस्यविविधमीरयितारोवा । पृथुजवनोरक्षावा । उरुमनसोवा व्रातसाहाः । व्राताः गणास्तेषामभिभवितारः । यद्वृथंभूताः पूर्वोक्ताःस्तस्माकंरथगोप्तारोभवन्त्वितिशेषः ॥ ४६ ॥ ब्राह्मणासः । जगतीलिङ्गोक्तदेवता । ऋताहृधइत्यादिः प्रत्यक्षभूतोमंत्रः ब्राह्मणास इत्यादिः परोक्षकृत । अतएवंव्याख्यायते । हेऋताहृधः सत्यवृद्धोवा यज्ञवृद्धोवा । देवाइत्यध्याहारः सामर्थ्यात्

रच । रक्षतइतिवचनव्यत्ययः । माकिः । माचनास्मनः अस्माकम् । अघशंसः अघानिपापानियः शंसतिप्रकाशयतिसाघशंस ईशतईष्टेइतिवचनव्यत्ययः । भवत्प्रसादाच्च । ब्राह्मणासः ब्राह्मणाः पितरःसोम्यासःसोमसम्पादिनः । पान्त्वित्यत्रान्वयः शिवेकल्याणकारिण्यौ द्यावापृथिवीच अनेहसाअनुपहिंसिन्यौ अनपराधिन्यौवापाताम् । पूषाचनःअस्मान् पातु दुरितात्अशुभात् ॥ ४७ ॥

पृथिवीऽअनेहसा ॥ पूषानःपातुदुरिताहृतावृधोरक्षामाकिर्नोऽअघशंसऽईशत ॥४७॥ सुपर्णंवस्ते ॥ मृगोऽअस्यादन्तोगोभिःसन्नद्धापततिप्रसूता ॥ *यत्रानरःसञ्चविचद्रवन्तितत्रास्मभ्यमिषवःशर्म

सुपर्णं वस्ते । द्वाभ्यांत्रिष्टुबनुष्टुभ्यामिषुंस्तौति । यासुपर्णंवस्तेसुपर्णः पक्षीतद्विकारःसौपर्णमितिभवति । तत्कृत्स्नवन्निगमः राजानभिदेत्य । मृगोअस्यादन्तः यस्यास्तस्या इषोःमृगोदन्तः फलम् मृगयतेर्कर्मगः । सहिविध्यम्मृगयते याच गोभिःसन्नद्धा । गोविकारैःश्लेष्मस्नायुभिःसंनद्धा । पततिशत्रुबलंप्रति । प्रसूताप्रेरिता धनुष्मता सादूषुःयत्रनरःसञ्चविचद्रवन्ति । सङ्गच्छन्तिच । विगच्छन्तिचतत्र

स्मभयन्नूत्रः द्युवितिसन्नतिः । शर्मशरणम यंसन् यच्छतिजितिसन्नतिः ॥ ४८ ॥ ऋजीतेपरि ।
हेऋजीते ऋजुगामिनि । परिवृङ्ग्धि नःपरिवर्जयास्मान् । अश्माभवतुनस्तनूः अश्ममयीचभ-
वतुनःअस्माकंतनूःशरीरम् । सोमश्चअधिब्रवीतु आधिक्येनवक्तु नोस्माञ्जीवनाय । अदितिश्चशर्म-
शरणम् यच्छतुददातु ॥ ४९ । आजङ्घन्ति । कशास्तुतिः । अनुष्टुप् येगाश्वानाम् अजङ्घन्ति-

यंसन् ॥ ४८ ॥ ऋजीतेपरि ॥ वृङ्धिनोश्माभवतुनस्तनूः ॥ सो
मोऽअधिब्रवीतुनोदितिःशर्मयच्छतु ॥ ४९ ॥ आजङ्घन्ति ॥ आजङ्घ
न्तिसान्वेषाञ्जघनाँ२ ॥ ऽउपजिघ्नते ॥ अश्वाजनिप्प्रचेतसोश्वा
न्त्समत्सुचोदय ॥ ५० ॥ अहिरिवभोगैःपर्य्येतिबाहुञ्ज्यायाहेतिम्परि

अश्वारोहाःसानुसानिमांसोपचितान्यङ्गानि । येषामेषाञ्च जघनान्जघनानि उपजिघ्नति उप-
निघ्नन्ति । अश्वाजनि अश्वास्तुनयतीत्यश्वाजनी तस्याःसंबोधनंहेअश्वाजनि । प्रचेतसः
परिहृष्टकारिणः प्रकृष्टज्ञानान्वा । अश्वान् समत्सुसंग्रामेषु चोदयप्रेरय ॥ ५० ॥
अहिरिव । हस्तघ्नः स्तूयते त्रिष्टुप् । हस्तेएवस्थितोहन्तियः सहस्तघ्नः खेटकः प्रकोष्टादि-

चापात्वा । यः हस्तघ्नः अहिरिवसर्पद्भिर्भोगैः । शरीरावयवैः । पर्येतिपरिवेष्टयतिबाहुम् । ज्यायाघातंपरिबाधमानः । ज्यामायुधात्परित्रायमाणः । सहस्तघ्नः विश्वाविश्वानिसर्वाणि वयुनानि विद्वान्प्रजानन् परिदृष्टकारीवा । पुमान्शूरोक्लीबोवा । पुमांसमक्लीवं परिपातुविश्वतः सर्वतः ॥ ५१ ॥ वनस्पतेवीड्वङ्गः । रथदुन्दुभिदेवत्याद्वचौत्रिष्टुभौ । ऐन्द्रावान्त्योर्द्वर्चः । देवबाधमानः ॥

# हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाᳬं सम्परि पातु विश्वतः ॥५१॥ वनस्पते वीड्वङ्गः ॥ वनस्पते वीड्वङ्गो हि भूया ऽअस्मत्सखा प्रतरणः सुवीरः ॥ गोभिः सन्नद्धो ऽअसि वीडयस्वास्थाता ते जयतु जेत्वानि ॥ ५२॥ दिवः पृथिव्याः ॥ दिवः पृथिव्याः

नस्पतेवानस्पत्यरथ । कत्ववन्निगमः । वीड्वंगोहिभूयाः । वीडुशब्दोदृढवचनः । दृढाङ्गोभव । अस्मत्सखासन् । प्रतरणः प्रतरन्त्यनेनसंग्रामानितिप्रतरणः सुवीरः साधुवीरः । यतस्त्वम् गोभिः । श्लेष्मचर्मभिः सन्नद्धोसि अतस्त्वांब्रवीमि । वीडयस्वसंस्तंभयस्वात्मानम् आस्थाताते । संस्थाताच तेतवजयतु जेत्वानिजेतव्यानि ॥ ५२ ॥ दिवः पृथिव्याः दिवः द्युलोकात् यत्

ओजः परिसर्वतः उद्भृतम् । उद्भृतम । यच्चपृथिव्याः पृथिवीलोकात्परिउद्भृतम् । यच्चवनस्पतिभ्यः । वनस्पतिभ्यकाशात् परिसर्वतः आभृतम आहृतम् सहः बलम् यच्चअपांसंवम्भि ओज्मानम् ओजः परिमाणम । तदेतच्चतुष्टयं रथभावमुपनीतम् । परिगोभिरावृतम् । परिसमन्तात् गोभिः गोविकारैः स्नायुश्लेष्मचर्मभिः आवृतमुपनिबद्धम् इन्द्रस्यवज्रम । इन्द्रोह्ययद्वव-

पृथिव्योजु उद्भृतंवनस्पतिभ्युःपर्याभृतुᳪसहंः ॥ अपामोज्मानम्परिगोभिरावृतमिन्द्रस्यवज्रंᳪहविषारथंयज ॥५३॥ इन्द्रस्यवज्रंः ॥ इन्द्रस्यवज्रोमरुतामनीकंमित्रस्यगर्भोवरुणस्यनाभिंः ॥ सेमान्नो

त्राय वज्रं प्रजहारेत्युपक्रम्य रथस्तृतीयंचेत्यभिधाय । रथेनचशरेणच राजन्यबन्धवइतिश्रुतिः । तदभिप्रायमेत । हविषातमीदृशं रथंयज हेअध्वर्यो ॥ ५३ ॥ इन्द्रस्यवज्रः । यस्त्वम् इन्द्रस्यवज्रः असिमरुतांच अनीकंमुखमसि ॥ मित्रस्यचगर्भोसि । वरुणस्यचनाभिरसि । सः त्वमद्भसाम् नः अस्माकम् हव्यदातिंहविषोदानम् जुषाणः सेवमानः । हेदेवरथ प्रतिहव्याग्रभाय प्रतिगृभाय

प्रतिगृह्णाण हव्याहवींषि ॥ ५४ ॥ उपश्वासय । उपशब्दयपृथिवीम् उतद्याम् अपिचउपशब्दयद्याम् । पुरुत्रातेवहुधाच तेतव एकस्वसत: घोषंमनुतांमन्यन्ताम् । विष्ठितम्विविधंस्थितंस्थावरम् जगत्जङ्गमञ्च । यस्त्वमेत्र्याभिः प्रार्थितः सत्वम् हेदुन्दुभे । सजूः समानप्रीतिः सन् इन्द्रेणसह देवैश्च । दूराद्दूरतरम् अपसेधअपगमयशत्रून् ॥ ५५ ॥ आक्रन्दय । हेदुन्दुभेआ-

हव्यदातिजुषाणोदेवंरथप्रतिंहव्यागृभाय ॥ ५४ ॥ उपंश्वासय ॥ पृथिवीमुतद्याम्पुरुत्राते मनुतांविष्ठितञ्जगत् ॥ सदुंन्दुभेसुजूरिन्द्रेणदेवैर्दूराद्दवीयोऽअपंसेधशत्रूंन् ॥ ५५ ॥ आक्रन्दय ॥ आक्र-

क्रन्दयदीनान् शब्दान्कारय अहोपलायद्वंपितामेहतोभ्रातामेहतइति । वलंशत्रुसेनाम् ओजोनआधाः ओजस्तेजः नः अस्माकम् आधाः आधेहि । क्विञ्चनिष्टनिहि । निश्चितंशब्दंजयाय कुरु । दुरितावाधमानः दुरितानिअपगमयन् । किंच । अपप्रोथ प्रोथतिर्नाशनार्थः । अपक्रत्यापक्रत्य प्रोथनाशय । दुच्छुनाः दुष्टशुनः इवयाः सेनःसुखवचनोवाशुनाशब्दः दुःसुखाः

विसर्जनीयस्यदत्वम् । दूतः सेनायाः । यतस्त्वम् इन्द्रस्यमुष्टिरसिअतोब्रवीमि । वीडयस्वदृ-
ढीकुरुआत्मानम् ॥ ५६ ॥ आमूः । ऐन्द्री आअज । अजगतिक्षेपणयोः । आक्षिप । अमूः शत्रुसेनाः ।
प्रत्यावर्तयइमा । प्रत्यावर्तयजितंजितमिति । इमाः अस्मदीयसेनाः किञ्च ॥ केतुमत्प्रख्यात-

न्दयबलमोजोनऽआधानिष्टनिहिदुरिताबाधमानः ॥ अपप्रोथदु
न्दुभेदुच्छुनाऽइतऽइन्द्रस्यमुष्टिरसिवीडयस्व ॥ ५६ ॥ आमूः ॥
आमूरजप्रत्यावर्त्तयेमाः केतुमद्दुन्दुभिर्वावदीति ॥ समश्वपर्णा
श्चरन्तिनोनरोस्माकमिन्द्ररथिनोजयन्तु ॥ ५७ ॥ आग्नेयः कृष्ण
ग्रीवः ॥ सारस्वतीमेषीबभ्रुः सौम्यः पौष्णः श्यामः शितिपृ

वान् दुन्दुभिः वावदीति । लोडर्थेलट् अत्यर्थंवदतु । जयप्रकाशकम् ॥ किञ्चसमश्वपर्णाश्च-
रन्तिनोनरः । अत्रापिलोडर्थेलट् । संचरन्तुअश्वपर्णाः अश्वपतनाः नोनरः अस्मदीयामनुष्याः-
संग्रामेन । हेइन्द्रअस्माकंरथिनः जयन्तुत्वत्प्रसादादितिशेषः ॥ ५७ ॥ आग्नेयः कृष्णग्रीव-

द्रुतिस्रुतिः । आश्वध्यायपरिसमाप्तेः । द्वयोरेकादशिन्योः पशुदेवतासम्बन्धविधावी परतोद्वादश-

षष्ठोबार्हस्पत्यः शिल्पोवैश्वदेवऽऐन्द्रोरुणोमारुतः कल्माषऽ

ऐन्द्राग्नः संहितोधोरामः सावित्रोवारुणः कृष्णऽएकशिति

पात्पेत्वः ॥ ५८ ॥ अग्नयेनीकवते ॥ अग्नयेनीकवतेरोहिता

ञ्जिरनड्वानधोरामौ सावित्रौपौष्णौरजतनाभीवैश्वदेवौपिशङ्गौ

तूपरौमारुतः कल्माषऽआग्नेयः कृष्णोजः सारस्वतीमेषीवा

रुणः पेत्वः ॥ ५९ ॥ अग्नयेगायत्राय ॥ त्रिवृतेराथन्तरायाष्टा

कपालऽइन्द्रायत्रैष्टुभायपञ्चदशायबार्हतायैकादशकपालोविश्वे

हविषोवेष्टेर्देवताः ॥ ५८ ॥ स्पष्टार्थः ॥ ५९ ॥ अग्नयेऽष्टाकपालः पुरोडाशः कार्यः कीदृशायाग्नये गायत्राय त्रिवृते स्तुताय राथन्तराय साम्ना स्तुताय इन्द्राय त्रैष्टुभाय त्रिष्टुभा स्तुतायपञ्च-

वनीयेजुहोति। देवसवितः। तत्सवितुर्वरेण्यम्। विश्वानिदेवसवितरिति। तत्रद्वे व्याख्याते॥ १॥ २॥ विश्वानिदेवसवितरिति द्वेगायत्र्यौ विश्वानिसर्वाणि हेदेवसवितः दुरितानिच्चसत्यानि। परासुवपरांचिगमय। यच्चभद्रंभन्दनीयं तत् नःअस्माकम् आसुवआगमय॥ ३॥ विभक्तारम्।

व्योगंन्धुर्व्वं कंतपूं कंतन्नः पुनातुव्वाचस्पतिर्व्वाचंन्नः स्वदतु॥ १॥ तत्संवितुः॥ तत्संवितुर्व्वरेण्युम्भर्गोदेवस्यंधीमहि॥ धियोयोनः प्रचोदयात्॥ २॥ विश्वानिदेव॥ सवितर्दुरितानिपरांसुव॥ यद्भद्रन्तन्नऽआसुव॥ ३॥ विभक्तारंहवामहे॥ विभुक्तारंहवामहेव्वसोश्चित्रस्यराधंसः॥ सुवितारंन्नृचक्षंसम्॥ ४॥

कर्मानुरूपेण विभक्तारम्। हवामहेआह्वयामः। वसोःवासयितुःचित्रस्य चायनीयस्य राधसःधनस्य आयुषश्च। सवितारम् नृचक्षसम् नृणांद्रष्टारम्। येनरोयथा दृष्टव्यास्तांस्तथापश्यति॥ ४॥

अत्रोव्वटभाष्या भावादत्तरान्तरेणभाष्यान्तरादर्थं विलिखामि अतः परं पुरुषमेधकाः पशवः आअध्यायसमाप्तेः ततः प्रतियूपमेकैकमेकादशिनं नियुज्य ब्राह्मणादीनष्टाचत्वारिंशत्सङ्ख्याकान् पुरुषान् प्रकामोद्याय सर्मित्यन्तानग्निष्ठे यूपेनियुनक्ति इतरेषु यूपेष्वेकादशैकादश पुरुषान् वर्णायानुरुधमित्यादीन्नियुनक्ति । ब्रह्मणे ब्राह्मणम्. तत्र ब्रह्मणे जुष्टं नियुनज्मीति अग्निष्ठे ब्राह्मणं प्रथमं नियुनक्ति । एवमग्रे सर्वेषां यूपे एव बन्धनम् चतुर्थ्यन्तं देवतापदं द्वितीयान्तं पुरुषपदं बोद्धव्यम् । क्षत्राय राजन्यं क्षत्रियम् २. मरुद्भ्यो वैश्यम् ३. तपसे शूद्रम् ४. तमसे तस्करं स्तेनम् ५.

## ब्रह्मणे ब्राह्मणम् ॥ ब्रह्मणे ब्राह्मणङ्क्षत्राय राजन्यम्मरुद्भ्यो वैश्यन्तपसे शूद्रन्तमसे तस्करन्नारकाय वीरहणम्पाप्मने क्लीबमाक्रयाया ऽअयोगूङ्कामाय पुँश्चलूमतिक्रुष्टाय मागधम् ॥ ५ ॥ नृत्ताय सूतम् ॥ नृत्ताय सूतङ्गीताय शैलूषन्धर्माय सभाचरन्नरिष्ठायै भीम

नारकाय वीरहणं नष्टाग्निं शूरं वा ६. पाप्मने क्लीबं नपुंसकम् ७. आक्रयायै अयो गूमयसो गन्तारम् ८. कामाय पुंश्चलूं व्यभिचारिणीम् ९. अतिक्रुष्टाय मागधं मगधदेशजं क्षत्रियायां वैश्यपुंसो जातं वा १० ॥ ५ ॥

नृत्ताय सूतं ब्राह्मण्यां क्षत्रियाज्जातः सूतः ११. गीताय शैलूषं नटम् १२. धर्माय सभाचरं सभायां चरतीति तम् १३. नरिष्ठायैभीमलं भयङ्करम् १४. नर्माय रेभं शब्दकर्तारं वाचाटम् १५. हसाय कारिं करणविशिष्टम् १६ आनन्दाय

दशाय पञ्चदशस्तोमस्तुताय बार्हताय बृहत्सामस्तुताय विश्वेभ्यो देवेभ्यः द्वादशकपालः पुरो-
डाशः कीदृशेभ्यः जागतेभ्यः जगत्या छन्दसा स्तुतेभ्यः सप्तदशेभ्यः सप्तदशस्तोमस्तुतेभ्यः वैरू-
पेभ्यः वैरूपसामस्तुतेभ्यः मित्रावरुणाभ्यां पयस्या पयसि श्रितः चरुः कीदृशाभ्यामानुष्टुभा-
भ्याम् अनुष्टुभा स्तुताभ्याम् एकविंशाभ्यामेकविं शस्तोमस्तुताभ्याम् वैराजाभ्यां वैराज-

भ्योदेवेभ्योजागतेभ्यः सप्तदशेभ्योवैरूपेभ्योद्वादशकपालो
मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविंशाभ्यांवैराजाभ्यांम्प
युस्याबृहस्पतयेपाङ्क्तायत्रिणवायशाक्वरायचरुः सवित्रऔष्णि
हायत्रयस्त्रिंशायरैवतायद्वादशकपालः प्राजापत्यश्चरुरदित्यैवि

सामस्तुताभ्याम् बृहस्पतये चरुः कीदृशाय पाङ्क्ताय पङ्क्तिच्छन्दसा स्तुताय त्रिणवाय त्रिणवस्तो-
मस्तुतायशाक्वराय शाक्वर सामस्तुताय सवित्रे द्वादशकपालः पुरोडाशः कीदृशाय सवित्रे औष्णि-
हाय उष्णिक् छन्दसास्तुताय त्रयस्त्रिंशा य त्रयस्त्रिंशस्तोमस्तुताय रैवताय रैवतसामस्तुताय एवं छन्दः

स्तोमसामसहितान् षट् देवा नभिग्राय चतुरः केवलानद्द प्रजापत्यश्चरुः प्रजापतिर्दै-वत्यश्चरुः कार्यः विष्णुपत्न्यै अदित्यै चरुरेव वैश्वानराय वैश्वानर गुणविशिष्टायाग्नये द्वादशकपालः पुरोडाशः अनुमत्यै देवतायै अष्टाकपालः पुरोडाशः कार्यः ॥ ६० ॥

इति उव्वटकृतौ मन्त्रभाष्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥

चरुः पत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोनुमत्याऽअष्टाकपालः ॥ ६० ॥ [ २४ ] ॥ ४ ॥

इतिसंहितापाठेएकोनत्रिंशोऽध्यायः ॥ २९ ॥

* देवंसवितः ॥ देवंसवितःप्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दि

(१) इतउत्तरम् पुरुषमेधः द्वावध्यायौनारायणः पुरुषोपपश्यत् । देवसवितः । तिस्रःसावित्रीराह-

(१) चैत्रशुक्लदशम्यामारम्भः । ब्राह्मणराजन्ययोरतिष्ठाकामयोः पुरुषमेधसञ्ज्ञकोयज्ञोभवति । सर्वभूतान्यतिक्रम्य स्थान-मतिष्ठा । अत्र त्रयोविंशतिर्दीक्षा भवन्ति द्वादशोपसदः पञ्च सूत्याहानि चत्वारिंशद्दिनः सिध्यति । अत्र यूपैकादशिनो भवति एकादशाग्नीषोमीयाः पशवो भवन्ति तेषां चप्रतियूपं मध्यमे वा यूपे यथेच्छा नियोजनम् । आज्येन सकृद्गृहीतेन देव सवितरिति

* देवसवितः षट्तपसेकीलाल ठं० षोडशद्वौद्वाव ठं० शांतिः ॥

स्त्रीषखं स्त्रियाः सखायम् १७. प्रमदे कुमारीपुत्रं कानीनम् १८. मेधायै रथकारं माहिष्येण करिण्यां जातम् १९. धैर्याय तक्षाणं सूत्रधारम् २०. ॥ ६ ॥ तपसे कौलालं कुलालापत्यम् २१. मायायै कर्मारं लोहकारम् २२. रूपाय मणिकारं रत्नकर्तारम् २३. शुभे शुभाय वपं बीजवप्तारम् २४. शरव्यायै इषुकारं बाणकर्तारम २५. हेत्यै धनुःकारं चाप

लन्नर्म्मायरेभं हसायकारिमानन्दायस्त्रीषखम्प्रमदे कुमारीपुत्रम्मे
धायैरथकारन्धैर्य्यायतक्षाणम् ॥ ६ ॥ [ ६ ] तपसेकौलालम् ॥ तप
सेकौलालम्मायायैकर्म्मारं रूपायमणिकारं शुभेवपं शरव्या
याऽइषुकारं हेत्यैधनुष्कारङ्कर्म्मणेज्याकारन्दिष्टायरज्जुसर्ज्ज
म्मृत्यवेमृगयुमन्तकायश्वनिनम् ॥ ७ ॥ नदीभ्यः पौञ्जिष्
ष्ठम् ॥ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्योनैषादम्पुरुषव्याघ्रा

कारिणम् २६ कर्मणे ज्याकारं प्रत्यञ्चनकर्तारम २७. दिष्टाय रज्जुसर्जं रज्जोः स्रष्टारं निर्मातारम २८. मृत्यवे मृगयुं मृगग्राहम् २९. अन्तकाय श्वनिनं शुनो नेतारम ३०. ॥ ७ ॥ न दीभ्यः पौञ्जिष्ठं पुञ्जिष्ठोन् त्यजः पुलकसस्तदपत्यम् ३१. ऋक्षीकाभ्यो नैषादं निषादपुत्रम् ३२. पुरुषव्याघ्राय दुर्मदःऽन्मत्तम् ३३. गन्धर्वाप्सरोभ्यो व्रात्यं सावित्रीपतितम् ३४. प्रयुग्भ्यः उन्मत्तम् ३५. सर्प-

देवजनेभ्यः अप्रतिपदं प्रतिपद्यते जातानीति प्रतिपत् अतथाविधं विकलमितार्थः ३६. अयेभ्यः कितवं द्यूतकारम् ३७. ईर्यतायै अकितवमद्यूतकृतम् ३८. पिशाचेभ्यः बिदलकारीं वंशविदारिणीं वंशपात्रकारिणीम् ३९. यातुधानेभ्यः कण्टकीकारीं कण्टकी कर्मं तत्कारिणीम् ४० ॥ ८ ॥ सन्धये जारमुपपतिम् ४१. गेहाय उपपतिं व्यभि चारिणम् ४२. आर्त्यै परिवित्तम् ऊढे कनिष्ठेऽनू-

यंदुर्म्मदंङ्गन्धर्व्वाप्सरोभ्योव्व्रात्त्यम्प्रयुग्भ्युऽउन्न्मत्तं सर्प्पदेवजने

भ्योऽप्प्रतिपदमयेभ्यः कितवमीर्य्यतायाऽअकितवम्पिशाचेभ्योबि

दलकारींय्यातुधानेभ्यः कण्टकीकारीम् ॥ ८ ॥ सन्धयेञ्जारम् ॥

सन्धयेञ्जारङ्गेहायोपपतिमार्त्त्यैपरिवित्तन्निर्ऋत्यैपरिविविदानमरा

ध्याऽएदिधिषुःपतिन्निष्कृत्यैपेशस्कारींसंज्ञानायस्मरकारीम्प्र

ढम् ४३. निर्ऋत्यै परिविविदानम् अनूढे ज्येष्ठे ऊढवन्तम् ४४. अराध्यैदेव्यै एदिधिषुःपतिम् ज्येष्ठायां पुत्रायामनूढायामूढा एदि- धिषुःतत्पतिम् ४५. निःकृतये पेशस्कारीं रूपकर्त्रीम् ४६. संज्ञानाय स्मरकारीं कामदीप्तिकरीम् ४७. प्रकामोद्याय तत्सञ्ज्ञाय देवाय उपसिदतीत्युपसत् समीपस्थितस्तम् ४८. एतानग्निष्टे नियुनक्ति ॥ अथ द्वितीये यूपे। वर्णाय अनुरुधम् अनुरुध्यतेऽनु-

सरतीत्यनुरत् तम् १. बलाय उपदाम् उपददातीत्युपदास्तमुपायनदातारम् ॥ ६ ॥ उत्सादेभ्यः कुब्जं वक्राङ्गम् २. प्रमुदे वामनं ह्रस्वाङ्गम् ४. द्वार्भ्यः स्रामं सर्वदा जलक्लिन्ननेत्रम् ५. स्वप्नाय अन्धं नेत्रहीनम् ६. अधर्माय बधिरं कर्णेन्द्रियहीनम् ७. पवित्राय भिषजं वैद्यम् ८. प्रज्ञानाय नक्षत्राणि दर्शयति तम् गणकम् ९. आशिक्षायै प्रश्निनं प्रश्नवन्तम् शकुनादिप्रष्टारमित्यर्थः १०. उपशिक्षायै अभिप्रश्निनमभिप्रश्नवन्तम् ११. । अथ तृतीये यूपे । मर्यादायै प्रश्नविवाकं ज्ञाताग्र-

कामोद्यायोपुसदंम्वर्णायानुरुधम्बलायोपुदाम् ॥ ६ ॥ उत्सादेभ्यः कुब्जम् ॥ उत्सादेभ्यः कुब्जम्प्रमुदे वामुनन्द्वार्भ्यः स्रामस्वप्नायान्धम धर्मायबधिरम्पवित्रायभिषजम्प्रज्ञानायनक्षत्रदुर्शमाशिक्षायैप्रश्निनमुपशिक्षायाऽअभिप्रश्निनम्मर्यादायैप्रश्नविवाकम् ॥ १० ॥ अर्मेभ्यो हस्तिपम् ॥ अर्मेभ्योहस्तिपञ्जवायांश्वपम्पुष्ट्यै गोपालंवीर्याय

प्रनाव्यो विविनक्ति ब्रूते स प्रश्नविवाकस्तम् ॥ १. १० ॥ अर्मेभ्यो हस्तिपं गजपालकम् २. जवाय अश्वपं तुरगपालकम् ३ पुष्ट्यै गोपालं धेनुपालकम ४. वीर्याय अविपालम् ५. तेजसे अजपालम् ६. इरायै कीनाशं कर्षुकः कीनाशः कर्षुके यमे ७ कीलालाय सुराकारं मद्यकृतम् ८. भद्राय गृहपं गेहपालकम् ९. श्रेयसे वित्तधं वित्तं दधातीति वित्तधस्तम् धनकर्तारम् १०. आध्यक्ष्याय

अनुक्षत्तारं सारथ्यनुसारिणम् ११. ॥ ११ ॥ अथ चतुर्थे यूपे। भायै दार्वाहारं काष्ठानामाहर्तारम् १. प्रभायै अग्न्येधम अग्निमेधमतीति मग्नेर्वर्धकम् २. वृध्नस्य विष्टपाय सूर्यलोकाय अभिषेक्तारम् ६. वर्षिष्ठाय नाकाय उत्कृष्टस्वर्गाय परिवेषणकर्तारम् ४. देवलोकाय पेशितारम पिश अवयवे पिंशतीति पेशिता तम प्रतिमाद्यवयवकर्तारम् ५. मनुष्यलोकाय प्रकरिताम् कॄ विक्षेपे विक्षे

याविपुलन्तेजंसेजपालमिरायैकोनाशंङ्कोलालायसुराकारम्भद्रायंग्र

हुपथं श्रेयंसेवित्तधमाध्यक्ष्यायानक्षुत्तारम् ॥ ११॥ भायैदार्व्वांहा

रम् ॥ भायैदार्व्वांहारम्प्रभायाऽअग्न्येधम्ब्रध्नस्यंव्विष्टपांयाभिषेक्ता

रंव्वर्षिष्ठायनाकांयपरिवेष्टारंन्देवलोकायं पेशितारम्मनुष्यलो

कायंप्रकरितारँ सर्व्वेभ्योलोकेभ्यंऽउपसेक्तारमवंऽऋत्यैव्वधायो

पमन्थितारम्मेधांयव्वासः पल्पूलीम्प्रकामायंरजयित्रीम् ॥ १२ ॥

प्तारम ६. सर्वेभ्यो लोकेभ्यः उपसेक्तारमुपसेचनकर्तारम् ७. अवऋत्यै बधाय उपमन्थितारमुपमन्तुनकर्तारम ८. मेधाय वासःपल्पूलीम् वाससां प्रक्षालनकर्तारम पल्पूल प्रक्षालनच्छेदनयोः ९. प्रकामाय रजयित्रीं वस्त्राणां रङ्गकारिणीं नारीम् १० ॥ १२॥

ऋतये स्तेनहृदयं स्तेनस्येव हृदयं यस्य तम ११.॥ अथ पञ्चमे यूपे। वैरहत्याय पिशुनम्परवृत्तसूचकम् १. विविक्त्यै क्षत्तारं प्रतीहारम् २. औपद्रष्ट्र्याय अनुक्षत्तारं प्रतिहार वकम ३. बलाय अनुचरं सेवकम् ४ भूम्ने परिष्कन्दम् परितः स्कन्दति रेतः सिञ्चतितम् ५. प्रियवादिनं मधुरभाषिणम् ६. अरिष्ट्यै अश्वसादम् अश्वारोहम ७. स्वर्गाय लोकाय भागदुघे भागदुघ-स्तम विभागप्रदम् ८. वर्षिष्ठाय नाकाय परिवेष्टारम् ९.॥ १३॥ मन्यवे अयस्तापमयस्तपं लोहतापकम् १०. क्रोधाय

ऋतये स्तेनहृदयम् ॥ ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दं प्रियाय प्रियवादिनमरिष्ट्या अश्वसादं ७ स्वर्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम् ॥ १३ ॥ मन्यवेऽयस्तापम् ॥ मन्यवेऽयस्तापं क्रोधाय निसरं योगाय योक्तारं ६ शोकायाभिसर्तारं क्षे

निसरं नितरां सर्तारम् ॥ ११.॥ अथषष्ठे यूपे। योगाय योक्तारं योगकर्तारम् १. शोकाय अभिसर्तारं सन्मुखमागच्छ-न्तम् २. क्षेमाय विमोक्तारम् विमोचनकरम ३. उत्कूलनिकूलेभ्यः त्रिष्ठिनम् त्रिषु तिष्ठतीति त्रिष्ठीतम् विद्यादिषु स्थितं शीलवर्त्मितार्थः ४. वपुषे मानस्कृतं पूजाया अभिमानस्य वा कर्तारम् सक् छान्दसः ५. शीलाय

अञ्जनीकारीम् अञ्जनविद्याकर्त्रीम् ६. निर्ऋत्यै कोशकारीं खड्गाद्यावरणं कोशस्तत्कारिणीं स्त्रियम् ७. यमाय असूम् न सूते सा असूः ताम वन्ध्याम् ८. ॥ १४ ॥ यमाय यमसूं युग्मप्रसविनीम् ९. अथर्वभ्योऽवतोकां निरप त्याम् १०. संवत्सराय पर्यायिणीम् पर्यायोऽनुक्रमस्तद्वतीमनुक्रमज्ञाम् ॥ ११. ॥ अथ सप्तमे यूपे। परिवत्सराय अविजाताम् अप्रसूतां १. इदावत्सराय

मायै विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनं वपुषे मानस्कृतꣳ शीलायाञ्जनीकारीं निर्ऋत्यै कोशकारीं यमायासूम् ॥ १४ ॥ यमाय यमसूमथर्वभ्योऽवतोकाꣳ संवत्सराय पर्यायिणीं परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीं वत्सराय विजर्जराꣳ संवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धꣳ साध्येभ्यश्चर्मम्नम् ॥ १५ ॥ सरोभ्यो धैवरम् ॥ सरोभ्यो धैवरमुपस्था

अतिस्कन्दत्वति अतीत्वरीमत्यन्तं कुलटाम पुंश्चली कुलटेत्वरी २. इद्वत्सराय अतिष्कद्वरीम् अतिस्कद्वरी स्कन्देर्वनन्तात् ङीब्रेफौ ३. वत्सराय विजर्जरां शिथिलशरीराम् ४. संवत्सराय पलिक्नीं श्वेतकेशाम ५. ऋभुभ्यः अजिनसन्धं चर्मसन्धातारम् ६. साध्येभ्यः चर्मम्नं चर्माभ्यासकरम् ७ ॥ १५ ॥ सरोभ्यो धैवरं कैवर्तापत्यम् ८. उपस्थावरा

दाशम् दाशृ दाने दातारम् दाशो धीवरो वा ९. वैशन्ताभ्यो वैन्दं विन्दो निषादापत्यम् १०. नड्वलाभ्यः शौष्कलं मत्स्याजीवनम् शुष्कला मत्स्यास्तर्जीवति तम् ११ ॥ अथाष्टमे यूपे । पाराय मार्गारम् मृगादेरपत्यं मार्गारस्तम् १. अवराय कैवर्तम् २. तीर्थेभ्यः आन्दम् आदि बन्धने आर्दति आन्दस्तं बन्धनकर्तारम् ३. विषमेभ्यो मैनालम् अल् वारणे मीनानलति वारयति जालैरसौ मीनालस्तदपत्यम् ४ स्वनेभ्यः पर्णकं भिल्लम् ५. गुहाभ्यः किरातम् ६ सानुभ्यः जम्भकं

वैराभ्यो दाशंवैशन्ताभ्योबैन्दन्नड्वलाभ्यः शौष्कलम्पारायमार्गारं मवरायकैवर्तन्तीर्थेभ्यआन्दंविषमेभ्योमैनालंस्वनेभ्यः पर्णकं गुहाभ्यः किरातं सानुभ्योजम्भकम्पर्वतेभ्यः किम्पूरुषम् ॥ १६ बीभत्सायैपौल्कसम् ॥ बीभत्सायैपौल्कसंवर्णायहिरण्यकारन्तुलायैवाणिजं पश्चादोषायग्लाविनंविश्वेभ्योभूते

जभि नाशने जम्भयतीति तम् ७ पर्वतेभ्यः किम्पूरुषं कुत्सितनरम् ८ ॥ १६ ॥ बीभत्सायै पौल्कसम् पुल्कसापत्यम् ९. वर्णाय हिरण्यकारं स्वर्णनिष्पादकम् १० । तुलायै वाणिजं वणिगपत्यम् ११. ॥ अथ नवमे यूपे । पश्चादोषाय ग्लाविनं ग्लौ हर्षक्षये अहृष्टम् १. विश्वेभ्यो भूतेभ्यः सिध्मलं सिध्माख्यरोगवन्तम् २. भूत्यै जागरणं जागरूकम् ३. अभूत्यै

स्वपनं शयालुम् ४. आर्त्यै जनवादिनं जनान्वदति तम् ५. व्यृद्ध्यै अपगल्भम् ६. संशराय प्रच्छिदं॰ प्रच्छेदनकर्तारम् ७. ॥ १७ ॥ अक्षराजाय कितवं धूर्तम ८ कृताया आदिनवदर्शम. आदिनवो दोषस्तं पश्यति तथाभूतम् ९. त्रेताय कल्पिनं कल्पकम् । १० । द्वापराय अधिकल्पिनम् अधिकल्पनाकर्तारम् ११. अथ दशमे यूपे । आस्कन्दाय सभा-

भ्यः ॥ सिध्मलम्भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनं व्यृद्ध्या ऽअपगल्भम्̐ संशरायं प्रच्छिदम् ॥ १७ ॥ अक्षराजायं कितवम् ॥ अक्षराजायं कितवं कृतायांदिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दायं सभास्थाणुम्मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गाँ विकृन्तन्तम्भिक्षमाणऽउपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम् ॥ १८ ॥ प्रतिश्रुत्काया ऽअर्त्तनम् ॥ प्रतिश्रु

स्थाणुं सभायां स्थिरम. १. मृत्यवे गोव्यच्छं गाः प्रति गमनशीलम. २. अन्तकाय गोघातम गवां हन्तारम ३. क्षुधे योगां विकृन्तन्तं भिक्षमाण उपतिष्ठतियः पुमान् गां विकृन्तन्तं छिन्दन्त भिक्षमाणो याचितारं क्षुधे दैव्ये आलभेत ४. दुःकृताय चरकाचार्यं चरकाणां गुरुम ५. पाप्मनेसैलगं सैलगो दुष्टस्तदपत्यम ६. ॥ १८ ॥ प्रतिश्रुत्काय अर्तनं दुःखि-

लम् ७. घोषाय भषं कल्पकम् ८. अन्ताय बहुवादिनम् ९. अनन्ताय मूकं वाग्विकलम् १०. शब्दाय आडम्ब-
रमाहन्ति तम् कोलाहलकर्तारम् ११.॥ अथैकादशे यूपे । महसे वीणावादं वीणावादनकर्त्तारम १. क्रोशायतूणवध्म-
म् तूणवं वाद्यविशेषं धमति तथाभूतम् २. अवरस्पराय शङ्खध्मं शङ्खवादकम ३. वनाय वनपं वनपालकम ४. अन्यतो
ऽरण्याय दावपं वनर्वाह्नपं ५.॥ १९ ॥ नर्माय पुंश्चलूं दुष्टां नारीम् हसाय कारिं करणशील यादसे शाबल्यास् शबलः

ल्क्रांयाऽअर्त्तनङ्घोषांयभुषमन्त्तांयबहुवादिनंमनुन्त्तायुमूकु ६ शब्दांया
डम्बराघुातम्महंसेव्वीणावुादङ्क्रोशांयतूणवुध्ध्मंमवंर स्पुरायंशङ्
ख्ध्मंव्वनांयव्वनुपमुन्न्यतोरण्यायदावुपम् ॥ १९ ॥ नुर्म्मायंपुँ
श्चुलूम् ॥ नुर्म्मायंपुँश्चुलूं ७ हसांयुकारिँ ऽयादंसेशाबल्ल्याङ्गा

कर्बुरवर्णः तदपत्यभूतां स्त्रियं ग्रामण्यं ग्रामनेतारं गणकं ज्योतिर्विदं अभिक्रोशकं निन्दकं तान्महसे जुष्टं नियु-
नज्मीति एकादशे यूपं आलभते ॥ एवं प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टास्तान् समाप्तिपर्यन्ता-
न्द्वितीयोच्छ्रिते यूपे नियुनक्ति तांश्च वीणावादं पाणिघ्नमित्यादीन् रात्रैक्षण्यं पिङ्गाक्षमित्यन्तांश्चतुर्दश ततोऽथैतानष्टौ
विरूपानितराष्टौ च मागधादींश्चतुरः एवं षड्विंशतिं द्वितीये यूपे पूर्वोक्ता एकादश एवंसप्तत्रिंशत् । तानेवाह । वीणा-

वादं पाणिघ्नं हस्ततालवादकं तूणवध्मं तान् त्रीन् नृत्ताय आलभते ३. अनन्दाय तलवं वागतिगन्धनयोः गन्धनं हिंसा तलं हस्तादितलं वाति वाद्यसुखं हन्ति स तलवस्तं वाद्यवादकं ४. ॥ २० ॥ अग्नये पीवानं स्थूलं ५. पृथिव्यै पीठसर्पिणं पीठेनासनेन सर्पति गच्छति पीठसर्पीतं पङ्गुं ६. वायवे चाण्डालं चण्डालकर्म्माणं ७. अन्तरिक्षाय वंश-

मृगयुङ्गणंकमभिक्क्रोशंकन्तान्न्महसे वीणावादम्पाणिघ्नन्तूणवध्मन्तान्नृत्तायानन्दायतलवम् ॥ २० ॥ अग्नयेपीवानम् ॥ अग्नयेपीवानम्पृथिव्यैपीठसर्प्पिणंव्वायवेचाण्डालमन्तरिक्षायव्वंशनर्त्तिन्नन्दिवेखलतिꣳसूर्य्यायहर्य्यक्षन्नक्षत्रेब्भ्यः किर्म्मिरञ्चन्द्रमसेकिलासमह्नेशुक्लम्पिङ्गाक्षꣳरात्र्यैकृष्णम्पिङ्गाक्षम् ॥ २१ ॥ अथैतान् ॥ अथैतानष्टौव्विरूपानालभतेतिदीर्घञ्चातिह्रस्वञ्चातिस्थू

नर्तिनं वंशेन नर्तनशीलं ८. दिवे खलतिमलोमशिरस्कं खल्वाटमित्यर्थः ९. सूर्याय हर्यक्षं हरितनेत्रं १० नक्षत्रेभ्यः किर्म्मिरं कर्बुरवर्णं ११. चन्द्रमसे किलासं सिध्मरोगवन्तं १२. अह्ने शुक्लवर्णं पिङ्गाक्षं १३. रात्र्यै कृष्णवर्णं पिङ्गाक्षं १४. ॥ २१ ॥ एतान् विरूपान् आलभते अतिदीर्घं अतिह्रस्वं अतिस्थूलं अतिकृशं अतिशुक्लं अतिकृष्णं अतिकुल्वं रोमरहितं अतिलो-

मश्रं सर्वाङ्गव्यापिरोमाणं । ते अष्टौ अशूद्राः अ॰ब्राह्मणाः शूद्रब्राह्मणव्यतिरिक्ताः पशवो भवन्ति तेऽष्टावपि प्राजापत्याः मागधः पुंश्चलीकितवः क्लीवः एतेऽपिप्राजापत्याः

इति महीधरादि भाष्येत्रिंशोध्यायः ।

लुम्बातिंकृशुम्बातिंशुक्लम्बातिंकृष्णम्बातिंकुल्वञ्चातिंलोमशञ्च ॥ अशूद्राऽअब्राह्मणास्तेप्राजापत्याः ॥ मागधः पुंश्चलीकितवः क्लीबोशूद्राऽअब्राह्मणास्तेप्राजापत्याः ॥ २२ ॥ [ १६ ]

इतिसंहितापाठेत्रिंशत्तमोऽध्यायः ॥ ३० ॥

* सहस्रशीर्षापुरुषः ॥ सहस्राक्षः सहस्रपात् ॥ सभूमिं

ॐ (१) परमात्मविज्ञानानन्दादि गुणाधरात्मनि प्रभूतःपुरुषमेधोयज्ञः प्रजापतिःलोककालाग्न्यादिवपुः पुरुषोत्पत्तिस्थितिसंहृतीनां हेतुः स्वर्गापवर्गैश्वर्यमोक्षदो ज्ञानकर्मसमुच्चयकारि-

( १ ) कात्याः॰ नियुक्तान् ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति ।

---

* सहस्रशीर्षाषोडशाङ्गाःसम्भूतःषट्द्वीहाविष्ठं॰शतिः

णाम् शरीरंयज्ञोवाअस्यात्माभवतीतिश्रुतिः। सहस्रशीर्षापुरुषइत्यनुवाकेन षोडशर्चेनानुष्टुभेन त्रिष्टुवन्त्येन ब्रह्मणेब्राह्मणमित्याद्यवयवभूत पुरुषद्वारेणावयवी स्तूयते। इदानींस्तुत्यर्थं निर्वचनद्वारेण दृढयितुमाह। अथयस्मात्पुरुषमेधो नानेमेवैलोकाःपूरयमेव पुरुषोयोयंपवते सोस्यांपुरिशेते तस्मात्पुरुषः। तस्ययदेषु लोकेष्वन्नं तदस्यान्नंमेध स्तदस्यैतदन्नं मेधस्तस्मात्पुरुषमेधः। पुरुषसूक्तस्यनारायणऋषिः पुरुषोदेवतानुष्टुप्छन्दः अन्त्यात्रिष्टुप्मोक्षे विनियोगः अस्यभाष्यं शौनकोनामऋषि रकारोत्। प्रथमंविच्छेदः क्रियाकारकसंवन्धःसमासः प्रमेयार्थव्याख्येति सर्वमेतज्जनकाय मोक्षार्थंकथयामासेति सहस्रशीर्षापुरुषः। सहस्राक्षःसहस्रपात् सःभूमिम्

सर्व्वतंस्पृत्वात्त्यंतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽएव ॥ पुरुषएवे

सर्वतःस्पृत्वा अतिअतिष्ठत् दशाङ्गुलम्। सःपुरुषः नारायणाख्यःसर्वतः भुवनकोशस्यभूमिंस्पृत्वा व्याप्यदशाङ्गुलम् अत्यतिष्ठत्। दशचतानि अङ्गुलानिदशाङ्गुलानीन्द्रियाणि। केचिदन्यथारोचयन्ति दशाङ्गुलप्रमाणं हृदयास्थानम्। अपरेतु नासिकाग्रन्दशाङ्गुलमिति किम्भूतोसौ सहस्रशीर्षा। अनेकपर्यायःसहस्रशब्दः अनेकानिशिरांसि यस्यससहस्रशीर्षा पुरुषः। सहस्राक्षः। सहस्राण्यक्षीणिनेत्राणि तस्यासौसहस्राक्षः सहस्रपात् पादानामङ्गानांसहस्राणियस्य ससहस्रयात्। एतद्गुणःपुरुषः तद्व्याप्यअतिक्रम्यस्थितइति ॥ १ ॥ पुरुषएव। पुरुषःएव इदम्सर्वम्

यत्भूतम् यत्चभाव्यम्। उतअमृतत्त्वस्य ईशानः यत्अन्नेनअतिरोहति। सएवपुरुषः पूर्वप-र्यायविशेषितएव शब्दोनान्यः। इदंवर्तमानकंसर्वम् यच्चभूतमतीतम् यच्चभाव्यम्भविष्यत् तस्य-कालत्रयस्यईशानः। नकेवलङ्कालत्रयस्य ईशानः। उतअमृतत्त्वस्यापिमोक्षस्यापि। उतशब्दोपि-शब्दार्थे कस्मात्कारणात्। यत्अन्नेनअमृतेन अतिरोहति अतिरोधंकरोति। सर्वस्येश्वरइति ॥२॥ एतावानस्य। एतावान्अस्यमहिमा अतःज्यायांश्च पुरुषः। पादःअस्यविश्वाभूतानित्रिपात्अस्य

दं॑सर्व॒ꣳ यद्भू॒तंयच्च॒भा॒व्य॑म् ॥ उ॒ताम॑त॒त्वस्येशा॑नो॒यदन्ने॑नाति॒रो॒ह॑ति ॥ २ ॥ ए॒तावा॑नस्य ॥ म॒हि॒मातो॒ज्ज्याया॑ꣳश्च॒पूरु॑षः ॥ पादो॑स्य॒विश्वा॑भू॒तानि॑त्रि॒पाद॑स्या॒मृत॑न्दि॒वि ॥ ३ ॥ त्रि॒पादू॒र्ध्वः ॥

अमृतन्दिवि। अस्य पुरुषस्य पूर्वोक्तविशेषणविशेषितस्य एतावान्महिमा। एतदेवमहत्त्वमस्य अतः कारणात् ज्यायांश्चपुरुषः महानित्यर्थः। कस्मान्महत्त्वमायातम् यस्मात्पादःएकोंशः अस्य पुरुषस्य। विश्वाभूतानिविश्वानि चतुर्दशभुवनसमूहेयानिचतुर्द्धाभूतानि तान्येकोंशः। त्रिपात्पुनः त्रयोंशाः अस्यपुरुषस्य अमृतम् ऋग्यजुःसामलक्षणम् आदित्यलक्षणंवादिविद्योततेइति ॥ ३ ॥ त्रिपादूर्द्ध्वः।

त्रिपात्ऊर्ध्वः उत्ऐत्पुरुषःपादः अस्यइहअभवत्पुनः । ततःविष्वङ्व्यक्रामत्साशनानशने-अभि । यस्मादयंपुरुषः त्रिपात्व्यंशभूतः ऊर्ध्वः उपरिष्टात्उदैत्देदीप्यमानस्तिष्ठति । अस्यच पुरुषस्यअंशादः एकोंशःइहत्रैलोक्ये बीजभूतस्त्वतुर्षुभूतेषु अभूत्भूतम् । ततःतस्मात्कारणात् विष्व-ङ्भुवनकोशंव्यक्रामत् उत्पन्नमित्यर्थः तस्मादेवपुरुषात् । साशनानशनेअभि साशनंस्वर्गम् अनशनं मोक्षम् सर्वंजगत्स्वर्गंप्रतिमोक्षम्प्रतिच तस्मादेवोत्पन्नमित्यर्थः ॥ ४ ॥ ततोविराट् ।

त्रिपादूर्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततो विष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततोविराट् ॥ ततोविराडजायत विराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोः

ततःविराट्अजायत विराजःअधिपूरुषः । स.जातः अतिअरिच्यत पश्चात्भूमिम् अथोपुरः । तस्मादेवपुरुषात् विश्वोत्पत्तिः । तत्पूर्वंविराट् अजायत विराजःअधिपूरुषः प्रधानस्तेजः । सचेतन्यः ब्रह्माएड्टिकस्त् जातःसन्अतिरिच्यते सोभितः । पश्चात्अस्मात् चेतन्यात्ब्रह्मणः भूमिः पृथिव्यादीजाता उत्पन्नाइति अथोनन्तरम् पुरःशरीराणि पुराणिचतुर्विधानिभूतानि अजायन्त ।

पुत्रादीनितेनैवोत्पादितानि एवमेकोंशः तेनैवसर्वंविश्वमुत्पादितमिति ॥ ५ ॥ तस्माद्यज्ञात्। तस्मात् यज्ञात् सर्वहुतःसंभृतम् पृषदाज्यम् पशून्तांश्चक्रे वायव्यान्आरण्याःचये। यथाअग्निष्टोमाख्यात् तस्मायज्ञा सर्वंहुतः। संभृतंपृषदाज्यम् तेनवायव्यान्पशून् आरण्याग्राम्याश्च येतान्कृतवन्तः। एवमात्मयज्ञात्। सर्वंहुतात्पूरितात् उत्पन्नेनयोगिनः सर्वान्पशून् सर्वाणिभूतजातानि करतलपुरः ॥ ५ ॥ तस्माद्यज्ञात् ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् ॥ पशूँस्ताँश्चक्रे वायव्यानारण्याग्राम्याश्च ये ॥६॥ तस्माद्यज्ञात् ॥ तस्माद्यज्ञात्सर्वहुतऋचः सामानिजज्ञिरे ॥ छन्दांसिजज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्माद वत्पश्यन्ति। पश्यन्तिकिलज्ञान तेजसाभूतजातानि ॥ ६ ॥ तस्माद्यज्ञात्। तस्मात् यज्ञात्सर्वहुतः ऋचःसामानिजज्ञिरे। छन्दांसियज्ञिरे तस्मात्यजुःतस्मात् अजायत। तस्मादेवयज्ञात्सर्वहुतः प्रज्वालितात् यथाऋचःसामानि यजूंषिच देवाउत्पादयन्ति छन्दांसिच। एवमात्मयज्ञे प्रणवेनदीपिते स्वयमेवज्ञानादधिष्ठितानिभवन्ति। एवंयेनपरमात्मनिज्ञायते सर्वोजग्धाः सर्वंवाङ्मयंज्ञानम्भवतीति ॥ ७ ॥ तस्माद्यज्ञात् अश्वाः अजायन्त उत्पन्ना तथा ये के चाश्वातिरिक्ता

गर्दभादयोऽश्वतराश्च उभयादत: उभयोर्भागयोर्दन्ता येषां ते उभयदत: छान्दसं दीर्घम् ऊर्ध्वाधोभागयोर्दन्तयुक्ता: सन्ति तेप्यजायन्त । तथा ह स्फुटं तस्माद्यज्ञात् गाव: च जज्ञिरे । किञ्च तस्माद्यज्ञात् अजावय: अजा: अवयश्च जाता: । न हि पशुभिर्विना यज्ञ: सिध्येत् ॥ ८ ॥

तंयज्ञम् । तम्यज्ञम् वर्हिषि । प्रौक्षन्पुरुषम् जातम्अग्रत: । तेन । देवा: अयजन्त साध्या:

ऋषयश्च । ये ॥

तस्मादश्वाऽअजायन्तयेकेचोभयादत: ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावय: ॥ ८ ॥ तंयज्ञम् ॥ तंयज्ञम्बर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्रत: ॥ तेनदेवाऽअयजन्तसाध्याऽऋषय

ऋषयश्च । ये ॥ यथेन्द्रेण तत्रयज्ञे अग्निष्टोमाख्ये वर्हिषाप्रोक्षित: पुरुषोजात: । तद्वदात्मयज्ञे वर्हिषाप्राणायामेन दीपितेन तस्मिन्पुरुषोजात: ज्ञानमुत्पद्यतेदिव्यम् । अग्रत: प्रथमत: । तेन देवाइन्द्रादय: साध्याश्चऋषयश्च यथाअयजन्त । तथादेवा योगिन: कपिलादयश्च साध्याश्चापरे-

ऋषयः । ऋषयश्चान्येतेनैव प्रणवाधिष्ठेतेन पुरुषेणात्मयज्ञं कृतवन्तइति ॥ ९ ॥ यत्पुरु
षम् । यत्पुरुषम् व्यदधुः कतिधा व्यकल्पयन् । मुखम्किम् अस्यआसीत् किंवाहू किम्ऊरू
पादौउच्येते ॥ यत्पुरुषम् देवाइन्द्रादयः तस्मिन् यज्ञे व्यदधुः कृतवन्तोयथा । तद्वत्योगिनः
आत्मयज्ञे पुरुषंज्ञानम् यत्ज्ञानान्तं तत्कृतवन्तः । कतिप्रकारंविकल्पितवन्तः । तद्येवंवि-
पृच्छ्युये ॥ ९ ॥ यत्पुरुषम् ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्पय
यन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्च्येते ॥ १० ॥
ब्राह्मणोस्स्य ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः ॥
धर्म्यंकिंमुखम् कौवाहूकौऊरूपादौउच्येतेउच्यतामित्यर्थः । ब्राह्मणक्षत्रियवैश्यशूद्राः स्थिताइत्य-
र्थः ॥ १० ॥ ब्राह्मणोस्य । ब्राह्मणः अस्य मुखम्असीत् बाहू राजन्यः कृतः ऊरूतत् अस्यय-
त्वैश्यः पद्भ्याम्शूद्रः अजायत । अस्ययज्ञोत्पन्नस्यपुरुषस्य येकेचिद्ब्राह्मणाः तेमुखम्आसीत् ।
येक्षत्रियाः तेबाहूकृताः । येवैश्याः तेअस्यऊरूकृताः । येशूद्राः तेपद्भ्याम्अजायत इतिक-

न्ते । तदङ्गोत्पन्नत्वादिति । एवमेतेवयवा: शिर: प्रभृतय: पुरुषस्यविद्यन्तोनान्येइति ॥ ११ ॥

चन्द्रमासनस:। चन्द्रमा:मनस:जात: चक्षो: सूर्य:अजायत । श्रोत्रात्वायु:चप्राण:चमुखात् अग्नि:अजायत। तस्यैवंविधस्य यज्ञोत्पन्नस्यपुरुषस्य । चन्द्रमा:मनस: चेतस:जात:अजायते तिकल्पना । मनएवचन्द्रमा: । चक्षो: नेत्राभ्यांसूर्य: । नेत्रे एवसूर्य: । य:प्राणोजीव: सए-

ऊरूतदंस्ययद्वैश्यः पद्भ्याᳪशूद्रोऽअंजायत ॥ ११ ॥ चन्द्रमामनंसः ॥ चन्द्रमामनंसोजातश्चचक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चंप्राणश्चमुखांदग्निरंजायत ॥ १२ ॥ नाभ्याऽआसीत् ॥ नाभ्याऽआसीदन्तरिक्षᳪशीर्ष्णोद्यौः समंवर्त्तत ॥ पद्भ्याम्भूमि

ववायु:श्रोत्रात् अजायतेतिकल्प्यतेश्रोत्रमेववायु: । योयमग्नि:समुखात् अजायतेतिकल्प्यते मुखमेवाग्नि: तदङ्गोत्पन्नत्वादिति ॥ १२ ॥ नाभ्याआसीत् । नाभ्या:आसीत् अन्तरिक्षम् शिर्ष्ण: द्यौ:समवर्त्तत । पद्भ्याम्भूमि:दिश:श्रोत्रात् तथालोकान् अकल्पयन् । तस्यैवंविधस्यपुरुषस्य

यानाभि:तदेवान्तरिक्षमभः। याद्यौ:तत्शीर्षंशिरः। समवर्ततेतिकल्पितम्। पादैर्भूमिरेव। श्रोत्रेश्रवणोदिशः। श्रोत्रवयवाःयस्माद्दिशः ब्रह्मणोजाताः तथैवसर्वान् लोकान् पुरुषस्यावयव-भूतान् अकल्पयदिति ॥ १२ ॥ यत्पुरुषेण। यत्पुरुषेण हविषा:देवाः यज्ञम्अतन्वत। वसन्तः अस्यआसीत् आज्यम् ग्रीष्मःइध्मः शरत्हविः। कथमन्नेनाधिरोहति। यत्यस्मात्कारणात्

दिशः श्रोत्रात्तथांलोकाँ ॥ अकल्पयन् ॥ १३ ॥ यत्पुरुषेण ॥ हविषांदेवायज्ञमतन्वत ॥ वसन्तोस्यासीदाज्यंग्रीष्मऽइध्मः शरद्धविः ॥१४॥ सप्तास्यांसन् ॥ सप्तास्सांसन्परिधयस्त्रिःसप्तसमि

पुरुषेणहविषा हविर्भूतेन देवाइन्द्रादयः यथायज्ञम् अतन्वत विस्तारितवन्तः। तथायोगिनो-पिपुरुषेणैवामृतभूतेन दीपितेनात्मना आत्मयज्ञंसमधिकृतवन्तः। अस्ययज्ञेवसन्तः आज्यमा-सीत् ग्रीष्मःइध्मः शरद्धविरिति। इतरयागेवसन्तशब्देन सात्त्विकोगुणउच्यते ग्रीष्मशब्देन-राजसः। शरच्छब्देनतामसः। त्रयोपिगुणा स्तत्रात्मयज्ञेयोगिनोजुह्वतीति ॥ १४ ॥ सप्ता-स्यासन्। सप्तअस्यआसन् परिधयः त्रिःसप्तसमिधःकृताः। देवाःयत्यज्ञम्। तन्वानाःअबध्नन्

पुरुषम्पशुम्। देवाइन्द्रादयः यथायज्ञंपुरुषमेधाख्यं विस्तारयन्तः पुरुषंपशुम् अवध्नन्हतवन्तः। अस्यपुरुषमेधयज्ञस्य सप्तसमुद्राःपरिधयःआसन्। भारतेह्निवर्षेयागः प्रवर्तते। त्रिःसप्तछन्दांसि गायत्र्यादीनि समिधःकृताः। आत्मयागेपरिधिशब्देन पृथिव्याप स्तेजो वायु राकाशं मनो-बुद्धिरित्येते परिधयःकल्प्यन्ते त्रिःसप्तसमिधः। पञ्चमहाभूतानिपृथिव्यादीनि पञ्चतन्मात्रा-णिरूपादीनि। पञ्चबुद्धीन्द्रियाणि श्रोत्रादीनि। पञ्चकर्मेन्द्रियाणिपाण्यादीनिमनश्च एताः त्रिःस-प्तसमिधःकल्पयन्ति। तथादेवादीप्यमानाज्ञानेनयोगिनः समाध्याख्यंयज्ञ न्तन्वानाविस्तायन्तः।

ध्मंः कृताः॥ देवायद्यु ज्ञन्तंन्वानाऽअबंध्नन्पुरुषम्पशुम्॥१५॥ युज्ञे नंयुज्ञम्॥ युज्ञेनंयुज्ञमंयजन्तदेवास्तानिधर्म्माणिप्रथमान्न्या

पुरुषंज्ञानं पुरुष मेधपशुरूपेणावस्थितम् अब ध्नन्अगच्छन्॥१५॥ यज्ञेनयज्ञम्। यज्ञेन-यज्ञम्अयजन्त। देवाः। तानिधर्माणिप्रथमानिआसन्। तेहनाकम्। महिमानःसचन्तयत्रः पूर्वेसाध्याःसन्तिदेवाः। यथाइन्द्रादयोदेवाः यज्ञेनज्योतिष्टोमाख्येन यज्ञपुरुषंवासुदेवम् विधि-नाअयजन्त। यतःतानियजनरूपाणिधर्माणि प्रथमानिआसन्। तेहमहाभाग्ययुक्ताःनाकंस-चन्त स्वर्गंसेवन्ते। यत्रपूर्वेसाध्याः प्रथमेसुराःसन्तिविद्यन्तेदेवाः तेजसादेदीप्यमानाः। एवंयो-

गिनोपिदीपनाद्दे वायच्छेन समाधिनानारायणाख्यं ज्ञानरूपम् अयजन्तयत: तानिसमाधिरूपाणि धर्माणि प्रथमान्यासन । तेहुनाकं सनकादीनांस्थानंगच्छन्ति । येतुयोगिनोसहिमान: जन्मान्तरैर्निर्धूतगुणा:शुद्धा: तेनारायणाख्यं पुरुषमाविशन्ति मुक्तिंगच्छन्तीत्यर्थ: ॥ १६ ॥
अद्भ्य:संभृत: । अद्भ्य:संभृत: पृथिव्यैरसात् चविश्वकर्मण: समवर्ततअग्रे । तस्यत्वष्टा विद-

सन् ॥ तेहनाकंमहिमानं: सचन्तयत्रपूर्वेसाध्या: सन्तिदेवा: ॥ १६ ॥ [ १६ ] अद्भ्य: सम्भृत: ॥ पृथिव्यैरसाच्चविश्वकर्मण: समवर्त्तताग्रे ॥ तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्वमाजानमग्रे ॥ १७ ॥ वेदाहम ॥ वेदाहमेतम्पुरुषम्महान्तमादि

धत्रूपम् एतितन्मर्त्यस्य देवत्वम आजानम अग्रे । त्वष्टाप्रजापतिब्रह्मा यद्रूपमेकांशभूतं विदधत्कृतवान् तदेवमर्त्यस्य मर्त्येभूर्लोकेदेवत्वंमुख्यत्वम् आजानमाप्नमित्यर्थ: । किंभूतोस। अद्भ्य:सकाशात् संभृत:पिण्डीभूत: पृथिव्या:रसात्च । विश्वकर्मण: अग्रेप्रथमत: समवर्तत । संयोगरूपेणाभूत: । तस्यैवनान्यस्य तदेवकारणान्मर्त्योप्यभवान् सतुमालनायदानवादि विनाशनाशेति ॥१७॥
वेदाहम् वेदअहम् एतम्पुरुषम् महान्तम्आदित्यवर्णम् तमस:परस्तात् । तमएवविदित्वा

अतिमृत्युमेति नअन्यः पन्थाविद्यतेअयनाय । ऋषिःप्रतिवचनम् । अहमेनंपुरुषंवेद महान्त-न्देशकालाद्यवच्छेदरहितम् आदित्यवर्णम् स्वप्रकाशम् तमसःपरस्तात् अविद्यायाःभेददर्शनम् । तमेवविदित्वा अतिमृत्युम् एतिअतिक्रम्य मृत्युंतंपुरुषमनुप्रविशति । नअन्यः पन्थामार्गः तस्या-यनायगमनायविद्यते किंभूतंतं विशिष्यते ॥ १८ ॥ प्रजापतिश्चरति । प्रजापतिःचरति गर्भेअन्तः

च्यवर्णन्तमसः परस्तात् ॥ तमेवविदित्वातिमृत्युमेतिनान्न्यः पन्थाविद्यतेऽयनाय ॥ १८ ॥ प्रजापतिश्चरति ॥ प्रजापतिश्चरति गर्भेअन्तरजायमानोबहुधाविजायते ॥ तस्ययोनिम्परिपश्यन्ति धीरास्तस्मिन्हतस्थुर्भुवनानिविश्वा । १९ ॥ योदेवेभ्यः ॥

अजायमानःवहुधाविजायते । तस्ययोनिम परिपश्यन्ति धीराः तस्मिन्हतस्थः भुवनानिविश्वा । सएवपुरुष एकांशभूतः प्रजापतिः अस्यगर्भसप्राप्तः अजायमानः चरतिचतुर्विधेषु भूतेषु । सएवजायमानः वहुधानेकप्रकारंविजायते । येधीराः योगिनः तेतस्यैयोनिं परिपश्यन्ति । सवत्यागेनपरिहरन्ति विश्वेत्रैलोक्येभुवनानितस्मिन्नातस्थुः ॥ १९ ॥ योदेवेभ्यः । यःदेवेभ्यः

आतपति यःदेवानाम्पुरः हितः। पूर्वःयः देवेभ्यःजातः नमःरुचाय ब्राह्मये। अग्रेयोर्देवेभ्यः योगिनस्तन्नमन्तिध्यायन्ति योदेवेभ्यः सर्वेभ्यःआतपति अतिशयेनतेजसा तपतिआदित्यरूपेणे-त्यर्थः। यश्चदेवानां पुरोग्रे इन्द्रत्वेनस्थितः यश्चपूर्वः अग्रे ब्रह्मरूपेण देवेभ्योजातः तस्मैरुचायते-जसेब्राह्मये ब्रह्मपुरुषोपत्यायनमः॥ २०॥ रुचंब्राह्मम्। रुचमब्राह्मम् जनयन्तः देवाअग्रे तत्अब्रु-

योदेवेभ्यऽआतपतियोदेवानाम्पुरोहितः॥ पूर्वोयोदेवेभ्योजातो नमोरुचायब्राह्मये॥ २०॥ रुचम्ब्राह्मम्॥ रुचम्ब्राह्मञ्जन यन्तोदेवाऽअग्रेतदब्रुवन्॥ यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽअसन्वशे॥ २१॥ श्रीश्चते॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रे

वन्। यःत्वाएवम् ब्राह्मणःविद्यात् तस्यदेवाःअसनवशे। रुचन्देदीप्यमानं ब्राह्मंब्रह्मणउत्पन्नं जन-यन्तःसृष्ट्यर्थम् देवायोगिनः तेजसादीप्यमानाः यत्तअब्रुवन् यद्ब्रूयुःअग्रे प्रथमतः। किमूचुः अपरोपि-योब्राह्मणः सब्रह्मविद्याज्जानीयात् तस्यदेवाअसन्वशे सोपिसनकादीनां स्थानङ्गच्छतीत्यर्थः॥ २१॥ श्रीश्चते। श्रीःचतेलक्ष्मीः चपत्न्यौ अहोरात्रे पार्श्वेनक्षत्राणिरूपम् अश्विनौव्यात्तम्। इष्णन्निषाण

शु० य० सं० ६२० उ० भा०

अमुम्मइषाण सर्वंलोकम्मइषाण। असत्रपुरुषस्यैतेवयवा:। श्रीश्चलक्ष्मीश्च पत्न्यौभार्ये अहस्वरात्रिश्च तेपार्श्वेनक्षत्राणिरूपम् अश्विनौव्यात्तंमुखम्। इष्णान् इषाण स्वर्गसत्रलोकसत्रईशान:। एतद्गुणविशिष्ट: नाममोक्षस्यईशान: सर्वंलोकस्यच सएवदेवानामीशानइति ॥ २२ ॥

इतिशौनक प्रणीतं पुरुषसूक्तभाष्यं समाप्तम् ॥ ३१ ॥

पार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वंल्लोकम्मऽइषाण ॥ २२ ॥ [ ६ ] ॥ २ ॥

इतिसंहितायांएकत्रिंशोऽध्याय: ॥ ३१ ॥

* तदेव। तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचन्द्रमाः ॥ तदेवशु

(१) इदानींसर्वेमन्त्रा: प्राक्प्रवायुमित्यस्मादनुवाकात्सर्वमेधसंबद्धा:। ब्रह्मणआर्षम्। तदेवाग्नि: द्वेअनुष्टुभौ। विज्ञानात्मापरेणात्मना विशिष्टाग्न्यादिषु ओतप्रोतत्वेनोपास्योभिधीयते। तदेव-

(१) पुरुषमन्त्रा उक्ता:। अथ सर्वमेधामन्त्रा उच्यन्ते प्रवायुमच्छ तास्मात्प्राक स्वयम्भुब्रह्मदृष्टा: आत्मदेवता: सप्तमेऽहनि आप्तोर्यामसञ्ज्ञिके सर्वहोमे विनियुक्ता: आप्तोर्याम: सप्तममहभवतोत्युपक्रम्य सर्व जुहोति सर्वं स्यास्यै सर्वस्यावरुद्ध्य इति, श्रुति:।

---

* तदेव सप्तविंशत्यनवत्रीषोडश ॥

अ० ३१ शिवम् ६२०

कारणमग्निः तदादित्यः तद्वायुः तत्उचन्द्रमाः। उकारएवार्थे तदेवशुक्रान्तयीलक्षणम्। तद्ब्र-
ह्मपरम् ताआपः सःप्रजापतिः ॥ १ ॥ सर्वेनिमेषाः। सर्वेनिमेषत्रुटिकाष्ठादयः कालविशेषाः
जज्ञिरेजाताः। विद्युतः विद्युत्पर्जन्यस्तनयित्नवः। पुरुषादधिशकासात् नचएनं पुरुषंसर्वस्यापि
जनकं सन्तम्। ऊर्ध्वंनचतिर्यञ्चं नचमध्येपरिजग्रभत्। नपरिगृह्णातिकश्चिदपि। नह्यसौप्रत्यक्षादी-

क्रान्तन्तदमृताऽआपुःसप्रजापतिः ॥१॥ सर्वेनिमेषाः॥ सर्वेनिमेषा
जज्ञिरेविद्युतःपुरुषादधि॥ नैनमूर्ध्वन्नतिर्यञ्चन्नमध्येपरिजग्र
भत्॥ २ ॥ नतस्य॥ प्रतिमाऽअस्तियस्यनाममहद्यशः॥ हिर

नांविषयः। आगमोहि तत्रप्रवर्तते तदुक्तम्। एषनेतिनेत्यात्मना अगृह्योनहि गृह्यतइत्यादि ॥२॥
नतस्य। गायत्रीद्विपदा नतस्यपुरुषस्य प्रतिमाप्रतिमानभूतं किञ्चिद्विद्यते। यतोयस्यनाममह-
द्यश इत्येषवेदान्तविदःपठन्ति। हिरण्यगर्भ इत्येषचतुर्ऋचोनुवाकोऽदूरविप्रकर्षेण हिरण्य-
गर्भं प्रतिमाभूतमाह। मामाहिंसीदित्येषाचऋक् यस्मान्नजातइत्येषाचद्विकण्डिकोनुवाकः।

षोडशिदैवत्यो ऽदूरविप्रकर्षेणाभिवदति । अ:सांचकखिडकानां ब्रह्मयज्ञे ध्ययनं कर्तव्यं प्रतीकग्रहणत्वात् ॥ ३ ॥ एषोह । त्रिष्टुभः सर्वा:सदसस्पतिमद्भुत मित्यसप्रागायत्र्याःप्राक् । इदानींस्वरूपत: कथयति । एषएवदेव: प्रदिश: दिशश्चसर्वा: अनुव्याप्यवर्त्तते तिर्यगूर्ध्वमधश्चेति । पूर्वोहजातअनादिनिधन: संभूत: । सउगर्भअन्त: । सएवचमातुदरेऽअन्तर्गर्भे व्यवतिष्ठते ।

यथुगर्भेऽइच्छ्येषमामांहिंदेसोदित्येषायस्माज्जातऽइच्छ्येष: ॥ ३ ॥

एषोह ॥ देव: प्रदिशोनुसर्वा: पूर्वोहजात: सऽउगर्भेऽअन्त: ॥ सऽएवजात: सजनिष्यमाण: प्रत्यङ्जनास्तिष्ठतिसर्वतोमुख: ॥ ४ ॥ यस्माज्जातम् ॥ यस्माज्जातन्नपुराकिञ्चनैवयऽ

छते । सएवचजात: सएवचजनिष्यमाण: तदुक्तम् । सर्वंखल्विदंब्रह्मतज्जानातिशान्तमुपासीतेति । प्रतिपदार्थमञ्जन: । हेजना: तिष्ठतिसर्वतोमुख: । सर्वतोक्षिशिरोग्रीव पाणिपाद: तिष्ठति अचिन्त्यशक्तिरित्यर्थ: । जनाइत्याद्युदात स्वरमपिस्वरामन्त्रितायसप्रादावेववर्तते ॥ ४ ॥ यस्मान्नजात: । यस्मात्पुरुषात् जातंनपुराकिञ्चनएव । यश्चआबभूव सक्षावयतिभुवनानिभूतजा-

तानिविश्वाविश्वानिसर्वाणि। प्रजापतिरिति व्याख्यातम्। अयंषोडशकलिङ्गयुक्तः ॥ ५ ॥
येनपुरुषेण द्यौः उग्रा उद्गूर्णावृष्टिदायिनी कृता। पृथिवीच दृढास्थिरा प्राणिधारणाय वृष्टि-
ग्रहणायच अन्ननिष्पादनायच कृता। येनचस्वः आदित्यमण्डलं स्तभितं स्तंभितम्। येनच
नाकः स्वर्गोलोकः। स्तंभितः। यश्चान्तरिक्षे रजसःउदकस्य वृष्टिलक्षणस्य विमानोनिर्माता।

आबभूवभुवनानिविश्वा ॥ प्रजापतिःप्रजयासꣳरराणस्त्रीणिज्योतीꣳषिसचतेसषोडशी ॥ ५ ॥ येनद्यौः ॥ येनद्यौरुग्रापृथिवीचंदृढायेनस्वस्तभितंयेननाकः ॥ योऽअन्तरिक्षेरजसोविमानः कस्मैदेवायहविषाविधेम ॥ ६ ॥ यङ्क्रन्दसी ॥ यङ्क्रन्दसीऽअवसात

तंपरित्यज्य कस्मैअन्यस्मै देवायहविषाविधेम हविर्दद्मइतिसमञ्जसम् ॥ ६ ॥ यंक्रन्दसी यंपुरुषं
क्रन्दसीद्यावापृथिव्यौ अवसा अन्नेनहविर्लक्षणेन वृष्टिधारणाद्युपकारजनितेन। तस्भानेसंस्तं-
भयन्त्यौ सर्वंप्राणिजातम् अभ्यैक्षेतांमनसा। साध्वेतत्कृतमनेनेति। रेजमानेकम्पमाने।

शु० य० सं० ६२२ उ० भा०

यत्रच अधि उपरिस्थितः यदाधारइत्यभिप्रायः । सूरः सूर्यः उदितः सन् विभाति । तन्देवम परित्यज्य कस्मैदेवाय हविषाविधेम इतिसमंजसम् । आपोहयद्बृहतीर्यश्चिदाप इतिद्वेप्रतीकग्रहीते अत्रापिस्वाध्यायेध्ययनं प्राप्तंप्रतीकस्योपलक्षणार्थत्वात् ॥ ७ ॥ वेनस्तत्पश्यत् । वेनः पण्डितः विदितवेदान्तरहस्यः सद्भावनया तद्रूपंब्रह्म पश्यत्पश्यति । निहितंस्थापितम् ।

स्तभानेऽअभ्यैक्षेतांमनसारेजमाने ॥ यत्राधिसूरऽउदितोविभाति कस्मैदेवायहविषाविधेम ॥ आपोहयद्बृहतीर्यश्चिदापः ॥ ७ ॥

[ ७ ] वेनस्तत् ॥ वेनस्तत्पश्यन्निहितङ्गुहासद्यत्रविश्वम्भवत्येकनीडम् ॥ तस्मिन्निदᳪँसञ्चविचैतिसर्वᳪँसऽओतः प्रोतः

गुहागुहायामिव । सन्नित्यम् । यत्रविश्वं सर्वमिदं विकारजातं भवति एकनीडम् एकनिलयमविभक्तम् । कारणमेवोपसंहृतं सर्वविशेषम् । तस्मिन्निदं सञ्चविचैति सर्वम् । तस्मिन्नेवपरमात्मनि इदंविकारजातं सर्वंसमेतिच उपसंहृतिकाले । समेत्यच । व्येतिसृष्टिकाले सर्वमेव । सचपरमेश्वरः ओतश्चशरीरभावेन प्रोतश्चजीवभावेन इतरथावा विभूः विभवति

अ० ३२ शिवम ६२२

चक्रायेंकारणभावेन । प्रजासु ॥ ८ ॥ प्रतत् प्रवोचेत् प्रब्रूयात्तत् अमृतंशाश्वतम् । नुचि-
प्रम् विद्वान्पण्डितः गन्धर्वः । गन्धर्वलोकेहि ब्रह्मविद्यासुतरांज्ञायते । धामस्थानम् । विभृ-
तंविहृतंनानाभूते सर्गस्थितिप्रलयैः । गुहासत् गुहायामिवनिगूढम् अविदितवेदान्तरहस्यस-
ज्ञानानाम् । किञ्च । त्रीणिपदानिनिहितानि गुहा । गुहायामिवअस्यअमृतस्य सर्गस्थिति-

प्रज्वविभूः प्प्रजासुं ॥ ८ ॥ प्रतत् ॥ प्रतद्वोचेदमृतन्नुविद्वान्गंन्धर्वो
धामुविभृतंतङ्गुहासत् ॥ त्रीणिपुदानिनिहिंताुगुहांस्युयस्तानिवे
दुसपितुः पितासंत् ॥ ९ ॥ सनंः ॥ सनोबन्धुंर्जनितासविंधाता

प्रलयाः त्रयोवावेदाः त्रयोवाकालाः । भूयस्त्वोपलक्षणार्थंवा । भूयांसोहि तत्रगुणाश्रूयन्ते
विज्ञानघनानन्दसत्यसंकल्पादयः । परब्रह्मान्तर्यामिव्यवाकृतानिवालयःपादाः । यस्तानिवेदजा-
नातिसपितुरपिपिताभवति । परंब्रह्मभवतीतत्यर्थः । तद्धिब्रह्मरूपंश्रेष्ठम् ॥ ९ ॥ सनोबन्धुः ।
सनोस्माकंबन्धुः सचास्माकञ्जनिता । जनयितेतिप्राप्ते जनितामंत्र इतिणिचोलोपः । सचनो-

विधाता धारयिता । यःधामानिवृत्त्वाणःस्थानानि वेद । भुवनानिभूतजातानिविश्वासर्वाणिवेद । नान्यात्मनोभिन्नानिवेद । किञ्च । यत्रदेवाअग्न्यादयः अमृतम्परब्रह्मलक्षणम् । आनशानाः व्याप्नुवन्तः तृतीयेधामनि स्थानेअधिउपरिस्थिताः ऐरयन्त स्वेच्छयाप्रवर्तन्ते तच्चयोवेद सनो-वन्धुरित्याद्यनुवर्तते ॥ १० ॥ इदानींसर्वेषु भूतेष्वहमस्मिसर्वाणिचभूतानि मयिसन्तीत्येतद्दर्श-

धामा॑नि॒ वेद॒ भुव॑नानि॒ विश्वा॑ ॥ यत्र॑ दे॒वाऽअ॒मृत॑मानशा॒नास्तृ॒तीये॒ धाम॑न्न॒ध्यैर॑यन्त ॥ १० ॥ प॒री॒त्य भू॒तानि॑ ॥ प॒री॒त्य लो॒कान्प॒री॒त्य सर्वाः॑ प्र॒दिशो॒ दिश॑श्च ॥ उ॒प॒स्थाय॑ प्रथम॒जामृ॒तस्या॒त्मना

नानुष्ठितस्य सर्वमेधयाजिनो मुक्तिरुच्यते द्वाभ्यांकण्डिकाभ्याम् नचात्रसर्वमेधेग्रहः कर्तव्यो-दर्शनस्यप्राधान्यात् । एवंहि पश्यतो यजमानस्याग्निहोत्रादयो यज्ञाः सर्वे सर्वमेधाएव । आलम्ब-नमात्रंहितत्रयज्ञाः । परीत्यभूतानि । अनेन दर्शनेन परिज्ञायसर्वाणिभूतानिएवमेतदित्यवधार्य । एवंपरिज्ञायचसर्वान्लोकान् परिज्ञायचसर्वाः दिशः परिज्ञायच सर्वाःप्रदिशः । उपस्थायचप्रथम-

जांघातं त्रयीलक्षणाम् । अपिहि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यतेतिश्रुतिः प्रथमजात्वात् । ऋत-
स्य यज्ञस्य । आत्मना आत्मानम् परीत्य ब्रह्मणा विशिष्टं ब्रह्म अभिसंविशति अपुनरावृत्तये ॥ ११ ॥
परिद्यावा । परीत्य इत्युपसर्गइत्येत्यनेन संबध्यते । परीत्य द्यावापृथिव्यौ अनेनदर्शनेन । परीत्य-
च लोकान् परीत्य च दिशः परीत्य च स्वः आदित्यम । ऋतस्य यज्ञस्य तन्तुं विततं विचृत्य विच्छिद्य

नात्मानमभिसंविवेश ॥ ११ ॥ परिद्यावांपृथिवी ॥ सद्यऽइत्वाप
रिलोकान्परिदिशऽ परिस्वः ॥ ऋतस्यतन्तुंविततंविचृत्यतद
पश्यत्तदंभवत्तदासीत् ॥ १२ ॥ सदसस्पतिम् ॥ सदसस्पतिम

परिसमाप्य । सदाएवतत् तथाभूतमात्मनम अपश्यत् पश्यति । तदभवत् तथाभूतंब्रह्मभवति ।
तदासीत् तदेवास्ति । तदुक्तम् । तदेवसनत स्तदुतत्त्ववासः । यथाह्येकस्याग्नेप्रदीपस्य स्फुला-
लिङ्गत्व्यग्नितोनिर्निर्गच्छन्ति । एवंपरमात्मन इमेजीवाव्युच्चरन्ति । आभ्यां क्रमिकाभ्यां गृहस्था-
नामेवमुक्तिर्दर्शिताभवति तेषांहिभूयांसउपायाःयज्ञादयः ॥ १२ ॥ इतउत्तरन्तिसृभिः कण्डि-

शु० य० सं० ६२४ उ० भा०



काभि मेंधायाच्यते श्लोश्चतुर्थ्यो । सदसस्पतिम् सदसस्पतिर्देवता सदोयज्ञगृहं तस्यपतिःतम् । अद्भुतंमहान्तं मचिन्त्यशक्तिम् । प्रियमिन्द्रस्य । काव्यङ्कामसंपत्करम् कमनीयंवा धनमेधार्थिभिः । सनिन्धनंमेधाम् अयासिषम् याचेःद्विकर्माचायंधातुः ॥ १३ ॥ याम्मेधाम् तिस्रोनुष्टुभ आग्नेयौ । यांमेधां देवगणाःपितरश्च उपासतेपूजयन्ति । तयामाम् अद्यमेधया हेअग्ने मेधा-

द्भुतम्प्रियमिन्द्रस्य काम्म्यम् ॥ सनिम्मेधामयासिषꣳ स्वाहा ॥ १३ ॥ याम्मेधाम् ॥ याम्मेधान्देवगणाः पितरश्चोपासते ॥ तयामामद्य मेधयाग्ने मेधाविनङ्कुरु स्वाहा ॥ १४ ॥ मेधाम्मे ॥ मेधाम्मे वरुणो ददातु मेधामग्निः प्रजापतिः ॥ मेधामिन्द्रश्च वायुश्च मेधान्धाता ददातु मे स्वाहा ॥ १५ ॥ इदम्मे ॥ इदम्मे ब्रह्म च क्षत्रञ्चोभे श्रियमश्नु

विनंकुरु स्वाहासुहुतमस्तु ॥ १४ ॥ मेधांमे । लिङ्गोक्तदेवता । मेधाम् मेमह्यं वरुणोददातु । मेधांचाग्निः प्रजापतिश्च । मेधांच इन्द्रश्चवायुश्च । मेधांचधाताददातु मेमह्यम् स्वाहासुहु-तमस्तु ॥ १५ ॥ इदंमे । श्रीकण्ठ् । इदंब्रह्म चक्षत्रञ्च उभेब्रह्मक्षत्रेश्रियम्अश्नुताम् मदीयां-

शिव० ६२४

श्रियमुपजीवताम् । मयिच देवाः दधतुस्थापयंतु श्रियम् उत्तमाम् यथाहं सर्वजनभोग्ये भवामि । तस्यैतेस्वाहा । यात्वमेवं सर्वजनैरभिलष्यसे तस्यैश्रियै तेतुभ्यं स्वाहासुहुतमस्तु । अप्राप्यच मेधांश्रियंच नयन्मा:सिध्यन्तीत्येषसंबन्धः ॥ १६ ॥

इतिउव्वटकृतौमंत्रभाष्ये द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

ताम् ॥ मयिदेवादधतुश्रियमुत्तमान्तस्यैतेस्वाहा ॥ १६॥[६]॥ २ ॥

इतिसंहितायांद्वात्रिंशोऽध्यायः ॥ ३२ ॥

* अस्याजरासः ॥ अस्याजरासोदमामरित्राऽअर्च्चद्धूमासोऽ

(१) इतउत्तरं सप्तदशका: पुरोरुग्गाना अस्मिन्नध्यायेपठ्यन्ते । तत्रसार्वमेधिकानां चतुर्णामह्नांच-त्वार आद्या:पुरोरुच इत्येवमेतेविदुः । यथास्याग्निष्टुदग्नि ष्टोमः प्रथममहर्भवति तस्याग्नेया-ग्रहाभवन्ति आग्नेय्य:पुरोरुचइति । एवमिन्द्रस्तदुत्थो द्वितीयमहर्भवन्ति ऐन्द्र्य:पुरोरुचः । सूर्य-

(१) सर्वमेधेऽग्निष्टोमसंस्थेऽग्निष्टुत्संज्ञे प्रथमेऽहनि अस्याजरास इत्याद्या मन्त्रो अग्ने पत्यन्ता:सप्तदश ऋचोऽग्निदेव-त्या: पुरोरुचोभवन्ति । पुरोरुक्शब्देन ऋग्रूपा ग्रहणमन्त्रा उच्यन्ते न यजूरूपाः ऋगपि पुरोरुगिति श्रुतेः ।

* अस्याजरासः सप्तदशापश्चितृद्वादशविभ्राट्चतुर्दशप्रवाःद्वजएकादशप्रवायु प्रवीरयापञ्चदशकावानस्त्रयोदशसप्तसप्तनवतिः ।

णासारथिः अश्वान्‌ इव । यन्मनुष्यान्‌ । यच्चमनः सुषारथिरिव । अभीशुभिः प्रग्रहैः वाजि-
नइववेजनवतोश्वानिव । यमयतीतिशेषः । हेउपमे एकवनयनमन्यवनियमनसर्थः यच्चहृत्प्रति-
ष्ठम्‌ । तच्चोपलब्धेः । यच्च अजिरज्जरारहितम्‌ यच्चजविष्ठम्‌ अतिशयेनगन्तृ । तन्मेमनः
शिवसंकल्पमस्तु ॥ ६ ॥ पितुन्नु । अन्नस्तुतिः । उष्णिगनुष्टुब्वाभी । द्वितीयोर्द्धर्चीः प्रथमंव्या-
ख्यायते यच्छब्दयोगात्‌ यस्यपितोः अन्यस्यवितः निस्थानः इन्द्रः ओजसाबलेन । इत्यम्‌ ।

ऽइव ॥ हृत्प्रतिष्ठँ यदजिरञ्जविष्ठन्तन्मेमनः शिवसङ्कल्प
मस्तु ॥ ६ ॥ पितुन्नु ॥ स्तोषम्महोधर्म्माणन्तविषीम्‌ ॥ यस्यत्त्रितो
व्योजसावृत्रंविपर्व्वमर्दयत्‌ ॥ ७ ॥ अन्वित्‌ ॥ अन्विदनुमतेत्त्व

विपर्वविपर्वणाम्‌ विगतसन्धिबन्धनंकृत्वा । व्यमर्दयत्‌ विविधंमर्दितवान्‌ । तम्‌ पितुम्‌ अ-
न्नम्‌ नुरनर्थकः । स्तोषम्स्तौमि । महःमहतः धर्माणम्धारयितारम्‌ । तविषीम्‌ तविषाः
इतिविभक्तिव्यत्ययः । तविषीतिबलनाम । तवतेर्द्धिकर्मणः बलस्य ॥ ७ ॥ अन्वित्‌ ।
चतस्रोनुष्टुभः । अनुमन्यासै अनुमन्यस्व । इदितिनिपातः पादपूरणः । हेअनुमते । त्वम्‌ ।

शंचसुखंच नःअस्माकम् कृधिकुरु हेअनुमते । क्रत्वेक्रतवे संकल्पाय । दक्षायतत्समृद्धये संकल्पसिद्धयेच । नःअस्मान् हिनुगमय । प्रणआयूंषितारिषः । प्रतारिषः प्रवर्द्धयच नः अस्माकमायूंषि ॥ ८ ॥ अनुनः । अनुमन्यताम् । नःअस्माकम् अद्यअनुमतिः यज्ञम् देवेषुयज्ञियेषु । अग्निश्चअनुमन्यताम् । हव्यवाहनः हविषोवोढा । भवतंभवतामितिपुरुषव्यत्ययः ।

स्मन्न्यासिश्चन्नस्कृधि ॥ क्रत्वेदक्षायनोहिनुप्प्रणऽआयूंᳪंषितारिषः ॥ ८ ॥ शतम् ॥ १८०० ॥ अनुनः ॥ अनुनोद्यानुमतिर्य्यज्ञन्देवेषुमन्न्यताम् ॥ अग्गिनश्चहव्यवाहनोभवतन्दाशुषेमयः ॥ ९ ॥ सिनीवालिपृथुष्टुके ॥ सिनीवालिपृथुष्टुकेयादेवानामसिस्वसा ॥

दाशुषेहवींषि दत्तवतेयजमानाय । मयःसुखरूपौ ॥ ९ ॥ सिनीवालि । सिनीवालीदेवपत्नी । हेसिनीवालि । हेपृथुष्टुकेपृथुसंयमितकेशभारे । साहास्तुतिर्वा पृथुष्टुका । यात्वंदेवानाम् असिभवसि स्वसाभगिनी । तांत्वांब्रवीमि । जुषस्व प्रीत्यापरिगृह्णीष्व हव्यंहविः । आहुतमभि-

हुतमग्नौ। प्रजांच हेदेविदिदिड्ढि। दिश्यतिसृज देहि नः अस्मभ्यम् ॥ १० ॥ पञ्चनद्यः सरस्व-
तीम्। नदीदेवतायाः पञ्चनद्यः दृषद्वती शतद्रू चन्द्रभागाविपाशैरावती त्यादिकाः। सर-
स्वतीम् अपियन्तिअपिगच्छन्ति। सस्रोतसः। समानानिस्रोतांसि यासां तास्तथोक्ताः। सर-
स्वतीतु। तुशब्दोवधारणार्थः। सरस्वत्येवपञ्चधा। सोसाचस्वदेशेभवत् भवतिसरित् नदी।

जुषस्वंहुव्यमाहुतम्प्रजान्देविदिदिड्ढिनः ॥ १० ॥ [ १० ] पञ्चनद्यः ॥ पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ ११ ॥ त्वमग्ने ॥ प्रथमोऽअङ्गिराऽऋषिर्देवोदेवानामभवः शिवः सखा ॥ तवव्रतेकवयोविद्मनापसोजायन्तम

तस्यांहिसारस्वतानि सत्राणिभवन्ति ॥ ११ ॥ त्वमग्ने। चतस्रआग्नेय्यः। द्वे जगत्यौ अन्येत्रि-
ष्टुवनुष्टुभौ। हेअग्ने त्वम्प्रथमआद्यः अङ्गिराःऋषिः अभवः। त्वंचप्रथमः देवःदेवानामभवः।
शिवःकल्याणः सखासमनख्यानः। किञ्च तवव्रतेकर्मणिवर्त्तमानाः कवयःक्रान्तदर्शनाः। विद्म-
नापसः अपइतिकर्मनाम। विदितकर्माणः। अजायन्तसंहताःमरुतः। भ्राजन्त्यः ऋष्टयःखड्गा-

येषांते भ्राजदृष्टय:। योहिश्रत्रून्जयति भ्राजन्तेतस्यायुधानि ॥ १२ ॥ त्वन्न:। विष मोयंमंत्र: साध्याहा:। त्वंन:अस्माकम् हेअग्ने आश्रयइतिशेष: । अथैवंसति । तव हेदेव । पायुभि: पालनै: धैर्य्यावलम्बिभि: पालिता:सन्त: आस्महे। किञ्च मघोनोरच धनानिरच। तन्व: शरीराणिचरच। हेवन्द्य वंदितव्य। कस्मात्पुनस्त्वमेवमुच्यसे । यत:स्वभावतएवत्रातातोकस्यपु-

रुतोभ्राजंदृष्टय: ॥ १२ ॥ त्वन्न: ॥ त्वन्नोऽअग्नेतवदेवपायुभि र्मघोनोरक्षतन्न्वश्चवन्द्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषꣳ र क्षमाणस्तवव्व्रते ॥१३॥ उत्तानायामवं ॥ भराचिकित्वान्सद्यः प्रवी ताव्वृषणञ्जजान ॥ अरुषस्तूपोरुशदस्यपाजऽइडायास्पुत्रोव्वयुनेज

नस्य। तनयेतनयस्यपौत्रस्यच। गवांचअसि। कथम्। अनिमेषम् रचमाण:। प्रमादमकुर्वन्र-चमा:। एवंचेत् हेदुच्छदयतमोसि। तवव्रतेतत्रकर्मणि वयंस्याम। अन्यादेवता: परित्यज्यत्वामे-वपरिचरामइत्यभिप्राय: ॥ १३ ॥ उत्तानायामव। द्वितीयोर्द्धर्च:प्रथमंव्याख्यायते योग्यत्वात्। योयम् अरुषस्तूप:। ज्वालासंघातमूर्ति:। यस्यचास्य रुशत्पाज:दीप्तंबलम्। यस्य इडाया:पृथिव्या:पुत्र:।

यस्य वयुनेप्रज्ञाने कर्त्तव्येअजनिष्टजातः तमग्निम् । उत्तानायाम् अरण्याम्अवभर । अवाचीनं-
हर । चिकित्वान्जानानः अरण्यावीर्यमितिशेषः । किन्तद्वीर्यमितिचेत् । सद्यः प्रवीताद्वृषणं-
जजान । सद्यएवप्रवीताकामितासती वृषणंवर्षितारंसेक्तारं युवानंसर्वकर्मसंचमंजनयतीति ॥ १४ ॥
इडयास्त्वा । इडयाःपृथिव्याः त्वाम् । पदेदेवयजनाख्ये । वयम्नाभानाभौ पृथिव्याअधि । उत्तर-

निष्ट ॥१४॥ इडायास्त्वा ॥ पदेव्वयन्नाभापृथिव्याऽअधि ॥ जातवेदो
निधीमह्यग्नेहव्व्यायव्वोढवे ॥ १५ ॥ प्रमंन्महे ॥ शवसानायशू
षमाङ्गूषङ्गिर्व्वणसेऽअङ्गिरस्वत् ॥ सुवृक्तिभिस्तुवतऽऋग्मियायार्चा

वेद्यं । नाभिकाभवति तद्विप्रयमेतत् । हेजातवेदः जातप्रज्ञान निधीमहिस्थापयामः । हेअग्ने
हव्यायवोढवे हविषोवहनाय ॥ १५ ॥ प्रमन्महे । चतस्रऐन्द्र्यस्त्रिष्टुभः । प्रमन्महेप्रजानीमः ।
शवसानाय । बलमाविष्कुर्वते । शूषंबलम् । आङ्गूषम्आघोषंस्तोमम् । गिर्वणसेदेवाय । कथ-
मिव । अङ्गिरस्वत् । अङ्गिरसातुल्यप्रज्ञानायच । सुवृक्तिभिःस्तुवते । सुवृक्ताभिःशो भनाभिः

स्तुतिभिः । स्तुवन्तीतिविभक्तिव्यत्ययःसामर्थ्यात् । ऋग्मियायऋङ्मयाय स्तुतिमयाय । अर्चनीयायच । वयम्अर्चामः अर्कम्उच्चारयामःमंत्रम् । नरेन्द्ररूपाय । विश्रुताय । शौर्यवलदानादिलब्ध्यातये ॥ १६ ॥ प्रवः । सामर्थ्याद्वितीयोर्द्धर्चःप्रथमंव्याख्यायते । येनसाम्ना नःअस्माकम् । पूर्वेपितरःपदज्ञाः आत्मसत्तत्ववेदिनः । अर्चन्तःस्तुवन्तः अङ्गिरसःऋषयः गाःअविन्दन् । आदिमार्कन्नरेविश्रुताय ॥ १६ ॥ प्रवः ॥ प्रवोमहेमहिनमोभरध्वमाङ्गूष्यꣳशवसानायसाम ॥ येनानःपूर्वेपितरःपदज्ञाऽअर्चन्तोऽअङ्गिरसोगाऽअविन्दन् ॥ १७ ॥ इच्छन्तित्वा ॥ सोम्यासःसखायःसुन्वन्त्यरश्मीन्लब्धवन्तः । सहिसाम्नांलोकः । तत्साम । प्रभरध्वम् । आहरध्वम् । वःप्रथमाबहुवचनस्यस्थानेवआदेशः । यूयम् हेपुत्रपौत्रप्रपौत्राः । महेमहतेइन्द्राय । महिमहत्त्वम् । नमः अन्नम् आङ्गूष्यम् स्तोमस्यचहितम् साम । प्रभरध्वम् । सबसानाय । वलमभिलषमानाय ॥ १७ ॥ इच्छन्तित्वा । इच्छन्तित्वाम् । सोम्यासःसोमसंपादिनः । सखायःसमानख्यानाः । कथंसमान-

स्थानाः । श्रुतौ । द्वयावैदेवाः । अहैवंदेवाः । अथयेब्राह्मणाःशुश्रुवांसोनूचानाः तेमनुष्यदेवा-
इति । केनप्रकारेणइच्छन्ति । सुन्वन्तिसोमम् अभिषुण्वन्तिसोमम् । दधतिप्रयांसि । प्रयइत्य-
न्ननाम । धारयन्तिच हविर्लक्षणान्यन्नानि । किञ्च । तितिक्षन्तेअभिशस्तिंजनानाम् । मनोवा-
क्कायसंयता क्षान्तिपराः । अभिशस्तिन्दुर्वचनंजनानांसहन्ते । अथैवंत्वामिच्छताम् हेइन्द्र । त्वत्
त्वत्तःशकासात् आसमन्ताद्भावेन । कःचन । चनोनिपातोप्यर्थे । हिरनर्थकः । कोपि । प्रकेतः

## न्तिसोमन्दधतिप्प्रयांꣳसि ॥ तितिक्षन्तेऽअभिशस्तिञ्जनानामिन्द्र त्वदाकश्चनहिप्प्रकेतः ॥ १८॥ नते ॥ दूरेपरमाचिद्रजाꣳस्यातुप्प्र याहिहरिवोहरिभ्याम् ॥ स्थिरायवृष्णसवनाकृतेमायुक्ताग्ग्रा

प्रज्ञानविशेषः । अस्त्यर्थंभवति । यजमानानामितिशेषः ॥ १८ ॥ नते । नहितेतव दूरेपिपर-
मापरमाणिविप्रकृष्टदेशानि । रजांसिस्थानानि । एवंचेत् । आप्रयाहिआयाहि तुतूर्णम् । हेह-
रिवः हरिभ्याम्अश्वाभ्याम् । किमर्थम्स्थिरायदृढसौहृदाय । वृष्णोसेक्त्रे । सवनाकृतेमा । सवना-
निकृतानिइमानि । किञ्च । युक्ताःअभिषवकर्मणि । ग्रावाणः । समिधानेसमिध्यमानेच अग्नौ-

आहवनीयाख्ये आहुतयःहोष्यन्ते। अतस्त्वआयाहि ॥ १६ ॥ अषाढंयुत्सु। अषाढम्असोढम्। युत्सुयुद्धेषु। पृतनासुसैन्येषु। पप्रिम्। पृपालनपूरणयोरित्यस्यैतद्रूपं नतुप्रापूरणइत्यस्य। पप्रिंपालनशीलम्। स्वर्षाम्स्वर्दिवंसनोतिसतथातम्। अप्साम्अपःसनोतिसंभजते सतथातम्वृजनस्यगोपाम्। वलस्यगोप्तारम्। भरेषुजाम्। जयतेरेतद्रूपंनतुजानतेः। संग्रामेषुजेतारम्। सुक्षितिम्। सुनिवासम्। श्रवसम्कल्याणकर्मकर्तृत्वेनप्रसिद्धम्। जयन्तंत्वाम्अनुमदेम। मदेर्मोदनार्थस्यग्रहणम। परसैन्यानिजयन्तंत्वांदृष्ट्वा उत्साद्यन्ते ततद्दृष्ट्वाप्रहृष्टाःस्याम हेसोम ॥ २० ॥ सोमोधेनुम्। सोमःधेनुन्ददाति। सोमएवअर्वंतम्अश्वम् आशुम्शीघ्रगतिंददाति। सोमएवचवीरंपुत्रम् कर्मण्यम्कर्मणिसाधुं ददाति। तमेत्रविशिनष्टि। सादन्यंसदनेसाधुम्। विदथ्यंविदथेयज्ञे-

वांणाᳩ समिधानेऽअग्नौ ॥ १६ ॥ अषांढंयुत्सु ॥ पृतंनासुपप्प्रिᳬस्वर्षामुप्प्सांव्वृजनंस्यगोपाम् ॥ भुरेषुजाᳬसुंक्षितिᳬ०सुश्रवंसुञ्जयंन्तन्त्वामनुंमदेमसोम ॥ २० ॥ [१०] सोमोंधेनुम् ॥ सोमोंधेनुᳩसोमोऽअ

साधुम्। सभेयम् सभामर्हतिसभेयस्तम्। पितृश्रवणम् पितुरनुशासनेचस्थितम् विनीतमित्यर्थः। यःयजमानःददाशत्तस्मैसोमायहविः तस्मैसोमोधेन्वादीन्ददातीत्यभिसंबन्धः॥ २१॥ त्वमिमाः। हेसोम त्वम् इमाःओषधीः विश्वाःसर्वाः अजनयः जनितवानसि त्वम् अपःअजनयः। त्वङ्गाःअजनयः। त्वमाततन्थ आततवानसि उरुविस्तीर्णमन्तरिक्षम्। त्वंज्योतिषावितमोववर्थ

र्वन्तमाशुꣳसोमोवीरङ्कर्मण्यन्ददाति॥ सादन्यं विदथ्यꣳसभेयं पितृश्रवणंयोददाशदस्मै॥ २१॥ त्वमिमाः॥ त्वमिमाऽओषधीः सोमविश्वास्त्वमपोऽअजनयस्त्वङ्गाः॥ त्वमाततन्थोर्वन्तरिक्षन्त्वञ्ज्योतिषाվितमोववर्थ॥ २२॥ देवेननः॥ देवेननोमनसादेव

विदृष्टोपितमः। त्वमेवादित्यात्मनातमोपनयसि। सर्वात्मत्वेनस्तुतिः॥ २२॥ देवेननः। दैवेनेतिप्राप्ते तद्धितलोपश्छान्दसः। दैवेनमनसासहनःअस्मभ्यम्। रायोभागम्धनस्यभागम्। सहस्शवःबलवचनः सान्तः तत्र अकारागमश्छान्दसः। हेसहस्वन् अभियुध्य। युध्यतिर्गत्यर्थानांमध्ये-

पठ्यते अन्तर्भावितण्यर्थंश्चरच्छतौ । अभिगमयदेहीत्यर्थः । एवंदानप्रवृत्तन्त्वांकश्चित्प्रतिवध्नीयादित्य-
तआह । माचत्त्वाम् आतनत् । तनोतिःप्रतिवन्धार्थः । प्रतिवध्नातु कुतस्त्वमेवमुच्यसइतिचेत् ।
इंशिषेवीर्यस्य यतस्त्वं स्वकीयस्यवीरकर्मणः इंशिषेईश्वरोयस्त्वमित्यभिप्रायः । किञ्चउभयेभ्यः
प्रचिकित्सउभयलोकप्राप्त्यर्थं व्याधप्रपगमंकुर्वित्यभिप्रायः । गविष्टौ गोशब्देनात्रद्युलोकोभिप्रेतः ।
स्वर्गैषणायाञ्चविषयभूतायाम् अस्मान् प्रचिकित्स । देवंसनःप्राप्य लब्धधना अरोगाश्च यथा-

सोमरायोभागं सहसावन्नभियुध्य ॥ मात्वातनदीशिषेवीर्यस्योभयेभ्यःप्रचिकित्सागविष्टौ ॥ २३ ॥ अष्टौव्य ॥ अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिन्धून् ॥ हिरण्याक्षः सं

स्वर्गयास्यामस्तथाकुर्वितिवाक्यार्थः ॥ २३ ॥ अष्टौव्यख्यत् । चतस्रःसावित्र्यः द्वितीयाजगतीत्रिष्टु-
भोन्याः । यःअष्टौव्यख्यत् प्रकाशितवान्ककुभःदिशः । चतस्रोदिशः चतस्रोवान्तरदिशः । पृथिव्याः
संवन्धिनीः । त्रीधन्व । त्रीणिधन्वानि इतिशब्दसमाधिः । धन्वइत्यन्तरिक्षनाम तदुपलक्षितावित-
रावपिलोकौगृह्येते । छन्दिणीयान्तीतियथा । यश्च त्रीन्लोकान्व्यख्यत् । यश्चयोजनान् योजनग-
व्यूतिक्रोशादीन् मानविशेषान्व्यख्यत् । यश्चसप्तसिन्धून् यश्चसप्तसमुद्रान् व्यख्यत् । सोयंहिरण्याक्षः

हिरण्यसदृशाक्षः । अमृतदृष्टिर्वा सविता देवः आअगात् आगतु । किंकुर्वन्नित्यत आह । दधत् स्थापयन् रत्नानि रत्नमयानि धनानि । दाशुषेहवींषि दत्तवते यजमानाय । वार्याणि वरणीयानि ॥ २४ ॥ हिरण्यपाणिः सविता । सुवर्णपाणिः सविता । विचर्षणिः विविधंद्रष्टा कृताकृतप्रत्यवेक्षकः । उभेद्यावापृथिवी अन्तः अधिकरणश्रुतेर्योग्यक्रियायाअध्याहारः । मध्येस्थितः ईयते एति यदा । अथतदा अपामीवांबाधते अमीवां व्याधिम् । वेति विगतिकर्मा । गच्छति सूर्यं सूर्यरूपमवस्थाय ।

**वि॒ता दे॒वऽआग॒ाद्दध॒द्रत्ना॑ दा॒शुषे॒ वार्या॑णि ॥ २४ ॥ हिर॑ण्यपाणिः स॒वि॒ता ॥ विच॑र्षणिरु॒भे द्यावा॑पृथि॒वीऽअ॒न्तरी॑यते ॥ अपामी॑वाम्बाध॑ते॒ वेति॒ सूर्य॑म॒भि कृ॒ष्णेन॒ रज॑सा॒ द्याम्ृ॑णोति ॥२५॥ हिर॑ण्यहस्तोऽअसु॑रः ॥ सु॒नी॒थः सु॑मृ॒डी॒कः स्ववा॑ऀ यात्व॒र्वाङ् ॥ अ॒प॒सेध॑न्र॒क्षसो॑ यातु॒धाना॒नस्था॑**

ततोऽस्तमनकाले । अभिकृष्णेनरजसाद्यामृणोति । अभिऋणोति अभिव्याप्नोति कृष्णेनरजसा तमोलक्षणेन । द्यां द्युलोकम् ॥ २५ ॥ हिरण्यहस्तः । द्वितीयोऽर्द्धर्चः प्रथमं व्याख्यायते सामर्थ्यात् । यः अपसेधन् अपगमयन् रक्षसः यातुधानान् असुखकारकान् । अस्थात् उदस्थात् । देवः प्रतिदोषं गणानः । श्रुतिस्मृतिविहितधर्मपराङ्मुखानां यावन्तो दोषास्तावतः स्तुवन् उच्चारयन् गणयन्

उपभोगार्थमित्यभिप्रायः। सोयंसविता हिरण्यहस्तः हिरण्यदानार्थंहस्तौयस्यसतथोक्तः। रूपेणा-वास्तुतिः। असुरःरादाने असून्प्राणान्ददातीत्यसुरः। सुनीथः नीथास्तुतिः। कल्याणस्तुतिः। सुमृडीकःसाधुसुखयिता। स्ववान् आत्मीयज्ञातिधनवचनः स्वशब्दः। यातुआयातु। अर्वाङ्अ-र्वागञ्च नःअस्मनभिमुखः॥ २६॥ येतेपन्थाः। येतेतवपन्थाः पन्थानइतिवचनव्यत्ययः। हेसवितः

हेदेवऽप्प्रतितिष्ठोषङ्गृणानऽ॥ २६॥ येते॥ येतेपन्थाऽसवितऽपूर्व्यासो रेणवऽ सुकृताऽअन्तरिक्षे॥ तेभिर्नोऽअद्यपथिभिःसुगेभीरक्षाच नोऽअधिचब्रूहिदेव॥ २७॥ उभापिबतम्॥ उभापिबतमश्विना

पूर्व्यासः पूर्वेष्वपिकालेषुभवाः। अरेणवः अपांशुलाः। सुकृताःसाधुकृताः धात्रा। अन्तरिक्षे तेभिः तैः नःअस्मान् अद्यनयेतिशेषः। पथिभिः सुगेभिः साधुगमनैः अन्नपानप्रभूतैर्गच्छतः शिवम् रक्षाच रक्षच नःअस्मान्। अधिचब्रूहि। अङ्गीकृत्यचब्रूहि। यथाएतेअस्मदीयाइति। यद्वा यद-स्माकं हितंपथ्यं तदधिब्रूहि उपदिश हेदेवदानागुणयुक्त॥ २७॥ उभापिवतम्। आश्विन्य-

स्तिस्रः एकागायत्रीद्वेत्रिष्टुभौ । उभौसोममपिबतम् हेअश्विनौ । पीत्वाचसोमम् उभावपि नःअ-
स्मभ्यम् शर्मशरणं प्रयच्छतम्दत्तम् । किञ्च अविद्रियाभिः द्दविदारणे अविदीर्णाभिः अनवख-
ण्डिताभिः ऊतिभिरवनैः रक्षतमितिशेषः ॥ २८ ॥ अप्नस्वतीम् । अप्नइतिकर्मनाम कर्मवतीम्
हेअश्विनौ वाचम् अस्मेअस्माकम् कृतंकुरुतम् । किञ्च नःअस्माकम् हेदस्रौदर्शनीयौ हेवृष-
णौवर्षितारौ युवानावित्यर्थः । मनीषांमनसःसंबन्धिनीमिच्छांच । अप्नस्वतीमेवकृतम् । कस्मात्पु-

नोभानःशर्मयच्छतम् ॥ अविद्रियाभिरूतिभिः ॥ २८ ॥ अप्नस्वतीम
श्विना ॥ अप्नस्वतीमश्विनावाचमस्मेकृतन्नोदस्रावृषणामनी
षाम् ॥ अद्यूत्येवसेनिह्वयेवांवृधेचनोभवतंवाजसातौ ॥ २९ ॥
द्युभिरक्तुभिः ॥ द्युभिरक्तुभिःपरिपातमस्मानरिष्टेभिरश्विना

नरहमेवंब्रवीमि । यतःअद्यूत्येअवसे । द्यूतेभवमवसमन्नंद्यूत्यम् । द्यूतादागतं कर्मख्यंनभवति
अतएवमुच्यते । अद्यूत्ये अन्नेनिमित्तभूते । निह्वयेवाम्आह्वयामियुवाम् । आगत्यच । वृधेवर्द्धनायच
नःअस्माकम्भवतम् । वाजसातौ वाजसंभजननिमित्तभूते संग्रामेच यज्ञेवावर्द्धनायैवभवतम् ॥ २९ ॥
द्युभिरक्तुभिः । द्युभिरहोभिः कारणभूतैः अक्तुभिः अक्तुरात्रिः रात्रिभिश्च कारणभूताभिः ।

अधिकरणविवक्षाया । कालेहि दूरपुरान्त्रिषुवा । परिसर्वतःपातम् परिपालयतम् युवामस्मान् । नकेवलमृदुग्भिरकुतुभिः परिपातमस्मान् । किंतर्हि । अरिष्टेभिः अनुहिंसितैः हेअश्विनौ- सौभगेभिः । भगद्युतिधननाम । शोभनैस्वधनैः । योजयतमित्यध्याहारः । तत् नःअस्माकम्मित्रः वरुणश्च मामहन्तांपूजयन्ताम । अदितिश्चसिन्धुश्च पृथिवीचउतअपिचद्यौः ॥ ३० ॥ आकृष्णेनेतिस्वा-

सौभगेभिः ॥ तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥३०॥ [१०] आकृष्णेन ॥ रजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ३१ ॥ आरात्रि ॥ पार्थिवंरजः पितुरप्रायिधामभिः ॥ दिवः सदांसि

स्यातम ॥ ३१ ॥ आरात्रि । रात्रिदेवत्याबृहती । हेरात्रियात्वम् आअप्रायिआअपूपुरःआपूरयसि । पार्थिवंरजःपृथिवीसंबन्धिलोकम् पितुः मध्यमस्यलोकस्यधामभिःस्थानैःसह । याचत्वम् दिवःद्युलोकस्यसदांसिस्थानानि । बृहतीमहतीविति छसीआक्रामसि । यस्यास्ते । तथापिआवर्त्तते । त्वेषंम-

हाप्राग्भारंदीप्तंवातम:तांत्वांस्तुम: । ३२।। उषस्तत् । उषोदेवत्यापरोष्णिक् । हेउष: तत्‌चित्रंचायनीयं महनीयंधनमस्माभर आहरअस्मभ्यम् हेवाजिनीवतिअन्नवति । येनधनेनतोकंच तनयंचपौत्रंच धामहे दधमहे ।। ३३ ।। प्रातरग्निम् बहुदेवत्याजगती । प्रात:शब्दो विप्सावचन: । प्रात:प्रात: पुन:

बहुतोबिभर्तिं ऽस्ऽआत्ममेषं व्वंर्त्ततुतम: ।। ३२ ।। उषस्तत् ।। उषस्तच्चि

त्रमाभंरास्मभ्यंव्वाजिनीवति ।। येनंतोकञ्चतनंयञ्चधामंहे ।।३३।।

प्रातरग्निम् ।। प्रातरग्निम्प्रातरिन्द्रं॑ हवामहेप्रातर्म्मित्रावरुंणाप्प्रा

तरश्विनां ।। प्रातर्ब्भगंम्पूषणम्ब्रह्मणस्पतिम्प्रातः सोमंमुतरुद्रं हुं

वेम ।। ३४ ।। प्रातर्ज्जितम्भगंम् ।। प्रातर्ज्जितम्भगंमुग्ग्रं हुंवेमव्वय

पुन: । अग्निञ्च इन्द्रञ्च मित्रावरुणौच अश्विनौच । हवामहइतिप्रत्येकमभिसंबध्यते । प्रात:भगञ्च पूषणञ्च ब्रह्मणस्पतिञ्च प्रात:सोमम् उतअपिच रुद्रम् हुवेमआह्वयाम: ।।३४।। प्रातर्जितम् । पञ्चभ-गदेवत्यास्त्रिष्टुभ: । योविधर्त्तेत्यादि मन्त्रोव्याख्यायते उद्दिश्यमानत्वात् । य:भग: विधर्त्ताविधारयिता

सर्वस्यजगतः। आध्रश्चिदयम् प्रतिषेधस्यदीर्घत्वंछान्दसम्। आध्रः भैक्ष्यप्सौ। अदन्नःबुभुक्षितः। अथ वाध्रियतेः आध्रःदरिद्रः चिच्छब्दोप्यर्थे। दरिद्रोपियंभगंमन्यमानः मन्यतेरर्चतिकर्मा। पूजयन्स्वार्थसिद्धये भगम्भक्षिद्दित्याह उदयम्भक्षयस्व भजस्वद्दित्याह। तुरश्चित् आङोध्याहारः। आतुरोपि आतुरोपि यंभगं मन्यमानःभक्षीत्याह। उदयंभक्षयस्वद्दित्याह। यद्वातुरशब्देन यमोभिधीयते। सद्दितूर्णंप्राणिनोहन्ति। यमोपि यंभगं मन्यमानः भक्षीत्याह। उदयंभक्षयस्वेत्याह। सहि-

पुत्रमदितेर्यो विधर्ता ॥ आध्रश्चिद्यम्मन्यमानस्तुरश्चिद्राजा चिद्यम्भगम्भक्षीत्याह ॥ ३५ ॥ भगप्रणेतः ॥ भगप्रणेतर्भग सत्य राधो भगेमान्धियमुदवा ददन्नः ॥ भगप्रणो जनय गोभिरश्वैर्भग प्र

दिवसान् प्राणिनोगणयति। राजाचित् राजापियंभगंमन्यमानः भक्षीत्याह उदयंभक्षयस्व भजस्वेत्याह। तदुदयेहि राज्ञांवार्त्तासिद्धिः। तंप्रातर्जितम् प्रातर्जयिनंभगम् उग्रमुदग्गूर्णदानम् हुवेमआह्वयामः। वयम् ऋषिरात्मानमाह। पुत्रम् अदितेः ॥ ३५ ॥ भगप्रणेतः। हेभग हेप्रणेतः प्रकर्षेणनयस्यकर्त्तः। हेभग हेसत्यराधः सत्यमविनाशिराधोधनंयस्य। सतथोक्तः।

हेभग इमांधियंप्रत्ताम् उत्अवउद्गमय । यथासूक्ष्मानर्थान् पश्याम: तथाकुर्वित्यभिप्राय: । ददत् न:देहिअसम्ब्यम्धनम् । भगप्रनोजनयगोभिरश्वै: । हेभगप्रजनयन:अस्मान् गोभि: अश्वैश्च । हेभग नृभि:मनुष्यै: नृवन्त:स्यामभवेम ॥ ३६ ॥ उतेदानीम । उतअपिच इदानीं-भगवन्त: स्यामआदित्यप्रसादात् । उतअपिचप्रपित्वेप्राप्ते अस्तमनकाले भगवन्त:स्याम । उत-

नृभिर्न्नृवन्त॑: स्याम ॥ ३६ ॥ उतेदानी॑म् ॥ उतेदानीम्भग॑वन्त: स्यामोतप्र॑पित्वऽउतमध्ध्येऽअह्नाम् ॥ उतोदि॑तामघवन्त्सूर्य्यस्य व्वयन्देवानाँ सुमतौस्याम ॥ ३७ ॥ भगऽएव ॥ भगंबारँऽअस्तुदेवा स्तेनंव्वयम्भगंवन्तऽस्याम ॥ तन्त्वांभगसर्व्वऽइज्जोहवीतिसनोभगपु

अपिच मध्येमध्यन्दिने अन्हांभगवन्त:स्याम । उतोदिता उतअपिच उदिताउदयकाले हेम-घवन् धनवन् सूर्यस्यभगवत: प्रसादादेववयम् देवानांसुमतौकल्याण्यांमतौस्यामभवेम ॥ ३७ ॥ भगएव । हेदेवा: भगएवभगवान्धनवान्अस्तु । किमन्यैर्देवताविशेषै र्धनयुक्तैरदाटभिरित्यभि-

प्राय: । तेनभगप्रदत्तेन धनेनवयंभगवन्त. धनवन्त: स्यामभवेम । एकंवाक्यम् । द्वितीयेनाद्वंद्वचें-नद्वितीयम् एकवाक्यनाद्यास्त्रसंभवात् । तंत्वा । उपरितद्धवणात् यदोवष्टत्तिः । यंत्वाम् । हेभग सर्वद्भत् सर्वएवजोहवीति आह्वयतिकामसिद्धये । सन:अस्माकम् हेभगपुरएताअग्रयायी सर्वका-कार्येषुभवइह ॥ ३८ ॥ समध्वराय । समनमन्तप्रह्वीभवन्ति याउषस: अध्वराययज्ञाय । अग्निहो-त्रादिकर्मणे कयमिव । दधिक्रावेव । यथादधिक्रावाअश्व: शुचयेपदाय । शुचिपदम् अग्न्या-

ऽएताभंवेह ॥ ३८ ॥ समंद्धरायं ॥ समंद्धरायोपसौनमन्तद धिक्रावेवशुचंयेपुदायं ॥ अर्वाचीनंवंसुविदम्भगंन्नोरथंमिवाश्श्वांवा जिनुऽआवंहन्तु ॥ ३९ ॥ अश्श्वांवतीर्गोर्मंतीऽ ॥ अश्श्वांवतीर्गोमं

आनार्थंकर्त्तव्यमितिसन्नमते । एवंताउषस: । अर्वाचीनम् । अनन्यगतमनस्कम् । वसुविदंच । वसुधनंविन्दतीतिवसुवित् तंवसुविदम् । भगम् आदित्यम् न:अस्मान्प्रति । रथमिव । अश्वा: वाजिन: वेजनवन्त: अन्नवन्तोवा । आवहन्तु आगमयन्तु ॥ ३९ ॥ अश्वावती: । उषोदेव-त्यात्रिष्टुप् । अश्ववत्य:गोमत्य:न:अस्माकम् । उषास:वीरवत्य:सदम् सदाकालम् उच्छन्तु । उच्छी-

विवाशे। विवासयन्तु तमः। भद्राःभन्दनीयाः। घृतमवघ्यायजलंदुहानाः। विश्वतः प्रपीताः। प्याय:पौश्चादेशः। सर्वतःआयायिताः धर्मार्थकामैः। इदानीमृत्विग्विषयःप्रश्नः। यूयंपातपाल-यतस्वस्तिभिरविनाशैः सदानःअस्मान् ॥ ४० ॥ पूषन् तव। द्वे पौष्ण्यौ गायत्रीत्रिष्टुभौ। हेपूषन् तवव्रतेकर्मणि वर्त्तमानावयम् नरिष्येमनविनश्येम कदाचनकदाचिदपि। अन्यच्च।

तीर्न्नऽउषासोंश्वीरवंतोऽसदंमुच्छन्तुभद्राः॥ घृतन्दुहांनाव्विश्वतः प्रपीतायूयंपातस्वस्तिभिः सदांनः॥ ४० ॥ [ १० ] पूषन्तवं ॥ व्व्रते व्वयन्नरिष्येमकदांचन ॥ स्तोतारंस्तऽइहस्मंसि ॥ ४१॥ पथस्पथः परिंपतिम् ॥ पथस्पथःपरिंपतिंव्वचस्याकामेंनकृतोऽअभ्यानडर्कम्॥

स्तोतारोपि। तेतव। इहस्मसि। स्म। इदन् तोमसि इतीकारउपजनः ॥ ४१ ॥ पथस्पथः। यःपथस्पथः मार्गस्यपरिपतिम् अधिपतिमित्युपसर्गव्यत्ययः। वचस्यावचनेन वेदोक्तेनअभिमुखीकृतः। कामेनइच्छयाच अभिमुखीकृतः। अभ्यानट्। अनशिर्व्याप्तिकर्मा। अभिव्याप्नोति।

अर्कम्। सः नःअस्मभ्यम् रासत् ददातु। शुरुधः। पूर्वपदान्तलोपः। शुचंसंतापंसाधनाभा-वकृतं यानिरुधन्ति साधनानिभवन्ति तानितथोक्तानिलिङ्गव्यत्ययेन। चन्द्राग्राः। तान्येव-विशिषयन्ते। चायनीयाग्राणि। धियंधियंसीषधाति। कर्मंकर्मबचनः प्रसाधयति। पूषा॥ ४२॥ त्रीणिपदा। वैष्णव्यौगायत्र्यौ। द्वाभ्यामेकवाक्यम्। यःविष्णुःयज्ञः त्रीणिपदानि। विचक्रमेक्रा-

सनोरासच्छुरुधश्चन्द्राग्राधियंधियःसीषधातिप्रपूषा॥४२॥ त्रीणिं पुदाविचंक्रमेविष्णुर्गोपाऽअदाभ्यः॥ अतोधर्म्माणिधारयंन्॥४३॥ तद्विप्रासः॥ तद्विप्रासोविपुन्यवोजागृवाꣳसःसमिन्धते॥ विष्णो

न्तवान् अग्निवाय्वादित्याख्यानि। गोपाःगोपायिताच समस्तस्यजगतः। अदाभ्यःअनुपहिंस्यः। अतःअस्मादेवपदत्रयात् धर्माणि। धर्मशब्दउभयलिङ्गः अर्द्धचादौहिगणेपठितः। धर्मान्धा-रयन्। कर्मपर्यायोवा। अतः एभ्यःपदेभ्यः कर्माणिधारयन्॥ ४३॥ तद्विप्रासः। तस्यविष्णो-र्यज्ञस्य यत्परमंपदं ब्रह्मलक्षणम्। तत्। विप्रासःब्राह्मणाः विपन्यवः मेधाविनः। जागृवांसः

असुप्ताः अप्रमत्ताः। ज्ञानकर्मसमुच्चयकारिणः। समिन्धते। संदीपयन्ति उपासनैर्निर्मलीकुर्वन्ति॥४४॥
घृतवती। द्यावापृथिवीयाजगती। येद्यवापृथिव्यौघृतवत्यौ उदकवत्यौ। भुवनानामभिश्रिया। भूतजातानामभ्याश्रयणीये। उर्वीविस्तीर्णे। पृथ्वीपृथुले। मधुदुघे। मधूदकंतस्यदोग्ध्र्यौ। सुपेशसासुरूपे। तेवरुणस्यादित्यस्यधर्मणा धारणेन। विष्कभिते। स्कभ्नोतिर्दृढीकरणार्थः। दृढी-
कृतेअभ्युदम्॥ ४४॥ घृतवतीभुवनानाम्॥ घृतवतीभुवनानाम
भिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा॥ द्यावापृथिवीवरुणस्यधर्मणा
विष्कभितेअजरेभूरिरेतसा॥ ४५॥ येनःसपत्नाअपतेभवन्त्विन्द्रा
ग्निभ्यामवबाधामहेतान्॥ वसवोरुद्राआदित्याउपरिस्पृशम्मो
कृते। अजरेजरारहिते। भूरिरेतसा। बहुरेतस्के। सर्वभूतानांहिरेतांसि ताभ्यामेवोत्पद्यन्ते॥४५॥
येनः। जगतीलिङ्गोक्तदेवता। येनःअस्माकम् सपत्नाःशत्रवः। अपतेभवन्तु। अपगतवीर्यानिरुद्यमा-
स्तेभवन्तु। ततः। इन्द्राग्निभ्याम् अववाधामहे अवनाशयामः तान्शत्रून्। किञ्च वसवःरुद्राः

आदित्याश्च। उपरिस्पृशम् उपरिस्थित:स्पृशतीति उपरिस्पृक् आधिपत्येवस्थित: पादेनस्पृशतीति उपरिस्पृक्तं उपरिस्पृशम् मास् उग्रंच। चेत्तारंज्ञातारंचज्ञेयस्य। अधिराजम् अधिपतिमीश्वरंच अक्रन् कृतवन्त:कुर्वन्तुवा।४६॥ आनासत्या। आश्विनीजगती। आयातम् आगच्छतम् हेनासत्याव-श्विनौ। त्रिभिरेकादशे:त्रयस्त्रिंशद्भिर्देवै: सहितौभूत्वा। तदुक्तम्। अष्टौवसवइत्यादि। इदमधुपेयम्।

ग्रग्रञ्चेत्तारमधिराजमक्रन्॥ ४६॥ आनासत्या॥ त्रिभिरेकादशैरि॒हदेवेभिर्यातम्मधुपेयमश्विना॥ प्रायुस्तारिष्टन्नीरपांᳫसिमृक्षतᳬसेधतन्द्वेषोभवतᳬसचाभुवा॥ ४७॥ एषवः॥ एषवस्तोमोमरुतऽइ॒

मधु:सोम:सोमपानंप्रति। एत्यच। प्रायुस्तारिष्टम्। प्रतारिष्टं प्रवर्द्धयतम् आयु:। नीरपांसिमृक्षतम्। मृजूष्शुद्धौ। रप:पापमुच्यते। निर्मृक्षतम्। नि:शोधयतम् नाशयतम्। रपांसिपापानि। सेधतं द्वेष:। षिधुगत्याम्। गमयतम् दौर्भाग्यम् भवतंच। सचा भुवा सहभुवौ सर्वकार्येषुसंयुक्तौ॥ ४७॥ एषव:। मारुतीत्रिष्टुप्। हेमरुत: एषस्तोम: व: युष्माकम्

इयंचगौः सत्याच प्रियाच । मम । मान्दार्य्यस्य ऋषेःसमेति । श्वस्त्रामिसंवन्धम् । इणा-
तीति मान्दार्यः । यद्वा । मान्दारर्याति मांदारयतीत्येवं यःसपत्नानां मत्ययंदधातिसमान्दार्यः
तस्य । ममच । मान्यस्यमानार्हस्य । कारोः कर्तुः तंस्तोमंतांचगिरम् उपस्तुत्य । एषा-
यासीष्ट । आइषायासीष्ट । आयासीष्ट । आयासीरन् इतिवचनव्यत्ययः आगच्छन । इषा-

यङ्गीर्म्मान्दार्य्यस्यंमान्यस्यंकारोः ॥ एषायासीष्टतन्वेंवयांविद्या
मेषंवृजनंजीरदांनुम् ॥४८॥ सहस्तोमाःसहछंन्दसः ॥ सहस्तोमाः
सहछंन्दसआवृतंः सहप्रंमाऋषंयः सप्तदैव्याः ॥ पूर्वैषांपन्थां

अन्नेन निमित्तभूतेनाह्वयमानाः । तन्वेवयास् । शरीरस्थित्यर्थम् वयोहटकर्तुम् । आया-
सीष्ट । किञ्च । विद्याम् लभेमहि । इषमन्नम् हजनंवलंच जीरदानुं जीवितदात्टकर्मच ॥ ४८ ॥
सहस्तोमाः । ऋषिसृष्टिप्रतिपादिकात्रिष्टुप् । सहस्तोमाःस्तोमसहिताः । सहछन्दसः छन्दस्स-
हिताः । आहृतःआहच्छन्देनकर्माभिधीयते । अवासत्यप्रधोनानां कर्मणामनुष्ठातारः । सहप्रमाः ।

प्रमाणंप्रमा । शब्दप्रमाणपरीक्षणतत्पराः ऋषयःसप्त । सप्तऋषयः इतिप्राप्तेव्यत्ययः । भरद्वाज कश्यप गौतमात्रिविश्वामित्र जमदग्नि वसिष्ठाः । दैव्याः प्रजापतेः प्राणाभिमानिनः एतेऽभिव्यज्यमानाः । पूर्वेषाम् अधस्तनकल्पोत्पन्नानां अवसिताधिकाराणाम् । पन्थाम् पन्थानम् । अनुदृश्य अवलोक्य । धीराः अन्वालेभिरे अन्वालभन्तः सृष्टवन्तः सृष्टियज्ञम् कथमिव । रथ्योनर-श्मीन् । रथेसाधुः रथ्यःसारथिः । नकारउपमार्थीयः । यथासारथिरिष्टदेशप्राप्त्यर्थं प्रथमसंस्वर-

मनुदृश्य्यधीराऽअन्न्वालेभिरेरुथ्योनरुश्मीन् ॥ ४९ ॥ आयुष्ष्यं व्वर्च्च स्यम् ॥ आयुष्ष्य्रं व्वर्च्चस्य्ठं रायस्प्पोषमौद्भिदम् ॥ इदꣳहिरण्ण्यंव्व र्च्चस्वज्जैत्र्यायाविंशतादुमाम् ॥५०॥ नतत् ॥ नतद्रक्षांꣳसिनपिंशाचा

श्मीनालभते स्पृशति एवन्तेपिसृष्टियज्ञं सृष्टवन्तः ॥ ४९ ॥ आयुष्यम् । तिस्रःहिरण्यस्तुतिः उष्णि-क्शक्वरीत्रिष्टुभः । यदिदंहिरण्यम् । आयुष्यम् आयुषेहितम् । वर्चस्यं वर्चसेहितम् । रायस्पोषम् धनस्यवर्द्धयितृ । औद्भिदम् उद्भेत्तृ । धनस्यस्वर्गस्यवा । वर्चस्वत् अन्नसंयुक्तम् । तत् जैत्रायविजयाय । आविशतात् आविशतु । उःपादपूरणार्थः । माम् । मय्यवस्थानं करोतु । ५० ॥

नतत् । नतत्हिरण्यंरत्नांसि नचपिशाचाः तरन्तिहिंसन्ति । देवानांप्रथमजम् ओजःहि-
एतत् । यतस्वदेवानामोजः प्रथमजम् अतः योविभर्तिदाक्षायणं हिरण्यम् । दाक्षायणं
हिरण्यम् । दाक्षायणमित्यलंकारविशेषः । सदेवेषुदेवलोकेषु कुरुते दीर्घमायुःचिरंदेवलोकेव-
सतीत्यर्थः । समनुष्येषुकुरुतेदीर्घमायुः । सचमानुष्यमायुरतिक्रम्यजीवतीत्यर्थः ॥ ५१ ॥ यदा-

स्तंरन्तिदेवानामोजः प्रथमजं ह्येतत् ॥ योविभर्तिदाक्षायणं हि
रण्यं सदेवेषुंकृणुतेदीर्घमायुः समनुष्येषुकृणुतेदीर्घमायुः ॥५१॥
यदावंध्नन् ॥ यदाबध्नन्दाक्षायणाहिरण्यं शतानीकायसुमनस्य

वध्नन् । यत्हिरण्यम् आवध्नन्आवद्धवन्तः । दाक्षायणाः दक्षस्यापत्यानिबहूनि । नडादिभ्यः ।
ठात्फक् । शतानीकायराज्ञे । शतंवहूनिअनीकानिसेनायस्य सतथोक्तः तस्मैशतानीकाय ।
सुमनस्यमानाः शोभनेनमनसाध्यायन्तः । तत्हिरण्यम् । मेमयि । आत्मनीतिसम्प्रयुक्तिः ।
अहम् आवध्नामि । शतशारदाय । शतंशरदांजीवनाय । आयुष्मान्च जरदष्टिः जरामश्नुते

व्याप्नोतीतिजरदष्टिः । यथायेनप्रकारेण असंभूयासम् तथावधनामीतिशेषः ॥ ५२ ॥ उतनः । वहुदेवत्यात्रिष्टुप् । उतअपिच । नःअस्माकम् । वचांसि अहिर्बुध्न्यःशृणोतु । [अजएकपात् रुद्रःप्राणोवाशृणोतु । पृथिवीचससमुद्रश्चशृणोतु । श्रुत्वाचअवन्तु । विश्वेचदेवः ऋतावृधः सत्यवृधः यज्ञवृधोवा । हुवानाआहूयमानाः । स्तुताश्च । मन्त्राः मंत्रैरितिविभक्तिव्यत्ययः । कविशस्ताः

## मा॑नाः॒ ॥ तन्नु॒ऽआवं॑ग्ना॒मिघ्रुतग्रा॑रदायायुंष्मा॒ज्जर॑दंष्टिरट्टय॑था सं॑म् ॥ ५२ ॥ उतनः॑ ॥ उ॒तनोऽहि॑र्बु॒ध्न्यः॑ शृणोत्व॒जऽएक॑पात्पृ थि॒वीसं॑मु॒द्रः॑ ॥ विश्वे॒दे॒वाऽऋ॑ता॒वृधो॑हु॒वा॒नास्तु॒तामन्त्राः॑ कविश स्ताऽअ॑वन्तु ॥ ५३ ॥ इमागिरः॑ ॥ इ॒मागिर॑ऽआदि॒त्येभ्यो॑घृ॒तस्नूः॑

स्तामेधाविशस्ताः अवन्तुपालयन्तु ॥ ५३ ॥ इमागिरः । आदित्यदेवत्यात्रिष्टुप् । याइमा गिरः वाचः आदित्येभ्यःघृतस्नूः । घृतप्रस्त्राविणीः घृतप्रसारिणीर्वा । घृतहोमसहचरिताः । सनात् चिरम्चिरकालम् राजभ्यःचिरराजभ्योवा । जुह्वाम्युचाजुहोमि ।ताश्च । शृणोतुमित्रः अर्यमाच ।

भगश्च नः अस्माकम् । तुविजातस्त्वधाताच । सहिवहुशः प्रजायते । वरुणश्चदक्षश्च अंशश्च एतेसूर्यविशेषाः ॥ ५४ ॥ सप्तऋषयः । अध्यात्मवादिनीजगती । सप्तप्राणाः षडिन्द्रियानिमनः सप्तमानि । प्रतिहिताःप्रतिनिहिताः शरीरेव्यवस्थिताःयेतएव । सप्तरक्षन्ति । सदंसदाकालम्शरीरम् । अप्रमादम् प्रमादमकुर्वाणः । तेएवसप्तआपः आपनाःव्यापनाः । स्वपतःपुरु-

सुनाद्दूराजंब्भ्योजुहुव्वाजुहोमि ॥ शृणोतुमित्रोऽअर्य्यमाभगोनस्तु विजातोव्वरुणोदक्षोऽअंऽशः ॥ ५४ ॥ सुप्पतऽऋषयः ॥ सुप्पतऽऋषयः प्रतिहिताः शरीरेसुप्पतरक्षन्तिसदमप्प्रमादम् ॥ सुप्पापुऽस्व

षस्यलोकमृदयुः । लोकशब्देविज्ञानात्माहृदयाकाशप्रतिष्ठितउच्यते । तत्रचसवि तस्थानेः । तस्यामेवावस्थायामजाग्रतःजागरणंकुर्वाते । अस्वप्नजौ । ययोर्नजायतेस्वप्नःतौतथोक्तौ । सत्रसदौ । सत्रे सतांत्राणेकृतावस्थानौ । देवौजीवितदातारौ प्राणापानौ ॥ ५५ ॥ उत्तिष्ट । तिस्रोब्राह्मणस्तमः हे ब्रह्त्यौदतीयात्रिष्टुप् । हेब्रह्मणस्पते उत्तिष्ठ उर्द्धोभवआरब्धकार्योभव । यस्मात्

शु० य० सं० ६९५ उ० भा०

देवयन्तः देवाङ्कामयमानाः यजमानाः त्वाभवन्तम् ईमहे । याचामहेआगच्छेति । भवन्तमागच्छन्तम् उपप्रयन्तु उपसंगम्यआगच्छन्तु । मरुतःसुदानवः कल्याणदानाः । त्वञ्च हेइन्द्र प्राशूःप्रकर्षेणशीघ्रोभव । सचा । सङ्गमनाय ॥ ५६ ॥ प्रनूनम् । नूनमितिपादपूरणः । प्रवदतिप्रोच्चारयति ब्रह्मणस्पतिः मन्त्रम्उक्थ्यम् उक्थ्यमितिशस्त्रमुच्यते । तत्रसन्नमन्त्रःउक्थ्यः ।

पंतोलोकमीयुस्तत्रंजागृतोऽअस्वंप्नजौसत्रुसदौचदेवौ ॥५५॥ उत्तिं ष्ठब्रह्मणस्पतेदेवयन्तंस्त्वेमहे ॥ उपप्रयंन्तुमरुतः सुदानंवऽइ न्द्रंप्राशूर्भवासचां ॥ ५६ ॥ प्रनूनम् ॥ प्रनूनम्ब्रह्मंणस्पतिर्मन्त्रंव दत्युक्थ्यम् ॥ यस्मिन्निन्द्रोवरुणोमित्रोऽअर्य्यमादेवाऽओकांसि चक्रिरे ॥ ५७ ॥ ब्रह्मणस्पते ॥ ब्रह्मंणस्पतेत्वमस्ययन्तासूक्त

कथंभूतोसौमंत्रः । यस्मिन्मंत्रे इन्द्रश्च वरुणश्च अर्यमाच अन्येदेवाश्च ओ कांसि । ओ कइति-निवासनाम । निवासानि चक्रिरेकृतवन्तः ॥ ५७ ॥ ब्रह्मणस्पते हेब्रह्मणस्पते । त्वमस्यजगतः

अ० २४

शिवम् ६९५

यन्त्रा । एवञ्चेत् विज्ञापयामि । सूक्तस्यसाधुवचनस्य वोधिवुधास्य अवगतार्थोभव । तनयस्य । अपत्यानिचजिन्व । जिन्वतिःप्रीतिकर्मा । प्रीणीहि । विश्वंच तत्भद्रं भन्दनीयम् अस्माकम् अस्तु । अत्अवन्तिपालयन्ति देवाःत्वत्प्रसादात् । बृहत्महत् ऊर्जितम् । वदेम । दीयताम्-

स्यबोधितनयस्यजिन्व ॥ विश्वन्तद्भद्रंयदवन्तिदेवाबृहद्वदेमविदथेसुवीराः ॥ यऽइमाविश्वाभुवनानिजुह्वदृषिर्होतान्यसीदत्पितानः । सऽआशिषाद्रविणमिच्छमानःप्रथमच्छदवराँ२ऽआविवेश ॥ विश्वकर्मासुवर्य्योयोनंः पितान्नंपतेन्नंस्यनोदेहि ॥ ५८ ॥ [१८] इतिसंहितापाठेचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

* अपेतः ॥ अपेतोयन्तुपणयो सुम्नादेवपीयवः ॥ अस्य

ज्यतामिति । विदथेयज्ञे । सुवीराःकल्याणपुत्राःसन्तः । अथचतस्य प्रतीकोक्ताः । इमाविश्वाभुवनानिजुह्वत् । विश्वाकर्माविमना । योनःपिता । अन्नपतेन्नस्यनोदेहीति ॥ ५८ ॥

इति उव्वटकृतौ मन्त्रभाष्ये चतुस्त्रिंशत्तमोध्यायः ॥ ३४ ॥

ओम् । अपेतः । (१) पित्र्योध्यायः । आदित्यस्पार्षं देवानांवा । गायत्रीव । पलाशशाखयाव्यूहति ।

(१) त्रयस्त्रिंशेऽध्याये सर्वमेधसम्बन्धिनः कियतो मन्त्रानुक्त्वा प्रवायुमच्छेत्यारभ्य अनारभ्याधीतान्मन्त्रानुक्त्वा चतुस्त्रिंशेऽध्यायेता

* अपेतोदशापाद्यं द्वादशद्वौद्वाविंशतिः ।

नेव समाप्य इदानीं पञ्चत्रिंशेऽध्याये पितृमेधसम्बन्धिनो मन्त्रा उच्यन्ते । स च पितृमेधो मृतस्य वर्षास्मरणे भवति वर्षस्मृतौ तु विषमवर्षेषु भवति एकतारकनक्षत्रे चित्रादौ दर्शे वा ग्रीष्मे शरदि माघे भवति ॥ पितृमेधं करिष्यता द्विजेन कुम्भेऽस्थिसञ्चयः कार्यः । मृतस्य च यावन्तोऽमात्यपुत्रपौत्रास्तावन्तः कुम्भाः कर्मदिने आनेयाः कुम्भेभ्योऽधिकानि छत्राणि च । ततोऽरण्ये कुम्भे कृतमस्थिसञ्चयनं ग्रामसमीपे समानीय शय्यायां कुम्भं संस्थाप्याहतवस्त्रैकदेशेन संवेष्ट्य लोहमयवादित्रेषु वाद्यमानेषु वीणायां च वाद्यमानायां मृतस्य पुत्रपौत्रा उत्तरीयैर्व्यजनैश्चास्थिकुम्भं विजयन्तस्त्रिस्त्रिः प्रदक्षिणं परियन्ति । स्त्रियोऽपीति केचित् । रात्रेः पूर्वमध्यापरभागेषु तांश्चैव बह्वन्नदानं कुर्वन्ति नृत्यगीतवादित्राणि च कारयन्ति अस्थिकुम्भायान्नमुपहरन्ति च । तत उपप्रातरस्थिकुम्भसहिताः पूर्वोक्तान्कुम्भान् छत्राणि चादाय ग्रामाद्दक्षिणस्यां बहिर्गच्छन्त्यध्वर्युर्यजमानामात्याः । श्मशानान्तं कर्म कुर्वतो यथा रविरुदयेत्तथा रात्रावारब्धव्यम् तत्र वने गत्वा ग्रामान्मार्गादश्वत्थतिल्वकहरिद्रुस्फूर्जकविभीतकश्लेष्मान्तककोविदारादिभ्यश्च दूरे अन्यवृक्षगुल्मादिवृते ऊषरे वोदकप्रवणे दक्षिणप्रवणे समे वा सुखकारिणि रम्ये वनादुदकाद्वा पूर्वभागे उत्तरभागे वा वर्तमाने गर्तवति वीरणतृणवति प्रदेशे श्मशानार्थं दिक्कोणं पुरुषप्रमाणं क्षेत्रं मिमीते । पैतृक्यां द्विपुरुषं समचतुरस्रं कृत्वा कर्णमध्येषु शङ्कवः स समाधिरिति शुल्वोक्तविधिना तच्चतुरस्रमुत्ततः पश्चाच्च पृथुभवति । तत्र साधनप्रकारः पूर्वदक्षिणपार्श्वयोर्नवाङ्गुलानि स्वत्रयोदशांशेनाङ्गुलचतुर्थभागसहितानि पुरुषप्रमाणमध्ये न्यूनानि कार्याणि पश्चिमोत्तरपार्श्वयोस्तावन्ति पुरुषप्रमाणादधिकानि तथाहि पुरुषमात्रक्षेत्रस्य लक्षणया प्राचीं कृत्वा तत्प्रान्तयोः शङ्कू निखाय सार्धाष्टदशांगुलहीनांपुरुषद्वयप्रमाणामुभयतःपाशां रज्जुं मध्यमदेशे सलक्षणां कृत्वा पूर्वापरयोः शङ्क्वोस्तस्याः पाशौ प्रतिमुच्य मध्यलक्षणेन दक्षिणत आयम्य दक्षिणः कोणः साधनीयः ततःसार्धाष्टदशाङ्गुलाधिका पुरुषद्वयप्रमाणां रज्जुमुभयतःपाशां मध्यलक्षणयुतां कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य मध्यलक्षणेनोत्तरत आयम्योत्तरकोणः साध्य इति । ततः पूर्वादिकोणेषु पालाशशमीवारणाश्मसमयाश्चत्वारः शङ्कवो निखेयाः । एतत्कुर्वतां निकटे कश्चिद्यजमानपुरुषस्तृणपूलकमुच्छ्रितं धारयेत् । कर्मसमाप्तौ गृहमागत्य तं गृहेषूच्छ्रयेत् प्रजावृद्ध्यै । इत्यादि बोध्यम् ॥

अपेतोयन्तुपणय: । अपयन्तु इत:स्थानात् पणय:असुरा: । असुम्नाश्च असुखकरा: । देवपीयवश्च । पयतिर्हिंसाकर्मा । देवानांहिंसितार: देवद्विष: । किमिति । अस्ययजमानस्य लोक: स्थानमत्र सुतावत: सोमाभिषवंकृतवत: । परंयजु: । द्युभिरहोभिरक्तुभि: । द्युशब्देन श्रुतौकृतवउक्ता: ऋतुभि: अहोभि: अक्तुभि:रात्रिभि: व्यक्तंस्पष्टीकृतम् । यम:ददातु अवसानम् अवस्थत्यस्मिन्निति

लोकः सुतावंतः ॥ द्युभिरहोभिरक्तुभिर्व्यक्तंयमोदंदात्ववसानं मस्मै ॥१॥ सविताते ॥ सविताते शरीरेभ्यः पृथिव्याँल्लोकमिच्छतु ॥ तस्मैयुज्यन्तामुस्रियाः ॥२॥ वायुः पुनातु ॥ सवितापुनात्व

त्यवसानम् । अस्मैयजमानाय ॥ १ ।जपति । सविताते गायत्री । सविता । तेतव शरीरेभ्य: शरीराणामितिविभक्तिव्यत्यय: । पृथिव्याम् लोकंस्थानम् इच्छतु । नहिसवित्राऽननुज्ञातेनावस्थातुंशक्यते । द्वितीयंवाक्यम् । तस्मैचेतनाय शरीरायसंस्कारार्थम् युज्यन्तांशरीरे उस्रिया:अनड्वाह:॥२॥ वायु:पुनातु । चतस्र:सीता:कर्षति । चतुर्भिर्यजुर्भि: । वायु: पुनातु विदारयतु । सवितापुनातुवि-

शु० य० सं० ६९७ उ० भा०

दारयतुअग्नेर्भ्राजसा दीप्त्याविदारयतु । सूर्यस्यवर्चसा भ्राजिष्णुतयाविदारयतु । विमुञ्चत्यनडुहः । विमुचन्त्वामुस्त्रियाः विमुच्यन्त्वांशरीरात् उस्त्रियाः । अनड्वाहः ॥३॥ अश्वत्थेवः इतिव्याख्यातम् ॥४॥
(१) शरीराणिनिवपति । सविताते । गायत्री । सवितातेतव शरीराणिअस्थीनि । मातुः पृथिव्याः

ग्नेर्भ्राजसासूर्यस्यवर्चसा ॥ विमुंचन्त्वामुस्त्रियाः ॥ ३ ॥ अश्वत्थेवः ॥ अश्वत्थेवोनिषदनम्पुर्णेवोवसतिष्कृता ॥ गोभाजुऽइत्किलासथयत्सनवथपूरुषम् ॥ ४ ॥ सविताते ॥ शरीराणिमातुरुपस्थ्ऽआवपतु ॥ तस्मैपृथिविशम्भव ॥ ५ ॥ प्रजापतौत्वा ॥ देवतायाम्

उपस्थेउत्संगे आवपतुस्थापयतु । तस्मैअस्थिरूपाययजमानाय सवित्राउप्ताय । हेपृथिवि शस्त्र-वसुखरूपाभव ॥ ५ ॥ प्रजापतौत्वा । यजुः कण्डिकाः । प्रजापतौत्वाम् देवतायाम् उपोदके उपसमीपे उदकंयस्यसतथोक्तः । लोकेस्थाने निदधामि । असावितिनामग्रहणम अनुदात्तत्वा-

(१) का० सविताते इति शरीराणि निवपति मध्ये इति । २१, ४, ८ । तस्य पुरुषमात्रस्य क्षेत्रस्य मध्ये शरीराणि मृतस्यास्थीनि राशीकरोतिएतच्च सूर्योदयकालंकर्तव्यम् ।

दामन्वितम् । तद्यथा हेदेवदत्त । अपनः शोशुचदघम् । अपेत्य नःअस्मान् अत्यर्थंदहतुपापम् द्वेष्टॄन् । यद्वा । प्रजापतिः अपशोशुचत् अत्यर्थंदहतु । नोस्माकमघंपापम् ॥ ६ ॥ प्रत्यागतेजपति । परंमृत्योः त्रिष्टुप्मृत्युदेवत्या । हेमृत्यो परंपन्थानमाश्रित्य । अनुपराङ्हि । पराङ्मुखोभूत्वा आगच्छ । तंशब्देनदर्शयति । योसौतेतवस्वभूतः अन्यःइतरः देवयानात्पितृ-

पोदकेलोकेनिर्दधाम्यसौ ॥ अपनः शोशुचदघम् ॥ ६ ॥ परंमृत्यो ॥ परं मृत्योऽअनुपरेहिपन्थांयस्तेऽअन्यऽइतरोदेवयानात् ॥ चक्षुष्मते शृण्वतेतेब्रवीमिमानः प्रजांरीरिषोमोतवीरान् ॥ ७ ॥ शंवातः ॥ शंहितेघृणिः शन्तेभवन्त्विष्टकाः ॥ शन्तेभवन्त्वग्नयः पार्थिवासो

यानाख्यः । अपिचचक्षुष्मते शृण्वतेतेब्रवीमि । षष्ठ्यर्थेचतुर्थी । चक्षुष्मतःशृण्वतः तवब्रवीमि । अतिशयार्थंवचनम् । नहितस्मादृष्टमश्रुतं चास्ति । माच नःअस्माकंप्रजांरीरिषः । हिंसीथाः । मोतवीरान्पुत्रान् ॥ ७ ॥ यथार्थंकथयति अनुष्टुप्बृहतीभ्याम् । शंवातः । सुखरूपो वातः तेभवतु । शंहि तेघृणिः सुखरूपश्च तेघृणिर्भवतु । घृणिरित्यहर्नामहीतिस्वाध्यायार्थम् । सुख-

रूपाश्च तेभवन्तुदृष्टकाः । मुखरूपाश्चतेभवन्तु अग्नयःपार्थिवाः पृथिव्यांभवाःपार्थिवासः। माच-
त्वाम् अभिशूशुचन् अभितापयन्तु ॥ ८ ॥ किञ्च । कल्पन्तांतेदिशः। कृप्तास्ते दिशोभवन्तु।
तुभ्यम् आपःशिवतमाः भवन्तु । तुभ्यंभवन्तु सिन्धवःसमुद्राःशिवतमाः । अन्तरिक्षंशिवंतुभ्यं
भवतु । कल्पन्तांतेदिशः सर्वाः। आदरार्थंपुनर्वचनं कात्स्न्यार्थंवा ॥ ९ ॥ अश्मन्वतीरीयते।

माऽऽत्वाभिशूशुचन् ॥ ८ ॥ कल्पन्तान्ते ॥ दिशस्तुभ्यमापः शिवतमास्तुभ्यंभवन्तुसिन्धवः ॥ अन्तरिक्षꣳशिवन्तुभ्यङ्कल्पन्तान्ते दिशः सर्वाः ॥ ९ ॥ अश्मन्वतीरीयते सꣳरभध्वमुत्तिष्ठतप्रतरतासखायः ॥ अत्राजहीमोऽशिवायेऽअसञ्छिवान्वयमुत्तरेमाभिवा

अश्मन स्त्रीं स्त्रीन्विकिरन्ति तान्यभ्युत्तरन्ति। विष्टुब्वैश्वदेवी । अश्मन्वती पाषाणवती इयं-
नदीरीयतेगम्यते अस्माभिःविषमम् । अतोब्रवीमि । संरभध्वम् । संरम्भोत्तरणाय प्रयत्नक-
रणम् । उत्तिष्ठत अभिमुखाभवत । प्रतरत । हेसखायः । किमित्यादरः । अत्राजहीमः ।

परित्यजामः । अशिवाःअशोभ्ताः । येअसन् स्युः । शिवान्राजान् अन्नविशेषान् वयम्अभ्युत्त-
रेम ॥ १० ॥ अपामार्गेणापमृजति । अपाघम् । अनुष्टुप् । हेअपामार्गत्वम् अस्मत्अस्मतः ।
अपसुव अपगमयअघंपापंमानसम् । अपगमयच किल्विषंकीर्त्तिभेदकम्पापमेवकायिकम् ।
अपगमयच कृत्याम् अभिचारम् । अपगम यचरपः । रपोरिप्रमितिपापनामनीभवतः । वाचि-
जान् ॥१०॥ [१०] अपाघम् ॥ अपाघमपकिल्बिंषमपंकृत्यामपोरपंः ॥
अपामार्गत्वमस्मदपंदुःष्वप्न्यंसुव ॥ ११ ॥ सुमित्रियानंः ॥ सुमि
त्रियानऽआपऽओषंधयःसन्तुदुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टि
यञ्चंवयन्द्विष्मः ॥ १२ ॥ [अनड्वाहंमन्वारंभामहेसौरंभेयस्वस्त
कम्पापम् । अपगमयच दुःस्वप्न्यम् दुःस्वप्नेभवंफलम् दुःस्वप्न्यम् ॥ ११ ॥ सुमित्रियानइ-
तिव्याख्यातम् ॥ १२ ॥ अनडुत्पुच्छमन्वारभ्याआगच्छन्ति । अनड्वाहम् । आनडुहीअनुष्टुप् । उत्त-
रोर्द्धर्चः प्रत्यत्तत्त्वतःअतोयच्छब्दाध्याहारेणसामर्थ्यम् । यःत्वाम्अनड्वाहम्अन्वारभामहेआलभा-

मद्दे । सौरभयमस्तुरम्याश्चपत्यम् स्त्रीहीभ्योढक् । स्वस्त्ययेश्चविनाशाय । सत्वम् नःअस्माकम् इन्द्र-इवादेवेभ्यः देवनामितिविभक्तिव्यत्ययः । वह्निर्वोढासंतारणश्चभव ॥ १३ ॥ उद्वयमितिव्याख्या-तम् ॥ १४ ॥ (१) मर्यादाया एवलोष्टमाहृत्यान्तरेणतोरणेनिदधाति । इमञ्जीवेभ्यः । त्रिष्टुप् मृत्यु-र्दे ॥ सनऽइन्द्रंऽइवदेवेभ्योवह्निः सुन्तारणोभव ॥१३॥ उद्वयम् ॥ उद्वयन्तमंसुस्परिस्वः पश्यंन्तऽउत्तरम् ॥ देवन्देवत्रासूर्य्यमगंन्म ज्योतिरुत्तमम् ॥ १४ ॥ इमञ्जीवेभ्यः ॥ परिधिन्दधामिमैषान्नुगा दपरोऽअर्थमेतम् ॥ शतञ्जीवन्तुशरदः पुरूचीरन्तर्मृत्युन्दधता देवत्या । इमंलोष्टं जीवेभ्यः अर्थाय । परिधिम् परिधीयत इतिपरिधिः तम्परिधिम् दधामि-स्थापयामि । किमर्थमितिचेत् । मागात्मागच्छतु एषांजीवानांमधये अपरः नुचिप्रम् । वेदोक्ता-दायुषोर्वाक् पितृलोकम् एतमर्थंपुरस्कृत्य सर्वथाशतंजीवन्तुशरदः । पुरुचीः बह्वञ्चनाः दाना-



(१) ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य इति । स्वनिवासग्रामस्यचमध्ये मर्यादालोष्टं महत्तरं मृत्खण्डं निदधाति ॥

ध्ययनयागानुकूला: । अन्तर्मृत्युन्दधताम् अन्तर्दधातुमत्युम् पर्वतेनइवलोष्ठेन ॥ १५ ॥ जुहोतिद्वाभ्याम् । अग्नऽआयू ँ षि । व्याख्यातम् ॥ १६ ॥ आयुष्मानग्ने । वसुरन्ताचित्रिष्टुप् । इमान्स्वाहेतियजुः । हेअग्नेयःत्वम् आयुष्मान् तंत्वांब्रवीमि । हविषाव्रधानः वर्द्धमानः घृतप्रतीकः । प्रतीकंमुखम् । घृतयोनिः घृतसंसृष्टस्थानः एधिभव । उत्तरवेद्यांधारणाभिप्रायम्पर्व्वतेन ॥ १५ ॥ अग्नऽआयू ँ षि ॥ पवसऽआसुवोर्ज्जमिषंञ्चनः ॥ आरेबांधस्वदुच्छुनाम् ॥ १६ ॥ आयुष्मानग्ने ॥ हविषांवृधानोघृतप्रतीकोघृतयोनिरेधि ॥ घृतम्पीत्वामधुचारुगव्यंम्पितेवपुत्त्रमभिरंक्षतादिमान्त्स्वाहा ॥ १७ ॥ परीमे ॥ गामंनेषतपर्य्यग्निमंहृषत ॥ मेतत् घृतंचपीत्वा मधुमधुरसम् । चारुसुगन्धि । गव्यङ्गोविकारसम्भूतम् । पिताइवपुत्त्रम् अभिरक्षतात् । तुह्योस्तातङ्ङाशिषयन्यतरस्यामितितातङादेशः । अभिरक्ष इमान्जीवान् स्वाहासुहुतमस्तु ॥ १७ ॥ अथैषांपरिधीन्दधाति । अनुष्टुभा । परीमेगामनेषत । इमेजीवाः परि-

सर्वतः गामग्नेषत । नयतेर्लुङि सिचएतद्रूपम् परिणीतवन्तः गाम् अनडुत्पुच्छालब्धनाभि- प्रायमेतत् । पर्य्यग्निमह्वषत । पर्य्यह्वष्यत हरतेरेतद्रूपम् । परिहृतवन्तः अग्निम् । यस्मि- न्नग्नावेतत्कर्मक्रियते तमग्निंपरिहृतवन्तः । अद्वारेणोपासनं निरस्यतीत्येतदभिप्रायमेतत् । देवेषुऋत्विक्षु । अक्रत । अकृषतेतिप्राप्तेसिचोलोपश्छान्दसः ॥ अव.धनं दक्षिणालक्षणम् । अथेदानीम् कृतकृत्यान् इमान् कः कोनाम । आदधर्षति । आधर्षयितुम् आक्रमि-

**देवेष्वक्रतश्रवःकइमाँ ॥ २ ॥ आदधर्षति ॥ १८ ॥ क्रव्यादम**

**ग्निम् ॥ क्रव्यादमग्निम्प्रहिणोमिदूरंयमराज्यङ्गच्छतुरिप्रवाहः ॥**

तुम् शक्नुयात् अशक्यप्रतिक्रियाह्येतेवर्त्तन्त इत्यभिप्रायः ॥ १८ ॥ अद्वारेणोपासनं निरस्यति । क्रव्यादमग्निम् । त्रिष्टुप् । यथ येनपुरुषंदहति सक्रव्यात् । क्रव्यादमग्निम् । परिहिणोमि प्रेषयामि दूरमपुनरागमनाय । यमराज्यंगच्छतु रिप्रवाहः । रिप्रमितिपापनाम । रिप्रंमृतं वहतिप्रापयति भस्मीभावमितिरिप्रवाहः । जपति । इहग्रहेएव अयम् इतरःक्रव्यादादन्यः

जातवेदाः जातप्रज्ञानः देवेभ्यः हव्यं हविःवहतु । प्रजानन् स्वमधिकारम् ॥ १९ ॥ वपांजुहोति । वहवपाम् । त्रिष्टुप् । वहप्रापय वपाम् हेजातवेदः पितृभ्यः । यत्रयस्मिन्प्रदेशे एतान् पितॄन् वेत्थ-जानासि । निहितान्स्थापितान् पराकेपराक्रान्ते सुदूरेपि तस्माच्च वपायाः सकाशात् मेदसःकु-ल्यानद्यः निसृत्य । उपस्रवन्तु । तान्पितॄन प्रति । एषांचदातॄणाम सत्याअवितथाआशिषः संनम

## न्तुहैवायमितंरोजातवेदादेवेभ्योहव्यंवहतुप्प्रजानन् ॥ १९ ॥ वह वपाम् । वहंवपाञ्जातवेदः पितृभ्योयत्रैतान्वेत्थनिहितान्पराके । मेदंसः कुल्याऽउपतान्स्स्रवन्तुसत्याऽएषामाशिषः सन्नमन्ताᳬ स्वाहा ॥२०॥ स्योनापृथिवि॥नोभवाऽनृक्षरानिवेशनी॥ यच्छानःशर्म्मसप्रथाः ॥

न्ताम्प्रह्वीभवन्तु । स्वाहेतियजुः ॥ २० ॥ स्योनापृथिवि । पार्थिवीगायत्री । स्योनासुखरूपा हेपृ-थिविनःअस्माकम्भव । अनृक्षराच नृक्षरःकण्टकः अनृक्षराअकण्टका । निवेशनीच । साधुप्रति-ष्ठाना । किञ्च । यच्छानःप्रयच्छच नःअस्माकम् शर्मशरणम् सप्रथाःसर्वतःपृथुः । अपनःशो-

शुच दघसितिव्याख्यातम् ॥ २१ ॥ अस्मात्त्वम् । गायत्रीयजुरन्ता एवाब्राकृतिः । अनिरुक्ताग्नेयी । अस्माद्यजमानात् । हेअग्ने त्वम् अधिजातोसि यतःअतोब्रवीमि । अयंपुनर्जायमानः त्वत्त्वत्तः जायतामुत्पद्यताम् । असावितिनामग्रहणम् तद्यथा देवदत्तः । स्वर्गायलोकाय स्वर्गलोकप्राप्त्य-

र्थाः॥ अपंनुःशोशुंचदुघम् ॥२१॥ अस्मात्वम्॥ अस्मात्त्वमधिंजातो सित्त्वदुयञ्जांयतामपुनः॥ असौस्वुर्गायंलुोकायुस्वाहां ॥ २२ ॥ [१२]

इतिसंहितापाठेपञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

* ऋचंव्वाचम् ॥ ऋचंव्वाचम्प्रपंद्येमनोयजुः प्रपंद्येसामंप्राणं

र्थम् । त्वत्तोय्ययंजायमानः त्वद्ध्येषएवस्यादित्यभि प्रायः । स्वाहेतिसंप्रदानमस्तु ॥ २२ ॥

इति उव्वटकृतौ मन्त्रभाष्ये पञ्चत्रिंशत्तमोध्यायः ॥ ३५ ॥

( १ ) इदानीं प्रवर्ग्याग्निकाश्वमेधोपनिषत्संबद्धामंत्रा स्तान्व्याख्यास्यामः। तत्राग्निका उच्यन्ते-

( १ ) का० शान्तिकरणमाद्यन्तयोः । ऋचं वाचमिताधायेन शान्तिकरणं कार्यम् स्वाध्याये मन्त्रपाठे प्रवर्ग्य मन्त्रादावस्याध्यायस्य दर्शनात् ॥

* ऋचवाचंषोडषर्यौःशांतिरष्टौह्यौचतुर्विंठं०शतिः ।

वमादयः । तान्पुनःपरमेष्ठ्यपश्यत् । प्राजापत्योविमुखइति तस्यमंत्रगणस्यसंज्ञा । अग्निर्ठं॰ हृद-येनेत्याश्वमेधिकाः आश्वध्यायात् प्रजापतेरार्षम् । परिशिष्टं दध्यङ्ङाथर्वणोपश्यत् । दध्यङ्-ह्वा आथर्वणइत्येवमादिकया श्रुत्यातद्भावं प्रतिपद्यते । ऋचंवाचम् । प्रवर्ग्यस्यादावन्तेच शान्तिकरणोध्यायः । विश्वेदेवा आग्निकानामाश्वमेधिकानांच मंत्राणाम् दृष्टसमाम्नातम् दिवाकीर्तिसामान्यात् । प्रथमकण्डिकायजुः । ऋचंवाचंप्रपद्ये प्रविशामियामिवा । एवं-

म्प्रपद्येचक्षुः श्रोत्रम्प्रद्ये ॥ व्वागोजः सहौजोमयिप्प्राणापानौ ॥ १ ॥

यन्न्मे ॥ च्छिद्द्रञ्चक्षुषोहृदयस्यमनसोव्वातितृण्णम्बृहस्प्पतिर्म्मे तद्द

मनोयजुः सामप्राणंचक्षुः श्रोत्रमितिव्याख्येयम् । नहित्रयीविद्या प्रपन्नस्य प्रवर्ग्य आयुषोविना-शंकुर्यात् । तथावाङ्मनः प्राणः चक्षुः श्रोत्राणि प्रपन्नस्य सम्पदशंत्र्येतत्प्रजापतेर्लिङ्गमुपलक्षि-तम् । अथैवंसति । वाक् ओजोवलं मानसं धृष्टतानाम । पुनरोजोग्रहणमादरार्थम् । एतदुक्तंभवतिवाक्च अतिशयिकमोजः प्राणापानौच सहएकीभूताः मयिवर्त्तन्ते ऽतःप्रवर्ग्यो-स्मान्नहिनस्ति ॥ १ ॥ यन्मेवार्ह स्पत्यापंक्तिः । यन्मेमम । छिद्रम्अवखण्डितम् चक्षुषःहृदय-

सत्रवाहृदयग्रहणेनबुद्धिरक्षा । मनसोवा अतितृष्णम्अतिहिंसितम् प्रवर्ग्याचरणेन । बृहस्पतिः मम तत्दधातु । अथ वैंबृहस्पत्यनुगृहीतानाम् । शंनःसुखरूपोस्मकम् भवतु । भुवनस्य- भूतजातस्यपतिः योधिपतिःप्रवर्ग्यरूपोयज्ञः ॥ २ ॥भूर्भुवःस्वः यजूंषि । तत्सवितुरिति क्या- धातु ॥ शन्नोभवतुभुवनस्ययस्पतिः ॥ २ ॥ भूर्भुवः ॥ भूर्भुवः स्वः ॥ तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोद यात् ॥ ३ ॥ कयानः ॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ४ ॥ कस्त्वा ॥ सत्योमदानाम्मंहिष्ठोमत्स दन्धसः ॥ दृढाचिदारुजेव्वसु ॥ ५ ॥ अभीषुणः ॥ सखीनामविताजं रितृणाम् ॥ शतम्भवास्यूतिभिः ॥ ६ ॥ कयात्वम् ॥ कयात्वन्नऊ नस्तिस्त्व व्याख्याताः । ऋषिक्रतोविशेषः ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ कयात्वम् । गायत्री । ऐन्द्रीअनिरुक्ता । हेइन्द्र कयाऊत्या केनवागमनेन त्वम् नःअस्मान् अभिप्रमन्दसे अभिमो-

दयसि हर्षयसि । हिंदृषन्सिक्तः । कयाचऊत्या केनवागमनेन स्तोतव्यः दातुं धनानि आभर आहरसि । लडर्थेलोट् । तत्कथय । येनतथानुतिष्ठामः ॥ ७ ॥ इन्द्रोविश्वस्य द्विपदाविराट् । योयंमहावीर इन्द्रआदित्योवा कस्याधिष्ठात्रीदेवता । विश्वस्यजगतः राजतिदेदीप्यते ईष्टेवा । तस्यप्रसादात् । अस्माकम् अस्तुद्विपदेशंचतुष्पदे । द्विपदाञ्चतुष्पदांचेतिविभक्तिव्यत्ययः ॥ ८ ॥ शन्नो-

त्याभिप्प्रमंन्दसेव्वृषन् ॥ कयांस्तोतृब्भ्यऽआभंर ॥ ७ ॥ इन्द्रोव्वि श्वस्यं ॥ राजति ॥ शन्नोंऽअस्तुद्विपदेशञ्चतुंष्प्पदे ॥ ८ ॥ शन्नोंमि त्त्रःशंव्वरुंणः शन्नोंभवत्त्वर्य्यमा ॥शन्नुऽइन्द्रोबृहुस्प्पतिः शन्नोव्वि ष्णुंरुरुक्क्रमः ॥ ९ ॥ शन्नोव्वातंः ॥ पवतांᳪशन्नंस्तपतुसूर्य्यः ॥

मित्रः । द्वेअनुष्टुभौ । महावीरप्रसादात् आदौच । शंसुखरूपः नोस्माकंभवतु मित्रः । शंचनःवरुणःभवतु । शंचनःभवतुअर्यमाशंचनःइन्द्रःबृहस्पतिः । शंचनःविष्णुःउरुक्रमःउरुविस्तीर्णःक्रमोय स्यसउरुक्रमः । शेषंदर्शितयाव्याख्येयम् ॥९॥ शन्नः । शंसुखरूपः नोस्माकम् वातःअपकर्षः अव्या-

धिजनकश्च । पवताम् वातु । शंसुखरूपः अदहनःभेषजरूपश्च नोस्माकंतपतुसूर्यः । शन्नःसुख-रूपश्चास्माकम् । पर्जन्योदेवः काशनिचाररहितंपवित्रमुदकम् भेषजकर्तृ अभिवर्षतु । कनिक्रदत् । स्तनयित्नुशब्दंकुर्वन् ॥ १० ॥ अहानिशम् द्विपदागायत्री । अहानिदिवसाः शंसुखरूपा.भवन्तु नोस्माकम् । शंसुखरूपाःरात्रीः प्रतिधीयताम् प्रतिदधात्वस्मासुमहावीरः ।

शन्नुः कनिक्रदद्देवः पुर्जन्न्योऽअभिवर्षतु ॥ १० ॥ अहानिशम् ॥ अहानिशम्भंवन्तुनः शर्ठरात्रीः प्रतिधीयताम् ॥ शन्नऽइन्द्राग्नी भवतामवोभिः शन्नुऽइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रापूषणा व्वाजंसातौशमिन्द्रासोमासुवितायशंय्योः ॥ ११ ॥ शन्नः ॥ शन्नो

शंसुखरूपौच इन्द्राग्नीभवताम् अवोभिःपालनैः सह । शन्नःसुखरूपौचास्माकम् इन्द्रावरुणा इन्द्रावरुणौ । रातहव्या दत्तहविष्कौभवताम् । शन्नःसुखरूपौचास्माकम् इन्द्रापूषणौभवताम् वाजसातौ अन्नसंभजनेनिमित्तभूते । शंसुखरूपौच इन्द्रासोमौभवताम् सुवितायसाधुगमनाय साधुप्रसवायवा । शंयोः शमनायरोगाणाम् यावनायपृथक्करणायच भयानाम् ॥ ११ ॥ शन्नोदे

वी: । अब्देवत्यागायत्री । सुखरूपाअस्माकम् देवी:देव्या: अभिष्टयेअभिषेकाय अभीष्टायवा । आप:भवतु । पीतयेपानायच । शंयो: शमनाय रोगाणाम्यावनंपृथक्करणम् पृथक्करणायभया-

द्देवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ १२ ॥ स्योनापृथिवि॥ नोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥१३॥ आपोहि ॥ ष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायच क्षसे ॥ १४ ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरि वमातरः ॥ १५ ॥ तस्माऽअरम् ॥ तस्माऽअरङ्गमामवोयस्यक्षयाय जिन्वथ ॥ आपोजनयथाचनः ॥ १६ ॥ [ १६ ] द्यौः शान्तिः ॥

नांवा । अभिस्रवन्तुन:अस्माकम् ॥ १२ ॥ स्योनापृथिवीतिव्याख्यातम् ॥ १३ ॥ आपोहिष्ठे-तितिस्रस्रव्याख्याता: ॥ १४ ॥ ॥ १५ ॥ १६ ॥ द्यौ:शान्ति: । याद्युलोकरूपाशान्ति: याचान्तरि-

चरूपाशान्तिः। याचपृथिवी। आपः ओषधयः। वनस्पतयः विश्वेदेवाः। ब्रह्मत्रयीलक्षणा परंवा। सर्वंशान्तिः। याचशान्तिरेवशान्तिः। याचस्वरूपतएवशान्तिः। सा। मामनशान्ति एधि। अस्त्वितिपुरुषव्यत्ययः। त्वत्प्रसादादित्यपेक्षा॥ १७॥ इतीदृठं० हमा। इतेयजुः।

द्यौः शान्तिरन्तरिक्षᳫं शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वᳫंशान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि॥ १७॥ दृतेदृᳫंहमामित्रस्यमाचक्षुषासर्वाणिभूतानिसमीक्षन्ताम्॥ मित्रस्या

इनिदारणे विदारणेपिशरीरेजरया। इं हृदृढीकुरुमाम्। कथमितिचेत्। मित्रस्यमाचक्षुषासर्वाणिभूतानिसम् ईक्षन्ताम् पश्यन्तु। अहमपि। मित्रस्य चक्षुषासर्वाणिभूता निसमीक्षे पश्यामि। शान्तंहिमित्रस्यचक्षुः। नवैमित्रङ्कश्चनहिनस्ति। नमित्रं कश्चनहिनस्तीति।

एवमहिंस्यमाना अहिंसन्तश्च परस्परमद्रोहेणसर्वथा मित्रस्यचक्षुषासमीक्षामहे ॥ १८ ॥ दृतेदृꣳह। यजुः। दृतेदृꣳहमा। अतिशयार्थं पुनर्वचनम्। ज्योक्‌चिरम् तेतवसंदृशिसंदर्शने। जीव्यासञ्जीवेयम् आदरार्थम् पुनर्वचनम् ॥ १९ ॥ नमस्तेहरसेइति व्याख्यातम् ॥ २० ॥ नमस्ते।

दृꣳहमामित्रस्यमाचक्षुषासर्वाणिभूतानिसमीक्षन्ताम्। मित्रस्याहंचक्षुषासर्वाणिभूतानिसमीक्षे। मित्रस्यचक्षुषासमीक्षामहे। १८।

दृतेदृꣳहमा ॥ ज्योक्तेसन्दृशिजीव्यासञ्ज्योक्तेसन्दृशिजीव्यासम् ॥ १९ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयःपावकोऽअस्मभ्यꣳशिवोभव ॥२०॥ नमस्ते।ऽअस्तुविद्युतेनमस्तेस्तनयित्नवे॥नमस्तेभगवन्नस्तुयतःस्वःसमीहसे॥२१॥

द्वेअनुष्टुभौ। नमःतेतुभ्यम्अस्तु। विद्युतेविद्युद्रूपाय। नमस्तेस्तनयित्नवे स्तनयित्नुरूपायं नमः तेहेभगवन् अस्तु। यतःयस्मात् स्वःस्वर्गंलोकंगन्तुम्समीहसेचेष्टसे। अमर्त्यत्वमिच्छसीत्यभिप्रायः ॥ २१ ॥

यतोयतः । यस्माद्यस्मात् दुश्चरितात् अपाकर्तुं समीहसे चेष्टसे ततस्ततः नःअस्माकम् अभयङ्कुरु । किञ्च । शन्नः सुखमस्माकम् कुरुप्रजाभ्यः अभयन्नःपशुभ्यःकुरु ॥ २२ ॥ इतउत्तरं यजूंषि व्याख्यायन्ते आद्यध्यायात् । तत्रसुमित्रियानइति व्याख्यातम् ॥ २३ ॥ तच्चक्षुः । योऽयंमहावीरो-

यतोयतःसमीहसेततोनोऽअभयङ्कुरु ॥ शन्नःकुरुप्रजाभ्योऽभयन्नः पशुभ्यः ॥ २२ ॥ सुमित्रियानः ॥ सुमित्रियानऽआपऽओषधयःसन्तु दुर्मित्रियास्तस्मैसन्तुयोऽस्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ २३ ॥ तच्चक्षुः ॥ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदःशतञ्जीवेमशरदःशतꣳशृणुयामशरदः शतम्प्रब्रवामशरदःशतमदीनाः

साभिस्तुतः । तत् आदित्यरूपं चक्षुः । देवहितम् देवैर्निहितं स्थापितम् देवानांवाहितम् । पुरस्तात्प्राच्यांदिशि । शुक्रं शुक्लम् असंसृष्टंपाप्मभिः । शोचिष्मद्वा । उच्चरत्उदितम् । तत्प्रसादाच्च । पश्येम शरदःशतम् । जीवेमशरदःशतम् । शृणुयामशरदःशतम् । प्रब्रवामशरदःशतम् अस्खलि-

तत्रागिन्द्रियाभवाम:। अदीना:स्यामशरद:शतम् भूयश्चवहुतरं कालञ्च शरद:शतात्॥ २४ ॥
इति उव्वटकृतौ मन्त्रभाष्ये षट्त्रिंशोध्याय:॥ ३६ ॥

स्यामशुरदंः शुतम्भूयंश्चशुरदंःशुतात्॥ २४ ॥ [ ८ ]

इतिसंहितायांदीर्घपाठेषट्त्रिंशोऽध्याय:॥ ३६ ॥

* देवस्यंत्वा॥ सवितुःप्प्रंसवे॒ऽश्विनोर्ब्बाहुब्भ्यांम्पूष्णोहस्ताब्भ्याम्॥ आददेनारिरसि॥ १ ॥ युञ्जतेमनंः॥युञ्जतेमनंऽउतयुंञ्जते

(१) महावीरसंभरणम् अभ्रादानम्। देवस्यत्वेतिव्याख्यातम् नारिरसीतिविशेष:॥१॥ आल-

( १ का देवस्य त्वेत्यभ्रिमादायौदुम्बरीं वैकङ्कतीं वारत्निमात्रीं सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति। उदुम्बरतरूत्थां विकङ्कततरूत्थां वा हस्तप्रमाणामभ्रिं देवस्यत्वा नारिरसीति मन्त्रेणादाय वामहस्ते तां कृत्वा दक्षिणहस्तेन स्पृष्ट्वा युञ्जतेमन इति मंत्रं जपतीति सूत्रार्थ:।

---

* देवस्यत्वादश्वयमायत्वैकादशद्वावेकाविंठ० श्रुति:॥

भ्यजपति । युञ्जतेमन इतिव्याख्यातम् ॥ २ ॥ मृत्पिण्डान्परिगृह्णाति । देवीद्यावापृथिवी हेदेव्यौ द्यावापृथिव्यौ । मखस्ययज्ञस्य वांयुवाम् उपादाय । मृदन्नोदकं वादायेत्यर्थः । अद्यशिरः राध्यासम् राधसाधसंसिद्धौ । संसाधयेयम् देवयजने देवाअस्मिन्निज्यन्ते इति देवयजनम् । पृथिव्याः मखा- यत्वा मखायत्वा परिगृह्णामि । ततोपिविशेषापेक्षायामाह । मखस्यशीर्ष्णे त्वांपरिगृह्णामीति ॥ ३ ॥

धियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेव्वयुनावि देकऽइन्मही देवस्यसवितुः परिष्टुतिः ॥ २ ॥ देवीद्यावापृथिवी ॥ मखस्यवामद्यशिरोराध्यासन्देवयजनेपृथिव्याः ॥ मखायत्वामखस्य त्वाशीर्ष्णे ॥ ३ ॥ देव्योवम्म्रः ॥ देव्योवम्म्रोभूतस्यप्रथम जामखस्यवोद्यशिरोराध्यासन्देवयजनेपृथिव्याः ॥ मखायत्वामख

अथवल्मीक वपांगृह्णाति । देव्योवम्यः । हेदेव्यः वम्यः । उपजिह्विकाः सीमकादृतिपर्यायाः । या यूयंभूतस्य प्रथमजाः । पृथिवीभूतानां प्रथमजातत्संबन्धाद्वम्र्योपि प्रथमजा उच्यन्ते । मख-

स्रग्शिरः राध्यासम् अदाव: ताःयुष्मान्उपादायेतिशेषः। देवयजन इत्यादिव्याख्यातम् ॥ ४ ॥
वराहविहतमादत्ते। इयत्यग्रे युष्मदःसंवन्धान्मध्यमोत्तपुरुषः। यात्वम् इयतीप्रादेशमात्रा अभि-
नयेननिर्दिश्यते। अग्रे वराहस्रोद्धरतः आसीत् आसीःअभूः। इयतीहवा इयमग्रे पृथिव्यास।
प्रादेशमात्रीन्युपक्रम्य वराहउज्जघानेत्याह। तांत्वांब्रवीमि मखस्रते त्वामुपादाय अदग्शिरः

स्यंत्वाशीर्ष्णो ॥ ४ ॥ घृतम् ॥ १९०० ॥ इयत्यग्रे ॥ इयत्त्यग्ग्रेऽआ
सीन्मखस्यंतेद्यशिरोराध्यासन्देवयजनेपृथिव्याः ॥ मखायंत्वामख
स्यंत्वाशीर्ष्णो ॥ ५ ॥ इन्द्रस्यौजः ॥ इन्द्रस्यौजंस्त्थमखस्यंवोद्यशिरो
राध्यासन्देवयजनेपृथिव्याः ॥ मखायंत्वामखस्यंत्वाशीर्ष्णो ॥ मखा
यंत्वामखस्यंत्वाशीर्ष्णो ॥ मखायंत्वामखस्यंत्वाशीर्ष्णो ॥६॥ प्रैतु ॥

राध्यासम्देवयजनेपृथिव्याः मखायत्वेतिव्याख्यातम् ॥ ५ ॥ आदायानादत्ते। इन्द्रस्योजस्थ येयूयम्
इन्द्रस्यओजोभवथ तान्युष्मान् अदयउपादायशिरः राध्यासमित्यादिव्याख्यातम्। अजाक्षीरमा-
दत्त मखायत्वेत्युक्तम्। सम्भृतानभिमृशतिमखायत्वेत्युक्तम् ॥ ६ ॥ परिश्रितमभिगच्छन्तोजपन्ति।

प्रैत्विति व्याख्यातम् । स्वरेणादयति । मखायत्वेत्युक्तार्थम् स्वतिभड्डमादाय महावीरङ्करोति । मखायत्वेत्युक्तम् ॥ ७॥ निष्ठितनभिस्थपति । मखस्यशिरोसीत्युक्तार्थम् एवंद्वितीयतृतीयौ । गवेधुकाभिः

ब्रह्मंगुस्प्पतिः प्रदेव्व्येतुसूनृता ॥ अच्छावीरन्नर्यम्पुङ्क्तिराधसन्देवायुज्ञन्नयन्तुनः ॥ मुखायंत्वामखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ ७ ॥ मुखस्यशिरः ॥ मुखस्युशिरोसि ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखस्युशिरोसि ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखस्युशिरोसि ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ मुखायंत्वामुखस्यंत्वाशीर्ष्णे ॥ ८ ॥ अश्वस्य

श्लक्ष्णयति । मखायत्वेतिस्त्रिभि र्मन्त्रैस्त्रीन्महावीरान् ॥ ८ ॥ अश्वशकृताधूपयति । अश्वत्वात्वाम्

हेमहावीर हृष्णा:सेतुः । शक्षा शक्षच्छुव्दसग्रशकन्तादेश: । धूपयामि देवयजनेपृथिव्याः । मखायत्वा मखस्यत्वाशीर्ष्णो । एवंद्वितीयतृतीयौ । अपयतिस्त्रीन्महावीरान् त्रिभिर्मन्त्रैः मखायत्वेतिप्र-

त्वा ॥ वृष्णः॑ शुक्का धूंपयामिदेवयजंनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यं त्त्वाशीर्ष्णे॥ अश्वस्यत्त्वाव्वृष्णः॑ शुक्का धूंपयामिदेवयजंनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ अश्वस्यत्त्वाव्वृष्णः॑ शुक्का धूंपयामिदेवयजंनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे॥ मुखायंत्त्वामुखस्यंत्वाशीर्ष्णे ॥९॥ ऋतजवेत्वा ॥ सुाधवेत्वासुक्षितयेत्वा ॥ मुखायंत्वामुखस्य'त्वाशीर्ष्णे॥

तिमन्त्रम् ॥ ९ ॥ पश्चादुद्वरति । ऋतजवेत्वेति प्रतिमन्त्रम् । ऋतजवेत्वा असौवैलोकः ऋतजुः । सत्यमेवतत्वकौटिल्यरहितम् । सत्यम्बाआदित्यः ऋतजवेत्वा आदित्यायत्वाम् उद्वरामीतिशेषः ।

एषउप्रथमः प्रवर्ग्यः। साधवेत्वा अयंवैसाधुर्वायुः। एषहीमान् लोकान् सिद्धोप्रतिष्ठितःपवते। एषउद्वितीयः प्रवर्ग्यः। सुक्षित्यैत्वा अयंवैलोकः सुक्षितः। अस्मिंल्लोके सर्वाणिभूतानि क्षियन्ति। अग्निर्ह्यत्रासुक्षितः। अग्निर्हि अस्मिन्लोके सर्वाणिभूतानि परिगृह्यवसति। एषउत्तृतीयः प्रवर्ग्यः। अजापयसापरि सिञ्चतिमहावीरान् मखायत्वेतिप्रतिमन्त्रम्। महावीरासंभरणं समाप्तम्॥ १०॥ महावीरंप्रोक्षति। यमायत्वामखायत्वा सूर्यस्यत्वातपसे। प्रोक्षा

मुखायंत्त्वामुखस्यंत्त्वाशीर्षणे॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥१०॥

[१०] युमायंत्त्वा॥ मुखायंत्वासूर्य्यस्यत्वातपंसे। देवस्त्वांसवितामद्ध्वांनक्तुपृथिव्याः सःस्पृशस्पाहि॥ अर्चिरंसिशोचिरंसितपोंसि॥ ११॥ अनांधृष्टापुरस्तांत्॥ अनांधृष्टापुरस्तांदुग्नेराधिपत्य

मीतिशेषः। महावीरमनक्ति। देवस्त्वासवितामध्वानक्तु इतिवाख्यातम्। रजतशतमानंखरे उपगूहति। पृथिव्याःसंस्पृशः। संस्पृशतीतिसंस्पृक् क्विवन्तस्यैतद्रूपम्। हेरजतपृथिव्याः संस्पृशोराक्षसात् महावीरम्पाहिगोपाय। महावीरमाज्यवन्तं निदधाति। अर्चिरसिशोचिरसि तपोसि ऋज्वर्थम्॥ ११॥ अनाधृष्टेतिवाचयति प्रादेशमधराविधारयन्। हेपृथिवि यात्वम् अना-

घृष्टा अधर्षितारक्षोभिः पुरस्तात् तांत्वांब्रवीमि। अग्नेः आधिपत्ये सति आयुर्मेदाः देहि। यात्वं-पुत्रवतोदक्षिणतोभवसि। तांत्वांब्रवीमि इन्द्रस्याधिपत्ये सति प्रजाम्मेदाःमह्यंदेहि। यात्वंसुषदा खासेया साध्वस्मिन्सीदतीतिसुषदा। पश्चाद्भवसि तांत्वांब्रवीमि। देवस्यसवितुः आधिपत्ये सतिचक्षुर्मेदाः देहि। यात्वम् आश्रुतिः। आश्रयन्त्यस्मिन्यजमाना इत्याश्रुतिः। यस्मियोद्यसौदेशः।

ऽआयुर्म्मेदाः पुत्रवंतीदक्षिणतऽइन्द्रस्याधिपत्येप्रजाम्मेदाः॥ सुखदा पश्चाद्देवस्यसवितुराधिपत्येचक्षुर्म्मेदाऽआश्रुतिरुत्तरतोधातुराधिपत्येरायस्पोषम्मेदाः ॥ विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्यऽओजोमेदाविश्वाभ्योमानाष्ट्राभ्यस्पाहिमनोरश्वासि ॥ १२ ॥

उत्तरतोभवसि। तांत्वांब्रवीमि। धातुराधिपत्ये सति रायस्पोषम् धनस्यपुष्टिम्मेदाः देहि। यात्वं-विधृतिः विधारिणीउपरिष्टाद्भवसि। तांत्वांब्रवीमि बृहस्पतेः आधिपत्ये सति ओजः मेदाः। दक्षिणतउत्तानेन पाणिनानिह्नुते। विश्वाभ्योमानाष्ट्राभ्यस्पाहि। सर्वाभ्यः माम्आर्त्तिभ्यः गोपायेति। इमामभिमृशञ्जपति। मनोरश्वासि। अश्वाभूत्वा इयंभूत्वा मनुमुवाहेतिश्रुतिः॥१२॥

विकङ्कतशकलैः परिश्रपयति । स्वाहामरुद्भिः परिश्रीयस्व । हे प्रवर्ग्य यस्त्वं स्वाहाकारः तंत्वां ब्रवीमि । मरुद्भिः रश्मिभिः यद्वा विशोवैमरुतइतिश्रुतिः ताभिःपरिश्रीयस्व । कर्मणियक् । आश्रीयस्व । मरुतस्त्वामाश्रयन्त्वित्यर्थः । सुवर्णशतमानेनापिदधाति । दिवः द्युलो । कस्य संस्पर्शनोरक्षसो महावीरपाहिगोपाय । अथवा । द्युलोकस्य संस्पर्शनकर्तॄन् देवांस्त्वं हेमहावीरपाहि । पवित्रैराधुनोति । मधुमधुमधु । मधुप्रभृति मधुसामान्यादुच्यते । सर्वं-

स्वाहा॑ म॒रुद्भिः॒ ॥ परि॑ श्रीयस्व दि॒वः सꣳस्पृशं॑स्पाहि ॥ मधु॒ मधु॒ मधु॑ ॥ १३ ॥ गर्भो॑ दे॒वाना॑म् ॥ गर्भो॑ दे॒वानां॑ पि॒ता म॑ती॒नां पतिः॑ प्र॒जाना॑म् ॥ सन्दे॒वो दे॒वेन॑ सवि॒त्रा ग॑त॒ सꣳ सूर्ये॑ण रोचते ॥ १४ ॥ सम॒ग्निः ॥ सम॒ग्नि

गानारसः तंमहावीरेस्थापयति ॥ १३ ॥ महावीरमुपतिष्ठते । गर्भोदेवानामित्यवकाशैः तेनत्वष्टमन्त्रइत्यतःप्राक् । योगर्भोदेवानाम् गृह्णातीतिगर्भः आदित्यात्मनामहावीरः । यश्च पितामतीनां गोपायिताबुद्धीनाम् । यश्च पतिरधिपतिःप्रजानाम् । यश्च । संदेवोदेवेनसवित्रागत । संगत । संगच्छते देवःप्रवर्ग्यःदेवेनसवित्रासह । यश्च संरोचते घर्मःसूर्येणसह एकीभूतः तंवयंस्तुमइतिवाक्यशेषः ॥ १४ ॥ समग्निः । अनुष्टुप्ब्राह्मी । यश्च । संगतसंगच्छतेअग्निःघर्मःअग्निनासूर्योख्ये-

नसह । यश्वसंगत संगच्छते दैवेनसविवासह । यश्वसमरोचिष्ट संरोचतेदीप्यते सूर्येणसह-स्पर्द्धयन् । तंवयंस्तुम इतिवाक्यशेषः । स्वाहाकारः आदित्यप्रीणनार्थः । यश्वस्वाहा अग्निःसंगत । संगच्छते । तपसाआदित्य संवग्निनासह । यश्चसंगत । संगच्छते दैव्येनसवित्रासह । यश्वसमरूरुचत । समरोचतसंरोचतेसूर्येणसह स्पर्द्धयन् । तंवयंस्तुमइतिवाक्यशेषः ॥ १५ ॥ धर्ता-दिवः । ऊर्ध्वबृहती । घर्मस्तुतिः । योयंधर्ताधारयिता दिवःद्युलोकस्य । यश्चतपसः रश्मिजा-

**रुग्निनागतुसन्दैवेनसवित्रासꣳसूर्य्येणारोचिष्ट ॥ स्वाहासमुग्निस्तपसागतुसन्दैव्येनसवित्रासꣳसूर्य्येणारूरुचत ॥ १५ ॥ धर्ताद्दिवः॥ धर्ताद्दिवो विभातितपसस्पृथिव्यान्धर्ताद्देवोद्देवानाममर्त्यस्तपोजाः ॥ व्वाचमस्मेनियच्छदेवायुवम् ॥ १६ ॥ अपश्यङ्गोपाम् ॥ अप**

लस्य धर्त्ता । विभातिचपृथिव्याम् अवस्थितः । धर्त्ताधारयिताच देवानाम् । स्वयंचदेवः अमर्त्यःमनुष्यधर्मरहितः । तपोजाः । तपःआदित्यः तस्माज्जायते । सोयम्वाचम् अस्मेअस्मासु । नियच्छ । नियच्छत्वितिपुरुषव्यत्ययः । निग्रहणातुस्थापयतु । देवायुवम् । यादेवान् यौतिमिश्रयति आगमयति सातथोक्तातांदेवायुवम् ॥ १६ ॥ अपश्यन् । त्रिष्टुप् । आदित्यात्मनाघर्मस्तुतिः ।

यमहमपश्यम् । गोपांगोप्तारम् । अनिपद्यमानम् अनालम्बनेअन्तरिक्षेगच्छन्नासीपतति । आचपराच पथिभिश्चरन्तम् । आचरन्तंच आगच्छन्तंच पराचरन्तंच । परागच्छन्तंच । पथिभिः देवैःसह । सस-ध्रीचीः । सएवससध्रीचीः सहस्थसध्रिरादेशः । सहाञ्चनाः दिशोरश्मिन्वासहस्तम् । सविषूचीः । बिषु इतिनिपातोनानावचनः । अञ्चतेःपरंक्विप् । नानाञ्चनाः दिशः नानाञ्चनान्वारश्मीन् । वसानः आच्छादयन् । आवरीवर्त्ति । पुनःपुनरावर्त्तते । भुवनेषु त्रिषुलोकेषु । अन्तर्मध्येवअवस्थितः ॥ १७॥

ऽअयङ्गोपामनिंपद्यमानुमाचुपरांचपुथिभिश्श्चरंन्तम् ॥ ससुध्रीचीः स व्विषूचीर्व्वसानुऽआवरीवर्त्तिभुवंनेष्वुन्तः ॥ १७ ॥ व्विश्वांसाम्भु वाम् व्विश्वांसाम्भुवाम्पतेव्विश्वंस्यमनसस्पतेव्विश्वंस्यव्वचसस्प्प

विश्वासांभुवाम् । सर्वासांपृथिवीनांपते हेप्रवर्ग्य । विश्वस्यमनसः सर्वस्यप्राण्याश्रयस्यमनसः पते । विश्वस्यवचसः सर्वस्यत्रयीलक्षणस्यवचसःपते सर्वस्यवचसः सर्वस्यलौकिकस्यवचसःपते । त्वां स्तुमइतिशेषः । यतश्च त्वंदेवस्तुत् देवैःस्तुतः अतोत्वांयाचे । हेदेवघर्मत्वंदेवःसन् देवान्पाहिगोपाय । अत्रप्रावीरनुवांदेववीतये । अत्रसने अस्मिन्नवसरेवा । प्रावीरितिपुरुषव्यत्ययः । प्रावतुतम्यं यतु

य० ३७

शिवम् ६८०

घर्मः। वायुवाम् हेअश्विनौ। अनुदेववीतये। ततोनन्तरम् देवतर्पणायनमस्करोत्वितिवाक्यशेषः। मधुमाध्वीभ्याम्। मधुनामब्राह्मणंतद् श्विभ्यांददौदध्यङ्ङाथर्वणः। तदेतदुक्तम्। मधुमाधूचीभ्याम्। मधुब्राह्मणं प्रतिअश्वतोगच्छतः तौताभ्यामध्वश्विनाभ्याम्। शेषंपूर्ववद्व्याख्येयम्॥१८॥ हृदेत्वा। परोष्णिक्। हृदेत्वाहृदयार्थंत्वांस्तुमइतिशेषः। एवंमनसे त्वांस्तुमः। दिवे सूर्याय-

तेसर्वस्यव्वचसस्पते॥ देवश्रुत्वन्देवघर्म्मदेवोदेवान्पाह्यत्रप्रावीरनुवान्देववीतये॥ मधुमाध्वीभ्याम्मधुमाधूचीभ्याम्॥१८॥ हृदेत्वा॥मनसेत्वादिवेत्वा सूर्य्यायत्वा॥ ऊर्ध्वोऽअध्वरन्दिविदेवेषु धेहि॥ १९॥ पितानः॥ पितानोसिपितानोबोधिनमस्तेऽअस्तुमा

त्वांस्तुमइतिशेषः। सूर्यायत्वा सूर्यतर्पणायत्वांस्तुमः। यस्माच्च सर्वकार्येषुत्वामेवस्तुमः। अतोब्रूमः। ऊर्ध्वः अवहितचितःसन् अध्वरन्दिविदेवेषु धेहिनिधेहि स्थापय। १९॥ पितानोसि। गायत्री। यतस्त्वम् पिता नःअस्माकमसिभवसि। अतोब्रवीमि। पितेवभूत्वा नःअस्मान् बोधिबोधयसर्वथा। नमः तेअस्तु मामाहिंसोः हिंसीथाः। पत्नींवाचयति महावीरमीक्षमाणाम्।

त्वष्टृमन्तस्त्वा । यजुः । यतश्च त्वाष्ट्संयुक्ताः । त्वष्टाहि चेतसांविकर्त्ता । त्वासेवसपेम । सपतिः स्पृशतिकर्मा । मैथुनार्थमुपस्पृशामः । अतःपुत्रान् पशून्मयिधेहि स्थापय । प्रजांचभूयोभूयः अस्मासु धेहिस्थापय । किंच । अरिष्टाअनुपहिंसिताअहम् । सहपत्यासहभर्त्राभूयासम् । आशीः ॥ २० ॥ रौहिणोजुहोति । अहःकेतुनाप्रज्ञया कर्मणावा । सहितम् जुषताम् परिगृह्णातु । कथंभूमांहिंसीः ॥

त्वष्टृमन्तस्त्वासपेमपुत्रान्पशून्मयिधेहिप्रजामस्मासुधेह्यरिष्टाहꣳसहपत्याभूयासम् ॥ २० ॥ अहः केतुना ॥ जुषताꣳसुज्योतिर्ज्योतिषास्वाहा ॥ रात्रिः केतुनाजुषताꣳसज्योतिर्ज्योतिषास्वाहा ॥ २१ ॥ [ ११ ]

इतिवाजसनेयसंहितायांदीर्घपाठेसप्तत्रिंशोऽध्यायः ॥ ३७ ॥

तम् । यदहः सुज्योतिः । ज्योतिषांशोभनज्योतिष्कम् केनज्योतिषास्वकीयेनैव । स्वाहासुहुतं चैतद्भवभवतु । रात्रिःकेतुना । अधस्तनेनव्याख्यातम् ॥ २१ ॥

इति उव्वटकृतौ मन्त्रभाष्ये सप्तत्रिंशोध्यायः ॥ ३७ ॥

(१) अथधर्मं धुग्दोहनार्थं रज्जुमादत्ते ॥ देवस्यत्वेतिव्याख्यातम् । आददेगृह्णामि । यतस्त्वम् अदित्यैरास्नासि ॥ १ ॥ गामाह्वयति । इडएहि । अतस्मिंस्तच्छब्द स्तदतिदेशार्थः । हेइडे मानवि आद्गहि आगच्छ दोहाय । हेअदिते देवमातः एहि । हेसरस्वति वाक्एहि असावितिनामग्राहवा-

* देवस्यत्वा॥देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् आददेदित्यैरास्नासि ॥१॥ इडऽएहि॥ इडऽएह्यदितऽएहिसरस्वत्येहि ॥ असावेह्यसावेह्यसावेहि॥२॥ अदित्यैरास्नां

त्त्रिरुच्चैः । असौधवलेएहि । त्रिः । आमन्त्रितस्येत्यादिरुदात्तः ॥ २ ॥ अत्यैरास्नासीति गांपशेनप्रतिमुञ्चति अदित्यैरास्नासि । इन्द्राण्याउष्णीषः इन्द्राणी इन्द्रस्यपत्नी तस्याः शिरोवेष्टनं त्वमसि ॥

(१) का० देवस्यत्वेति रज्जु सन्दानमादायेडएहीति गमाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन् । अध्वर्युर्देवस्यत्वेति रज्जु सन्दानमादाय गार्हपत्यस्य पश्चाद्गच्छन् इडएहीति वाक्यत्रयेण घर्मदुघां गामाह्वयति असावेहीति गोर्नाम्ना चोच्चैस्त्रिवारमाह्वयतीति सूत्रार्थः ॥

---

* देवस्यत्वाष्टौपमायत्वाच्चत्रस्यलादश्वौच्चयोष्टावि ठं० श्रतिः ॥

वत्समुत्सृजति । पूषासि । यथापूषा वायुर्वृष्टिमाप्यायति । एवंत्वमपि प्रस्तावनेन जगदुत्पत्तिबीजंप-
यश्चाप्यायसि । वत्समुन्नयति । घर्मायदीष्व । दयसि । रूपदयाकर्मापि यसउपदयांकुरु मासर्वंसु-
पासी: ॥३॥ पित्वनेदोग्धि । अश्विभ्यांपिन्वस्व । अश्विभ्यामर्थाय पिन्वस्वक्षावयस्व । एवमेव सर-
स्वत्यैइन्द्रायच । विप्रुषाभिमन्त्रयते । स्वाहेन्द्रवदिति । यद्दुह्यमानं रूपंतत्सुहुतमस्तु इन्द्रवत्

सोन्द्राग्याऽऽउष्णोषं ॥ पूषासिंघर्मायंदीष्व ॥३॥ अश्विभ्यांपिन्वस्व
सरस्वत्यैपिन्वस्वेन्द्रायपिन्वस्व ॥ स्वाहेन्द्रंवत्स्वाहेन्द्रंवत्स्वाहेन्द्र
वत् ॥ ४ ॥ यस्ते ॥ स्तनः शशयोयोमयोभूर्योरत्नधावसुविद्यः

इन्द्रसंयुक्तमद्भुतिर्निः ॥ ४ ॥ स्तनमालभते । यस्तेस्तनः । त्रिष्टुब्वाग्देवत्या । वाग्देवीसरस्वतीति-
श्रुतिः । यः तेतवस्तनः । कथंभूतः । शशयः । शीङ्स्वप्ने । सुप्तइवास्ते अनुपभुक्तोन्यैः । यश्च-
मयोभूः मयःसुखम्भावयति सर्वभूतानाम् । यश्चरत्नधाः । रमणीयानांधनानांधारयिता ।
यश्चवसु वित् वसुविन्दति । यश्चसुदत्रः कल्याणदानः । धनवानपिसन् कश्चिन्नोत्सहतेदातुम्

अतएवंविषयते । येनविश्वा । येनच विश्वाविश्वानि पुषग्रसिपुष्यासि वार्याणिवरणीयानि । हेसरस्वति तंस्तनमिह । धातवे । धेटपाने । पानाय । अकःकुरु । गच्छति । उर्वन्त-रिक्षमिति व्याख्यातम् ॥ ५ ॥ परीशासावादत्ते । गायत्रंछन्दोसि त्रैष्टुभंछन्दोसि ॥ स्रचु-महावीरंगृह्णाति । द्यावापृथिवीभ्यां त्वांपरिगृह्णामि । परीशासयोः द्यौश्चपृथिवीच अध्यात्मः

सुदत्रंः ॥ येनुविश्वापुष्यसिवार्य्याणिसरस्वतितमिहधातवेकः ॥ उर्वन्तरिक्षमन्वेमि ॥५॥ गायत्रञ्छन्दः ॥ गायत्रञ्छन्दोसित्रैष्टुभञ्छन्दोसिद्यावापृथिवीभ्यान्त्वापरिगृह्णाम्यन्तरिक्षेणोपयच्छामि ॥ इन्द्राश्विनामधुनःसारघस्यघर्मम्पातवसवोयजतवाट् ॥ स्वाहासूर्य्य

महावीरेचादित्यः । उपयमन्याउपगृह्णाति । अन्तरिक्षेणोपयच्छामि । अन्तरिक्षेण उपगृह्णामि । उपयमन्या अन्तरिक्षरूपेणसंस्तवः । पयसासिञ्चति ॥ इन्द्राश्विना । हेइन्द्र हेअश्विनौ । मधु-नःसारघस्य । सरघा मधुकृतः भ्रमराइवऋत्विजः तैःकृतस्यसारघस्य मधुनःघर्मंपातरसंपि-बत । हेवसवः वासयितारः । यजतच वाट्वषट्कारेण । स्वाहास्तुहुतमस्तु । सूर्यस्यरश्मये ।

वृष्टिवनये । वृष्टेः संभक्त्रे दात्रेवा । सूर्यस्यहवा एकोरश्मिर्वृष्टिवनिर्नामेतिश्रुतिः ॥ ६ ॥ इत- उत्तरं द्वादशवातनामानि यजत्यध्वर्युः । समुद्रायत्त्वेति । एतस्माद्वै समु द्रात्सर्वाणिभूतानि समुद्रवन्तीतिसमुद्रोवातः । समुद्राय त्वां हेप्रवर्ग्यवातायस्वाहा जुहोमि । इयमेवोत्तरत्रापि योजना । सरिराय । एतस्मात्सरिरात्सर्वाणिभूतानि लब्धकार्याणिसन्ति । सहर्द्दूरतेगच्छति ।

स्वर्युष्मर्यवृष्टिवनये ॥ ६ ॥ समुद्रायत्वा ॥ वातायस्वाहासरिरायत्वा वातायस्वाहा ॥ अनाधृष्यायत्वावातायस्वाहाप्रतिधृष्यायत्वा वातायस्वाहा ॥ अवस्यवेत्त्वावातायस्वाहाशिमिदायत्वावाताय स्वाहा ॥ ७ ॥ इन्द्रायत्वा ॥ वसुमतेरुद्रवतेस्वाहेन्द्रायत्वादित्यवते

अनाधृष्याय अशक्याय आधर्षितुम् । अप्रतिधृष्याय अशक्याय प्रतिधर्षितुम् । अवस्यवे अवन- शीलाय । अशिमिदाय । शिमीतिकर्मनाम । क्लेशात्मकश्चैतत् । अक्लेशदाय ॥ ७ ॥ इन्द्रायत्त्वा । इन्द्रायत्वा वसुमतेरुद्रवतेस्वाहा । इन्द्रायत्त्वा आदित्यवतेस्वाहा । इन्द्रायत्वा अभिमातिघ्ने ।

सपत्नोवा अभिमातिः। सविन्नेत्वा ऋभुमतेविभुमते वाजवतेस्वाहा। ऋभुर्विभुर्वाजइति सुधन्वनआङ्गिरसस्य त्रयःपुत्राबभूवुः। तेषामयंसंस्तवः। बृहस्पतयेत्वा विश्वदेव्यावतेस्वाहा ॥ ८ ॥ यमायत्वा। अंगिरस्वतेपितृमतेस्वाहा। उपयमन्याआसिंचति। स्वाहाघर्माय सुहुतोघर्मायचैतत्स्यात्। स्वाहाघर्मः सुहुतोघर्मःपित्रे स्यादितिशेषः ॥ ९ ॥ वषट्कृतेजुहोति। विश्वा-

स्वाहेन्द्रायत्वाभिमातिघ्ने स्वाहा ॥ सुविन्ने त्वऽऋभुमतेंविभुमते व्वाजवतेस्वाहाबृहस्पतयेत्वाविश्वदेव्यावतेस्वाहा ॥८॥ [८] यमा यत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्मायस्वाहाघर्मःपित्रे ॥९॥ विश्वाऽआशाः ॥ विश्वाआशादक्षिणासद्विश्वान्देवानयाडिह ॥

आशाः। अनुष्टुवाशिनीः। विश्वाःसर्वाः आशाःकाष्ठाः। दक्षिणासत्। दक्षिणासद इतिवचनव्यत्ययः। दक्षिणासीदन्ति। कस्मात्। यतःविश्वान् सर्वान्देवान् अयाट्। यजतेरेतद्रूपम्। अयाक्षीत् इष्टवान्। इहस्थितः। दक्षिणतोहि स्थितआहुतीर्जुहोति। आहुतिश्चयज्ञः। यत-

एवमतो ब्रवीमि। दक्षिणतोग्नेरस्माभिः स्वाहाकृतस्य। वषट्कारानन्तरं स्वाहाकृतस्यघर्म-
स्यमधोः पिबतम् मध्वास्वादस्यपिबतम् अश्विनौ ॥ १० ॥ चिरुत्कंपयति। द्विविधाः। द्युलोके
स्थापय इमंयज्ञम् इमंयज्ञं द्विविधाः। अभ्यासेभूयांसमर्थंमन्यते। अनुवषट्कृतेजुहोति। स्वाहा-
ग्नये। सुहुतमस्तु अग्नयेयज्ञियाय यज्ञहिताय। शंमुखंच यजुर्भ्यःसकाशात् अस्माकमस्त्वितिशेषः।

स्वाहाकृतस्यघुर्म्मस्यमधोः पिबतमश्विना ॥ १० ॥ दिविधाः ॥ दि
विधाऽइमंयुज्ञमिमंयुज्ञन्दिविधाः ॥ स्वाहाग्नयेयुज्ञियायुशंय
जुर्भ्यः ॥ ११ ॥ अश्विनाघुर्म्मम् ॥ अश्विनाघुर्म्मम्पातुंहार्द्दानमहं

यद्वा शंयजुर्भ्योदेहि ॥ ११ ॥ ब्रह्मानुमंत्रयते। अश्विनाघर्मम्। उष्णिगाश्विनी हेश्विनौ घर्मंपा-
तंपिबतम् हार्द्दानम् हृदयस्यप्रियम् हृदयंवायोनुवर्त्तते। अहर्दिवाभिः। अहःशब्दः पूर्व्वान्हव-
चनः। दिवाशब्दस्तु सायाह्नवचनः। सहिप्रवर्ग्यायकालः। एतत्कालोपलक्षिताभिः ऊतिभिः
अवनैर्निमित्तभूतैः। तंत्रायिणे नमोद्यावापृथिवीभ्याम्। तंत्रायिणे। लोकेये प्रसारिताः

तन्तव: तुरीशलाकाप्रोता:ते तंत्रमित्युच्यन्ते। तन्तुनालिरिव सूत्रपूरणाय एतिचीन्लोकान् सतंचायीआदित्य: तस्मैनम:। उत्तरत्नाप्यनुषङ्ग:। द्यावापृथिवीभ्याम् नम:अस्तु ॥ १२ ॥ यजमानो-नुमंत्रयते। अपाताम्। आश्विनीककुप्। अपाताम् पीतवन्तो अश्विनौघर्मम्। अनुद्यावापृथिवी असंसाताम्। तच्च घर्मपानमश्विनो: द्यावापृथिवीअपि असंसाताम् अनुमतवत्यौ साध्वभूदिति।

इहैवरातयः सन्तु ॥ १३ ॥ इषेपिन्वस्व ॥ इषेपिन्वस्वोर्जेपिन्वस्वब्रह्मणेपिन्वस्वक्षत्रायपिन्वस्वद्यावापृथिवीभ्यांपिन्वस्व ॥ धर्मासिसुधर्मा ...

हिंवाभिंहुतिभिं: ॥ तस्मायिणेनमोद्यावापृथिवीभ्याम् ॥ १२ ॥ अपातामश्विना ॥ घर्ममनुद्यावापृथिवीऽअमंसाताम् ॥ इहैवरातयः सन्तु ॥ १३ ॥ इषेपिन्वस्व ॥ इषेपिन्वस्वोर्जेपिन्वस्वब्रह्मणेपिन्वस्वक्षत्रायपिन्वस्वद्यावापृथिवीभ्यांपिन्वस्व ॥ धर्मासिसुधर्मा

यतएवमतोब्रवीमि। इहएव अवस्थितानामस्माकम् रातय:धनानिसन्तु ॥ १३ ॥ पिन्वमानमनुमंत्रयते। इषेपिन्वस्व। वृष्टिलक्षणायविप्रुषोमुञ्च। एवम् ऊर्जेअन्नाय। ब्रह्मणेब्राह्मणेभ्य:। क्षत्रायक्षत्रियेभ्य: द्यावापृथिवीभ्यांपिन्वस्वेति। उत्क्रामत्युत्तरपूर्वार्द्धम्। धर्मासिसुधर्म। धर्मासिधारणांसमस्तस्य जगतोस्याहुतिपरिणामद्वारेण। हेसुधर्म साधुधारणशील। खरेसादयति। असेनि।

मिङ्हिंसायाम्। अहिंसन् अक्रुधान्। अस्मे अस्मासु। नृम्णानि। नृन्नमयन्तीति नृम्णानिधनानि। धारयस्थापय। ब्रह्मधारय चत्रंधारयविशन्धार। त्रैवर्णिकानस्मासुस्थापय ॥ १४ ॥ शकलैर्जुहोति। स्वाहापूष्णो। अयंवैपूषा योयंपवते। इतिवायुः। एषहीदंसर्वंपुष्यति। एषउप्राणः। प्राणमेवास्मिन्निदधाति। इत्यर्थ तदुक्तम्। शरसे। अस्तिशरशब्दः। कारडवचनः। अस्तिचसान्तः दधूउपरिस्नेहः शरइतियजमानाः प्राहुःतदभिप्रायेणैतदुच्यते। स्वाहाग्रावभ्यः प्राणेभ्यः विषयग्र-

मैन्न्युस्मेनृम्णानिंधारयुब्रह्मंधारयत्नुक्षत्रन्धारयुव्विशंन्धारय ॥ १४ ॥

स्वाहांपूष्णे॥ शरंसेस्वाहाग्ग्रावंब्भ्युःस्वाहांप्प्रतिरुवेब्भ्यः॥ स्वाहांपितृब्भ्यंऽऊर्द्ध्वबंर्हिंब्भ्योघर्म्मपावंब्भ्युः स्वाहाद्यावांपृथिवीब्भ्याᳬस्वाहाव्विश्श्वेब्भ्योदेवेब्भ्यः ॥ १५ ॥ स्वाहांरुद्द्रायंरुद्द्रहूंतयेस्वाहासञ्ज्यो

हणाणीतिभ्यः। स्वाहाप्रतिरवेभ्यः। प्राणाःप्रतिरवाः तान्प्राप्यसर्वंजगद्रमते। स्वाहापितृभ्यःउर्द्ध्ववर्हिभ्यः। ऊर्द्ध्वम्प्रागग्र वर्हिर्येषांतएवमुच्यन्ते। सोमपाह्येतइत्यर्थः। घर्मपावभ्यःघर्मपातृभ्यः। स्वाहाद्यावापृथिवीभ्याम्। प्राणोदानौवैद्यावापृथिवी। स्वाहाविश्वेभ्योदेवेभ्यः। प्राणोवैविश्वेदेवाः॥१५॥ स्वाहारुद्रायरुद्रहूतये। रुद्रइतिस्तोतृनामसु पठितम्। रुद्रैःस्तोतृभि राहूयतेसरुद्रहूतिः। महा-

वीराद्धमयमन्यां प्रत्यानयति । स्वाहासंज्योतिषाज्योतिः । स्वाहासंगच्छतां ज्योतिषाज्योतिः । ज्योतिर्वा इतरस्मिन् वायौभवति । ज्योतिरितरस्यामितिश्रुतिः । अहःकेतुना रात्रिःकेतुना इतिचव्याख्यातम् । भक्षयति । मधुहुतम् यस्मान्मधु उत्कटरसम् हुतम् । क । इन्द्रतमेइन्द्रियवत्तमेवीर्यवत्तमे । अश्नीतवास्माभिः अतएवशिष्टम् अश्यामव्याप्नुयामः भक्षयामः । तेतवाशम् ।

तिंषाः ॥ अहंःकेतुनांजुषताᳪसुज्ज्योतिर्ज्ज्योतिंषास्वाहां॥रात्रिंःकेतुनांजुषताᳪसुज्ज्योतिर्ज्ज्योतिंषास्वाहां ॥ मधुंहुतमिन्द्रंतमेऽअग्नावश्याम॑तेदेवघर्म्मनमंस्तेऽअस्तुमामांहिᳪसीः ॥ १६ ॥ अभीमम् ॥ अभीमम्मंहिमादिवंविप्प्रोबभूवसुप्प्रथाः ॥ उतश्श्रवंसापृथिवीᳪसᳪहेदेव घर्मसर्वथानमस्तेअस्तु । मामाहिंसीरित्यात्मनः परित्राणमाह ॥ १६ ॥ महावीरमासं द्यां करोति । अभीमम् गायत्रीबृहत्यौ । नचगायत्र्या अवसानमस्ति । अतिशक्करीवा आग्नेयी अभिबभूव अभिभवति । इमन्दिवं महिमायस्यतव । कथंभूतः विप्रःमेधावी । सप्रथाःसर्वतःपृथुः

मह्हिम्नोविशेषणद्वयम् । तंत्वांब्रवीमि उतश्रवसा । अपिच धनेनश्रवणीयेन वायशसा । पृथिवीम् अभिवभूवेत्यनुषङ्गः । संसीदस्वेतिव्याख्यातम् । रोचस्वदीप्यस्वेत्यनर्थान्तरम् ॥ १७ ॥ इतउत्तरे उत्सादनमन्त्राः । शालाकैषुजुहोति । याते तवहेघर्म । दिव्यादिविभवाद्युलोकं प्रविष्टा । शुक्-

सीदस्वमुहाँ२ ॥ ऽअसिरोचस्वदेववीतमः ॥ विधूममग्नेऽअरुषम्मियेद्ध्यसृजप्प्रशस्तदर्शतम् ॥ १७ ॥ यातेघर्म्मदिव्याशुग्ग्यागायत्र्याᳫं हविर्द्धाने ॥ सातऽआप्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥ यातेघर्म्मान्तरिक्षेशुग्ग्यात्रिष्टुब्भ्याग्नीध्रे ॥ सातऽआप्यायतान्निष्ट्यायतान्तस्यैतेस्वाहा ॥ यातेघर्म्मपृथिव्याᳫंशुग्ग्याजगत्याᳫंसदस्स्या ॥

दीप्तिः । याचगायत्र्यां प्रविष्टा । याचहविर्द्धानेप्रविष्टा । सातेतव आप्यायतान् वर्द्धताम् । निष्ट्यायताम् स्त्यैष्ट्यैशब्दसंघातनयोः । निष्ट्यानासंहताभवतु । तस्यैशुचे तुभ्यञ्च हेघर्मस्वाहा ।

याते अन्तरिक्षे त्रिष्टुभित्राग्नीध्रे। समानमन्यत् यातेपृथिव्याम् जगत्याम् । सदस्या सदसि-
भवासदस्या। सदसिप्रविष्टा। समानमन्यत् ॥ १८ ॥ निःक्रामति। क्षत्रस्यत्वा महावीरोभिधी-
यते हृत्वा। क्षत्रस्यसंबन्धिनः परस्पाय परस्यपालनाय । हेमहावीर अनुक्रामामेतिचतुर्थपादे
भविष्यतितस्येह संबन्धः। अनुक्रामाम। किञ्च ब्रह्मणः तन्वंशरीरंपाहि गोपाय। किञ्च विशः।

सातऽआप्प्यायताम्निष्ट्यायतान्तस्यैतेस्वाहा॥१८॥[१०] क्षत्त्रस्यत्वा॥
परस्पायब्रह्मणस्तन्न्वम्पाहि ॥ विशस्त्वाधर्म्मणाव्वयमनुक्रामा
मसुविताय नव्यसे ॥ १९ ॥ चतुःस्रक्तिर्नाभिः ॥ चतुःस्रक्ति

यज्ञोवैविशः यज्ञस्यधर्मणा धारणेननिमित्तभूतेन त्वात्वाम् हेमहावीरवयम् अनुक्रामाम अनु-
गच्छेम। सुवितायसुगतायसुप्रसूतायवा। नव्यसे नवतरायच कर्मणेअनुक्रामाम ॥ १९ ॥
महावीरंनिदधाति। चतुःस्रक्तिः। दिशोमहावीरस्य स्रक्तयःकोणाः। यःचतुःस्रक्तिः। यस्य-
नाभिः नहनम् ऋतस्यसत्यस्यवा यज्ञस्यवा। एवंसप्रथाः सर्वतःप्रथुः। सः नःअस्माकम् विश्वायुः

सर्वस्यायुषःदाता। सप्रथाःसर्वतश्चप्रथयिता अस्तु। मनःसर्वायुः सप्रथाः। अभ्यासेभूयांसमर्थं-
मन्यन्ते। त्वत्प्रसादाच्च। अपद्वेषः। अपगच्छतुद्वेषः अस्मत्तः। वीतरागाःस्यामेत्यभिप्रायः। अप-
ह्वरः। ह्वरत्स्खलचलने। अपगच्छतु ह्वरःचलनम् अस्मत्तः। जनित्वाम्रियते मृत्वाजयते इत्ये-
तच्चलनमभिप्रेतम्। अन्यव्रतस्यसश्चिम। अन्यत् व्रतंकर्मयस्य मनुष्यकर्मणः सकाशात् जगद-

न्नोभिर्ऋतस्यंसुप्प्रथाः सनोविश्वायुंः सुप्प्रथाःसनंः सुर्वायुंःसुप्प्र
थाः॥ अपुद्वेषोऽअपुह्वरोन्न्यव्व्रतस्यसश्चिम ॥२०॥ घर्म्मैतत्॥ घ
र्म्मैतत्तेपुरीषुन्तेनुवर्द्धस्वचाचंप्प्यायस्व॥ वुर्द्धिषीमहिंचव्वयमाचंप्प्या
सिषीमहि ॥ २१ ॥ अचिंक्क्रदृषाहरिर्म्महान्मुत्रोनदर्शतः॥ सं

नुग्रहात्मकंयस्यसतथोक्तः। तस्यकर्मवयं सेवामहे सायुज्यंप्राप्ताःसन्तः ॥ २० ॥ पयसापूरयति।
घर्मैतत्। अनुष्टुप्। घर्मउच्यते। हेघर्म एतत् पयः तेतवपुरीषम् पूरयितृ। तेनवर्द्धस्वेत्यादि-
व्याख्यातम् ॥ २१ ॥ परिषिंचति। अचिक्रदत्परोष्णिक्। घर्मात्मना दिव्यःस्तूयते। योयंमहावीरः

प्रष्टज्यमान: अचिक्रदत् क्रन्दति:शब्दार्थ: । पुन:पुन:शब्दमकरोत् । वृषावर्षिता आङ्गतिपरि-
णामद्वारेण । हरि:हरितवर्ण: हर्त्तावारसानाम् महान्प्रभावत: । मित्रोनदर्शत: मित्र-
द्वदर्शनीय: । मित्रोऽपि सर्वस्यैवमित्रम् । संसूर्येणादिद्युतत् । संगत्यसूर्येण सहद्योततेसमा-

सूर्य्येणादिद्युतदुदधिर्न्निधिः ॥ २२ ॥ सुमित्त्रियानः ॥ सुमित्त्रियान
ऽआपऽओषधयः सन्तुदुर्म्मित्त्रियास्तस्मैसन्तुयोऽस्मान्द्वेष्टियञ्चवयन्
न्द्विष्मः ॥ २३॥ उद्वयम् ॥ उद्वयन्तमसस्परिस्वः पश्यन्तऽउत्त
रम् ॥ देवन्देवत्त्रासूर्य्यमगन्म्मज्ज्योतिरुत्तमम् ॥ २४ ॥ एधोसि ॥

नद्दव । उदधि:उदकधारण: । निधिस्सुखानाम् ॥ २२ ॥ सुमिचियान उद्वय मेधोसीतिव्याख्या-
तास्त्रयोमंत्रा: ॥ २३ ॥ २४ ॥ २५ ॥ दधिघर्मग्रहणम् । यावतीद्यावापृथिवी । महाष्टहतीऐन्द्री-
यावतीयावत्परिमाणे द्यावापृथिव्यौ । यावच्चचेत्तम सप्तसिन्धव: सप्तसमुद्रा: वितस्थिरे आप्नुवन्ति ।

तावन्तम् हेइन्द्र तेतवग्रहम् ऊर्जा अन्नेन सहगृह्णामि । अक्षितमनुपक्षीणम् । मयिगृह्णामि । मयीत्यधिकरणनिर्देशः । विज्ञानायेतिशेषः । गृह्णामीत्यादिव्याख्या तम् ॥ २६ ॥ भक्षयति । मयित्यत् । पंक्तिः । यजमानाशीः । मयित्यत् तत्इन्द्रियंवीर्यम् । बृहत्महत् । अस्तु । मयिचदक्षः संकल्पसंपत्तिःअस्तु । मयिच क्रतुःसंकल्पः विशिष्टोस्तुः । मयिचघर्मः त्रिशुक् । तिस्रः शुचोस्येतिवि-

एधोस्येधिषीमहिंसमिदसितेजोसितेजोमयिधेहि ॥ २५॥ यावतीद्यावापृथिवी ॥ यावच्चसप्तसिन्धवोवितस्थिरे ॥ तावन्तमिन्द्रतेग्रहं मूर्जागृह्णाम्म्यक्षितम्मयिगृह्णाम्म्यक्षितम् ॥ २६॥ मयित्यत् ॥ मयित्यदिन्द्रियम्बृहन्न्मयिदक्षोमयिक्क्रतुः ॥ घर्मस्त्रिशुग्विराजतिविराजाज्ज्योतिषासहब्ब्रह्मणातेजसासह ॥ २७ ॥ पयसोरेतः ॥ पयसो

शुक् । तास्वव्याख्याता शाकलमन्त्रेषु । विराजति विराजत्विति लकारव्यत्ययः । विराजाआदित्याख्येन ज्योतिषासह । ब्रह्मणानव्याख्येन तेजसासह ॥ २७ ॥ किञ्च । पयसोरेतः । पयसःयत्रेतः जगदुत्पत्तिवीजम् । आभृतमाहृतम् । दक्षदोहंप्रपूरणम् । अशीमहिव्याप्नुवाम ।

उत्तरामुत्तरांसमाम्। उत्तरामुत्तरामिति वीप्सावचनम्। समाशब्दः संवत्सरवचनः। प्रतिसंवत्सरंच। अशीमहि। सदाकालंयायजूकाः स्यामेत्यर्थः। त्विषः संदृक्। मध्यावतीये भक्षणंदधिघर्मस्य। यस्त्वम्। त्विषः। दीप्तेः। संदृक्। संपूर्वोदृशिः स्वीकरणेवर्त्तते। दीप्तेः स्वीकरणः। तस्यतव। क्त्वेक्तत्वोरिति विभक्तिव्यत्ययः। साधुक्रतुभूतस्य। दक्षस्य। संकल्पसिद्धिभू-

तेऽआभृतन्तस्यदोहमशीमह्युत्तरामुत्तराᳪंसमाम्॥ त्विषःसंदृक्क्त्वेदक्षस्पतेसुषुम्णास्पतेसुषुम्णाग्निहुतः॥ इन्द्रपीतस्यप्रजापतिभक्षितस्यमधुमतऽउपहूतऽउपहूतस्यभक्षयामि॥२८॥ [१०]

इतिअष्टात्रिंशोऽध्यायः॥ ३८॥

तस्यच। सुषुम्णस्य साधुसुखभूतस्य। हेसुषुम्ण। सुसुखस्वभाव। तेसुषुम्णाग्निहुतः। षष्ठ्यन्तमेतत्। अग्नौहूयतइत्यग्निहुत् तस्याग्निहुतः। अपिचइन्द्रपीतस्य प्रजापतिभक्षितस्य। मधुमतः रसवतः उपहूतः उपहूतस्य ग्रहस्यभक्षयामि॥२८॥

इति उव्वटकृतौमन्त्रभाष्ये ष्टात्रिंशत्तमोऽध्यायः॥३८॥

( १ ) इतउत्तरं प्रवर्ग्य भेदं प्रायश्चित्तम् स्वाहाप्राणेभ्यः साधिपतिकेभ्यइति पूर्णाहुतिंयावत् ।

* स्वाहांप्प्राणेब्भ्यंः ॥ स्वाहांप्प्राणेब्भ्युः साधिपतिकेब्भ्यः ॥ पृथिव्यैस्वाहाग्नयेस्वाहान्तरिक्षायस्वाहांव्वायवेस्वाहां ॥ दिवेस्वाहा सूर्य्यायस्वाहां ॥ १ ॥ दिग्भ्यःस्वाहां ॥ चन्द्रायस्वाहानक्षत्त्रेब्भ्यःस्वाहाद्भ्यः स्वाहाव्वरुणायस्वाहां ॥ नाब्भ्यैस्वाहांपूतायस्वाहां ॥ २ ॥ व्वाचेस्वाहां ॥ प्प्राणायस्वाहां प्प्राणायस्वाहां ॥ चक्षुषेस्वाहाचक्षुषे

जुहोति । स्वाहाप्राणेभ्यः । मनोवैप्राणानामधिपतिः । सुहुतमस्तु । प्राणेभ्यः मनसासहितेभ्यः ।

( १ ) का० स्वाहाप्राणेभ्यःसाधिपतिकेभ्यः इति पूर्णाहुतिमाद्यामुत्तमां च मनसः काममाकूतिमिति । तदर्थोऽयम् अध्वर्युः भूमिर्भूमिम् यक्षतेदिदिति मन्त्राभ्यां भग्नं घर्म्ममभिमृश्य परेष्टयादिचतुस्त्रिंशदाहुतीर्हुत्वा स्वाहाप्राणेभ्य इत्याद्यां पूर्णाहुतिं हुत्वा पृथिव्यै स्वाहेत्याहुतिविंशतिं सकृद्गृहीतेन हुत्वा मनस इत्यन्त्यां पूर्णाहुतिं करोतीति ॥

---

* स्वाहाप्राणेभ्यः षडृचस्वसप्तदीचयोदश ।

पृथिव्यै स्वाहेत्यादिस्पष्टम् ॥ १ ॥ २ ॥ ३ ॥ मनसःकामम् । पूर्णाहुतिर्होमः । अनुष्टुप् श्रीदेवत्या यजमानाशीः । मनसःकामं कामप्राप्तिः । आकूतिम् आकवनम् । आत्मनोधर्मो मनसः संयोगेसति जायते । वाचःसत्यम् । यष्टव्यं मयेत्यादि । अशीय । प्राप्नुयाम् । अनयापूर्णाहुत्या । किंच । पशूनां-

स्वाहा श्रोत्राय स्वाहा श्रोत्राय स्वाहा ॥ ३ ॥ मनसः कामम् ॥ मनसः काममाकूतिं वाचः सत्यमशीय ॥ पशूनाᳬ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥ ४ ॥ प्रजापतिः सम्भ्रियमाणः सम्राट् सम्भृतो वैश्वदेवः संसन्नो घर्मः प्रवृक्तस्तेज उद्यत आश्विनः पयस्यानीयमाने पौष्णो विष्यन्दमाने मारुतः क्लथन् ॥ मैत्रः

रूपम् पशूपकारः । अन्नसारसः । यशश्च । श्रीश्च श्रयताम् आश्रयन्तु । मयि । मामितिविभक्तिव्यत्ययोवा । यन्महावीरभेदनेनापचितंतत्सर्वमुप चीयतामित्यर्थः ॥ ४ ॥ प्रजापतिः संभ्रियमाण

इति महावीरावस्थान प्रतिपादिकास्तुतिः ॥ ५ ॥ सविताप्रथमेहन्निसप्राह । देवतासंवन्धवि-
धानास्तुतिः । महावीरप्रायश्चितानि समाप्तानि ॥ ६ ॥ उग्रश्च । अग्निकण्डिका । अरण्यध्ययनसा-

शरंसिसन्ताप्यमाने व्वायुव्व्योक्क्रियमाणऽ आग्नेयोहूयमानोव्वाग्घु
तः ॥ ५ ॥ सुवितापूंथमे ॥ हंन्नग्निर्द्वितीयेंव्वायुस्तृतीयंऽआदित्य
श्चतुर्थेचुन्द्रमाः पञ्चमऽऋतुः षुष्ठेमुरुतंः सप्तुमेवृहुस्पतिरष्टुमे ॥
मित्रोनवमेव्वरुंणोदशुमऽइन्द्रंऽएकादुशेव्विश्वेदेवाद्वादुशे ॥ ६ ॥
उुग्रश्चं ॥ भीमश्चध्वान्तश्चधुनिश्च ॥ सासुह्वाँश्चाभियुग्वा
चंव्विक्षिपः स्वाहा ॥ ७ ॥ अुग्निंहृदयेन ॥ अुग्निंहृदयेनाशनिं

मान्यदिहपाठः । मारुतोगणोयंची विमुखाख्या । भीमश्चध्वान्तश्च धुनिश्च । सासह्वांश्च । अभि-
युग्वाच । विक्षिपश्च । स्वाहेति चकारःसमुच्चयार्थीयः । एवंसप्तमरुतः ॥ ७ ॥ अग्निंहृदयेन । आश्व-

सेचिकम् इत्याद्यध्यायसमाप्तेः । अरण्येऽध्येयत्वादिह पाठः । ( १ ) द्वे कण्डिके श्रुति दैवताश्चाव

हृदयाग्रेणांपशुपतिङ्कृत्स्नहृदयेनभवंय्यक्ना ॥ शर्वम्मतस्नाभ्या
मीशानम्मन्युनामहादेवमन्तः पर्शव्येनोग्रन्देवंवनिष्ठुनाव्वसि
ष्ठहनुः शिङ्गीनिकोश्याभ्याम् ॥ ८ ॥ उग्रँल्लोहितेन ॥ मित्रँसौ

यवसंबन्धविधानात् ॥ ८ ॥ (२) स्पष्टार्थः ॥ ९ ॥

( १ ) तत्राग्निं हृदयेन उग्रं लोहितेन द्वे कण्डिके ब्राह्मणरूपे देवताश्चावयवसम्बन्धविधानात् अरण्येऽध्येयत्वादिह पाठः । लोमादीन्यङ्गान्येव पठितानि आयासादयो देवता एव ॥ अथ मन्त्रार्थः हृदयेनाङ्गेनाग्निं देवं प्रीणामि । हृदयस्याग्रभागेनाशनिं देवं प्रीणामि । समग्रहृदयेन पशुपतिं देवं प्रीणामि । यक्ना यकृता कालखण्डेन भवं देवं प्रीणामि पद्दन् इत्यादिना यकृच्छब्दस्य यकन्नादेशः । मतस्ने हृदयास्थिविशेषौ ताभ्यां शर्वं देवं प्रीणामि । मन्युना अङ्गसम्बन्धिक्रोधेन ईशानं देवं प्रीणामि । अन्तर्वर्तमानेन पर्शव्येन पार्श्वास्थिसम्बन्धिना मांसेन महादेवं देवं प्रीणामि पर्शवः पार्श्वास्थीनि । वनिष्ठुःस्थूलान्त्रं तेनोग्रं देवं प्रीणामि । वसिष्ठहनुः वसिष्ठस्य देवस्य हनुः कपोलैकदेशो ज्ञातव्यः यद्वा वसिष्ठा या हनुः कपोलाधो देशः तत्परा हनुरित्यमरः तत्परा कपोलाधोभागस्था हन्वाकारमिति. हनुः लिङ्गव्यत्ययः वसिष्ठहन्वा कोश्याभ्यां कोशो हृदयकोशः तत्स्थाभ्यां मांसपिण्डाभ्यां च शिङ्गीनि शिङ्गिसञ्ज्ञानि दैवतानि प्रीणामि ॥ ८ ॥

( २ ) लोहितेनासृजा उग्रं देवं प्रीणामि । शोभनं व्रतं कर्म यस्य स सुव्रतस्तस्य भावः सौव्रत्यं शोभनगत्यादिकर्मकर्तृत्वम् ।

शु० य० सं० ६९१ उ० भा०

(१) तथाचानुक्रमणी अग्निं हृदयेनाश्वमेधिकातत्त्वस्य एवर्षि लोमभ्यः स्वाहेतिप्रायश्चित्ताहुत

श्वं हृदयेन रुद्रं दौर्ब्रत्येनेन्द्रम्प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा ॥ भ

वस्य कण्ठ्यं रुद्रस्यान्तः पार्श्व्यम्महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशु

पतेः पुरीतत् ॥ ९ ॥ लोमभ्यः स्वाहा ॥ लोमभ्यः स्वाहा त्वचे

स्वाहा त्वचे स्वाहा लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्यः स्वाहा

मेदोभ्यः स्वाहा ॥ माṁसेभ्यः स्वाहा माṁसेभ्यः स्वाहा स्नावभ्यः

स्वाहा स्नावभ्यः स्वाहास्थभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः ?

योद्विचत्वारिंशत् ॥ १० ॥

तेनमित्रं देवं प्रीणामि । दुष्टं स्खलनोच्छलनादि व्रतं यस्य स दुर्व्रतः तस्य भावो दौर्व्रत्यम् तेन रुद्रं देवं प्रीणामि । प्रकृष्टं क्रीडनं प्रक्रीडः तेनेन्द्रं देवं प्रीणामि । बलेन सामर्थ्येन मरुतो देवान्प्रीणामि । प्रमुदा प्रकृष्टा मुत् हर्षः प्रमुत् तया साध्यान् देवान् प्रीणामि । भवस्य कण्ठाम् अत्र षष्ठ्यन्तो देवः अङ्गं प्रथमान्तम् कण्ठ्यं कण्ठे भवं मांसं भवस्यास्तु विभक्तिव्यत्ययो वाक्यैक्येन देवं प्रीणामि । एवमग्रेऽपि । पार्श्वंसस्यान्तर्मध्ये भवं मांसमन्तःपार्श्व्यं तद्रुद्रस्यास्तु । यकृत् कालखण्ड महादेवस्यास्तु । वनिष्ठुः स्थूलान्त्रं शर्वस्यास्तु । पुरीतत् हृदयाच्छादकमन्त्रं पशुपतेर्देवस्यास्तु ॥ ९ ॥

(१) लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत् । लोमादीन्यङ्गानि । लोमभ्यः स्वाहा लोमानि जुहोमीत्यर्थः त्वचे

य० २९

शिवम्

६९१

स्पष्टार्थः (१) ॥ ११ ॥ (२) ॥ १२ ॥ (३) ॥ १३ ॥

स्वाहा॒मुज्जभ्य॑ः॒ स्वाहा॑ ॥ रेत॑से॒स्वाहा॒प्राय॑वे॒स्वाहा॑ ॥ १० ॥ आ॒या॒सा॒य॒स्वाहा॑ ॥ प्रा॒या॒सा॒य॒स्वाहा॑सँय्या॒सा॒य॒स्वाहा॒व्वि॒या॒सा॒य॒स्वाहो॑द्या॒सा॒य॒स्वाहा॑ ॥ शु॒चे स्वाहा॒ शोच॑ते॒स्वाहा॒ शोच॑मानाय॒स्वाहा॒ शोका॑य॒स्वाहा॑ ॥ ११ ॥ तप॑से॒स्वाहा॑ ॥ तप्य॑ते॒स्वाहा॒तप्य॑मानाय॒स्वाहा॑तप्ताय॒स्वाहा॑घर्माय॒स्वाहा॑ ॥ निष्कृ॑त्यै॒स्वाहा॒प्राय॑श्चित्त्यै॒स्वाहा॑भेषजाय॒स्वाहा॑ ॥ १२ ॥ य॒माय॒स्वाहा॑ ॥ य॒माय॒स्वाहा॒न्तका॑य

लोहिताय मेदोभ्यः मेदो धातुविशेषः मांसेभ्यः स्नावभ्यः स्नावानः स्नायवो नसाः अस्थभ्यः छन्दस्यपि दृश्यते इत्यस्थि-शब्दस्य हलादिविभक्तावितानङ्ङादेशः मज्जभ्यः मज्जा षष्ठो धातुः रेतसे रेतो वीर्यम् ॥ १० ॥ ( १ ) आयासाय आय.सा-दयो देवविशेषाः प्रायासाय संयासाय वियासाय उद्यासाय शुचे शोचते शोचमानाय शोकाय ॥११॥ ( २ ) तपसे तप्यते तप्यमा-नाय तप्ताय घर्माय निष्कृतैः प्रायश्चित्यै भेषजाय ॥१२॥ ३) यमाय अन्तकाय मृत्यवे ब्रह्मणे ब्रह्महत्यायै विश्वेभ्यो देवेभ्यः एते-

इति उव्वटकृतौमंत्रभाष्ये एकोनचत्वारिंशत्तमोध्यायः ॥ ३९ ॥

समाप्तंकर्मकाण्डमिदानींज्ञानकाण्डं प्रस्तूयते । ईशावास्यम् । तिस्रोनुष्टुभः । दध्यङ्ङाथर्व-णऋषिः स्वशिष्यंपुत्रंवा गर्भाधानादिभिः संस्कारैः संस्कृतशरीरमधीत वेदमुत्पादितपुत्रं यथाशक्ति-अनुष्ठितयज्ञमपापं निस्पृहं यमनियमवन्तम तिथिपूजापनीत किल्बिषं मुमुक्षुमुपसन्नं शिक्षयन्नाह ।

स्वाहा॑मृ॒त्यवे॒स्वाहा॑ ॥ ब्र॒ह्म॒ग्रे॒स्वाहा॑ब्रह्मह॒त्यायै॒स्वाहा॒विश्वे॑भ्यो॒दे॒वेभ्यः॒ स्वाहा॒द्यावा॑पृथि॒वीभ्या॒ᳬस्वाहा॑ ॥ १३ ॥

इतिश्रीसंहितायान्दीर्घपाठेएकोनचत्वारिंशोध्यायः ॥ ३९ ॥

* ओ३म् ईशावास्यम् ॥ ई॒शा॒वा॒स्य॒मि॒दᳬसर्व्वं॒ यत्किञ्च॒जग॑त्यां॒ज॒

ईशावास्यम् । इदंसर्वम् ईशा । ईशऐश्वर्ये तृतीयान्तस्यैतद्रूपम् । यदीशनेन । वास्यंवसनीयम् अभेद-मित्यनयाभावनया आच्छादनीयम् । इदंसर्वमितिप्रत्यक्षतो निर्दिश्यतइति यत्किञ्च यत्किञ्चशब्दो-भयो देवेभ्यः सुहुतमस्तु । एताहुतीर्हुत्वा द्यावापृथिवीभ्यां स्वाहेतन्त्यामाहुतिं जुहुयात् एतावता कर्मकाण्डं समाप्तम् ॥ १३ ॥

* ईशावास्यमष्टावंधंतमोनवद्वीसप्तदश ॥

भिन्नक्रमः । किञ्च । यत् जगत्त्यां पृथिव्यां जगत् जङ्गमादिस्वस्वामि संवन्धाभिलक्षितंसयात् । तेनानेनसर्वेण । त्यक्तेन स्वयक्तस्वस्वामिसंवन्धेन । भोगान्भुञ्जीथाः अनुभावयस्व । मागृधः । गृधुअभिकाङ्क्षायाम् । माभिकांक्षीः ममेदमितिधियन्त्यज । कस्यस्विद्धनम् । स्विन्निपातो-वितर्कंवचनः । कस्यपुनरेतद्धनम् नकस्यचिदपीत्यभिप्रायः । सर्वाण्ययथार्थानि हिद्रव्याण्युत्पद्यन्ते । तद्यथा । स्त्रियमिति अन्यथाभुंक्ते अन्यथापुत्रः अन्यथाप्रापूर्णकः । तथाकटककेयूरादीन्यलङ्करणा निअन्यंचान्यञ्च पुरुषमुपतिष्ठमानानिदृश्यन्ते । अतःसर्वार्थस्यायस्वस्वस्वामिसंवन्धःसात्वविद्या । नि

गत् ॥ तेनत्यक्तेनभुञ्जीथामागृधः कस्यस्विद्धनम् ॥ १ ॥ कुर्व न्नेव ॥ कुर्वन्नेवेहकर्म्माणिजिजीविषेच्छतंसमाः ॥ एवन्त्वयिना

स्पृहस्ययोगेधिकार इतिवाक्यार्थः ॥ १ ॥ निःस्पृहस्यापि योगिनोज्ञाननिमित्ते कर्मण्यधिका-रइत्येतदर्थमाह । कुर्वन्नेव । कुर्वन्नेवकर्माणि मुक्तिहेतुकानि । इहलोके । जिजीविषेत् जिजीविषेरिति पुरुषवत्ययः । प्रत्यक्षकृतत्वान्मंत्रस्य । जीवितुमिच्छेः पथ्यहितमितभक्ष-णेन । शतंसमाः इत्युपलक्षणार्थम् । यावदायुः पर्यवसानमित्यर्थः । एवम् । त्वयितवेति-विभक्ति व्यत्ययः । मुक्तिरस्तीतिशेषः नान्ययेतोस्ति । इतःप्रकारात् अन्यथामुक्तिर्नास्ति । एतदुक्तं भवति । यथास्वर्गप्राप्तौनानाभूताः प्रकाराः सन्तिनतथा मुक्तावित्यर्थः । ननुकर्मणः

फलेनभवितव्य मथकथंमुक्तिप्राप्ति रित्येतदाशंक्याह । नकर्मलिप्यतेनरे । नहिमुक्तत्वर्थंक्रियमाणं कर्मनरेमनुष्येसंबध्यते मुक्तिप्रदानेनो पक्षीणशक्तित्वात् । तथाच बृहदारण्यकम् । तमेतंवेदानुवचनेन विविदिषन्ति । ब्रह्मचर्येणतपसाश्रद्धया यज्ञेनानाशकेनचेति । विविदिषन्ति वेदितुमिच्छन्ति । अनेनैतद्दर्शयति । यावदिच्छा प्रवृत्तिः तावत्कर्मस्वधिकारइति ॥ २ ॥ इदानीं-स्वर्गादि प्राप्तिहेतुभूतानि कर्माणियेकुर्वन्तिते निन्द्यन्ते । आसुर्यानामेति । असुर्याः । परमात्म-

न्यथेतोस्तिनकर्म्मलिप्यतेनरे ॥ २ ॥ असुर्य्यानाम ॥ तेलोकाऽअन्धेनतमसावृताः ॥ तांस्तेप्रेत्यापिगच्छन्तियेकेचात्महनोजनाः ॥३॥ अनेजदेकम् ॥ अनेजदेकम्मनसोजवीयोनैनद्देवाऽआप्नुवन्पूर्वमर्षत् ॥

भाव मद्वयमपेक्ष्य देवाअप्यसुराः । असुराणां स्वभूताअसुर्याः एवंसंज्ञकास्तेलोकाः अन्धेनतमसाअज्ञानलक्षणेनतमसाआवृताः सर्वतोवृताः । तान्लोकान्तेजनाः प्रेत्यमृत्वाअपिगच्छन्ति । येकेचात्महनोजनाः । आत्मानंघ्नन्तियेजनाः तेआत्महनः आत्मानञ्चतेघ्नन्तियेस्वर्गप्राप्तिहेतूनिकर्माणिकुर्वन्ति । तेहिजनित्वाम्रियन्ते मृत्वाचजायन्ते । एवमहर्निशंनाशंप्राप्नुवन्ति ॥ ३ ॥ इदानीमधस्तनयमनियमवतांमुमुक्षूणां यथाभूतं परब्रह्मआत्मत्वेनोपास्यन्तदाह । उक्तञ्च । अहंब्रह्मा-

क्षिसंरुध्यदूदंसर्वंचब्रह्मयम् इयंविद्यासमुद्दिष्टाविमुक्तिर्यन्निबन्धनीति ॥ अनेजदेकम् । त्रिष्टुप् यत् अनेजत् अचलत्तत्वमस्ति एकमद्वितीयम् विज्ञानघनरूपेण । मनसोजवीयः । मनसा वक्षीघ्रम्भवतिततोपिशीघ्रतरं प्रसवदानेनकारणभूतत्वात् नैनद्देवाआप्नुवन् । नचैतत्तत्वं देवा-अपिप्राप्तुंशक्ताः सूक्ष्मत्वात् । पूर्वम् अर्षत् । रिशतिर्हिंसाकर्मा । अविनश्यदास्ते । अना-दिनिधनमित्यर्थः । तद्धावतः तदःस्थानेयदोवृत्तिरुद्देश्यत्वात् । यच्चधावतः अन्यान् पुरुषादीन् अत्येतिअतिक्रम्यगच्छति । तथाचतिष्ठत् सर्वत्रस्थितम् । सर्वशक्तित्वं सर्वगतत्वंचानेनव्याख्या-

तद्धावंतोन्न्यानत्त्येतितिष्ठत्तस्मिंन्नपोमातरिश्वादधाति ॥४॥ तदे जति ॥ तन्नैजंतितद्दूरेतद्वंतिके ॥ तदन्तरंस्यसर्व्वस्यतदुसर्व्वस्यास्य

यते । तस्मिन्नपः । अत्रापियदो वृत्तिमस्मिंश्चापः कर्माणिमातरिश्वावायुः दधातिस्थापयति । सर्वाणिकर्माणियच्चदानंहोमादीनि समिष्टयजूंषिवायौस्थाप्यन्ते स्वाहावातेधाद्धतिवायोः प्रति-ष्ठत्वाभिधात् । समष्टिव्यष्टिरूपोह्यसावितिवायुरपियस्मिन्कर्माणिस्थापयति । यागहोमादीनां परमन्निधानमित्यर्थः ॥ ४ ॥ एवंकारणरूपमात्मानमुद्दिश्य । अथेदानींकार्यरूपेणोद्दिशति ॥ तदे-जति । अनुष्टुभस्तिस्रः । तदेवसर्वप्राणिरूपेणावस्थितं सत्एजतिकम्पवद्भवति । क्रियावद्भवति

तन्नैजति । तदेवचनचलतिस्थावररूपावस्थितं सत् तद्दूरे तदेवचदूरेआदित्यनक्षत्रादिरूपेणावस्थितम्। तत् उअन्तिके । उ:समुच्चये । तदेवचअन्तिके पृथिव्यादिरूपेणावस्थितम् । सर्वंखल्विदं ब्रह्मेत्येतद्दर्शनार्थोग्रन्थः । तदन्तरस्यसर्वस्य । तदेवचअस्यसर्वस्य प्राणिजातस्य । विज्ञानघनरूपेणावस्थितं सत्अन्तर्मध्यतआस्ते । तदुसर्वस्यास्यवाह्यतः । तदेव सर्वस्यास्यप्राणिजातस्य वाह्यतः जनरूपेणावस्थितमास्ते । चेतनाचेतनरूपमनन्तं सर्वगंब्रह्मेत्यर्थः । अस्याउपासनाया अचिरादनुचिन्तनं नास्तीत्येवङ्केचिदाहुः इहैवब्रह्मप्राप्तेः ॥५॥ यस्तु । तुशब्दोविशेषणार्थः यःपुनःसर्वाणिभूता-

बाह्यतः ॥ ५ ॥ यस्तु ॥ यस्तुसर्व्वाणिभूतान्यात्मन्नेवानुपश्यति ॥ सर्व्वभूतेषुचात्मानन्ततोनविचिकित्सति ॥ ६ ॥ यस्मिन्सर्व्वाणि

निचेतनाचेतनानि आत्मन्नेवअनुपश्यति । मय्येवसर्वाणि भूतान्यवस्थितानि नमद्व्यतिरिक्ता नि । अहमेवपरंब्रह्म । सर्वभूतेषु चात्मानम् अवस्थितं तद्व्यतिरिक्तंपश्यति । ततोनविचिकित्सति । नसंशते । एवंपश्यतो योगिनः परब्रह्मरूपाख्यात्मसंस्थानि भवन्ति विज्ञानघनानन्दैकत्वादिति । अतोविचारा न्नविनिवर्तते ॥ ६ ॥ किञ्च । यस्मिन् अवस्थाविशेषे । सर्वाणिभूतानि चेतना-

चेतनानि । आत्मैव अभूत् संभवन्ति । विजानतः आत्मैवेदम् सर्वं । सर्वंखल्विदंब्रह्मेत्येवमादि वाक्यविचारेण विधूतविज्ञानस्य । तत्रअवस्थाविशेषीकृत चेतसोयोगिनः कः मोहः कःशोकः नकश्चिदपीत्यभिप्रायः । शोकमोहौ ह्यपरिज्ञात तत्वस्यभवतः । हेतुगर्भंविशेषणमाह । एकत्वम-नुपश्यतः सर्वाणिभूतानि ध्यायतः ॥ ७ ॥ स पर्यगात् । जगती । य एवमात्मानमुपास्ते स पर्यगा-त्परिगच्छति शुक्रं शुक्लं विज्ञानानन्दस्वभावमचिन्त्यशक्तिम् । अकायं न विद्यते कायः शरीरं यस्य

भूतान्यात्मैवाभूद्विजानतः ॥ तत्रकोमोहः कःशोकःएकत्वमनुप श्यतः ॥ ७ ॥ सपरि ॥ सपर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ॥ कविर्मनीषीपरिभूः स्वयम्भूर्याथातथ्यतोर्था

स तथोक्तः अव्रणं कायरहितत्वादेवास्नाविरं स्नायुरहितमकायत्वादेव शुद्धमनुपहतं सत्वरजस्त-मोभिरपापविद्धं क्लेशकर्मविपाकाशयैरसंस्पृष्टमकायमव्रणमस्नाविरमिति पुनरुक्तान्यभ्यासे भूयां-समर्थम् मन्यन्त इत्यदोषः इत्थंभूतं ब्रह्म प्रतिपद्यते । अथात्मोपासनायुक्तस्य फलमाह । यश्च कविः क्रान्तदर्शनः मनीषी मेधावी परिभूः सर्वतो भविताविज्ञानबलात्स्वयम्भूः स्वयं ज्ञान-

बलाद्ब्रह्मरूपेण भविता सः याथातथ्यतोऽर्थान्व्यदधाद्यथास्वरूपमर्थान्विहितवान् । त्यक्तस्वस्वामिसंबन्धैरर्थैश्चेतनाचेतनैरुपभोगं कृतवान् । शाश्वतीभ्योऽनन्ताभ्यः समाभ्योऽर्थाय अनन्तवर्षप्राप्तये च कर्म कृतवान् । ननु क संजाद्याह्लोकः कर्मवान्भवति । सत्यम् । आत्मसंस्कारकन्तु कर्मब्रह्मभावजनकंस्यात् । तस्मात्सोपिगच्छति शुक्रमकायंब्रह्मइति ॥ ८ ॥ इतउत्तरम् उपासनामंत्राःप्रोच्यन्ते । अन्धन्तमः । षडनुष्टुभः । लोकायतिकाः प्रस्तूयनिन्द्यन्ते । येषामेतद्दर्शनम् । जलवुद्बुदवज्जीवाः । मदशक्तिवद्विज्ञानमिति । अन्धन्तमः प्रविशन्तियेसंभूतिमुपासते । मृतस्यसतः

व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥ अन्धन्तमः ॥ प्रविशन्ति येसम्भूतिमुपासते ॥ ततोभूयऽइवतेतमोयऽउसम्भूत्याᳬरताः ॥९॥

पुनः संभवोनास्ति अतःशरीरग्रहणा दस्माकंमुक्तिरेव । नहिविज्ञानात्माकश्चिदनुच्छित्ति धर्मास्ति योयमनियमैः । संवध्यते । एवंयेउपासते तेअन्धम् अज्ञानलक्षणंतमः प्रविशन्ति । ततोभूय इवतेतमः । ततोपिवहुतरम् । इवोनर्थकः । तेतमः प्रविशन्ति । येउ उकारः कर्मोपसंग्रहार्थीयः । येसंभूत्यामेवरताः । आत्मैवास्मिनान्यत्किञ्चिदस्तीत्ययमभिप्रायः । कर्मपराङ्मुखाय तत्कर्मकाण्डज्ञानकाण्डयोरसंभव इत्ययमभिप्रेत्य स्वबुद्धिमद्भुतांविभावयन्तः आत्मज्ञानएवरताः ॥ ९ ॥ अन्यदेव ।

अन्यदेवफलम् आहुः संभवात् संभवपरिज्ञानात् अन्यच्च आहुःफलम् । असंभवपरिज्ञानात् । इति एवं । शुश्रुमः श्रुतवन्तोवयम् । धीराणांवचांसि । येधीराः नःअस्माकम् तत्ब्रह्म । विचचक्षिरे । आख्यातवन्तः ॥ १० ॥ सम्भूतिंच । समस्तस्यजगतः संभवैकहेतुं चपरंब्रह्म । विनाशंच विनाशिश-रीरंच । यःयोगी । तदुभयंवेदजानाति । सहएकीभूतम् । शरीरग्रहणेन ज्ञानोत्पत्तिहेतूनिकर्माणि-

अन्यदेव ॥ अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ॥ इतिशुश्रुमधीराणां ये नस्तद्विचचक्षिरे ॥१०॥ सम्भूतिञ्च ॥ विनाशञ्चयस्तद्वेदोभयं सह ॥ विनाशेनमृत्युन्तीर्त्वासम्भूत्यामृतमश्नुते ॥ ११ ॥ अन्धन्तमः ॥ प्रविशन्तियेविद्यामुपासते ॥ ततोभूयइवतेतमोयउ

करोति । सःविनाशेन । विनाशिनाशरीरेण । मृत्युतीर्त्वाउत्तीर्य । संभूत्या आत्मविज्ञानेन । अमृ-तमश्नुते । अमतत्वमश्नातीत्यर्थः ॥ ११ ॥ अन्धन्तमः । अज्ञानलक्षणं तमःप्रविशन्ति । येअविद्याम् स्वर्गाद्यर्थानिकर्माणि उपासतेअनुतिष्ठन्ति । ततोभूयइवतेतमः । ततोपिबहुतरम् इवोनर्थकः ।

तेतमः । प्रविशन्ति । येऽउयेपुनः । विद्यायामेवरताः । आत्मज्ञान एवाकृतकर्माणोरतानराः ॥१२॥ अन्यदेव । अन्यदेव फलमाहुः विद्यायाः आत्मज्ञानादन्यच्च आहुः अविद्यायाः कर्मण इति शुश्रुमेत्यादिव्याख्यातम् ॥ १३ ॥ विद्यां च । आत्मज्ञानं च अविद्यां कर्म च यस्तदुभयं वेद जानाति सह एकीभूतं कर्म काण्डं ज्ञानकाण्डस्य गुणभूतमथ कर्मकाण्डं ज्ञानकाण्डं च

विद्यायांᳬ रताः ॥ १२ ॥ अन्यदेव ॥ अन्यदेवाहुर्व्विद्यायाऽअन्यदाहुरविद्यायाः ॥ इतिंशुश्रुमधीराणांय्येनस्तद्विचचक्षिरे ॥ १३ ॥ विद्याञ्चं ॥ व्विद्याञ्चाविंद्याञ्चयस्तद्वेदोभयᳬसह ॥ अविंद्ययामृत्युन्तीर्त्वाव्विद्ययामृतंमश्नुते ॥ १४ ॥ व्वायुरनिंलम् ॥ व्वायुरनिंलम्

एकीकृत्य अविद्यया कर्मकाण्डेन मृत्युं तीर्त्वोत्तीर्य कृतकृत्यो भूत्वा विद्यया ब्रह्मपरिज्ञानेनामृतत्वं मोक्षमश्नुते प्राप्नोति ॥ १४ ॥ इदानीमित्थं कृतब्रह्मोपासनस्य योगिनः शरीरपातोत्तरकाले यद्भवति तदाह । वायुरनिलं । वायुग्रहणमिन्द्रियाण्येकादश महाभूतानि पञ्च

जीवात्मैकः एवं सप्तदशकलिङ्गोपलक्षणार्थं वायुः प्राणोऽनिलं स्वकीयां प्रकृतिमापद्यते अमृतं परं ब्रह्म तद्धि तद्विज्ञाय संपद्यते । अथेदं स्थूलशरीरं कीदृशं तदा भवति भस्मान्तम् भस्मैव भवति कृतप्रयोजनकत्वात् । इदानीं योगिनः आलम्बनभूतमक्षरं कथ्यते ॐ इति नाम वा प्रतिमा वा ब्रह्मणः । इदानीमन्तकाले योगी स्मरणं करोति । क्रतो स्मर । योऽग्निर्ब्रह्मचर्यादारभ्य परिचरितः सः मनःश्वासरूपेणावस्थितः संबोध्यते । हे क्रतो मां स्मरेदानीमुपस्थितः प्रत्यु-

मृतमथेदम्भस्मान्तꣳ शरीरम् ॥ ॐ ३ ॥ क्रतोस्मर ॥ क्लिबेस्मर ॥ कृतꣳस्मर ॥१५॥ अग्ग्नेनय ॥ सुपथाराये अस्मान्विश्वानिदेव

पकारस्य काल इत्यभिप्रायः । क्रतुर्वा यज्ञः संबोध्यते । क्रतो स्मर क्लिबे स्मर क्लृप्ताय लोकाय स्मर कृतं स्मर मया यत्कृतं तत्स्मर ॥ १५ ॥ अग्ने नय । हेऽग्ने नय सुपथा देवयानेन मार्गेण राये मुक्तिलक्षणाय धनायास्मान्विश्वानि सर्वाणि देव दानादिगुणयुक्त वयुनानि प्रज्ञानानि विद्वाञ्ज्ञानान्युयोधि पृथक्कुरु च अस्मत् अस्मत्तः जुहुराणम् प्रतिबन्धकमेनः

पापम् । यतो भूयिष्ठां ते नमउक्तिं विधेम बहुतरां तव नमस्कारोक्तिं कुर्मः व्याख्यातायाः पुनर्वचनं विशेषार्थम् ॥ १६ ॥ हिरण्मयेन । इदानीमादित्योपासनमाह । यद्यपि हिरण्मयरूपेण पात्रेण तेजरोप्यमयेन पात्रेण । पिबन्त्यस्मिन्निवस्थितांरसांरश्मय इतिपात्रं मण्डलम् । तेनपात्रेण मण्डलेन सत्यस्याविनाशिनः पुरुषस्य अपिहितमन्तर्हितम् । मुखंशरीरम् । तथापि यः असौ-

व्युनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमउक्तिं विधेम ॥ १६ ॥ हिरण्मयेनपात्रेण ॥ सत्यस्यापिहितम्मुखम् ॥ योसावादित्येपुरुषःसोसावहम् ॥ १७ ॥ ओं३

आदित्य पुरुषः योगिभिरुपलभ्यते । सःअसौअहमस्मि । एवंचोपासनांकुर्यात् ॥ १७ ॥ ओंखंब्रह्म । ओमितिनाम निर्देशः । आकाशस्वरूप ब्रह्मध्यायेत् आत्मत्वेन । नन्वचेतन आकाशः चेतनआत्मा । तद्यथा । विज्ञानमानन्दब्रह्मइति तत्रानन्दप्रतिपादकंवाक्यम् । सयो-मनुष्याणांराद्धः समृद्धोभवतीत्युपक्रम्य । अथशतं येप्रजापतिर्लोकआनन्दाः सएकोब्रह्मलोक-आनन्द इतितथासर्वनिय न्तृत्वं दर्शयति । एतस्यवा अक्षरस्यप्रशासने गार्गी त्युपक्रम्य । द्यावा-

पृथिवीविधृते तिष्ठतइत्यादि । तथासर्वज्ञत्वंदर्शयति । यद्वा एतमक्षरंगार्गि अदृष्टंद्रष्टृइत्यादि । तथासत्यसंकल्पादयोस्यगुणाः श्रूयन्ते । सत्यसङ्कल्पः सत्यधृष्टिरित्यादि । यदेवंतर्हि । एतद्वैतदक्षरंगार्गि अस्मिन्वा आकाश ओत अप्रोतश्चेति ओतप्रोतसामान्यात् आकाशेनैवैतद्रूपंब्रह्माभिहितंस्यादिति । अयमेवच ब्रह्माभिहितंस्यादिति । अयमेवच ब्रह्मवित्सिद्धान्तः ॥

खम्ब्रह्म ॥

*इतिश्रीवाजसनेयसँहितायान्दीर्घपाठेचत्वारिंशत्तमोध्यायः ॥४०॥

इति उव्वटकृतौमन्त्रभाष्ये चत्वारिंशत्तमोध्यायः समाप्तः ॥ ४० ॥

आनन्दपुरवास्तव्य वज्रटाख्यस्यसूनुना । उव्वटेनकृतंभाष्यं पदवाक्यैः सुनिश्चितैः ॥ १ ॥ ऋष्यादींश्चनमस्कृत्य मवन्तग्रामुव्वटोवसन् मन्त्राणांकृतवान्भाष्यं महीम् भोजेप्रशासति ॥ २ ॥

शिवःशिवङ्करोतुनः ॥ विश्वविश्वरोविजयतेतराम् ॥

सं० १६पू[illegible] मार्गशीर्षं कृष्णपक्षे प्रतिपत्तिथौ शुक्रे भाष्यमगमच्छुभम् ।

* दशाध्यायेसमाख्यातानुवाका[illegible] सर्वसंख्यया । शतंदशानुवाकाश्चनवान्येचमनीषिभिः । १ । सप्तषष्ठिश्चितौज्ञेयासौत्रे द्वाविंशतिस्तथा । अश्वएकोनपञ्चाशत्[illegible] खिलेस्मृताः । २ । शुक्रियेषुतुविज्ञेया एकादशमनीषिभिः । एकीकृत्यसमाख्यातंत्रिशतंत्र्यधिकंमतम् । ३ ।

जयन्तिकाधीश्वरदेशवासिभिः वेदार्थविद्वत्प्रभुदत्तशर्म्मभिः ।
भाष्येकिलास्मिन्कृतशुद्धिटिप्पणे परार्द्धभागोयमजीगमच्छुभम् ॥